श्रीः

उभयवेदान्तग्रन्थमाला

# ॥ तैत्तिरीय-ऐतरेय-छान्दोग्योपनिषद्भाष्यम् ॥

षष्टिप्रबन्धनिर्माणालंकर्मीण-सुप्रसिद्ध-

श्रीरङ्गरामानुजमुनिवरविरचितम्

उत्तमूर्-श्रीवात्स्यसच्चक्रवर्ति-

वीरराघवाचार्यप्रणीतपरिष्कारपरिष्कृतम्

विश्वप्रसिद्ध सुन्दरम् चारिटीस् धर्मनिधि-

द्रविणसाहाय्येन मुद्रितम्


मूल्यम्] 1973 [रू. 25

पुस्तकप्राप्तिस्थानम्—

25. नाथमुनिवीथी, ति. नगर् मद्रास्-17.

श्रीः

॥ ओं नमो ब्रह्मणे ॥

# तैत्तिरीयोपनिषद्भूमिका

*-*-*

आवेदयाम तावत् अस्मदुभयवेदान्तग्रन्थमालाभूमिकायामेव, यत् श्रीरामानुजसिद्धान्तभाष्यप्रचारसमितिः प्राप्तात्मलाभा सर्वोपनिषद्भाष्यमुद्रणद्रविणसंभरणे प्रवृत्तेति,

पद्मानि सूर्यः कुमुदानि चन्द्रः प्रजाः सुराजा प्रणतान् मुकुन्दः।
भाष्यप्रचारार्थसभां तथेमां प्रबोधयत्यास्तिकवैष्णवौघः इति च।

टि. वि. यस्. इति विश्वतः प्रसिद्धात्
गुणभूसुन्दरतत्सुतप्रवर्त्यात् ।
शुभधर्मनिधेरवाप्य वित्तम्
पुनरेषोपनिषत् प्रकाश्यते हि ॥

तैत्तिरीयश्चैतरेयं छान्दोग्यश्च त्रयं क्रमात् ।
सभाष्यं सपरिष्कारं द्वितीयेऽत्र निवेश्यते ॥

तत्तदुपनिषन्नाम्नामर्थः ऐतरेयोपनिषद्भूमिकायामिहैवोपरि द्रष्टव्यः, ततस्तैत्तिरीयनाम्नोऽप्यर्थस्तत एव सुज्ञानः। केवलं तत्र सत्सु प्रमाणेषु विष्णुपुराणमेकमिह प्रदर्श्यते वैशद्याय ।

"यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः ।
वैशम्पायननामाऽसौ व्यासशिष्यश्चकार वै ॥" (3-5.)

तदा कदाचित्—"ऋषिर्योऽद्य महामेरौ समाजे नागमिष्यति। तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति" इति समयबन्धपूर्वं समाजे ऋषिभिः प्रवर्तिते, वैशम्पायने च समयं तं व्यतिक्रान्तवति तस्य स्वस्रीयबालकघातरूपब्रह्महत्या समापपात। तदा सः,

"शिष्यानाह च भोः शिष्याः! ब्रह्महत्यापहं व्रतम्।
चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥
अथाह याज्ञवल्क्यस्तं किमेभिर्भगवन् द्विजैः।
क्लेशितैरल्पतेजोभिः चरिष्येऽहमिदं व्रतम् ॥
ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामतिः।
मुच्यतां यत् त्वयाऽधीतं मत्तो विप्रावमानक ॥
निस्तेजसो वदस्येतान् यस्त्वं ब्राह्मणपुङ्गवान्।
तेन शिष्येण नार्थोऽस्ति ममाज्ञाभङ्गकारिणा ॥
याज्ञवल्क्यस्ततः प्राह भक्त्यैतत् ते मयोदितम्।
ममाप्यलं त्वयाऽधीतं यन्मया तदिदं द्विज ॥
इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः।
छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥
यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विजाः।
जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः ॥
ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः।
चरकाध्वर्यवस्ते तु चरणात्......॥" इति।

तदेषां तैत्तिरीयाणां चरकाध्वर्यूणां तपःप्रसादिततपनसेवा-समधिगतायातयामयजुषो याज्ञवल्क्यस्य चाभिप्रायभेदः तत्र तत्र शुक्लयजुर्वेदे श्रूयते, "तदुह चरकाध्वर्यवः" इत्येवम्।

तदेवं व्यासवैशम्पायनपरम्परया संप्रदायसमधिगतेऽस्मिन् तैत्तिरीये संहिताब्राह्मणारण्यकात्मनि, आरण्यके पञ्चमषष्ठौ प्रश्नौ उपनिषत्त्वेन परिगण्येते इति निश्चप्रचम्। अनयोः प्रश्नयोः शिक्षा-वल्ल्याः सांहिती उपनिषदिति, आनन्दभृगुवल्ल्योः वारुणी उपनिष-दिति, षष्ठप्रश्नस्य याज्ञिकी उपनिषदिति च सर्वसंमतं नामान्तरमिति सिद्धमेव द्वयोरप्युपनिषत्त्वम्। तत्र तैत्तिरीयशाखान्तर्गतोप-निषत्त्वात् तैत्तिरीयोपनिषदिति नाम युज्यत एव, यथा प्रथमस्य,

तथा द्वितीयस्यापि प्रश्नस्य । ऐकग्रन्थ्यञ्चैनयोः प्रश्नयोर्न केवलम् अध्ययनक्रममात्रेण कल्प्यम्, अपि त्वर्थैक्यादवश्यमूरीकार्यमपि । आह च भट्टभास्करः, "आनन्दं ब्रह्मवेद्यं प्रतिज्ञाय तत्स्वरूपं तदुपासनविशेषाः सिद्धयश्चोक्ताः । इदानीं तस्याऽऽत्मनः परमविभूतिस्थानीयः कीदृशो विजृम्भणप्रकार इत्याकाङ्क्षायां तमेवात्मानमधिकृत्योच्यते अम्भस्यपार इत्यादि" इति । तथाऽस्मद्भाष्येऽपि । टिप्पणमपि द्रष्टव्यम् ।

एवञ्च सति यत् अष्टोत्तरशतोपनिषत्परिगणने प्रश्नयोरनयोर्मध्ये प्रथममात्रस्य तैत्तिरीयोपनिषदिति नामकल्पनम्, तन्नूनं द्वितीयप्रश्नस्य नारायणोपनिषदिति अवान्तरनामान्तरसद्भावमात्रेण । द्वितीयनिरपेक्षमेव प्रथमस्य आनन्दमयविद्यापेक्षिताशेषार्थविधायित्वमस्तीत्याकलय्य चोपनिषत्पार्थक्यमकल्पि । ध्रुवं तदनुरुध्य शङ्कराचार्यादिभिर्नाभाषि नारायणोपनिषत् । किमनेन । यत्र खल्वैतरेये आरण्यकद्वयमुपनिषत्संज्ञतया सर्वप्रसिद्धम्, तत्रापि सर्वांशमव्याख्याय सगुणब्रह्मपरो भागोऽन्यो न वास्तवब्रह्मपर इति स्वयमभिमत्य आत्मषट्काख्यं भागं परमभाषिषत, तावतैव च ऐतरेयोपनिषत् कृत्स्नाऽप्यभाषीति मेनिरे पर इति स्थिते किं चित्रम्, यत् पृथङ्नाम्नाऽपि प्रथितं नारायणोपनिषत्प्रश्नं तैत्तिरीयं भाषमाणा उपैक्षिषतेति।

तत् सिद्धं यथास्मन्मतभाष्यं प्रश्नद्वयं तैत्तिरीयोपनिषदिति ॥

तदिदं तैत्तिरीयमैतरेयेण सह संप्रति संहन्यते दशोपनिषद्गणनायामनयोरानन्तर्यात् । न केवलमेतत्, अस्ति साजात्यमपि । तथा हि—ऐतरेयशान्तिपाठे तावत्, 'अनेनाधीतेनाहोरात्रान् संदधामि' इत्युक्तम् । अत्राप्यहोरात्रदेवते मित्रावरुणौ, 'शन्नो मित्रः शं वरुणः' इति शान्तिपाठे प्रस्तूयते । तथा, 'अवतु माम् अवतु वक्तारम्' इत्युभयत्र । एवं यथेह, 'संहिताया उपनिषदं व्याख्यास्यामः' इति केचन दृष्टिविधिप्रकाराः प्रादर्श्यन्त, तथा तत्र अन्यादृश्योऽपि

संहितादृष्टय: श्रूयन्ते। परन्तु नात्मषट्कभागे, अपित्वंशान्तरे। एवम्, 'तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण' इति परमात्मनि इन्द्रनामनिवेश ऐतरेये। अत्रापि, 'स मेन्द्रो मेधया स्पृणोतु', 'सेन्द्रयोनिः' इति। 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यैतरेयोपक्रमवाक्याधीनप्रसिद्धिं पुरस्कृत्य चात्र, 'तस्माद्वा एतस्मादात्मन आकाश:' इत्युक्तम्। अन्नमये आनन्दमयस्येह यथा, तथा तत्र पुरुषे परमात्मनः प्रवेश उक्तः। 'तदेतन्नान्दनम्' इति नन्दितुर्नन्दयितुश्च आनन्दमयस्य प्रवेशमार्गो नान्दनः श्रुतः। 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इतिवत् तत्रापि, 'ब्रह्म ततमपश्यत् इदमदर्शमिति' इति अपृथग्दर्शनमदर्शि। इह, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इतिवत् तत्रापि, 'प्रज्ञेन ब्रह्मणा—सर्वान् कामान् आप्त्वा अमृतः समभवत्' इति विद्याफलमवेदि।

ननु, 'सह ब्रह्मणा' इति कथमप्राधान्यवचनं प्रधानस्य ब्रह्मणः? यदत्र वक्तव्यम्, तत् श्रीभाष्ये उपनिषद्भाष्ये च प्रावाचीति तत्रैव द्रष्टव्यम्। टिप्पणे च परिष्कारे शाब्दिकादितान्त्रिकगतिरिह समञ्जसा न वेति समालोचि। अत्रान्यदपि किञ्चित् कथ्यते, श्रूयताम्। कामानाम् अनुभाव्यत्वमज्ञातं ज्ञाप्यत इति विधेयांशे प्राधान्यम्। 'ब्रह्मविदाप्नोति' इति वाक्यश्रावी तत्क्रतुनयात् उपास्यं ब्रह्म प्राप्यत इति प्रागेवाजानात्; सर्वकामानुभवं तु ततो नाजानात्। तदत्र ज्ञाप्यते, 'निर्विकारापरिच्छिन्नाभिन्नब्रह्मोपासनात् अभिन्नब्रह्ममात्रानुभव इति न, किंतु योऽयं ब्रह्मानुभवः, तेन सह सर्वकल्याणगुणाद्यनुभवोऽपि' इति। एवं परं प्राप्तः विभूतिद्वयेऽपि सर्वान् कामान् स्वकामानुसारेणाश्नुते। नैतावता मुक्तस्य बद्धसाम्यम्। सर्वत्राविभागेन ब्रह्म पश्यन् ब्रह्मणा सह ह्ययं सर्वान् कामान् अश्नुते इति च। तदेवं 'सह ब्रह्मणा' इति निर्देशे स्वारस्यं विमृश्यम्। सर्वमिदमभिप्रेत्य भाष्ये भोक्तृसाहित्यमुपेक्ष्य भोग्यसाहित्यमादृतम्। प्रकृतमनुसरामः।

तदेवमैतरेयतैत्तिरीययोरस्ति विषयनिरूपणप्रक्रियायां साम्यमुपनिषदोरित्यतोऽपि एनयोरेकत्र सरे गुम्भनं स्थाने इति ।

अत्रापि पूर्वपूर्वसर इव शाङ्करमाध्वपाठभेदोऽपि पूर्वं निरदेशि। द्वितीयप्रश्ने शाङ्करमाध्वभाष्याभावेऽपि भास्करविद्यारण्याभ्यां पूर्णवेदभाष्यकाराभ्यां अस्यापि व्याख्याततया अस्मदाचार्यभाष्यस्य च तद्दर्शनमूलमेव प्रवृत्ततया च तत्तदादृतपाठभेदस्तत्रतत्रादर्शि । निर्दिशन्ति चास्मद्भाष्यकारा इमे भट्टभास्करं नाम्नैव। द्वितीयप्रश्नस्य माध्वानुयायिनः कस्यचिद् व्याख्यानं तु भास्करविद्यारण्याधीतं द्राविडमूलपाठं नानुसरति, किंतु अद्राविडपाठमिति तदनुसारे अधिकश्रुतिवाक्यानां तत्रतत्र पूरणम्, स्थितानामपि बहुलं व्यत्यास इति स भेदोऽनपेक्षितत्वादुपैक्षि इत्यादिकं तत्प्रश्नप्रथमपत्र एव पूर्वं प्राचीकशाम।

एवमत्र शिक्षादिवल्लीत्रयं समुदितमेकः प्रश्न इति बहूनामेकरूपो वादः । वल्लीत्रयं प्रश्नत्रयं शाङ्करमतमित्याहुः । एवं तत्रतत्रानुवाकभेदकल्पनमन्यथाऽन्यथा । द्वितीयप्रश्ने तु तत्र भूयान् क्षोभः । मुद्रणे अनुवाकप्रतीकमालाऽन्यथाऽस्ति । अन्ततः संख्यानिर्देशश्चान्यथा। तत्र प्रतीकमालायाः एतद्भाष्यग्रन्थाक्षरमुद्रणकूरनारायणभाष्यमुद्रणभास्करभाष्यमुद्रणादिगताया ऐकरूप्यात् तदनुसारेण संख्याऽस्माभिर्न्यवेशि। कतिपयानुवाकमूलं भाष्याभावादुपेक्षितमपि अमुद्रि । "व्यर्थत्वाद् विवादग्रस्तमिदमनुवाकप्रदर्शनं किमिति कर्तव्यम् । अलेखि हि कूरनारायणभाष्यमुद्रापकैः, 'भास्करभाष्यं कूरनारायणभाष्यञ्च द्वितीयप्रश्नः कृत्स्नोऽप्येक एवानुवाक इति मत्वा प्रवृत्तेः" इति केचिदाशेरते । अथाप्यस्मद्भाष्ये तत्रतत्र चतुर्थषोडशसप्तदशाष्टादशेत्यादिव्यवहारात् अनुवाकभेदो भाष्ये संमन्यत इति एवं मुद्रणसमादरणम् । तत्रतत्र च्छन्दोनिबद्धानां श्रुतिवाक्यानामपि विशकलितवाक्यरूपेणाध्ययनं तथा संप्रदायपर-

ग्रन्थ्या प्राप्तमस्ति, यथा तत्रतत्र छन्दोबुद्धिरेव सर्वेषामस्तमिता भवेत्। भट्टभास्करस्तु इदमिदं छन्द इति सर्वत्र सावधानमाह। 'शंनोमित्रः', 'उताविद्वान्' इत्यादि बहु समस्ति तत्रोदाहरणम्। तादृशस्थलेषु अध्ययनानुसारिविरामचिह्ननिवेशे कृतेऽप्यस्माभिः प्रत्यर्धं पङ्क्तिभेदकरणेन श्लोकत्वमासूच्यैव।

मूलपाठभेदश्च भाष्यकृदादृतो न निर्मूल इति तत्रतत्र न्यवेदि। इदमेकमद्य विचार्यते—आनन्दमीमांसायाम्, 'श्रोत्रियस्य चाकामहतस्य' इति वाक्यं मानुषानन्दपर्याये किमस्ति, न वेति। नेति वेदाध्यायिनः। 'अस्ति' इति भाष्यानुसारे वाच्यम्। श्रीकूरनारायणस्वामिभाष्यतः, प्रथमपर्याये तत्रास्तीति नः सुज्ञानमेव; यतः, 'उपरि प्रतिपर्यायमाम्नातस्य अत्र परम् अनाम्नानं कस्मात्' इत्याशङ्क्य, एवं समादधते, "उच्यते। मानुषानन्दस्यासमाप्तत्वात्। गन्धर्वसुखपर्यन्तो हि मनुष्यानन्दः पुष्कलो भवति।" इति। शाङ्करोपनिषद्भाष्येऽपि, 'प्रथमं त्वकामहताग्रहणं मनुष्यविषयभोगकामानभिहतस्य श्रोत्रियस्य मनुष्याच्छतगुणेनानन्दोत्कर्षो मनुष्यगन्धर्वेण तुल्यो वक्तव्य इत्येवमर्थम्' इति प्रथमपर्याये तदभावोपपत्तिरदर्शि। अत्र, 'असमाप्तत्वात्' इत्यादि वदतः कूरनारायणार्यस्यायमाशयः, मनुष्यादिचतुर्मुखान्तेषु तत्तज्जातिसंभावितपुष्कलानन्दतुल्यानन्द एव हि श्रोत्रिये विवक्षितः। उपरितनगन्धर्वानन्दान्न्यूनः मनुष्यानन्दश्च पुष्कलो गन्धर्वशक्तिसंपन्नमनुष्यगन्धर्वे एवास्ति, न तु फल्गुमनुष्य इति अयुवानाशिष्ठापृथिवीकमनुष्यानन्दवत् अगन्धर्वमनुष्यानन्दोऽपि हेय इति मनुष्यगन्धर्वानन्द एव मुख्यमनुष्यानन्दत्वेन प्रथमपर्यायत्वेन च मन्तव्य इति तत्प्रभृतिश्रोत्रियग्रहणमिति। शाङ्करभाष्यादिदमपि गम्यते, अत्र शतगुणितानन्दसाम्यमेव श्रोत्रियानन्दे विवक्षितमिह; न सामान्यानन्दसाम्यमिति।

इदमपि बोध्यम्—न हि युवत्वप्रभृति-वित्तपूर्णसर्वपृथ्वीकत्वपर्यन्तसर्वांशसमृद्धः कश्चिन्मनुष्यो जगत्यां जातु भवति। अतो

वस्तुतः प्रसिद्धाः प्रकृष्टानन्दाः श्रोत्रियस्यापि सन्तीति वदन्ती श्रुतिः मनुष्यगन्धर्वाद्यानन्दातिदेशमेव युक्तं मन्यते, न तु उक्तविधमनुष्यानन्दस्य श्रोत्रियेऽतिदेशम्। तस्याप्रसिद्धत्वात्, कल्पनामात्रत्वात्। असंभवि च लक्ष्मीसरस्वत्योरीदृशं मेलनं कुत्रापि। न च विप्रगतमध्यापकत्वं राजगतं पृथ्वीपतित्वञ्चैव समावेशमर्हति। श्रीस्तोत्रभाष्येऽपि स्यादिति कल्पनयोपक्रमः स्मारितः। कल्पना चेयं प्रसिद्धमनुष्यानन्दमादाय मनुष्यगन्धर्वानन्दगुणनाऽसंभवात् आदृता। तावता श्रोत्रियानन्दे तावदानन्दस्यान्तर्भावो न नास्ति। तस्य मनुष्यगन्धर्वानन्दशतांशतया तदन्तर्भावस्यावश्यकत्वात्। परन्तु पशुपक्षिसामान्यमनुष्यादिगततारतम्यापन्नपरस्सहस्रानन्दवत् तस्याप्यन्तर्भावेऽपि श्रुतिरियं प्रसिद्धोत्कृष्टप्रकृतानन्दातिदेशं श्रोत्रियानन्दे चिकीर्षतीति न तत्र श्रोत्रियवाक्यप्रसक्तिरिति।

कतिपयाव्याख्यादृष्ट्या विमर्शे तु शाङ्करभाष्यवाक्यस्यैवमर्थो गम्यते। युवा स्यादित्युक्तो मानुषानन्दभाक् तावत् साधुयुवाध्यापकत्वात् श्रोत्रिय एव। परन्तु ऐहिकानन्दसंमुखत्वात् कामहतः। तदानन्दशतगुणितो मनुष्यगन्धर्वानन्दस्तु अकामहतस्य अर्थात् उक्तमानुषानन्दविरक्तस्य मनुष्यगन्धर्वानन्दलिप्सया तपश्चरतः श्रोत्रियस्य भवति। एवं पूर्वपूर्वकामहतिरहितस्योत्तरलिप्सोः श्रोत्रियस्योत्तरोत्तराधिकारिसायुज्यप्राप्त्या तत्तत्तुल्यानन्दः; एवं चतुर्मुखानन्दविषयकामहतिविहीनस्य श्रोत्रियस्य परब्रह्मसायुज्यम्। अस्मिन्नर्थे, 'श्रोत्रियस्य चाकामहतस्य' इति वाक्यानि विभिन्नाधिकारिपराणि। एवञ्च मानुषानन्दकामाभिहतः श्रोत्रियस्य चाकामहतस्य' इति न वक्तुमर्ह इति प्रथमपर्याये तदनुक्तिरिति। परन्त्वेवंव्याख्यानेन श्रोत्रियस्य न श्रोत्रियत्वावस्थायामयमानन्दः किन्तु पश्चादिति भाव्यम्। अकामहतपदञ्च पूर्वपूर्वानन्दमात्रकामरहितपरत्वात् अतिसंकुचितवृत्तिकम्। प्रथमदोषपरिहृतये अकामहतश्रोत्रियपदानि वा वैराग्यपूर्वकवैदिकोपायानुष्ठानप्राप्ततत्सायुज्यक-

पुरुषलाक्षणिकानि ग्राह्याणि। विद्यारण्यादिमतोऽर्थस्तु, 'यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' इति न्यायेन विरक्तस्य तदानीमेव स्थित आनन्दः तत्तन्महानन्दान्न्यून इति। मनुष्यगन्धर्वो नाम पूर्वं मनुष्यः पश्चाद्गन्धर्वजातिर्जात इति विद्यारण्यः। मनुष्यानन्दस्यैहिकतयाऽस्मत्सुगमतया तत्र प्रसिद्धिदर्शनं नापेक्षितम्; अन्ये त्वानन्दाः पारलौकिका अपरिचिता इति तत्प्रसिद्धिप्रदर्शनाय विरक्तश्रोत्रियसुखं सर्वत्र निदर्शयितुम्, 'श्रोत्रियस्य च' इति वाक्यमिति स क्लिष्टं कल्पयति। माध्वमते तु मानुषमनुष्यगन्धर्वादय इहोक्ताः मुक्तविशेषाः। तेषामेव श्रोत्रियत्वाकामहतत्वे विशेषणे इत्येकः पक्षः। मानुषमनुष्यगन्धर्वादयः संसारिण एव। तत्तदानन्दतुल्यानन्दाः मुक्तप्रभेदेन तारतम्येन सन्तीतीदमुच्यते, 'श्रोत्रियस्य चाकामहतस्य' इति वाक्यैरित्यन्यः पक्षः। सिद्धान्ते श्रोत्रियाकामहतपदं सर्वत्र मुक्तपरम्। तथाच श्रुतप्रकाशिका (जिज्ञासाधिकरणे), 'श्रोत्रियस्य चाकामतस्य' इति वाक्यैर्मुक्तानन्दस्य भगवदानन्दसाम्यमुक्तं भवति। बद्धदशायां निरतिशयानन्दासंभवात्' इति। तदनुगुणञ्च श्रोत्रियादिपदं व्याख्यातम्, 'श्रोत्रियः = ब्रह्मनिष्ठः। अकामहतः = निवृत्ताविद्यत्वात् समस्तसांसारिकभोगानुपहतः' इति। अत्र वाक्यैरिति बहुवचनात् सर्वमपि श्रोत्रियवाक्यं मुक्तपरमिति हि स्पष्टम्। ननु अन्तिमेन एकेन श्रोत्रियवाक्येन हि भगवदानन्दसाम्यमुच्यते; न तु सर्वैर्वाक्यैरिति कथमिदं वाक्यैरिति बहुवचनमिति चेत्, अत एव, 'साम्यमुक्तम्' इत्यनुक्त्वा, 'साम्यमुक्तं भवतीत्युक्तम्। अन्ततस्तत्र तात्पर्यमिति भावः' इत्यलं विचारान्तरेण।

एवञ्च श्रोत्रियवाक्यानां विरक्तकर्तृकसंसारसमकालिकतृष्णाक्षयसुखपरत्वे वा मुक्तसुखपरत्वे वा मानुषानन्दे तदनुक्तिः मानुषानन्दस्य तत्रासमाप्तत्वादिप्रागुक्तहेतुबलादिति विभाव्यम्। वस्तुतः प्रथमपर्याये स्त्रीसंबन्धनिबन्धनस्याऽऽनन्दस्य श्रुत्योपेक्षितत्वात्

युवास्यादित्यादिना वर्णितः कश्चित् अकामहतः श्रोत्रिय एवेति कृत्वा पृथक् तदवचनमित्यापि स्यात्। सर्वथा मनुष्यगन्धर्वानन्दात् प्राक् श्रोत्रियवाक्यं नास्तीति प्रकृतम्।

नन्वेवमधिकरणसारावलिविरोधः। तत्र हि (542)

"निष्कामश्रोत्रियस्याप्यतिदिशति सुखं मानुषानन्दतुल्यं
साऽऽनन्दान् वक्तुकामा शतगुणमधिकान् आविरिञ्चं क्रमेण।
तत्तद्भोगात् (त्वदिष्टं) प्रथिष्ठं कथमिदमवरं कष्टमिष्टं हि(च)मुक्ते
(सत्यं तत् स्यात्)नित्यानन्दे मुकुन्दप्रियजनसदृशो ह्येकदेशानुवादः॥"

इति मानुषानन्दतुल्यानन्दः श्रोत्रिये श्रुत्युक्त इत्युच्यते इति चेन्न—तथाऽनुक्तेः। अयमेतदनन्तरः श्लोकश्च, 'नामादौ वाक् च तस्योपरि' इति भूमाधिकरण श्लोकवत् क्वचित् तालकोशे न गणितोऽस्ति। अथापि बहुसंमतत्वादनुपेक्ष्य एवेति कृत्वा तदर्थो विचार्यते। तथाहि—न ह्यत्र, 'वदति सुखम्' इत्युक्तम्, किन्तु, 'अतिदिशति सुखम्' इति। अतिदेशो नाम तुल्यवचनम्। न च मानुषानन्दमतिदिशतीत्युक्तम्; किन्तु मानुषानन्दतुल्यानन्दम्। न चैकमानुषानन्दतुल्योऽन्य आनन्दोऽस्ति। अतः शतगुणितमानुषानन्दतुल्यमनुष्यगन्धर्वानन्दातिदेश एव श्रोत्रिये श्लोकोक्तः। द्वितीयपादैकवाक्यतया च शतमानुषानन्देति लभ्यते। आविरिञ्चं शतगुणमधिकान् आनन्दान् वक्तुं प्रवृत्ता श्रुतिर्मानुषानन्दतुल्यमतिदिशतीत्युक्ते, शतगुणितमानुषानन्दतुल्यमिति लाभसंभवात्। किञ्च निष्कामश्रोत्रियस्येति सर्वपर्यायश्रोत्रियग्रहणं युक्तम्, न प्रथमश्रोत्रियमात्रग्रहणम्। उत्तरार्धे तत्तद्भोगादिति कथनाच्च सर्वग्रहणमवसीयते। तथाच मानुषानन्दतुल्यमित्यस्य यो मानुषानन्द उपक्रान्तः, तस्यैवोपर्युपरि गुणनमिति उपर्युपरि गुणिततत्तुल्यं तत्तदधिकारिनिष्ठमानन्दं तत्रतत्र पर्याये श्रोत्रियेऽतिदिशतीति तदर्थः। यद्वा मानुषानन्दतुल्यमित्यस्य मानुषानन्दवत् हेयं परिमितमित्यर्थः। आविरिञ्चं क्रमेणेति अतिदिशतीत्यत्रान्वेति। मानुषानन्दपर्याये श्रोत्रियस्यापठनेन यो मानुषानन्दो

हेयत्वात् श्रोत्रिये उपेक्षितः श्रुत्या, तदानन्दतुल्यं तद्वदेव हेयं परिमितमानन्दं श्रोत्रिये उपरिशतगुणितानन्दं वक्तुकामैव क्रमेण आविरञ्चमतिदिशतीत्यर्थः। परमात्मपर्यन्तशतगुणितानन्दकथनप्रवृत्ता श्रुतिः परमात्मानन्दं विलक्षणं श्रोत्रिये यदतिदिशति, तद् युक्तम्। उपेक्षितमानुषानन्दवदेव हेयानि आनन्दान्तराणि कथमतिदिशति। न च सर्वान् आनन्दान् युगपत् श्रोत्रिये अतिदिशति। तथासति समुद्रे गोष्पदमत् श्रोत्रियमहासुखे सर्वसुखान्तर्भावो विवक्षितः स्यादपि। प्रतिपर्यायमावर्तनात्तु विभिन्नपरिच्छिन्नानन्दशालिश्रोत्रियसत्त्वं गम्यते इति शङ्कितुराशयं गमयितुं क्रमेणेति पदम्। अस्यां योजनायां सर्वश्रोत्रियपर्यायग्रहणादर्थस्यान्यूनत्वम्, मानुषानन्दपदमुख्यार्थः. आविरिञ्चमित्यस्य युक्तता च। अयं पूर्वार्धस्यार्थः। उत्तरार्धस्यार्थेऽपि शोधनीयं बह्वस्ति। विस्तरभियाऽत्र न तत् प्रस्तूयते। सर्वथा सारावलिरपि प्रथमपर्याये श्रोत्रियपाठं न सूचयेत्, प्रत्युत तदभावमेवाऽऽवेदयेदिति नैव सारावलिविरोध इति।

तस्मात् भाष्यकृदाशय एवात्र विचार्यः। बृहदारण्यकेऽपि बहुषु पर्यायेषु प्रथमतः श्रोत्रियपाठो न कृतः; किन्तु पश्चात्। अथापि तदुपलक्षणमिति सर्वत्रैव यथेष्यते तद्वत् प्रथमपर्यायेऽनुक्तोऽप्यर्थात् गृह्यते चेत्, न किञ्चिद्बाधकम्। श्रोत्रियस्य मुक्तस्य महानन्दमग्नस्य मनुष्यगन्धर्वाद्युपरितनसर्वानन्दवत् मानुषानन्दस्यापि संभवात्। अल्पो बहुर्वा मानुषो वा ततो न्यूनोऽपि वा आनन्दोऽशेषो हि मुक्तस्य कामरूपिणः संकल्पसंभूतसामग्रीकस्य भवत्येवेति।(अस्याशयस्य हस्तावलम्बप्रदः मार्की अशीतिवत्सरकालात् प्राङ्मुद्रितपुस्तकप्रभृतिषु आन्ध्रलिपिकोशेषु महीसूरादिमुद्रितेषु मूलपाठोऽपि लक्ष्यत इति) अतःविवक्षितत्वमात्रेण वस्तुतोऽस्थितमपि स्थितं कृत्वा व्याख्यानं व्यरचीति मन्तव्यम्। सर्वमिदम्, यदि मुद्रितरीत्यैव सर्वत्र वास्तवो भाष्यपाठ इति मन्येत, तदैव। तत् सिद्धं तत्पाठसत्त्वे मूलपाठस्य तादृशस्य असत्त्वेऽपि भाषितोऽर्थो नैवानुपपन्न इति॥

—o—o—

श्रीः

श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः

# ऐतरेयोपनिषद्भूमिका

अष्टोत्तरशतोपनिषत्कोशे **मुक्तिकोपनिषदि** उपनिषदो नाम्ना क्रमेण निर्दिश्यन्ते । तत्र—

ईशाकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरि ।
ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं तथा ॥

इत्येकया कारिकया प्रसिद्धाः दशोपनिषदः परिगण्यन्ते । 'ईशावास्यम्' इत्यत्र **ईश**पदं न प्रविष्टम; किं तु **ईशा** इति तृतीयान्तमित्यस्य असमस्तपदाध्ययनाभिज्ञसर्वश्रोत्रियसंमतिपन्नत्वात् अत्र कारिकायाम् ईशकेनेति पाठापेक्षया ईशाकेनेति पाठं सन्तो रोचयन्ते ।

अत्रोपनिषदां नामकरणं नानाहेतुकम्; यथा—**ईशे**ति, **केने**ति च आद्ययोरुपनिषदोरारम्भे पदमस्तीति **ईशो**पनिषत् **केनो**पनिषत् इति उपक्रमस्थपदघटनया तयोर्व्यपदेशः । एवमीशावास्योपनिषदित्यपि ।

**कठो**पनिषदिति नाम तु कठाख्याध्यापकप्रोक्तकाठक-शाखान्तर्गतोपनिषत्त्वात् ।

**प्रश्नो**पनिषदिति तु नाम नोपक्रमपदमनुसृत्य; नापि शाखा-प्रवचनकर्तृनामग्रहणेन; किंतु तत्र षड्भिः खण्डैः षण्णां प्रश्नानां पृथक् पृथक् समाधानात । प्रश्नोपनिषदियमथर्ववेदपिप्पलादशाखान्तर्गता ।

**मुण्डक-माण्डूक्य-तैत्तिरीयो**पनिषन्नामनिर्देशो तु तत्तन्नामक-शाखान्तर्गतोपनिषत्त्वमेव निबन्धनम । मुण्डकशाखान्ते मुण्डकोप-निषत् । मण्डूकशाखान्ते च माण्डूक्यम् ।

तत्र श्रीभाष्यकारव्यासार्यादिसंमतो मुण्डकपाठक्रमः शाङ्करादितो विलक्षणः, अदृश्यत्वाधिकरणे श्रीभाष्यादौ 'धर्मशास्त्राणीत्यन्तेन' इत्यादिसूक्तिदर्शनात् । स च पाठक्रमः प्रकृतश्रीरङ्गरामानुजस्वामिकृते उपनिषद्भाष्ये अदृश्यमानोऽपि तत्कृतायां भावप्रकाशिकायां लक्ष्यतम एवेत्यादिकं टिप्पणे प्रदर्श्य तदनुगुणो मुण्डकमूलपाठोऽस्माभिरमुद्रि इति विद्वांसो विदन्ति ।

एवं माण्डूक्योपनिषद्यपि कश्चिदस्ति विवादः । किं शाङ्करादौ व्याख्याताः श्लोकाः गौडपादीयकारिकाः उत माण्डूक्यमन्त्रा इति । तत्र वैतथ्यादिप्रकरणगतानां गौडपादीयत्वं निर्विवादम् । आगम-प्रकरणीयश्लोकतत्त्वज्ञप्तये च इदमस्ति वक्तव्यम् । शाङ्करभाष्यं तावत् न शास्त्रभूतमाण्डूक्योपनिषदः ; किंतु गौडपादीयप्रकरणग्रन्थस्य । काममागमप्रकरणगताः श्लोकाः गौडपादकारिका मा भूवन् ; भवन्तु श्रौतमन्त्रा एव ; अथापि तद्दृष्टाः । गौडपादप्र काले च माण्डूक्योप-निषदानुपूर्वी श्लोकरहितैव । यदाह उपनिषद्ब्रह्मयोगी—"तामेतामुप-निषदं व्याचिख्यासोः गौडपादाचार्यस्य माण्डूक्यगूढाशयानुवादिन्यः श्रुतयो मन्त्राश्च प्रादुर्बभूवुः सहस्रशः । तत्र कांश्चिन्मन्त्रान्.... माण्डूक्योपनिषदः प्रत्यंशं विभागशो योजयामास ।....शिष्टश्रुतिमन्त्र-जातमर्थतः संगृह्य कारिकारूपेण प्रकरणत्रयं रचयामास" इति । सैषा तत्संप्रदाये धारणा । तद्वासनाकल्पितञ्च श्रुतित्वं श्रीभाष्याद्यसंमतम् ।

**तैत्तिरीयम्** । व्यासशिष्ये वैशम्पायने शिष्यान् यजुर्वेदमध्या-पयति स्वस्य केनापि निमित्तेनाऽऽपतितं ब्रह्महत्यादोषमपनेतुं स्वस्थाने

तद्व्रतचरणाय शिष्यान् नियमितवति तदा, 'अन्येषामल्पतेजसां शिष्याणां किमत्र नियोजनेन ? अहमेक एतद्व्रतं यथावच्चरिष्यामि' इति भक्तिश्रद्धाघृणापूर्वं प्रवृत्तं परमर्षियोगिनं याज्ञवल्क्यं स्वशिष्यं ब्राह्मणावमानित्वेन आक्षिप्य, 'अधीतं परित्यज्य शिष्यतां विसृज्य गन्तव्यम्' इति आदिष्टवति, यत् याज्ञवल्क्यः योगबलेन अधीतं यजुर्भागं स्वशरीरात् मांसरूपेण बहिश्छर्दयित्वा अपजगाम, तत् अन्ये वैशम्पायनशिष्याः वेदेऽभिमानात् तित्तिरपक्षिणो भूत्वा मांसं छर्दितं भक्षयामासुः । एवं तित्तिरकृतप्रचारं तैत्तिरीयमिति । (वि. पु. ३-५)। तित्तिरिः कश्चिदृषिः । तद्दृष्टम् । **तैत्तिरीयमिति** चाऽऽहुः ।

**नारायणोपनिषद**पि तैत्तिरीयत्वात् अनन्तरप्रश्नत्वाच्च तैत्तिरीयोपनिषत्त्वेनैव विशिष्टा द्वैतिभिर्गण्यते ऐकग्रन्थ्येन ।

**छान्दोग्यम्** । छन्दोगाः सामवेदगायिनः । तदीयं छान्दोग्यम् । ताण्डिशाखोपनिषत् । ताण्डिब्राह्मणमिति कश्चिद्भाग इदानीं व्यवह्रियते ।

**बृहदारण्यकम्** । अरण्ये भवमारण्यकम् । अरण्ये अधीयमानमिति यावत् । त्रिवर्गपरायणैः पूर्वभागे अधीयमाने, यत् मुमुक्षुभिर्वानप्रस्थादिभिः अरण्यरतैरतिशयेनाधीयते, तस्मादारण्यकमिति सर्वस्यामपि शाखायां ब्राह्मणगतोऽन्त्यभागः कीर्त्यते, यस्यान्तिमो भागः सर्वत्रोपनिषदिति व्यपदिश्यते । तत्रेयं शुक्लयजुर्वेदोपनिषत् अन्यापेक्षया बृहत्त्वात् बृहदारण्यकमिति भण्यते ।

यथैवमुपनिषदन्तराणाम्, तथा ऐतरेयोपनिषदः एवं नामनिर्देशे निदानं तावत्—कस्य चिन्महर्षेः इतरा नाम काचित् पत्नी अवर्तिष्ट,

यामुपेक्ष्य अन्यामेव भार्यां स बहुमेने। एवं भार्यान्तरपुत्रैकनिहितप्रेम्णि पत्यौ स्वपुत्रमुपेक्षितवति इतरा सा स्वशक्त्या महीदेवीं साक्षात्कृत्य तदनुग्रहेण पुत्रं विलक्षणवेदभागवेदिनमकरोत् । अत एवायमितरापुत्रः ऐतरेयो महिदास इति व्यपादिश्यत। यथा छान्दोग्येऽपि (४ १६)। तत्प्रोक्तमृग्वेदब्राह्मणमैतरेयम् । तदन्तर्गतेयम**ैतरेयोपनिषत्** ।

संहिता, ब्राह्मणमिति द्वेधा विभज्यते हि सर्वो वेदः । तत्र ऋक्संहिता दशमण्डलात्मिका इदमैतरेयब्राह्मणञ्चाद्यत्वे उपलभ्यमानः ऋग्वेदः । अत्र ऐतरेयारण्यकमिति आरण्यकपञ्चकमस्ति । तत्र द्वितीयं तृतीयञ्चाऽऽरण्यकमुपनिषत्संज्ञम् । तत्र द्वितीयान्तेऽयमात्मषट्काख्यो भागः, यस्य शाङ्करभाष्यमिव आस्माकभाष्यमपि वरीवर्तीत्यादि व्यक्तं टिप्पणे। अस्य च भागस्येदं स्थितं भाष्यमेतावता कालेन न मुद्रयित्वा प्राकाश्यं प्रापीति न केवलमेतावत्, किंतु अत्र मद्रमण्डले अनुपलब्ध-मेव च सर्वत्राऽऽसीत्। अमुद्रितस्याप्यस्य भाष्यस्य तालकोशः पत्रात्मकः कोशश्च महीशूरनगरप्रान्ते तत्रतत्र समुल्लसति, अधीयते च तत्रत्यैरिति बहोः कालादस्माभिः केवलमाकर्णितम्। न साक्षादध्यक्षितम्। एवंस्थिते **विशिष्टाद्वैतभाष्यप्रचारसमितिकार्यदर्शिनः** महता प्रयत्नेन तत्रत्य श्रीनारायणपुरात् मातृकां भाष्यस्यास्य संपाद्य मामेतन्मुद्रणे पूर्वं समुदयो-जयन्निति महदिदं भाग्यम्। एवं संपाद्य मुद्रितस्येदं द्वितीयं संस्करणम्।

अत्र केचिदापाततः एवं विशेरते—एतावदमुद्रितमप्रकाशि-तञ्चेदं भाष्यं श्रीरङ्गरामानुजस्वाम्यनुगृहीतमिति कुतः? अन्य एवेमे रङ्गरामानुजा इति वा न कुतः इति। अत्रेदं ते प्रष्टव्याः-ये अन्यास्मा-

मुपनिषदां भाष्यप्रणेतारः, त एवेमे इति स्वीकारे किं नो हीयत इति । न खल्वेभिः स्वामिभिरैतरेयं न व्याख्यातमिति स्वयमेव कुत्रापि निरदेशि । नो खलु पारम्परिकोऽपि संप्रदायविदामुपदेश एवं कश्चित् कर्णकुहरं कुहाप्यधिगतोऽस्ति । न च लोके कस्यापि प्राचो ग्रन्थकृतो ग्रन्थाः सर्वेऽपि सुरक्षिताः संप्रापितप्रचाराश्चेति कश्चित् प्रतिज्ञातुं पारयति । षष्टिप्रबन्धनिर्माणालङ्कर्मीणतया प्रसिद्धानामेषां ग्रन्थास्ते के इति सामस्त्येन गणयितुं न खलु कश्चिदियताऽपि कालेन अलम्भविष्णुः। प्रसिद्धिश्चैषां सर्वत्र देशे नूनमनपलप्या **दशोपनिषद्भाष्यकारा** इति । सन्ति कतिपये एकद्वादिकतिपयोपनिषन्मात्रव्याख्यातार इति तान् व्यावर्तयितुमेव दशोपनिषद्भाष्यकारा इति व्यपदेशः । किञ्चेमे दशाधिकानां श्वेताश्वतरकौषीतक्यथर्वशिखाग्निरहस्यमान्त्रिकोपनिषदामपि भाष्यप्रणेतारः कथङ्कारं दशान्तर्गतमैतरेयं कतिपयनिमेषनिर्मेयव्याख्यानमुपेक्षितवन्तः स्युः । न वा ईशावास्योपनिषदः श्रीदेशिकचरणानुगृहीतं सुबालोपनिषदः श्रीव्यासार्यानुगृहीतञ्च भाष्यं यथा, तथा ऐतरेयस्यापि प्राचीनं प्रशस्तं परमादरपदं स्थितं भाष्यम्, येन तद्बहुमानादेभिर्भाष्यप्रणयनमुपेक्षितं स्यादित्यूहस्य स्यादवसरः। नूनमेभिर्दशोपनिषद्भाष्यकारैरीशोपनिषदोऽपि स्वयमेकं भाष्यं प्रणीतं स्यात्; प्रणीतानामनुपलम्भोऽपि हि संभाव्यत इति विमर्शे कार्ये, उपलभ्यमानमिदमदसीयं भाष्यमन्यदीयं स्यादिति किमिति वयं शङ्कितुमीश्महे । सत्यं बहवः श्रीरङ्गरामानुजाः पृथिव्यामवर्तिषत, वर्तन्ते च। आहुश्च **प्रतितन्त्रपरिष्क्रियेति** कश्चिद् ग्रन्थः श्रीरङ्गरामानुजीयो नैतदीयः, किन्तु महीशूरप्रान्तस्थिताचार्यान्तर-

विरचित इति—अथापीदं भाष्यमपि तथा अन्यदीयमित्यत्र न किञ्चिद् प्रमाणम् । एतदीयमेवेत्यत्र तु साधकं संलक्ष्यते ।

तथाहि—या खलु गतिरन्यासामुपनिषदां भाष्यस्य, न ततो वैलक्षण्यमिह विशेषतो लक्ष्यते । अबाधितस्थलेषु अनसूयया शाङ्करं भाष्यमाहत्य तथाप्रत्यभिज्ञाकरमेव पङ्क्तिविन्यसन क्रियत इतीदमन्योप निषद्भाष्येषु अत्र च सममेव लक्ष्यते । सिद्धान्तविरोधे वा स्वारस्यातिशयदृष्ट्या वा स्वयं तत्रतत्रार्थान्तरमाहत्य व्याख्यानम्, पदवाक्ययोजनासु प्रकारान्तरपरिग्रहश्चेत्येतदपि तथा । यत् पुनस्तत्रतत्रेवात्र काऽपि अधिकरणरचना न वर्तितेति, तत् सत्यपि गतिसामान्यादित्यादौ सूत्रे एतद्वाक्योदाहरणे एतदीयविषयवाक्यमेवाधिकृत्य विशिष्य कस्यचिदधि करणस्य पूर्णस्य विरचनविरहात् । अस्ति केनोपनिषदो माण्डूक्योपनिषदश्चैतदीयमेव भाष्यम्, यत्राप्येवमधिकरणरचना नास्तीति । किं बहुना—यदेभिरुपनिषद्भाष्यादेरात्मीयस्य प्रत्यभिज्ञापनाय सर्वत्रैकरूपमङ्गलश्लोकाद्युपनिबन्धनमन्यत्र कृतमस्ति, तदत्रापि **अतसीगुच्छसच्छायम्, व्यासंलक्ष्मणयोगीन्द्र**मिति तुल्यरूपं चकासत् अन्यदीयत्वभ्रमोन्मेषप्रसक्तिमपि परिहरतीत्यलं गमकान्तरगवेषणेन ।

कदेदं भाष्यमाचार्यैर्निरमायीति चेत्—अस्तु कदापि; किं तेन? दशानामुपनिषदां क्रमेणैते भाष्यं निबबन्धुरिति न शक्यं निर्बन्धुम् । तथाहि–तत्तदुपनिषद्व्याख्यानोपक्रमे, 'अतसीगुच्छसच्छायम्,' 'व्यासं लक्ष्मणयोगीन्द्रम्' इति श्लोकद्वयमात्रमुपनिबद्धवन्त इमे छान्दोग्यव्याख्यानोपक्रम एव पञ्चसंस्कारः वेदान्तविज्ञानपारमहंस्यपरिग्रहानुग्राहकान्

आचार्यांस्त्रीन् त्रिभिः श्लोकैर्विशिष्य प्रशंसन्तीत्येतावता छान्दोग्य-व्याख्यानमेवोपनिषद्व्याख्यानेषु प्रथममिति न संभावयितुं साम्प्रतम्; छान्दोग्यव्याख्याने बृहदारण्यकप्रकाशिकायाः पूर्वकृताया उल्लेखनात् (छा. १-२.)। तर्हि किमिति तत्र विशिष्य सर्वस्वाचार्यसंकीर्तनमिति चेत्—स्वयमाचार्याणामेषां छन्दोगत्वात् छान्दोग्ये आदरातिशयस्यायं कश्चिदाविष्कारप्रकार इति वा, 'छान्दोग्यभाष्यनिर्माणारम्भकाल एव पारमहंस्यं प्राप्तं स्यात्। अतस्तत्र कृतज्ञतानुसंधानेऽवश्यापतिते अर्थात् पश्चात्तनानां विस्पष्टविवेकोपयोगितया स्वकीयसर्वाचार्यसंकीर्तनम्' इति वा किमपि छान्दोग्यभाष्योपक्रम एव तदुक्तौ कारणं विमृश्यम्। तथाच छान्दोग्यप्रकाशिकातः प्राक् बृहदारण्यकप्रकाशिका। एवं मुण्डकप्रकाशिकायामपि कठवल्लीप्रकाशिकाया इव (मु. २-२-९) बृहदारण्यकप्रकाशिकाया अपि (१-१-३.) निर्देशात् मुण्डकव्याख्यानात् प्रागेव बृहदारण्यकव्याख्यानम्। छान्दोग्यभाष्ये (६-८-१.) मुण्डकोपनिषत्प्रकाशिकानुसंधानात् बृहदारण्यकात् पश्चात् मुण्डकम्, ततोऽर्वाक् छान्दोग्यं व्याख्यातमिति विमृश्यते। बृहदारण्यकप्रकाशिकायाञ्च (४-१-२०.) कौषीतकीप्रकाशिकाऽस्ति निर्दिष्टा। छान्दोग्ये पुरुषविद्याप्रकरणे श्रीभाष्यसूक्तिव्याख्यानरीतिर्या प्रादर्शि, ततोऽधिका सरणिः तैत्तिरीये तदवसरे प्राकाशीति छान्दोग्यात् पश्चात् तैत्तिरीयं व्याख्यातमित्यङ्गीकार्यम्। न केवलमेतावत्, निर्दिष्टा च तत्र तत्र (२-१०.) छान्दोग्य प्रकाशिका। एवमत्र तैत्तिरीयव्याख्याने कठवल्लीप्रकाशिका (२-१-११.), श्वेताश्वतरप्रकाशिका (१-१-४३.) च समुल्लिखिताऽस्तीति दशोप-

निषदनन्तर्गता श्वेताश्वतरोपनिषदपि कौषीतकीव प्रागेव व्याख्यातेत्यवसीयते। कठवल्लीभाष्यात् (३-२.) श्वेताश्वतरभाष्ये (द्वितीयान्त्ये) परमात्मनि प्रत्यक्त्वोपपादने वैशद्यातिशयदर्शनान्न कठोपनिषद्व्याख्यानात् प्राक् श्वेताश्वतरव्याख्यानं व्यरचीति भाव्यते। प्रश्नोपनिषद्व्याख्यारम्भे 'क्रमात् प्रश्नोपनिषदम्' इति निर्देशात् केनकठप्रश्नाः क्रमेण व्याख्याता इत्यूह्यते। तदत्र न दशोपनिषत्संख्यानक्रम आद्रियत। यस्या उपनिषदो व्याख्यानं यदा तेभ्योऽरोचत, तदा तत् निरवर्तीत्येव वक्तव्यं भवति। तत् ऐतरेयमप्येवं कदाचित् कृतभाष्यमित्येतावदेवाद्यत्वे सुवचम्।

अत्र चैतरये द्वितीयतृतीययोर्द्वयोरप्यारण्यकयोरुपनिषत्त्वस्य सर्वसंप्रतिपन्नत्वात् शाङ्करव्याख्यानस्य तत्कृत्स्नविषयेऽभावेऽपि विद्यारण्यीयस्य, ततः प्राक् आनन्दतीर्थीयस्य च सद्भावात् विशिष्टाद्वैतव्याख्यानमेकं कृत्स्नविषये आवश्यकम्। तत् सर्वोपनिषद्भाष्यमुद्रणानन्तरं स्वयं वा कृत्वा मुद्रणीयमित्यभिसंधायास्माभिः वेदान्तपुष्पाञ्जलावस्मदीये द्वितीयतृतीयारण्यकविद्याविषयसंग्रहणेन श्रीवेङ्कटाद्रिनाथस्तवो न्यबन्धि। अथाप्यद्य श्रीरङ्गरामानुजमुनिस्वामिभाष्यस्य शाङ्करभाष्यवत् द्वितीयारण्यकान्तर्गतात्मषट्कमात्रमधिकृत्य निबद्धस्य समुपलब्धतया तावन्मात्रमुद्रणमावश्यकमधुना निरवर्ति। एभिरेतावन्मात्रस्य भाष्यविधानञ्च, 'भागान्तरस्य सगुणब्रह्मपरतां स्वयमेवाऽऽतिष्ठमानैर्हि शङ्कराचार्यैरात्मषट्कमात्रं निर्गुणपरमिति कृत्वा तावतो भाष्यं प्राणीयत। वस्तुतो भागान्तरवत् अयमपि सगुणैकविषयक एव' इत्येतद्वास्तवार्थप्रतिपादनमात्रनिर्भरतयेतीदं टिप्पणेऽप्यदर्शि।

—०—०—

श्रीः

श्रीपद्मावतीसमेतश्रीनिवासपरब्रह्मणे नमः

# छान्दोग्योपनिषद्भाष्यभूमिका

*–*–*

अर्चासु वेङ्कटेशो विशिष्यते वैद्युतश्च दीपेषु ।
औपनिषदेषु भाष्येष्वेवमिदं रङ्गलक्ष्मणयतीन्दोः ॥

अथेदमस्माकं प्राप्तावसरम्, यत् उभयवेदान्तग्रन्थमालायां पुनः परिष्कृत्य संमुद्र्य प्रकाश्यमानेषु ईशादिसर्वोपनिषद्भाष्येषु तैत्तिरीयैतरेयसहितस्य छान्दोग्यभाष्यस्य तथा प्रकाशनं नाम । तत्र किञ्चित् भूमिकामारचयन्तः प्रथममिदं वाचकमहाभागेभ्यो विज्ञाप्य तन्मुखेन कृतज्ञतामाविष्कृत्य ततःपश्चादेवान्यत्र पदं निधित्सामः, यत् एवं विशिष्टाद्वैतभाष्यप्रकाशकसमित्या मत्प्रोत्साहनार्थमाविर्भूतया मुद्रणकार्यभरणव्यग्रया तत्र तैत्तिरीयैतरेयभाष्यात्मकं तृतीयं सरं स्वयं संप्रकाशितवत्या समुचितमभ्यर्थितं श्री वेङ्कटेशदेवस्थानम् समग्रद्रविणव्ययं संविधाय स्वकीये मुद्रणालये छान्दोग्यभाष्यमिदं मुद्रयितुमादिश्य उभयवेदान्तग्रन्थमालामुद्रणाधिकृतमन्मुखेन कार्यमपि यथावत् निरवीवृतदिति । एवं कृतज्ञेन मया संप्रति टि. वि. यस्. प्रार्थनावशात् विशेषतः परिष्कृत्य पुनः प्रकाश्यत एवम् ।

अस्ति सन्ति सहस्रं सामशाखा इति प्रसिद्धिः । तत्र ताण्डिनां शाखायामन्ते या उपनिषत्, सा छान्दोग्यशब्देन व्यवह्रियते । छन्दोगानामिदं छान्दोग्यम् । 'ऋच्यध्यूढं साम गायति', 'यद् योन्यां गायति, तदुत्तरयोर्गायति' इत्यादिवचनबलात् ऋक्षु अन्वेषु सामगानं भवति । ऋचश्च गायत्र्याद्यनेकविधच्छन्दोबद्धा भवन्तीति छन्दोगा इत्यस्य छन्दोबद्धमन्त्रेषु सामगानकर्तार इत्यर्थः । छन्दश्शब्दो वेदेऽपि प्रसिद्ध्यति । प्राक्तनव्यवहारनियत्या च छान्दोग्यं सामवेदोपनिषद्विशेष इति सिद्ध्यति ।

उपनिषत्पदस्य च शाङ्करदर्शितमर्थम्, ततः प्राक्तनैर्वाक्यकारादिभिरुपनिबद्धं उपनिपूर्वकषद्लृधातोः लोकप्रसिद्ध्यनुसारिणं श्रुतप्रकाशिकादिप्रकाशितमर्थञ्च प्रागेव भूमिकायामावेदयाम।

यद्यप्ययं वाक्यग्रन्थो नाद्यत्वे कुत्राप्यध्यक्षपदमध्यास्ते, अथापि भगवद्भाष्यकारैर्बहुत्रैतद्ग्रन्थात् वाक्यान्युद्धृत्य प्राचीनमतप्रक्रिया तत्र तत्र शाङ्करस्यार्वाचीनस्यान्यथात्वविवेदयिषया प्रादर्शीति तदात्वे तदुपलम्भस्थितिरभ्यूह्यते। न केवलमिदं वाक्यं नाम ग्रन्थरत्नम्, अस्य व्याख्यानरूपं द्रमिडभाष्यमपि तत्र तत्रोदाहारि भगवता श्रीभाष्यकृता। तस्य भाष्यस्य व्याख्यापि काचित् वामनटीकेति श्रुतप्रकाशिकातोऽवसीयते। वाक्यमिदं छान्दोग्यव्याख्यानरूपं ब्रह्मनन्दिकृतमिति प्रसिद्धिः। 'निर्वचनञ्च स्मार्तमुदाहृतं भाष्यकारेण' इति श्रीभाष्यव्याख्यानावसरे चोक्तं तत्त्वटीकायाम्, "अत्र भाष्यकारो ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः" इति। शाङ्करच्छान्दोग्योपनिषद्भाष्यम्, आनन्दगिरीयञ्च तद्व्याख्यानमनुरुध्य, द्रमिडाचार्यभाष्यं छान्दोग्यार्थविवरणरूपमिति व्यक्तमवसीयते। वाक्यव्याख्यानरूपता च द्रमिडभाष्यस्य भगवद्भाष्यकारदर्शितैवेति वाक्यं छान्दोग्यव्याख्यानमित्यन्वीक्षितुं पार्यत एव। आदौ शाङ्करच्छान्दोग्यभाष्ये, 'अल्पग्रन्था वृत्तिरारभ्यते' इति कथनं बहुग्रन्थरूपस्य द्रमिडव्याख्यानस्य विस्तृततया संक्षिप्तः स्वग्रन्थः प्रेक्षावतामीक्षणार्हो भवतीति ज्ञापनायेत्यानन्दगिरिरभिप्रैति। मधुविद्यायाञ्च दक्षिणोत्तरादिदिगवच्छिन्नादित्योदयास्तमयोत्तरोत्तरद्विगुणकालभोगरूपफलप्रतिपादकप्रघट्टव्याख्यानावसरे शाङ्करे, 'आचार्यैः' इति द्रमिडाचार्यनिर्देशपूर्वं तद्भाष्यशकलोदाहरणपूर्वं तदर्थो विवव्रे। एवं रैक्वविद्यायां शूद्रेति जानश्रुतेः संबोधनं द्रमिडभाष्ये येन प्रकारेण निरूढम्, तं प्रकारमुपन्यस्य शाङ्करे स्वयमन्योऽपि प्रकार उत्प्रैक्षि। तत्र द्रमिडभाष्यदर्शिता पद्धतिः अपशूद्राधिकरणब्रह्मसूत्रदर्शित-

भगवद्बादरायणाशयानुरोधिनी तत्रोपनिषदि द्विःप्रयुक्तशूद्रपदानुगामित्वप्रदर्शनपूर्वं श्रीभाष्यसमादृतेति च टिप्पणे प्रादर्शयाम। श्रीशङ्कराचार्याश्च द्रमिडाचार्यान् क्वचिदाचार्यपदेन, क्वचित् सामान्यतश्च निर्दिशन्तः स्वाभिमतविपरीतत्वे तदुक्तमर्थमपक्षिपन्तीति वाचका वेदितुं पारयन्त्येव। भगवद्रामानुजोदाहृतानि च वाक्यद्रमिडभाष्यादिवचनानि यथावदावर्तयतां तदादृता सिद्धान्तसरणिः सुगमा भवितुमर्हति। तदत्र तानि वचनान्यनुवाचयामः—तथाहि वेदार्थसंग्रहे—

वाक्यगतं वाक्यम्, 'युक्तं तद्गुणकोपासनात्' इति ([1]पु. १४६.)। तत्र द्रमिडाचार्यव्याख्या, 'यद्यपि सच्चितो न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत्—तथाप्यन्तर्गुणामेव देवतां भजत इति तत्रापि सगुणैव देवता प्राप्यते' इति।

वाक्यम्, 'तस्मिन् यदन्तरिति कामव्यपदेशः' इति (पु. १८२)।

वाक्यम्, 'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' (पु. १८७.) इति।

अन्यत्र द्रमिडाचार्यभाष्यम्, 'फलसंविभक्तया हि कर्मभिरात्मानं पिप्रीषन्ति। स प्रीतोऽलं फलायेति शास्त्रमर्यादा' इति (पु. २२६)।

अन्यत्र च (द्र. भा.) 'तस्याज्ञया धावति वायुः, नद्यः स्रवन्ति, तेन च कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति।' (मेषविसर्पितम् = उज्जृम्भणम्) (पु. २२९.)

वाक्यम्, 'आदित्यक्षितं वा श्रीमत्त्वात्' इति। (पु. २४६)

वाक्यम्, 'हिरण्मयः पुरुषो दृश्यत इति प्राज्ञः सर्वान्तरः स्यात् लोककामेशोपदेशात्, तथोदयात् पाप्मनाम्, इति (पु. २४९)।

वाक्यम्, 'स्याद् रूपं कृतकमनुग्रहार्थं तच्चेतसाम्, ऐश्वर्यात्। रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात्' इति (पु. २५०)।

---

1 पुटसंख्यानिर्देशः पुष्करस्वामिमुद्रितकोशानुसारात्।

तत्र द्रमिडभाष्यम्, "अञ्जसैव विश्वसृजो रूपम्। तत्तु न चक्षुषा ग्राह्यम्। मनसा तु अकलुषेण साधनान्तरवता गृह्यते। 'न चक्षुषा गृह्यते, नापि वाचा। मनसा तु विशुद्धेन' इति श्रुतिः। न ह्यरूपाया देवताया रूपमुपदिश्यते। यथाभूतवादि हि शास्त्रम्। 'माहारजनं वासः', "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' इति प्रकरणान्तरनिर्देशाश्च साक्षिणः" इति।

अत्रैव वेदार्थसंग्रहे, "भगवद्बोधायन–टङ्क–द्रमिड–गुहदेव–कपर्दि–भारुचिप्रभृत्यविगीतशिष्टपरीगृहीत – पुरातनवेदवेदान्तव्याख्यानसुव्यक्तश्रुतिनिकरनिदर्शितोऽयं पन्थाः" इति भगवता भाष्यकृता समग्राहि। तत्र तात्पर्यदीपिकायां वेदव्यासापरनामधेयैः सर्वपूर्वव्याख्यातिशायि–श्रीभाष्यव्याख्यारूप—श्रुतप्रकाशिकानिर्माणनिरूढ—श्रुतप्रकाशिकाचार्यनामधेयैः श्रीसुदर्शनसूरिभिः, 'टङ्को ब्रह्मनन्दी' इति व्याख्यायि। तेन ब्रह्मनन्दिन एव टङ्क इति नामधेयान्तरमिति निर्ज्ञायते। आत्मसिद्धौ च भगवद्यामुनमुनिभिः; 'आचार्यटङ्क' इति आचार्योपपदनिवेशपूर्वकं टङ्को निरदेशि। अत्र वेदार्थसंग्रहनिर्दिष्टाः सर्वे, संप्रति 'विशिष्टाद्वैतसिद्धान्त' इति संप्रतिपन्नव्यवहारं प्राक्तनं त्रय्यन्तसिद्धान्तमनुरुध्य प्रबन्धानां प्रबन्धार इति भगवद्भाष्यकारा आशेरते; यतः प्राहुः अविगीतशिष्टेति। श्रीभगवद्रामानुजसिद्धान्तनिर्धारकसार्वभौमाः सर्वतन्त्रस्वतन्त्राः कवितार्किकसिंहाः श्रीवेङ्कटेशावताराः श्रीमद्वेदान्तदेशिकाश्च संप्रदायपरिशुद्धौ, *'வ்யாஸ போதாயநாதிகளாலே ப்ரவர்த்திதமான வேதாந்த ஸம்ப்ரதாயத்திற்கு இந்த யுகாரம்பத்திலே ப்ரம்மநந்த்யாதிகளுக்குப் பின்பு நம்மாழ்வார் ப்ரவர்த்தகராஞர்'*. इति ब्रह्मनन्दिनः सदाचार्यत्वं समुदैरयन्। त एव यतिराजसप्ततौ वेदार्थसंग्रहं मनसिकृत्यैवमजीगणन्;

'निशाम्यन्तां यद्वा निजमतितिरस्कारविगमात्
निरातङ्काः टङ्क–द्रमिड–गुहदेवप्रभृतयः' इति ।

अथ श्रीभाष्यसमुद्धृतानि वाक्यादिवाक्यान्यप्यत्र प्रदर्शयिष्यामः॥ उक्तवाक्यादिग्रन्थान् अपेक्ष्यापि प्राक्तनं तत्रापि वेदार्थसंग्रहनिर्दिष्टभगवद्बोधायनकृतत्वादार्षमेव ब्रह्मसूत्रव्याख्यानं वृत्त्याख्यं विशिष्टाद्वैतसिद्धान्तस्थापकमवर्तिष्टेति भगवद्भाष्यकारोपक्रमभाष्यमास्तिकान् प्रतिबोधयति । यथा, 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति । [ सेयं विस्तीर्णा वृत्तिरेव बोधायनकृतकोटिग्रन्थः, यः कोटिग्रन्थो दण्डिना स्वग्रन्थे अवन्तिसुन्दर्यां श्लिष्टप्रयोगेण समदर्शि इति केचित् आशेरते ।] सेयं वृत्तिरन्या ; वाक्यं पुनरन्यत् ब्रह्मनन्दिकृतं छान्दोग्यविवरणरूपम् । अतः श्रीभाष्ये यत्र वृत्तिकार इति निर्देशः, तत्र बोधायनस्य ग्रहणम्, यत्र वाक्यकार इति निर्देशः तत्र ब्रह्मनन्दिन इतीदं स्पष्टत्वात् न मुक्तकण्ठं गदितव्यम् ; अथापि वैशद्यायेह वेदितम् । अत्र श्रीभाष्यसूक्तौ पूर्वाचार्यपदविवक्षिताश्च के इति विचारे क्रियमाणे प्राकाश्येवेदं श्रुतप्रकाशिकायाम्, 'द्रमिडभाष्यकारादयो हि परपक्षप्रतिक्षेपाद्यनादरेणातिसंक्षिप्तान् ग्रन्थान् अरचयन्' इति । तेन बोधायनो महर्षिः द्वैतादिसंभावितसर्वमतालोडनेन संप्रतितनविशिष्टाद्वैतिसंप्रकाशितया सरण्यैव भगवद्बादरायणसिद्धान्तं स्थापितवानासेति, तथा द्रमिडाचार्यः छान्दोग्यविवरणभूतं भाष्यमिव ब्रह्मसूत्रार्थसंक्षेपाय किञ्चिद् भाष्यमपि भाषितवानासेति च विज्ञायते ।

न हि द्वैतमद्वैतञ्च आनन्दतीर्थाचार्याभिधानैः श्रीमध्वाचार्यैः, श्रीशङ्कराचार्यैश्च स्वयं सूत्रभाष्यादिविरचनेन व्यक्तीचक्रे इत्येतावता प्रागीदृशं मतं कस्यापि बुद्धौ न प्रतिभातमासीदिति आदिसंसारपारमार्थ्यवेदी कश्चित् प्रतिजानीत । द्वैतमतं हि नाम सांख्यतार्किका-

संदर्शितमेव। तत्रतत्र तत्तदाचार्यसमादृतेषु प्रतितन्त्रविशेषेषु वस्तुतः स्थितेष्वपि सामान्यतो द्वैतमद्वैतं वा न प्राक् अत्यन्ताय नासीत्। भगवान् बादरायण एव बहूनि मतानि सूत्रेषु निबबन्ध, 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः', 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः', 'अवस्थितेरिति काशकृत्स्नः', 'चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः', 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः,' 'कार्यं बादरिरस्य गत्युपपत्तेः,' 'परं जैमिनिर्मुख्यत्वात्,' 'अभावं बादरिराह ह्येवम्', 'भावं जैमिनिर्विकल्पामननात्' इत्येवं बहुलम्। सर्वस्यापि च मतस्य वैदिकैः प्रवर्तितस्य वेदवचनशकलान्येव मूलभूतानि, यदिदम्परास्ते पराणि वचनानि परधा निर्वोढुं प्रारेभिरे। अवैदिकप्रवर्तितानि च मतानि वैदिकसगोत्रकलहसमाकर्णनेन संक्षुब्धमतिभिः वेदवाक्यार्थवस्तुतत्त्वनिर्धारणौपयिकपरिकरविकलैः बुद्धिकौशलमात्मीयमनात्मनीने पथि स्वातन्त्र्येणोपयोज्य प्रख्यातिलिप्सापरीतमानसैर्महाकारुणिकैरिव मह्यामाविष्क्रिर इति सर्वमिदमिदम्प्रथमतया निर्देष्टुमशक्यात् कस्मादपि कालादङ्कुरितं दैववशापतितकालक्रमोद्भववावदूकवारिवाहकृतविविधमतिवर्षविरचितशाखोपशाखाभिवृद्धि न जातु निरन्वयविनाशाय कल्पत इति नात्र कस्यापि मतस्य कश्चिदर्वाचीन एव निदानं भवितुमर्हतीति तत्त्वस्थितिं विवेचका विदन्त्येवेति कृतमत्र विस्तरेण।

एवं द्रमिडाचार्यैर्ब्रह्मसूत्रस्यापि भाष्यमभाषीति श्रुतप्रकाशिकोक्तस्यार्थस्य भगवद्यामुनमुनिविरचितात्मसिद्धिग्रन्थगता सूक्तिरपि मूलं भवति, या खल्वेवम्, "भगवता 'बादरायणेन इदमर्थान्येव सूत्राणि प्रणीतानि। विवृतानि च तानि परिमितगम्भीरभाषिणा द्रमिडभाष्यकृता। विस्तृतानि च तानि गम्भीरन्यायसागरभाषिणा भगवता श्रीवत्साङ्कमिश्रेणापि। तथाप्याचार्यटङ्कभर्तृप्रपञ्चभर्तृमित्रभर्तृहरिब्रह्मदत्तशङ्करभास्करादिविरचितसितासितविविधनिबन्धन - श्रद्धाविप्रलब्धबुद्धयः, न यथावत्, अन्यथा च प्रतिपद्यन्ते" इति।

अत्र सूत्रविषयोपक्रमात् शङ्करभास्करसाहचर्याच्च आचार्यटङ्कादयोऽपि ब्रह्मसूत्रव्याख्यातार इति प्रतीयते। आगमप्रामाण्येऽपि पाञ्चरात्राधिकरणभाष्यं स्पष्टम्। भर्तृप्रपञ्चो बृहदारण्यकव्याख्यातेति तदीयशाङ्करभाष्यतोऽवगमात् काममिमे ग्रन्थान्तराणामपि ग्रथितार एव। टङ्को ब्रह्मनन्दीति प्राक् तात्पर्यदीपिकादर्शितानुसरणे द्रमिडाचार्यादप्ययं प्राचीन इति, अत एवौचित्यात् द्रमिडभाष्यव्याख्येयग्रन्थकर्तेति च संमन्तव्यम्। तत्त्वटीकायाञ्च, "पूर्वाचार्याः सञ्चिक्षिपुः" इति भाष्यव्याख्यानावसरे, "अत्र पूर्वाचार्याः ब्रह्मनन्द्यादयः' इत्युक्तम्। तेन द्रमिडाचार्यवत् ब्रह्मनन्द्यपि सूत्रं व्याचकारेति ज्ञायते। एवंतर्हि आत्मसिद्ध्यादौ द्रमिडभाष्यमात्रग्रहणम्, छान्दोग्यशाङ्करभाष्यटीकादौ वाक्यं विहाय द्रमिडभाष्यमात्रग्रहणवत् स्वयं साक्षात् तददर्शनादित इति भाव्यम्। अत्र आचार्यटङ्केति निर्देशात् परिग्राह्यवचनोऽपि ब्रह्मनन्दी छान्दोग्यतत्त्वार्थदर्शी न परमतपरिहारानुकूलमव्याकुलं सूत्रव्याख्यानमकरोदिति सोऽयमत्र विषये सितासितनिबन्धकतैवेति वा भगवद्यामुनाचार्यसूक्त्याशयो वक्तव्यः। वेदार्थसंग्रहादौ टङ्कस्य सम्यक् परिग्रहमाकलयद्भिश्च, गौतमसूत्रस्वीकारबहिष्कारपक्षवत् टङ्कग्रन्थस्वीकारबहिष्कारयोः सत्यपि विवादे यथावस्थितार्थदर्शि–संप्रतिपन्नद्रमिडाचार्यसमादृतच्छान्दोग्यव्याख्यारूपवाक्यग्रन्थनिर्मातुर्ब्रह्मनन्दिनः टङ्कस्य कार्त्स्न्येन परिग्राह्यवचनत्वमेवादृत्य, शङ्कितार्थान्तराणि सन्ति चेत् तस्य वाक्यशकलानि, द्रमिडाचार्यानुसारेण परिकल्पनीयसमुचितभावान्तराणीति भगवद्भाष्यकाराशयोऽभ्यूह्यः। अभ्यूहोऽयमाचार्यपदं प्रयुक्तवद्भिर्भगवद्यामुनमुनिभिरपि व्यञ्जित इति वर्णनीयम्। आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' इति वाक्यग्रन्थः श्रीभाष्ये अद्वैतिमतानुकूलतया महापूर्वपक्षे प्रादर्शि। यस्य स्वाभिमतस्तत्त्वार्थो वेदार्थसंग्रहे विवव्रे। सर्वमिदं टङ्कब्रह्मनन्दिनोरैक्यम्, आदर्तव्यत्वञ्च

संप्रतिपन्नमनुरुध्याभ्यधायि । तथाचोपरि श्रीभाष्यादिगततया प्रदर्श्यमानानि वचनानि यथायथं छान्दोग्यस्य वा ब्रह्मसूत्रस्य वा व्याख्यारूपवाक्यग्रन्थभाष्यग्रन्थगतानि । यत्र यथा ग्रहणे स्वारस्यं लक्ष्यते, तत् तथा ग्राह्यमिति विभाव्यम् । अस्तु वा ब्रह्मनन्दिना छान्दोग्यं व्याकुर्वता स्वोच्यमानार्थसांप्रदायिकत्वाय बोधायनकृतविस्तीर्णब्रह्मसूत्रवृत्तिगमनिकासंक्षेपोऽपि तत्र चक्रे इत्येवम् । वचनानि तावत्—

द्रमिडभाष्यं टीकायाम्, "नमः प्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे। नमो जैमिनये वेदरहस्यसम्पुटनिगूढविष्फारयित्रे न्यायप्रज्वलितचेतसे । नमोऽस्त्वाचार्येभ्यः" इति ।

वाक्यं टीकायाम्, "उपनिषण्णत्वाद्वा उपनिषत्" ।
तत्र द्रमिडभाष्यम्, "गहने ह्रीयं विद्या संनिविष्टा" ।
तस्य च वामनटीका, "गहने ब्रह्मणि उपनिषण्णा" ।

वाक्यं लघुसिद्धान्ते, "वेदनमुपासनं स्यात् तद्विषये श्रवणात्" । "सकृत् प्रत्ययं कुर्यात शब्दार्थस्य कृतत्वात् प्रयाजादिवत् । सिद्धं तूपासनशब्दात्" । "उपासनं स्यात् ध्रुवानुस्मृतिः संभवान्निर्वचनाच्च" । "तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः" । "जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः" । "विमोकः कामानभिष्वङ्गः"। "आरम्भणसंशीलनं पुनःपुनरभ्यासः" । "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया" । "सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि"। "देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः" । "तद्विपर्ययजा तुष्टिरुद्धर्षः" इति ।

अत्र निर्वचनशब्दविवक्षितानि वचनानि द्रमिडाचार्यदर्शितानि चात्र श्रीभाष्येऽन्ववादिषत ।

महापूर्वपक्षे अद्वैतिमतसाधकतयापि वाक्यग्रन्थोऽन्वभाषि—"आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः" इति। पुराणघट्टे च सूत्रप्रदर्शनावसरे श्रीभाष्ये द्रमिडभाष्यम्—,"देवतासायुज्यात् अशरीरस्यापि देवतावत् सर्वार्थसिद्धिः स्यात्"। ततो वाक्यभाष्यग्रन्थौ वेदार्थसंग्रहदर्शितावुद्धृतौ।

२-१-५. भोक्त्रापत्त्यधिकरणे द्रमिडभाष्यम्, "यथा लोके राजा प्रचुरदन्दशूके घोरेऽनर्थसंकटेऽपि प्रदेशे वर्तमानो व्यजनाद्यवधूतदेहो दोषैर्न स्पृश्यते, अभिप्रेतांश्च लोकान् परिपालयिष्यति; भोगांश्च गन्धादीन् अविश्वजनोपभोग्यान् धारयति, तथाऽसौ लोकेश्वरो भ्रमत्स्वसामर्थ्यचामरो दोषैर्न स्पृश्यते; रक्षति च लोकान् ब्रह्मलोकादीन्; भोगांश्चाविश्वजनोपभोग्यान् धारयति" इति। एवमुपर्यपि द्रष्टव्यम्।

तदेषां वाक्यभाष्यग्रन्थानां परिशीलने प्रस्पष्टमवगम्यत एव, सर्वत्र सगुणमेव ब्रह्मोपास्यम्, यतो दहरविद्येव सद्विद्यापि सगुणमेव परं गोचरयति। इयांस्तु विशेषः—यत् दहरविद्यायाम्, "तस्मिन् यदन्तस्तदन्वेष्टव्यम्", 'तस्मिन् कामाः समाहिताः' इति परमात्मवत् तद्गुणा अपि पृथगेव निर्दिष्टाः, सद्विद्यावाक्ये च परमात्मवाचकं पदम् सदात्मसत्यतदेतदात्मकं सत्त्वादिविशेषणपुरस्कारेणैव विशिष्टं प्रत्यापयतीति। अतो न निर्विशेषं क्वचिल्लक्ष्यत इति। एवं हि अन्तर्गुणदेवताभूततत्त्वोपासनमेव सद्विद्याविहितं कण्ठरवेण कथयन् वाक्यकारः तद्व्याख्याता द्रमिडाचार्यश्च तत्त्वमसीत्यस्याखण्डपरत्वप्रत्याशामञ्जसैव क्षिपतीति सुविशदम्। तदस्मिन् महावाक्य एव प्राचीनसंप्रदायानुसारेण जीवब्रह्मैक्यसमर्थनसामर्थ्यविकले संपन्ने किमस्त्यन्यदिह वाक्यं छान्दोग्ये, यत् अद्वैतिमतस्यावकाशं दास्यतीत्याशयेन वेदार्थसंग्रहे सद्विद्यासांप्रदायिकार्थः समदर्शि। सम्यगीक्ष्यमाणे श्रीशङ्कराचार्या अपि निर्गुणपरतां निरूपयितुमपारितवन्तः

सगुणपरतयैव प्राय: सर्वां छान्दोग्यश्रुतिमभाषिषतेति सुवचम्।
तदिह संक्षिप्य सारभूतकतिपयविद्याभाष्यगतिप्रदर्शनेन प्रकाशयामः।

आदितोऽध्यायद्वयं तावत् उद्गीथविद्याप्रधानम्। अत्र तृतीये मधुविद्या प्रारभ्यते, यस्यां वस्वादिगताधिपत्यस्वाराज्यप्राप्तिरेव फलं श्रूयते। यत् पुनस्तत्र क्रममुक्तिपरं किमपि वाक्यम्, तत्रापि 'ऊर्ध्वं उदेत्य' इत्यादिना ऊर्ध्वदेशोद्गमवचनान्न निर्गुणब्रह्मविद्याफलं तादृक् भवितुमर्हति। भाष्ये च ब्रह्मलोकादागतपुरुषप्रतिवचन-प्रस्तावात् सगुणब्रह्मस्थानमेव किञ्चिद्विवक्षितमाकलनीयम्। सर्वथा मानवानामिह निर्गुणब्रह्मलब्ध्यर्था परिस्थितिः काचिन्न तत्र प्रादर्शीति संप्रतिपन्नमेतत्। अथ क्रमेण शाण्डिल्यविद्याभाष्ये शील्यमाने तत्र, 'विशिष्टगुणशक्तिमत्त्वेनोपासनं विधित्सन्नाह' इति सगुणोपासनमेव समदर्शयत्, तद्विद्यान्ते च महता प्रयत्नेन निर्गुणविषयत्वं स्वयमेव भाष्ये निराकरोच्चेति किं ततो विचार्यमस्ति। संवर्गविद्या चान्नाद-त्वफला। षोडशकलब्रह्मविद्या तु न निष्कलब्रह्मविद्या भवितुमर्हति। अथोपकोसलविद्यायामर्चिरादिमार्गानुवर्णनात् निगुणविद्याफलस्य च, 'अत्र ब्रह्म समश्नुते' इति मार्गनिरपेक्षतास्वीकारात् न सापि निर्गुणविद्या भवितुमलम्। एवं पञ्चाग्निविद्यापि। वैश्वानरविद्या च द्युमूर्धादिकल्पनया विश्वरूपब्रह्मोपासनं कथं नु निर्गुणविषयं संभाव्यते। अथ सद्विद्या, यत्र 'तत् त्वमसि' इति प्रधानवाक्यं श्रूयते। सैषापि सगुणविषयिणीति प्राचीनव्याख्योदाहरणेन प्रादर्शयाम। अत्रापि तु, 'आचार्यवान् पुरुषो वेद। तस्य तावदेव चिरम् यावन्न विमोक्ष्ये अथ संपत्स्ये' इति ब्रह्म साक्षात्कृतवतोऽपि देहविमोक्षात् प्राङ् न ब्रह्मसंपत्तिरिति श्रुतम्। तदेतत् जगन्मिथ्यात्ववादिनां मते न घटते। सिद्धे ब्रह्मात्मैक्यसाक्षात्कारे सर्वस्यापि मिथ्याभूतस्य बाधध्रौव्येण कालप्रतीक्षा हि नावसरं लभते। न हि ज्ञानाग्निः तत्त्वज्ञानकृतमिथ्याज्ञानादिनिवृत्तिनयेन सर्वं भस्मसात्कुर्वन् मिथ्या-

भूतमपि किञ्चित् परिशेषयेत्। आरब्धवेगमुक्तेषु दृष्टान्तादिवर्णनञ्च जगत्सत्यत्वमातिष्ठमानानां गोष्ठ्यां बहुमतिमर्हति। एवमत्र संपत्स्य इति कथितसंपत्तिप्रकारशोधनमपि प्राप्तकालम्। विदुषामपि, 'वाङ् मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्' इति संपत्तिक्रमः परमस्ति; मूर्धन्यया नाड्या निष्क्रम्यार्चिरादिगतिस्तु नापेक्ष्यत इति भाष्यादौ नियमयन्ति। यथा गतिविशेषो नापेक्ष्यते, तथा वागादिसंपत्तिरपि नापेक्षणीया। देशविशेषस्येव कालविशेषस्याप्यपेक्षा यतो न वक्तुं शक्यते। अन्यथा हि ज्ञानी वाङ्मनसादिसंपत्तौ सकृत् सुषुप्तो न पुनः प्रबुध्येत, लब्धैक्यभावादिति कुतस्तस्य बहुकालं देहानुवृत्तिरित्यप्यस्ति विमृश्यम्। अभिनहनान्मुक्ताक्षस्यानेकग्राममार्गेण गन्धारोपसंपत्तेर्दृष्टान्तीकरणाच्च देहान्मुक्तस्य संपत्तिरियमर्चिरादिसुदीर्घमार्गक्रमेणेति स्वरसोऽधिगमः।

अपिचेमां संपत्तिमनन्तरा भूमब्रह्मविद्या विवृणोति, 'आत्मानन्दः स स्वराड् भवति, तस्य सर्वेषु लोकेषु कामचारो भवति—न पश्यो मृत्युं पश्यति—सर्वमाप्नोति सर्वशः। स एकधा भवति—सहस्राणि च विंशतिः' इति। एवं ब्रह्म संपन्नस्य सर्वप्राप्तिसहस्राधिकशरीरपरिग्रह-सर्वलोककामचारादिषु फलत्वेन श्राव्यमाणेषु कथं नाम संपत्तिर्निर्गुणब्रह्मभावेनावस्थानमात्रमिति प्रकृतात् वेदवाक्यात् कश्चिन्निश्चिनुयात्। कथञ्च भूमविद्यामीदृशफलविशेषार्थमुपदिष्टां निर्गुणपरविद्यां कश्चिदाशंसीत?

एवं भूमविद्यावर्णितं मोक्षफलमितोऽप्यधिकमनन्तरायां दहरविद्यायामादरेण श्रुतिर्दर्शयति। तत्र हि, 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादि बहु प्रदर्श्य, तृतीयस्यामितो दिवि तस्मिन् ब्रह्मलोके अरश्च ण्यश्चार्णवौ, अश्वत्थः सोमसवनः, अपराजिता पूः, हिरण्मयं प्रभोः सदनम्; आदित्य-

मण्डलद्वारा, 'शतञ्चैका च' इत्युक्तया मूर्धन्यया नाड्या तत्प्राप्तिरित्युपदिश्य, ततस्तत्र परंज्योतिरुपसंपद्येति सद्विद्योक्तां संपत्तिमभिधाय स्वेन रूपेण सत्यकामत्व-सत्यसंकल्पत्वपर्यन्तेनाभिनिष्पन्नस्य, 'स उत्तमः पुरुषः स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' इति निरङ्कुशाः नाथानुमोदिता नानाविधा विहाराः न्यरूपिषत। एवम्भूतं फलं साधयन्ती विशिष्य च आत्मानमिव तद्गुणानपि विषयीकुर्वती दहरविद्यापि पूर्वविद्या इव सगुणविषयिण्येवेति नेदमधिकं निरूपणमपेक्षते। अन्ते च यन्मूलाः यदायतनाः यत्प्रतिष्ठा इमाः सर्वाः प्रजाः तस्य, प्रजापतेः सभावेश्मप्रातिरूपाकृतब्रह्मलोकसंपत्तिरपुनरावृत्तिश्च समगगायि।

तदेवं कृत्स्नं छान्दोग्यमप्रसक्ताद्वैतकथमतिप्राचीनैरनेकैरधिगमितपरमार्थमपि कालक्रमेण श्रीशङ्कराचार्यादिग्रन्थप्रचारे प्राचीनव्याख्यानलोपे च पदमाहितवति अन्यथैव अर्वाग्दृग्भिर्गृहीतमासीदिति तत्त्वमसिघटितसद्विद्यार्थतत्त्वप्रतिबोधनपूर्वं भगवद्रामानुजदर्शितया सरण्या तदनुयायिनां ग्रन्थांश्च परिशील्य उपनिषदन्तराणीवेदमपि आचार्यवर्योऽयमक्षरशो व्याख्याय विशिष्टाद्वैतपथं यथावदिह प्राचीकशत्। स्वयं शास्त्रान्तरेष्विव पूर्वमीमांसायामप्य प्रतिहतसर्वतोमुखप्रज्ञतया, अप्पय्यदीक्षितादिविचारसरणिमपि यत्रानुपपत्तिः तत्र सुखमेव परिहृत्य परमार्थं प्रदर्श्य, तत्र तत्र ब्रह्मसूत्राधिकरणविषयवाक्यव्याख्यानावसरे तत्तदधिकरणान्यपि, वेदभाष्यकर्ता विद्यारण्यः तत्र तत्र वेदवाक्यव्याख्यानावसरे तत्संबन्धिमीमांसाधिकरणं यथा सर्वथा संक्षिप्यारचयामास, तथा व्यर्थप्रायां संग्रहरचनामनादृत्य पूर्वापरसर्वविषयवाक्यविमर्शमूलसंभाविसर्वप्रकारपूर्वपक्षोपवर्णन – सिद्धान्तपरिष्करणव्युत्पादितविशेषार्थं एव विशदमारचयन् अल्पज्ञान् अधिकज्ञान् सर्वानप्यनसूयून् सहृदयान् रञ्जयन् सर्वानपि व्याख्यातॄन् अतिशेत इति विद्वज्जनपरिश्रमवेदिनां निर्णयः।

इतः प्राङ् मुद्रिताः या ईशाद्या उपनिषदः तत्र कठोपनिषदं विहायान्यत्र भाष्यकृतामतिविस्तृतं भाष्यं न लक्ष्यते। अत्र तु छान्दोग्ये भाष्यस्य विस्तर एव। तत्र कारणं पुनः उपनिषदियमुपाख्यानान्युपनिबध्नन्त्यपि वृथाविस्तरवर्जनेन आदित आन्तमनेकप्रकारशास्त्रचोदनीयविद्याविधान एव विस्पष्टं व्याप्रियमाणा बहूनि हितान्युपदिश्यास्मान् अनुगृह्णातीति। परावरविद्यापरिगणनादिकं बृहदारण्यकभूमिकायां चिकीर्षामः।

एवमुपनिषत्सु निःशेषवेदशाखाविभजनप्रचारणविख्यातव्यासनामधेय—मुनिगणाग्रगण्य – भगवद्बादरायणसमादरणभाजनभूतासु भूम्ना बृहदारण्यकं ब्रह्मसूत्रेषु परिशीलितमिति तस्योपनिषदन्तरेभ्य उत्कर्षः समस्ति। उत्कर्षं तमतिशेते पुनः अस्य छान्दोग्यस्य तत्र विषये उत्कर्ष इति युक्तं वक्तुम्, यत् एष महर्षिः चतुस्सूत्रीमुपोद्घातरूपामुपनिबध्य, 'ईक्षतेर्नाशब्दम्' इत्यादिना छान्दोग्यगतसद्विद्यावाक्येन शास्त्रं प्रारभमाणः, मध्ये च पदेपदे छान्दोग्यमेव निबध्नन्, 'अनावृत्तिः शब्दात्' इति चान्ते सूत्रणेन, 'न च पुनरावर्तते' इति छान्दोग्यावसानवाक्येनैव शास्त्रमवसाययन् अत्र निर्भरमात्मन आविष्करोति। शुभाशी(५४५)स्संख्यातेषु च ब्रह्मसूत्रेषु मार्कीं साधशतद्वयमितानि सूत्राणि मन्ये छान्दोग्यमेव गोचरीकृत्य प्रावर्तिषतेति पश्यत कियती महर्षेरिहाभिरुचिरिति। येषु विशिष्य च्छान्दोग्यस्थमेव विषयवाक्यं भाष्यकृतो विस्पष्टमुद्धरन्ति, ततोऽन्येष्वपि सूत्रेषु प्रदर्शितोपनिषदन्तरवाक्येषु अविशेषात् छान्दोग्यमपि तत्र तत्र विषयभावमर्हति बहुषु। एवञ्च प्रथमसूत्रेऽपि शक्यं छान्दोग्यवाक्यमुदाहर्तुम् तत्र हि, 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति मुण्डकोपनिषद्वाक्यं विषयमध्यवस्यन्ति। छान्दोग्येप्येवं कर्मणामन्तवत्फलमात्रप्रापकता,

आत्मज्ञानादनन्तफलप्राप्तिश्च श्राव्यत एव। यथा, 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते। ...यस्त्वात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेष्वकामचारो भवति......यस्त्वात्मानमनुविद्य व्रजन्ति...... इत्येवम्। रैक्वजानश्रुत्युपाख्यानं पठन्तश्च प्रस्फुटं प्रतिपद्यामहे यत्, बहुपाकी बहुनिवासनिर्मायी बहुयज्ञयाजी च बहुशालो जानश्रुतिः कर्मकाण्डगोचरसकलकर्मसमाचरणसंप्राप्तकीर्तिसन्तान एव सन्, शकटस्याधस्तात् पामानं कषमाणस्य दारिद्र्यादिव धर्मपत्नीराहित्यादपि कतिपयं कर्माण्यकुर्वाणस्यैव स्थितस्य परन्तु सर्वलोकसमार्जितसर्वप्रकारकर्मज्ञानगोष्पदीकरणविचक्षणविशिष्टज्ञान वारिधेः विशुद्धयशोविस्तारविभाकरस्य पुरःस्थितः खद्योतक इव कियन्मात्रमिति; स एव रैक्वो जानश्रुतिना सभक्तिश्रद्धमुपहृतां कन्यां परिगृह्य परिपक्वज्ञानपरिवाहभूतानि कर्माण्याचरन् अल्पफलानन्तकर्मव्यग्रान् जानश्रुतिप्रभृतीन् भूमिष्ठानिव शैलस्थो ह्यज्ञान् प्राज्ञः प्रपश्यतीति कियदन्तरं कर्मिणां ज्ञानिनाश्चेति च। तदेवमेवमादीनि छान्दोग्यवाक्यानि काम्यकर्मणामतिशयितपुरुषार्थप्रदोहनप्रगल्भतावैकल्यं वेदयन्त्येव। तथा द्वितीयाधिकरणविषयभावमर्हति, 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति वाक्यम्। द्वादशवत्सरपर्यन्तं विहरणपरेणापि श्वेतकेतुना पितृवचनामर्षप्राप्तोपनयनेन द्वादशस्वेव वत्सरेषु सर्वान् वेदान् साङ्गोपाङ्गान् समधीत्य प्रतिनिवृत्तेन महामनसाऽप्यनुमाय विज्ञातुमशक्यं तद् ब्रह्माभून्, यत्, 'अप्राक्ष्यो येनाश्रुतं श्रुतं भवति' इत्युपदेशैकगम्यमुपक्षिप्तं तस्य पित्रेति पश्यतां सुज्ञानमेव परमात्मनोऽभिन्ननिमित्तोपादानभूतस्य शास्त्रयोनित्वम्। 'सुखं त्वेव विजिज्ञासितव्यम्', 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा' इति शृण्वताञ्च निरतिशयपुरुषार्थतया ब्रह्मणः समन्वयश्छान्दोग्ये स्थितो नापह्नवमर्हति। तदेवं शास्त्रा-

रम्भात् प्राक् स्थिता चतुस्सूत्र्यपि छान्दोग्यं विषयीकुर्यात्। सत्यं भाष्यकारैस्तदभिप्रायवेदिभिश्च व्याख्यातृभिरौचित्यातिशयपरिकलनयैव तत्रतत्रोपनिषदन्तरवाक्यानि विषयवाक्यतया निरदिश्यन्त। अथापि अल्पत्या अपि अंशास्तत्र सह निवेशमर्हन्तीति सुदूरमिदं छान्दोग्यं ब्रह्मसूत्राणि व्याप्नोतीत्येतदुपपादनैदम्पर्येण वयमेतावदवोचाम।

तदिदं स्थाने, यत् उपनिषदोऽस्याः भाष्यमीषद् विस्तृतं भवतीति।

ईदृशेनानेन भाष्येण सहेदं छान्दोग्यम्, उपनिषदन्तराणि यथा तथैव बहुतालादिकोशनिरीक्षणपूर्वकं यथावस्थितपाठं परिशील्य यथामति उपनिषदं भाष्यञ्च परिष्कृतवता मया काल-देश-मुद्रणश्रमादि विचिन्त्य शब्दसंक्षेपदत्तदृष्टिनैव यत् पूर्वोपनिषत्परिष्कारापेक्षया किञ्चिद्विस्तृत एवात्र परिष्कारग्रन्थः कृत इव—तत्र नूनमवर्जनीयापतितानामनेकेषां विचारणीयानामर्थानां विचारमार्गे कस्मिंश्चित् स्फुरति तदुपेक्षया तदर्थशोधनमन्तरेण मुद्रणनिर्वर्तने सर्वथैवातृप्यता मनसा अमुख्यांशानादरेण यथाशक्ति किञ्चित्कारविधित्सैव मूलम्। विचारक्रमाश्चाल्परूपाः क्वचित् अन्यत्र महान्तश्चेति पदेपदे स्थिताः सूक्ष्मधियां शोधकानां समाराधनाय यदि कल्पेरन्, नूनमाचार्याणामनुग्रहः फलेग्रहिरिति तत्त्वं विज्ञाय तत्कौशलं तत्रैवार्पये। अनौचित्ये च भ्रान्तेः पुरुषधर्मतया मदीयं धनमिदमित्यनुचिन्त्य समये यथावस्थितार्थविवेचनेऽपि यतिष्ये।

काव्येषु यद्वदितिहासवचस्सु चैवं वेदेषु वेदशिखरेषु च सम्यगस्ति।
आस्वादनीयरसभावगतिः समन्तात् कालोऽनलं तदिह यत्परता [तदर्थ्यम्॥

इति

उत्तमूर् ति. वीरराघवाचार्यः

उभयवेदान्तग्रन्थमालासंपादकः

—:०—०:—

# औपनिषद्भगवन्नामावलिः

## तैत्तिरीयोपनिषदि—

विष्णुरुरुक्रमः, विश्वम्, अमृतम्, ब्रह्म, मनोमयः, पुरुषः, अमृतः, हिरण्मयः, इन्द्रः, सत्यात्मप्राणः, सत्यम्, ज्ञानम्, अनन्तम्, ब्रह्म विपश्चित्, आत्मा, आनन्दमयः, शारीरः, असत् सत्, सुकृतम्, रसः, आकाशआनन्दः, अदृश्यः, अनात्म्यः, अनिरुक्तः, अनिलयनः, पुरुषादित्यवर्ती, अन्नमयात्मा, प्राणमयात्मा, मनोमयात्मा, विज्ञानमयात्मा, सर्वभूतजनिजीवनसंवेशनहेतुः परमव्योम, आनन्दः अन्नम् अन्नादः प्रथमजाः अमृतस्य नाभिः अम्भस्यपारेऽभिव्यक्तः भुवन-मध्यस्थितः नाकस्य पृष्ठेनिषण्णः महतो महीयान् ज्योतिरनुप्रविष्टः प्रजापतिः अन्तश्चारी सृष्टिस्थितिलयस्थानम् अक्षरपरमव्योमवासी कविवेद्यः विद्युत्पुरुषः कालकल्पकः अग्राह्यः अनीशकः महायशाः अदृश्यरूपः अद्भ्यःसंभूतः हिरण्यगर्भः विश्वतोमुखः विश्वतश्चक्षुः विश्वतोहस्तः विश्वतस्पात् जनयिता विद्वान् गन्धर्वः त्रिपात् बन्धुः जनिता विधाता विश्ववेदी प्रजापतिः सदसस्पतिः अद्भुतः प्रियः काम्यः जातवेदाः नारायणः वासुदेवः विष्णुः भूम्युद्धारकः वराहः कृष्णः शतबाहुः वशी धाता गोप्ता ज्योतिः समुद्रः इन्दुः पृतनाजित् सनात् अक्रतुः सर्वप्रभवः ब्रह्मा पदवीः ऋष्यादिरूपः स्वधितिः सोमः हंसः वसुः होता अतिथिः नृषत् वरसत् ऋतसत् व्योमसत् अब्जादिरूपः षोडशी विधर्ता सविता नृचक्षुः घृतम् देवजिह्वा वृषभः त्रिधाबद्धः वेनः विश्वाधिकः रुद्रः महर्षिः अनन्यपरः अणीयोरहितः महीयोरहितः परामृतम् दहरगगनम् विशोकः वेदादिस्वरपरः महेश्वरः सहस्रशीर्षः विश्वाक्षः विश्वशम्भुः अक्षरदेवः परमप्रभुः विश्वपतिः आत्मेश्वरः शाश्वतशिवः अच्युतः महाज्ञेयः, विश्वात्मा परायणम्

परब्रह्म परतत्त्वम् परज्योतिः अनन्तः अव्ययः कविः समुद्रेन्तः परमात्मा ब्रह्मा शिवः इन्द्रः अक्षरपरमस्वराट् ऋतम् सत्यम् कृष्णपिङ्गलः विरूपाक्षः ऊर्ध्वरेताः अङ्गुष्ठमात्रः अङ्गुष्ठसमाश्रितः सर्वेशः प्रभुः विश्वभुक् सद्योजातः भवोद्भवः वामदेवः रुद्रः कालः कलविकरणः बलप्रमथनः सर्वभूतदमनः मनोन्मनः सर्वविद्येशानः सर्वभूतेश्वरः ब्रह्माधिपतिः सदाशिवः मधु दुःस्वप्नहा दुरुस्वहा हरिः आदित्यपुरुषः परमेष्ठी ब्रह्मात्मा पञ्चविधः पञ्चात्मा जिज्ञासु(स) कल्तः ऋतजाः रयिष्ठाः श्रद्धासत्यः महस्वान् वसुरण्य(ण्व): संधाता विश्वसृक तेजोदाः वर्चोदाः द्युम्नोदाः महः ब्रह्म ओम् ॥

ऐतरेयोपनिषदि ( आत्मषट्के )—

आत्मा, ब्रह्म, इदन्द्रः, इन्द्रः, प्रज्ञानम, प्रज्ञः ॥

छान्दोग्ये—

हिरण्मयपुरुषः, हिरण्यश्मश्रुः, हिरण्यकेशः, आप्रणखात् सुवर्णः, कप्यासपुण्डरीकाक्षः, उत्, ऋक्सामगेष्णः, अन्तरादित्ये पुरुषः, अन्तरक्षिणपुरुषः, ऊर्ध्वलोकदेवकामेशः, अर्वाग्लोकमनुष्य-कामेशः, सर्ववीणागीयमानः, आकाशः भूतोत्पत्त्यस्तमयहेतुः, ज्यायान्, परायणम्, अनन्तः, परोवरीयान्, प्राणः, विशोकनाक-स्थानः, ब्रह्म, मध्वादित्यः वस्वादिरूपः उदयास्तमयरहितः एकलः सत्यम् चतुष्पद्षड्विधगायत्री भूतपृथिवीशरीरहृदयचरणः सर्वभूत-गाता सर्वभूतत्राता सर्वभूतप्रतिष्ठा सर्वभूतानतिवर्त्यः प्राण-प्रतिष्ठा प्राणानतिवर्त्यः, पुरुषः पूर्णम्, अप्रवर्ति पञ्चस्वर्गद्वारपब्रह्म-पुरुषः परज्योतिः द्युस्थज्योतिः कौक्षेयज्योतिरात्मा स्वजलानसर्वम् मनोमयः प्राणशरीरः भारूपः सत्यसंकल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तः अवाकी अनादरः आत्मा अणीयान् ज्यायान्, अच्युतम्, अक्षितम् प्राणसंशितम्,

प्रत्नादिः उत्तरज्योतिः उत्तमज्योतिः चतुष्पाद्ब्रह्म आदित्यब्रह्म अग्न्यादिसंवर्गवायुः वागादिसंवर्गप्राणः एकदेवः देवात्मा प्रजाजनयिता हिरण्यदंष्ट्रः बभसः अनसूरिः अनद्यमानः अनन्नादी कृतम् विराट् चतुश्चतुष्कलपदः प्रकाशवत्पात् अनन्तवत्पात् ज्योतिष्मत्पात् आयतनवत्पात् षोडशकलब्रह्म प्राणब्रह्म कखब्रह्म अक्षिपुरुषः संयद्वामः वामनीः भामनीः अर्चिरादिगम्यः पञ्चाग्निपुरुषरूपः वैश्वानरात्मा सुतेजोमूर्धा विश्वरूपचक्षुः पृथग्वर्त्मप्राणः बहुलसंदेहः रयिवस्तिः प्रतिष्ठापात् प्रादेशमात्रः अभिविमानः प्राणाग्निहोत्रसमाराध्यः सत् आदेशः सर्वविज्ञानविज्ञानः एकम् अद्वितीयम् परादेवता अणिमा आत्मा सत्यम् सर्वात्मा उपासकात्मा कार्यात्मा जगद्धेतुः समष्टिकृत् त्रिवृत्कृत् व्यष्टिकृत् चिदचिल्लयभूमिः नानाबीजलयस्थानम् चिन्नदीनिर्गमाम्भोधिः अविनाशिविदाश्रयः सूक्ष्मः स्थूलहेतुः व्यापी आचार्यवद्वेद्यः संपन्नाभिमानहन्ता अपुनर्बन्धकृत् नामादिब्रह्म भूमा भूमसुखम् सत्यम् स्वमहिमप्रतिष्ठितः सर्वोत्पत्तिस्थानम् मृत्युरोगदुःखशमनदर्शनः सर्वदृष्टिसर्वानुभूहेतुः मुक्तनानाभावहेतुः शुद्धलभ्यध्रुवस्मृतिः स्मृतिमोच्याखिलग्रन्थिः देहपुरवासी दहरपुण्डरीकवेश्मा दहराकाशः सर्वाधारमहाकाशः अपहतपाप्मा विजरः विमृत्युः विशोकः विजिघत्सः अपिपासः सत्यकामः सत्यसंकल्पः समाहितसर्वकामः अजीर्यन्, अहन्यमानः सत्यपुरम् अनृतापिधानसत्यकामः अहरहर्गच्छद्वेद्यः हृदयात्मा संप्रसादसंपद्यमानः परज्योतिः अमृताभयब्रह्म सत्तियरूपसत्यम् सेतुः विधृतिः सकृद् विभातब्रह्मलोकः अरार्णवस्थानः ण्यार्णवस्थानः ऐरम्मदीयसरस्वान् सोमसवनाश्वत्थस्थानः अपराजिताधिष्ठाता प्रभुविमित विद्योती उत्तमपुरुषः श्यामः शबलः अकृतलोकः नामरूपनिर्वोढा यशः प्रजापतिः सभावेश्मसमास्थितः ।

—०—०—

श्रीः

श्रीनिवासपरब्रह्मणे नमः

# ॥ तैत्तिरीयोपनिषत् ॥

## प्रथमः प्रश्नः

(तैत्तिरीयारण्यके पञ्चमः प्रश्नः)

---

श्रीः

[येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥]

### श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम् ।

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
तैत्तिरीयकवेदान्तविवृतिं करवाण्यहम् ॥ २ ॥

---

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

### तैत्तिरीयोपनिषद्भाष्यपरिष्कारः ।

निध्याय प्रणिपत्य निस्तुलमतीन् अस्मद्गुरूंस्तद्गुरून्
नानोपासनपद्धतीरुपदिशत् न्यासञ्च धर्मैः परैः ।
नित्यानन्दविधाम् अशेषपरविद्वेद्यञ्च नारायणं
नैजं संप्रति तैत्तिरीयशिखरं ज्ञातुं कथञ्चित् यते ॥

---

कोत्तिमङ्गलतालकोशः क; श्रीवेङ्कटेश्वरप्राच्यकोशागारकोशेषु केचित् तालकोशाः ख ; अन्ये ग ; लिखितपुस्तकम् घ ; मुद्रितकोशः ङ इति प्रथममुद्रणे विभज्य पाठभेदाः प्रदर्शिताः ।

## शिक्षावल्ली

हरिः ओ(४)म् — शं नो मित्रश्शं वरुणः। शं नो भवत्वर्यमा।
शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः॥

---

### (उपक्रमशान्तिपाठः)

परविद्यामारभमाणो विघ्नशान्त्यै देवताः प्रार्थयते—

**शं नः....क्रमः।** सूर्यः वरुणः, अर्यमाख्यादित्यविशेषः, इन्द्रः, बृहस्पतिः, महता विक्रमाख्यपदविन्यासविशेषेण युक्तो विष्णुश्च सुखप्रदा भवन्त्वित्यर्थः॥

---

शंन इत्यादिकमध्ययनाङ्गम्, न तूपासनाङ्गम्, वदिष्यामीत्यादिलिङ्गादिति 'वेधाद्यर्थभेदात्' इत्यधिकरणे स्थितम्। अध्ययनाङ्गत्वञ्च तद्विघ्नशमनद्वारा। तदेतदभिसंधायाह—परविद्यामिति। मन्त्रमिमं कठा अप्यधीयत इति तदधिकरणश्रीभाष्यतोऽवगम्यते॥ शमित्यव्ययं सुखवाचीव सुखकरवाच्यपि। अत एव, 'शन्तमेन' इति विशेषणतयाऽपि निर्देशः श्रुतौ। तथा च मित्रोऽस्माकं सुखकरो भवत्वित्यर्थः। उत्तरत्र श्रुतस्य भवत्वित्यस्यात्रापकर्षः। अत एव वक्ष्यति सुखप्रदा भवन्त्विति। छन्दोनुरोधात्तु क्वचित् किञ्चिदप्रयोगः। अनुष्टुप्छन्दस्क आद्यो मन्त्र इति भास्करः। शमित्यव्ययं शान्त्यर्थकमिति 'आमायन्तु ब्रह्मचारिणः' इत्यत्र विद्यारण्यः। विष्णुपुराणे (4-20) शन्तनुपदनिर्वचनेऽप्येवं प्रतीयते। शान्तिपाठेऽत्र तदिष्टावपि सुखपर्यन्तविवक्षा कार्यैव। अत्र मित्रोऽह्नः प्राणवृत्तेश्चाभिमानी; वरुणो रात्रेरपानवृत्तेश्च; अर्यमा आदित्यमण्डलस्य चक्षुषश्च; इन्द्रो बाह्वोर्बलस्य च; बृहस्पतिर्वाचो बुद्धेश्च; विष्णुः पादयोरिति सायणादयः। उरुक्रम इति सकलसुरनरमूर्धन्यस्तपदारविन्दस्य भगवतः परदेवतात्वं दर्शितम्।

नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । [1]त्वामेव

---

**नमो ब्रह्मणे** । वेदाय नम इत्यर्थः । वेदाक्षराभिव्यञ्जकवायुं प्रार्थयते **नमस्ते...वदिष्यामि** । जगज्जीवनहेतुतया बृहत्त्वगुणशालित्वे वायुब्रह्मणोरविशिष्टेऽपि वायोः प्रत्यक्षत्वं विशेष इति भावः ।

---

एवमिन्द्रस्य तच्छेषभूतेन बृहस्पतिना साकमुक्त्यनन्तरमुपेन्द्रं त्रिविक्रमं परं ब्रह्म प्रस्तुत्य, तत एव देहेन्द्रियादिसंघातान्तर्गततत्तदंशाधिष्ठातृतत्तद्देवताप्रार्थनमर्थसिद्धं मत्वा, अध्येयं स्वाध्यायं नमस्करोति–नमो ब्रह्मण इति । ब्रह्मणे परब्रह्मण इति भास्करसायणौ । विष्णवतिरिक्तपरब्रह्माभावात्, अवतारमूर्तिमूलतत्त्वविषयतया वाक्यद्वयनिर्वाहे च क्लेशात्, अपेक्षितत्वाच्च ब्रह्मणे = वेदायेत्युक्तम् । अत एव तस्य नमस्कार्यत्वेऽपि अचेतनत्वेनासंबोध्यत्वात् 'नमस्ते ब्रह्मन्' इत्यनुक्तिः। विशिष्य शब्दोच्चारणकारणभूतत्वात् वायुमपि नमस्करोति नमस्ते वायो इति । प्रत्यक्षमिति । यद्यपि ब्रह्म द्विविधं शब्दब्रह्म परब्रह्मेति । तत्र द्वितीयमप्रत्यक्षम् । पूर्वं तु श्रवणग्राह्यत्वात् प्रत्यक्षम् । एवं प्रत्यक्षभूतं यद् ब्रह्म, तदसि त्वमिति वाक्यार्थः सुवचः, उपरितनवाक्यानुरोधात् । वायोस्तद्भावश्च, 'वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः । अभेदव्यापिनो वायोः' इतिवत् कार्यकारणयोरभेदाद्वा, गुणस्य गुण्यपृथक्सिद्धत्वाद्वेत्यन्यदेतत्—अथापि शब्दब्रह्मणीव वायावेव बृहत्त्वगुणशालित्वेन ब्रह्मशब्दोपचारसंभवात्, विष्णुपुराणे शब्दब्रह्मकारणे मूलप्रकृतावपि, 'तस्मै सुब्रह्मणे नमः' इति ब्रह्मशब्दोपचारदर्शनात्, वायौ साक्षात् तदुपचारे च परब्रह्मतौल्यस्य अतिशयस्य वा तत्र भावनया अधिकस्तुतिसंभवाच्च शब्दब्रह्म अस्पृष्ट्वैव वाक्यार्थमाह जगदिति । ननु कथं वायुः प्रत्यक्षः?

---

1 'त्वम्' इति माध्वः; आन्ध्र...। अर्थः पुनः त्वामित्येव ।

प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि ।

---

ऋतं वदि...वदिष्यामि । ऋतत्वं अपभ्रंशराहित्यलक्षणं शब्द-सत्यत्वम् । सत्यत्वञ्च यथावस्थितार्थकथनरूपमर्थसत्यत्वमिति न पौन-

---

उच्यते । प्रत्यक्षशब्दहेतुत्वात्; परब्रह्मवत् शब्दैकसमधिगम्यत्वाभावेन लौकिकत्वात्; त्वगिन्द्रियग्राह्यत्वाच्च । एवं त्वाचप्रत्यक्षविषयभूतब्रह्मणो वायोः परिणततया श्रावणतया प्रत्यक्षं शब्दब्रह्मापि वायुरेवेत्याकलय्य त्वदभिन्नं ब्रह्म वदिष्यामीत्याह त्वामेवेति । ऋतमिति । ऋतसत्यशब्दौ अभिन्नार्थौ लोके प्रसिद्धौ ; अबाधितार्थपरं वचनं सत्यम्, ऋतञ्चेति । अथापि वैदिकग्रन्थेषु ऋतसत्यशब्दयोः सहप्रयोगादर्थभेदस्तत्र विवक्षणीयः । नानार्थकौ चेमौ शब्दौ । यथा अत्रैव तैत्तिरीये—1-8-2-3; 2-10-6; 3-1-6; 3-10-6; 3-1-37; 3-8-1; 3-9-19; 3-12-1; इत्येवं बहुत्र । ऋच्छति=गच्छतीति ऋतम्, सति साधु सत्यमिति च तत्तद्व्युत्पत्तिः । एकमेव वस्तु अन्यथाभावं गच्छत् कार्याकारं, पूर्वदशायां कारणाकारञ्च ऋतसत्यशब्दाभ्यां सुवचम् । ऋतसत्यनेत्रमिति पुष्पवन्नेत्रः पुरुषोत्तम उच्यते । प्रतिमासं वृद्धिक्षयवान् इन्दुः ऋतम् । अन्यादृशः सूर्य इति । एवं प्रकृतेऽपि ऋतं=गतं=ज्ञातम्, सत्यं=स्थितमित्यर्थं स्वीकृत्य यथागृहीतं वदिष्यामि, यथास्थितं वदिष्यामीत्यर्थं युक्तं केचिदाशेरते । विद्यमानस्यार्थस्य मनसा पर्यालोचनं ऋतवदनम्, वचसोच्चारणं सत्यवदनमिति विद्यारण्यः । इदं क्लिष्टम् । ऋतसत्यपदयोः सुकृतकर्मब्रह्मपरत्वात् कर्मप्रतिपादकं ब्रह्मप्रतिपादकं च भागं वदिष्यामीत्येके । एवञ्च सत्यं परविद्याभागं ऋतं तदितरभागं च उपनिषदि वदिष्यामीति सुवचम् । अत्र कृतो व्याख्यान-

तन्मामवतु । तद् वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ओं शान्तिश्शान्तिश्शान्तिः ॥ [१] (सत्यं वदिष्यामि पञ्च च ॥ १ ॥)

---

रुक्तम् । तन्माम्....अवतु । अधीयमानं ब्रह्म अध्येतारं मामवतु । अध्यापयितारं च विघ्नेभ्यो रक्षत्वित्यर्थः । तमेवार्थं भिन्नानुपूर्वीकाभ्यां ताभ्यामेव पदाभ्यामादरातिशयात् प्रार्थयते— **अवतु...वक्तारम् । शान्तिः शान्तिः शान्तिः** । विघ्नानामस्त्विति शेषः ॥

---

**प्रकारस्त्विह समुचितः ; उपरि एतन्मन्त्रपूर्वमध्येयायां शिक्षावल्ल्यां शिक्षातत्त्वोपदेशपूर्वं प्रमेयोपदेशात् वर्णस्वरमात्राद्यबाधेनानपभ्रष्टम् वदिष्यामीति प्रागुक्त्वा, अर्थाबाधेन च वदिष्यामीति पश्चादुक्तेः सुसंगतत्वात् । अध्ययनाङ्गभूते मन्त्रेऽत्र, वदिष्यामीति ऋतसत्यभूतस्वाध्यायाध्ययनप्रकाशने कर्तुं शक्ये तादृशवेदरूपब्रह्माध्ययनं करिष्यामीत्यर्थं विहाय प्रत्यक्षं ब्रह्मेत्येतादृशं सत्यमर्थं वदिष्यामीत्यर्थवर्णनमयुक्तम् ।**

**संक्षिप्यैवं विमर्शेऽपि विस्तरः स्यान्महानिति ।**
**परिष्कारः सुसंक्षिप्तः स्थास्यत्यत्रापि पूर्ववत् ॥**

**वक्तारमिति पृथक्कथनात् मामिति शिष्य उच्यत इति शान्तिपाठोऽयं शिष्येण कर्तव्यो ज्ञायते । '—अध्येष्यमाणः— प्रार्थयते' इति च भट्टभास्करः । अध्यापनकाले गुरुरपि मामिति स्वात्मानं, वक्तारमिति स्वगुरुञ्च ग्रहीतुमर्हतीति तत्कर्तृकमपि प्रार्थनमिच्छन्ति ॥ तमेवार्थमिति । पूर्वोत्तरवाक्ययोः, तस्य मद्विषये अवनकर्तृत्वं भवतु ; तत्कर्तृकमवनं मद्विषयकं भवतु इति उद्देश्यविधेयविपर्यासकल्पनप्रयासेऽपि वाक्यार्थघटकांशाः उभयत्राविलक्षणा इति भावः । ओं शान्तिरित्यत्र ओमिति विघ्नशान्त्यर्थपरमात्मानुस्मरणमिति विद्यारण्यः ॥**

**शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्।**
**साम संतानः। इत्युक्तः शीक्षाध्यायः [२] (शीक्षां पञ्च) ॥२॥**

---

## (शिक्षार्थसंग्रहः)

[**शीक्षां व्याख्यास्यामः।** शि(शी)क्षाख्यवेदाङ्गस्य वेदोपकारप्रकारो वर्ण्यत इत्यर्थः।] **शीक्षे**ति दीर्घश्छान्दसः। **वर्णः... सन्तानः।** "वर्णास्त्रिषष्टिः च चतुष्षष्टिः शम्भुमते मताः" इत्युक्तरीत्या अकाराद्याः **वर्णाः।** **स्वराः** उदात्तादयः। **मात्राः** "एकमात्रो भवेत् ह्रस्वः" इत्युक्तह्रस्वदीर्घादिभेदाः। **बलम्** अल्पप्राणत्वमहाप्राणत्वादिलक्षणम्। **साम** क्रुष्ट[1] प्रथमादिलक्षणाः सप्त स्वराः। **सन्तानः** वर्णपदसंहितादिः। एतेषां ज्ञानं शिक्षाख्यवेदाङ्गसाध्यम्। ततश्च एतद्ज्ञानं ब्रह्मविद्योपयोगीत्यर्थः। इदमुपलक्षणं वेदाङ्गान्तराणामपि। **इत्युक्तः शीक्षाध्यायः। अध्यायः** ग्रन्थविशेषः। शिक्षाख्यग्रन्थविशेषस्योपयोगो वर्णित इत्यर्थः॥

---

साम समता अद्रुतत्वाविलम्बितत्वादिरूपा मध्यमवृत्तिरित्यन्ये। अथापि मात्रापदस्य कालावच्छेदार्थकतया ह्रस्वत्वादिप्रयोजकवर्णोच्चारणकालेयत्तावत् एकवर्णानन्तरमेतावति काले अन्यवर्णोच्चारणमिति मध्यकालेयत्ताऽपि तत उक्ता भवतीति वा संहितापरसंतानपदविवक्षिता भवतीति वा अत्रार्थान्तरादरणम्। स्वरा इति। एषां स्वरान्तर्भावसंभवेऽपि प्राधान्यात् पृथक्करणमिति भावः। इत्युक्त इत्यनेन वक्ष्यमाणसंहितासंबन्ध्युपासनादिकं तु न शिक्षाध्याये उक्तम्। अतस्तदर्थतया, अध्ययनात्यन्तोपयुक्ततया च शिक्षाप्रस्ताव

---

1. मुद्रितग्रन्थेऽपि क्रुष्टेत्येव यथावत् शोधनम्। पा. कृष्ट.।

सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातस्सँहिताया उप-
निषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिष-

(गुरुशिष्यसंकल्पः)

विद्याफलं गुरुशिष्योभयगतमस्त्विति गुरुशिष्यौ प्रार्थयेते—
**सह नौ...वर्चसम्** । ब्रह्मवर्चसं यशश्च आवयोः सहास्तु इत्यर्थः ।

(महासंहिताव्याख्यानम्)

**अथातः... आचक्षते** । लोकज्योतिर्विद्याप्रजाशरीररूपेषु पञ्चसु अधि-
करणेषु संहिताशब्दितसन्धिविषयकरहस्योपदेशान् व्याकरिष्याम इत्यर्थः।

**अधिलोकम्** । [1]"विभक्त्यर्थेऽव्ययम्" इति सप्तम्यर्थे समासः ।
एवमुत्तरत्रापि । [2]**अधिज्योतिषं अध्यात्मम्** इत्यत्र 'अव्ययीभावे
शरत्प्रभृतिभ्यः', 'अनश्च' इति समासान्तः टच् । लोकादिषु पञ्चस्वधि-
करणेषु अध्यस्यमानाः संहिताः महासंहिताः । महच्छब्दः पूज्यवचनः ।
पूज्या इत्यर्थः । अ उ = ओ इति वर्णसंहितायां पूर्वापरौ वर्णौ

इति भावः । गुरुशिष्याविति । अस्य शिष्यमात्रकर्तृकप्रार्थनरूपत्व-
वर्णनं स्वारस्योपपत्तिविरुद्धमिति भावः । व्याख्यास्याम इति अयं
व्याख्यानकर्ता किं वेदपुरुषः, किं वा 'इति त्रिशङ्कोर्वेदानुवचनम्'
इति अन्ते उक्तेः, मध्ये च परविद्यामुपदिश्य, 'इति प्राचीनयोग्योपास्व'
इति व्यक्तिनिर्देशात् आदितः त्रिशङ्कुकृतवेदानुवचनमेवोच्यत इति
त्रिशङ्कुरेव व्याख्यानकर्तेति विमृश्यम् । एवं पूर्वत्रापि । उच्चारण-

1 विभक्त्यर्थे यदव्ययमिति ङ पाठः ।

2 घ कोशानुसारात्, ज्योतिश्शब्दात् टचो भाषणाच्च ज्यो-
तिषमिति ओकारान्तपाठो भाष्यसंमतो ज्ञायते ।

मधिविद्यमधिप्रजमध्यात्मम् । ता महास ँहिता इत्याचक्षते । अथाधि-
लोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः संधिः । [३]
वायुः संधानम् । इत्यधिलोकम् ।

---

पूर्वापररूपे, श्लिष्टोच्चारणलक्षणः, 'परः सन्निकर्षः संहिता' इत्युक्तः सन्धिः, तदनुकूलयत्नलक्षणः सन्धानः (लक्षणं सन्धानम् ?) इति संहितागतानां चतुर्णामवयवानां लोकादिषु पञ्चस्वधिकरणेषु दृष्टिक्रमं दर्शयति **अथाधिलोकम्** । उच्यत इति शेषः । **अथ**शब्दो वाक्योपक्रमे । **पृथिवी...सन्धानम्** । वायोः पूर्वोत्तरलोकसञ्चारितया संधानत्वमिति भावः । **इत्यधिलोकम्** । उक्तमिति शेषः । [एवमुत्तरत्रापि] ।

---

लक्षणः=उच्चारणकृतः। अयं संनिकर्ष एव, महासंहितेत्यत्र संहिता-पदमुख्यार्थ इति भावः। विद्यारण्यस्तु, 'इषे तु' इत्यत्र एकारोच्चारणा-नन्तरं तकारोच्चारणे संहितायां भवत् तकारान्तरं संधिरित्याह। उच्यत इति शेष इति। अत्र अधिकारवाची अथशब्द इति, अधिलोक-मुपक्रम्यत इति वाक्यार्थः ; एवमुपरि इतिशब्दः समाप्त्यर्थक इति अधिलोकमुपसंह्रियत इत्यर्थ इति सुवचम् । अथापि वक्तव्यमित्येवं पदाध्याहारोऽप्यस्तीति एवमुक्तम् । वायोरिति । संधानमिति करणे ल्युट्, उत्तरानुसारात्। यथा अग्न्यादित्यकृततया तत्संबन्धिवैद्युततेजो-वशात् अपां लाभः, यथा आचार्यान्तेवासिसंबन्धिप्रवचनबलाद् विद्या, यथा मातापितृसंबन्धिप्रजननव्यापारवशात् प्रजा, यथा च ऊर्ध्वा-धरहनुसंश्लेषविशिष्टजिह्वाधीना वाक्, तथा द्युलोकपृथिवीलोक संचारितत्तद्धारकवायुकृता आकाशसिद्धिः । 'तस्मिन्नपो मातरिश्वा दधाति,' 'द्यौः सचन्द्रार्कनक्षत्रं खं दिशो भूः' इत्यादिप्रमाणवशात् वासुदेवेन विधारकवायुना मध्येऽपि स्थितेन पतनप्रतिबन्धेन तत्त-ल्लोकधारणात् मिथ उपमर्दाभावात् अन्तरिक्षमवतिष्ठते ; एकेनान्य-संश्लेषापत्तौ आकाशावकाशदर्शनायोगादिति भावः ।

अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः संधिः । वैद्युतस्संधानम् । इत्यधिज्यौतिषम् ।

अथाधिविद्यम् । आचार्यः पूर्वरूपम् । [४] अन्तेवास्युत्तररूपम् । विद्या संधिः । प्रवचनꣳसंधानम् । इत्यधिविद्यम् ।

अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा संधिः । प्रजननꣳसंधानम् । इत्यधिप्रजम् । [५]

अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् संधिः । जिह्वा संधानम् । इत्यध्यात्मम् ।

इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । संधीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन । [६] (सन्धिराचार्यः पूर्वरूपमित्यधि प्रजं, लोकेन ॥ ३ ॥)

---

**अथाधिज्यौतिषम्....वैद्युतः संधानम्** । "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते" इत्युक्तरीत्या आहुतिसम्बन्धे अग्न्यादित्ययोः पूर्वोत्तरत्वम् । अब्लक्षणसंधेः वैद्युताग्न्यधीनत्वात् वैद्युतस्य संधानत्वं द्रष्टव्यम् । **इत्यधिज्यौ(ज्यो)तिषम्...विद्या संधिः** । **विद्या** शिष्यगतज्ञानम् । **प्रवचनं संधानम्** । **प्रवचनं** अध्यापनमित्यर्थः । **इत्यधिविद्यम्....प्रजननं संधानम्** । **प्रजननं** गर्भोत्पादनम् । **इत्यधिप्रजम्....रूपम्** । कपोलाधःप्रदेशः **अधरा हनुः** । ऊर्ध्वप्रदेशः **उत्तरा हनुः** । **वाक् संधिः** । **वाक्** शब्द इत्यर्थः । एतज्ज्ञानस्य फलमाह— **एवम्...लोकेन** । **संधीयते** अन्वितो भवतीत्यर्थः । शिष्टं स्पष्टम् ॥

---

वैद्युताग्नीति। 'अपां संघातो विलयनञ्च तेजस्संयोगात्' (वै.द.)इति।

यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात् संबभूव।
स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देव धारणो भूयासम्॥
शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि
विश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय॥

(प्रणवप्रार्थना)

ब्रह्मविद्यार्थं प्रणवं प्रार्थयते **यश्छन्दसां....गोपाय। छन्दसां** वेदानां यः **ऋषभः** श्रेष्ठः। **विश्वरूपः** 'विश्वं विष्णुः' इति नामसहस्रपाठात् विश्वं=विष्णुः। तत्प्रतीकत्वात् तद्ध्यानसाधनत्वाच्च तद्रूपत्वम्। सर्वशब्दप्रकृतित्वाद्वा सर्वरूपत्वम्। एवंभूतः प्रणवः **अमृतात्** परमात्मनः सर्वेभ्यश्छन्दोभ्योऽधिकतया **सम्बभूव** प्रादुर्भूतः। **सः इन्द्रः** परमैश्वर्यशाली प्रणवः **मा** मां **मेधया** ज्ञानेन **स्पृणोतु** उज्जीवयतु। 'स्पृ-प्रीतिरक्षणप्राणनेषु' इति हि धातुः। **हे देव इति** दीप्यतः प्रणवस्य संबोधनम्। **अमृतस्य** परमात्मनः हृदये धारको भूयासम्। सर्वदा ब्रह्मज्ञानमनुवर्ततामित्यर्थः। मदीयञ्च शरीरं **विचर्षणं** बलारोग्यादिना कान्तिमद् भवतु। मदीया च जिह्वा सर्वदा ब्रह्मवदनशीलतया भोग्यतमा भवतु। कर्णाभ्याञ्च **भूरि**-भूयः ब्रह्मप्रतिपादकं शास्त्रं शृणवानि। **विश्रुवमिति** छान्दसं रूपम्। परमात्मनः त्वं वाचकतया **कोशोऽसि** निधानस्थानमसि। मेधाजनकतया तद्भरिततया वा मेधया छादितोऽसि।

---

**अधिकतयेति। अधिकेति पदमपि अधि उपरि कः=कीर्त्यमान इति व्युत्पन्नं स्यात्। कै शब्दे। 'अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः। वेदत्रयान्निरदुहद्भूर्भुवस्स्वरितीति च' इति मनुः। वेदत्रयोद्धृताद् व्याहृतित्रयात् प्रणवोद्धार इति छन्दोगश्रुतिर्विद्या-**

आवहन्ती वितन्वाना। [७] कुर्वाणा चीरमात्मनः। वासाँसि मम गावश्च। अन्नपाने च सर्वदा। ततो मे श्रियमावह। लोमशां पशुभिः सह स्वाहा॥

आ मा यन्तु ब्रह्मचारिणः स्वाहा। *यशो जनेऽसानि स्वाहा। श्रेयान् वस्यसोऽसानि स्वाहा। तं त्वा भग प्रविशानि स्वाहा। स

---

तादृशस्त्वम्, श्रुतार्थो यथा अप्रमृष्टो भवति, तथा कुर्वित्यर्थः॥

## (लक्ष्म्यादिप्रार्थना)

विद्यौपयिकहोमसाधनमन्त्राः उच्यन्ते **आवहन्ती...सह सह स्वाहा**। लक्ष्मीप्रार्थनामन्त्रोऽयम्। **आवहन्ती** उत्पादयन्ती **वितन्वाना** वर्धयन्ती यतस्त्वम्, ततो मे चीरमितराणि वासांसि गाः अन्नपाने च सर्वदा कुर्वाणा सती, 'सा हि श्रीरमृता सताम्' इति त्रयीलक्षणां **श्रियम्, लोमशां** बहुलां यज्ञाद्यौपयिकपश्वादिद्रव्यैस्सह **आवह** उत्पादय। होमसाधनत्वात् मन्त्रस्य स्वाहान्तत्वम्। **आ मा यन्तु.... स्वाहा**। ब्रह्मविद्यायोग्याः ब्रह्मचर्यव्रतसम्पन्नाः शिष्याः मामागच्छन्तु इत्यनुकूलशिष्यप्रार्थनामन्त्रः। **यशो.... स्वाहा**। जनमध्ये यशस्वी भवानीत्यर्थः। **श्रेयान्....स्वाहा**। **वस्यसः** वसीयसः वसुमत्तराणां मध्ये श्रेष्ठो भूयासमित्यर्थः। **तं त्वा....स्वाहा**। हे **भगे**ति ऐश्वर्यादीनां

---

* अत्र वाक्यचतुष्टयमधिकम्—'वि मा यन्तु ब्रह्मचारिणः स्वाहा। प्र मा यन्तु ब्रह्मचारिणः स्वाहा। दमायन्तु ब्रह्मचारिणः स्वाहा। शमायन्तु ब्रह्मचारिणः स्वाहा।' इति, शाङ्करेऽपि न व्याख्यातम्। नापि भास्करेण।

मा भग प्रविश स्वाहा । [८] तस्मिन्थ्सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा । यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा पाहि (भाहि) प्र मा पद्यस्व । [९] वितन्वाना, विशस्वाहा सप्त च ॥४॥

---

संबोधनम् । तं त्वां **प्रविशानि** प्राप्नवानीत्यर्थः । **स मा....स्वाहा** । हे भग! स त्वं मां प्राप्नुहीत्यर्थः । **तस्मिन्....स्वाहा** । हे भग! **सहस्रशाखे** ऐश्वर्यवीर्याद्यनन्तविधायुक्ते त्वयि प्रविष्टोऽहं **निमृजे** शुद्धो भवानीत्यर्थः । 'मृजूष् शुद्धौ' इति हि धातुः । **यथा....स्वाहा** । हे धातः! परमात्मन् यथा जलानि **प्रवताः** प्रवणाः दिशो यन्ति । तानादिकात् वनुतेः निष्ठायामनुनासिकलोपः । **यथा मासा अहर्जरम्** । अहोभिर्जरा यस्य स पुरुषः अहर्जरः । यस्य कालेन जरा भवति, न व्याध्यादिना, सोऽहर्जरः । वृद्ध इति यावत् । तं यथा मासाः प्राप्नुवन्ति ; यद्वा अहानि जीर्यन्ति यत्रेति **अहर्जरः** संवत्सरः, सूर्यो वा; एवं मां योग्याः शिष्याः आयान्तु इत्यर्थः । **प्रतिवेशोऽसि** । हे धातः! त्वं **प्रतिवेश**शब्दितप्रतिगृहकल्पः सन्निहितोऽसीत्यर्थः । **मा** मां प्रकर्षेण **पाहि**[1] । **प्रपद्यस्व** । अन्तर्भावितण्यर्थोऽयं पदिः। प्रपन्नं मां कुर्वित्यर्थः ॥

---

**रण्यदर्शिता । प्रवता यन्ति । प्रवता=प्रवणेन निम्नेन यन्तीति भास्करः । प्रवता=प्रवणवता निम्नदेशवतेति परे । दार्ष्टान्तिकानुसारादिव आयन्तीति विद्यारण्यमात्रमतश्छेदः। अत्र तु प्रवताः इति । पाहीत्यत्र भाहीति पाठानुसारेण अन्तर्भावितण्यर्थतया प्रकाशयेति व्याकृतं परैः । प्रतिवेशत्वौचित्यायात्र प्रपद्यस्वेत्यत्र ण्यर्थस्वीकारः ।**

---

**1 पाहीति पाठः अद्वैतिमुद्रणेऽप्यादृतः(महीशूरमुद्रणम्) । पा० भाहि।**

भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मै तां चतुर्थीम्। माहाचमस्यः प्रवेदयते। मह इति। तद् ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः॥ भूरिति वा अयं लोकः। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोकः। [१०] मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते॥ भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा वाव सर्वाणि

---

(व्याहृत्युपासनम्)

वक्ष्यमाणपरविद्याङ्गभूतव्याहृत्युपासनमुपदिश्यते–**भूः....मह इति।** वैशब्दः प्रसिद्धौ। **मह** इति व्याहृतिं माहाचमस्यनामा ऋषिः तिसृणां व्याहृतीनां चतुर्थीं वक्तीत्यर्थः। **तत्....देवताः।** यत् **महश्शब्दितं,** तदेव निरतिशयमहत्त्वात् आत्मब्रह्मशब्दितम्। इतरदेवतास्तु तदङ्गभूताः=तस्यात्मनः शरीरभूताः। अतो निरतिशयमहत्त्वाभावात् न **महश्शब्दवाच्यत्वमित्यर्थः।** एवं **महश्शब्दस्य** वास्तवमर्थमुपवर्ण्य, भूर्भुवस्सुवर्मह इति व्याहृतिचतुष्टये चतुर्विधोपासनं दर्शयति **भूरिति....**

---

न महश्शब्देति। एवमत्रेतरदेवतानां ब्रह्माङ्गत्वकथनं अन्यासां व्याहृतीनां चतुर्थव्याहृत्यङ्गत्वोपपादनाय। तदेवोपरि चतुर्धोपपाद्यते। लोकत्रयमुख्यदेवतानामग्निवाय्वादित्यानां ब्रह्मशेषत्वमुपरि एतद्विद्याफलकीर्तनप्रकारेण ज्ञातमिति व्याहृत्यर्थानामङ्गप्रधानत्वप्रयुक्तं व्याहृतीनामङ्गप्रधानत्वमिति ध्येयम्। भूरिति वा इत्यादाविव तद्ब्रह्मेत्यादिवाक्ये इतिकरणाभावात् नात्र दृष्टिविधिः। अतः अङ्गान्यन्या इत्यत्र अन्यासु व्याहृतिषु अङ्गदेवतादृष्टिविधित्वशङ्का न कार्या। चन्द्रमसेति। 'प्रथमां पिबते वह्निः' इत्यादिप्रामाण्यात् सर्वेषां

ज्योतीँषि महीयन्ते ॥ भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूँषि । [११] मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते ॥ भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते ॥ ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति । [१२] असौ लोको यजूँषि वेद द्वेच ॥ ५ ॥

स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः। अमृतो

---

**महीयन्ते** । भूरादिव्याहृतिचतुष्टये भूलोकान्तरिक्षस्वर्गलोकादित्यरूपार्थ-चतुष्टयदृष्टिः कर्तव्येत्यर्थः । **महीयन्ते** पूजां प्राप्नुवन्तीत्यर्थः । एव मुत्तरत्रापि द्रष्टव्यम् । महीयन्ते=पूज्यन्ते अनेनेति मह इति महश्शब्द-व्युत्पत्तिरिति भावः । **ताः...चतुर्धा** । चतस्रोऽपि व्याहृतयः उक्तप्रकारेण चतुर्विधोपासनयुक्ता इत्यर्थः । **चतस्रश्चतस्रो व्याहृतयः** । भूराद्याः चतस्रो व्याहृतयोऽपि उक्तप्रकारेण प्रत्येकं चतस्रः। अतः षोडश व्याहृतयः संपद्यन्ते इत्यर्थः । तद्वेदनस्य फलमाह **ता...बलिमावहन्ति** । तद्वेदनात् ब्रह्मविद्या निष्पद्यते, सर्वे च देवाः पूजां कुर्वन्तीत्यर्थः ॥

## (परविद्या)

अङ्गान्युपदिश्य परविद्यामाह **स यः....हिरण्मयः** । हृदयान्त-र्गताकाशे विशुद्धमनोग्राह्यः **अमृतः** असंसारी, कमनीयविग्रह[यः]

---

चन्द्रकलापातृत्वादिति वदन्ति । ब्रह्मणा=अथर्ववेदेन प्रणवेन वा । स वेद ब्रह्मेति । लोकादय आदित्यादिभिर्यथा यथा, ब्रह्मणा तथा तथा देवादयो महीयन्त इति ज्ञाननिष्पत्तेरिति च भावः ।

हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवावलम्बते ।
सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले ।

---

आस्ते । स उपासितव्य इत्यर्थः । इदञ्च वाक्यं परमात्मपरतया "सर्वत्र प्रसिद्धोपदेशात्" इत्यत्र भगवता **भाष्यकृतो**दाहृतम्, तथैव **व्यासार्यै**र्व्याख्यातञ्च । अतो जीवविषयत्वशङ्का न कार्या ॥

## (अर्चिरादिगतिपूर्वकफलप्राप्तिः)

एवं परविद्यामुपदिश्य अर्चिरादि[ना] गतिं दर्शयति **अन्तरेण.... योनिः** । **तालुके** जिह्वायां **अन्तरेण** मध्ये गोस्तन इव योऽवलम्बते, सा **इन्द्रस्य** सन्निहितमुक्तैश्वर्यस्य जीवस्य (ब्रह्मविदः) **योनिः** निर्गममार्गः। **यत्र...विवर्तते । यत्र** यस्मिन् मार्गे । **केशान्तः**=**कः** ब्रह्मा ; **ईशः** रुद्रः । "क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्" इति **केशव**-शब्दनिरुक्तौ तथा वर्णनात् । तयोः(तयोरपि) **अन्तः** अवधिभूतः; कारण-मिति यावत् । संहर्ता । स्थानभूत इति वा । तादृशो भगवान् यत्र मार्गे विशेषेण प्राप्यतया वर्तते इत्यर्थः । यद्वा **तालुके अन्तरेण** ऊर्ध्वाधरतालुद्वयमध्ये । तयोरप्यधस्तादित्यर्थः । यः स्तन इव लम्बते । "संततं सिराभिस्तु लम्बत्याकोशसन्निभम्" इति श्रवणात् हृदयपुण्डरीक-मुच्यते । सा **इन्द्रस्य** परमात्मनः **योनिः** [प्रतिष्ठिति]स्थानम् ।

---

इन्द्रयोनिरिति । बृहदारण्यके (6-2) इन्द्रं तत्पत्नीं च प्रस्तुत्य तयोः लक्ष्मीनारायणयोः सृतिः संचरणी, यैषा हृदयादूर्ध्वा नाडी उच्चरतीत्युक्तम् । तत्रैव अत्रापि इन्द्रपदस्य परमात्मपरत्वसंभवेऽपि

**भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । [१३] सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्, ततो भवति ।**

---

यत्र केशान्तवत् सूक्ष्मोऽसौ जीवो विशिष्य वर्तते । 'हृदि ह्ययमात्मा' इति श्रुतेः । **व्यपोह्य...प्रतितिष्ठति** । प्रयाणकाले शिरःकपाले भित्त्वा भूरित्युपासितया व्याहृत्या **अग्नौ** अग्निलोके प्रतिष्ठितो भवति । भूरिति व्याहृतिः अग्निलोकं प्रापयतीत्यर्थः । यद्यपि सर्वस्य अर्चिरादिमार्गगन्तुः अग्निलोकप्राप्तिरस्ति, तथापि भूरादिव्याहृत्युपास्तिमहिम्ना कञ्चित् कालं तत्र तिष्ठतीत्यर्थः । **स्वाराज्यम्** अकर्मवश्यत्वमित्यर्थः । **विज्ञानपतिः** स्वसङ्कल्पनिष्पाद्यसर्वेन्द्रिय इत्यर्थः । करणनिरपेक्षज्ञान इति वा अर्थः । **एतत् ततो भवति । ततः** तदनन्तरं एतद्भवति ।

---

संनिहितमुक्तैश्वर्यस्य जीवस्येति व्याख्यानम्, 'इन्द्रस्य जीवात्मनः ईश्वरस्य' इति भास्करव्याख्यापरिष्करणाभिप्रायेण । कः = ब्रह्मा, ईशो = रुद्र इति व्याख्यानम्, 'कश्च अश्च ईशश्च' इति तद्दर्शितब्रह्मविष्णुरुद्ररूपार्थासंमतिप्रदर्शनाय । तयोरप्यधस्तादिति । 'अधो निष्ठ्या' इति निष्ठ्यायाः = ग्रीवाबन्धनादधः इत्युक्तमेवात्रैवं दर्शितमिति भावः । 'यत्रासौ केशान्तः तत्रेन्द्रयोनिरित्युक्तो मार्गः शीर्षकपाले व्यपोह्य वर्तते' इति परोक्तव्याख्या । स्वयमिन्द्रयोनिशब्देन हृदयपुण्डरीकविवक्षणात् तदनुगुणतया केशान्तपदं गौण्या वृत्त्या जीवपरमाह । यत्र केशान्तः = केशानामन्तः अवधिः—मूलस्थानं विवर्तते केशरूपविचित्रपरिणामवान् भवति, ते शीर्षकपाले व्यपोह्य जीवोऽर्चिरादिना गच्छतीति व्याख्यातुमपि युक्तम् । ब्रह्मशब्दार्थमाह आविर्भूतेति ।

आकाशशरीरं ब्रह्म। सत्यात्मप्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम्। इति प्राचीनयोग्योपास्स्व। [१४] वायावमृतमेकं च ॥६

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि। आप ओषधयो वनस्पतय आकाश आत्मा। इत्यधिभूतम्। अथाध्यात्मम्। प्राणो व्यानोऽपान उदानस्समानः। चक्षुःश्रोत्रं मनो वाक्[1] त्वक्। चर्म माँसँस्नावास्थि मज्जा।

---

किं तदित्यत्राह **आकाशशरीरं ब्रह्म**। आ=समन्तात् प्रकाशमानदिव्यविग्रहयुक्तं ब्रह्म आविर्भूतब्राह्मरूपं भवतीत्यर्थः। **सत्यात्म....अमृतम्**। सततैकरूपतया सत्यानां नित्यमुक्तानामात्मनां प्राणवत् परमप्रेमास्पदभूतो यः परमात्मा, स एव **आरामः** सर्वविधभोग्यभूतो यस्य, तत् तथोक्तम्। **मनसा** सङ्कल्पमात्रेण सिद्धः आनन्दो यस्य तत् **मनआनन्दम्**। "[2]यं यं........कामयते, सो(ससो)ऽस्य सङ्कल्पादेव समुत्तिष्ठति" इति श्रुतेः। शान्त्या समृद्धम्=आत्यन्तिकशान्तियुक्तम्। **अमृतम्** असंसारि। एतादृशं ब्रह्म भवतीति पूर्वेणान्वयः। **इति...उपास्स्व**। एवं प्राचीनयोग्यनामानं शिष्यमनुशिष्टवान् इति शेषः ॥

**(पाङ्क्तम्) पृथिव्यन्तरिक्षं....स्पृणोतीति**। भूतेषु पृथिव्यादिपञ्चकमेकम्; अग्न्यादिपञ्चकं द्वितीयम्; अबादिपञ्चकं तृतीयम्; एवं

---

अवान्तरदिशाः। 'आपश्चैव हलन्तानां यथा वाचा निशा दिशा' इति स्मर्तव्यम्। आत्मा =ओषध्यादिस्थावरविलक्षणप्राणी।

---

1. वाक् इत्यन्तं समाप्य त्वक्चर्मेति संमेल्य केचिदधीयते।

एतदधि विधाय ऋषिरवो चत्। पाङ्क्तं वा इद ँ सर्वम्। पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति [१५] सर्वमेकञ्च ॥ ७ ॥

ओमिति ब्रह्म। ओमितीद ँ सर्वम्। ओमित्येतदनुकृति ह स्म

---

त्रीण्यधिभूतं पञ्चकानि। अध्यात्मं प्राणादिपञ्चकमेकम्; चक्षुरादिपञ्चकं द्वितीयम्; चर्मादिपञ्चकं तृतीयम्। एवं षट् पञ्चकान्यपि, 'पञ्चाक्षरा पङ्क्तिः' इति पञ्चत्वसंख्यायुक्ततया पाङ्क्तानि; ततश्च पङ्क्तिच्छन्दोयुक्ततयोपासितेन पञ्चकषट्केन **पाङ्क्तं स्पृणो**ति। पञ्चभूतादियुक्ततया **पाङ्क्तं** जगत् **स्पृणो**ति पालयति, साम्राज्यं लभत इति पञ्चकषट्कमधिकृत्य कश्चिदृषिरवोचदित्यर्थः ॥

**(प्रणवप्रशंसा)** प्रणवं प्रशंसति **ओमिति ब्रह्म**। ब्रह्मप्रतीकत्वात् तद्ध्यानसाधनत्वाच्च प्रणवो ब्रह्मैव। **ओमितीदं सर्वम्**। ब्रह्मात्मकत्वादेव सर्वात्मकश्चेत्यर्थः (सर्वात्मकत्वञ्च)। **ओमित्येतदनुकृति** (कृतिर्हि) **ह स्म वा अपि**। विधिनिषेधात्मकस्य सर्वस्यापि ओमित्येकाकार एवानुज्ञालक्षणोऽनु-

---

अधिविधाय=अधिकृत्य ज्ञापयित्वा। पूर्वोक्तोपासनोपयोगितया पाङ्क्तषट्कानुसंधानमुक्त्वेति यावत्। अतः परविद्याप्रकरणे साम्राज्यलाभार्थैतद्विधानं कथमिति शङ्काया नावसरः। उपासनतदङ्गनानाकर्माद्यनुष्ठानोपयोगिपाङ्क्तपालनस्यैव विवक्षितत्वात्। एतदन्विति। अनुकृतीतिवत् अनुकृतिरिति पाठोऽपि परमुद्रितग्रन्थादिसंमतः। ओश्रावयेत्याश्रावणं ओकारघटितत्वात् ओमित्येतत्प्रणवानुकारविशिष्टमेव। ओकारस्य प्रणवैकदेशत्वादिति व्याख्यान्ति। शाङ्करे तु ह स्म वै इत्यन्तं पृथग्वाक्यम्, ओमित्येतत् अनुकृति अनुकरणम् अनुज्ञाक्षरमिति। अनुकृतमस्यास्तीत्यनुकृतीति वा अनुगुणा कृतिर्यस्य तत् अनु-

वा अप्योश्रावयेत्याश्रावयन्ति । ओमिति सामानि गायन्ति । ओँशोमिति शस्त्राणि शँसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रति-

---

कारोऽपि ह स्म वै इति निपातत्रयेण प्रसिद्धिर्द्योत्यते । **ओश्रावयेति... गायन्ति** । ओमित्युपक्रम्यैव उद्गातारः सामानि गायन्तीत्यर्थः । **ओंशों....शंसन्ति** । होतारोऽपि ओमित्युपक्रम्यैव शंसन्तीत्यर्थः । **ओमित्यध्वर्युः प्रतिगृणाति**। होतरि शंसति अध्वर्युः प्रत्यृचं ओमित्यनुमोदते । ओथामोदेवे (ओथोमोदेव) (ओथामोद इवे ?)ति, शंसतो होतुः प्रोत्साहनं प्रतिगरः । पाकं पचतीतिवत् **प्रतिगरं प्रतिगृणातीति**

---

कृतीति वा तदा शब्दः साधुः। अत्र तु भाष्ये अपीत्यन्तं पृथग्वाक्यम् । तत्र अनुकृतीति पाठे अपिशब्दबलात् पूर्ववाक्यात् सर्वमित्यनुषज्यते। सर्वं विधिनिषेधात्मकं सर्वं ओमित्येवंरूपानुज्ञाक्षरकमित्यर्थः । अनुकृतिरिति पाठे एतदनुकृतिरपि, एतस्य सर्वस्य (विधिनिषेधात्मकस्य) अनुज्ञापि ओमिति भवतीत्यर्थः। एवमभिप्रायेण विधीत्यादि उक्तम् । अप्योश्रावयेति वाक्यारम्भं कृत्वा अपीत्यस्य अपिचेत्यर्थमाहुः । तत्र आश्रवणं त्रिविधम् आश्रावयेत्याकारमेकम् ; ओश्रावयेति द्वितीयम् ; ओंश्रावयेति तृतीयम्। तत्र ओंश्रावयेत्यत्र प्रणवसत्त्वे न विवादः। तद्वत् ओश्रावयेत्यपि ओमित्येतदनुकरणविशिष्टमेवाश्रावयन्तीत्यपि अपिशब्दतात्पर्यं सुवचम् । एवञ्च पूर्वं पश्चाच्च समुच्चयार्थकापिशब्दाद्यभावेऽत्र परं कुत इति शङ्का अनवकाशा॥ ओकारोऽयं संबोधनपरः। आश्रावयन्ति अध्वर्युतत्पुरुषाः आग्नीध्रं प्रति एवं प्रैषं कुर्वन्ति । यद्वा आश्रवः=प्रतिज्ञा । तां कारयन्तीत्यर्थः । श्रावयेत्यस्य देवान् प्रति हविःप्रदानावसरं श्रावयेत्यर्थः । ओमित्युपक्रम्यैवेति । अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम् । शस्त्रशंसनं नाम तादृश-

गृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति [१६] ओं दश ॥ ८ ॥

---

निर्देशः। **ओमिति ब्रह्मा प्रसौति**। अनुज्ञां प्रयच्छतीत्यर्थः। **ओमित्यग्निहोत्रमनुजानाति**। ओमुन्नयेत्येवं यजमानोऽनुजानातीत्यर्थः। **ओमिति....उपाप्नोति**। वेदं प्राप्नवानीत्यनुसंधाय अध्ययनं (प्रवचनं) करिष्यन्, **ओमित्याह**, तथैव वेदं प्राप्नोतीति दृष्टमेवेत्यर्थः ॥

---

मन्त्रपठनम्। तदारम्भे होतारः शों सावोमित्येव अध्वर्युमनुज्ञां याचन्ते। तत्र शोमित्यत्रापि ओमित्यस्य प्रवेशात् ओमित्युपक्रम एव। इदमेव दर्शयितुम् ओंकारे आदरात् ओंशोमिति इत्याम्नातम्। ओमिति शोमिति चेत्यर्थः। शस्त्रान्तेऽपि ओमिति ब्रुवते। अनुमोदत इति। अनेन ओंकार इह शस्त्रशंसनस्याङ्गीकारपर इति दर्शितम्। तथा च ओमित्यनुमोदमानः प्रतिगरं प्रतिगृणातीत्यर्थः। 'ओथामोद इव' इति प्रोत्साहनाकारः। इदमर्धर्चावसाने अध्वर्युणा उच्यते। ओ इति होतृसंबोधनम्। अथ अर्धर्चशंसनानन्तरम् मोद इव= हर्ष इव। पूर्णशंसन एव पूर्णहर्षसंभवात् इवेत्युक्तम्। यद्वा इव= एव। प्रयच्छतीति। प्रोक्षणादिक्रियाप्रवृत्तान् अन्यान् ऋत्विजः ओं प्रोक्षेत्येवं ओंकारेणानुज्ञाकरणपूर्वकमेव प्रेरयतीत्यर्थः। उन्नयेति। अग्निहोत्रहवण्याख्ये पात्रे क्षीरादिपात्रात् होमार्थं क्षीरादि स्रुवेणोन्नयेत्यर्थः। प्रवक्ष्यन् इत्यस्य प्रवचनमध्यापनं करिष्यन् इत्यर्थौचित्येऽपि उपाप्नवानीति शिष्याशंसनानुसारात् अध्ययनं करिष्यन् इत्यर्थः स्वीकृतः। यद्यपि ब्रह्मविद्याङ्गभूतवक्ष्यमाणस्वाध्यायप्रवचनाङ्गप्रणवविषयमिदं वाक्यजातमिति, उक्तरीत्या आश्रावणादिसर्वकर्मोपयुक्तं प्रणवं ब्रह्मप्राप्तिफलकामनया प्रवचनारम्भे य आह, स संभवति; तथापि तदा अङ्गाङ्गे प्रणवे विद्याफल-

ऋतञ्च स्वाध्यायप्रवचने च। सत्यञ्च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च

---

(स्वाध्यायप्रवचनादिविद्याङ्गकर्म)

ब्रह्मविद्याङ्गमनुष्ठेयं कर्माऽऽह—**ऋतञ्च...तद्धि तपः**। **ऋतं** सूनृता वाणी। **स्वाध्यायः** वेदाध्ययनम्। **प्रवचनमध्यापनम्।** ऋत-स्वाध्याय-प्रवचनानि नित्यानुष्ठेयानीति वाक्यार्थः। **सत्यं** समदर्शनम्। 'ऋतं तु सूनृता वाणी सत्यं तु समदर्शनम्' इत्युक्तेः। **तपः** कायशोषणम्। **दमः** बाह्येन्द्रियजयः। **शमः** अन्तरिन्द्रियजयः। **अग्नयः** गार्हपत्यादयः। **अग्निहोत्रमिति** नित्यकर्मणामग्निसाध्यानामुपलक्षणम्। मृतमनुष्योद्देशे-नानुष्ठीयमानं श्राद्धं (श्राद्धादिकं) **मानुषम्** [आहुः]; 'नृणामयं परो

---

वचनं स्तुतिरितिक्लिष्टमेव। इष्टमेवेति। यथावत् वेदप्राप्तिः ओमित्युप-क्रमबलादेवेति प्रणवमहिमप्रदर्शकमन्तिमवाक्यमपीति सूपपन्नमिति भावः॥ ब्रह्मविद्याङ्गसर्वकर्माङ्गं प्रणवं प्रस्तुत्य कर्माऽऽह ऋतञ्चेति। चकारद्वयेन ऋतादिष्वेकैकेनापि स्वाध्यायप्रवचनयोः सर्वाधिकारि-साधारणयोः समुच्चयः प्रदर्श्यते। समदर्शनमिति। यन्निबन्धनं सत्यं वचः, तद्दर्शनमित्यर्थः। उपरि सत्यवचा इत्येतदनुरोधात्। आत्मवत् सर्वभूतानि पश्यन् स्वात्मना यथा ज्ञातम् तथैव परेणापि ज्ञातव्यमिति मन्वानः तुल्यज्ञानजनकं वच एव हि प्रयुञ्जीत। बुद्धि-पूर्वकं हि नानृतं वदेदिति। अग्नय इत्याधानं विवक्षितम्। अतिथय

---

1 पा० मानुषं......श्राद्धमित्याहुः ख. मानुषं—श्राद्धमाहुः ग.

स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्याय प्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः। [१७]।

प्रजाच स्वाध्यायप्रवचने च षट्च ॥ ९ ॥

---

धर्मः सर्वेषां समुदाहृतः। त्रिंशल्लक्षणवान् साक्षात् सर्वात्मा येन तुष्यति' इत्युक्तभगवदाराधनं वा। **प्रजनः** प्रजननम्, ऋतुकालाभिगमनम्। **प्रजातिः** प्रकर्षेण पुत्रपौत्रादिजननम्। सत्यं वचो यस्य स **सत्यवचाः**। रथीतरस्यापत्यं **राथीतर**नामा ऋषिः **सत्य**मिति निर्दिष्टं सत्यं वच एव प्रधानम्, स्वाध्यायप्रवचने न प्रधाने इति मन्यते। **पौरुशिष्टि**नामा तपसि **नित्यः** निरतः ऋषिस्तु, तप एव प्रधानम्, स्वाध्याय प्रवचनाभ्यां न प्रयोजनमिति मन्यते। स्वाध्यायप्रवचने एव प्रधानम्, तदेव प्रथमं (परमं) तप इति नाको **मौद्गल्यो** मन्यत इत्यर्थः ॥

---

इत्यातिथ्यम्। मानुषं मनुष्योत्सवेषु विवाहादिषु क्रियमाणो वस्त्रादिमनुष्यसत्कार इति परोक्तम्। प्रजाशब्देन प्रजार्थविवाह-गर्भाधानादि विवक्ष्यते। ऋतुकालः रजोदर्शनदिनात् चतुर्थदिने स्नातायाः पञ्चमादिद्वादशदिनकालः। प्रजातिरिति। 'पुत्रेण लोकान् जयति पौत्रेणाऽऽनन्त्यमश्नुते', 'एष्टव्या बहवः पुत्राः' इत्यादिकं ग्राह्यम्। पुंसवनसीमन्तोन्नयनादिः प्रजननशब्देनैव सुग्रहः। भास्करव्याख्यानुरोधात् तद्धि तप इत्यपि नाकवाक्यमिति कृत्वा, तदेव प्रथमं तप इति नाक इत्युक्तम्। न हि श्रुत्या नाकमतस्थापनमनेन वाक्येनेति वक्तुं युक्तम्। त्रिभिरपि मुनिभिरेकैकमात्रस्यैवादरणात्। अत एव

अहं॑वृ॒क्षस्य॒ रेरि॑वा । कीर्तिः॑ पृ॒ष्ठं गि॒रेरि॑व । ऊ॒र्ध्वप॑वित्रो वा॒जि-

(विद्याङ्गमन्त्रः)। विद्याङ्गतया जप्यमन्त्रमाह--अहं वृक्षस्य रेरिवा । वृक्ष-वत् छेद्यस्याहङ्कारादेः क्षपयिता । रेरिवेति रीङ्क्षय इत्यस्मात्, 'अन्ये-भ्योऽपि दृश्यते' इति क्वनिपि रूपम् । निरस्तसमस्तदेहात्माभिमानः

---

तत्र एवकारः । न हि स्वाध्यायप्रवचनमात्रमनुष्ठेयमिति श्रुतिमतम् । समुच्चयस्यैवोपक्रमात् । अतो नाकमतपोषणायोगात् तद्धितप इति पूर्वं 'सत्यवचा' इतिवत् नाकमतहेत्वनुवाद इत्याशयः । यद्वा तदेव प्रथमं तप इति श्रुत्युक्तहेतोः स्वाध्यायादि प्रधानं नाको मन्यत इति भाष्यवाक्यार्थः । अत्रैवं श्रुत्यर्थः । स्वाध्यायप्रवचनायोः सर्वत्र समुच्चेयत्वमुक्तम् । राथीतरः सत्यं सर्वत्र समुच्चेयं मन्यते । सत्य-वचस्त्वात् । तपोनित्यत्वात् पौरुशिष्टिः तपः समुच्चेयमिति । नाकस्तु यथार्थज्ञः स्वाध्यायादिकमेवेति। स्वाध्यायादेरेव सत्यत्वं तपस्त्वञ्चास्ति। सत्यत्वमबाधितार्थपरत्वात् स्पष्टम् । तपस्त्वं दर्शयति तद्धि तप इति । 'ऋतं तपः सत्यं तपः' इति वक्ष्यमाणरीत्या सर्वस्यापि तपस्त्वे स्वाध्यायादेः तपस्त्वे कः संदेहः । न हि कायशोषणमेव तपः । किंतु तप आलोचन इति धातोः ज्ञानसाधनं तपः । तत्रान्येषामदृष्टद्वारा रजस्तमोनिबर्हणेन ज्ञानसाधनत्वम् । स्वाध्यायादेस्तु दृष्टद्वारा साक्षादिति इदमेव प्रधानं प्रथमं तपः । अत इदं सर्वाधिकारि-समादरणीयम् । अत एव श्रुतिः, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति तत्तत्प्रातिनियतं यज्ञादि पृथक्कृत्य साधारण्यात् प्राधान्यात् प्रथमं वेदानुवचनमेव वेदनसाधनमाह । प्रवचनपर्यन्ताध्ययनमेव ध्यानोपयोगिनिष्कृष्ट-ज्ञानसाधनमिति च सर्वसंमतमेवेति ।

एवं सर्वकर्मोपस्कृतस्वाध्यायप्रवचनजनितां संपत्तिं दर्शयति— अहंवृक्षस्येति । इदमेकं पदम् । अहंशब्दोऽहङ्कारपरः । स वृक्ष

नीव स्वमृतमस्मि। द्रविणँ सवर्चसम्। सुमेधा अमृतोऽक्षितः। इति त्रिशङ्कोर्वेदानुवचनम् [१८] अहँषट् ॥ १० ॥

वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्।

---

इत्यर्थः। **कीर्तिः पृष्ठं गिरेरिव**। मेर्वादिगिरिपृष्ठवत् श्लाघ्यगुणशालितया कीर्तिमानस्मीत्यर्थः। **ऊर्ध्वपवित्रः** सर्वोत्तरपवित्रोऽहं **वाजिनि** वाजमन्नमस्यास्तीति **वाजी** भोक्ता; सर्वशेषिणि परमात्मनि **स्वमृतमिवास्मि** अतिशयेन भोग्योऽस्मि। तत्प्रीतिविषयोऽस्मीत्यर्थः। **द्रविणं सु (स?)वर्चसम्**। तस्य समीचीनद्रविणमस्मि। भोगोपकरणमस्मीत्यर्थः। **सुमेधा अमृतोऽक्षितः**। भगवच्छेषत्वज्ञानदार्ढ्यात् सुमेधाश्च। **अमृतः** मरणशून्यः असंसारी। **अक्षितः** अक्षयः=षड्भावविकारशून्य इत्यर्थः। **इति त्रिशङ्कोर्वेदानुवचनम्** त्रिशङ्कुदृष्टोऽयं मन्त्र इत्यर्थः ॥

(अन्तेवास्यनुशासनम्)

**वेदं...अनुशास्ति**। वेदमध्याप्य आचार्यः शिष्यमनुशिष्या-

---

इवेत्युपमितसमासः। अस्मीत्यत्र कर्ता त्वर्थसिद्ध इति दर्शित इव भाष्ये। एकवाक्यतासंपादनाय यशोऽहं भवानीत्यादाविव कीर्तिपदं धर्मिपर्यन्तं कीर्तिमत्परम्। एवञ्च गिरिपृष्ठं कर्तुर्दृष्टान्त इत्याशयेनाऽऽह श्लाघ्येत्यादि। सुवर्चसमिति पाठो दृश्यते। सवर्चसमिति पाठेऽपि समीचीनेति व्याख्यानं युज्यते। समीचीनत्वं दीप्तिमत्त्वञ्चैकमिति। सत्यमित्यादि सर्वसाधारणोपदेशः। यत् विहितम् अदृष्टद्वारा उपयोगि, स धर्मः। सत्यवदनं तु अनृतवदने प्रत्यवाय इति

कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । [१९] देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव ।

यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकँ सुचरितानि । तानि त्वयोपास्यानि । [२०] नो इतराणि ।

---

दित्यर्थः । **स्वाध्यायान्मा प्रमदः** । स्वाध्यायाध्ययने प्रमादं मा कार्षीः । तत्रावहितो भवेत्यर्थः ।

**आचार्याय...मा व्यवच्छेत्सीः** । गुरवे दक्षिणां दत्वा पुत्रसंतत्यविच्छेदाय भार्यामुद्वहेः । **कुशलं** देवार्चनादिमङ्गलाचरणम् । **भूत्यै न प्रमदितव्यम्** । ऐश्वर्यार्थं कर्म कुरु । ऐश्वर्यस्य सर्वश्रेयस्साधनत्वादिति भावः । **मातृदेवो भव** । देवमिव मातरं पूजयेत्यर्थः । एवमुत्तरत्रापि ।

**यानि....इतराणि** । शिष्टाचारेष्वपि श्रुतिस्मृतिविरोधशून्यतया यानि सुचरितानि, तान्येव होलाकादीनि ग्राह्याणि ; न लोभादिमूलचरितानीत्यर्थः । **ये....प्रश्वसितव्यम्** । स्वापेक्षया श्रेष्ठानां ब्राह्मणानां

---

तत्परिहारार्थमेव विहितमिति न धर्मः । अतः पृथगुक्तिः । स्वाध्यायप्रवचने इत्यत्रेवात्र स्वाध्यायशब्दोऽध्ययनपरः । गृहस्थस्य प्रमादसंभावनातिशयात् मुखान्तरेण पुनराह सत्यादिति । अर्चनादीत्यादिपदं लौकिककर्मपरम् । मङ्गलाचरणम् आत्मात्मीयक्षेमार्थकर्म । मात्रादेर्देवत्वं देववत् पूज्यत्वम् । अनवद्यानि । सावद्यं कलञ्जभक्षणादि । तथा, 'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु' इति निषिद्धत्वादाम्नायविहितमपि कदाचित् किञ्चिदुपेक्ष्यं भवतीति । कर्माणि श्रुत्यादिविहितानि । तत्राधिकारापादका आचाराश्चरि-

ये के चास्मच्छ्रेया्ँसो ब्राह्मणाः। तेषां त्वयाऽऽसने न प्रश्वसित-व्यम्। श्रद्धया देयम्। अश्रद्धया देयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा

---

शय्यासनेषु समानतया न विश्रमणीयम्। **श्रिया देयम्।** श्रीः [संपदियद्वा] मुखशोभा। अविषण्णवदनेन देयमित्यर्थः। **भिया देयम्।** सम्यगकरणे प्रत्यवायो भविष्यतीति भिया देयमित्यर्थः। **संविदा देयम्।** **संवित्** संकल्पः। संकल्पपूर्वकं देयमित्यर्थः। **अथ यदि....स्यात्।**

---

तानि। होलाकादीनीति। वसन्तोत्सवो होलाका। पू. मी. 1-3-8.

अस्मदित्यस्य युष्मत्तो मत्तश्चेत्यर्थः। आसनम् = उपवेशः गोष्ठ्यादि। प्रश्वसितव्यम् = प्रकर्षेण व्यापरितव्यम्। प्रकर्षश्च समानता। साम्यस्यैव निषेधे आधिक्यनिषेधः सुतराम्। तेन निकर्षेण तच्छेषभूतकर्मकर्तृतया श्वसनमेवाऽऽद्रियते। श्रेयोगोष्ठ्यां तत्तुल्यं न प्रगल्भेतेति। एवमर्थपरं सदेव इदं वाक्यम् आसनपदस्वारस्यात् श्रेयसां शय्यासनादौ सह वा पृथग्वा तत्साम्यारोपमूलं विश्रमणमपि निषेधतीत्याह शय्यासनेष्वित्यादिना। अश्रद्धयेति। 'अश्रद्धया हुतं दत्तं...असदित्युच्यते' इति निषेधात् अश्रद्धया अदेयमिति विभजन्ति केचित्। अदेयमित्यस्य देयभिन्नमित्यर्थ एव स्वारस्यात्, 'न देयम्'इत्यर्थे क्लेशात्, पूर्वापरावैरूप्याय च देयमिति विभागोऽपि व्याख्यातृसंमत एव। तदा अश्रद्धया = सम्यक्कृत एव फलं भवतीति फलाभिसंधिमूलश्रद्धां विनेत्यर्थः। श्रद्धा = आस्तिक्यबुद्धिः तया दानं वैदिकम्; तां विना दानं लौकिकम्; उभयमपि कार्यमिति वा। यद्वा अश्रद्धया = कथमिदमुत्कृष्टं वस्तु त्यजेयमिति देयवस्त्वभिमानं परित्यज्येति। क्वचित् संपदि सतीत्यादिपाठे सत्यामिति स्यात्। यावल्लाभं देयम्;

वृत्तविचिकित्सा वा स्यात्। [२१] ये तत्र ब्राह्मणास्संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः॥अथाभ्याख्यातेषु। ये तत्र ब्राह्मणास्संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथाः।

एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनु-

---

**कर्म** अग्निहोत्रादि। **वृत्तं** शिष्टाचारमात्रप्रमाणकं होलाकादि। तत्र यदि संदेह इत्यर्थः। **संमर्शिनः** विचारकुशला इत्यर्थः। **युक्ताः** वेदशास्त्रेष्वभियुक्ताः (रताः)। **आयुक्ताः** आ समन्तात् युक्ताः। लौकिकेष्वपि कुशला इत्यर्थः। **अलूक्षाः** अरूक्षाः (अलूक्षाः)...क्रोधलोभादिरहिताः। शिष्टं स्पष्टम्। **अभ्याख्याताः** अभिशस्ताः इत्यर्थः।

**आदेशः** शासनम्। राजाज्ञातुल्यमिति भावः। **उपदेशः** पित्रादिहितैषिवचनम्। **वेदोपनिषत्** वेदानां रहस्योपदेशः। एत-

---

नाधिकदानार्थं प्रयासः कार्य इति। 'न त्वसति विभवे' इति भास्करोक्तेः। यद्वा सति=सत्पात्रे इत्यर्थः। विभवानुरूपं दानं कार्यम्; न न्यूनमिति वा श्रिया देयमित्यस्यार्थः। श्रियेति हेतौ तृतीया। उपलक्षणतृतीया वा श्रीविशिष्टेनेति। ह्रियेति। पूर्वाचरितकर्म पात्रप्रभावादि च परिशील्य, कियन्मात्रमिदं परपरिहासास्पदमिति लज्जयेत्यर्थः। भिया संविदेति नित्यकाम्यदानोक्तिः।

अथेति निश्चितार्थादन्यस्य संदिग्धार्थस्याधिकारः। यदि स्यादिति, प्रायो निश्चय एव संभवतीति सूच्यते। तत्र=विचिकित्साविषये। तत्र=कर्मादौ। अभ्याख्याताः=पातकित्वेन इतस्ततो व्यवहृताः; तेषु; यदि विचिकित्सा स्यादित्यनुषज्यते। पातकित्वविषये

शासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम् [२२] स्वाध्याय-प्रवचनाभ्यांनप्रमदितव्यं तानित्वयोपास्यानि स्यात् तेषुवर्त्तेरन् सप्त च॥

शं नो मित्रश्शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः॥ नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतम-वादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद् वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्। ओं शान्तिश्शान्तिश्शान्तिः। [२३]॥ सत्यमवादिषं पञ्च च॥ १२॥

इति शीक्षावल्ली।

---

दनुशासनम्। शिष्यं प्रति आचार्यस्य कर्तव्यमनुशासनमेतत्। **एवमु-पासितव्यम्।** अनुशासनप्रकारेणानुष्ठेयमित्यर्थः। **एवमु चैतदुपास्यम्।** उशब्दोऽवधारणे। एवमेवोपास्यमित्यर्थः॥

**(उपसंहारशान्तिपाठः)**

अधीतानामुपनिषदामन्ते पठितव्यां शान्तिमाह—**शं नो मित्र...शान्तिः।** पूर्वमेव व्याकृतमेतत्। लडादिस्थाने भूतार्थत्वात् लुङ्प्रयोग इति विशेषः॥ **इति शिक्षावल्लीप्रकाशिका प्रथमा॥**



---

इत्यर्थसिद्धम्। तत्र विचिकित्साविषये। एवमु चेति पुनर्वचनं विहिता-नुष्ठानादन्यप्रकारनिषेधाय। शिक्षावल्लीसमाप्तिशान्तिपाठः शन्न इति॥

**इति शिक्षावल्लीपरिष्कारः।**

## अथ आनन्दवल्ली (ब्रह्मवल्ली)*

[1]सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै। ओं शान्तिः शान्तिः शान्तिः ॥ [२४] ॥ १३ ॥

[1]ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता—

### (गुरुशिष्यसंकल्पः)

**सह नाववतु।** अधीतो मन्त्रः **नौ** गुरुशिष्यौ सह रक्षतु। अन्यतरस्यापि दोषो मा भूदित्यर्थः। पुनरपि तदेव प्रार्थयते—**सह नौ भुनक्तु। भुनक्तु** पालयतु। 'भुज पालनाभ्यवहारयोः' इति हि धातुः। अवनार्थत्वात्, 'भुजोऽनवने' इत्यात्मनेपदाभावः। **सह वीर्यं। करवावहै**। अधीतैर्मन्त्रैः तत्तत्फलनिष्पादनलक्षणं वीर्यं सह करवावेत्यर्थः **तेजस्वि नावधीतमस्तु। नौ** आवयोः अधीतं **तेजस्वि अस्तु** वीर्यवत्तरमस्तु। **मा विद्विषावहै**। परस्परानुरक्तौ स्यावेत्यर्थः। अन्यतरद्वेषे अधीतमन्त्रस्य वीर्यहानिर्भवतीति भावः। **शान्तिः शान्तिः शान्तिः**। दोषान्तराणामस्त्विति शेषः।

### (आनन्दमयविद्या)

परमतत्त्वहितपुरुषार्थप्रतिपादिका आनन्दवल्ली प्रस्तूयते—**ब्रह्मविदाप्नोति परम्**-निरतिशयबृहत्त्वाश्रयवस्तूपासकः सर्वेभ्य उत्कृष्ट

*शीक्षावल्ली, आनन्दवल्ली भृगुवल्ली—इति भागत्रयम् एक एव प्रश्नो द्राविडपाठरीत्या॥ 'ब्रह्मविदाप्नोति परं' इत्यारभ्य 'इत्युपनिषत्' इत्यन्तं एक एवानुवाकः। आनन्दवल्ल्यामप्यादौ शन्न इत्यादि शाङ्करे पठितम्। न विद्यारण्यीये। एवमत्र।

सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान् कामान्त्सह । ब्रह्मणा विपश्चितेति ॥

---

ब्रह्म प्राप्नोतीत्यर्थः । 'आवृत्तिरसकृदुपदेशात्' इत्यधिकरणोक्तन्यायेन वेदनोपासनादिशब्दानामेकार्थत्वात् ब्रह्मविदित्यत्र विच्छब्दः (ब्दोऽपि) उपासनपरः । तत्क्रतुन्यायेन प्राप्यस्यैवोपास्यत्वात् **ब्रह्मविदाप्नोति परमिति** परस्य ब्रह्मणः प्राप्यत्वकथनात् तस्यैवोपास्यत्वमिति द्रष्टव्यम् । अत्र—ब्रह्म, तद्वेदनम्, प्राप्तिः, प्राप्यश्चेति चतुष्टयमुक्तम् । किं तत् ब्रह्म ? कीदृशं तद्वेदनम् ? कीदृशी प्राप्तिः ? कीदृशश्च प्राप्यमित्याकांक्षायां मन्त्रमुखेन विवरीतुं मन्त्रमवतारयति—**तदेषाऽभ्युक्ता । तत्** ब्रह्म **अभिमुखीकृत्य** प्रतिपाद्यतया परिगृह्य **एषा** ऋक् अध्येतृभिरुक्ता । ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः । एवमेव हि मान्त्रवर्णिकसूत्रे **भाषितम् । सत्यं....विपश्चितेति** । अत्र जन्मादिसूत्रे, "यतो वा इमानि" इत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपमभिधीयते **सत्यं ज्ञानमनन्तं ब्रह्मेति** । तत्र **सत्य**पदं निरुपाधिकसत्तायोगि ब्रह्माऽऽह । तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः। नामान्तरभजनार्हावस्थान्तरयोगेन

---

ब्रह्मविदाप्नोति तदिति वा, ब्रह्मेति वाऽनुक्त्वा परमिति प्रयोगः देवान् देवयज इति रीत्या तत्क्रतुन्यायेन तत्तदुपासकप्राप्येष्विदमेवोत्कृष्टमिति,तथा परव्यूहादि-नानालोक-नानास्थान नानाशरीरगतब्रह्मोपासनेऽपि परमव्योमनिलयं परवासुदेवरूपं ब्रह्मैव प्राप्यमिति ज्ञापनाय । परमे व्योमन्नश्नुत इत्यनेन अशनार्थं परमव्योमप्राप्तिरपेक्षितेति

तयोर्निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं नित्यासंकुचितज्ञानैकाकारमाह । तेन कदाचित् संकुचितज्ञानत्वेन मुक्ताः व्यावृत्ताः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह । सगुणत्वात् स्वरूपस्य स्वरूपेण गुणैश्चाऽऽनन्त्यम् । तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणाः नित्याः व्यावृत्ताः । विशेषणानां व्यावर्तकत्वात्'' इति भाषितम् ।

## (ज्ञानपदस्य धर्मधर्मिपरत्वविचारः)

नन्वत्र ज्ञानपदस्य विषयावगाहिज्ञानत्वं प्रवृत्तिनिमित्तं चेत्, स्वरूपस्यातादृक्त्वात् ज्ञानमित्यस्य ज्ञानगुणक[त्व]मित्यर्थः पर्यवस्येत्; न तु स्वरूपस्य ज्ञानत्वम् । स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तं चेत्, स्वरूपस्य ज्ञानत्वमात्रं सिद्ध्येत्; न तु ज्ञानगुणकत्वम् । न चेष्टापत्तिः । "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्'' इति सूत्रे, यथा 'सत्यं ज्ञानम्' इति ब्रह्मणो ज्ञानगुणसारत्वात् ज्ञानमिति व्यपदेशः'' इति भाष्यं विरुध्येत— इति चेत्–उच्यते । स्वप्रकाशत्वमेव[हि]प्रवृत्तिनिमित्तम् । तत्र ज्ञानत्वाश्रयत्वमसंकोचात् स्वरूपतो गुणतश्च सिध्यति । ब्रह्मशब्दात् प्रतीयमानं बृहत्त्वं यथा स्वरूपतो गुणतश्च सिद्ध्यति, तद्वत् इति व्यासार्यैरुक्तम् । वस्तुतस्तु सत्यं ज्ञानमिति अस्यान्तोदात्तत्वात् अर्शआद्यजन्तत्वेन ज्ञानगुणकत्वमेवार्थः । "प्रज्ञानघन एवाऽऽनन्दमयः'', "नित्यं

---

ज्ञाप्यते । ननु, 'नान्तंगुणानाम्:' इति आदिशेषेऽपि अनन्तपदप्रयोगात् प्रवृत्तिनिमित्तमतिप्रसक्तमित्यत्राह अत्र रूढिवशादिति । योगार्थस्य नारायणैकान्तत्वममन्यमानैरपि नारायणे रूढिस्तस्यैवेष्टेति भावः ।

विज्ञानम्" इति श्रुत्यन्तरात् ब्रह्मणो ज्ञानस्वरूपत्वमप्यस्तीति द्रष्टव्यम् ।

(अनन्तशब्दार्थः)

'इहेदम्, नान्यत्र' इति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः । 'इदमिदानीम्, नान्यदा' इति परिच्छेदायोग्यत्वं कालापरिच्छेदः। 'इदम् इदं न' इति परिच्छेदानर्हत्वलक्षणं सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेदः । यद्वा वस्तुस्वभावतः परिच्छेदो वस्तुपरिच्छेदः । तथा तुल्यकालत्वेऽपि, तुल्यपरिमाणत्वेऽपि दशवर्णसुवर्णापेक्षया (?) कलधौतादेरपकर्षः। तद्राहित्यं वस्त्वपरिच्छेदः। समाभ्यधिकराहित्यनिदानभूतो गुणैर्निरतिशयप्रकर्षो वस्त्वपरिच्छेद इत्युक्तं भवति' इति **व्यासार्यै**र्व्याख्यातम् ।

"नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते" इति स्मरणात् गुणानन्त्यम**नन्त**शब्दार्थः । अत्र रूढिवशात् देवताविशेषनिर्णयः । न च अनन्तपदस्य नारायणवाचिनः पुँल्लिङ्गत्वं स्यादिति वाच्यम् ; इष्टापत्तेः। तस्य द्वितीयान्तत्वेन पुँल्लिङ्गत्वस्येष्टत्वात् । द्वितीयान्तत्वाभावे च, **यो वेद निहितं गुहाया**मित्यत्र तच्छब्दाध्याहारप्रसङ्गात् । अनध्याहारेणोपपत्तौ अध्याहारस्यान्याय्यत्वात् । यदि च अनन्तपदयौगिकार्थस्य त्रिविधपरिच्छेदराहित्यस्य नारायणादन्यत्राप्रसक्त्या श्रीपत्यादिशब्देष्विव न रूढिः कल्पनीयेत्युच्येत—तदाऽपि न नः क्षतिः ।

(मन्त्रस्य ब्राह्मणविवरणरूपत्वम्)

अत्र **सत्यं ज्ञानमनन्तं ब्रह्मे**त्यनेन ब्रह्मशब्दार्थो विवृतः । हृदयगुहानिहितत्वप्रकारकज्ञानप्रतिपादकेन (कत्वेन) **यो वेद निहितं**

**गुहाया**मित्यनेन विच्छब्दार्थ उक्तः। **परमे व्योमन् सोऽश्नुत** इत्यंशेन **आप्नोति**शब्दार्थ उक्तः। **परमे व्योमन्** अप्राकृताकाशशब्दिते परमपदे इत्यर्थः। **सर्वान् कामान् सह ब्रह्मणा विपश्चिते**त्यनेन प्राप्यमुक्तम्। काम्यन्त इति कामाः कल्याणगुणाः। मुक्तस्य सर्व-विषयविरक्तस्य तद्व्यतिरिक्तकाम्यान्तरासंभवात्। "अथ य इहात्मा-नमनुविद्य व्रजन्ति, एतांश्च सत्यान् कामान्" इत्यादौ **काम**शब्दस्य कल्याणगुणेष्वेव प्रयोगात्। विविधं पश्यन्ती चित यस्येति बहुव्रीहिः। निरुपाधिकानन्याधीनासंकुचित-सर्वविषयक-ज्ञानवत्त्वं[हि]विपश्चित्त्वम्। अयं च गुणो नित्यमुक्तादिव्यावर्तकः॥

(**भोग्यसाहित्यम्**)

ब्रह्मापेक्षयाऽपि तद्गुणानां फलदशायां प्राधान्यं प्रतिपादयितुं **ब्रह्मणा सहे**ति निर्देशः। 'सहयुक्तेऽप्रधाने' इति हि **पाणिनि**स्मृतिः। न च भोग्यतायां गुणापेक्षया ब्रह्मणोऽप्राधान्यं दोषायेति शङ्क्यम्,

---

**अप्राकृतेति। परमे व्योमन्नित्यस्य तृतीयपादेऽन्वयः। एवमर्थः श्रुतप्रकाशिकायाम् (जिज्ञा–श्रुति)। ननु काम्यान्तराणि त्रिवर्गिणामिव तद्व्यतिरेकेण मा भूवन्; ब्रह्मगुणानुभवानुगमेन तु संभवन्तीति कथं तेषामग्रहणमित्यत्राह अथ य इति। इति हि पाणिनीति। नन्वत्र सूत्रे अप्रधानपदेन 'पुत्रेण सहाऽऽगच्छति पिता' इत्यादौ पुत्रे आगमन-क्रियान्वयः शाब्दो नेत्येवंरूपाप्राधान्यमेव विवक्ष्यते, न वास्तवम्। अत एव, 'पित्रा सहाऽऽगच्छति पुत्रः' इत्यपि प्रयोगः। एवञ्च ब्रह्मा-पेक्षया कामानां वास्तवप्राधान्यं कथमितो लभ्यते। अत एव वस्तुतः प्रधाने अप्रधाने च तृतीयाप्रयोगात् शाब्दाप्राधान्यस्य च स्वतः सिद्ध-त्वात् अप्राधानपदं सूत्रे प्रत्याख्येयमेव। वास्तवप्राधान्यञ्च वस्तुतो**

"श्रियं त्वत्तोऽप्युच्चैर्वयमिह भणामः श्रृणुतराम्" इतिवत् परमात्मा-पेक्षयाऽपि तत्कल्याणगुणानां भोग्यतातिशयप्रतिपादनस्य परमात्मातिशय-पर्यवसायित्वेन एतादृशाप्राधान्यस्य गुणत्वेन दोषत्वाभावात्। अत एव हि, 'पुत्रेण सहौदनं भुङ्क्ते' इतिवत् भोक्तृसाहित्यपरत्वे ब्रह्मणो अप्राधान्यप्रसङ्गात् तत् परित्यज्य, 'पयसा सहौदनं भुङ्क्ते इतिवत् भोग्यसाहित्यपरत्वमेव। नात्र च पक्षे ब्रह्मणोऽप्राधान्यं दोषाय' इति भोग्यसाहित्यपक्ष एव भगवता **भाष्यकृता** समाश्रितः।

---

धर्मिणो ब्रह्मण एव, न गुणानाम्। एवञ्चैतत्सूत्रप्रमाणीकरणेन गुणप्राधान्यवर्णनं भोक्तृसाहित्यपक्षखण्डनञ्चानुपपन्नमिति चेत्—

अयमत्र सर्वशास्त्रविदां शाब्दिकमूर्धन्यानां स्वामिनामाशयः। सत्यं धर्मिसत्ताधीनसत्ताकत्वरूपमप्राधान्यं धर्माणाम्; प्राधान्यञ्च धर्मिणः। तावन्मात्रविवक्षायां मोक्षदशाभाविप्रत्यक्षाकारशोधने सर्वकामविशिष्टं ब्रह्मानुभवतीत्येव वक्तव्यम्। उक्तञ्च तथैव समन्वयाधिकरणश्रीभाष्ये, जिज्ञासाधिकरणे श्रुतप्रकाशिकायाञ्च। अथापि लोके प्राधान्यमप्राधान्यञ्च विवक्षावशान्नानाप्रकारं भवतीति किञ्चिद्रूपाप्राधान्यविवक्षयैव सहयोगे तृतीया। 'सहयुक्तेऽप्रधाने' इत्यत्र च किञ्चिद् विमृश्यम्। सहयुक्तस्थल इव साकं सार्धमित्यादि-योगेपि तृतीयेति सहयुक्तत्वं तावदविवक्षितम्। वृद्धो यूनेति निर्देशात् सर्वथा किञ्चिदयोगेऽपि तृतीयेति सहार्थकपदयोगोऽपि अविवक्षितः। एवञ्च सहयुक्तपदमुदाहरणप्रदर्शनमात्रार्थमिति तद-विवक्षितं कृत्वा अप्रधानपदमात्रविवक्षापि युक्ता। समानक्रियान्वययोः उभयोर्मध्ये एकतरस्यान्यतुल्यं क्रियान्वयाविवक्षायाम्, 'परिकर-विशिष्टो राजा दृष्टः', 'वत्सवती गौः क्रीता' इत्यादौ परिकरादेरिवा-प्राधान्यविवक्षायां अप्रधानाद्विभक्तिप्रयोगे चिकीर्षिते तृतीया प्रयोक्त-

ध्येत्यनुशिष्यते। सहयोगस्तूदाहरणमात्रम्। 'पुत्रेण सह पिता' इत्यादौ पुत्रादिविशिष्टः पित्रादिरित्यन्वयरीतिः। एवं विशिष्टपदार्थान्वयिन्याः क्रियायाः विशेष्य इव विशेषणेऽपि विशेष्यपारतन्त्र्येण (धर्मिपारतन्त्र्येण) अन्वयो लोकसिद्ध इति विशेषणमप्रधानम्। विशेष्ये विशेषणवैशिष्ट्यञ्च आश्रयाश्रयिभावादिरूपं वा सहशब्दार्थभूतं समानदेशत्वम्, समानकालत्वमेकक्रियान्वयित्वं वेत्यन्यदेतत्। तस्य वैशिष्ट्यस्य प्रथमतो बोधे वैशिष्ट्यत्वरूपसामान्यधर्मपुरस्कारेणैव भानात्। यथा चेदं शाब्दमप्राधान्यम्, तथा वस्तुगतमप्राधान्यमपि वैवक्षिकं यथायथं किमपि भवत्येव। अन्यथा हि, 'पितापुत्रावागच्छतः' इति यथानुभवं समप्राधान्येन प्रयोगे सुकरे किमिति 'पुत्रेण सहाऽऽगच्छति पिता' इति विचित्रप्रयोगप्रवृत्तिः। अत आप्ततमस्य विवेकिनः प्रयोगे व्यञ्जनीयतया विवक्षितं किमप्यप्राधान्यस्त्येव। विशिष्य च गुणगुण्यादिरूपेण धर्मधर्मिभावेन विस्पष्टगुणप्रधानभावपदार्थस्थले धर्मिणः शाब्दान्वये अप्राधान्याश्रयणमार्थमपि किञ्चिदप्राधान्यं व्यञ्जयितुमेव। आधुनिकास्तु तावदविवक्षया प्रयुञ्जताम्। विवेकिनो विचक्षणस्य तु स्वायत्ते शब्दप्रयोगे किञ्चिदर्थगत्यर्थ एव तथाप्रयोगः। अतो निसर्गसिद्धशाब्दाप्राधान्यविषयत्वं पाणिनिसूत्रस्य परित्यज्य अन्यादृशाप्राधान्यव्यञ्जनाभिप्राये सति तृतीयानुशासनपरत्वं युक्तम्। तादृशाप्राधान्याविवक्षायां तु पितापुत्रावित्यादिरीत्या निर्देशसाम्यमेव। किञ्चिदाकारेणाप्रधानस्याप्येवं प्राधान्यमपि भवति। अत एव ब्रह्मधर्मभूतस्याप्यानन्दस्य, 'आनन्दं ब्रह्मणो विद्वान्' इति विशेष्यतया प्राधान्येन निर्देशः, तस्यानन्दमयत्वस्य प्रकृतविद्यायामसाधारणत्वात्। तथा, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति, वस्तुतः कतिपयार्थमात्रविषयकशाब्दज्ञानमात्रहेतुवागपेक्षया सर्वविषयकसर्वविधज्ञानहेतोः, वाचं प्रति पतित्वेन श्रुतिस्तु तस्य च मनसो वागपेक्षया सत्यपि प्राधान्ये, प्रकृतवाक्योक्ताप्राप्तिनिवृत्तिक्रियाद्वयविषये वाचः

(सहशब्दान्वयक्रमः)

ननु, "तेषामृक् यत्रार्थवशेन पादव्यवस्था" इति, जैमिनिना अर्थवशाधीनपादव्यवस्थावत्त्वस्य ऋग्लक्षणतयोक्तत्वात् सह इत्यस्य

---

प्रथमं कर्तृत्वमिति मनसोऽप्राधान्येन निर्देशः। अत इहापि सहेति प्रयोगः ब्रह्मणोऽशाब्दाप्राधान्यस्यापि विवक्षयैव। तत्र भोक्तृसाहित्ये विवक्षिते ब्रह्मणोऽप्राधान्यमयुक्तम्। मुक्तापेक्षया ब्रह्मण एव भोक्तृत्वातिशयात्। ब्रह्माधीनं ह्यस्य भोक्तृत्वम्। आस्वादनतारतम्यं तु न किञ्चित् विद्यत इति न तत्प्रयुक्तमप्राधान्यम्। अथ, 'यो वेद, सोऽश्नुते' इति वेदनाधीनत्वं भोक्तृत्वस्य लभ्यते। तच्च मुक्तनिष्ठ-भोक्तृत्व एव, न ब्रह्मनिष्ठे, नित्यत्वादिति प्रकृतविद्यानधीनत्वरूपम-प्राधान्यं विवक्षित्वा सहप्रयोग इति चेत्—एवं तर्हि विशिष्टान्वयि-क्रियायाः विशेषणान्वयस्यापि नियतत्वात् तादृशस्थल एव सह-शब्दप्रयोगात् वेदनकर्तृत्वविरहिणो ब्रह्मणो न कर्तृतया साहित्य-प्रतियोगित्वसंभव इति सुष्ठु बाधकं सहयुक्तसूत्रमत्र। अतो भोग्य-साहित्यविवक्षा। तत्र च गुणानाम्, 'गुणैर्दास्यमुपागतः' इति रीत्या गुणनिरूपितदास्यापादकत्वरूपं प्राधान्यं कामेषु विवक्षित्वा धर्मिणोऽपि ब्रह्मणोऽप्राधान्यवर्णनं संभवति। ब्रह्मणो भोक्तृत्वं च विपश्चितेत्यनेनैव सिद्धम्। तेन हि एवंभूतफलभोक्तारं मुक्तं ब्रह्म पश्यति, तथा पश्यच्च ब्रह्म मुक्तोऽश्नुते। तच्च पश्यति विविधं पश्यद् ब्रह्मेत्यनुभववैचित्र्यमपि प्रदर्श्यते। प्राप्यवाचिपरशब्दनिरूपणार्थ-प्रवृत्ते, सर्वान् कामान् सह ब्रह्मणेति वाक्यांशे निविष्टत्वादपि नात्र भोक्तृसाहित्यविवक्षासंभव इति च स्थितं श्रुतप्रकाशिकाभाव-प्रकाशिकयोः। अतो भोग्यसाहित्यपरत्वे तेन ब्रह्मणोऽप्राधान्यव्यञ्जनं च सिद्धमित्यलमधिकेन।

तेषामिति। 'तच्चोदकेषु मन्त्राख्या' इति प्रयोगसमवेतार्थ-

पादान्तरस्थस्य **ब्रह्मणेति** पादान्तरस्थेनान्वयो न संभवति। ततश्च **ब्रह्मणेति** न सहयोगे तृतीया। अपितु इत्थंभूतलक्षणे तृतीया। **सहेत्यस्य** च युगपदित्यर्थः। सर्वान् कामान् युगपदनुभवति **ब्रह्मणा** ब्रह्मभूत इति यावत्। अत एव **स्कान्दे,** "सोऽश्नुते सकलान् कामान् अक्रमेण सुरर्षभाः (सुरर्षिभिः)। विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः" इत्युपबृंहितमिति चेत—न। 'तेषामृक् यत्रार्थवशेन' इत्यस्योपलक्षणमात्रत्वात्। उपलक्षणत्वमभ्युपगम्यैव तद्व्याख्यातृभिरपि, "अर्थवशेन वा वृत्तवशेन वा पादव्यवस्था" इति व्याख्यातत्वात्। अभियुक्तानां मन्त्रप्रसिद्धिविषयत्वं मन्त्रत्व(विषयत्व)मितिवत् अभियुक्तानां **ऋक्पद-**प्रसिद्धिविषयत्वमेव ऋक्त्वम्। ततश्च पादान्तरस्थेनापि पादान्तरस्थपदान्वयो युक्तः। **ब्रह्मणेत्यस्य** इत्थम्भूतलक्षणत्वाश्रयणे **ब्रह्मभूत** इत्यर्थोऽपि न

---

स्वरस्कत्वात् प्रयोगहेतवो मन्त्रा ये उक्ताः, तेषु (ऋग्यजुस्सामरूपेषु) मन्त्रेषु मध्ये ऋक् नाम, यत्रार्थानुसारेण पादाः व्यवस्थिताः भवन्ति सा भवतीति सूत्रार्थः। पादान्तरस्थपदान्वय इति। एतेन, 'परमे व्योमन्' इत्यस्यापि तृतीयपादान्वयो निरूढो भवति। वस्तुतः ऋगियं पुराविद्भिरुक्ता पुरातनी गाथेत्युक्त्वा विष्टारपङ्क्तिविशेषोऽयमिति भास्करेणोक्तम्। उपरि, 'उताविद्वानमुं लोकम्', इति श्लोके पादव्यवस्थामुपेक्ष्यापि वाक्यविभागकल्पनयाऽध्ययनावगमात् अत्रापि अध्ययनक्रमावगतो वाक्यविरामो न पादभेदस्थापनक्षम इति, ब्रह्मेत्यन्त एकः पादः, व्योमन्नित्यारभ्य कामानित्यन्तः तृतीयः, सहेत्यादिश्चतुर्थः। इमे नवाक्षराः। द्वितीयस्तु य इत्यादिः परम इत्यन्तः किञ्चिद्वर्णाधिक इत्यपि किञ्चिच्छन्दःकल्पना स्यादिति न सहेत्यस्य तृतीयपादस्थत्वनिर्बन्ध इत्यपि विमृश्यम्।

तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः।

---

संभवति। 'श्वेतच्छत्रेण राजा' इत्यादौ तथाऽभेदादर्शनात्। त्वदुक्तस्कान्द-वचनस्य पूर्वैः संप्रतिपन्नैरनुदाहृतत्वाच्च भाष्यकृदुक्त एवार्थः॥ **इति-**शब्दो मन्त्रसमाप्तिद्योतनार्थः॥

(ब्रह्मकार्यजन्मक्रमः)

**सत्यं ज्ञान**मित्युक्तं वस्त्वपरिच्छेदलक्षणमानन्त्यं सर्वोपादानत्व-सर्वान्तरत्वमुखेन प्रपञ्चयति **तस्माद्वै...संभूतः**। **तस्मा**दित्यनेन ब्रह्मविदाप्नोतिपरमिति व्यवहितब्राह्मणोक्तं परामृश्यते। **एतस्मा**दिति

---

तस्माद्वा एतस्मादिति। एवं चेतनाचेतनविजातीयाद्धि आकाशाद्युत्पत्तिरिति नात्र कारणत्वात्मत्वकृतदोषशङ्काप्रसक्तिरिति कथयितुमेवम्। एवं गुहायां निहितत्वस्योक्तस्य, 'हृदि प्राणः' इत्यादि-वचनबलात् प्राणमनआत्मपरमात्मचतुष्टयसाधारण्यात् तत्र तत्र आन्तरप्रदर्शनेन परमात्मनः प्रधानात्मत्वस्थापनाय चेदम्। वैशब्दोप-बन्धात् कारणत्वमनूद्यते, न विधीयत इति ज्ञायते। आत्मन आकाश इति। ननु महदादिसृष्टिं विहाय आकाशारम्भः कुत इति चेत्, यथा सद्विद्यायाम्, 'तत्तेजोऽसृजत' इति तेजआरम्भः; यथा च, 'अप एव ससर्जाऽऽदौ' इति अबारम्भः; तथेति। तत् सर्वमेव कुत इति चेत्—श्रूयताम्। पूर्वमप्यनेकवस्तूत्पत्तेर्वस्तुतः स्थितत्वेऽपि तत्र तत्र वक्ष्यमाणार्थोपयोगितया यावदपेक्षितम्, तावदेव प्रमाणेन विवक्ष्यते। तत्र सद्विद्यायां त्रिवृत्करणप्रदर्शनमग्न्यादौ करिष्यमाणं मनसिकृत्य रूपवन्ति तेजआदीन्येव प्रत्यक्षाणि उपक्रमे गृहीतानि। व्यष्टिसृष्टिमात्रकथनमारभ्य च तादृशब्रह्माण्डाधारतया अपामुप-क्रमोऽन्यत्र। तथाऽत्र शारीरात्मनिरूपणशेषतया शरीरहेतुभूत-पञ्चकमात्रोपक्रम इति।

वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः ।

स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ।

---

सत्यंज्ञानमित्यव्यवहितमन्त्रोक्तं परामृश्यते । ततश्च मन्त्रब्राह्मणोक्तादेतस्मादात्मन आकाश उत्पन्न इत्यर्थः । **आकाशात्...पृथिवी** । अत्र "तत्तेज ऐक्षत", "ता आप ऐक्षन्त" इति तेजःप्रभृतिष्वीक्षणादिश्रवणात् आकाशवायुतेजआदिशब्दाः तत्तच्छरीरकपरमात्मपरा इति, "तेजोऽतस्तथा ह्याह" इत्यधिकरणे स्थितम् । **पुरुषः** शरीरमित्यर्थः । शिष्टं स्पष्टम् । **(अन्नमयपर्यायः) स वै एष पुरुषः**=अयं देहः अन्नरसस्य परिणामः । "अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुः । तत् पुरीषं भवति । यो मध्यमः, तन्मांसम्" इत्याद्युक्तरीत्या जाठराग्निपच्यमानान्नरसांशनिर्वर्त्यमांसासामयत्वाच्छरीरस्य इति भावः । **तस्य....प्रतिष्ठा । तस्य** देहरूपस्य पुरुषस्य **इदं** प्रत्यक्षतो दृश्यमानमेव शिरः । पाणिद्वयं पक्षौ । अधस्तात् ग्रीवायाः नाभेरूर्ध्वं परिदृश्यमानः **अयं** मध्यमो देहभागः अङ्गानामा**त्मा** । 'मध्यं ह्येषामङ्गानामात्मा' इति श्रुतेर्धारकत्वेन प्रधानभूत इत्यर्थः । **इदं** नाभेरधस्तात् परिदृश्यमानं चरणद्वयं पुच्छवत् आधारत्वात् पुच्छमित्यर्थः । अत्र **पुरुष**शब्दितमनुष्यपाण्यादेः

---

पुरुषशब्दितमनुष्येति । अत्र पक्षपुच्छग्रहणात् पक्षिशरीरं श्रुत्यभिमतमिति सुवचम् । अथापि मनुष्यं प्रत्येवोपदेशात् तच्छरीरस्योपस्थिततमत्वात्, (स यश्चायं पुरुषे) इति तस्यैव वक्तव्यत्वात्, अन्नशब्दपुरुषशब्दस्वारस्याच्चोपक्रमस्थपुरुषपदस्य मनुष्यशरीरपरत्वे

तदप्येष श्लोको भवति [२५]

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीँश्रिताः ।

अथो अन्नेनैव जीवन्ति । अथैनदपियन्त्यन्ततः ॥

अन्नँहि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते ।

---

पक्षादित्वरूपणं प्रतिपत्तिसौकर्यार्थमिति द्रष्टव्यम् । **तदपि....भवति** । तस्मिन्नेवार्थे ब्राह्मणोक्ते अयं मन्त्ररूपः श्लोकोऽपि भवतीत्यर्थः ।

**अन्नाद्वै....अन्ततः** । पृथिव्यां वर्तमानाः सर्वाः प्रजा अन्नादेवोत्पद्यन्ते । उत्पन्नाश्च अन्नेनैव जीवन्ति । अन्तकाले [च] तत्रैव लयं यान्तीत्यर्थः । **अन्नं हि....उच्यते** । सर्वभूतोपकारकत्वादन्नमेव ज्येष्ठम् । अत एव अशनायादिव्याधिनिवर्तकत्वात् तदेव सर्वौषधमुच्यते इत्यर्थः। 'ओषधीभ्योऽन्नम्' इति ओषधिपरिणामत्वं निमित्तीकृत्य अन्ने प्रयुक्तमौषधशब्दं भेषजत्वनिमित्तकतया श्रुतिर्व्यपदिशतीति द्रष्टव्यम् ।

**सर्वं....उपासते** । अन्ने ब्रह्मदृष्टिं कुर्वन्तो यावदपेक्षितमन्नं

---

पक्षपुच्छपदे अन्यथा नेतव्ये इति भावः। तदप्येष इति अपिशब्दः एवकारार्थे वा, ब्रह्मविषये पूर्वा ऋगिव अन्नमयविषयेऽयं श्लोक इति तत्समुच्चये वा, 'तद्विषये श्लोकोऽपि भवति' इत्येवंरूपसमुच्चये वा। श्लोकशब्देनोपरि तन्महिमवर्णनमिति दर्शितम्। अन्नाद्वै इत्यादिः चतुर्दशपादोपेतः श्लोक एकः इति विद्यारण्यः । एवमुत्तरत्र । दृष्टिहेतुभूतमिति । नेदमन्नशरीरकब्रह्मोपासनम्, अन्नातिरूपक्षुद्रफलमात्रनिर्देशात्, आनन्दमयोपासनप्रकरणाच्च। नापि प्रकृतोपासनाश्रितगुणफलसंबन्धविधिः। तथा सति ब्रह्मसाम्यवचनस्यानावश्यकत्वात्। साम्यवचनार्थमेव हि पूर्वोक्तपुनर्वचनम्। अतो दृष्टि-

सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते ।
अन्नँ हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते ।
अन्नाद् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते ।
अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति ॥

---

प्राप्नुवन्तीत्यर्थः । ब्रह्मदृष्टिहेतुभूतं ब्रह्मसाम्यमाह **अन्नं हि...उच्यते ।** ब्रह्मणोऽपि सकलरोगनिवर्तकतया सर्वभेषजत्वस्य सत्त्वादिति भावः । **अन्नात्....वर्धन्ते** । जननवृद्धिहेतुत्वमन्नब्रह्मणोः सममित्यर्थः । अन्नस्य निर्वचनमाह **अद्यतेऽत्ति च....इति ।** जीवनदशायां स्वयमद्यते । नाशदशायामलभ्यमानतया वा (लयाधारतया वा) विपरीतपरिणाम-हेतुतया वा, 'अन्नं मृत्युं तमु जीवातुमाहुः' इति श्रुत्युक्तरीत्या अत्तृत्वलक्षणं संहर्तृत्वं द्रष्टव्यम् । एवमाकाशादेरन्नरसमय-स्थूलशरीर-पर्यन्तस्य मन्त्रब्राह्मणोक्तब्रह्मोपादानकत्वम्, 'आत्मन आकाश' इत्यात्म-शब्दश्रवणात् तदन्तर्यामिकत्वञ्चोक्तं भवति ।

---

विधिरिति भावः। एवं प्राणमयेऽपि । भूतानां ज्येष्ठमिति । 'तस्यैतस्य महतो भूतस्य' इत्युक्तरीत्या पुरुषोत्तमत्वाद् ब्रह्म भूतानां मध्ये ज्येष्ठम्; अन्नमप्युक्तविधया भूतानां ज्येष्ठमिति श्लिष्टम् । सर्वौषधम् = सर्वप्रकारमौषधं सर्वेषामौषधञ्च । ओषधीभ्यो ह्यन्नम् ।

ननु ब्रह्मणः संहारकत्वमस्ति, नान्नस्य ; तस्य संहार्यत्वादित्यत्र निर्वचनेन तदुपपादयति—अद्यतेऽत्ति चेति । ब्रह्मापि, 'सर्वैष्वात्म-स्वन्नमत्ति', 'अहमन्नादः' इत्युक्तरीत्या अद्यत एव । प्रकृतस्यान्नस्य चाद्यमानत्ववत् ब्रह्मण इवात्तृत्वमप्यस्त्येवेति भावः । 'अदन्तमद्मि' इत्युक्तमभिप्रेत्याह विपरीतपरिणामेति ।

**तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् ।**

---

## [प्राणमयपर्यायः]

एवमाकाशादे**रन्नमय**शब्दितस्थूलशरीरपर्यन्तस्य ब्रह्मैव आत्मा, उपादानञ्चेत्युक्त्वा, 'स आत्मा कः' इत्यपेक्षायाम्, आनन्दमय एव स आत्मेति दर्शयितुं स्थूलारुन्धतीन्यायेन स्थूलदेहान्तर्वर्तिनं प्राणमयमात्मत्वेन दर्शयति । सूक्ष्मामरुन्धतीं दर्शयितुं प्रवृत्तः (पुरुषः) प्रथमत एव सूक्ष्माया अरुन्धत्याः प्रदर्शनासंभवं पर्यालोच्य तत्समीपवर्तिनीं स्थूलतारकाम्, 'इयमेवारुन्धती' इति प्रदर्शयति । तस्यां स्थूलतारकायां श्रोतुररुन्धतीत्वबुद्धौ दृढायां तत्समीपवर्तिनीं वस्तुतोऽरुन्धतीं सूक्ष्माम्, 'इयमेवारुन्धती' इति प्रदर्शयति । सोऽयं स्थूलारुन्धतीन्याय इत्य[स्या?]र्थः । **तस्मात्....प्राणमयः** । देहान्तर्वर्ती देहादन्यो यः प्राणमयः, स एव, 'आत्मन आकाशः संभूतः' इति आकाशादिसर्वोपादानत्वेन तदन्तर्यामित्वेन च निर्दिष्ट आत्मेत्यर्थः । भगवता **भाष्यकृता**, "अन्वयादिति चेत् स्यादवधारणात्" इति सूत्रे, 'अन्नमयादन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा, तदनन्तरञ्च प्राणमयादन्तरे मनोमये, ततो विज्ञानमये, तत आनन्दमये' इति भाषितम् । अत्र पञ्चवृत्तेः प्राणस्य प्राण[न]वृत्तिप्रचुरत्वात् प्राणमयत्वम् । **तेनैष पूर्णः** । तेन प्राणमयेनात्मना अन्नरसमय आत्मा पूर्ण इत्यर्थः । व्याप्त इति यावत् । सर्वस्यापि देहस्य प्राणव्याप्त(प्य)त्वादिति भावः । **स.... एव** । प्राणमयोऽपि पुरुषाकृतिरेवेत्यर्थः । हस्तपादादिमत्त्वेन पुरुषविधत्व-

अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा ।

तदप्येष श्लोको भवति [२६] ।

प्राणं देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये ।

प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते ॥

सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते ।

प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यत इति ॥

---

भ्रान्तिं व्युदस्यति **तस्य....विधः** । तस्य अन्नमयस्य पुरुषविधत्वमनुकृत्य प्राणमयोऽपि पुरुष(पक्षि)विध इत्यर्थः । ततश्च तद्वदेव शिरःपक्षपुच्छादिमत्तया पञ्चविध इत्यर्थः । **तस्य....उत्तरः पक्षः** । स्पष्टोऽर्थः । **आकाश आत्मा** । "यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान्" इतिस्मृत्युक्तरीत्या वायुविकारभूतप्राणापानादिधारकत्वादाकाशस्यात्मत्वम् । **पृथिवी....प्रतिष्ठा** । पृथिव्यामाकाशस्य प्रतिष्ठितत्वात् तस्याः पुच्छत्वम् ।

**तदपि....पशवश्च ये** । देवमनुष्यपशवः **प्राणमनु प्राणन्ति** प्राणाधीनजीवना इत्यर्थः । **प्राणो हि....उच्यते** । यस्मात् सर्वेषां

---

प्राणमयस्य पार्थिवादिपदार्थसंपृक्तेन अन्तरिक्षगतेन च द्विविधेन वायुना आप्यायनात् आकाशपृथिवीसमुपनतवाय्वंशयोः पुच्छप्रतिष्ठात्वमुक्तम् । आकाशादिपदस्य समानादिवायुपरत्वं क्लिष्टमित्युपेक्षितम् । आकाशप्रदेशे निरावरणे दूरादागच्छन् वायुः जलप्रवाह इव धूल्याद्यपगमेन शुद्धः सूर्यकिरणपूतश्च मुखनासिकग्राह्यो देहानुकूलो भवति । अत एव, 'आदित्यो ह वै प्राण' इति श्रुत्यन्तरम् ।

**तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्मात् प्राणमयात्। अन्योऽन्तर आत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य**

---

भूतानां [यावत् शरीरे] प्राणो वसति, तावदायुरिति प्राणस्य उच्छ्वसन-निश्वसनादिलक्षणसर्वभूतायुर्हेतुत्वम्, अत एव प्राण एव सर्वेषामायु-रित्युच्यत इत्यर्थः। **सर्वमेव...उपासते** एवंलक्षणे प्राणे ब्रह्मबुद्धि (दृष्टिं) कुर्वन्तः सर्वमायुः प्राप्नुवन्तीत्यर्थः।

### [मनोमयपर्यायः]

एवं प्राणमये आकाशाद्यन्नमयान्तस्य[अन्तर]आत्मत्वबुद्धिमवतार्य तां बुद्धिं निवर्तयति **तस्यैष....पूर्वस्य**। पूर्वस्य अन्नमयस्य य आत्मा; एष एव तस्य प्राणमयस्याप्यात्मेत्यर्थः। **शारीरः** शरीरप्रति-संबन्धी आत्मेत्यर्थः। अनेन **आत्मशब्दस्य** स्वरूपार्थत्वभ्रान्तिर्व्युदस्ता भवति। ततश्चान्नमयप्राणमयावेकात्मकौ; न तु अन्नमयस्य प्राणमय आत्मेत्यर्थः। तर्हि अन्नमयप्राणमययोः क आत्मेत्याकांक्षायामाह **तस्मात्...मनोमयः**। अत्र **मनोमय** इत्यत्र प्राचुर्यार्थे मयट्। मनोबुद्ध्यहङ्कारचित्ताख्यान्तःकरणवृत्तिषु मनोवृत्तेः प्रचुरत्वात्। **तेनैष**

---

पृथिव्यां स्थित्वा पार्थिववायुमता पुंसा ग्राह्यश्चेति आकाशपृथि-व्योरिह निवेशः। इत्युच्यत इत्यर्थ इति। मूले इतिशब्दः पूर्वोत्तर-पर्यायवत् श्लोकसमाप्ताविति ध्येयम्।

मनोमयस्य प्राणमयादन्तरत्वमभौतिकत्वेन सूक्ष्मत्वात्।

ननु यदि वाङ्मयः कश्चिदात्मा वर्ण्येत, युक्तं तस्य यजुराद्यवयव-

यजुरेव शिरः। ऋग् दक्षिणः पक्षः। सामोत्तरः पक्षः। आदेश आत्मा। अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति [२७]।

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति॥

---

**....विधः** । पूर्ववदर्थः । **तस्य....शिरः** । तस्य अन्तःकरणस्य यजुर्वेदविषय(यजुर्वेदजन्य ?)ज्ञानजनकमनोव्यापारः शिर इत्यर्थः। मुख्यार्थस्य यजुर्वेदस्य मनस्संबन्धाभावेन मनश्शिरस्त्वरूपणासंभवादिति द्रष्टव्यम्। एवमुत्तरत्रापि। **आदेश आत्मा**। इदं कुरु, इदं मा कार्षीरिति विधिनिषेधरूपं रहस्यानुशासनमादेश इत्यर्थः। अत्र तज्जन्यज्ञानहेतुभूतान्तःकरणवृत्तिरादेशशब्देनोच्यते। **अथर्व....प्रतिष्ठा।** अथर्वाङ्गिरोभिः दृष्टा मन्त्राः प्रतिष्ठाहेतुभूतं पुच्छमित्यर्थः। अत्रापि अथर्वाङ्गिरश्शब्दः तज्जन्यज्ञानहेतुभूतमनोव्यापारपरः।

**यतो......कदाचने**ति। यस्मात् ब्रह्मानन्दात् वाङ्मनसे इयत्तालक्षणं पारमप्राप्य निवर्तेते, तादृशं ब्रह्मानन्दम्, 'दृश्यते त्वग्र्यया

---

कत्वम्, न मनोमयस्येति चेन्न—मनोव्यापारेषु वेदार्थगोचरव्यापारस्यैव प्राधान्यं प्रदर्शयितुमित्थमुक्तेः। किञ्च, 'मनसो हि वाक् पत्नी' इति श्रुतिः। अतः 'अर्धो वा एष आत्मनः' इति वाचो मनोंशत्वमुपपन्नम्। रहस्यानुशासनमिति। इदं 'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति... एष आदेश' इत्युक्तमनुशासनं वा ऋग्वेदादिविलक्षणं पाञ्चरात्राद्युपजीव्यं मूलभूतमेकायनं वा (रहस्याम्नायः)। अथर्वाङ्गिरस इति पदमथर्वाणिकाङ्गिरस लक्षणया तद्दृष्टवेदपरम्। ततो लक्षणीयमर्थमाह अत्रापीति। शब्दोऽपीत्यन्वयः। अत्र सर्वत्र जन्यपदप्रयोगात् पूर्वं

तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात् मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग

बुद्ध्या', 'मनसा तु विशुद्धेन' इत्युक्तरीत्या शुद्धेन मनसा ज्ञात्वा कदापि न बिभेतीत्यर्थः । अत्र ब्रह्मानन्दस्य शुद्धमनोगोचरत्वप्रतिपादकत्वादस्य मनोविषयत्वमस्तीति द्रष्टव्यम् ।

### (विज्ञानमयपर्यायः)

**तस्य....पूर्वस्य** । पूर्वस्य प्राणमयस्य य आत्मा स एव मनोमयस्याप्यात्मेत्यर्थः । एवञ्च अन्नमयप्राणमयमनोमयानामेक आत्मेत्युक्तं भवति । स क इत्यपेक्षायामाह **तस्माद्....विज्ञानमयः** । अत्र विज्ञानमयो जीवः ; न बुद्धिमात्रम् । मयट्प्रत्ययेन व्यतिरेकप्रतीतेः । **तेनैष...विधः** । पूर्ववदर्थः । **तस्य...आत्मा** । अत्र श्रद्धा-ऋत-

यजुर्वेदजन्येति पाठो युक्तः । शुद्धेनेति । शुद्धं हि मनः ब्रह्मानन्दम् अस्तित्वेन, 'विज्ञातमविजानताम्' इत्युक्तरीत्या उक्तयजुराद्यवयवकमनोमयरूपेणापि स्वेनापरिच्छेद्यतया च जानीयात् । एवं ब्रह्मानन्द-[illegible]रूपतत्त्ववेदनमीदृशमनोमयमात्रसाध्यम् । अन्यादृशमनसः एतत्तत्त्वाग्राहित्वात् । चक्षुरादेश्च ब्रह्मानन्दरूपधर्मिग्राहकत्वस्यैवाभावेन ईदृशग्रहणविधुरत्वादिति, मनस एव तत्र प्रवृत्त्या च मनोमयमहिमवर्णनमिहेति भावः । अत्र श्लोके कदाचनेत्युक्तम् । उपरि पुनरनुवादे कुतश्चनेति । उपरि भृगुवल्ल्याम्, 'इमान् लोकान् कामान्नी' इत्यतः कचनेति लब्धम् । तदिदं सर्वं संकलितमाचार्यैः

आत्मा। महः पुच्छं प्रतिष्ठा।

तदप्येष श्लोको भवति [२८]।

विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च।

---

**सत्य**शब्दाः ज्ञानविशेषपराः। 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति विहितज्ञानविशेषो **योग**शब्देनोच्यते। **महः पुच्छम्।** योगविरोधिनिरसनसामर्थ्यलक्षणं महः पुच्छमित्यर्थः। एतेषां श्रद्धादीनामात्मगुणत्वेन प्रसिद्धत्वात् तत्तदवच्छिन्नमात्मस्वरूपं शिरःपक्षपुच्छादिमत्तया प्रतिपाद्यत इति द्रष्टव्यम्। अतः "स्वस्मादनतिरिक्तैः स्वावयवैः शिरःपक्षपुच्छादिरूपणपरत्वात् प्रकरणस्य" इति भाष्यस्य न विरोधः।

**तदपि....ऽपि च।** अत्र विज्ञानमयशब्दनिर्दिष्टो जीवो **विज्ञान**शब्देनोच्यते। आत्मस्वरूपस्य स्वप्रकाशतया, ज्ञानैकनिरूपणीयत्वेन च विज्ञानशब्देनाभिधानसंभवात्। 'कृत्यल्युटो बहुलम्' इति वा जानातीत्यर्थे ल्युट् आश्रीयते। नन्द्यादित्वं वा आश्रित्य, 'नन्दि-

---

अभीतिस्तवे, "कदाचन कुतश्चन क्वचन तस्य न स्याद् भयम्" इति।

श्रद्धा शास्त्रार्थविश्वासपूर्वकतदनुष्ठानत्वरा। ऋतम् "ऋतं पिबन्तौ" इत्यादाविव कर्मफलम्, ऐश्वर्यमिति यावत्। सत्यम् कैवल्यम्। ऐश्वर्यार्थोपायविज्ञानं कैवल्यार्थविज्ञानञ्च विवक्षितम्। ऋतस्य अन्तरा भगवदनुभवगर्भत्वात् तत्कारणत्वाच्च दक्षिणपक्षत्वम्। कैवल्यस्य दीर्घकालतद्वैकल्यापादकत्वादुत्तरपक्षत्वम्। योगो मोक्षार्थविज्ञानम्। महः तत्तदनुष्ठाननिर्वर्तनशक्तिः, अपहतपाप्मत्वादिः फलानुभवोपयोगिशक्तिश्च। भङ्ग्या एतत्सर्वविवरणरूप एवोपरितनश्लोकः कूरनारायणानुसारात् ब्रह्मज्येष्ठमित्येकपदत्वम्। पृथक्त्वेऽपि न दोषः। योगविरोधीत्यत्र योगेत्युपलक्षणम्। देवाः जीव-

विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते ॥
विज्ञानं ब्रह्म चेद् वेद । तस्माच्चेन्न प्रमाद्यति ।
शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुत इति ॥

---

ग्रहि—'इत्यादिना कर्तरि ल्युः आश्रीयते । केवलविज्ञानमात्रपरामर्शे, 'यज्ञं तनुते कर्माणि तनुतेऽपि च' इति प्रतिपादितवैदिकलौकिककर्मकर्तृत्वासंभवात् । अन्तर्यामिब्राह्मणे, माध्यन्दिनपाठगतात्मशब्दस्थाने, 'यो विज्ञाने तिष्ठन्' इति काण्वपाठे दर्शनात् विज्ञानशब्दो जीवात्मपरः । **विज्ञानं....उपासते ।** सर्वे देवाः विज्ञानं जीवस्वरूपमेव प्रधानशब्दाभिलप्यादचेतनात् ब्रह्मणोऽपि ज्येष्ठं प्रजापतिविद्योक्तरीत्या उपासत इत्यर्थः । **विज्ञानं....समश्नुत इति ।** यस्तु जीवरूपं ब्रह्म वेद, [सः?] **तस्मात्** जीवादन्तिमप्रत्ययपर्यन्तं न प्रमाद्यति चेत् , **शरीरे पाप्मनो हित्वा**— देहे वर्तमान एव विनष्टाश्लिष्टपूर्वोत्तराघः सर्वान् कामान् समश्नुते ।

---

मुपासत इति प्रजापतिविद्ययाऽवगम्यते । इन्द्रविरोचनयोरिन्द्रं प्रति प्रजापतिना तत्तत्त्वोपदेशादित्यभिप्रेत्याह —प्रजापतिविद्येति । जीवरूपं ब्रह्मेति । अत्र "आत्मेति तूपगच्छन्ति" इति सूत्रश्रुतप्रकाशिकायां अन्नप्राणयोरिवात्रापि दृष्टिविधित्वं कीर्तितम् । उपरि पाप्म-[illegible]मोक्षफलश्रवणात् परविद्याविधानपरत्वमत्र प्रतीयते । अन्ततो विमर्शे अत्र चेच्छब्दश्रवणेन प्रमाणान्तरसिद्धोपासनानुवादत्वावगमात्, 'जीवब्रह्मवेदनात् प्रतिबन्धकपापप्रहाणेन ऐश्वर्यकैवल्यमोक्षाख्यान् सर्वान् कामान् अश्नुते । यदुद्दिश्योपास्ते तल्लभते' इत्यर्थावगमात् वेदनमिदमौचित्यात् मोक्षे परमार्थरूपम्, अन्यत्र दृष्टिरूपमिति निश्चीयते । अत्र कूरनारायणीयमपि द्रष्टव्यम् । एवं च

तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्मात् विज्ञानमयात्। अन्योन्तर आत्माऽऽनन्दमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा।

---

(आनन्दमयपर्यायः)

इष्टवस्तुदर्शनजन्यं सुखं **प्रियम्**। तल्लाभजन्यं सुखं **मोदः**। लब्धस्योपयोगजन्यं सुखं **प्रमोदः**। सुखातिशय **आनन्दः**। न च मध्यकायत्वेन रूपितस्याऽऽनन्दस्य पुच्छत्वेन रूपितस्य ब्रह्मणश्च भेदाभावेन तस्यैवात्मत्वेन पुच्छत्वेन च रूपणं कथमिति वाच्यम्। एकस्यैव ब्रह्मणो ब्रह्मत्ववेषेण पुच्छत्वम्, आनन्दत्ववेषेण आत्मशब्दितमध्यकायत्वमित्युपपत्तेः। न च आनन्दरूपब्रह्मस्वरूपस्य कथमानन्दप्रचुरत्व-

---

विज्ञानं ब्रह्मेत्यत्र विज्ञानविशेष्यकपञ्चाग्निविद्यावत् प्रमाणसिद्धजीवशरीरकब्रह्मवेदनरूपविद्यान्तरमपि क्रोडीकर्तुं शक्यमित्याशयेन जीवरूपमित्युक्तम्। एवंच ऋतसत्यपदविवक्षितमपि दर्शितं भवति। अत एव, 'विज्ञानं यज्ञम्' इत्यत्रैवात्रापि विज्ञानस्य कर्तृतयैव निर्देशः। मध्ये देवानां कर्तृतया पूर्वं कर्तृपदाननुषङ्गात्। अतश्च, 'विज्ञानाख्यो जीवो यदि ब्रह्मोपासीत, तर्हि मोक्षः फलमित्युच्यते, मनोमये ब्रह्मवेदने मनसः करणत्वं यथोक्तम्, तथात्र जीवस्य कर्तृत्वं वक्तव्यमुच्यते' इति जातु प्रतीतमप्युपेक्ष्यं भवति।

इष्टेति। प्रियमोदादिपदानामर्थवैलक्षण्यमेवं प्रदर्शितम्। प्रकृते परमात्मगतं विभूतिद्वयसाक्षात्कारजन्यं सुखं प्रियम्। एवमुपरि। आनन्दः हेयप्रत्यनीककल्याणैकतानमहानन्दसुखविशिष्टस्वरूपानु-

तदप्येष श्लोको भवति [२९]।

असन्नेव स भवति। असद् ब्रह्मेति वेद चेत्।

अस्ति ब्रह्मेति चेद् वेद। सन्तमेनं ततो विदुरिति॥

---

लक्षणमानन्दमयत्वम्, आनन्दस्याऽऽनन्दप्रचुरत्वाभावादिति वाच्यम्— आनन्दस्वरूपस्यैव ब्रह्मणः प्रियमोदप्रमोदशब्दवाच्यशिरपक्षाद्रूपितधर्मभूतानन्दप्रचुरत्वेन आनन्दमयत्वस्याप्युपपत्तेः। अत्र च पूर्वेष्वन्नमयादिषु चतुर्षु पर्यायेष्वनिरूपितस्य ब्रह्मणोऽवयवत्वस्यास्मिन् आनन्दमये निरूपणम्, 'ब्रह्मविदाप्नोति परम्' इत्युपक्रान्तस्य ब्रह्मोपदेशस्य आनन्दमयपर्याये समापनमिति ज्ञापनार्थमिति द्रष्टव्यम्। अतोऽत्रानन्दमय एव प्रक्रान्तं ब्रह्म।

**तदपि....विदुरिति**। पूर्वेषु चतुर्षु पर्यायेषूदाहृतानां श्लोकानां पुच्छवद्विषयत्वदर्शनात् अयमपि श्लोकः पुच्छवदानन्दमयविषयक एव; न तु, 'ब्रह्म पुच्छम्' इति निर्दिष्टतदेकदेशविषयः। ततश्च ब्रह्मशब्देनानन्दमय एवोच्यते। आनन्दमयसदसत्त्वज्ञानात् मोक्षसंसारौ भवत इत्यर्थः।

---

भवः। ब्रह्म पुच्छमित्यत्र ब्रह्म च उक्तसर्वसुखाधारभूतमानन्दरूपं धर्मि। अत्र आनन्दपदविवक्षितस्य स्वरूपानुभवस्य धर्मभूतज्ञानपरिणामत्ववत् स्वप्रकाशरूपत्वस्यापि सम्भवात् नचेत्याद्याशङ्का, पूर्वं सुखातिशय आनन्दः इत्युक्तिश्च न विरुद्ध्येते। अस्तु वा आनन्दपदं धर्मिपरमेव। तस्य निरतिशयसुखरूपत्वात् सुखातिशय इत्युक्तिरिति।

अन्नमयादिपर्याये तत्तदुपासनफलमिव आनन्दमयोपासनफलमुच्यते श्लोकेन, 'अस्तीत्येवोपलब्धव्यः' इति कठवल्लीमनुसृत्य। सदसत्त्वज्ञानादिति। 'ज्ञानसद्भावासद्भाव' इति आनन्दमयाधिकरणभाष्यानुसारेण, 'असद्ब्रह्मेति वेद चेत्' इत्यस्य 'ब्रह्म वेदेत्येतदसच्चेत्' इति योजनाया क्लेशमालोच्य यथाश्रुतमेवोक्तम्। तदधिकरण-

**तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।**

---

आनन्दमयस्य (आनन्दमयरूपस्य) ब्रह्मण आकाशादिविज्ञान-मयान्तपदार्थान्तर्यामितया निर्दिष्टस्यापि आत्मान्तरमस्ति किमिति शङ्कां व्युदस्यति **तस्यैष....पूर्वस्य ।** विज्ञानमयान्तपदार्थस्यात्मभूत एव आनन्दमयस्यात्मेत्यर्थः (भूत एष आनन्दमय आत्मा **तस्य** आनन्द-मयस्याऽऽत्मेत्यर्थः) । ततश्चानन्यात्मकत्वमुक्तं भवति । न च पूर्वेषु पर्यायेषु, 'तस्यैष **एव** शारीर आत्मा' इत्यस्यानन्यात्मकत्वप्रतिपाद-कत्वादर्शनात् अस्मिन् पर्याये तदाश्रयणे अर्थवैरूप्यं स्यादिति शङ्क्यम् ; पूर्वेषु पर्यायेष्वनुक्तस्य ब्रह्मावयवत्वस्येह निरूपणात् , 'तस्माद्वा एत-स्मादन्योऽन्तर आत्मा' इति निर्देशाभावाच्च एतत्पर्यायगतस्य, 'तस्यैष एव शारीर आत्मा' इत्यस्यानन्यात्मत्वमेवार्थः (र्थ इति ?) ।

---

**भाष्य एव एवंरूपार्थस्याप्यनुवादात् । अन्यादृशभाष्यपाठे विवा-दाच्च । यो ब्रह्म यथा वेद, तस्य तथाभवनम् । असदिति विदंश्चासन् भवति । क्षिपाम्यजस्रमिति च गीता ।**

**नन्वानन्दमयस्यैवानन्दमयः आत्मेति अनन्वितमिदमित्यत्राह— ततश्चानन्यात्मत्वमिति । अत्र आनन्दमयातिरिक्तब्रह्मवादिकृतयोजना-निरास-समुचितार्थस्थापनादिविस्तरः अस्मदाचार्यानुगृहीतायां पर-पक्षनिराकृतौ द्रष्टव्यः । यद्यपि आत्मशब्दस्य स्वरूपपरत्वमेवाङ्गीकृत्य आदौ प्राणमयपर्याये, 'तस्यैष एव शारीर आत्मा, यः पूर्वस्य' इत्यस्य यः पूर्वोक्ताकाशाद्यन्नमयान्तसम्बन्धी सत्यं ज्ञानमिति प्रक्रान्तो विपश्चित् , तस्य एष एव शारीर आत्मा, अयं प्राणमय एव शरीरप्रतिसम्बन्धिस्वरूपमित्यर्थः सुवचः । तथाच पूर्वोक्त आत्मा अन्नमयसम्बन्धी प्राणमयश्चेक इत्युक्तं भवति । अथ तन्निरसनाय**

अथातोऽनुप्रश्नाः। उता विद्वानमुं लोकं प्रेत्य। कश्चन गच्छती ३।
आहो विद्वानमुं लोकं प्रेत्य। कश्चित् समश्नुता ३ उ॥

---

(प्राप्तिप्रकारप्रश्नः)

आनन्दमयब्रह्मप्रतिपादनानन्तरं, 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमाभिहितप्राप्तिविशदीकरणार्थं प्रश्नान् उपक्षिपति **अथातः...समश्नुते।** पूर्वप्रतिपादनस्य बुभुत्साहेतुत्वम् **अत**श्शब्देनोच्यते। **उत** इति निपातस्य छान्दसो दीर्घः, 'अथासपत्ना' इतिवत्। अविद्वानिति पदे सति आद्युदात्तत्वं स्यात्; 'तत्पुरुषे तुल्यार्थ' इति स्मरणात्। अन्तोदात्तश्चेदं पदम्। तस्मात् **विद्वानिति** छेदः। कश्चन अविप्रकृष्टहृदयादिस्थानस्थमनवच्छिन्नञ्च ब्रह्म उपासीनो विद्वान् किमितः प्रेत्य

---

आत्मान्तरप्रस्तावः, तस्माद्वा एतस्मादिति। एवंचात्माऽऽनन्दमयपर्याये, यो विपश्चित् आकाशादिपूर्वोक्तसर्वप्रतिसम्बन्धी, तस्य एष आनन्दमय एव शारीरप्रतिसम्बन्धिस्वरूपमिति आनन्दमयस्य ब्रह्मणश्चैक्यं स्थाप्यते ब्रह्मविषयश्लोकानन्तरम्। एवं स्थापितस्यैक्यस्योपर्यनिरसनादानन्दमयस्य वास्तवात्मत्वसिद्धिरिति न प्रकृतवाक्यार्थे क्लेशः—अथापि, 'आत्मेश्वरम्', 'स्वे महिम्नि प्रतिष्ठितः' इत्यादिश्रुतिशल्या विशेषार्थलम्भनसारस्यात् भाष्यादिसमादृत एवार्थ उक्तः। न च आत्मशब्दस्य स्वरूपार्थकत्वं विहाय शारीरप्रतिसम्बन्धिपरत्वे शारीरपदेन पौनरुक्त्यमिति शङ्क्यम्। तदा आत्मेत्यस्य नियन्तेत्येवमर्थात्; शारीरपदस्य शारीरपदवाच्य इत्यर्थस्वीकारादिनापि पौनरुक्त्यपरिहारसम्भवाच्च। तेन शारीरकशास्त्रवेद्यस्य परमात्मनः शारीरत्वं दृढं भवति।

उताविद्वानित्ति अनुष्टुप्श्लोक इति भास्करः।

**सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवा-**

**अमुं लोकं** 'परमे व्योमन्' इत्युक्तं लोकं गच्छतीत्येकः प्रश्नः । उत गत्यनपेक्षमिहैव ब्रह्माऽऽप्नोतीत्यर्थसिद्धः प्रश्नः । **आहो....समश्नुत** इति भोक्तृत्वं विवक्षितम् । अयमर्थः—कश्चिदहङ्ग्रहेणोपासीनोऽपि विद्वान् अमुं लोकं गत्वा किं **समश्नुते** भोग्यभूतं ब्रह्मानुभवतीत्येकः प्रश्नः। उत ब्रह्मस्वरूपेणैकीभवतीत्यर्थसिद्धः प्रश्नः । एवं शास्त्रवैविध्यमूलाः गतिविशेषस्वरूपभेदसदसद्भावविषयाः प्रश्नाः बहुवचनविवक्षिताः । एतत् सर्वं **व्यासार्यैः,** 'उपासात्रैविध्यात्' इति सूत्रे स्पष्टमुक्तम् ।

## (उत्तरोक्तये कारणत्वात्मत्वादिविवरणम्)

एतान् प्रश्नान् प्रतिवक्तुं जगत्कारणत्वौपयिकगुणविशिष्टस्यैव ब्रह्मणः प्राप्यत्वादिज्ञापनायाऽऽह **सो....प्रजायेयेति । सः** आनन्दमय आत्मा, 'देवमनुष्यादिरूपेण बहु स्याम् ; तदर्थमाकाशादिरूपेण प्रजायेय' इति व्यष्टिसमष्टिरूपचेतनाचेतनविषयसंकल्पमकरोदित्यर्थः । **स तपोऽतप्यत । सः** परमात्मा स्रष्टव्यालोचनरूपं तपः कृतवानित्यर्थः।'तप आलोचने' इति हि धातुः । **स तपः....प्राविशत् ।**

---

ज्ञापनायाहेति । अत्र कारणत्वादिकं निरतिशयानन्दपर्यन्तं महिमानमिति कर्म जीवमुख्यसूत्रश्रुतप्रकाशिकातो ज्ञेयम् । पूर्वं आत्मन आकाशस्संभूत इत्यादिना किञ्चित्कारणत्वस्यैवोक्ततया समष्टिव्यष्टिसर्वजगन्निरूपित -सर्वविषय - सर्वविधकारणत्वानवगमेन निरतिशयानन्दसिद्धये तदत्र निरूप्यते ।

नुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तञ्चानिरुक्तञ्च । निलयनञ्चानिलयनञ्च । विज्ञानञ्चाविज्ञानञ्च । सत्यञ्चानृतञ्च सत्यम-

---

ननु सर्वदा सर्वव्याप्तस्य ब्रह्मणः कोऽसौ सृष्टिकालानुप्रवेश इति चेत्—उच्यते—गोजठरगतवत्से गोत्वादिवत् सर्वव्याप्तस्य ब्रह्मणः प्रत्येकं सर्ववस्तुषु पुष्कलप्रतीत्यर्हस्थितिविशेष एवानुप्रवेशः । अनेन, 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यो वेद निहितं गुहायाम्' इति मन्त्रोक्तमनन्तस्य ब्रह्मणो हृदयगुहानिहितत्वमुपपादितं भवति । **तदनुप्रविश्य सच्च त्यच्चाभवत्** । सच्छब्देन निर्विकारतया सततैकरूपश्चेतन उच्यते । **त्य**च्छब्देन [पूर्व] पूर्वावस्थात्यागरूपविकारास्पदमचेतनमुच्यते। ब्रह्मैव चेतनाचेतननामरूपभाक् भवतीत्यर्थः । ननु ब्रह्मण एव सर्वोपादानतया सर्वभावे विकारास्पदत्वं स्यादित्याशङ्क्याह **निरुक्तञ्च... यनञ्च** । जातिगुणक्रियावत्तया जातिगुणाद्यभिधायिशब्दवाच्यमचेतनं **निरुक्तम्** । जादिगुणादिशून्यं चेतनजात**मनिरुक्तम्** । 'एता भूत-

---

अचेतनं निरुक्तमिति। पूर्वं पश्चाच्च चेतनमेव पूर्वमुच्यते इति अत्रापि, 'देवादिशब्देन वस्तुतो निरुक्तं चेतनम्, आत्मपर्यन्तत्वात् शब्दस्य । वेदान्तव्युत्पत्तिं विनैव कणादेनापि तदुक्तेः । अचेतनं तु तादृशशब्दामुख्यार्थत्वादनिरुक्तम्' इति सुवचम्—अथापि उपरि, 'अनिरुक्तेऽनिलयने' इति परमात्मन्यपि तथाप्रयोगात् शब्दविशेषस्य नार्थविशेषे व्यवस्थेति इत्थं (चार्वाकबुद्ध्या) अर्थ उक्तः। सत्यञ्चानृतञ्च सत्यमभवदित्यस्य सत्यं ब्रह्म चिदचिद्रूपमभवदित्यर्थवर्णने पूर्ववाक्येन पौनरुक्त्यमिति सत्यानृतरूपं सदेव निर्विकारमभवदि-

भवत्। यदिदं किञ्च। तत् सत्यमित्याचक्षते।

---

मात्राः प्रज्ञामात्रास्वर्पिताः' इत्युक्तरीत्या अचेतनवर्गाधारभूतं चेतनजातं निलयनम्। आश्रितमचेतनजातं त्वनिलयनम्। **विज्ञानञ्चाविज्ञानञ्च** अजडस्वरूपं जडस्वरूपञ्च। **सत्यञ्च...मभवत्**। निर्विकारतया सत्यत्वं चेतनस्य; इतरस्य त्वतथात्वम्। ततश्च निरुक्तत्वानिरुक्तत्वनिलयनत्वानिलयनत्वविज्ञानत्वाविज्ञानत्वयुक्तसत्यानृतशब्दितचेतनाचेतननामरूपभाक् भवदपि ब्रह्म **सत्यमेवाभवत्**=अजहन्निर्विकारत्वलक्षणस्वस्वभावमेव अभवदित्यर्थः। **यदिदं....त्याचक्षते**। यस्मात् चेतनाचेतनात्मकवर्गानुप्रविष्टतया **सत्य**शब्दितस्य ब्रह्मण आत्मत्वम्, अत एव चेतनाचेतनात्मकं

---

त्यर्थो दर्शितः। एवञ्चोपरितनवाक्यापेक्षितो हेतुरेतत्पूर्ववाक्येनैव समर्पित इति ध्येयम्। अत एवेति। यदिदमित्यत्र अत एवेति हेतुः पूरणीय इत्याशयः। यद्वा तत्र इतिपदं हेतुपरम्। इति हेतोः यदिदं किञ्च तत् सत्यमाचक्षत इत्यर्थः। ननु किमर्थमिदं यदिदमित्यादिवाक्यम्; अन्यप्रमाणीकरणस्य श्रुत्यनपेक्षितत्वात्॥ नैवम्—सर्वमिदं ब्रह्मेत्येवं प्रयोगे सविकारत्वनिर्विकारत्वादिरूपजगद्ब्रह्मगुणमिथोविरोधचिन्तनया केचित् एकतरबाधमुभयबाधं वा मन्यन्ते। तत्प्रतिबोधनार्थं सर्वत्रानुप्रवेशनिबन्धनं तादात्म्यमिति श्रुतिः कृपया ब्रवीति। एवं शिक्षणे सत्यपि यदि कुसृतिः, श्रुतिस्ततो नापराध्यतीति। यदिदं किञ्चेत्यस्य पूर्वत्रान्वयं कृत्वा तदित्यादेः तत्=तस्मात् कारणात् सत्यमित्याचक्षते श्रुतयः इत्यर्थोऽपि सुवचः। बृहदारण्यके (7—4), 'तदेतत् त्र्यक्षरं सत्यमिति' इत्यादिना चेतनाचेतननियन्तृत्वस्य तदर्थत्वोक्तेरिति॥ 'वीरणान् कटं करोति' इति व्यवहारे वीरणानां कर्तृव्यापारव्याप्यत्वरूपं कर्मत्वम्, घटस्य व्यापारजन्य-

तदप्येष श्लोको भवति [३०]

असद्वा इदमग्र आसीत् । ततो वै सदजायत ।

तदात्मानꣳ स्वयमकुरुत । तस्मात् तत् सुकृतमुच्यत इति ।

यद्वै तत् सुकृतम् । रसो वै सः । रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवति ।

---

जगत् शास्त्रदृष्टिमन्तः पुरुषाः **पराशरादयः**, 'हरेर्न किञ्चित् व्यतिरिक्तमस्ति', 'ज्योतींषि विष्णुः भुवनानि विष्णुः' इत्याचक्षत इत्यर्थः ।

**तद्....भवति** । व्यक्तोऽर्थः । **असद्...सदजायत** । इदं स्थूलचेतनाचेतनशरीरक(कं)ब्रह्म अनभिव्यक्तनामरूपं ब्रह्म सृष्टेः प्रागासीत् । तस्मात् इदं जगत् अभिव्यक्तनामरूपमभवदित्यर्थः । ननु असच्छब्दितस्य ब्रह्मण उपादानत्वे कर्त्रन्तरमपेक्षितम् , निमित्तोपादानयोर्भेदावश्यम्भावादित्याशङ्क्याह **तदात्मानं स्वयमकुरुत** । आत्मानमेवोपादानत्वेन स्वीकृत्य स्वयमेवाकुरुत । **तस्मात्....इति** । यस्मात् स्वयमेव स्वस्य कार्यम् । अत एव ब्रह्म सुष्ठु **कृतं** कार्यं यस्य तत् **सुकृतम्** । कार्यस्य सौष्ठवञ्चानतिक्लेशरूपत्वम् । स्वभिन्नस्य कार्यस्य निर्माणे हि क्लेशप्रसक्तिः । ततश्चाक्लिष्टकार्यं ब्रह्मेति, **'निःश्वसितमेतन्महतो भूतस्य'** इत्यादिश्रुतयो वदन्तीत्यर्थः । **(आनन्दयितृत्वम्)**

भवतु तत सुकृतम ; तस्योपास्यत्वप्राप्यत्वयोः किमायातमित्यत्राह **यद्वै....सः** । सुकृतमिति निर्दिष्टं ब्रह्म **रसः** आनन्दः । तल्लाभादस्य आनन्दित्वम । ततश्च तस्याऽऽनन्दत्वात प्राप्यत्वोपास्यत्वे युक्ते इति भावः ।

---

फलाश्रयत्वरूपं तत् । तदनाऽऽत्मन उभयविधं कर्मत्वमिति ज्ञापनाय उपादानत्वेन स्वीकृत्येत्यधिकमुक्तम् ।

को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवाऽऽनन्दयाति।

यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां

---

तदेवोपपादयति **को....ह्येवाऽऽनन्दयाति** । यद्ययमपरिच्छिन्नानन्द (?)रसः परमात्मा न स्यात्, सांसारिकमापवर्गिकं वा सुखं कः प्राप्नुयात् ? अत एष एवानन्दयति । अतस्तस्य सर्वविधानन्दहेतुत्वात् तस्य प्राप्यत्वमस्तीति भावः । **यदा...भवति** । **अदृश्ये** चक्षुरादिग्रहणानर्हे । **आत्म्यं** व्याप्यं = शरीरमित्यर्थः । **अनात्म्ये** अशरीरे इत्यर्थः । अत एव **अनिरुक्ते** जातिगुणादिवाचिदेवादिपदावाच्ये । **अनिलयने** आधारशून्ये । **अभयम्** अभयाय । 'नाव्ययीभावात्—' इति चतुर्थ्याः अम्भावः । 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावसमासः । अभयसाधनभूतां **प्रतिष्ठां** निरन्तरस्मृतिलक्षणां निष्ठां यो **विन्दते** लभते, सः अभयं प्राप्नोति । अत्र **व्यासार्यैः**, "**अदृश्य** इत्यचिद्व्यावृत्तिः । **अनात्म्य** इति बद्धव्यावृत्तिः । स हि परमात्मना व्याप्यः। यद्वा **आत्म्यं** व्याप्यम्, कर्मकृतशरीरम् । तद्रहितोऽनात्म्यः । **अनिरुक्त** इति मुक्तव्यावृत्तिः । स हि बद्धावस्थायां देवादिशब्दैरुक्तः। **अनिलयन** इति नित्यमुक्तव्यावृत्तिः। तेषां हि भगवान् आधारः"

---

एवं सृष्टिमुपवर्ण्य सुकृतपदेन यादृशं ब्रह्मोक्तम्, तादृशस्यैव, 'रसो वै सः' इति रसत्वोक्त्या प्रपञ्चस्याप्यानन्दत्वलाभः । ईदृशानन्ददातृत्वं ब्रह्मण उच्यते को ह्येवेति। आकाश आनन्द इत्यस्य अपरिच्छिन्नानन्दत्वरूपोऽर्थः 'खं कम्' इत्यनेव सिद्धः । अयमानन्द-

विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति।

तत्त्वेव भयं विदुषोऽमन्वानस्य। तदप्येष श्लोको भवति [३१]

---

इत्युक्तम्। एवं विहितायाः प्रतिष्ठायाः विच्छेदे अनर्थं दर्शयति **यदा....भवति**। **एषः** उपासकः। **एतस्मिन्** परमात्मनि ध्यानस्य **अन्तरं** विच्छेदं **अरं** अल्पमपि यः कुरुते, तस्य भयमुद्भवतीत्यर्थः। पूर्ववाक्ये **प्रतिष्ठा**शब्देन निरन्तरध्यानवाचिना ध्यानगतनैरन्तर्यस्य विहितत्वात् अत्र **अन्तर**शब्देनापि तस्यैव ध्यानगतनैरन्तर्यस्य विरोधिनो ध्यानविच्छेदस्य ग्रहणमुचितम्; न तु परोक्तरीत्या, 'ब्रह्मणि अन्तरं भेदं यः **कुरुते** जानाति' इत्यर्थ उचित इति द्रष्टव्यम्। वस्तुतस्तु ब्रह्मैक्यवादिनामस्माकं ब्रह्मणि नानात्वनिषेधो न प्रतिकूलः। अस्माभिर्नानाब्रह्मवादस्यानभ्युपगमात्। तथापि प्रकरणानुगुण्यादुक्त एवार्थ उचित इति द्रष्टव्यम्। किं भयम्? तत्राह **तत्....ऽमन्वानस्य**। **विदुषः** ब्रह्मोपासननिष्ठस्य तदतिरिक्तविषयस्पृहया निरन्तरं मननमकुर्वतः, **तदेव** अमननं भयम्। न हि तदपेक्षया अन्यत् भयमस्ति। उक्तञ्च महर्षिभिः।

"यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते।
सा हानिः, तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया॥",

---

भयपदपर्यायः। एतस्मिन् = आकाशानन्दे। उदरमित्यत्र स्थितम् उत्पदं भवतीत्यत्र उत्तरवाक्यस्थे योजितम् अर्थानुसारात्। तदिति। यत् अविदुषां भयं संसाराख्यम्, तदस्तु विदुषोऽप्यमनने। अमननमेव तु अभीष्टहानिरूपत्वात् प्रथमं भयमिति, अमन्वानस्य भयमुक्तम्।

भीषाऽस्माद् वातः पवते । भीषोदेति सूर्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ॥

"वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥" इति ॥

(भयहेतुत्वमुखेन प्रशासितृत्वकथनम्)

**तदप्येष....इति** । अग्नीन्द्रसूर्यप्रमुखाः सर्वेऽपि देवप्रवराः परमात्मशासनातिवृत्तौ किं भविष्यतीति भीत्या स्वस्वकर्मसु जागरूका भवन्ति । अतश्च ब्रह्मव्यतिरिक्तं कृत्स्नमपि पदं दुःखोदर्कत्वादनर्थरूपमेव । अतश्च तादृशपदकामनया मननविच्छेदस्यात्यन्तभयावहत्वात् ततोऽपि न भयं किञ्चिदस्तीत्यर्थः ।

(आनन्दमीमांसा)

एवं ब्रह्मवेदनस्य जगत्कारणत्वतदौपयिकसार्वज्ञ्यादिगुणविशिष्टविषयकत्वमविच्छिन्नत्वञ्च विधाय प्राप्यस्याऽऽनन्दमयस्य ब्रह्मण **आनन्द-**

---

भयकृत् क इत्यत्र आनन्दयितुरेव आज्ञोल्लङ्घने भयकृत्त्वमाह भीषाऽस्मादिति । नन्वमन्वान उपायान्तरेण सुखी भूत्वा सुख्येदित्यत्र तत्रापि भयमित्यप्यर्थात् दर्शितमिह भवति । पदं प्राप्यम् । फलमिति यावत् । एवं, 'को ह्येवान्यात् कः प्राण्यात्' इत्युक्तयोर्मध्ये प्राणनाभावेऽप्यननं स्यादित्यत्र अननं दुःखमिति दर्शितम् । अपि देवेति देवप्रवरत्वेऽपीत्यर्थः । अग्नीन्द्रयोरुचितक्रियाध्याहारः; उदेतीत्यन्वयो वा; उद्गच्छति, उत्तिष्ठतीत्यर्थात् । धावनं काले प्राणिमारणार्थम् । पञ्चम इति । पञ्चमत्वं उक्तिक्रमकृतम्; पूर्वं चतुर्णामुक्तत्वात् । आद्यास्त्रयः लोकत्रयदेवाः । इन्द्रः स्वर्गाधिपतिः । मृत्युः नरकाधिपतिः । ततोऽपीति । अमननादप्यधिकमित्यर्थः ।

सैषाऽऽनन्दस्य मीमꣳसा भवति—

(१) युवा स्यात् साधु युवाध्यायकः। आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः।

---

मयशब्दप्रवृत्तिनिमित्तमानन्दप्राचुर्यं दर्शयति **सैषा...भवति**। वक्ष्यमाणानन्दविषयकविचारो भवतीत्यर्थः। **युवा....चाकामहतस्य**। अत्र व्यासार्थः, "**साधु युवाध्यायकः** साधु यथाविधि, सम्यक्संप्रदायसिद्धतया, स्वरवर्णादिभ्रंशरहितं वा। युवशब्देन प्रत्यग्रत्वं विवक्षितम्। अविस्मरणान्नि(णं नि)त्यं नवं यथा भवति, तथाऽध्ययनवानित्यर्थः। यद्वा स्वसमवयस्कानां सर्वेषाम**ध्यायकः** अध्यापकः। तदधिकज्ञान इत्यर्थः। **आशिष्ठः** आशुतरक्रियः। यद्वा अशनक्षमः, अरोग इत्यर्थः। यद्वा आशीर्वादविषयभूतः। सर्वानुरञ्जक इत्यर्थः। 'सर्वान् देवान् नमस्यन्ति' इतिवत्। **बलिष्ठः** मनोबलवान्। द्रढिष्ठ इति शारीरबलस्योक्तत्वात्। यद्वा **द्रढिष्ठः** दृढतरः (मः?) न तु अव्यवस्थितस्वभाव इत्यर्थः। **बलिष्ठः** शारीरमानस सर्वविधबलवान्। **वित्तस्य पूर्णा** वित्तेन पूर्णा। 'पूरणगुणसुहितार्थ—' इति षष्ठ्या अनुज्ञानात्। एवं गुणसमुदायं विभूति-

---

यं लब्ध्वा आनन्दी भवतीत्युक्तम्, येन च ब्रह्म आनन्दमयमुक्तम्, स एवाऽऽनन्दो विचार्यते सैषेति। क आनन्दः, कियान् आनन्दः, कियन्तमानन्दं ददातीति वर्ण्यते। वक्ष्यमाणेति। एषेत्येतदर्थोऽयम्। युवेत्यादिर्वक्ष्यमाणग्रन्थ आनन्दमीमांसारूप इत्यर्थः।

पूरणेति सूत्रे पूरणपदं पूरणप्रत्ययान्तपरम्। अतः प्रकृते सुहितार्थेति विवक्षितम्। सुहितार्थाः तृप्त्यर्थाः। तथा च तृप्त्यर्थकपदयोगे षष्ठीसमासनिषेधात् षष्ठी अनुज्ञाता भवतीति। वित्तेनेत्यर्थे

(२) ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य ।

(३) ते ये शतं मनुष्यगन्धर्वाणामानन्दाः। स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य ।

(४) ते ये शतं देवगन्धर्वाणामानन्दाः। स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य ।

---

पौष्कल्यञ्चोक्त्वा, 'स एको मानुष आनन्दः' इति श्रुत्या स्वरसतः तस्यैवानन्दत्वमुक्तम् । न च ज्ञानभिन्नस्य गुणविभूत्यादेः कथमानन्दत्वमिति शङ्क्यम्—अनुकूलत्वं ह्यानन्दत्वम् । तच्च स्वत एवेष्टत्वम् । तच्च गुणविभूत्योरपि संभवति । तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुकूलत्वप्रयुक्तमेवेत्यन्वयव्यतिरेकसिद्धम् । अतः श्रुतिस्वारस्यात् गुणविभूत्यादेरानन्दत्वम् । **श्रोत्रियः** ब्रह्मनिष्ठः। **अकामहतः** समस्तसांसारिकभोगानुपहतः। "अतो मुक्त उच्यते" इत्युक्तम्। एवञ्च युवत्वदृढगात्रत्वसौन्दर्यज्ञानबलैश्वर्यादयः संभूय यत्र भवन्ति, स एको मानुष आनन्दः। अकामहतश्रोत्रियस्य मुक्तस्यापि स आनन्दोऽस्ति । मुक्तस्य सर्वानन्दानुभवशालितया तत्र मानुषानन्दस्यान्तर्गतत्वादिति भावः। **ते...चाकामहतस्य** । ये मनुष्या एव सन्तः कर्मविशेषेण विद्याविशेषेण वा अन्तर्धानादिशक्त्युपेततया गन्धर्वत्वं प्राप्ताः, ते **मनुष्यगन्धर्वाः** । अन्तरिक्षलोकवासिनो **देवगन्धर्वाः**। चिरकालस्थायी लोकः **चिरलोकः**।

---

वित्तस्येत्युपपन्नमिति भाव इति व्यक्तं भावप्रकाशिकायाम् । यत्र भवन्तीति । यस्मिन् समुदाये घटकतया सन्तीत्यर्थः ।

बृहदारण्यकेऽपि (6—3) एवमानन्दो निरूपितोऽस्ति । तत्र गन्धर्वा-

(५) ते ये शतं पितृणां चिरलोकलोकानामानन्दाः। स एक आजानजानां देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य।

(६) ते ये शतमाजानजानां देवानामानन्दाः। स एकः कर्मदेवानां देवानामानन्दः। ये कर्मणा देवानपियन्ति। श्रोत्रियस्य चाकामहतस्य।

(७) ते ये शतं कर्मदेवानां देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य।

(८) ते ये शतं देवानामानन्दाः। स एक इन्द्रस्यानन्दः। श्रोत्रियस्य चाकामहतस्य।

---

चिरलोको लोको येषां ते **चिरलोकलोकाः पितरः**। **आजानः** देवलोकः। तत्र जाताः **आजानजाः**। स्मार्तकर्मविशेषतो देवस्थानेषु जाता इत्यर्थः। अग्निहोत्रादिकर्मणा अग्नीन्द्रादिसायुज्यं प्राप्ताः **कर्मदेवाः**। **देवास्तु** वसुरुद्रादयः त्रयस्त्रिंशत् हविर्भुजः। इन्द्रबृहस्पती प्रसिद्धौ।

---

वान्तरभेदो नास्ति। पित्रानन्दात् गन्धर्वानन्दस्याधिक्यमुक्तम्। परं तु पितॄणां जितलोकत्वं तत्र विशेषणम्; अत्र चिरलोकलोकत्वम्। तेनात्र पितरो मुख्या उच्यन्ते, तत्र सायुज्यादिना पितृलोकं पश्चात् प्राप्ता इति भेदः स्यात्। कर्मदेवापेक्षया आजानदेवानन्दाधिक्यं तत्र। अत्र आजानजदेवाः तत्र आजानदेवाः। तत्र केवलम्, 'देवानामानन्दः' इति पर्यायो नास्ति। इन्द्रबृहस्पती च त्यक्तौ। तत्र तत्र क्वचित् लोकपदघटनमपि। तथा, 'ब्रह्मलोके' इत्यप्युक्तम्। 'यश्च श्रोत्रियोऽवृजिनोऽकामहतः' इति च आजानदेवप्रभृति उक्तम्। अन्ततः उभयस्यापि ग्रन्थस्य ब्रह्मानन्दे सर्वैहिकामुष्मिकानन्दातिशायित्ववर्णन एव तात्पर्यात्, अन्यस्य च, युवा स्यादित्यारम्भप्रभृति तदर्थं कल्पनामात्रत्वात् न वस्तुविरोधः। अत एव मीमांसेत्युक्तम्।

(९) ते ये शतमिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य।

(१०) ते ये शतं बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य।

(११) ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य।

**प्रजापतिः** चतुर्मुखः; न तु दक्षादयः, एकवचनश्रवणात्। **ते.... ब्रह्मणः....चाकामहतस्य**। अत्र ब्रह्मशब्दः, 'ब्रह्मविदाप्नोति परम्' इति प्रकृतब्रह्मपरः। न च ब्रह्मानन्दस्य **ते ये शत**मिति परिच्छिन्नत्वं कथमिति शङ्क्यम्—क्षणार्धेन बहूनि योजनानि गच्छति रवौ, 'इषुवद्गच्छति

---

अत एव चतुर्मुखानन्दस्यापि मानुषानन्दस्थानकल्पनया उपर्युपर्युब्जभुवोऽपि पूरुषकल्पनमुक्तं स्तोत्ररत्ने। एवं विचारेण अत्यन्तापरिच्छिन्नत्वमेव विवक्षितं भवतीति, 'यतो वाचः' इत्यनेन ज्ञाप्यते। न च—अकामहतश्रोत्रियलभ्य आनन्द एतावानेवेति ज्ञापानार्थमिदं सर्वम्। ब्रह्मानन्दस्तु इतोऽधिकोऽपरिच्छिन्नो वेदितव्य इति, 'यतो वाच' इत्युच्यत इति विचार्यम्। भोगसाम्य-परमसाम्यादिविरोधात्। 'स एको ब्रह्मण आनन्दः' इत्यनेन, 'यतो वाचः' इति प्रागुक्तं निरतिशयमेवाऽऽनन्दमुद्दिश्य चतुर्मुखानन्दातिशायित्वविधानेन श्रोत्रियस्यापि पूर्णानन्दसिद्धेश्च। नन्वत्र परं ब्रह्मसाम्याय श्रोत्रियस्य चेति वाक्यमस्तु। मानुषानन्दप्रभृति कुतः? अतो मुक्तेषु व्यक्तिभेदेनाऽऽनन्दतारतम्यं प्रतीयत इति चेन्न—इमान् लोकान् कामान्नी कामरूपी अनुसञ्चरन् ब्रह्मतुल्यानन्दो मुक्तः मानुषानन्दादिकमपीच्छया लभते। ईदृशानन्दभाग्देवमनुष्यादिरूपेणाप्यवतीर्णो भवति इत्येतत्परतयैवोपपत्तेर्बहुप्रमाणबाधायोगादित्यलम्।

**स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ।**

---

सविता' इति इषुसाम्यप्रतिपादकवचनस्य गतिमान्द्यनिवृत्तिपरत्ववत् **ते ये शतमिति** वाक्यस्यापि चतुर्मुखानन्दात् आधिक्यमात्रपरत्वेन शतगुणितचतुर्मुखानन्दानधिकत्व(न्दान्यूनाधिकत्व)परत्वाभावात् ।

**(पुरुषादित्यस्थपुरुषैक्यम्)**

एवम्भूत आनन्दमयः, 'यो वेद निहितं गुहायाम्' इति हृदयगुहानिहितत्वेनोपास्यमानः कीदृशविग्रहविशेषविशिष्टः, को वा देवताविशेषः इत्याकाङ्क्षायमाह **स...एकः** । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम'

---

**गतिमान्द्यनिवृत्तिपरेति।** उत्तरायण इव गतिमान्द्यं दक्षिणायने नास्तीति वक्तुम्, 'काष्ठां गतो दक्षिणतः क्षिप्तेषुरिव सर्पति' इत्युक्तं विष्णु पुराणे (2—8—10) । नुन्नात् इषोः क्षिप्तस्येषोर्हि क्षिप्रगामित्वम् ।

**तत्रतत्र श्रोत्रियस्य चेति** वाक्यस्य पाठात् तत्तल्लोकानन्दस्येव तत्तल्लोकस्थत्वस्यापि श्रोत्रियेऽवगमात् एतद्वाक्यं परब्रह्मलोकस्थमुक्तग्राहि । बद्धश्रोत्रिये एतदानन्दबाधाच्च । एवञ्चैकरूप्यस्य सर्वत्र भूतदशोक्तिमुखेन मुक्तपरम् । ज्ञानवैराग्यपौष्कल्यं पदद्वयलभ्यम् ।

**स यश्चायमित्यतः** पूर्वेण सन्दर्भेण तावत् कारणत्वान्तर्यामित्वानन्दयितृत्वप्रशासितृत्वनिरतिशयानन्दवत्त्वरूपप्राप्यत्वोपयुक्ताकारवत्त्वं प्रतिपाद्य, 'एवंभूतहृदयगुहानिहितानन्दमयब्रह्मोपासनेन अर्चिरादिना परं पदं प्राप्य ब्रह्मविदाप्नोति परम्' इति गत्यादि वर्णयिष्यन् कथमेतदुपासने तत्प्राप्तिः तत्क्रतुनयविरोधादित्याशङ्कापरिहाराय अयमेव स इत्यैक्यं स्थाप्यते प्रकृतवाक्ये । तत्र आदित्ये

इति आदित्यमण्डलान्तर्वर्तिकमनीयविग्रहयुक्तो यः पुण्डरीकाक्षः, स एव हृदयगुहावर्ती विज्ञानमयादन्तरः। ततश्च पुण्डरीकाक्षत्वादि[विशिष्ट?] विग्रहोपेतो नारायण एवेत्यर्थः। ततश्च तादृशविग्रहविशिष्टत्वेन हृदयगुहावर्तितो भगवतो ध्यानं कर्तव्यमिति फलितार्थः।

अत्र, 'सच्च त्यच्चाभवत्' इति चिदचिच्छरीरकत्वेनानुसंधानमुक्तम्। 'सत्यं ज्ञानम्' इति स्वरूपेणानुसंधानमुक्तम्। तच्च स्वरूपेणानुसंधानम् आदित्यमण्डलान्तर्वर्तिपुण्डरीकाक्षविग्रहविशिष्टतया चोक्तं

---

इत्येतत्, तत्र मार्गमध्यस्थिते, तद्द्वारा परमपदे प्राप्ये च, 'भुवनस्य मध्ये नाकस्य पृष्ठे' इत्येकत्वसिद्धवत्कारेण। एवमैक्यविदश्च तत्र एतत्प्राप्तिरुच्यते स य एवं विदित्यादिना। एवमर्थपरमेव सदपीदं वाक्यं विशिष्य आदित्यपदप्रयोगेणार्थान्तरमपि व्यनक्तीत्याशय्य, नेदं वाक्यं आनन्दमयविद्यायां आदित्यमण्डलान्तर्वर्तितयोपासनार्थं प्रवृत्तमित्येतत्परजीवमुख्यसूत्रश्रुतप्रकाशिकानुसारेणावतारयति एवंभूत इत्यादिना। आदित्यमण्डलान्तर्वर्तीति। श्रुतौ अन्तरादित्ये इतीदम्, 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति सूत्रेण आदित्यपदात् ण्यप्रत्ययविधानात् आदित्यस्येदमादित्यमिति आदित्यमण्डलवाचकम्। आदित्यस्य मध्ये अन्तरादित्ये इत्यस्वपदविग्रहः। अपदिशे इतिवत् सप्तमीति भावः। अत्रोपासात्रैविध्यसमर्पकं भाष्यमनुवदति— अत्रेत्यादिना। नन्वेवंविशिष्टब्रह्मोपासनेऽत्र विवक्षिते इदं सर्वमसृजतेति जगत्कारणत्वमप्युपास्याकारः स्यात्। न चेष्टापत्तिः। एतद्विद्याविषयकभृगुवल्ल्यां कारणत्वस्योपलक्षणतायाः 'इतरे त्वर्थसामान्यात्' इत्येतद्भाष्योक्ततया विरोधात्। किञ्च उताहो विद्वानित्यतःप्रागेवोपासनविधेः समाप्ततया केवलं प्राप्यविषयशोधनार्थ-

भवति । "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यात्" इति सूत्रे भगवता **भाष्यकृता**, 'तदिदं त्रिविधं ब्रह्मानुसंधानं प्रकरणान्तरेष्वप्याश्रितम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु स्वरूपेणानुसंधानम्, 'तत् सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्' इति भोक्तृ शरीरकतया भोग्यभोगोपकरणशरीरकतया च अनुसंधानम्' इत्युक्तम् ।

---

**प्रवृत्तवाक्यजातेऽत्र उपास्याकारविधानं न युक्तम् । अत एव सुबालोपनिषद्व्याख्याने, 'आनन्दमयो लयात्मा' इत्यत्र, 'सोऽकामयत' इति प्रवृत्तस्य कृत्स्नस्यास्य संदर्भस्य उपास्यगुणभूतनिरतिशयानन्दयोगोपपादकत्वमेव वर्णितं व्यासार्यैः । अतः कथमेषामुपास्याकारत्वमिति चेत्—उपास्यत्वं वाऽस्तु, उपास्यगुणविशेषोपयोगित्वं वाऽस्तु । सर्वथा एतदनुसंधानं विद्यारम्भे कार्यमिति न विरोध इति । वस्तुतः सत्यं ज्ञानमनन्तमिति प्रकृतस्यानन्त्यस्योपपादनार्थं कारणत्वअन्तरात्मत्वनिरूपके, 'तस्माद्वा एतस्मादात्मनः' इत्यादिसन्दर्भे गतिप्रश्नपूर्वभाविनि आनन्दमयत्वविधानार्थं प्रवृत्ते विज्ञानमयपर्याये विज्ञानमयविशिष्टोपासनमुक्तम्, 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति वाक्येन अन्ते आकाशाद्यन्नमयान्तप्राणमयमनोमयविज्ञानमयात्मत्वविधानादानन्दमयत्ववत् तदप्युपास्यमिति उपासात्रैविध्यं स्यात् । सोऽकामयतेत्यादेः तद्विवरणरूपत्वात् भाष्ये तत्प्रदर्शनम् । 'इतरे तु' सूत्रे उपलक्षितमिति भाषणं तु सत्यत्वादिकं न विशिष्टलक्षणम्, न विशिष्टवृत्ति, किंतु विशेष्यमात्रे इत्येतावदेव ज्ञापयेत् । न तु कारणत्वस्य प्रकृतविद्यायामनुपास्यत्वम् । अस्तु वा अन्नमयोपपादनशेषमाकाशादिकतिपयमात्रकारणत्ववचनमपीति कारणत्वमननुसंधेयम् । उक्तरीत्या चिदचिद्विशेषात्मत्वानुसंधानं तु नापैति । अत एव, अन्नमयमात्मानमुपसंक्रामतीत्यादि यथोपासनं प्राप्तिप्रदर्शकमित्यलम् ।**

स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति ।

तदप्येष श्लोको भवति [३२] ।
यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति ॥

---

(प्राप्तिप्रकारप्रश्नोत्तरम् )

एवमस्य प्राप्यत्वोपयुक्तमुक्त्वा, 'उताविद्वानमुं लोकंप्रेत्य... आहो विद्वानमुं लोकम्' इत्यादिनोपक्षिप्तानां प्रश्नानामुत्तरमाह **स .... संक्रामति।** अत्र, **स य एवंवित् अस्माल्लोकात्** प्रेत्येत्यनेन सर्वेषां ब्रह्मविदामर्चिरादिमार्गं उक्तो भवति। **आनन्दमयमात्मानमुपसंक्रामती**ति मुक्तिदशायां जीवब्रह्मणोरुपास्योपासकयोर्भोग्यभोक्तृभावप्रतिपादनात् मुक्तौ ब्रह्मैक्यपक्षो निरस्तो भवति। एत**मन्नमय**मित्यादिषु पञ्चस्वपि पर्यायेषु **एत**च्छब्दः परमात्मपरः । अन्नमयप्राणमयमनोमयविज्ञानमयशब्दाः तच्छरीरकपरमात्मपराः । अत्र **व्यासार्यैः**, "सर्वोऽपि विद्वान् अस्माल्लोकात् प्रेत्य अन्नमयादिसमष्टिव्यष्टिविभूतिकं निरतिशयानन्दं परमात्मानं भोग्यभूतं भोक्ता सन् अनुभवतीति, प्रश्नस्योत्तरमुक्तं भवति" इत्युक्तम् ।

'अभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति' इत्युक्तार्थे साक्षित्वेन श्लोकं पठति **तदपि.... कुतश्चनेति** । वाङ्मनसे [यस्य ?] आनन्दस्येयत्तालक्षणं पारं गन्तुं प्रवृत्ते तदप्राप्यैव निवृत्ते भवतः ।

एतँ ह वाव न तपति । किमहँ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानँ स्पृणुते । उभे ह्येवैष एते आत्मानँ स्पृणुते । य एवं वेद ॥ इत्युपनिषत् [३३]॥१४॥

## इति आनन्दवल्ली ।

---

तादृशाऽऽनन्दगुणकब्रह्मोपासनेन सर्वक्लेशभयात्यन्तिकनिवृत्तिर्भवतीत्यर्थः । तदेवोपपादयति **एतं...मिति** । स्वर्गादिहेतुभूतं सुकृतं नाकार्षम् । नरकादिहेतुभूतं दुष्कृतमकार्षमितीदृशी चिन्ता **एतं** ब्रह्मविदं न बाधते । स्वर्गादिलोकेष्विच्छाया अभावात्; ब्रह्मज्ञानाग्निदग्धपापतया नरकादिभयस्याप्यभावात् । एतादृशं ब्रह्मविद्याप्रयुक्तमाहात्म्यमपि ध्येयमित्याह **स...स्पृणुते** । **एते** एताभ्यां पुण्यपापाभ्यामात्मानं **स्पृणुते** रक्षतीत्यर्थः । पुण्यपापफलानुभवो नास्तीत्युक्तं भवति । **उभे....वेद** । पुनर्वचनं पुण्यपापविधूननध्यानसातत्यतात्पर्यद्योतनाय, अनुवाकसमाप्तिद्योतनाय च ।

---

विद्वान् न बिभेतीत्यनेन अविद्वान् बिभेतीति लभ्यते । तदेव विवृतं प्राक्, अथ तस्य भयं भवतीत्यादिना । एतमिति । अन्यं तु तपतीत्यर्थः । किमित्यस्य किमितीत्यर्थः । इतीदृशीति इयं चिन्ता अमुमुक्षुमुमूर्षुगता । मोक्षोपायं नाकार्षम्, सांसारिकं कर्माकार्षमिति अविद्वन्मुमुक्षुचिन्ताया अपि ग्रहणाय ईदृशीति पदम् । मुक्तविषयतया वाक्ययोजनायां तु तदनन्तरं कृत्याकरणाकृत्यकरणाधीना बाधा नास्तीत्यर्थः स्यात्। एते इत्येतत् विद्वानित्यस्य कर्मेति सुवचम्— अथापि उपरि विद्वानित्येतदनुषङ्गभिया विभक्तेः पञ्चम्यर्थमाह एताभ्यामिति। एते = साधुपापे। 'स्पृ प्रीतिपालनयोः' इति हि पठ्यते। अतो रक्षतीत्यर्थ उक्तः । एवम्—

मुमूर्षोरस्तिकश्चिन्ता नास्तीत्युच्यते एतमिति । पुण्यपापयोः निष्पन्नोपायपुरुषे मुक्ते चाबाधकत्वमुच्यते स य इति । पुण्यं

**इत्युपनिषत्** ।। इत्थं परमरहस्यरूपोपदेशयोग्यायैव वक्तव्यमिति भावः । (इत्थं परमरहस्योपदेशः तादृशोपदेशयोग्यायैव वक्तव्य इति भावः ।)

## (आनन्दमयाधिकरणविचारः)

इदञ्च प्रकरणं समन्वयाध्याये प्रथमपादे चिन्तितम् । 'तस्माद्वा एतस्मात् विज्ञानमयात् अन्योऽन्तर आनन्दमयः' इति श्रुत आनन्दमयो जीव एव । "नित्यं वृद्धशरादिभ्यः" इति वृद्धादानन्दात् विकारार्थे मयट्प्रत्ययस्य विधानेन अविकारे परमात्मनि मयट्प्रत्ययार्थासंभवात्, शारीरः इति शरीरसंबन्धश्रवणात्, 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः मे शुद्ध्यन्ताम्' इति आनन्दमयस्य शोध्यत्वश्रवणात् । नित्यशुद्धस्य परमात्मनः शोध्यत्वासंभवात् आनन्दमयो जीव एवेति प्राप्ते उच्यते **आनन्दमयोऽभ्यासात्** । आनन्दमयः परमात्मा । कुतः ? अभ्यासात् । निरतिशयदशाशिरस्कतया, 'ते ये शतम्, 'ते ये शतम्' इत्यभ्यस्यमानस्यापरिच्छिन्नानन्दस्य परिमितसुखलवभाजि जीवे असंभवात् । **विकारशब्दान्नेति चेन्न प्राचुर्यात्** । विकारवाचिमयट्प्रत्ययश्रवणात्

---

परमीश्वरं प्राप्तस्यास्तु जक्षणादिश्रवणादित्याशंकायाम् उभे इत्यादि । एवञ्च आनन्दमयप्राप्तावपि तत्र जक्षणादिसांसारिकफलकीर्तनात्, परममुक्तिकामस्य तत्रापि, अहं साधु नाकरवम्, ब्रह्मात्मैक्यज्ञानं न समपादयम्, पापमनिष्टसाधनमेवाकरवमिति भीतिः स्यादित्याशंकायामप्युत्तरमुक्तं भवति । सगुणप्राप्तिरेव परममुक्तिः ; जक्षणादिकं न सांसारिकफलमिति भावः । भगवति दुःखस्यास्वीकारात् । मुक्तानाञ्च तद्भोगसाम्यादिति ।

आनन्दमयो जीव एवेति चेत्, नात्र विकारवाची, "मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" इति पूर्वसूत्रात्, "नित्यं वृद्धशरादिभ्यः" इत्यत्र भाषायामित्यनुवृत्तेः विकारावयवयोर्मयट्प्रत्ययस्य भाषाविषयत्वेन छन्दसि विकारार्थे मयटोऽसंभवात्। 'यस्य पर्णमयी' इत्यादौ तु, "द्व्यचश्छन्दसि" इति विधानबलादुपपद्यते। प्रकृते तु आनन्दपदस्य द्व्यच्त्वाभावेन न मयट्प्रत्ययस्य संभवः। अतः **आनन्द**मय इत्यत्र मयट्प्रत्ययः, "तत्प्रकृतवचने मयट्" इति सूत्रविहितः प्राचुर्यार्थमयट्प्रत्यय एव। अतश्चाऽऽनन्दप्रचुरत्वं [च] परमात्मनः संभवतीति परमात्मैवानन्दमयः।

ननु, 'ब्राह्मणप्रचुरो ग्राम' इत्युक्ते तस्मिन् ग्रामे अब्राह्मणानामप्यल्पानां सत्त्वं प्रतीयते। एवमिहापि ब्रह्मण आनन्दप्राचुर्ये कथिते अनानन्दस्यापि लेशतः सत्त्वं प्रतीयत इति दुःखलेशशून्ये परमात्मनि आनन्दप्राचुर्योक्तिरपि न संभवति (संगच्छते) इति चेत्—मैवम्। 'प्रचुरप्रकाशः सविता' इत्यत्र सवितुः प्रकाशप्राचुर्ये कथितेऽपि तद्विरोधितमोऽल्पत्वस्य तत्राप्रतीतेः। न हि सवितरि तमोलेशस्यापि संभावनाऽस्ति। अतस्तत्र यथा सवितरि प्रकाशप्राचुर्यं व्यधिकरणचन्द्रादिगतप्रकाशाल्पत्वापेक्षम्; न तु समानाधिकरणादित्यगततमोऽल्पत्वापेक्षम्—एवं ब्रह्मणि आनन्दप्राचुर्यमपि व्यधिकरणजीवगताऽऽनन्दाल्पत्वापेक्षमेव, न तु समानाधिकरणब्रह्मगतस्वविजातीयदुःखाल्पत्वापेक्षम्। अतो ब्रह्मण्यानन्दप्राचुर्ये नानुपपत्तिः। **तद्धेतुव्यपदेशाच्च** 'एष ह्येवानन्दयाति' इति आनन्दमयस्य जीवानन्दयितृत्वं व्यपदिश्यते। अत आनन्दयितृत्वात् जीवादानन्दयिता अन्य एव। **मान्त्रवर्णिकमेव च गीयते**। 'सत्यं ज्ञानं

अनन्तं ब्रह्म' इति मन्त्रवर्णोदितं ब्रह्मैव, तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिना आकाशादिकरणत्वेन आनन्दमयत्वेन च गीयते। न च सत्यज्ञानत्वादिकं सविकारस्य संकुचितज्ञानस्य[जीवस्य]संभवति। ननु परिशुद्धस्वरूपस्य मन्त्रवर्णोदितसत्यज्ञानत्वादिकं संभवतीति चेत्-- तत्राह **नेतरोऽनुपपत्तेः** । **इतरः** मुक्तोऽपि जीवो नात्र प्रतिपाद्यः । **अनुपपत्तेः** निरुपाधिकविपश्चित्त्वसकलजगत्कारणत्वभयाभयहेतुत्वादीनां प्रकरणप्रतिपादितानां धर्माणां परमात्मव्यतिरिक्तेऽनुपपत्तेः । **भेदव्यपदेशाच्च** । 'तस्माद्वा एतस्मात् विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः' इति **विज्ञानमय**शब्दितबद्धमुक्तात्मकसकलजीवभेदव्यपदेशाच्च न मुक्तात्मा इह प्रतिपाद्यः। **कामाच्च नानुमानापेक्षा** । 'सोऽकामयत बहु स्यां प्रजायेय' इति कामनामात्रादेव आनुमानिकप्रधाननिरपेक्षजगत्स्रष्टृत्वप्रतीतेर्न जीव आनन्दमयः । **अस्मिन्नस्य च तद्योगं शास्ति ।** अस्मिन् आनन्दमये लब्धे सति अस्य जीवस्याऽऽनन्दयोगम्, 'रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति शास्त्रं शास्ति। अतो जीवानन्दहेतुभूतलाभकर्मभूतस्य ब्रह्मणो न जीवाभेद उपपद्यते ।

### (पुच्छब्रह्मवादविमर्शः)

ननु नानन्दमयस्य ब्रह्मत्वमुपपद्यते । 'ब्रह्म पुच्छं प्रतिष्ठा' इति तदाधारभूततया तत्पुच्छत्वेन [च] निर्दिष्टस्यैव ब्रह्मत्वेनाभिधानात् । आनन्दमयस्यैव प्रधानप्रतिपाद्यत्वे, 'असन्नेव स भवति' इति तत्पर्यायोक्तश्लोकोऽपि आनन्दमयविषय एव स्यात् । न च तस्मिन् श्लोके आनन्दमयस्य निर्देशो दृष्टः । तत्र ब्रह्मशब्दस्यैव श्रवणात् । अतः

पुच्छमेव ब्रह्म ; नानन्दमयः इति चेन्न–आनन्दमयस्यैव ब्रह्मणः कयाचन भेदविवक्षया अवयवावयविभावेन निर्देशोपपत्तेः। इतरथा, 'आनन्द आत्मा' इति मध्यमावयवत्वेन निर्दिष्टस्याऽऽनन्दस्यापि पुच्छत्वेन निर्दिष्टब्रह्मणो[ऽपि] भेदः प्रसज्येत। मध्यमावयवपुच्छयोर्भेदावश्यम्भावात्। न चेष्टापत्तिः ; ब्रह्मणः अनानन्दरूपत्वप्रसंगात्। यदि च कयाचन भेदविवक्षया एकस्यैव ब्रह्मणः पुच्छत्वमध्यमाङ्गत्वनिरूपणम्, तर्हि अवयवावयविभावभेदकल्पनमप्यभेदेऽपि संगच्छत इति नानन्दमयब्रह्मणो र्भेदप्रसक्तिः। न चानन्दमयस्य ब्रह्मत्वे, 'आनन्दमया मे शुध्यताम्' इति शोध्यत्वमनुपपन्नमिति वाच्यम् ; शोध्यत्वस्य प्रसाद्यत्वरूपतया भक्तिप्रपत्तिलक्षणोपायवशेन शान्तकोपत्वलक्षणप्रसादविशिष्टत्वरूपेण साध्यत्वसंभवेन शोध्यत्वस्यापि संभवात्। आनन्दमयस्याब्रह्मत्वे च, 'आनन्दमयोऽभ्यासात्' इत्यादिसूत्रगणस्यासंबद्धप्रलापत्वं स्यादित्यास्तां तावत्॥

## (आनन्दाद्यधिकरणविचारः)

तथा गुणोपसंहारपादे यथा विद्यान्तरे श्रुतानां संयद्वामत्वादीनां गुणानां न विद्यान्तरे उपसंहारः— तथा सत्यत्वज्ञानत्वादीनामपि विद्याविशेषप्रकरणश्रुतानां न विद्यान्तरे उपसंहारः, प्रापकाभावादिति पूर्वपक्षे प्राप्ते–उच्यते—**आनन्दादयः प्रधानस्य**। प्रधानस्य गुणिनो ब्रह्मणः सर्वेषु उपासनेषु अभेदात् गुण्यपृथग्भूतानां आनन्दादीनां गुणानामपि सर्वेषु उपासनेषूपसंहारः। नन्वेवं प्रियशिरस्त्वादीनामपि सर्वेषूपासनेषूपसंहारः प्राप्नोति ; तत्राह **प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे**। प्रियशिरस्त्वादीनां ब्रह्मणो बुद्ध्युपारोहाय कल्पितत्वेन ब्रह्मगुणत्वा-

भावात् नोपासनान्तरे तस्य (तेषां?) प्राप्तिः। यदि हि ब्रह्मणः शिरःपक्ष-पुच्छाद्यवयवभेदः स्यात्, तर्हि ब्रह्मणो मध्यप्रदेशे उपचयः, शिरःप्रदेशे अपचय इत्यादिकं पक्षिवत् प्रसज्यते। न चानन्तस्य ब्रह्मणस्तदुपपद्यते। ननु प्रियशिरस्त्वादीनामब्रह्मगुणतया सर्वविद्योपसंहाराप्राप्तावपि संयद्वा-मत्वादीनां ब्रह्मगुणानां सर्वविद्यासु उपसंहारः प्राप्नोति। ब्रह्मगुणानामा-नन्त्येन उपसंहारोऽशक्यश्च। तत्राऽऽह **इतरे त्वर्थसामान्यात्।** **इतरे तु** आनन्दादयः **अर्थसामान्यात्** प्रयोजनसामान्यात् ब्रह्म-स्वरूपावगतिलक्षणप्रयोजनैक्यात् सर्वासु परविद्यासु उपसंहर्तव्याः। ततश्च स्वरूपनिरूपका धर्माः सत्यत्वज्ञानत्वऽऽनन्दत्वादयः सर्वासु परविद्यासु उपसंहर्तव्याः। निरूपितस्वरूपधर्माः सत्यकामत्वादयो न सर्वासु परविद्यासु उपसंहर्तव्याः। ननु प्रियशिरस्त्वादीनां वस्तुतो ब्रह्मधर्मत्वाभावे तदु-पदेशः किमर्थं इत्यत्राह **आध्यानाय प्रयोजनाभावात्। आध्या-नाय** बुद्ध्यारोहणाय प्रियशिरस्त्वादिरुपदिश्यते। प्रयोजनान्तरस्या-भावात्। **आत्मशब्दाच्च।** 'अन्योऽन्तर आत्माऽऽन्दमयः' इति आनन्द-मयस्य आत्मशब्देन निर्देशात्, आत्मनश्च शिरःपक्षपुच्छाद्यसंभवात् प्रियशिरस्त्वादिकं बुध्यारोहाय कल्पितमित्येवावसीयते। ननु, 'अन्योऽ-न्तर आत्मा प्राणमयः' इति आत्मशब्दस्यानात्मस्वपि पूर्वं प्रयुक्तत्वात्, 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति आत्मशब्दस्य आत्मविषयत्वं कथं निश्चीयते? तत्राऽऽह **आत्मगृहीतिरितरवदुत्तरात्।** 'अन्योन्तर आत्माऽऽनन्दमयः' इति **आत्मशब्देन** परमात्मन एव ग्रहणम्। **इतरवत्**= यथा इतरत्र, 'आत्मा वा इदमेक एवाग्र आसीत्। स ईक्षत लोकान्नु

सृजे' इत्यादिषु **आत्मशब्देन** परमात्मन एव ग्रहणम्, तद्वत्। कुत एतत्? **उत्तरात्** 'सोऽकामयत बहु स्यां प्रजायेय' इत्यानन्दमयविषयादुत्तरात् वाक्यात्। **अन्वयादिति चेत्, स्यादवधारणात्**। पूर्वत्र प्राणमयादिष्वनात्मसु **आत्मशब्दान्वयदर्शनात्** नोत्तरान्निश्चेतुं शक्यत इति चेत्—स्यादवधारणात्। स्यादेव निश्चयः। कुतः? **अवधारणात्**=पूर्वत्रापि, 'तस्माद्वा आकाशः संभूतः' इति परमात्मन एव बुद्ध्या अवधारितत्वात्। अन्नमयादन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा, तदनन्तरञ्च प्राणमयादन्तरे मनोमये, ततो विज्ञानमये, तत आनन्दमये प्रक्रान्ता परमात्मबुद्धिः, तदन्तराभावात् तदुत्तराच्च 'सोऽकामयत' इति वाक्यात् प्रतिष्ठितेति उपक्रमेऽपि अपरमात्मनि परमात्मबुध्या **आत्मशब्दान्वय** इति निरवद्यम्। न चाऽऽनन्दमयेऽपि परमात्मत्वबुद्ध्या (अपरमात्मनि परमात्मत्वबुध्या?) **आत्मशब्दप्रयोगो**ऽस्तु इति शङ्क्यम्—तद्वदत्र आत्मान्तरानुपदेशात् बाधकाभावात्॥

**(स्वरूपनिरूपक-निरूपितस्वरूपगतधर्मव्यवस्थाविचारः)**

नन्वितरव्यावृत्तब्रह्मस्वरूपप्रतिपत्तिकाले सत्यत्वज्ञानत्वादीनां न प्रतीयमानत्वनियमः संभवति, अस्थूलत्वादिना वा, अन्तर्यामित्वजगत्कारणत्वलक्ष्मीपतित्वनिरुपाधिकसर्वज्ञत्वादिभिर्वा इतरव्यावृत्तब्रह्मस्वरूपप्रतिपत्तेः संभवात्। अत आनन्दादीनां सत्यकामत्वसंयद्वामत्वादीनाञ्च वैषम्यं दुर्विवेचमिति चेत्—

अत्र केचित्—धर्मा हि द्विविधाः विशेष्यस्वरूपनिष्ठाः, सविशेषणस्वरूपनिष्ठाश्च। ये विशेष्यस्वरूपनिष्ठाः आनन्दत्वादयः, ते

सर्वानुयायिनः । इतरे तु व्यवस्थिताः । जगत्कारणत्वस्य प्रकृतिपुरुष-कालविशिष्टलक्षणतया तदुपयुक्तसार्वज्ञ्यादेरपि तथात्वात् न सर्वानुयायित्वम् । अयं भावः—केचित् धर्माः स्वरूपप्रयुक्ताः सततैकरूपाः । अत एव, "यच्च कालन्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादि-संभूतां तत् वस्तु नृप तच्च किम् । अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते" इत्यादिभिरुपपादिताः परमार्थशब्दवाच्याः सर्वज्ञत्वसर्व-नियन्तृत्वादिविलक्षणाः । ते सर्वविद्यानुयायिनः । संयद्वामत्वसर्वज्ञ-त्वादयस्तु धर्माः धर्मिस्वरूपव्यतिरिक्त-सततैकरूपत्वशून्यप्रकृति-तत्कार्य-जीव-कालेश्वरधर्मभूतज्ञानघटिताः,। न ते एकरूपाः । ईश्वरधर्मभूतज्ञान-स्यापि नानाविधसंकल्पा(ल्पत्वा)दिलक्षणविकारशालितया ऐश्वरतत्क्रियाणामप्यनेकरूपत्वात् तद्घटितधर्माणामपि नैकरूपत्वम्; अत एव न परमार्थशब्दितत्वञ्च । अतस्तेषां न सर्वानुयायित्वम् । ज्ञानत्वा-नन्तत्वसत्यत्वादीनां तु न तथा—इति वैषम्यमाहुः ।

अन्ये तु—'स्वरूपप्रतीत्यन्तर्गता धर्माः सर्वविद्यानुयायिनः । स्वरूपप्रतीत्यन्तर्गतत्वं स्वरूपान्तर्गतत्वमेव । ज्ञानत्वाऽऽनन्दत्वादयस्तु स्वरूपाभिन्नधर्माः । अत एव परैरपि, 'आनन्दो विषयानुभवो नित्य-त्वञ्चेति सन्ति धर्माः । ते चापृथक्त्वेऽपि पृथगिवावभासन्ते' इत्युक्तम् । अतश्च ये स्वरूपाभिन्ना धर्माः, ते सर्वविद्यानुयायिनः । सर्वज्ञत्वसर्व-कर्तृत्वादयस्तु धर्मभूतज्ञानक्रियाद्विरूपाः धर्मिस्वरूपभिन्ना इति न सर्वानु-यायिनः' [इत्याहुः ?] ।

अपरे तु—"स्वरूपोपदेशपरवाक्यप्रतिपन्नानां सर्वविद्यानुयायि-त्वम्; नोपासनार्थोपदिष्टानाम् । न च, 'यः सर्वज्ञः सर्ववित्'

## अथ भृगुवल्ली

भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो

---

इत्यादिषु स्वरूपोपदेशपरवाक्यप्रतिपन्नतया सार्वज्ञ्यादीनामपि सर्वविद्यानुयायित्वप्रसङ्ग इति वाच्यम्; तस्याप्युपासनविध्यश्रवणेऽपि तत्परत्वात्। अत एव, 'संभृतिद्युव्याप्त्यपि चातः' इत्यधिकरणेऽनारभ्य श्रुतानाम् अश्रुतोपासनविधीनामप्युपासनार्थत्वं सिद्धवत्कृत्यैव, 'किं सर्वविद्यानिवेशः, उताल्पायतनव्यतिरिक्तासु' इति चिन्ता प्रवर्तिता। न चैवमुपासनार्थत्वे सार्वज्ञ्यादीनामपारमार्थ्यप्रसङ्ग इति वाच्यम्; बाधकाभावेन सत्यत्वात्। अत एव, 'ध्यानार्थेऽपि गुणोपदेशे तद्गुणक ईश्वरः सिध्यति' इति व्यतिहारसूत्रे **शङ्करभाष्ये**ऽप्युक्तम्। इतरथा परमते सत्यकामत्वादीनां वागादिपादत्वादिवत् व्यावहारिकसत्यत्वस्याप्यभावप्रसङ्गात्" इत्याहुः॥

**इत्यानन्दवल्लीप्रकाशिका॥**

---

### (वरुणात् भृगोर्विद्याग्रहणप्रकारः)

अथ लक्षणान्तरमुखेन ब्रह्म प्रतिपादयितुम्, ब्रह्मप्रतिपत्तौ तपोनिर्धूतकल्मषान्तःकरणस्य हेतुत्वमिति प्रतिपादनाय च भृगुवल्ल्यारभ्यते। **भृगु....ससार**। वरुणसुतो भृगुः पितरं वरुणम्, 'अधीहि भगवो ब्रह्म' इति मन्त्रपूर्वकमुपसन्न इत्यर्थः। **हे भगवन्**! ब्रह्म **अधीहि**

---

अत्र आदौ भृगोर्विद्याग्रहणप्रकारकथनादियं भृगुवल्ली। लक्षणान्तरं पूर्वोक्तसत्यत्वज्ञानत्वाद्यतिरिक्तं जगत्कारणत्वम्। चकारेण अस्या अप्युक्तानन्दमयविद्यैकविषयकत्वेन तदर्थकिञ्चिद्विशद्यकरणमपि समुच्चीयते। मन्त्रेति। अधीहि इत्यादिर्मन्त्र इति शाङ्करेऽपि। प्रोवा-

ब्रह्मेति। तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाच-मिति। तँहोवाच—

---

उपदेशाय स्मर। अधीष्वेति वा, अध्यापयेति वाऽर्थः। **तस्मै.... होवाच**। अन्नं ब्रह्म प्राणो ब्रह्म इत्यादिकं तन्मनश्शोधनायोपदिश्य-- किं सर्वाण्यपि ब्रह्माणि, उत एकम्; तत्रापि किं वा ब्रह्म इति व्याकुलचेतसं पुत्रमालोक्य वक्ष्यमाणमुवाचेत्यर्थः।

---

**चेति। प्रवचनमध्यापनम्। यद्वा प्रकर्षेण वचनम्। एकं हि पृष्टम्; प्रत्युक्तं तु बह्विति। अथवा यत् पृष्टं तन्नोक्तमिति अपृष्टोत्तर-त्वधीरस्माकं मा भूदिति सम्यगेवोक्तं पित्रेति ज्ञापयितुं वचने प्रकर्ष उक्तः। विज्ञानसाधनं ह्यन्नप्राणादि अवश्यमेव वक्तव्यमिति। इत्यादिकमिति। इत्याकारकप्रतीतिकरवाक्यमित्यर्थः। अयं भावः— पुत्रेण ब्रह्मप्रश्ने पिता अन्नादिकमुवाच। साक्षात् पृष्टोत्तरमिदमिति अन्नादिकमेव ब्रह्मेति स आदौ मेने। कथमेतावन्ति ब्रह्माणीति अर्थान्तरं स्यादिति चाचिन्तयदिति। मूले अन्नमित्यादेर्द्वितीयान्त-त्वात् अन्नप्राणादिकं प्रोवाच; इत्येतत् प्रोवाचेति पृथक्पृथगन्वयः। इतिशब्दोऽवधारणे। एतावदेव प्रोवाच=प्रथममुवाच; न तु वास्तवब्रह्मेत्यर्थः। अथ पुत्रस्य स्वोक्तिहृदयानवधारणप्रयुक्तां वैया-कुलीमवलोक्य कारुणिकः स्वयमेव पुनराहेति सूचयितुं तं हेत्युक्तम्। तद् विजिज्ञासस्व। उपरि व्यजानादिति प्रयोगात् तत् विविच्य इदमिति ज्ञातुं प्रयतस्वेत्यर्थः। तद् ब्रह्म=यत् एवं सति विज्ञातं भविष्यति तत् ब्रह्म। एवमुक्ते भृगुर्मेने—अन्नादिकं पूर्वोक्तं सर्वं न ब्रह्म, किंतु यत् उक्तलक्षणलक्ष्यम् तदेव ब्रह्म। अत्र च चक्षुःश्रोत्रादिकं न जगत्कारणत्वशङ्कास्पदम्। एवं सति किमर्थं पित्रा तत् उपन्यस्तम्। नूनं करिष्यमाणे विज्ञाने इदमुपकरणं स्यादिति।**

यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्मेति॥

---

**यतो....तद् ब्रह्मेति।** **जीवन्ति** आत्मभूतेन जीवन्तीत्यर्थः। प्रयन्ति सन्ति भूतानि यत् अभि **संविशन्ति** लीयन्ते। **सम्** इति एकीकरणे। एकीकृततया प्रवेशः **संवेशः**। यद्वा **प्रयन्ती**ति मोक्षः; **अभिसंविशन्तीति** प्रलयः। अस्मिन् पक्षे यच्छब्दस्याऽऽवृत्तिः। 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति' इत्यत्र प्रतिवाक्यं 'तद् ब्रह्म' इत्यनुक्तेः न जगज्जन्मादि प्रत्येकं लक्षणम्।

न च जन्मादिसमुदायस्य लक्षणत्वे व्यावर्त्याभावेन निष्प्रयोजनत्वम्; लक्ष्याकारविपरीतशङ्कानिवारणक्षमत्वेन सप्रयोजनत्वात्। उत्पत्तिकारणत्वमात्रे अभिहिते हि तस्य स्थितिप्रलयकारणीभूतवस्त्वन्तरशङ्कया

---

एवञ्च सर्वमपीदमुपकरणं स्यात्। अतः श्रोत्रेण श्रुतं वाचाऽधीत्य गृहीतं प्राणायामादिशोधितशरीरादिकः सन् मनसा विविच्य ज्ञातुं यतेयेति। ततः स तपोऽतप्यत। तप—आलोचने। विज्ञानसम्पत्त्युपयोगि आलोचनमिश्रं सर्वमकरोत्। एवं च पित्रा तपः कार्यमित्यनुक्तत्वात् किमर्थं तत् कृतमिति न शङ्क्यम्; अन्नप्राणाद्युपदेशस्य तदर्थत्वात्। केनोपनिषदुपक्रमे च प्राणचक्षुःश्रोत्रमनोवाचां निर्देशोऽत एव कृतः। बृहदारण्यके (3—4) च, "वाग्जाया, प्राणः प्रजा, चक्षुर्मानुषं वित्तम्, श्रोत्रं दैवम्, आत्मैवास्य कर्म" इति। तत्र आत्मपदेन गृहीतं शरीरमत्र अन्नपदेन विवक्षितम्। अन्नरसमयानतिभिन्नत्वादन्नस्य। एवमेतदुपकरणपरिगणनं ब्रह्मविद्याप्रकरणे तत्र तत्रोपनिषदि द्रष्टव्यम्। तदयमर्थोऽवधाय ग्राह्यः।

जगज्जन्ममात्रकारणस्य ब्रह्मणो निरतिशयबृहत्त्वं न सिध्येत् । तथा लयकारणत्वाभिधाने आत्यन्तिकप्रलयरूपमोक्षप्रदान्तर (प्रदपुरुषान्तर ?) सद्भावशङ्कया मोक्षप्रदत्वप्राप्यत्वानुगुणगुणैः बृहत्त्वं न सिध्येत् । अतो जगज्जन्मकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेऽपि जन्मादि-समुदायकारणत्वस्यैव बृहत्त्वातिशयौपयिकत्वात् सृष्टिस्थितिप्रलयसमुदाय-कारणत्वं लक्षणमिति ज्ञापितम् ।

**(वाक्यस्य कारणत्वलक्षणविधानपरत्वम्)**

"**यतः येन यदिति** यद्वृत्तयोगात् कारणमनूद्यते । **तद् ब्रह्मे**ति कारणस्य ब्रह्मत्वं विधीयते । तेन कारणत्वस्य ब्रह्मलक्षणत्वं सिद्धं भवति । **तद् विजिज्ञासस्वे**ति न विचारस्य उपासनस्य वा विधिः । विचारात्मकज्ञानं रागप्राप्तत्वात् न विधेयम् । उपासनात्मकस्य तु ज्ञानस्य 'ब्रह्मविदाप्नोति' इति प्राकरणिकवाक्यान्तरसिद्धत्वात्, उपक्रमे 'अधीहि भगवो ब्रह्म' इति प्रश्नस्य तत्त्वपरत्वेनोपायविषयत्वाभावाच्च नोपासनात्मकं ज्ञानमिह विधेयम् । अतः **विजिज्ञासस्वे**ति उपदि-श्यमानार्थे सावधानत्वार्थं संदेहनिवृत्त्यर्थं च (वा) उक्तम् । या गन्ध-वती, तां पृथिवीं विद्धि इतिवत् । ततः कारणत्वस्य ब्रह्मलक्षणत्वमेवास्य वाक्यस्य विधेयम् । यथा, 'यत्र सारसः, स देवदत्तकेदार' इत्युक्ते सारस-संबन्धस्य देवदत्तकेदारलक्षणत्वमुक्तं स्यात्, तद्वत्" इति **व्यासार्यै**रुक्तम् ।

**(कारणत्वरूप-लक्षणविशेषकथनफलम्)**

ननु ईश्वरस्य लिलक्षयिषितत्वे तदसाधारणसर्वज्ञत्वादिप्रति-पादकसत्यज्ञानादिवाक्यानादरेण जन्मादिकारणत्वेन किमर्थं लक्ष्यत इति

चेत्—उच्यते । गुणैः स्वरूपस्य लक्ष्यमाणत्वे तदपेक्षया बहिःष्ठायाः विभूतेरुपास्यान्तर्भावो न प्रतीयेत । सर्गादिविषयभूतया तु विभूत्या स्वरूपे लक्ष्यमाणे विभूतेः, सर्गाद्यौपयिकसर्वज्ञत्वादिगुणानामपि जिज्ञास्यान्तर्भावः सिध्यति । विभूतेश्च जिज्ञास्यान्तर्भावः, 'उपासात्रैविध्यात्' इति सूत्रितः । नन्वेवमपि कृत्स्नविभूतेर्जिज्ञास्यान्तर्भावो न सिध्यति, त्रिपाद्विभूतेः जन्माद्यस्पृष्टत्वादिति चेन्न—**यत् प्रयन्ती**ति प्रलयवाक्यस्थयच्छब्देन मुक्तप्राप्यस्य ब्रह्मणो विवक्षितत्वात् नित्यविभूतिविशिष्टस्यैव मुक्तप्राप्यत्वात् नित्यविभूतेरपि जिज्ञास्यत्वसिद्धिः ।

एवञ्च जगत्कारणत्वलक्षणं विशिष्टनिष्ठम् ; सत्यज्ञानादित्वलक्षणं तु विशेष्यनिष्ठमिति भिदा । एवमेव **व्यासार्यै**रुक्तम् ।

## (हेतुपञ्चमीसमर्थनम्)

अत्र **यत** इति पञ्चमी हेत्वर्थिका । यच्छब्दस्यानुवादरूपत्वात् अनुवादस्य च प्रापकवाक्यसापेक्षतया तद्विरुद्धार्थपरत्वासंभवात्, प्रापकवाक्येषु, 'एकमेवाद्वितीयम्, तदैक्षत बहु स्याम्', 'तत् तेजोऽसृजत' इति निमित्तत्वोपादानत्वयोः प्रतिपादनात् तदनुवादिनि लक्षणवाक्ये **यत** इति पदमुभयविषयकमिति **व्यासार्यै**रुक्तम् । न च हेतौ पञ्चमी नानुशिष्टेति शङ्क्यम्—'अइउण्' इति सूत्रे 'विवारभेदात्' इति भाष्यनिर्देशेन, 'विभाषा गुणेऽस्त्रियाम्' इत्यत्र 'विभाषा' इति योगविभागस्याऽऽश्रिततया तत एव हेतुपञ्चम्युपपत्तेरिति द्रष्टव्यम् ।

## (जन्माद्यधिकरणोपन्यासः)

इदञ्च चिन्तितम्, 'जन्माद्यस्य यतः' इति सूत्रे ।

'यतो वा इमानि भूतानि जायन्ते; येन जातानि जीवन्ति' इत्यत्र जगज्जन्मादयो न विशेषणत्वेन ब्रह्म लक्षयितुं शक्नुवन्ति। विशेषणानां व्यावर्तकस्वभावत्वेन व्यावर्तकबहुत्वे व्यावर्त्यबहुत्वावश्यम्भावेन विशेषणानां बहुत्वे विशेष्यनानात्वप्रसङ्गात्। 'खण्डः, मुण्डः, पूर्णशृङ्गो गौः' इत्यत्र विशेषणबहुत्वेन विशेष्यबहुत्वस्य दर्शनात्। न च, 'देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाणः' इत्यादौ विशेषणबहुत्वेऽपि विशेष्यैक्यं दृष्टमिति वाच्यम्— प्रत्यक्षावगतविशेष्यैक्यबलात् तत्र विशेष्यभेदत्यागेऽपि प्रत्यक्षाद्यप्रतिपन्ने अलौकिके ब्रह्मणि उत्सर्गप्राप्तस्य विशेषणभेदप्रयुक्तविशेष्यभेदस्य त्यागायोगात्॥ नाप्युपलक्षणतया जन्मादीनां व्यावर्तकत्वम्; 'यत्रायं सारसः, स देवदत्तकेदारः' इत्यादौ केदारत्वादिना केनचित् आकारेण पूर्वप्रतिपन्न एव केदारो देवदत्तकेदारत्वरूपधर्मान्तरवत्तया सारसेनोपलक्ष्यते। इह तु जगज्जन्मादिभिर्हि(?) निरतिशयबृहत्त्वरूपब्रह्मत्वे उपलक्षणीये उपलक्ष्याकारसमानाधिकरणः केदारत्वस्थानीयः पूर्वप्रतिपन्नः कश्चन आकारो वक्तव्यः। न चेह ब्रह्मणि पूर्वप्रतिपन्नाकारः कश्चिदस्ति। न च, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्यप्रतिपन्नसत्यत्वज्ञानत्वादीनां पूर्वप्रतिपन्नाकारत्वसंभवः। सत्यत्वादिष्वपि विशेषणत्वोपलक्षणत्वविकल्पदौस्स्थ्येन तेषामपि लक्षणत्वसंभवात् इति प्राप्ते; उच्यते। **जन्माद्यस्य यतः।** **अस्य** अचिन्त्यविविधविचित्ररचनस्य ब्रह्मादिस्तम्भपर्यन्तक्षेत्रज्ञमिश्रितस्य जगतो जन्मस्थितिलया यतो भवन्ति, तद् ब्रह्मेति सूत्रार्थः। ततश्च जगज्जन्मादिहेतुत्वं ब्रह्मलक्षणं भवितुमर्हतीति सूत्रकारतात्पर्यम्।

अयं भावः—यद्यपि विशेषणानां व्यावर्तकत्वं स्वभावः। अथापि, 'विशेषणं स्वविरुद्धधर्माश्रयात् स्वाश्रयं व्यवच्छिनत्ति' इत्येव। न तु स्वाविरुद्धधर्माश्रयादपि स्वाश्रयं व्यावर्तयति[इति?]। 'नीलमुत्पलम्' इत्यादौ नैल्यस्य शौक्ल्याश्रयव्यावर्तकत्ववत् दैर्घ्याश्रयव्यावर्तकत्वाभावात्। प्रकृते च जन्महेतुत्वस्थितिहेतुत्वादीनां परस्परविरुद्धत्वाभावेन व्यक्तिबहुत्वस्याप्रसक्तिः। 'खण्डो मुण्डः' इत्यादौ तु खण्डत्वादीनां परस्परविरुद्धत्वात् स्वाश्रयभेदकत्वम्। उपलक्षणत्वपक्षेऽपि न दोषः। उपलक्षणभूतात् जगज्जन्मादिहेतुत्वात् उपलक्ष्याच्च निरतिशयबृहत्त्वात् अन्यस्य बृहत्त्वसामान्यस्य पूर्वप्रतिपन्नाकारस्य संभवेन उपलक्षणत्वपक्षेऽपि दोषाभावात्॥

## (विशेषणत्वोपलक्षणत्वसंकरविचारः)

ननु परस्परविरुद्धयोः विशेषणत्वोपलक्षणत्वपक्षयोरुभयोरपि **भाष्ये** कथमभ्युपगम इति चेत्—

अत्र केचित्—विशिष्टनिष्ठं जगत्कारणत्वम्। विशेष्यनिष्ठं तु सत्यत्वादिकमिति **व्यासार्यै**स्तत्रतत्रोक्तम्। **भाष्ये** च जगत्कारणत्वोपलक्षितस्वरूपस्येति बहुशो व्यवहृतत्वात् जगत्कारणत्वं चिदचिद्विशिष्टस्य ब्रह्मणो विशेषणभूतं लक्षणम्। शुद्धस्वरूपस्य तूपलक्षणम्; जगत्कारणत्वस्य शुद्धस्वरूपनिष्ठत्वाभावात्। तदभिप्रायेणैव विशेषणोपलक्षणत्वाभ्युपगमः। न च शुद्धस्वरूपानिष्ठस्य जगत्कारणत्वस्य कथं शुद्धस्वरूपोपलक्षणत्वमिति वाच्यम्; तटस्थस्यापि शाखाग्रस्य चन्द्रोपलक्षणत्वस्य दर्शनात्—इति वदन्ति।

अन्ये तु विशेष्यनिष्ठत्वानिष्ठत्वाभ्यामेव विशेषणोपलक्षणभेद-

स तपोऽतप्यत। स तपस्तप्त्वा [३४]। अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति।

---

माश्रित्य, 'जगत्कारणत्वस्य ब्रह्मनिष्ठतया विशेषणत्वम्; प्रपञ्चगतजन्मादेस्तु ब्रह्मनिष्ठत्वाभावेनोपलक्षणत्वम्' इति वर्णयन्ति।

अपरे तु, 'यतो वा इमानि' इति वाक्येन जन्मादिविशिष्टे ब्रह्मत्वं बोध्यते, उत तदुपलक्षिते। नाद्यः, जन्मविशिष्टे ब्रह्मत्वबोधने विशेषणभूतजन्मादावपि ब्रह्मत्वप्रसङ्गः। उपलक्षणत्वपक्षे आकारान्तराप्रतिपत्तिदोषः' इति पूर्वपक्षिणो भावः। 'तन्न। न विधेयान्वयित्वं विशेषणत्वम्; येन जन्मादेर्विशेषणत्वे(त्वेन) विधेयभूतब्रह्मत्वान्वयोऽपि प्रसज्येत। अपि तु यदन्विततया ज्ञाते इतरान्वयधीः, तत् तत्र विशेषणम्। प्रकृते च जगज्जन्मादिहेतुत्वान्वयितया ज्ञाते ब्रह्मणि ब्रह्मत्वान्वयधीरिति विशेषणत्वे नानुपपत्तिः। यदि विधेयान्वय्येव विशेषणमित्याग्रहः, तर्हि उपलक्षणपक्षो वाऽस्तु; बृहत्त्वसामान्यलक्षणतृतीयाकारप्रतिपत्तेः संभवात्' इति सिद्धान्तिनोऽभिप्रायः। न तु विशेषणत्वोपलक्षणत्वयोः समुच्चय इति [वदन्ति?]।

इतरे तु, 'तद्विजिज्ञासस्वेत्यत्रोपासनं विधीयते। तत्र केषुचिदुपासनेषु जगत्कारणत्वमनुसंधेयम्। तत्र ज्ञाप्यान्तर्गतत्वात् जगत्कारणत्वं विशेषणम्। यत्र तु नानुसंधेयम्, तत्रोपलक्षणम्; ज्ञाप्यानन्तर्गतत्वात्' इति, 'इतरे त्वर्थसामान्यात्' इति सूत्रे व्यासार्योक्तेः तदनुसारेण विशेषणत्वोपलक्षणत्वसमुच्चयो(योऽपि) नानुपपन्न इति वदन्ति।

अतो जगज्जन्मादिहेतुत्वं ब्रह्मलक्षणमिति स्थितम्। प्रकृतमनुसरामः।

तद् विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तँ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा [३५]। प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति।

तद् विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तँ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स

---

(पुनःपुनरुपसरणम्)

**स तपो...विशन्तीति।** शृङ्गग्राहिकया इदं ब्रह्मेत्युपदेशं परित्यज्य लक्षणोपदेशपूर्वकम्, 'विजिज्ञासस्व' इत्युपदिशतो ह्ययं भावः— 'संपादनीयं ब्रह्मज्ञानसाधनं संपाद्य एतल्लक्षणलक्षितं ब्रह्म विजानीहि' इति। एतमर्थं निश्चित्य इन्द्रियनिग्रहादिलक्षणस्य तपसो ब्रह्मविद्यायाम् अन्तरङ्गोपायत्वात् तदेव साधनमिति ज्ञात्वा तपः कृत्वा, प्रथमतः अन्नस्य सर्वभूतोत्पत्त्यादिकारणत्वात्, अन्नं ब्रह्मेति ज्ञातवानित्यर्थः।

**तद्....ब्रह्मेति।** अन्नं ब्रह्मेति ज्ञात्वा उत्पत्तिमत्त्वादिना अन्नस्य ब्रह्मत्वे अपरितुष्यन् पुनरपि पितुः समीपमागत्य, 'अधीहि भगवः' इति मन्त्रमुच्चारितवानित्यर्थः। **तं होवाच....तपो ब्रह्मेति।** 'पूर्ववदेव तपः

---

शृङ्गग्राहिका = शृङ्गं गृहीत्वा इयं गौरिति प्रदर्शनवत् साक्षात् प्रदर्शनम्; उपलक्षणलक्षणं विहाय उपलक्ष्याकारत एव धर्मिबोधनम्।

उत्पत्तिमत्त्वादिनेति। प्रत्यक्षपरिकलितोत्पत्तिमत्त्वादिनेत्यर्थः।

तपोऽतप्यत । स तपस्तप्त्वा [३६] । मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति ।

तद् विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा [३७] । विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति ।

तद् विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा [३८] । आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ।

---

समाचर । तप एव ब्रह्मविद्यासाधनम् । तस्मात् तपसा ब्रह्म विजिज्ञासस्व' इत्युक्तवानित्यर्थः । **स तपस्तप्त्वा प्राणो ब्रह्मेति...आनन्दं प्रयन्त्यभिसंविशन्तीति** । स्पष्टोऽर्थः ।

---

तेन प्राणव्यावृत्तिः । कारणत्वलक्षणमन्नेऽतिव्याप्तमिति लक्षणान्तर-जिज्ञासयोपसृतं सुतम् , इदमेव निर्दिष्टमिति बोधयितुं—तपसा ब्रह्मेति। यदर्थं प्राक् अन्नप्राणचक्षुरादिकं उपदिष्टम् , तस्य त्वयैवाऽऽलोचनेन तपःकरणादिति भावः । यद्येवमनुक्त्वा ब्रह्म प्रकारान्तरेण वदेत् ,

सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता ॥ य एवं वेद प्रतितिष्ठति । अन्नवान् अन्नादो भवति । महान् भवति प्रजया

---

(विद्याफलम्)

**सैषा...प्रतिष्ठिता ।** भृगवे वरुणेन प्रोक्ता विद्या अन्नमया- दिकमतिक्रम्य, 'परमे व्योमन्' इति निर्दिष्टे **परम**व्योमशब्दिते

---

कारणत्वस्योपलक्षणत्वं भज्येत । कारणत्वमप्यन्नादिव्यावृत्तं विलक्षणं न निष्कृष्येतेति तन्निष्कर्षणायैवैवमुक्तः। एवंभूतभृगुवरुणसंवादज्ञानात् पूर्ववल्ल्याम् अन्नादावुक्तं ब्रह्मसाम्यापादकं कारणत्वमौपचारिकमिति विशदीकृतं भवति । विज्ञानानन्दशब्दौ विज्ञानमयानन्दमयपरौ पूर्वोत्तरसंदर्भात् । अन्नप्राणादिकं उत्तरोत्तरं सूक्ष्मम् , चैतन्यं प्रति अधिकसम्बन्धशालि च क्रमेण कारणत्वेन गृहीतम् । अन्नं विनाऽपि प्राणनमात्रेण जीवनं कचिदिति प्राणादरः । ज्ञानशक्त्यसंबन्धिनो न कारणत्वं मुख्यमिति मनआदरः । मनसः करणमात्रत्वात् ज्ञानवतः कर्तुरेव मुख्यं कारणत्वमिति विज्ञानग्रहणम् । जीवानां दुःखिप्रायत्वात् स्वानर्थकारित्वस्य स्वस्मिन् अयोगात् यस्य सृष्ट्यादिव्यापाराः सर्वे सर्वात्मना आनन्दायैव भवेयुः, स एव कारणं भवितुमर्हतीति आनन्दमय एव कारणमिति अन्ते निष्कृष्टम् । एवमानन्दोल्लिखस्याऽऽ- वश्यकत्वादेव नारायणादित्यनुक्त्वा आनन्दादित्युक्तम् । अत एव धर्मभूतानन्दविवक्षा आनन्दो ब्रह्मेतीत्यावश्यकार्या । न हि स्वयं सृष्ट्वा स्वयं दुःख्येत् । अतो दुःखाकरविज्ञानमयविलक्षणः सृष्ट्या सतुष्यन् पुरुषोऽन्य इति भावः । परमे व्योमन्नित्यनेन पूर्वं परमे व्योम्नि सर्वकामविशिष्टब्रह्म यदुक्तम् , स एवायमानन्द इति तस्य उभयविभूतेः कारणत्वानन्दमयत्वपूर्तिरिति च ज्ञाप्यते । प्रतितिष्ठति =

पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या [३९] ॥

अन्नं न निन्द्यात् । तद् व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवान् अन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ [४०]

अन्नं न परिचक्षीत । तद् व्रतम् । आपो वा अन्नम् । ज्योति-

---

परमात्मनि प्रतिष्ठिता । न तु तमप्यतिक्रम्य ततोऽन्यत्र गतेत्यर्थः । तद्वेदनस्य फलमाह **स य एवं....कीर्त्या** । स्पष्टोऽर्थः ॥

**(विद्याङ्गव्रतानि)**

एतद्विद्याङ्गं व्रतमाह **अन्नं न निन्द्यात्, तद्व्रतम्** । प्राणशरीरयोः, अप्तेजसोः पृथिव्याकाशयोः अन्नान्नादत्वदृष्टिम्, तयोः परस्परप्रतिष्ठितत्वदृष्टिम्, परस्परप्रतिष्ठिततया परम्परया स्वप्रतिष्ठितत्वदृष्टिं तदङ्गव्रतविशेषम्, तत्फलञ्चाह **प्राणो वा अन्नम्...अन्नं न परि-**

---

**प्रतिष्ठां लभते, आनन्दातिरिक्तस्याकारणत्वं दृढमध्यवस्यन्निति । नन्वियमानन्दमयविद्यैव । तत्, 'प्रतितिष्ठति, अन्नवानन्नादः' इति फलान्तरं कथमुच्यत इति चेत्—इदं भृगुकृतविद्याग्रहणप्रकारविज्ञानपूर्वकप्रतिष्ठितत्ववेदनफलमस्तु । यद्वा एतदङ्गव्रतविशेषाश्रितगुणफलमिदमिति । तदुपपादनार्थं अन्नं न निन्द्यादित्यारम्भः । तद्व्रतम् । 'नाहमन्नं निन्दिष्यामि' इति संकल्पो व्रतम् । एवं संकल्पवताऽनुष्ठेयः प्रतिष्ठितत्ववेदनप्रकारः काम्य उपर्युच्यते । तत्फलमन्नवत्त्वादि त्रिविधव्रताश्रितवेदनविशेषरूपगुणफलरूपम् ।**

रन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवान् अन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥ [४१]

अन्नं बहुकुर्वीत। तद् व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवान् अन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥ [४२]

न कञ्चन वसतौ प्रत्याचक्षीत। तद् व्रतम्। तस्माद् यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद्वै

---

**चक्षीत....अन्नं बहु कुर्वीत....महान् कीर्त्या। न परिचक्षीत।** पात्रस्थमन्नं न निराकुर्यादित्यर्थः। **बहु कुर्वीत** अतिथ्यभ्यागतस्वजनपर्याप्तं कुर्यादित्यर्थः। यद्वा **बहुकुर्वीत** बहुमन्वीतेत्यर्थः। अन्ने बहुमतिं कुर्यादित्यर्थः। **न कञ्चन...व्रतम्**। स्वगृहे रात्र्यादौ भोजनार्थमागतं कमपि नरं न निराकुर्यादित्यर्थः। **तस्मात्....प्राप्नुयात्।** भोजनार्थमागतानां पुरुषाणामप्रत्याख्यानस्यावश्यकत्वात् निषिद्धेनापि येन केनचिन्मार्गेण बह्वन्नं संपादयेदित्यर्थः। **अराधि....आचक्षते। अस्मै**

---

चतुर्थं व्रतमुच्यते न कञ्चनेति। प्राप्नुयादिति। उक्तव्रतवता प्राप्तव्यमित्यर्थः। एतदपौनरुक्त्यायैव बहुकुर्वीतेत्यत्र द्वितीयार्थ-

मुखतोऽन्नँ राद्धम् । मुखतोऽस्मा अन्नँ राध्यते । एतद्वै मध्यतो-ऽन्नँराद्धम् । मध्यतोऽस्मा अन्नँ राध्यते । एतद्वा अन्ततोऽन्नँ राद्धम् । अन्ततोऽस्मा अन्नँ राध्यते । य एवं वेद ।

क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीस्समाज्ञाः ।

---

उपासकाय अन्नम् **अराधि** सिद्धम् । उपासकार्थमेव ह्यन्नस्य निष्पत्तिः । अतस्तदर्थमेव निष्पन्नत्वादन्नानाम्, तेषां येन केनाप्युपायेन आर्जने न दोष इति भावः । **एतद्वै....राध्यते** । आदिमध्यान्तप्रदेशेषु अन्नं यदेतत् सिद्धम्, सर्वावयवयुक्तमप्यन्नमस्मै उपासकाय सिद्धम्; तदर्थमेवोत्पन्नमिति हि सन्त आचक्षत इत्यर्थः । **य एवं वेद, [स] यया कया च विधया बह्वन्नं प्राप्नुयादि**ति पूर्वेण संबन्धः ।

**(विद्याश्रितोपासनान्तराणि)**

**क्षेम इति वाचि** । क्षेमसाधनत्वात् वाचः, क्षेमत्वबुद्धिस्तत्र कार्येत्यर्थः । एवमुत्तरत्रापि । **विमुक्तिः** विसर्ग इत्यर्थः । **इति मानुषीः समाज्ञाः** । अध्यात्मम् एता उपासना उक्ता इत्यर्थः । **अथ दैवीः** ।

---

वर्णनम् । एतद्वै इत्यादि । मुखमध्यान्तेषु सिद्धमन्नं प्रत्यक्षमिव निर्दिश्योपपाद्यते—इदं किल मुखतः सिद्धमन्नम् । इदं तु एतदुपास-कार्थमेव सिध्यतीत्येवम् । य एवं वेद इत्यस्य उपर्यन्वयेपि न दोषः । य एवं वेद स उपासीतेति योजनात् । क्षेम इतीत्यादौ सर्वत्र वक्ष्यमाणस्य उपासीतेति पदस्यापकर्षात् । अथापि अन्ते, 'य एवं वेदे'त्युक्तिः श्रुतिशैलीति पूर्वान्वय आहृतः। अन्यथा, 'स य एवं वेद'

अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु। प्रजातिरमृतमानन्द इत्युपस्थे । [1]सर्वमित्याकाशे।

तत् प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद् ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद् ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते

---

दैविकीः उपासना वक्ष्यामीत्यर्थः । **प्रजाति...उपस्थे** । एतत्तु आध्यात्मिकोपासने संगतम् ; पाठक्रमादर्थक्रमस्य बलवत्त्वादिति द्रष्टव्यम् ।

**तत् प्रतिष्ठेति...भ्रातृव्याः** । आकाशस्य प्रतिष्ठात्वादिगुणयुक्ततयोपासने तत्क्रतुन्यायेन प्रतिष्ठादिकं भवतीत्यर्थः । **ब्रह्मवान्** ब्रह्मत्ववान्—बृहत्त्ववानित्यर्थः । **नम्यन्ते** प्राप्यन्त इत्यर्थः । परितो म्रियन्ते अस्मिन्निति **परिमरः** । सार्वत्रिकमरणस्याप्यवकाशतया आश्रय

---

इति तच्छब्दोपि स्यात् । क्षेम इतीत्यादौ समाज्ञा इत्यस्यैव वान्वयः । मानुषीर्दैवीः इत्यनयोः द्वितीयान्तत्वात् उचितक्रियाध्याहारः । तिस्र आहुतीर्जुहोतीतिवत्, इमाः समाज्ञा उपासीतेत्यन्वयो भवति चेत्—कामं भवतु ।

तत् प्रतिष्ठेत्यत्र तच्छब्द आकाशपरः । आकाशपदस्य क्लीबेऽपि साधुत्वात् । आकाशे विहितं सर्वमित्येतद्वा तत्पदवाच्यम् । तदा प्रतिष्ठाशब्दः प्रतिष्ठितपरः ; पूर्वमाधारपरः । भाष्यं प्रथमपक्षाभिप्रायेणेति उपर्यपि आकाशस्येत्युक्त्या ज्ञायते । अतः प्रतिष्ठात्वादीति पाठ उपलब्धः सम्यक् । तच्छब्दस्याऽऽकाशपरत्वमेव शांकरा-

---

1 सर्वात्मकं ब्रह्म हृदयाकाशे इति युक्तम् ।

द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः ॥

---

इत्यर्थः । एवमाकाशस्य ब्रह्मशेषत्वेन परिमरत्वेन (त्वेन च) उपासने एनमुपासकं परितो द्विषन्तो म्रियन्त इत्यर्थः । पर्येणमिति णत्वं छान्दसम् । तदेव (तदेतत्) व्याचष्टे **परि येऽप्रिया भ्रातृव्याः।** अप्रियाः **भ्रातृव्याः** शत्रवः परितो वर्तमानाः म्रियन्त इत्यर्थः ।

---

भिमतमपि । प्रायः श्रुतौ आकाशपदस्य पुलिङ्गप्रयोगात्, अत्र पूर्वं तथैव प्रयुक्तत्वाच्चान्यदेव तदित्युक्तावपि न ब्रह्म दूरस्थं तत्पदार्थः, किंतु सर्वमित्युक्तं वा प्रकृतमन्नमेव वा । ब्रह्मणः परिमर इति । ऐतरेयब्राह्मणे अन्तिमखण्डे, 'ब्रह्मणः परिमरः' इति किञ्चित् कर्मोक्तम्। तच्च विद्युद्वृष्टिचन्द्रम आदित्याग्नीनां मध्ये पूर्वपूर्वस्य उत्तरोत्तरस्मिन् योऽनुप्रवेशः—लयः, यश्च शिष्टस्याग्नेर्वायौ ब्रह्मशब्दविवक्षिते लयः, तद्भावनारूपम् । तत्र जप्तव्या मन्त्रा अपि सन्ति, यथा विद्युदादि वृष्ट्यादौ लीयते तथा द्विषन्तो नष्टा भवन्तु, तस्य पुनरुत्पत्तावपि इमे द्विषन्तो मा जायन्तामिति प्रार्थनारूपाः । अत्र ब्रह्मपदं वायुपरम् । तथा च श्रुतिः, "अथातो ब्रह्मणः परिमरः । यो ह वै ब्रह्मणः परिमरं वेद, पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते । विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निः" इत्यादिः; "स एष ब्रह्मणः परिमरः" इत्येवम्। तथा ब्रह्मणः परिमरत्वेन य उपास्ते प्रकृतं तच्छब्दवाच्यम्, तस्य तदेव फलमत्रोच्यते। एवमन्विष्य गृहीतोऽर्थः शाङ्करभाष्येऽपि दृश्यत एव । अथापि सम्भ्रमादत्रार्थान्तरमुक्तम् । यतः शाङ्करभाष्येऽपि श्रुत्यन्तरप्रसिद्धं दर्शयत्यपि परिमरशब्देन विद्युदाद्यग्न्यन्तविलयस्थानं वायुं, ब्रह्मशब्देन परं च गृहीत्वा, पश्चात् परिमरशब्देनाऽऽकाशमपि विवक्षित्वा श्रुत्यर्थोऽन्यथाकृतः ; यतश्च भास्करविद्यारण्याभ्यां श्रुत्यन्तरप्रसिद्धिमस्पृष्ट्वैव यथेच्छमर्थो वर्णित इति ।

अत्र क्षेम इतीत्याद्युक्तोपासनानां फलं यथायथं कल्प्यमिति

स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवं-
वित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं
प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं
विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य[1] ।
इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्। एतत् साम गायन् आस्ते-
[2]हा (३) वु हा (३) वु हा (३) वु । अहमन्नमहमन्नमहमन्नम् ।

---

(आनन्दमयविद्याफलप्रपञ्चः)

स यश्चायं....एतमानन्दमयमात्मानमुपसंक्रम्य । पूर्व-
वदर्थः । इमान्....आस्ते । एतत् वक्ष्यमाणमित्यर्थः । शिष्टं स्पष्टम् ।
'हा ३वु हा ३वु हा३ वु' इति स्तोभाक्षराणि एतानि ।

---

विद्यारण्यः। अस्तु वा पूर्वोक्तव्रतवत् सर्वं विद्याङ्गमेवम् ; पृथक्फला-
श्रवणात् । यद्वा प्रतिष्ठात्वाद्युपासनानां फलवतां शेषभूतम् ।

'ब्रह्मविदाप्नोति परम्' इत्युक्तस्य उपास्यस्य ब्रह्मणः, प्राप्यस्य परस्य
चैक्यज्ञापनमभिसंधाय मार्गमध्यस्थादित्यपुरुषैक्यं स यश्चायमि-
त्युच्यत इति पूर्वमेवोक्तम् । अस्तु वा विग्रहविशेषज्ञापनार्थं तत् ।
उपासितस्यैक्यस्य परवासुदेवे ज्ञापनार्थमेव एतमन्नमयमात्मान-
मित्याद्युपासिताकारोक्तिस्त्विति ।

---

1 उपसंक्रम्येति। उपसंक्रमः प्रागेवोक्तः। सर्वलोकानुभवः पुण्यपाप-
प्रतिभटत्वादि चात्रोच्यते । जीवाजीवयोर्हेयताबुद्धिः प्रागासीत् ।
सर्वस्य भगवद्विभूतितया दर्शने, हा, हो इति प्रमोदते । जगद्व्यापारः
सर्वोऽपि श्लोक्यत्वेन दृश्यते । 'सर्गादौ कर्मफलमेव ददाति, अनादि-
त्वात् कर्मण इति वैषम्याभावोऽनुसंधीयते । तथा नित्यसूर्याधि-
ष्ठितं मोक्षप्रदत्वञ्च ।

अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः । अहँ श्लोककृदहँ श्लोककृदहँ श्लोककृत् । अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्यो अमृतस्य ना३भा इ । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवाम् ॥ १५ ॥

सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् ॥

---

**अहमन्नम्...अन्नादः । अत्राहंशब्दः** परमात्मपर्यन्तः । भोग्यभोक्तृवाच्यन्नान्नादशब्दावपि तत्पर्यन्तौ । **श्लोककृत् ।** श्लोकयन्त इति श्लोकाः; श्लाघनीयजगद्रक्षणादिकृदित्यर्थः । **अहमस्मि प्रथमजा ऋता३स्य । ऋतस्य** कर्मणः । **प्रथमजाः** सर्गाद्यसमये परिपाककृदित्यर्थः । **पूर्वं देवेभ्यः** देवेभ्यः पूर्वं वर्तमाना । **अमृतस्य** मोक्षस्य **नाभिः** रथचक्रस्य नाभिरिवाश्रयभूतः **नाभाइ** इति गानकृतो विकारः । **यो....माऽवाः** । यो मां योग्याय शिष्याय **ददाति** उपदिशति, स एव **मा** मां **अवाः** अवात्=प्राप्तो भवति । 'वा गतिगन्धनयोः' इति हि धातुः । इच्छब्दोऽनर्थकः । **अहं....अद्मि । अन्न**शब्दितम् अचेतनम् , तद्भोक्तारं चेतनञ्च **अद्मि** व्याप्नोमि । **अहं विश्वं....अभ्यभवाम्** । प्रलयकाले विश्वमभिभूतवानस्मीत्यर्थः ॥

सुवर्णज्योतीः, य एवं वेद । कमनीयदेदीप्यमानशरीरो भवति,

---

वर्तमाना इति स्त्रीलिङ्गनिर्देशः नाभिरूपविशेष्यान्वयाय । अहमस्मीत्यारभ्य नाभिरित्यन्तमेकं वाक्यम् ॥ अत्र कृत्स्नस्यास्य गानस्य परमात्मकर्तृकत्वे स्वरसान्वयात् गायन् इत्यत्र अनुसञ्चरन् इत्यतः

[सह नाववतु...ओं शान्तिः शान्तिः शान्तिः।] हरिः ओं[३]

इति भृगुवल्ली ।

इति तैत्तिरीयोपनिषदि प्रथमः प्रश्नः ॥

अत्र द्राविडपाठरीत्या अनुवाकदर्शिन्यादिसंख्यागणनम्–शन्नः शीक्षां सहनौ यच्छन्दसां भूः सयः

पृथिव्योमित्यृतञ्चाहं वेदमनूच्य शन्नः सहनाववतु ब्रह्मवित् भृगुः पञ्चदश॥ [१५] अनुवाकाः। शन्नो मह इत्यादित्यो नो इतराण्य-सद्वा' अन्नं न परिचक्षीत त्रिचत्वारिंशत् ॥ [४३] दशिन्यः ।

---

य एवं वेद । इत्युपनिषत् । समाप्तेति शेषः ॥

इति श्रीरङ्गरामानुजमुनिकृततैत्तिरीयप्रकाशिकायां

भृगुवल्लीप्रकाशिका ।

शुभमस्तु ॥

---

अनु इत्यस्यानुषङ्गेण परमात्मगानं मुक्तोऽनुगायतीत्यपि सुवचम् ॥

इति तैत्तिरीय उपनिषदाद्यप्रश्नस्य भाष्ययुक्तस्य ।

श्रीवात्स्यवीरराघवकृतिना विहितः परिष्कारः ॥

श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः

शुभमस्तु

॥ श्रीः ॥

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## उपनिषद्भाष्यपरिष्कारः । (तै. उ. प्र. २ अम्भस्यपारे-)

भास्करविद्यारण्याद्युक्तीरालक्ष्य युक्तमादृत्य ।
प्राच्यवचःसिद्धान्तस्वरसाद्यनुसृत्य कृतमिदं भाष्यम् ॥ १ ॥

तदिदं प्रतिपदमत्र प्रदर्श्यते चेत् बहूकृतं भवति ।
तस्मादुपयुक्तं परमुक्तमनुक्तञ्च वक्ष्यामि ॥ २ ॥

प्रबोधादिसुषुप्त्यन्ता प्रक्रिया पाञ्चकालिकी ।
योगिनामाह्निकप्राया याज्ञिक्यामिह लक्ष्यते (मे मतिः)॥३॥

आनन्दवल्लीत्यादि । अयं भावः—श्रुतप्रकाशिकायां सर्वव्याख्यानाधिकरणारम्भे, 'उपक्रमस्थस्यानन्तशब्दस्य रूढिपरित्यागे हेत्वभावात्' इत्यनेन 'सत्यं ज्ञानमनन्तम्' इत्यत्र अनन्तपदं नारायणे रूढमित्युक्तम् । पूर्वं भाष्यदर्शितदिशा तत्र योगार्थस्यापि पुष्कलत्वात् अपरिच्छिन्नत्वं नारायणत्वञ्च तत्र ज्ञापितमेव । तदत्र प्रश्ने विव्रियते । किञ्च तत्राऽऽनन्दमयं प्रस्तुत्य, 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्यैक्यमुक्तमनन्तस्य । अत्र तस्य तदेवानन्तत्वं सर्वव्यापित्वादिमुखेन सुबहूपवर्ण्य प्रश्नान्ते न्यासनिरूपणावसरे न्यासं ब्रह्मादिसंवत्सरान्तपदैः स्तुत्वा ततः संवत्सररूपमादित्यं प्रस्तुत्य, तस्याऽऽदित्यस्य तापहेतुस्वरश्मिद्वारा वर्षौषध्यन्न-प्राण-बल-तपः-श्रद्धा-मेधा-मनीषा-शान्ति-चित्त-स्मृति-स्मार-विज्ञानलम्भकत्वं क्रमेण प्रदर्श्य तत आनन्दब्रह्मलाभमभिधाय एवमन्नमयाद्यखिलात्मभूताऽऽनन्दमयरूपस्वप्राप्तये स्वयमादित्य एवं व्याप्रियत इति तदेवाऽऽदित्यानन्दमयैक्यमुपपादितम् । एवं 'अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' इत्यपि ततः प्राक् । अतः अन्य-नानोपासनविधायिनोऽप्यस्य प्रश्नस्य आनन्दवल्लीप्रमेयवैशद्यार्थत्वमप्यस्तीति ॥

अत्रेदं बोध्यम्—प्रश्नोऽयं नारायणोपनिषत्, याज्ञिक्युपनिषदिति चोच्यते । यज्ञनाम्ना भगवता नारायणेन दृष्टत्वात् नारायण-

पारम्य, तदाराधनयज्ञप्रतिपादकत्वाच्च। यज्ञशब्दश्च 'यज-देवपूजायाम्' इति भगवदाराधनसर्वकर्मपरः। तदत्रोपासनस्य, 'स्नानमूलाः क्रियाः सर्वाः' इति स्नानपूर्वकनित्यकर्मानुष्ठानपुरस्सरमनुष्ठेयत्वात् संग्रहेण आह्निकसंसूचनेन उपासनान्युच्यन्ते। तथा ह्यत्रोपक्रमे, 'क्षीरसागरतरङ्गशीकरासरतारकितचारुमूर्तये भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः' कृत्वा सुप्त्वा उत्थितस्य भक्तस्य, तस्य अम्भस्यपारे .स्थितस्य अन्तश्चरतो भगवतोऽनुसंधानमुपक्रम्य, तद्वैभवजीवदशाभेदादिवर्णनेन तस्य निर्वेदधृत्यालम्बादिकमासूच्य, 'सनिं मेधामयासिषम्' इत्यन्तेन परमप्राप्यभगवद्विषयकभक्तिमेधाप्राप्त्या यथावद् वर्तिष्य इति चित्तवृत्तिं ब्राह्ममुहूर्तकालिकीं प्रदर्श्य, उत्थाय स्नानोपकरणादिसंभरणार्थं प्रस्थितस्य आदौ प्रदीपप्रज्वालनादिकम्, 'उद्दीप्यस्व जातवेदः' इत्यादिना प्रदर्श्य, करिष्यमाणनित्यकर्मनिविष्टानां महादेवादीनां देवतान्तराणामपि भगवत्पुरुषत्वविवेकमाविष्कृत्य, दूर्वामृत्तिकादिकं गृहीत्वा अघमर्षणस्नानं क्रियमाणमुपवर्ण्य, ततो होमं मुक्त्यर्थोपासनाभेदांश्च विधाय, निष्पन्नोपादानकालकार्यस्य पुंसो माध्याह्निकं कर्मोपक्रम्य, भगवन्निवेदितामृतभोजनमन्त्रान् उपदिश्य, स्वाध्यायकर्मादि चोक्त्वा, विरक्तस्य संयासं, विशेषतः प्रारब्धक्षपणकांक्षिणो न्यासञ्च प्रपदनं प्रतिपादयता भागेन च, 'शुध्यन्तां शुध्यन्ताम्' इति आयस्तकरणकलेबरस्य बहिर्व्यापृतस्य तदुपरमरूपनिद्रासंकल्पम्, 'आत्मानं युञ्जीत' इति योगञ्च निद्रातः प्राक् कार्यं ब्रह्मणि क्षेत्रज्ञन्यासरूपं प्रकृष्टमासूच्य उपनिषदियं संतिष्ठते।

अतोऽयमाह्निकसंग्रहः।

---

*अस्य उपनिषद्भाग नास्ति शाङ्करभाष्यम्। भास्करविद्यारण्यभाष्ये अस्याः चतुष्षष्ट्यनुवाकक्रमपाठमादृत्य प्रवृत्ते। इदमस्मदाचार्यभाष्यमपि नूनं तदनुसारि। मध्वानुयायिभाष्यं अशीत्यनुवाकक्रमावलम्बि। स चाद्राविडपाठः। अद्वैतिभाष्यमप्येकमेवमस्ति। तत्र

श्रीः

# ॥ तैत्तिरीये नारायणोपनिषत् (याज्ञिकी) ॥

## तैत्तिरीयारण्यके षष्ठः प्रश्नः । (तै. उ. प्र. २.)

[सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ओं शान्तिः शान्तिः शान्तिः॥]

---

चतुस्सप्ततिपाठक्रमोऽपि कश्चिदस्तीत्युक्तम् । असद्भाष्यमुद्रणग्रन्थेषु द्विपञ्चाशदनुवाकक्रमो दर्शितः। तत्र तत्र,'प्रथमानुवाकभाष्यम्', 'द्वितीयानुवाकभाष्यम्' इति रीत्या मुद्रणमप्यस्ति । एवं कृत्वाऽपि चतुःषष्ट्यनुवाकक्रमेणैव प्रतीकमाला अध्ययनक्रमागता मुद्रिता । अत्र भाष्यकारैः स्वभाष्यस्य प्रकाशिकात्वेनैव व्यवहारकरणात्, 'प्रथमानुवाकभाष्यम्' इति रीत्या लेखनं न तत्कृतम्, किं त्वर्वाचीनकृतमिति निश्चीयते । परन्तु तत्रतत्र चतुर्थानुवाक-षोडश-सप्तदशाष्टादशेत्यादिरनुवाकपदघटितव्यवहारोऽत्र सप्ताष्टेषु स्थलेष्वस्ति । स तु चतुःषष्ट्यनुवाकक्रमपाठस्य न बाधकः। केवलं २८. अनुवाकस्थं ओंभूरितीदमारभ्य 'पुरोनम' इत्यन्तमनुवाकद्वयं किमेकानुवाकत्वेनाध्यवसितमिति मात्रया संदिह्येत । अतो विवादग्रस्तद्विपञ्चाशदनुवाकादिरीत्युल्लेखमकृत्वा मूलमात्रे चतुःषष्ट्यनुवाकरीतिमुल्लिख्य मुद्रणं क्रियते। मूलेऽप्यशीतिपाठक्रमे श्रुत्यानुपूर्वीभेदस्य बहुलत्वात् तमुपेक्ष्य चतुःषष्टिपाठक्रमे विद्यारण्यादिपाठभेदः परं प्रदर्श्यते । क्वचिन्मूलस्य भाष्याभावेऽपि मूलत्यागे कारणाभावात् अव्याख्यातमूलांशोऽपि ग्रन्थाक्षरमुद्रणकोशे पश्चाद्दर्शितमप्यनुसृत्य यथावन्निवेश्यते । अष्टोत्तरशतोपनिषत्कोशे तु तैत्तिरीयोपनिषद्भिन्नतया नारायणोपनिषदिति गणितेयम् ।

हरिः ओ३म्। अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्।
शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः ॥ १ ॥

**श्रीः**

**श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम् ।**

**(उभयविभूतिव्यापित्वादिरूपमानन्त्यम्)**

आनन्दवल्लीप्रतिपाद्यस्य **अनन्तशब्दवाच्यस्य** नारायणस्य पारम्यं षष्ठे प्रश्ने प्रतिपाद्यते । **अम्भस्यपारे...अन्तः** । अपारे **अम्भसि** समुद्रे, **भुवनस्य मध्ये** अन्तरिक्षे । भानुमण्डल इति यावत् । **नाकस्य** दुःखासंभिन्नस्य भगवल्लोकस्य वैकुण्ठलोकस्य **पृष्ठे**=उपरिप्रदेशे, त्रिषु धामसु भक्तानुग्रहाय विशेषेण अभिव्यक्तः, **महतो**ऽप्याकाशादेर्महान्,

---

उक्तविधयज्ञसंबन्धादियं याज्ञिकी नामोपनिषत्, यथा संहितोपासनोपक्रमत्वात् शिक्षावल्ली सांहिती, वरुणोपदिष्टानन्दमयविद्याविषयकत्वाच्चानन्दभृगुवल्लीद्वयं वारुणी । एतत्सांहित्याद्युपनिषत्संज्ञकदेवतोद्देश्यके काण्डर्षितर्पणे क्रमान्तरादरणे कारणं मृग्यम् । सांहिती, वारुणी, याज्ञिकीति व्यवहारक्रमस्यैवात्र सर्वसंमतत्वात् । एवमस्या महानारयणोपनिषदित्यपि नाम । अथर्वनारयणोपनिषद्व्यावृत्तये महत्त्वविशेषणम् । प्रकीर्णरूपत्वादयं प्रश्नः खिलकाण्ड इत्याहुः । विभक्तिव्यत्ययादिनाऽर्थवर्णनमत्र प्रश्नेऽधिकम् ।

१. अम्भस्येति षष्ठ्यन्तं कृतं विद्यारण्येन । पारादौ स्थितं यत् महत् ततो महीयानिति च योजितम् । अनुवाकप्रतीकमालायां अम्भसीत्येव निविष्टमस्ति । अम्भसीत्येव विभज्य समनुप्रविष्ट इत्यन्तान्वयो भास्करदर्शितः । अर्थान्तरञ्च, 'प्रलयसर्गापवर्गदशासु संनिहितत्वं क्रमेणोच्यते' इति कथितम् । 'यमन्तः समुद्रे कवयोऽव-

यस्मिन्निदं सञ्च वि चैति सर्वं यस्मिन् देवा अधि विश्वे निषेदुः ।
तदेव भूतं तदु भव्यमा इदं (भव्यमाहितं) तदक्षरे परमे व्योमन् ॥२॥

---

**शुक्रेण** स्वतेजसा **ज्योतींषि** आदित्यादिज्योतींषि, 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति', 'यदादित्यगतं तेजो जगद् भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् ॥' इत्युक्तरीत्या सम्यगनुप्रविष्टः, प्रजानां पतिः, सर्वेषां **गर्भे** हृदये विपरिवर्तत इत्यर्थः। 'राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान् । ईश्वरं तं विजानीमः स पिता स प्रजापतिः ॥' इति आश्वमेधिकोक्तेः **प्रजापति**र्भगवानेवेति द्रष्टव्यम् ॥ १ ॥

**यस्मिन्....सर्वम्** । **यस्मिन्** परमात्मनि इदं जगत् संहारकाले **समेति** । समित्येकीकारे । 'तमः परे देव एकीभवति'

---

यन्ति', 'कविं समुद्रेन्तम्', 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः', 'नाकस्य पृष्ठमारुह्य' इति वक्ष्यमाणानुसारिणी स्वरसगतिरेवास्मद्भाष्यादृता । त्रिषु धामस्विति प्रमाणान्तरस्मारणम् ।

आदित्यादीति । आदित्याद्यधिष्ठितचक्षुरादिज्योतिरनुग्रहोऽप्यत्रोक्तप्रायः । तेन निद्राय समुत्थितेन स्वकरणप्रकाशादिकं तत्कृतमनुसंहितं भवति । प्रजापतिश्चरतीत्यादेरन्तर्यामिपरत्वं तात्पर्यचन्द्रिकातो(३-१०)ऽपि ज्ञायते । 'स एषोऽन्तश्चरते बहुधा जायमानः' इति च श्रुतिः । चरति विपरिवर्तत इति । 'इमाः प्रजा अहरहर्गच्छन्त्यः' इत्युक्तरीत्या स्वसंगताः प्रजाश्चारयितुं स्वयमयं प्रजास्वामी हृदयकमले चलन् व्याप्रियत इति । अत्र पूर्वार्धे महास्थानवासानुरूपं महत्त्वम्, उत्तरार्धे हृदयायतनत्वानुगुणमणुत्वञ्चोक्तम् । एवं नित्यानित्यनानाविग्रहवत्त्वमपि दर्शितम् ।

येनाऽऽवृतं खञ्च दिवं महीञ्च येनादित्यस्तपति तेजसा भ्राजसा च।
यमन्तस्समुद्रे कवयोवयन्ति यदक्षरे परमे प्रजाः ॥ ३ ॥

---

इत्युक्तरीत्या एकीभवति ; सृष्टिकाले च **व्येति** विभक्तनामरूपं भवति। **यस्मिन्....निषेदुः**। यस्मिंश्च सर्वे देवाः **अधि निषेदुः** आश्रिता इत्यर्थः। **तदेव....माइदं....व्योमन्**। तदेव भूतभविष्यत्प्रपञ्चशरीरकं सर्वात्मभूतं परव्योमशब्दिते क्षरणशून्ये परमपदे वर्तत इत्यर्थः। इदमित्यत्र आ इत्यस्य स्मरणार्थत्वात्, 'निपात एकाजनाङ्' इति प्रगृह्यत्वात् प्रकृतित्वम् ॥ २ ॥

**येनावृतं....प्रजाः**। येन ब्रह्मणा **खम्** आकाशः द्यौश्च मही च आव्रियते। विभक्तिव्यत्ययश्छान्दसः। येन च **तेजसा** दीप्त्या **भ्राजसा** औष्ण्येन च आप्यायितः सन् आदित्यः तपति। 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेः। यश्च समुद्रमध्ये **कवयः** क्रान्त

---

२. 'समेति=उत्पद्य संगतं भवति; व्येति=व्ययं भजति' इति क्रमेण सृष्टिप्रलयविवक्षा परैः कृता। विभातीत्यर्थे व्येतीति हिरण्यगर्भाष्टचैं। अधिः ऐश्वर्ये इति भास्करः। अधीति धातुतः पृथक्कृत्य अधिका हिरण्यगर्भाद्य इति विद्यारण्यः। तच्छब्दस्य यच्छब्दप्रतिसंबन्धित्वौचित्यात् अत्र परमव्योमपदं तदाधारनित्यविभूतिपरम्, न तु परमात्मपरम्। तथा च ता०च०8-28। वेदार्थसंग्रहेऽपि तथा। भूतं भव्यमिति पूर्वोत्तरसर्वकल्पग्रहणम्। आ इदमिति सर्वं क्रोडीकृत्य स्मर्यते।

३. आवृतमिति नपुंसकैकवद्भावेन त्रितयविशेषणम्। येनाऽऽव्रियमाणं खादिकं यत्साहाय्येनादित्यस्तेजआदिना तपतीत्येकवाक्यत्वसंभवेऽपि यच्छब्दभेदेन प्रतिपाद्यं वाक्यभेदौचित्यं सर्वसंमतमा-

यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम् ।
यदोषधीभिः पुरुषान् पशूँश्च विवेश भूतानि चराचराणि ॥ ४ ॥

---

दर्शिनः (?) **प्रजाः अवयन्ति** अवगच्छन्ति । यच्च क्षरणशून्ये परम-पदे । तद् ब्रह्मेति पूर्वेण संबन्धः ॥ ३ ॥

**यतः....प्रसूती** । जगत्प्रसूतिभूता प्रकृतिरपि **यतः** तमोवस्थाद् ब्रह्मणः, **प्रसूता** उत्पन्ना । **तोयेन....भूम्याम्** । भूम्यां [ब्रह्माण्डे] तोयशब्दोपलक्षितभूतैः सह (सः) [ब्रह्मादि]जीवान् सृष्टवान् । **यदोषधीभिः...चराणि** । सृष्टानि ओषधिपुरुषपश्वादिचराचराणि आत्मतया प्रविष्ट इत्यर्थः ॥ ४ ॥

---

इत्य विभक्तिव्यत्यय उक्तः श्रु. प्र. 3-3-43-1। तपति =प्रकाशयति उष्णीकरोति च। अवयन्तीति च्छेदः। वयन्ति =संतन्वन्ति इति स्वर-वशात्। प्रजा इत्यस्य, 'प्रथमजा ऋतस्य' इत्यादाविव एकवचनान्तत्वं प्रथमजेत्यर्थकत्वं च संभवति। प्रशब्दो हि प्राथम्यवाची। यथा प्रवचन-मित्यत्राध्येत्रध्यापकयोर्मध्ये अध्यापकवचनम्। एवं प्राचार्य इत्यत्र। 'अक्षरं परमं प्रभुम्' इत्यत्र च प्रभुं प्रथमतः संभूतमिति भास्करः। एवञ्च नित्यविभूतौ प्रथममाविर्भूतमित्यर्थवर्णनसंभवेऽपि प्रसिद्धबहु-वचनाविरोधेनैवार्थः संभवन् नोपेक्षितः। (प्रकृष्टं जाताः प्रजा इति) प्रजाशब्दः कविशब्दविशेषणम्। अतः क्रान्तदर्शिन इति पुल्लिङ्गम्।

४. व्यससर्ज =विससर्ज। विसृष्टिः सदेहीकरणेन विक्षेप इति ता-च-8.6.। ओषधीभिरिति सहयोगे तृतीया चेत्, ओषधिसहि-तान् पुरुषादीन् अन्यानि चराचराणि च विवेशेत्यर्थः। अन्यथा तु ओषधिविशिष्टपुरुषेषु चराचराभेदोक्तौ चराभेदस्य विशेष्यमात्रे

अतः परं नान्यदणीयसँ हि परात् परं यन्महतो महान्तम् ।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् [१] ॥ ५ ॥
तदेवर्तं तदु सत्यमाहुः तदेव ब्रह्म परमं कवीनाम् ।

---

**अतः....महान्तम्** । यत् परात् परं महतोऽपि महत्, तदेव अणोरपि अन्तःप्रवेशसमर्थतया सूक्ष्मम् । ततः सूक्ष्मतरं नास्तीत्यर्थः । **अणीयसम्** अणीय इत्यर्थः । **महान्तम्** महदित्यर्थः । **यदेक....परस्तात्** । **एकम्** प्रलयदशायामेकत्वावस्थापन्नम् अव्याकृतशरीरकञ्च **अनन्तरूपं** देवादिनानारूपयुक्तम् अत एव विश्वशरीरकञ्च **पुराणम्** अनादि **तमसः परस्तात्** तमःपारवर्ति च (**एकम्** अद्वितीयम्, **अव्यक्तम्** इन्द्रियाग्राह्यम् (इन्द्रियागोचरम्), **अनन्तरूपम्** नानारूपम्, **विश्वं** विश्वशरीरकम्, **पुराणम्** अनादि, **तमसः परस्तात्** तमःपारवर्ति च ॥ ५ ॥

## (सर्वकर्मसमाराध्यत्वम्)

**तदेव....कवीनाम्** । ऋतसत्यशब्दाभ्यां स्वरूपान्यथाभावस्वभावान्यथाभावलक्षणविकारद्वयराहित्यमुच्यते । शिष्टं स्पष्टम् । इष्टा-

---

अचराभेदस्य विशेषणमात्रे च, इतरत्र बाधात्, 'घटो नीलः, शिखी ध्वस्त' इत्यादाविवान्वयेऽपि क्लेशः इति लक्षणया समप्राधान्यं संपादयति ओषधिपुरुषेति । पूर्वापरवाक्यद्वयश्रुतयच्छब्दप्रतिसंबन्धी तच्छब्दः व्यसस्जेति वाक्येऽध्याहार्यः । तत्र तदित्यनध्याहृत्य स इत्यध्याहारकल्पनमौचित्यात् प्रथमोपक्रमानुसारात् ।

६. कवीनां परमम् क्रान्तदर्शिनां मध्ये श्रेष्ठमिति स्पष्टार्थो ग्राह्य इति शिष्टं स्पष्टमित्यनेन सूचितम् । बहुधा = बहुप्रकारकम् । तद् विवृणोति

इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ॥ ६ ॥
तदेवाग्निस्तद् वायुस्तत् सूर्यस्तदु चन्द्रमाः ।
तदेव शुक्रममृतं तद् ब्रह्म तदापः स प्रजापतिः ॥ ७ ॥
सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
कला मुहूर्ताः काष्ठाश्चाऽहोरात्राश्च सर्वशः ॥ ८ ॥

---

**पूर्तं...नाभिः** । **इष्टं** यागादि श्रौतम्, **पूर्तं** खातादि स्मार्तम् । भूत[भवद् ?]भविष्यद्रूपं अग्नीन्द्रादिदेवता[न्तर]संबन्धितया [बहुभूतं] सर्वमपि कर्म **बिभर्ति** स्वीकरोति । तदाराध्य इ(ध्यमि)ति यावत् । भुवनस्य **नाभिः** कर्मफलप्रदतया आधारभूतः। एवमेव **वेदार्थसंग्रहे** प्रतिपादितम् ॥

**तदेव....प्रजापतिः** । **शुक्रं** तेजिष्ठम् । तच्च विग्रहद्वारा द्रष्टव्यम् । **अमृतम्** असंसारि । इतरत् स्पष्टम् ॥ ७ ॥

---

अग्नीति । अत्र तदेवेत्यारभ्य नाभिरित्यन्तमेकवाक्यमपि भवेत् ।

७. ननु कथमस्य त्रैकालिकश्रौतस्मार्तसर्वकर्मभर्तृत्वम्, अग्न्याद्युद्देश्यकानन्तकर्मसत्त्वादित्याशङ्कां परिहर्तुं तदेवाग्निरित्यादि । अस्य वेदार्थसंग्रहतात्पर्यदीपिकायां पूर्वमन्त्रोत्तरार्धत्वोक्तिः तन्मन्त्रोत्तरमन्त्रसंबन्धिपूर्वार्धत्वाभिप्रायेण ; उत्तरस्यार्धमुत्तरार्धमिति । अस्यानुष्टुप्त्वेन ततो भिन्नत्वात् । फलाधिकरणभाष्येऽप्यर्धद्वयमुपात्तम् । अत्र श्रु-प्र-यां (१. ४. ८), 'अग्निवाय्वादीनामिव प्रजापतेरपि कारणभूत(प्रथममन्त्रप्रस्तुत)प्रजापतिविभूतितया तद्व्यतिरेको ह्यवगम्यते' इत्युक्तत्वात् शुक्रादिपदमपि संदंशनयात् विभूतिपरमिति ज्ञायते । तथा च शुक्रं =स्वप्रकाशमप्राकृतज्योतिर्मयविग्रहं वा मुक्तस्वरूपम्, ब्रह्म =प्रकृतिः, आपः तदुत्पन्नं भूतम्, प्रजापतिः =तत्रोत्पन्नो ब्रह्माण्डाधिकारी चेत्येवंरूपोऽर्थो ग्राह्यः ।

अर्धमासा मासा ऋतवः संवत्सरश्च कल्पता(न्ता)म् ।
स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः ॥ ९ ॥
नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।

---

## (कालकारणत्वम्)

**सर्वे....कल्पताम्** । **विद्युतः** विद्युद्वर्णात् पुरुषादित्यर्थः । आदित्यवर्णं तमसः परस्तादिति श्रुतेः । **अधिजज्ञिरे** उत्पन्ना इत्यर्थः । **कल्पताम्** कल्पिताः ; सृष्टा इत्यर्थः ॥

**स आपः प्रदुघे** । **सः आपः**...द्वितीयार्थे प्रथमा—अप इत्यर्थः । **प्रदुघे** प्रदुग्धे । अप्छब्दोपलक्षितं भूतजातमुत्पादितवानित्यर्थः । **उभे...सुवः** । तथा अन्तरिक्षं स्वर्गञ्चोभे इमे उत्पादितवानित्यर्थः ॥

## (अग्राह्यत्वम्)

**नैन....परिजग्रभत्** । एनमूर्ध्वप्रदेशे तिर्यक्प्रदेशे वा मध्यप्रदेशे

---

८-९. अनाद्यन्तं कालतत्त्वमपि तदधीनविकारमित्युच्यते सर्वे इति । सर्वे संवत्सरान्तकालान्तर्गता अपि । निमेषः निमिषः पक्ष्मपात इति विद्यारण्यः । निमिसंबन्धात् निमिषत्वमिति च । इदं निमिवृत्तं विष्णुपुराणे चतुर्थांशे । विद्युत इति । निमेषमात्रस्थायिविद्युद्रूपात् युज्यते नूनं निमेषजन्म । ननु कथं निमेषमात्रोत्पत्त्युक्तिः, पक्ष्मपात-परिच्छिन्नकालाधिककालानामपि सत्त्वादित्यत्रोक्तं कला इत्यादि । कल्पन्ते =जायन्ते इत्यनुक्त्वा कल्पता(न्ता)मिति प्रयोगात् निमेषैरेव जातैरिमे सर्वे कालाः कल्पन्ताम् । नान्यादृशपरिणामोऽपि काले स्वीकर्तव्यः । 'अष्टादश निमेषास्तु काष्ठाः' इत्याद्युक्तक्रमेण निमेष-

न तस्येशे कश्चन तस्य नाम महद् यशः [२] ॥ १० ॥
न संदृशे तिष्ठति रूपमस्य न चक्षु(क्षु)षा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ ११ ॥

---

वा कोऽपि न गृहीतवान्=न ज्ञातवानित्यर्थः । छान्दसत्वात् हकारस्य भकारादेशः । सर्वगतस्य तस्य ऊर्ध्वादिदेशविशेषाभावादिति भावः । यद्वा वृक्षादिलक्षणोर्ध्वरूपेण सन्तं पश्वादिलक्षणतिर्यग्रूपेण सन्तं मध्ये तद्विलक्षणमनुष्यादिरूपेण सन्तं=स्थावरजङ्गमरूपेण वर्तमानं कोऽपि न ज्ञातवानित्यर्थः। **न तस्य...यशः** । तस्य कोऽपि नेष्टे। तस्येश्वरः कोऽपि नास्ति । निखिलजगज्जननादिलीलत्वसर्वरक्षकत्वकीर्तिः तस्यैव ; नान्यस्येत्यर्थः । **नाम**शब्दः प्रसिद्धौ ॥

**न सं....कश्चनैनम्** । एतस्य **रूपं** दिव्यं वपु: **दृशे** दर्शनाय न संतिष्ठति=दर्शनयोग्यता नास्तीत्यर्थः । अत एव कोऽपि चक्षुरादीन्द्रियर्न पश्यति । **हृदा....भवन्ति** । **हृदिति** भक्तिरुच्यते । **मनीषेति**

---

गुणनेनैव सर्वस्यापि अधिककालस्य निर्वाह्यत्वात् इति श्रुत्यभिप्रायो ज्ञायते। अत एव सर्वार्थसिद्धौ काले एकविधपरिणाममात्रस्वीकारः।

१०. एवमुभयविभूतिमत्त्वमुक्तम् । अथाग्राह्यत्वमुपवर्ण्यते । नन्वत्र ईश्वरस्य ऊर्ध्वादिप्रदेशोऽस्ति। परं तत्रायं न गृह्यत इत्येव प्रतीयते, नोर्ध्वाद्यभावोऽपीति चेन्न ; लोके वस्त्वन्तरे प्रसिद्धमूर्ध्वादितो ग्रहणमस्य नास्तीत्युक्तेः तावताऽस्य ऊर्ध्वमध्याद्यभावस्यैव सिद्धेः।

११. रूपं विग्रहः। न संतिष्ठति=न सम्यक् तिष्ठति। विभवादौ दृश्यमानस्यापि विग्रहस्य अप्राकृतत्वाकारो न दृश्यत इत्यर्थः। परमात्मस्वरूपं तु सर्वथैवायोग्यमित्युच्यते न मनीषेति। धृतिरिति। मनस

*"अद्भ्यस्संभूतो" "हिरण्यगर्भ" इत्यष्टौ ॥ १२ ॥

---

धृतिः। एतच्च **कठवल्लीप्रकाशिकायां** प्रतिपादितम्। **मनसाऽभिक्लृप्तः** मनोग्राह्य इत्यर्थः। शिष्टं स्पष्टम् ॥ ११ ॥

## (श्रुत्यन्तरसंघटनम्)

**अद्भ्यः.. इत्यष्टौ।** 'अद्भ्यस्सम्भूतः" इत्युत्तरा(रनारायणा?)नुवाकः, "हिरण्यगर्भः" इत्यष्टर्चं [च ?] तदेकवाक्यतापन्नमिह पठितव्यमित्यर्थः।

यथा 'अम्भस्यपार' इत्यस्य, 'यमन्तःसमुद्रे कवयोऽवयन्ति', सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इति समुद्रशायित्वविद्युद्वर्णपुरुषत्वादि-लिङ्गात भगवत्परत्वम्, एवम् 'अद्भ्यस्संभूत' इत्युत्तरानुवाकस्यापि, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीपतित्वरूपासाधारणलिङ्गात् [समानप्रकरणे, 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ (शु. य.) इति श्रवणात्] भगवत्परत्वं सिद्धम्।

---

ईशित्री बुद्धिर्मनीट्। तया धृत्येत्यर्थः। मनीषा शास्त्रश्रवणजन्यधी-रिति उपरि न्यासघट्टे। 'धैर्यगर्भोद्वहा धृतिः' इति विष्णुपुराणे (५-२)। धृतिर्धीप्रतिष्ठा स्थिरा धीः। हृदेत्युक्ता भक्तिश्च प्रेम। मन्त्रोऽयं कठोपनिषदि (२-३-९) श्वेताश्वतरे (४-२१) च।

१२. एवमम्भोधिशयत्वादिना वर्णितः प्रजापतिर्विद्युद्वर्णपुरुषो

---

*अद्भ्यस्संभूतः पृथिव्यै रसाच्च। विश्वकर्मणः समवर्तताधि। तस्य त्वष्टा विदधद् रूपमेति। तत् पुरुषस्य विश्वमाजानमग्रे। (२) वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय। (३) प्रजा-पतिश्चरति गर्भे अन्तः। अजायमानो बहुधा विजायते। तस्य धीराः

अत्र ह्रीशब्दो भूमिपरः ; 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति अन्यत्र श्रवणात् ; श्रीरामायणे च, 'रामस्य दक्षिणे पार्श्वे पद्मा श्रीः समवस्थिता (समवर्तत)। सव्ये तु श्रीर्विशालाक्षी' इति भूम्यां श्रीशब्दप्रयोगात् ; 'त्वामिहोपह्वये श्रियम्' इति वैदिकप्रयोगाच्चेति द्रष्टव्यम्। एतेन देवतान्तरस्य पारम्यशङ्का प्रत्युक्ता। ब्रह्मशिवादीनां क्वचित् कारणत्वश्रवणमात्रेण परब्रह्मत्वे आकाशप्राणेन्द्रादीनामपि पारम्यप्रसङ्गात्। तेषां कार्यत्वश्रवणात् पारम्याभावे ब्रह्मरुद्रादेरपि महोपनिषदादौ कार्यत्वश्रवणसाम्यात्। न च अथर्वशिखायाम्, 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इति विष्णोरपि कार्यत्वं श्रुयत इति शङ्क्यम्—तस्य, 'अजायमानो बहुधा विजायते' इति श्रुत्या अवतारूपत्वाऽऽवेदनात्। न चेयं श्रुतिर्देवतान्तरपरा किं न स्यादिति शङ्क्यम्—तत्संनिधौ, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति भगवदसाधारणलक्ष्मीपतित्वलिङ्गादिति द्रष्टव्यम्।

---

**मुमुक्षूपास्यो मोक्षप्रदो लक्ष्मीपतिरेवेति दर्शयितुम् 'अद्भ्यः**

**परिजानन्ति योनिम्। मरीचीनां पदमिच्छन्ति वेधसः। (४) यो देवेभ्य आतपति। यो देवानां पुरोहितः। पूर्वो यो देवेभ्यो जातः। नमो रुचाय ब्राह्मये। (५) रुचं ब्राह्मं जनयन्तः। देवा अग्रे तदब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात्। तस्य देवा असन् वशे। (६) ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे। नक्षत्राणि रूपम्। अश्विनौ व्यात्तम्। इष्टं मनिषाण। अमुं मनिषाण। सर्वं मनिषाण।**

(तै. आ. ३. १३.)

तथा हिरण्यगर्भ इत्यष्टर्चस्यापि निरुपाधिकभूतपतित्वलिङ्गात्, 'हिरण्यगर्भः शत्रुघ्नः' इति नामसहस्रपाठात् 'हिरण्यगर्भः' इत्यष्टभिर्हविर्निवेदयेत्' इति विष्णुस्मृतौ भगवदाराधने विनियोगात् ज्योतिश्शास्त्रे सूर्यसिद्धान्ते अनिरुद्धव्यूहं प्रकृत्य, 'हिरण्यगर्भो भगवानेष छन्दस्सु पठ्यते' इत्युक्तेः, पाद्मे गिरियज्ञानन्तरमिन्द्रस्तवे, 'अग्रे हिरण्यगर्भस्त्वं भूतस्य समवर्तत । त्वमेवैकः पतिरसि पुरुषस्त्वं हिरण्मयः ॥' इत्यादिना अस्य मन्त्रस्य भगवत्परतयोपबृंहितत्वाच्च हिरण्यगर्भ इत्यष्टर्चस्यापि (१), भगवत्परत्वमेवेति द्रष्टव्यम् ॥ १२ ॥

---

संभूतः' इत्यनुवाकोऽत्रानुसंहितः । एवञ्च प्रजापतिशब्दवत् हिरण्यगर्भपदमपि संदिग्धवृत्तिकं नारायणपरं मत्वा अष्टर्चं भगवत्परं योज्यतामिति प्रतिपादयितुं हिरण्यगर्भ इत्यष्टावित्युक्तम् । वक्ष्यति चोत्तरनारायणस्य लक्ष्मीपतित्वादिलिङ्गादन्यथानयनासंभववत् हिरण्यगर्भ इत्यष्टर्चस्यापि बहुस्मृतिविरोधात् चतुर्मुखपरत्वायोगम् अष्टभिर्हविरित्यादिना । तस्याष्टर्चस्यात्र घटनेन, 'कस्मै देवाय हविषा विधेम' इति तत्राभ्यस्तमनुसंधापितं भवति । अतश्चाभिगमनाग्निहोत्रौपासनेज्याराधनवैश्वदेवादिभिरखिलैर्हविर्भिः तमेव, 'आराधयन् हरिं भक्त्या गमयिष्यामि वासरान्' इत्यनुसंधानम्, इष्टापूर्तं बहुधेति प्राक् प्रसक्तं प्रपञ्चितं भवति । सर्वान्तर्यामिणं श्रीपतिं विहाय कोऽन्योऽस्ति देवो हविर्भिराराध्य इति ।

---

[1]हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।

स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥

1 मूले अष्टौ इत्यनेन तैत्तिरीयसंहिता (४-१-८) पठिता अष्टौ ऋच एव ग्राह्याः। न तु ऋग्वेद(१०-१२१)गताः। वेदान्तरस्थत्वात् तत्र सूक्ते

ऋग्दशकसद्भावात्। 'कस्मै देवाय हविषा विधेम' इत्येकरूपपादस्य नवम्यामपि ऋचि सत्त्वाच्च। अतः तत्र ऋचां क्रमविपर्यासं कतिपयपदस्थाने पदान्तरसत्त्वञ्चाऽऽलोच्य मुद्रितेऽन्यथात्वं न शङ्क्यम्। अङ्क्यः इतिवत् तैत्तिरीयस्थानामेव अष्टाविति गृहीतत्वात्। अर्थस्तु उभयत्र समानः। ऋग्वेदे दशम्यामृचि, 'प्रजापते न त्वदेतानि' इति प्रजापतिशब्दोऽपि अत्रत्यप्रजास्वाम्यौपनिषदपुरुषपर एव।

यः प्राणतो निमिषतो महित्वैक इद् राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥ २॥
य आत्मदा बलदा यस्य विश्वे उपासते प्रशिषं यस्य देवाः।
यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम॥ ३॥
यस्येमे हिमवन्तो महित्वा यस्य समुद्रँ रसया सहाऽऽहुः।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम॥ ४॥
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।
यत्राधिसूर उदितौ व्येति(विभाति) कस्मै देवाय हविषा विधेम॥५॥
येन द्यौरुग्रा पृथिवी च दृढे येन सुवः स्तभितं येन नाकः।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम॥६॥
आपो ह यन्महतीर्विश्वमायन् दक्षं दधाना जनयन्तीरग्निम्।
ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम॥७॥
यश्चिदापो महिना पर्यपश्यत् दक्षं दधाना जनयन्तीरग्निम्।
यो देवेष्वधिदेव एक आसीत् कस्मै देवाय हविषा विधेम॥ ८॥

एष हि देवः प्रदिशोनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।
स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः ॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥ १४ ॥

---

(सार्वात्म्यम्) **एष हि....विश्वतोमुखः। प्रदिशः** दिग्वर्तिपदार्थाः, पूर्वं जाताः, गर्भस्थाः जायमानाः, जनिष्यमाणाश्च स एव। ननु कथं तस्य सार्वात्म्यमित्यत्राह— **प्रत्यङ्मुखा** इति । प्रत्यगात्मा मुखं शरीरं यस्य स तथोक्तः । सर्वस्यापि प्रत्यगात्मनस्तच्छरीरत्वात् तस्य सर्वात्मत्वमित्यर्थः । **प्रत्यङ्मुखा** इति वचनव्यत्ययः छान्दसः । **विश्वतोमुख** इति सर्वाचेतनशरीरकत्वमुच्यते ॥ १३ ॥

**विश्वत....एकः** । पाणिपादादिकमन्तरेणापि सर्वतः पाणिपादादिकार्यकृत् परमात्मा द्यावापृथिव्यादिसृष्टिकाले जीवान् बाहुभ्यां पद्भिश्च योजयति । करणकलेबरयोगं कारयतीत्यर्थः । **गीताभाष्ये,** 'सर्वतःपाणिपादम्' इति श्लोकव्याख्यानानुसारादेवमेवार्थः ॥ १४ ॥

---

१३. प्रदिशोनु इत्यत्र अनु इति च्छित्वा प्रकृष्टाः दिशोऽनुप्रविष्ट इति परोक्तम्। तदनुसारे दिग्वर्तिपदार्थान् अनुप्रविष्ट इत्यर्थः। पदार्था इति प्रदिश इत्यत्र बहुव्रीह्यर्थमात्रकथनम् । द्वितीयाविभक्त्यर्थः 'तान् अनुगतः' इत्यध्याहारेण ग्राह्यः। यद्वा 'नु' इत्येव छेदः। विजायमानः= विविधं जायमानः । शरीरमिति । प्रधानभूतावयवविशेषार्थकं मुखपदं अवयविभूतशरीरलक्षकमिति भावः । यद्वा मुखं =द्वारम् । जातत्वजायमानत्वादिकं जीवद्वारा जडद्वारा च परमात्मनीति भावः।

एवमेवार्थ इति । अयं मन्त्रः श्वेताश्वतरेऽपि । तत्र इतः

वेनस्तत् पश्यन् विश्वा भुवनानि विद्वान् यत्र विश्वं भवत्येकनीळम् ।
यस्मिन्निदꣳ सञ्च वि चैकꣳ स ओतः प्रोतश्च विभुः प्रजासु ॥ १५ ॥

---

**वेनः....नीडम्** । **विद्वान्** सर्वज्ञः परमात्मा विश्वानि भुवनानि,—वाशब्द इवार्थः [र्थे]....**इन इव** सूर्य इव [तत् ?], **पश्यन्** साक्षात्कुर्वन्नास्ते । यत्र परमात्मनि विश्वमिदं **एकनीडम्** ऐकाधिकरण्यं भजत इत्यर्थः । **यस्मिन्....प्रजासु** । यस्मिन् परमात्मनि जगत् सर्वमविभक्तं विभक्तञ्च, तादृशः परमात्मा सर्वप्रजासु चेतनाचेतनवर्गेषु दीर्घतन्तुवत् ओतः तिर्यक्तन्तुवत् प्रोतश्च । व्याप्य वर्तत इति यावत् ॥

---

प्रागेव कृतायां प्रकाशिकायाम्, 'अनेकबाहूदरवक्त्रनेत्रम्' इति रीत्या नानामुखत्वादिकं मन्त्रार्थत्वेनोक्तम् । तादृशविश्वरूपविवक्षायामपि मुखादिस्थानेषु पाद्यभावात् विश्वतःपदस्वारस्यं नास्तीति अत्रोक्तोऽर्थो ग्राह्य इति भावः। 'सर्वतः पाणिपादम्' इत्यस्य जीवपरत्वेऽपि तत्तुल्यनयात्, तत्र, 'अपाणिपादो जवन' इत्यादिभाष्यानुसाराच्चैवमर्थ इति भावः। अथवा, 'एवमेव' इत्येवकारेण जीवसंबन्धिचक्षुरादिभिः परमात्मनो विश्वतश्चक्षुष्ट्वाद्युपपादनक्लेशो मा भूदिति विवक्षितम्। मन्त्रे संनमतीत्यत्र जीवमिति कर्माध्याहारः। समिति द्विः श्रवणात् बाहुभ्यां संनमति =पतत्रैः संनमति इति वाक्यद्वयं कार्यम्। पतत्रैरिति बहुवचनं बाहुशून्यानां मृगाणां पादबहुत्वात् । ऊर्ध्वतिर्यगादिसर्वस्रष्टृत्वं तेनोक्तं भवति । 'बाहुभ्यां धर्माधर्माभ्यां पतत्रैः पतनशीलैर्महाभूतैः' इत्यन्ये । एकस्य समुपसर्गस्य जनयन्नित्यत्रान्वयेन संजनयन् संधमतीत्येकवाक्यता न्यायकुसुमाञ्जलौ (५) दर्शिता ।

१५. उत्तरत्र, 'त्रिधा हितम्' इति मन्त्रे इन्द्रसूर्यतुल्यः कश्चिद् वेनोऽस्ति निर्दिष्टः । ऋग्वेदे (मं. 10–10–123) भार्गववेनसूक्ते अन्तरिक्षस्थानो देवः कश्चिद् वेनः उदकाधारित्वात् गन्धर्वो मेघा-

प्र तद् वोचे अमृतं नु विद्वान् गन्धर्वो नाम निहितं गुहासु ।

---

**प्रतद्....गुहासु ।** गां पृथिवीं धारयतीति जगद्धारकः परमात्मा **गन्धर्वः**। सः **अमृतम्** अपौरुषेयतया नित्यं **नाम** शब्दप्रपञ्च-

---

द्धर्षकृत् अत एव वरुणदूतहिरण्यपक्षसुपर्णशकुनत्वेन वर्ण्यमानोऽस्ति । अन्यत्र च वेन इन्द्र इति चन्द्र इति च व्याख्यातोऽस्ति । वेनः = कान्तः । तत् अत्र उत्तरत्र च परमात्मव्यतिरिक्तवेनाख्यपुरुषविशेष-ग्रहणे, 'यत्र विश्वं भवति तद् ब्रह्म पश्यन् वेनो विश्वानि भुवनानि विद्वानासीत् इत्यर्थः सुवचः । भास्करोऽत्र वेनः कान्तः परमात्मेत्याह । विद्यारण्यो मंत्रमिममुत्तरमन्त्रेणैकान्वयं कृत्वा वेनो नाम गन्धर्वः प्रवोचे इत्याह । "त्रिधा" मन्त्रे तु वेनपदं कमनीयाव्याकृत-परमाह । तदिदं मन्त्रयोरेकवाक्यत्वं न स्वरसम् । 'स ओतः प्रोतश्च' इति वाक्येन व्यवधानात् । औपनिषदमन्त्राणां कर्मकाण्डमन्त्रैक्ये सत्यपि प्रकरणानुसारादर्थभेदः सर्वसंमतः । दर्शयति च श्रुतिरेव तत्रैकस्यैवार्थभेदम् । एवञ्च वेन इति पदे, 'वा इन' इति छेदोऽप्यस्तु । उत्तरमन्त्रेऽपि गन्धर्वो न वेनाख्यगन्धर्व एव । न हि वेन-पदमुदकवर्षिवेने इव नामपदमुदके प्रसिद्धमपि तत्र तदर्थकमिष्यते । अतः क्वचित् कथञ्चित् प्रकृतप्रसिद्धार्थान्तरप्रतीत्यधीनचमत्कारे सत्यपि प्रकरणानुसारी कश्चिदपूर्वोऽर्थः अपूर्वपदविभागश्च नायुक्त इति भाष्याशयः॥ वि चैकमित्येव-पाठः, न तु 'विचैति सर्वम्' इतीति चेत्, अस्तु तर्हि—सर्वमिदं परमात्मनि उत्पद्य संयुक्तं प्रलये वीतश्च सत् सर्वदैवापृथग्भूतत्वादेकं भवतीत्यर्थः। शुक्लयजुर्वेदे तु अत्र मन्त्रेऽपि विचैति सर्वमित्येव पाठः । तदनुसारेण एकमिति पाठेऽपि एक-समुदायघटकमित्यर्थः स्यात् । सर्वमिति फलितम् । ओतत्वं स्वरूप-मात्रेण संबन्धः ; प्रोतत्वं नियमनार्हतया धर्मभूतज्ञानकृतः संबन्धः ।

१६. अपौरुषेयतयेति । न चेदममृतं त्रिपादस्येत्युक्तममृतमेव

त्रीणि पदा निहिता गुहासु यस्तद् वेद सवितुः (स पितुः) पिता सत् ॥
स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतीये धामा(म)न्यभ्यैरयन्त ॥ १७ ॥

---

रूपं वेदं गुहासु नाभिहृद[य]ादिस्थानेषु स्थितं ब्रह्मणे प्रवोचे प्रोक्तवान् । 'यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुत्यन्तरात् । त्रीणि.... पिता सत्। यस्य (अस्य ?) परमात्मनो भोग्यभोगस्थानभोगोपकरणरूपाणि त्रीणि पदानि गुहाशब्दिते परमपदे, 'त्रिपादस्यामृतं दिवि' इत्युक्तरीत्या यो वेद, सः पितुरपि पिता भवति । न कस्यचित् पुत्रो भवतीत्यर्थः ॥

स नो....विश्वा । स एवास्माकं बन्धुः, जनिता उत्पादकः। स एव श्रेयसां विधाता सर्वेषां जनानां भोग्यभोगोपकरणादीनि वेद । न ह्यन्यस्य बन्धोः गर्भस्थत्वादिदशायां तद्भोग्यवस्तुज्ञानं संभवतीति भावः। यत्र...धामन्यभ्यैरयन्त । यत्र परमात्मनि अमृतम् अमृतवत् भोग्यं कल्याणगुणजातं आनशानाः अशितवन्तः । अनुभूतवन्त

---

किं न स्यात्, उपरि त्रिपाद्युक्तेः; नामेति च प्रसिद्धाविति वाच्यम्; वक्ष्यमाणातिरिक्तार्थवर्णनसंभवे तत्त्यागायोगात्। तदिति प्रसिद्धार्थकम्। ननूत्तरार्धेऽपि त्रीणि पदेति शब्दप्रपञ्चस्यैव पादत्रयं वैकुण्ठगतत्वेन कथ्यतामिति चेन्न; वैकुण्ठे नित्यशब्दप्रपञ्चस्यानपेक्षितत्वात्। प्राकृताप्राकृताशब्दसमुदायस्यैकावयविताकल्पनस्यास्वरस[त्वा]त् । त्रीणि पदेत्यस्य त्रिपादित्येतत्प्रसिद्धार्थान्त[रत्वात्]। नामेत्यत्र धामेति शुक्लयजुर्वेदपाठः । तत्र त्रिपादमृतग्रहणमेव युक्तम् । वोचेदिति च तत्र पाठः ।

१७. नः= अम्भस्यपार इत्यारभ्य सर्वमनुसंदधतामस्माकम् । दहरा-

परि द्यावापृथिवी यन्ति सद्यः परि लोकान् परि दिशः परि सुवः ।
ऋतस्य तन्तुं विततं विचृत्य तदपश्यत् तदभवत् प्रजासु ॥ १८ ॥

---

इत्यर्थः । कानजन्तोऽयं शब्दः । **तृतीये धाम्नि** दहराकाशादित्य मण्डलापेक्षया तृतीये परमपदे **अध्यैरयन्त** 'एतत् साम गायन्नास्ते' इत्युक्तरीत्या पर[स्पर]ाभिमुखतया गानं कुर्वन्तीत्यर्थः ॥ १७ ॥

**परि...सुवः** । 'सर्वान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्युक्तरीत्या द्युपृथिव्यादिलोकान् दिग्वर्तिपदार्थान् सुवश्शब्दितभगवल्लोकञ्च परितश्चरन्तीत्यर्थः । वैषम्यादिपरिहाराय कर्मसापेक्षतां ब्रह्मणो दर्शयति—**ऋतस्य...प्रजासु** । [ऋतस्य कर्मणः] **विचृत्य**

---

काशेति । 'तृतीयस्यामितो दिवि' इति छान्दोग्ये (८-५-३) उक्तं तृतीयत्वम्, एतत्प्रश्नोपक्रमोक्तमम्भोभुवनमध्यापेक्षया तृतीयत्वं वा न दहराकाशाद्यपेक्षया तृतीयत्ववत् योगिनामुपस्थिततममित्याशयेन एवमुक्तम् ।

१८. यन्तीति । पूर्वमन्त्रप्रस्तुतानां वेदानामेवात्र कर्तृतयाऽनुषङ्गो युक्तः । अन्याश्रवणात् । सद्य इति युगपत्सर्वसञ्चारप्रतीत्या उत्तरार्धोक्तप्रजानामत्र कर्तृत्वायोगात् । तथाच ये वैकुण्ठे अध्यैरयन्त, त एवेह सर्वत्र चरन्तीत्युक्त्या, स परमात्मा अस्माकं बन्धुः श्रेयोविधाता, न केवलं स्वयमवतीर्य, स्वानुभवनिष्णातान् सूरीनप्यवतार्य सञ्चार्य आचार्यादिपदेषु च स्थापयित्वा सर्वान् उत्तारयतीत्युक्तं भवति । उत्तरार्धे प्रजाशब्दश्रवणात् तस्य बद्धजीवपरत्वात् तद्विषयकथनपरं तत् । अतः, किमिति देवाख्याः सूरय इव सर्वेऽपि नामृतमश्नन्ति, न यथाकामचारिणो भवन्तीत्यत्र प्रवृत्तं तदित्याह वैषम्येति। तन्तुशब्दः 'तनु विस्तारे' इति संतानपरः। संतानश्च प्रसरणं, प्रवाहः, परम्परा, कार्यसंततिरिति नानारूपः। अत्र कार्यं विवक्षितम्।

परीत्य लोकान् परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च ।
प्रजापतिः प्रथमजा ऋतस्यात्मनाऽऽत्मानमभिसंबभूव ॥ १९ ॥

---

**विततं तन्तुं** व्याप्य स्थितं कर्मणः सूक्ष्मरूपमदृष्टमपश्यत् । जीवसमवेतकर्मसाध्यापूर्वाणि(कर्मसमवेतसाध्वसाधुरूपाणि) साक्षात्कृत्य तदनुरोधेन **तदभवत्** । अन्तर्भावितण्यर्थोऽयं शब्दः । तत्तत्कर्मादृष्टानुरोधेन तत्तत् फलम **भवत्** । अभावयत् सृष्टवानित्यर्थः ॥ १८ ॥

**परीत्य....संबभूव** । सर्वान् पदार्थान् व्याप्य तदात्मतया स्थितः प्रजानां **पतिः** शेषी परमात्मा **ऋतस्य** कर्मणः **प्रथमजाः** प्रथमं जनयिता सर्गाद्यसमये कर्मपरिपाकं कुर्वन् स्वयमेवाऽऽत्मनाऽऽत्मानमुत्पादितवान् । स्वयमेव कर्ता करणञ्चेत्यर्थः ॥ १९ ॥

---

**यद्वा कार्पासात् प्रवितात् तन्तुरिव कर्मणः सूक्ष्मं निःसृतमदृष्टमिति स तन्तुः। प्रथमतच्छब्दार्थः परब्रह्म दर्शनकर्तृ स्यात्। तत्कर्म तु तन्तुः। विचृत्येत्यस्य व्याप्येत्यर्थः उपसर्गवशात्। 'चृती हिंसाश्रन्थनयोः' इति हि धातुः। श्रन्थनं = विस्रंसनम्। यथाश्रुतार्थादरणे तु, पूर्वं देवानामत्र लोके सञ्चारस्य कथिततया, अत्र प्रजासु मध्ये या प्रजा ब्रह्मणो देवानाञ्च प्रसादात् कर्मणो विततं तन्तुं विस्रस्य तद् ब्रह्म पश्यति, सा तद् ब्रह्म भवति ; अन्यास्तु विततकर्मतन्तुजालग्रथिताः क्लिश्यन्ते इत्यर्थः स्यात्॥**

**१९. यदनुसञ्चरणं सूरीणाम्, तस्य प्रजास्वामिन एव साक्षात् प्रजाहितार्थसञ्चरणमनन्तरमुच्यते । उत्पादितवानिति । ब्रह्मलोकमभिसंभवितास्मीत्यादौ अभिसंभवतेः प्राप्त्यर्थकत्वस्य प्रसिद्धत्वात् तदादरणे, परमदयालुः परमात्मा सर्वान् लोकान् उत्पाद्य सर्वान् आत्मनः सृष्ट्वा सर्वतः परीत्य महता प्रयासेन कञ्चिदेव जीवात्मानं**

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥
उद्दीप्यस्व जातवेदोऽपघ्नन् निर्ऋतिं मम । [४]

---

**सदसस्पतिं....अयासिषम्** । [नित्य]सूरिपरिषन्नायकम् **अद्भुतम्** अद्भुतगुणशालिनम् (आश्चर्यशालिनम्) **इन्द्र**शब्दोपलक्षित-ज्ञानिनः परमप्रेमास्पदं **काम्यं** कामसाधनं **सनिं** भजनीयम् । 'वन षण संभक्तौ' इति [हि] धातुः । असंकुचितसर्वविधमेधाशालिनं शरण**मया-सिषम्** प्राप्तोऽस्मि इत्यर्थः । **हरिवंशे** पौष्करप्रादुर्भावे, 'अहमग्निर्ब्रह्ममयः सदसस्पतिरद्भुतम्' इति भगवद्वचनानुरोधेन अस्य मन्त्रस्य भगवत्परत्वं द्रष्टव्यम् ॥ २० ॥ **(जातवेदःप्रार्थना)**

**उद्दीप्यस्व....(?)दश** । जातानि सर्वाणि वेत्तीति **जातवेदाः** सर्वज्ञः । हे सर्वज्ञ ! परमात्मन् ! मम **निर्ऋतिं** पापं **अपघ्नन्** एवं

---

यथावस्थितात्मस्वरूपसंपन्नमात्मशक्त्या प्राप्नोतीत्यर्थो ग्राह्यः। अनेन जीवानां संसरणसक्तत्वं ब्रह्मणस्तदुद्धरणव्यग्रत्वञ्च दर्शितं भवति । प्रजापतिरित्यत्र उपस्थायेति, बभूवेत्यत्र विवेशेति च शु. य. पाठः । जा इत्यत्र च जाम् इति ।

२०. अहं संप्रति उक्तरीत्या सर्वार्थविवेकेन परमप्राप्यपर-वासुदेवप्रीणनानुगुणसंपत्तिमान् आसमित्यनुसंधानपरः सदसस्पति-मन्त्रः । प्रियमिति सुखवत् स्वयमिष्टत्वोक्तिः । काम्यमिति काम्य-कर्मादिवत् फलसाधनतया इष्टत्वोक्तिः । काम्यशब्दस्यैव कामसाधन-त्वमर्थो वा । जीवगतमेधात्मत्वाद्वा परस्य मेधात्वम् । अध्याहार-संमतौ सदसस्पतिं प्रति भक्तिमेधावान् आसमित्यर्थः स्यात् ॥

२१. एतावत्पर्यन्तं सुप्तोत्थितस्य प्रातर्निर्वेदधृत्यालम्बनपरि-

पशू ँश्च मह्यमावह जीवनञ्च दिशो द(दि?)श ॥ २१ ॥

मा नो ही ँसीर्जातवेदो गामश्वं पुरुषं जगत् ।

अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥ २२ ॥

पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

---

नाशयन्नेव **उद्दीप्यस्व** प्रकाशस्व । मह्यं त्वदाराधनोपयुक्तान् यज्ञार्थपशून् आनय । दशसु दिक्षु जीवनसाधनमन्नादिकञ्च **आवह** आनयेत्यर्थः ॥

**मा....जगत्** । हे **जातवेदः** सर्वज्ञ ! **नः** अस्माकं त्वदाराधनौपयिकान् पश्वादीन् मा वधीः । हे **अग्ने** अग्रनेतः ! हिंसकरूपमबिभ्रदेव **आगहि** आगच्छ । **श्रिया** ऐश्वर्येण योजयेत्यर्थः । अत्र परमात्मलिङ्गाभावात्, एषाञ्च मन्त्राणां दीपसमर्पणादौ विनियुक्तत्वात् अग्नि-जातवेदआदिशब्दानां प्रसिद्धार्थत्वेऽपि न दोषः ॥ २२ ॥

**(तत्तद्देवतामन्त्राः)**

तत्तद्देवताभक्तानां जप्यान् रुद्रगायत्र्यादिसमाख्यान् मन्त्रानाह—

---

वक्ष्यति । उद्दीपनं प्रकाशनम् ऊर्ध्वप्रसरणातिशयेन द्योतनम् । रात्रौ संकुचितं स्थापितस्य दीपस्य प्रस्थानकाले प्रोज्ज्वालनम् । दिशोदिशेत्यत्र दिशोदशेति भाष्याद्दतपाठ इव । दिशेति पाठे दिशः जीवनानुकूलतया सर्वाः दिशः दिश = देहि, दर्शयेति । 'दिशः इत्यस्यैव दशसु दिक्षु इत्यर्थः । दिशेत्यस्य आवहेति पूर्वश्रुतेन पदेन व्याख्यानम् । तद्विवरणम् आनयेत्यर्थ इति वा कल्प्यम् ।

२२. पूर्वमन्त्रवत् अयमपि दीपप्रोज्ज्वालने उपयुज्यते ।

२३. तत्तद्देवताभक्तानामिति । परतत्त्वविदामेव सतां जातु शीघ्रफलकामनया तत्तद्देवतास्वरूपं यथावदनुसंधाय भगवत्कृपया

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥२४॥
तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥२५॥

---

**पुरुषस्य विद्म** पुरुषमुपास्महे । तदर्थं सहस्राक्ष महादेवं **धीमहि** ध्यायेम । **तत्** ध्यानं रुद्रः **चोदयतु** निर्वर्तयत्वित्यर्थः । 'शङ्करात् ज्ञानमन्विच्छेत्' इत्युक्तरीत्या शङ्करोपासनस्य भगवदुपासनहेतुत्वात् ' **भास्करेणैवं** व्याख्यातत्वाच्च **पुरुष**शब्दो भगवत्परः । सर्वस्य रुद्रपरत्वेऽपि न दोषः ॥

**तत्पुरुषाय....प्रचोदयात्** । स चासौ पुरुषश्च **तत्पुरुषः** । पूर्वोक्तः पुरुषः नारायणः । तमुपास्महे । तदर्थं महादेवं ध्यायेमेत्यर्थः । शिष्टं पूर्ववत् ॥ २४ ॥ **तत्....प्रचोदयात्** । **दन्तिः** गजाननः । **वक्रतुण्डः** वक्रनासिकः । शिष्टं स्पष्टम् ॥ २५ ॥

---

तासां स्थितं काम्यकर्माराध्यत्वफलप्रदत्वादि विमृश्य तद्भक्तानामित्यर्थः । तेन एते मन्त्रा न सर्वैर्नित्यानुसंधेया इत्युक्तं भवति । सहस्राक्षत्वं सर्वज्ञत्वम् । तत्=ध्यानं महादेवविषयकमिव पुरुषविषयकमपि । हेतुत्वादिति । अत्रापि विद्म धीमहीति क्रियाद्वयश्रवणेन विभिन्नवेदनप्रतीतेरिति शेषः । एवञ्चोपरि तत्पुरुषायेत्यत्र तत्पदमत्रोक्तपरमपुरुषपरामर्शि । सर्वस्येति । दुर्गाविष्णुगायत्र्योरिव पादत्रयस्यापि एकविषयकत्वौचित्यपर्यालोचनादिति भावः ।

२४. पूर्ववदिति । अयं भावः—पूर्ववत् सर्वं रुद्रपरमेव सुवचम् । तदा तत्पुरुषायेति तस्य परमात्मनः पुरुषाय=दासाय इत्यर्थकम् । षष्ठीतत्पुरुषः । राजपुरुष इतिवत् । परमपुरुषस्य प्रागुक्तत्वात्, 'ओं तत् सत्' इति निर्देशबलाच्च तत्पदं परमपुरुषपरम् । तेन रुद्रो यथाभूतः, तथाभूतत्वेन तदनुसंधानमव्यामोहेन क्षिप्रमपेक्षितफलप्रदं भवतीति दर्शितम् । एवमुत्तरमन्त्रेष्वप्यभिमतम् ।

तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि। [५] तन्नो गरुडः प्रचोदयात् ॥
कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ॥
नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥
सहस्रपरमा देवी शतमूला शताङ्कुरा ।
सर्वं हरतु मे पापं दूर्वा दुःस्वप्ननाशनी २९ ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा ।

---

**सुवर्णपक्षः** शोभनवर्णयुक्तपार्श्व इत्यर्थः ॥ २६ ॥

**कात्यायनाय....प्रचोदयात्** । गोत्रतः कात्यायन्यै, **कन्यायै** 'कन दीप्तौ' इति हि धातुः । दीप्तिमत्यै कुमार्यै **धीमहि** ध्यायेम । तत् नो दुर्गिः प्रचोदया(येः?)दित्यर्थः। **दुर्गागायत्रीस**माख्यातेयमृक् ॥२७॥

**नारायणाय....प्रचोदयात्** । स्पष्टोऽर्थः ॥ २८ ॥

**(दूर्वाधारणमन्त्रः)**

**सहस्र...नाशनी** । स्नानाङ्गे शिरसि दूर्वाधारणे विनियुक्तोऽयं मन्त्रः। सहस्रादपि परमा अनेकमूलाङ्कुरयुक्ता दूर्वा सर्वं पापं हरत्वित्यर्थः ॥

**(मृद्ग्रहणादिमन्त्रः)**

**अश्वक्रान्ते....पदे पदे** । स्नानकाले मृद्ग्रहणाङ्गमन्त्रोऽयम् ।

---

२८. नारायणायेति ऋक् विष्णुगायत्री ॥

२९. एवं करिष्यमाणसर्वकार्योपयोगितया सपरिवारभगवदनुसंधानं कृत्वा प्रथमकार्यं स्नानं कर्तुं प्रवर्तमान आह सहस्रपरमेत्यादि । एवमत्युत्तमानेकमूलाङ्कुर-दुर्विनाश - दुःस्वप्ननाशनदूर्वाधारणात् स्नातुरनपायसंततिपरिजनादिसमृद्धिसंभवः सूच्यते ।

शिरसा धारिता देवी(वि)रक्षस्व मां पदेपदे ॥ ३० ॥
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना । [६]
भूमिर्धेनुर्धरणी लोकधारिणी ॥ ३१ ॥
मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ।
त्वया हतेन पापेन जीवामि शरदः शतम् ॥
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥ ३२ ॥

---

अश्व-रथ-महा-विष्णुक्रमणसहनशीले वसुन्धरे ! त्वं शिरसा धारिता सती **पदेपदे** सर्वदा रक्षेत्यर्थः ॥

**उद्धृता...बाहुना** । पातालगता त्वं वराहरूपेण भगवता शतबाहुना महता यत्नेनोद्धृताऽसीति स्तुतिः ॥

**भूमि...कृतम्** । मृद्धारणमन्त्रोऽयम । भवन्त्यस्यां सर्वे पदार्था इति भूमिः । सर्वकामदोग्धृत्वात् धेनुः त्वम । निश्चलतयाऽवस्थानात् धरणी । धृङ् अवस्थाने इति हि धातुः । **हन** नाशयेत्यर्थः । शिष्टं स्पष्टम् । **त्वया.....ष्ठितम्** । **शरदः** संवत्सरान् । **जीवामि** जीवानीत्यर्थः ॥ ३२ ॥

---

३०-३२. अश्वेति । चिदचिदीश्वरक्रमणसहनशीला त्वं मम पदन्यासमपि सोढ्वा पदेपदे मां रक्ष । अश्वादिना गमनसमये साक्षात्पदन्यासाभावात् कदाचिदपराधोऽल्पः स्यात् । साक्षात् पदन्यासोऽयमवर्जनीयः सोढव्यः । न हि पदन्यासार्थमेव त्वमुपयुज्यसे । शिरसा धारणीया किल तत्र भवती । विष्णुरपि न त्वां केवलं क्रामति । किन्तु कृष्णस्स त्वामुद्धरति ; बाहुभिः परिरभते

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीꣳ सर्वभूतानां त्वामिहोपह्वये श्रियम् ॥ ३३ ॥
हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥ ३४ ॥
यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ।
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः[७]॥३५

---

**गन्ध....श्रियम्** । अयमपि मृद्धारणविनियुक्तमन्त्रः । गन्धः **द्वारं** व्यञ्जकं=स्वप्रतीत्युपायभूतं यस्याः सा । **दुराधर्षां** दुर्धर्षणाम् । पापैरिति शेषः । **करीषिणीं** गोमयादिसंयुताम् । **उपह्वये** समीपे आह्वयामीत्यर्थः ॥ ३३ ॥

(तीर्थाधिदेवताप्रार्थनादि)

**हिरण्यशृङ्गमिति** तीर्थाधिदेवताप्रार्थनमन्त्रः । **हिरण्यशृङ्गः** रमणीयायुध इत्यर्थः । शिष्टं स्पष्टम् ॥ ३४-३५ ॥

---

चेति । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः' इति भूसुखप्रदत्वरूपं कृष्णत्वं पुष्कलं श्रीश्वेतवराहे । एतदारभ्य कतिपयवाक्यानां विनियोगभेदमपि उपरि दर्शयिष्यामः। धरणी । ध्रियते =न चलति अचला हि सा । हतेन पापेनेति उपलक्षणे तृतीया । हतपापोपलक्षितत्वं पापहतिविशिष्टत्वम् । करीषिणीम् । स्नानात् पूर्वं जातु करीषविशिष्टया मृदा पुण्ड्रधारणं यतयोऽनुतिष्ठन्ति । श्रियमिति भूम्यर्थकमिति प्रागेव अद्भ्यस्संभूत इति प्रतीकावसरे भाषितम् ।

३५. कर्मणा = कर्मप्रधानेन कायेन । तदिति पदं समाहारैक-

सुमित्रा न आप ओषधयः सन्तु

दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः ॥ ३६ ॥

नमोऽग्नयेऽप्सुमते नम इन्द्राय

नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः ॥ ३७ ॥

यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् ॥ ३८ ॥

अत्याशनादतीपानात् यच्च उग्रात् प्रतिग्रहात् ।

तन्मे वरुणो राजा पाणिना ह्यवमर्शतु ॥ ३९ ॥

सोऽहमपापो विरजोनिर्मुक्तो मुक्तकिल्बिषः ।

---

**सुमित्रा न आप** इति तीर्थाभिमन्त्रणमन्त्रः । स्पष्टोऽर्थः ॥ ३६ ॥

**नमोऽग्नये....नमोऽद्भ्यः** । जलान्तर्वर्तिदेवतानमस्कारार्थोऽयं मन्त्रः । **अप्सुमते** जलान्तर्वर्तिने । **वारुणी** वरुणस्य पत्नी ॥ ३७ ॥

**यदपां....गच्छतात्** । स्नानकाले मलनिरसनार्थोऽयं मन्त्रः ॥ ३८ ॥

**(मूर्ध्नि जलसेचनमन्त्रौ)**

**अत्याशनात्...ह्यवमर्शतु** । **अत्याशनं** शास्त्रनिषिद्धाशनम्। **अतीपान**मपि तादृशम् । **अवमर्शतु** परिमार्ष्टु । अपनयत्वित्यर्थः । शिष्टं स्पष्टम् ॥

**सोऽहम्...ब्रह्मसलोकताम्** । पाणिना विमृष्टोऽहं अपापः रजोगुणेन विमुक्तः रजोगुणप्रयुक्तमनोदोषेण च मुक्तः सन् ब्रह्मसालोक्यं

---

वद्भावेन असाधुसंबन्धिभोजनपापपुरुषमूलकप्रतिग्रहादिसर्वपरम् । पुनन्तु = शोधयन्तु अपसारयन्तु ।

३९. अत्याशनादिति । अत्यशनातिपानप्रतिग्रहजं यत् पापम्, तत् मत्पाणिसिक्तेन जलेन वरुणपाणिरूपेण स परिमार्ष्टु इत्यर्थः ।

नाकस्य पृष्ठमारुह्य गच्छेत् ब्रह्मसलोकताम् ॥ ४० ॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमँ सचता परुष्णिया।

असिक्निया मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया॥

ऋतञ्च सत्यञ्चाभीद्धात् तपसोऽध्यजायत । [८]

---

गच्छेयम्। **गच्छेदिति** पुरुषव्यत्ययः छान्दसः। इमौ मन्त्रौ स्नानकाले मूर्ध्नि जलसेचनार्थौ ॥ ४० ॥ **(गङ्गादिनदीप्रार्थना)**

**इमं...सुषोमया** । हे गङ्गे! हे यमुने! हे सरस्वति! हे शुतुद्रि! परुष्ण्या नद्या सह हे मरुद्वृधे ! असिक्निया सह आर्जीकीये! वितस्तया सुषोमया नद्या सह, **आसचत** आगच्छत । **शृणुह्या सुषोमयेत्यत्र** आङः **सचतेत्यत्रान्वयः** । आगत्य [इमं मे ?] **स्तोमं** स्तोत्रं **शृणुहि** शृणुतेत्यर्थः ॥ ४१ ॥

## (अघमर्षणसूक्तम्)

अन्तर्जले निमग्नेन जप्यमघमर्षणसूक्तमाह **ऋतञ्च....अध्यजायत** । सर्गाद्यसमये **अभीद्धात्** उत्पन्नात् **तपसः** परमात्मसंकल्पात् । **ऋतम्**। ऋ गतौ। ऋच्छति=गच्छति विकारमिति अचेतनं प्रधानमुच्यते।

---

**४१. इममिति। सचता इति दीर्घः ५४ मन्त्रे पारया, भवा इत्यत्रेव द्रष्टव्यः। सचता शृणुहि इत्यत्र श्रुत्वा आगच्छतेति विद्यारण्यः। आगत्य शृणुतेति भाष्ये। इमं मे इत्युपक्रमः स्तोत्रविषय इति श्रवणस्य प्राधान्यम्। आगमनमपि विधेयम्। अघमर्षणसूक्तं वक्ष्यमाणमेव स्तोमः स्यात्।**

ततो रात्रिरजायत ततस्समुद्रो अर्णवः ॥ ४२ ॥
समुद्रादर्णवादधि संवत्सरो अजायत ॥ ४३ ॥
अहोरात्राणि विदधद् विश्वस्य मिषतो वशी ।
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ॥
दिवञ्च पृथिवीञ्चान्तरिक्षमथो सुवः ॥ ४४ ॥

---

**सत्यमिति** स्वरूपान्यथाभावशून्यश्चेतनवर्गः । प्रकृतिपुरुषावुत्पन्नावित्यर्थः । **ततो रात्रिरजायत** । अज्ञानहेतुत्वात् **रात्रिरिति** प्राकृतो महदादिवर्ग उच्यते । **ततः समुद्रो अर्णवः** । **समुद्र**शब्देन जलराशिवाचिना भूतवर्ग उपलक्ष्यते । **अर्णव**शब्देन तद्विकारब्रह्माण्डम् । **समुद्रात्....अजायत** । तत ऊर्ध्वम् , 'प्रजापतिः संवत्सरो महान् कः' इति प्रसिद्धोऽण्डाधिपतिरजायतेत्यर्थः । **अहो...सुवः** । **मिषतः** लब्धसत्ताकस्य जगतः **वशी** नियन्ता **धाता** चतुर्मुखः अहोरात्राणि विदधत् सन्- हेतौ शतृप्रत्ययः; अहोरात्रविधानाय सूर्याचन्द्रौ पूर्वकल्प इव=

---

४२—४४. ऋतमित्यादि ऋक्त्रयमघमर्षणसूक्तम् । तस्य भास्करच्छायया परिष्कृत्य व्याख्यानम् । अभीद्धात् तपस इत्यस्य अभिध्यानरूपदीप्तिविशिष्टात् तपःपदवाच्यात् परमात्मन इत्यर्थः श्रुतप्रकाशिका (१-४-२९) स्वरसः । समुद्रशब्दस्य सम्यक् उद्द्रवति उत्पद्यते जगदस्मादिति यौगिकत्वमिह भास्करदर्शितं ५१ मन्त्रे आदृतम् । ततस्समुद्रस्ततोर्णव इति भाष्ये ततःपदाभावात् समुद्ररूपोऽर्णव इत्येकवाक्यतैव । (पाञ्चभौतिकत्वादिना) समुद्रात्मकं आवरणभूतेन अर्णसा वेष्टितं ब्रह्माण्डमिति तदर्थः। धातेति परमात्मवाचीति श्रुतप्रकाशिका (१-४-९) । पूर्वकल्प इवेत्यस्य विवरण

यत् पृथिव्या॑ रजः स्वमान्तरिक्षे वि (च) रोदसी।
इमा॑स्तदापो वरुणः पुनात्वघमर्षणः ॥ ४५ ॥
एष भूतस्य भव्ये(मध्ये) भुवनस्य गोप्ता।
एष पुण्यकृतान् लोकानेष मृत्योर्हिरण्मयम् ॥ ४६ ॥

---

तत्समाननामरूपौ, द्युपृथिव्यादीन्यपि सृष्टवानित्यर्थः ॥४२-४४॥

(अघमर्षणप्रार्थना)

**यत्...मर्षणः** । पृथिव्यामन्तरिक्षे च **रोदसी**=रोदस्योरित्यर्थः। सप्तमीद्विवचनस्य, 'सुपां सुलुक्' इति लुक्। इहलोके परलोके च यत् **स्वम्** आत्मीयं **रजः** पापम् । इमानि पापानि । वृत्त्यभिप्रायेण बहुवचनम् । आपश्च तदधिष्ठाता अघानामपनोदको वरुणश्च पुनात्वित्यर्थः ॥ ४५ ॥

**एष....सुवः** । **एषः** वरुणः भूतस्य भविष्यतश्च भुवनस्य **गोप्ता** जलाधिष्ठातृतया रक्षकः । पुण्यकृतानां लोकानामपि रक्षकः । मृत्योर्हिरण्मयं लोकं गोप्ता । द्यावापृथिव्योर्हिरण्मयं लोकञ्च गोप्तेत्यर्थः । भूलोकेऽपि भूमयाः स्वर्गलोकाः सन्तीति प्रसिद्धेः **द्यावापृथिव्योः**

---

तत्समाननामरूपाविति । दिवमिति ध्रुवस्थानोपरितनलोकः सत्यलोकान्त उच्यते। अन्तरिक्षं भूमिसूर्यान्तरम्। सुवः ध्रुवसूर्यान्तरम्।

४५. विरोदसी इत्यत्र विइत्यस्य विशेषेणेत्यर्थः। इमान् तत् तानीमानीत्यर्थः। रजोपनेतृत्वमपां प्रसिद्धम् । पापमपि रजस्तदपनोद्यमेव।

४६. लोकान् इत्यादिद्वितीयान्तेषु प्रयच्छतीत्येवमध्याहारकल्पने गौरवम्। शिक्षाधीत्यत्वान्वयो भवितुमर्हति । तदपेक्षया पूर्वप्रयुक्तगोप्तृपदानुषङ्गो युक्तः। गोप्तेत्यस्य तृन्नन्तत्वाश्रयणात् द्वितीयोप-

द्यावापृथिव्योर्हिरण्मय॒ꣳ स॒ꣳश्रित॒ꣳ सुवः। स नस्सुवस्स॒ꣳशिशाधि॥

आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि।

---

संश्रितं सुवरित्यस्य नानुपपत्तिः। **स नः सुवः संशिशाधि।** हे परमात्मन्! स त्वं=जगत्कारणभूतः त्वं **नः** अस्माकं **सुवः** स्वर्गलोकं भगवल्लोकं सम्यक् शिशाधि। 'बहुलं छन्दसि' इति श्लुः। **शाधि।** शासनं ज्ञापनम्; प्रदर्शनमिति यावत्। दर्शयेत्यर्थः॥ ४६-४७॥

**(आत्मसमर्पणम्)**

**आर्द्रं....अस्मि।** आर्द्रशब्देन जलतत्त्वमुच्यते। आद्यज्योतिश्शब्देन स्वप्रकाशत्वमुच्यते। द्वितीय**ज्योति**श्शब्देन तेजस्तत्त्वमुच्यते। **ज्वलति** प्रकाशत इत्यर्थः। प्रकाशमानसर्वभूतात्मभूतोऽस्मीत्यर्थः। अहंशब्देन चापर्यवसानवृत्त्या परमात्माऽभिधीयते। **योऽहमस्मि,**

---

पत्तिः। पूर्वं संबन्धसामान्ये भुवनस्येति षष्ठी। एवं सर्वलोकतोऽप्युत्कृष्टतः स्वयमुत्कृष्टसुवर्मात्रस्य स्वार्थं प्रार्थना स नः सुवरिति। मृत्योर्हिरण्मयम् दुःखभूमौ नरकेऽपि मृत्युनाऽनुभाव्यं यत् सुखमयं तत्।

४८. 'वायुरनिलममृतमथेदं भस्मान्तं शरीरम्' (ई.) इति मन्त्र इव देहाद्यतिरिक्तात्मतत्त्वविवेचनं क्रियते आर्द्रमिति। आर्द्रमपि ज्वलतीत्याश्चर्यम्। देहातिरिक्तात्मज्ञानमार्द्रज्वलनवद् दुर्लभम्। देहस्य भस्मीभावोऽत्र विवक्षितः। यद्वा आर्द्रज्योतिःपदाभ्यां जलतेजस्तत्त्ववाचिभ्यां सर्वाचेतनोपलक्षणात् सर्वमचेतनं विविक्तं प्रकाशत इत्यर्थः। अथवा आर्द्रपदं पाञ्चभौतिकस्य, 'आपः पुरुषवचस' इत्याद्युक्तस्य देहस्य ग्राहकम्। ज्योतिःपदं तैजसपदवाच्यसर्वेन्द्रियपरम्। देहः पृथक् प्रकाशते। अहं स्वप्रकाश(ज्ञान)रूपोऽस्मि। इन्द्रियाणि पृथक् प्रकाशन्ते। अहं तदधीनानेकपरिणामधर्मभूतज्ञानाधीन

योऽहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा ॥४८॥

अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः ।
वरुणोऽपामघमर्षणस्तस्मात् पापात् प्रमुच्यते ॥ ४९ ॥

रजोभूमिस्त्वमाँ रोदयस्व प्रवदन्ति धीराः ।

---

**ब्रह्माहमस्मि** । अहं देहेन्द्रियादिविलक्षणतया यादृशरूपोऽस्मि, तादृशोऽहं ब्रह्मात्मकोऽस्मि, ब्रह्मशेषभूतोऽस्मीत्यर्थः । **अहमेवाहं मां जुहोमि स्वाहा** । अहं यादृग्रूपः, तादृग्रूप एव सन्, 'ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः' इत्युक्तरीत्या इतरविलक्षणत्वेन ज्ञानवानेव सन् शेषभूतं स्वात्मरूपं आत्मापहारदोषशान्तये प्रत्यर्पयामीत्यर्थः । अनेन आत्मसमर्पणलक्षणप्रपदनमनुष्ठितं भवति ॥ ४८ ॥

## (उक्तविधस्नानफलम्)

**अकार्य...प्रमुच्यते** । **अवकीर्णी** क्षतव्रतः । यस्मात् अपामधिष्ठानदेवता वरुणोऽ**घमर्षणः** अघानां भेत्ता, तस्मात् सर्वोऽपि पातकी पातकात् स्नानमात्रेण प्रमुच्यत इत्यर्थः ॥ ४९ ॥

**रजो....धीराः । रजोभूमिः** कर्मभूमिरियं तु **अमाम्** अघमर्षणस्नातुर्मत्तोऽन्यं **रोदयस्व** रोदयतु । एवं धीराः प्रवदन्तीत्यर्थः ।

---

बृहत्त्ववां(ज्ञानवां)श्चास्मि । एतादृशोऽहं ब्रह्मात्मकोऽप्यस्मि । एवं शुद्धस्वरूपस्सन्नेवाहमात्मानं (परमात्मनि) अर्पयामीति मन्त्रार्थः ।

४९. क्षतव्रतः भग्नब्रह्मचर्यव्रतः ।

५०. स्नात्वोत्थितेन स्वस्य याम्ययातनादिनिवृत्तिरनुसंधीयते रजइत्यादिना । अनन्तरेण भगवद्विभूत्यनुसंधानम् । हतदेवानिष्ट-

पुनन्तु ऋषयः पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः ॥५०

आक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन् प्रजा भुवनस्य राजा [१०]।

वृषा पवित्रे अधिसानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुः॥

जातवेदसे सुनवाम सोममरातीयतो नि(ज)दहाति वेदः।

---

**पुनन्तु...मर्षणः** । स्पष्टोऽर्थः ॥ ५० ॥

**(भगवद्विभूत्यनुसंधानम्)**

**आक्रान्....इन्दुः** । **समुद्रः** सम्यक् उद्द्रवति उत्पद्यते जगत् अस्मादिति **समुद्रः** जगत्कारणम् । प्रजाः जनयन् । **भुवनस्य राजा** रक्षिता। **आक्रान्** आक्रान्तवान्; व्यापक इत्यर्थः। क्रमेर्ण्विप्रत्यये, 'मो नो धातोः' इति नत्वे रूपम् । **वृषा** कामानां वर्षुकः । गुणैर्**बृहत्** । **सोमः** चन्द्र इवाऽऽनन्दयिता । **इन्दुः** परमैश्वर्यशाली । पुरुषार्थं **सुवानः** दाता परमात्मा **प्रथमे** मुख्ये, **विधर्मन्** जगद्विलक्षणे, **अधिसानो** सानुवदुन्नतप्रदेशे, **पवित्रे** शुद्धे, **अव्ये** अव्यये भगवल्लोके **वावृधे** निरतिशयदीप्तियुक्ततया वर्धते इत्यर्थः । अयं भगवद्विभूत्यनुसंधानमन्त्रः ॥ ५१ ॥

**(दुरिततरणार्थं जप्याः)**

**जातवेदसे...अग्निः** । दुरिततरणार्थतया जप्यमन्त्रोऽयम् । **जातवेदसे** सर्वज्ञाय परमात्मने **सोमं** पूजोपकरणं हविः **सुनवाम** । सोमाभिषवं करवामेत्यर्थः। **अरातीयतः** शत्रुवदाचरतः शत्रूनिति यावत् ।

---

**निवृत्तीष्टप्राप्त्यनुसंधानं जातवेदसे इत्यादिना विव्रियते । तत्र पञ्च मन्त्रा आद्याः दुर्गनिवर्तनरूपैकार्थपरा इति ज्ञायते । अन्त्येनाभीष्टप्रार्थना ।**

स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः ॥

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥ ५३ ॥

---

**वेदो** धनं **निजहाति** निजहात्वित्यर्थः । **सः अग्निः** अग्रनेतृतया अग्निशब्दवाच्यः **पर्षत्** पालकः परमात्मा **अति दुर्गाणि** विश्वानि दुरितानि नावा सिन्धुमिव तारयत्वित्यर्थः ॥ ५२ ॥

## (दुःखनिर्हरणार्थदुर्गाप्रार्थना)

**तामग्नि....नमः** इति दुःखनिर्हरणाय दुर्गाप्रार्थनामन्त्रः । **वैरोचनीं** कान्तिमतीम् । कर्मफलेषु प्रेप्सितेषु जुष्टां विघ्ननिवारणायोपास्यमानां प्रपद्ये । **सुतरसि** अन्तर्भावितण्यर्थोऽयं शब्दः सम्यक् तारयसि । **तरसे** बलाय नमः ॥ ५३ ॥

---

५२. पर्षदति इत्यस्य अतिपर्षत् अतिशयेन नाशितवानित्यर्थमुक्त्वा, दुरिता अतीत्यत्र दुरितानि अतिशयेन तारयतीति शेषपूरणं विद्यारण्यकृतम् । अत्रापि भाष्ये तारयतु इत्युक्तम् । उपरि अतिपर्षि इत्यत्रेव अत्रापि पर्षदित्यस्य तारणं पालनं वार्थो युक्त इति भास्करेण, पर्षदिति पालयतु इत्यर्थे वाक्यसमापकक्रियापदं कृतम् । अति इत्यस्य अतीत्येत्यर्थः ।

अत्र स्नानप्रकरणगतानां मन्त्राणां विनियोगभेदः श्रीमदाह्निकग्रन्थे दर्शितस्तु;प्रातर्धर्मशास्त्रोक्तस्नानं प्रस्तुत्य, " 'हिरण्यशृङ्गं', 'यन्मे मनसा' इति द्वाभ्यामवगाह्य, 'सुमित्रा न आप ओषधयः सन्तु' इत्यात्मानमभिषिच्य, 'दुर्मित्राः...द्विष्मः' इति जलं हस्ताभ्यां तीरे त्रिर्निक्षिप्य, 'नमोऽग्नये...नमोऽद्भ्यः' इति तीर्थाधिदेवतं श्रियःपतिं

अग्ने त्वं पारया नव्यो अस्मान् स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ ५४ ॥

---

(अग्न्युपस्थानम्)

**अग्ने....शंयोः** । अग्न्युपस्थानमन्त्रोऽयम् । अग्ने ! **नव्यः** नव एव नव्यः ; युवा । जरादिशून्यस्त्वं **स्वस्तिभिः** शोभनैः तव संकल्पैः **अतिदुर्गाणि विश्वानि** दुरितानि **पारय** तारय । **पूश्च** पुरी च **बहुला** धनधान्यादिसमृद्धा, **उर्वी** विपुला **पृथ्वी** च **नः** अस्माकं भवत्विति शेषः । **तोकाय** अपत्याय, **तनयाय** तत्पुत्राय च, **शंयोः** शं सुखं **यौति** मिश्रयतीति शंयोः। विच्प्रत्ययान्तः ओकारान्तशब्दः। सुखप्रापको भव । [**पारया** ?] **भवा** इति दीर्घः छान्दसः । शुद्धयाजिनामग्न्यादिशब्दाः, 'साक्षादप्यविरोधं जैमिनिः' इति न्यायेन अग्रनेतृत्वादिना भगवत्पराः ॥

---

प्रणम्य, 'यदपां...गच्छतात्' इति जलस्थामेध्यांशं दक्षिणतो निरस्य, 'अत्याशनात्...सोहम्—' इति ऋग्भ्यां तोयं त्रिरालोड्य......'इमं मे गङ्गे—' इति पुण्यतीर्थानि संस्मृत्य,......(अघमर्षणसूक्तस्य अघमर्षण ऋषिः अनुष्टुप्छन्दः, भाववृत्तो देवता) अघमर्षणजपे विनियोगः—निमग्नः, 'ऋतञ्च...अथो सुवः' इति षड्वाक्यं–यथा शक्त्यावर्त्य, ...भगवन्तं...गङ्गां ध्यात्वा...बाह्यमान्तरञ्च मलं संक्षाल्य, 'यत् पृथिव्यां...संशिशाधि' इत्यञ्जलिना जलं गृहीत्वा शिरस्यभिषिच्य, 'आर्द्रं...स्वाहा' इति चुलकेन जलं पीत्वा, 'अकार्य... मर्षणः' इति द्वाभ्यां प्रोक्ष्य...' इति ;

ततः एकोर्ध्वपुण्ड्रपक्षे—'उद्धृतासि' इत्यादिना 'प्रतिष्ठितम्' इत्यन्तेन मन्त्रेण प्रणवेन वा धृत्वा' इति ;

पुनर्मध्याह्ने धर्मशास्त्रीयस्नाने, दूर्वां, 'अश्वक्रान्ते...प्रतिष्ठितम्'

विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरिताऽतिपर्षि ।
अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्य(भूत्व)विता तनूनाम् ॥
पृतनाजित॑ सहमानमग्निमुग्रँ(मुग्रमग्निँ) हुवेम परमात् सधस्थात् ।
स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः ॥ ५६ ॥
प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।

---

**विश्वानि....अतिपर्षि** । हे जातवेदः! **दुर्गाणि** दुरितानि हन्तीति दुर्गहा । तादृशस्त्वं, **सिन्धुं न नावा** । नशब्दः इवार्थे । नावेव, विश्वानि दुरितानि **अतिपर्षि** अतिक्रम्य पालय । 'पृ पालन-पूरणयोः' इति हि धातुः॥ **अग्ने....तनूनाम्** । हे अग्ने ! अत्रिमहर्षिवत् **मनसा गृणानः** बाह्येन्द्रियनिरपेक्षतया मनसैव सर्वं पश्यन् त्वं **अस्माकं तनूनाम्** अस्मत्संबन्धिशरीराणां **अविता** रक्षकः **भूतु** भवेत्यर्थः ॥५५॥

**पृतनाजितं....सधस्थात्** । **पृतनाजितं** परसैन्यजितं **सह-मानम्** आश्रितापराधसहं शत्रुविषये उग्रं अग्निं **परमात् सधस्थात्** उत्कृष्टात् स्थानात् । सह तिष्ठति अस्मिन्निति सधस्थः । 'सधमादस्थयोः छन्दसि' इति सहशब्दस्य सधादेशः । **हुवेम** आह्वयेमेत्यर्थः । **स नः....अग्निः** । आश्रितापराधं क्षमत इति **क्षामत्** । तादृशोऽग्निः **अतिदुर्गाणि विश्वा** सर्वाणि दुरितानि **अति** अतिवाह्य **पर्षत्** पालको भवत्वित्यर्थः॥

**प्रत्नोषि....सत्सि** । अध्वरेषु **ईड्यः** स्तुत्यः आश्रितानां **कं** सुखं

---

इति मृदश्च गृहीत्वा तीरं संशोध्य संस्थाप्य—स्नात्वा मृदं गृहीत्वा, 'अश्वक्रान्ते' इति सप्तवाक्यान्युच्चार्य आलिप्य, 'गन्धद्वाराम्' इति गोमयमालिप्य स्नात्वा'' इत्येवम् ।

स्याश्चाग्ने तनुवं पिप्रि(प्र)यस्वास्मभ्यंञ्च सौभगमायजस्व [११] ॥ ५७ ॥

परस्तात् यशो गुहासु मम सुपर्णपक्षाय धीमहि शतधाहुता पुनः पुनराजायत सुवो राजा स्वधस्थान् त्रीणि च (अनु १)

भूरग्नये पृथिव्यै स्वाहा भुवो वायवेऽन्तरिक्षाय स्वाहा सुवरा-दित्याय दिवे स्वाहा भूर्भुवस्सुवश्चन्द्रमसे दिग्भ्यस्स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवस्सुवरोम् । [१२] (अनु २) ॥ ५८ ॥

---

**प्रत्नोषि** [प्र १] तनोषि **सनात्** सनातनः **होता** दाता **नव्यः** युवेव **सत्सि** सीदसि । वर्तस इत्यर्थः । **स्वां...यजस्व** । हे अग्ने ! अस्मद्दत्तेन हविषा स्वां तनुं प्रीणय । अस्मभ्यञ्च सौभाग्यम् **आयजस्व** प्रयच्छ ॥

## (भूरादिरुपासनमन्त्राः)

**भूरग्नय** इत्यादिमन्त्राः ब्रह्मोपासनादौ विनियुक्ताः । भूरिति व्याहृति प्रतिपाद्याय **अग्नये** अग्न्यन्तर्यामिणे **पृथिव्यै** पृथिव्यन्तर्यामिणे स्वाहेति आत्महविस्समर्पणमन्त्रः । एवमुत्तरत्रापि । **भूर्भुवस्सुवरोमि**ति । भूरादिकं सर्वं **ओम्** ब्रह्मैव । 'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इत्युक्तेः ॥

---

५८-६०. भूरित्यादि । 'स भूरिति व्याहरत् भुवमसृजत' इत्युक्तव्याहरणनिबन्धनमासां व्याहृतिपदवाच्यत्वम । यद्वा व्याहृति-पदवाच्यत्वप्रसिद्ध्या, 'व्याहृतिं प्रयुयुजे' इत्यर्थे 'व्याहरत्' इत्युक्तिः । भूरादिपदानां स्वाहेत्यत्रान्वयः । अव्ययत्वात् चतुर्थ्या लुक् । तानि च पृथिव्यादिकवाचीनि ; तत्तदधिष्ठात्रग्न्यादिदेवतापराणि च । अत्र च ब्रह्मोपासनविनियोगात् परमात्मपर्यन्तार्थकत्वं भावितम् । एव-

(अनु ३) भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय दिवे स्वाहा भूर्भुवस्सुवरन्नं चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवस्सुवरन्नमोम् [१३] ॥५९॥

भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवस्सुवर्महरोम् [१४] (अनु ४) ॥ ६० [१५] पाहि नो अग्न एनसे स्वाहा । पाहि नो विश्ववेदसे स्वाहा ।

---

**भूरन्नमिति** । अत्र **भूरिति** प्रतिपाद्यस्य परमात्मनः अन्नमित्यनेन अस्मिन्ननुवाके भोग्यत्वमुच्यत इति विशेषः ॥ ५९ ॥

चतुर्थानुवाके तस्यैव महत्त्वविशेषितस्य कीर्तनम् ॥ ६० ॥

**पाहि...स्वाहा । एनसे** एनसः, पापादित्यर्थः । विश्वं वेत्तीति

---

मुपरि अन्नमहःपदाभ्यां परमात्मगतभोग्यत्वमहत्त्वविवक्षा च दर्शिता । एवञ्चाष्टमानुवाके, भूर्भुवस्सुवर्ब्रह्म' इत्यत्र दृष्टिविधित्यागेन विशिष्टोपासनविधिरेव स्यात् । विशेषतो दृष्टिविधिफलस्य कस्यचिददर्शनात् । दशमारम्भे परविद्याफलोक्तेश्च तस्याः एतद्विद्याफलकीर्तनरूपत्वसंभवात् । दशमानुवाकारम्भे, 'एवमङ्गान्युपदिश्य' इत्युक्तिः— 'उपासनाङ्गमन्त्राणां ऋतादीनाञ्चोपदेशः कृतः । अथ विहितोपासनविषयस्य ब्रह्मणः स्वरूपादिप्रपञ्चनमुपरि' इत्यर्थिका स्यात् । परंतु ऋतादिसर्वधर्मस्थानाभिषिक्तं व्याहृत्युपासनमिदं न परविद्या, किंतु तदुपयोगीत्येव भाष्यस्वरसगतिः ।

यशं पाहि विभावसो स्वाहा । सर्वं पाहि शतक्रतो स्वाहा ॥(अनु ५)॥

---

**विश्ववेदाः** सर्वज्ञः । हे विश्ववेद इत्यर्थः । विभक्तिव्यत्ययः छान्दसः । **विभावसुः** प्रकाशक इत्यर्थः । शतक्रतुनिर्वर्तकत्वादग्नेश्शतक्रतुत्वम् ॥ ६१

---

६१. अत्रेदमपि चिन्त्यते—द्वितीयतृतीयचतुर्थानुवाकैः त्रेधा व्याहृतिमन्त्रा उपासनाङ्गभूता दर्शिताः । तन्मन्त्रविवक्षितात्मसमर्पण-विशदीकारेण स्वाहान्तमन्त्रचतुष्टयं नमःस्वधामन्त्रद्वयञ्चोक्तम् । पञ्चमानुवाकेऽपि स्वाहान्तचतुष्कमुक्तं षष्ठानुवाकशेषं स्यात् । स च स्वाहापदानि विहाय दर्शने अनुष्टुब्रूपः । तत्र व्याहृतित्रयप्रतिपाद्यानां अग्निवाय्वादित्यानां क्रमान्निर्देशः स्यात् । विभावसुपदं हि सूर्ये रूढमादित्यवाचि । विश्ववेदसे इति पदं जातवेदस इतिवद्वा अन्यथा वा यथा अग्निपरमुच्यते, तथा वायुपरमपि स्यात् । वेदःपदस्य धनार्थकस्य विद्यते लभ्यते इति निरुक्तव्याख्यादर्शिता व्युत्पत्तिः । विश्वञ्च लभ्यते वायुना । 'सूत्रात्मा वायुः सदागतिः सर्वव्याप' इति बृहदारण्यकादिसिद्धम् । एवञ्च शतक्रतो इति पदं प्रणवप्रवक्तृतया समनन्तरोच्यमानेन्द्रपरमेव स्यात् सर्वकर्मसमाराध्यतया शतक्रतुः प्रणवार्थः परमात्मैव वा इन्द्रः ॥ ६२. एवं व्याहृतित्रयविवरणे प्राक्-क्रमेऽथ मन्त्रषट्कप्रणवप्रभाव उच्यते यश्छन्दसामिति । तत्र 'नमो देवेभ्यः स्वधा पितृभ्यः' इति पूर्वपूर्वानुवाकान्त्यैवोक्तम् । अतः ऋषिभ्य इत्यस्य उपर्यन्वयमस्वीकृत्य ऋषिभ्यः प्रोवाचेति विद्यारण्यसंमतरीतिः स्यात् । भाष्येऽपि देवपितृव्याहृतीरित्येवोक्तम् । देवान् पितॄन् व्याहृतीश्चेति तदर्थः । न तु ऋषिकीर्तनम् । क्वचित्तु देवऋषिपितृव्याहृतीरिति पाठः । तत्रापि ऋषिदेवेति क्रमेण भाषणं युक्तम् । अत्र प्रश्ने लिङ्गवचनव्यत्ययस्य सर्वत्रोपलम्भात् अत्रैव स्वतामित्यस्य सः तामिति पदच्छेदपक्षे तामुपनिषदिति-व्यत्ययप्रयोगानुसाराच्च इन्द्रियेभ्यः स्वशिष्येभ्य ऋषिभ्य इत्यर्थो भवेत् । 'इन्द्रियाय ज्ञानसाम-

यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाᳪस्याविवेश।
स ताᳪ शिक्यः पुरोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्यो
नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवस्सुवरोम् [१६] (अनु ६) ६२॥
नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं
कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओम् [१७] (अनु ७) ॥ ६३ ॥

---

**यश्छन्दसां....विवेश** । छन्दसां वेदानां **ऋषभः** श्रेष्ठः । सकलवाक्प्रकृतित्वेन विश्वरूपः प्रणवः सर्वच्छन्दोभ्यः पूर्वमुत्पन्नः छन्दांस्याविवेश । 'ओङ्कारेण सर्वा वाक् संतृण्णा' इति श्रुतेः। सर्ववेदानामोङ्कारसापेक्षत्वाच्च । **स...इन्द्रियाय** । सः विद्यानां शिक्यवत् आश्रयभूत इन्द्रः ताम् ओङ्काररूपामुपनिषदं **इन्द्रियाय** इन्द्रशिष्याय प्रोवाचेत्यर्थः । 'इन्द्रियमिन्द्रलिङ्गम्' इत्यादिना इन्द्रसृष्टाद्यर्थे **इन्द्रिय**शब्दसाधुत्वम् । दोषशान्त्यर्थं शान्तिरूपतया देव [ऋषि] पितृव्याहृतीः कीर्तयति **ऋषिभ्यो (?) नमो....सुवरोम्** ॥ ६२ ॥

अधिगतस्य अविस्मृतिप्रार्थनामन्त्रः **नमो....ओम्** । **ब्रह्मणे** परमात्मने नमः । अधीतस्य **धारणम्** अविस्मृतिरस्तु । **अनिराकरणं**

---

थ्यर्थं ऋषिभ्यः प्रोवाच' इति विद्यारण्योक्तं वाऽस्तु । पूर्वम् अन्नत्वमहत्त्वानुसंधानवत् अत्र छन्दसामृषभत्वाद्यनुसंधानविशिष्टोपासनं विवक्षितं स्यात् । अत्र, 'भूर्भुवस्सुवश्छन्द ओम्' इत्यपि पाठः । तदा छन्दस्त्वानुसंधानं स्पष्टम् । छन्दस्त्वञ्च छन्दसामृषभत्वात् छन्दोजातत्वात् छन्दःप्रविष्टत्वाच्च विश्वरूपे उपपद्यते । एवं चतुर्धा भूर्भुवस्सुवर्व्याहृतियुक्तमुपासनमुक्तं भवति—इति ।

ऋतं तपस्सत्यं तपः श्रुतं तपश्शान्तं तपो दानं तपो यज्ञस्तपो भूर्भुवस्सुवर्ब्रह्मैतदुपास्यैतत् तपः [१८] (अनु ४) ॥ ६४ ॥

यथा वृक्षस्य संपुष्पितस्य दूराद् गन्धो वात्येवं पुण्यस्य कर्मणो दूराद् गन्धो वाति, यथाऽसिधारां कर्तेवहितामवक्रामेन यद्युवेयु(हु)वे

---

अविस्मृतं यथा भवति तथा धारयिता भवेयम । अमुष्य मम कर्णयोः श्रुतं मा च्यवत्वित्यर्थः ॥ ६३ ॥

(तपःप्रभेदाः)

ब्रह्मज्ञाने तपस आवश्यकतां दर्शयन् तपस एवावश्यापेक्षित-सत्यश्रुतादिरूपत्वमित्याह **ऋतं तपः....यज्ञस्तपः** । **ऋत** सत्यवचनम् । **सत्यम्** । एतत्तु, 'सत्यं लोकहितं प्रोक्तम' इति लोकहितवचनपरम । **भू....तपः** । व्याहृतीः ब्रह्मत्वेन **उपास्य** [उपास्स्व ?] । एतदेव तपः सर्वधर्मस्यानाभिषिक्तमिति व्याहृत्युपासनं स्तुतं भवति ॥ ६४ ॥

**यथा वृक्षस्य....वाति** । ततश्च पुण्य(ण्यं)कर्मापि अन्तःकरण नैर्मल्यद्वारा ब्रह्मविद्योपयिकमिति भावः । **यथाऽसिधारां कर्तेवहि-तामवक्रामेत** । यथा असिधारां, कर्ते कृतः, तस्मिन् अवहितो जागरूकाम्=कर्तनशीलामसिधारां यथाऽतिक्रामतीत्यर्थः । **यद्युवेयु(हु)वे**

---

६३. अथ नम इत्यादिः गृहीताविस्मृतिप्रार्थनामन्त्रः ।

६४. ऋतं तप इत्यादिना च ऋतादीनामङ्गभूततपस्त्वं व्याहृत्युपासनस्य प्रधानतपस्त्वञ्चोच्यते । तत्र भूर्भुवस्सुवर्ब्रह्मेति प्रणव-स्थाने ब्रह्मपदं प्रयुज्य प्रणवार्थो ब्रह्म, भूराद्यर्थोऽपि ब्रह्म इत्यवबोध्यते।

६५. एवं ऋतं तप इत्युक्तं विहितकरणनिषिद्धनिवृत्तिरूपमङ्गं क्रमेण प्रस्तूयते यथावृक्षस्येत्यादिना इति । यथाऽसिधारामित्यादि व्याकुलमिव । 'युवेयुवे' 'युवेहुवे' इति द्वेधा पठन्ति । यकारस्थाने

हवा विह्वदिष्यामिकर्तं वदि(पति)ष्यामीत्येवमनृ(मृ)तादात्मानं जुगु-
प्सेत् [१९] (अनु 9) ॥ ६५ ॥

---

**हवा विह्वदिष्यामि कर्तं वदिष्यामीत्येवमनृतादात्मानं जुगुप्सेत्।** [यदि ?] उवा, इयुवा (इहुवा) इह, वा इति च्छेदः। उवा इयुवेत्येतावनर्थकौ इयुवे(इहुवे)तिच्छान्दसः। वाशब्द एवार्थः। इहैव। **कर्तं** कर्तनप्रायमसत्यं यदि वदिष्यामि, इहैव विह्वदिष्यामि। ह्वदि इति छान्दसो धातुर्नाशार्थः। विनङ्क्ष्यामि। "समूलो वा एष परिशुष्यति, योऽनृतमभिवदति" इति श्रुतेः। **इत्येवमनृतादात्मानं जुगुप्सेत्** निन्दित्वा ततो निवर्तयेदित्यर्थः ॥ ६५ ॥

---

हकार इति हकारपाठे आहुः। युवे मिश्रीभवामि, यामीत्यर्थः। 'युवे इह वा इह वा' इति भास्करः। 'यद्युवे इवे हवा इति (वि)। कर्तं पतिष्यामीति सर्वपाठः। कर्तपदं गर्तपरमाहुः। यथा कश्चित् जनविनोदनार्थं प्रवृत्तः कुशलः, 'यदि असिधारायां चरणं सम्यङ्निक्षिपेयम्, विह्वलितः स्याम्; यदि न, गर्ते पतेयम्' इति निरूपयन् गर्ते निखातां असिधारामवक्रामेत्=सावधानमाक्रम्य गच्छेत् इति विशिष्टवाक्यार्थमाहुः। तत्र दृष्टान्ते यथा उभयथा दोषः; तथा दार्ष्टान्तिके कथम्; कस्य चासिधारागमनं दृष्टान्त इति दुर्निरूपमिव। 'राजसेवा मनुष्याणामसिधारावलेहनम्। पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम्' इतिवत् शास्त्रदेशितरीत्या स्थितिर्दुष्करेति सामान्यतो भवेत्, भाष्येऽपि यद्यपि, 'कर्तं वदिष्यामि' इति पाठादरणात्, उवा इयुवा इति निरर्थकपदस्वीकाराच्च क्लेशः—अथापि प्रथमं कर्तपदं मुख्यार्थम्। दृष्टान्तश्च सुघटितः। यथा विवेकी असिधारामतिक्रामेत्, न तत्र पादं निक्षिपेत्, तथा अनृते पदं न निक्षिपेत् अनृतवदने दोषं विद्वानिति।

अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ ६६ ॥
सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त जिह्वाः ।
सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयानिहिताः सप्तसप्त ॥६७॥

(ब्रह्मस्वरूपादिप्रपञ्चनम्)

एवमङ्गान्युपदिश्य ब्रह्मस्वरूपादिकं प्रपञ्चयति **अणोः....मीशम्।** सर्वसूक्ष्मवस्तु प्रवेशनयोग्यतया निरतिशयसौक्ष्म्ययुक्तः सर्वप्रपञ्चव्यापक आत्मा अस्य जन्तोः हृदयगुहायामास्ते । तम् **अक्रतुं** सर्वकर्मबन्धशून्यं अपहतपाप्मानम् **महिमानं** महिमशालिनम् । ईशं सर्वस्य शेषिभूतं परमात्मानं यदा पश्यति, तदा **धातुः** सर्वस्रष्टुः तस्य परमात्मनः प्रसादात् वीतशोको भवतीत्यर्थः ॥ ६६ ॥

**सप्त....सप्त** । पञ्च ज्ञानेन्द्रियाणि मनः बुद्धिश्चेति सप्त प्राणाः, गार्हपत्याद्याः **सप्तार्चिषः** अग्नय इति यावत्, 'सप्तार्चिर्दमुनाः शुक्रः' इत्यमरः, समिदाद्युपकरणानि, 'काली कराली च' इति **मुण्डका**म्नाताः सप्त

---

६६. अणोरिति मन्त्रः कठोपनिषदि(२-२०)श्वेताश्वतरे(३)च । उत्तरार्धे ईषद् भेदः । अनेन मन्त्रेण प्रकृतोपासनफलमपि दर्शितम् । तस्येति वक्तव्ये धातुरित्युक्तिः धातृत्वात् वात्सल्यात् प्रसीदतीति ज्ञप्तये ।

६७. अथ, 'स योऽशुणी' इत्यन्तैर्मन्त्रैः सर्वकारणत्वान्तर्यामित्वादिप्रपञ्चनम् । सप्तेत्यादिमन्त्रत्रयं मुण्डके(२-१-८,९)ऽपि । ईषत्तु भेदः । प्राणशब्दव्याख्यानं ततोऽत्र किञ्चिदन्यथा ; सप्तगत्यधिकरणभाष्यानुसारात् । प्राधान्यादेषामिन्द्रियाणां विशिष्योक्तिरिति भावः । अग्नय इति । ते सप्त आहवनीयगार्हपत्यदक्षिणाग्निसभ्याव-

अतः समुद्रा गिरयश्च सर्वेऽस्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः।
अतश्च विश्वा ओषधयो रसाश्च येनैष भूतस्तिष्ठत्यन्तरात्मा ॥६८

---

जिह्वाः, सप्त लोकाश्च परमात्मनः प्रभवन्ति, येषु सप्त(सु) लोकेषु उक्ताः सप्तापि प्राणाः **गुहाशयेन** परमात्मना निहिताः सन्तः संचरन्ति। **सप्त-सप्ते**ति वीप्सा पुरुषभेदाभिप्रायेति, 'सप्तगतेः' इत्यधिकरणे भाषितम् ॥

**अतः समुद्राः....आत्मा**। अस्मात् परमात्मनो गिरिसमुद्रादिकमुत्पद्यते। अस्मादेव गङ्गायमुनादिसिन्धवः प्रवर्तन्ते, सर्वा ओषधयो

---

सथ्यप्राजहिताग्नीध्रीयाः। एषोऽवान्तरभेद एव सप्तार्चिःपद्घटकार्चिःपदविवक्षितः। ज्वाला वा जिह्वारूपा अर्चिः। अर्चिःपदमेव तेजोवाचि अग्निपरं कृत्वा सप्त अर्चिष इति पदच्छेदे 'सप्तार्चिः' इत्यमरग्रहणायोगात्। एवमेकपक्षेऽपि समित्स्विव सप्तत्वमनुषङ्गसिद्धं द्रष्टव्यम्। समिधोऽपि हि सप्त अश्वत्थोदुम्बरपलाशशमीविकङ्कत-अशनिहतवृक्षपुष्करपर्णरूपाः।मुण्डकेऽपि जिह्वापदमेव भाष्यसंमतम्, न होमपदम्। होत्राणां सप्तत्वमपि मुण्डके(टि.९.पु.) दर्शितम्। पुरुषभेदेति। प्रतिपुरुषं सप्त सन्तीति ज्ञापनार्था वीप्सेति भावः। अत्रेदं हृदयम्—पूर्वपक्षिणा सप्ताधिकेन्द्रियानङ्गीकारात् सप्तसप्तेत्यस्य पुरुषभेदेन निर्वाहः पूर्वपक्षे दर्शितः। सिद्धान्ते एकादशेन्द्रियस्वीकारात् तत्र मनस एव वृत्तिचतुष्टयस्य प्रदर्शनेन चतुर्दशत्वोपपत्तिसूचनात् सप्तसप्तेति वचनं, 'यदा पञ्च' इति श्लोकोक्तानि प्रधानानि सप्त, अप्रधानानि सप्तेति सर्वेन्द्रियग्रहणेन चतुर्विंशतिसंख्याभिप्रायेणैव भवितुमर्हति। तथा च सप्तगत्यधिकरण-भाष्ये यदभिमतं तदत्र ग्राह्यमिति। एवं स्फोरणाय तद्भाष्योदाहरणम्। भाषितञ्च, 'अधिकसंख्यावादा मनोवृत्तिभेदाभिप्रायाः' इति।

६८. अन्तरात्मा भूतः अन्तरात्मभूतः। यद्वा भूतः कार्यात्मना

नृषद् वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥
यस्माज्जाता न परा नैव किञ्चनाऽऽस य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींषि सचते स षोडशी ॥७२

---

अन्तरिक्षे वर्तमानो वायुरपि स एवेत्यर्थः । वेद्यां वर्तमानः **होता** ऋत्विग्विशेषः अग्निर्वा । **दुरोणं** गृहम् । तत्राऽऽगत्य वर्तमानोऽतिथिरपि स एव । **नृषत्** मनुष्येषु विद्यमानः । **वरेषु** देवादिशरीरेषु वर्तमानः । **ऋतं** कर्मफलभूतलोकः । **व्योम** परमं पदम् । जलजाः, भूमिजाः, सत्कर्मफलभूतस्वर्गादिजाः, पर्वतजाताश्च **बृहत्** अपरिच्छिन्नम् **ऋतं** सत्यभूतं ब्रह्मैवेत्यर्थः ॥ ७२ ॥

**यस्मा...षोडशी** । सर्वे विकाराः यस्माज्जाताः ; न परस्मात् । यतः प्राक् किञ्चिदपि नास्ति(नास ?)नोत्पन्नम् । यश्च विश्वानि भुवनानि सृष्ट्वा अन्तर्यामितया प्रविष्टः, **प्रजापतिः** प्रजानां शेषी, प्रजया **संविदानः** सम्यगुपास्यमानः त्रीणि **ज्योतींषि** सूर्यचन्द्राग्निरूपाणि **सचते** प्रविष्टः । स एव **षोडशी** षोडशलक्षणविकारप्रविष्टश्चेत्यर्थः ॥

---

पिबन्तौ सुकृतस्य' इति ऋतशब्दस्य फलपरतया प्रयोगात् ऋतजा इत्यस्य स्वर्गादिजा इत्यर्थ उक्तः । कठभाष्ये कर्मपरतया किञ्चिदन्यथा । तत्रत्यटिप्पण्यप्यनुसंधेया ।

७२. न परस्मात् नान्यस्मात् । प्रजया संविदानः = प्रजामूलमेव प्रजानां हितं प्रियञ्च जानन् । सर्वविदोऽपि प्रजामूलं संवेदनं, लौकिकेश्वरैरेवं विदित्वा युक्तं कार्यमिति शिक्षणाय । सूर्यचन्द्राग्नीनिति । गीतं हि भगवता, 'यदादित्यगतं तेजो जगद् भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ' इति ज्योतिस्त्रयम् । 'तपाम्यहम्', 'सोमो भूत्वा रसात्मकः', 'अहं वैश्वानरो भूत्वा',

विधर्तारँ हवामहे वसोः कुविद्वनाति नः। सवितारं नृचक्षसम् ॥७३
अद्या नो देव सवितः प्रजावत् सावीस्सौभगम्। परा दुष्वप्नियँ सुव॥
विश्वानि देव सवितर्दुरितानि परासुव। यद् भद्रं तन्म आसुव॥[२१]
मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नस्सन्त्वोषधीः॥

(स्तुतिगर्भब्रह्मप्रार्थना)

**विधर्तारं...नृचक्षसम्।** **विधर्तारं** विशेषेण जगतो **धर्तारं** धारकम्। **सवितारं** जगत्स्रष्टारम्। **नृचक्षसं** नृणां चक्षुरिव ज्ञानप्रदम्। **हवामहे** स्तुत्या आह्वयामः। **नः** अस्माकं **कुवित्** शश्वत् **वसोः** धनस्य (?) **वनाति** ददात्वित्यर्थः॥ ७३ ॥

**अद्या....सुव।** हे **देव** द्योतमान! **सवितः** जगत्कारणभूत! अद्य **प्रजावत्** प्रजासमृद्धिमत् **सौभगं** सौभाग्यं **सावीः** असावीः= उत्पादितवानसि। दुःस्वप्नजनितं भयं **परासुव** पराकुरु॥ ७४ ॥

**विश्वानि...आसुव।** हे देव! सवितः! सर्वदुरितानि पराकुरु; भद्रं प्रापयेत्यर्थः।

**मधु वाता ऋतायते।** ऋतं परमात्मानमिच्छते मह्यं वाताः मधु क्षरन्त्वित्यर्थः। आनन्ददुहो भवन्तु। **मधु क्षरन्तु(ति) सिन्धवः।**

---

'अग्नौ प्रास्ताऽऽहुतिः' इत्यादिदर्शितः तेजस्त्रयाधीन उपकारोऽत्राभिसंहितः। षोडशी। एकादशेन्द्रियाणि, पञ्चभूतानि च षोडश। 'यद्वा षोडशकश्च विकारः' इत्युपात्तमहदादिविकृतयः षोडश। अनेन समष्टिसृष्टिरप्युक्ता भवति।

७३. अथ विधर्तारमित्यादिना भवन्तु नः इत्यन्तेन परमात्मनः

मधु नक्तमुतोषसि मधुमत् पार्थिवꣳ रजः। मधु द्यौरस्तु नः पिता ॥७७

मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः ॥७८

घृतं मिमिक्षे घृतमस्य योनिर्घृते (श्र)श्रितो घृतमुवस्य धाम।
अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम ॥ ७९ ॥

---

सिन्धवोऽपि तथा भवन्त्वित्यर्थः। **माध्वीर्नः सन्त्वोषधीः**। ओषध्योऽपि मधुदुहो भवन्तु ॥ ७६ ॥

**मधु नक्तमुतोषसि**। सायं प्रातश्च सर्वेष्वहःसु मधु क्षरन्तु। **मधुमत् पार्थिवं रजः**। पृथिव्यां वर्तमानं सर्वमपि रजो मधुमदस्तु। **मधु द्यौरस्तु नः पिता**। 'द्यौः पिता पृथिवी माता' इति श्रुतेः पितृभूता द्यौरपि मधुमत्यस्तु ॥ ७७ ॥

**मधुमान् नो....भवन्तु नः**। स्पष्टोऽर्थः ॥ ७८ ॥

(घृतमन्त्राः)

**घृतं....हव्यम्**। अत्र घृतशब्देन रम्यं ब्रह्मोच्यते। प्रसिद्धार्थत्वेऽपि न दोषः। **मिमिक्षे** सेक्तुमिच्छति। मिह सेचन इति हि धातुः। सर्वं वस्तु स्वादु करोतीत्यर्थः। घृतमेव जगतो **योनिः** उपादानम्। घृतेश्रृतः (?) पक्वः। तत्रैव लीनः। तदेव च **धाम** स्थानम्। हे **वृषभ** अग्ने। तच्छरीरकब्रह्मन् इति यावत्। स्वाहाकृतं हविः **वक्षि** नत हविः **अनुष्वधम्**

---

सकाशात् धनं प्रजा भद्रं स्वविषये सर्वस्यानुकूल्यञ्च प्रार्थ्यते।

७९—८३. 'माध्वीर्गावो भवन्तु नः' इति घृतरूपमधुप्रदानां गवां प्रस्तावात् उपस्थितं घृतं स्तूयते पञ्चभिर्मन्त्रैः। वक्ष्यति च,

समुद्रादूर्मिर्मधुमाँ उदारदुपाँशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ ८० ॥

---

अनुष्ठिता स्वधा येन तत् अनुष्वधम् ; वहसि। अस्य हविषः स्वधासादृश्य-मावह । स्वशेषभूतान् जनान् अनेन हविषा **मादयस्व** हर्षयेत्यर्थः ॥

**समुद्रात्....नाभिः** । घृतस्तुतिरियम् । अमृतार्थं मथ्यमानात् समुद्रात् मधुमान् **ऊर्मिः** तरङ्गः उत्पन्नः । मधुतरङ्ग उत्पन्न इत्यर्थः । स च **उपांशुना** उपांशुजप्येन रहस्यमन्त्रेणामृतभावं प्राप्तः । तदेव घृतमिति भावः । एवम्भूतस्य घृतस्य गुह्यं रहस्यं नाम 'देवानां जिह्वा', 'अमृतस्य नाभिः' इति च । देवानां जिह्वासदृशम् । अमृतस्य **नाभिः**

---

'गवि देवासो घृतम्' इति । तत्र प्रथमो घृतसंबन्धितया अग्निस्तव-नात् घृतस्तुतिरेव । एवं सुवचत्वेऽपि परमात्मप्रकरणस्थानां मन्त्राणां सति संभवे साक्षात् परमात्मपरत्वं युक्तमित्यस्य सर्वसंमतत्वात् सूरीणामनुभवमनुसृत्य अमृतादिपदवत् घृतपदं परमात्मपरं कृत्वा व्याख्यातम् । उक्तञ्च, प्रसिद्धार्थपरत्वेऽपि न दोष इति । तेन मन्त्राणां संभवन्ति सर्वाण्यपि योजनान्तराणि संमन्यन्ते । तथाहि—घृतपद-मुदकवाचि । अग्निः घृतं जनयति ; 'अग्नेरापः' इति श्रुतेः । अग्नेर्घृतं योनिरपि, वैद्युताग्नेस्ततो भवनात् । जले संतप्यमाने प्रविश्य श्रितश्चाग्निः । जलमस्य धाम, समुद्रादौ बडबादिरूपेण स्थितेः इत्यर्थो भवेत् । एवं गोघृतग्रहणे, अग्निर्नवनीतं घृतयति, घृतहोमे वर्धते । 'तेजो वै घृतम्' इत्युक्तेः घृते श्रितः । श्रित इत्येव सर्वपाठः । अनुष्वधमित्यादेः प्रतिस्वधम् एकैकस्वधां प्रति देवता आवह आह्वय, हव्यमर्पयित्वा च मादय ; तदर्थं स्वाहापूर्वं कृतं च हव्यं वहेत्यर्थो घटते । उपरि च—उपांशुना उपगतेनांशुना तेजसा ईषत्पाकमेयेनेति

वयं नाम प्र ब्रवामा घृतेनास्मिन् यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥ ८१ ॥
चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।

---

आश्रयभूतम् । परमात्मपरतया योजनायां **घृत**शब्देन भोग्यभूतं ब्रह्मैवोच्यते इति द्रष्टव्यम् ॥ ८० ॥

**वयं...एतत्** । वयं घृतशब्देन तस्य नाम वदाम । अस्मिन् यज्ञे **नमोभिर्धारयाम** नमश्शब्दैर्घृतस्य स्तोत्रं कुर्मः (कुर्याम ?) । अस्माभिः **शस्यमानं** स्तूयमानं घृतं **चतुश्शृङ्गः**....शृङ्गशब्देन ज्ञापको वेद उच्यते—चतुर्वेदप्रतिपाद्यः **गौरः** शुद्धः **ब्रह्मा** परं ब्रह्म **उपशृणवत्** शृणोतु । स खलु **एतत्** घृतम् **अवमीत्** सर्वोत्तरतया सृष्टवानित्यर्थः ॥

**चत्वारि ...आविवेश । अस्य** परमात्मनः चत्वारो वेदाः शृङ्गाणि । नित्यबद्धमुक्तरूपास्त्रयोऽपि **पादाः** । शुद्धसत्त्वं त्रिगुणसत्त्वञ्च शिरसी । महदादयः प्रकृतिविकृतयः सप्तापि **हस्ताः** । **वृषभः** श्रेष्ठः वासुदेवः **त्रिधा** संकर्षणप्रद्युम्नानिरुद्धतया त्रिधाभूतस्सन् सर्वं वस्तु **रोरवीति...**'रु शब्दे' इति हि धातुः—व्यवहरति=नामरूपवत्

---

यावत् । अमृतमिति घृतस्य गुह्यं नाम । अमृतस्य नाभिः=स्थानं देवानां जिह्वा; तैरेव तदास्वादनात् । (अत एव ऊर्वशी पुरूरवसि स्वस्य घृतमेवाऽऽहारमरोचयत ।) तमेव वयं घृतमिति ब्रूमः; स्तुमश्च । इदं चतुश्शृङ्गो गौरः भास्वरो हव्यवाहः सर्वेभ्यो देवेभ्यो गृहीत्वा आविश्चकार । कथमस्य चतुश्शृङ्गत्वमिति चेत्—किमिद-मेषाश्चर्यम् ? अन्यान्यप्याश्चर्याण्यस्मिन् सन्ति त्रिपात्त्वादीनि । सोऽयं

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां॰ आविवेश ॥ ८२ ॥

त्रिधाहितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकं॰ सूर्य एकं जजान वेनादेकं॰ स्वधया निष्टतक्षुः ॥ ८३ ॥

---

करोतीत्यर्थः । तादृशो [महोदेवः] महादेवः मर्त्यान् चेतन(चेतना-चेतन)पदार्थान् अन्तरात्मतया प्रविवेशेत्यर्थः ॥ ८२ ॥

त्रिधा....निष्टतक्षुः। त्रिधा संकर्षणप्रद्युम्नानिरुद्धभेदेन आहितम् अवतीर्णम् । पणिभिः फणिभिः गुह्यमानं फणा(फणि)मण्डलाच्छादितम् । यद्वा पणिभिः स्तोतृभिः। 'पण स्तुतौ' इति हि धातुः। स्तूयमानं गवि घृतं गोघृतम् अमृतरूपं ब्रह्म देवाः अन्वविन्दन् उपासितवन्तः । तेषां मध्ये इन्द्रः इन्द्रशब्दोपलक्षिताधिकारिविशेषः एकं व्यूहमाश्रितवान् । अन्यः सूर्यशब्दोपलक्षिताधिकारिविशेषः एकं व्यूहमाश्रितः। इतरे वेनात् व्याप्तिमतो वासुदेवात् प्रादुर्भूतमेकं व्यूहं स्वधावद् भोग्यभूतप्रीतिरूपज्ञानेन निष्टतक्षुः उपासितवन्तः । वासुदेवात्

---

घृतादिग्रहणाय मर्त्यान् आविवेश भूलोकस्थित्या, वैश्वानरात्मना जठरस्थित्या च । त्रिधाभूतं घृतं गवि अविन्दन् । कथं त्रिधाभूतम् । यस्मात् इन्द्र एकममृतं क्षीराब्धेरजनयत्, सूर्य एकम्, 'सौरीभिरिव नाडीभिरमृताख्याभिरम्मय' इत्युक्तरीत्या वा मधुविद्यादर्शितरूपेण वा अमृतमजनयत् । वेनात्= शुक्रात् जलदेवताविशेषात् स्वधया= अन्नेन हेतुना अन्नार्थं एकमजनयन् । वेनशब्दार्थः मेधावी, जलदेवताविशेषः, ओषधीशश्चन्द्र इत्यादिः । तादृशत्रिविधघृतप्रभावशालि गवि घृतमिति भावः । एवं वा परोक्तरीत्या वा अनेकार्थसंभवेऽपि प्रकरणानुसारी भाष्यदर्शितोऽक्लिष्टोऽर्थः ॥

यो देवानां प्रथमं पुरस्तात् विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु ॥
यस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ८५ ॥

---

प्रादुर्भूतान् व्यूहविशेषान् अधिकारिविशेषा उपासते इति यावत ॥८३॥

(ब्रह्मज्ञानप्रार्थना)

**यो....संयुनक्तु** । ब्रह्मज्ञानप्रार्थनामन्त्रोऽयम । **यः** परमात्मा देवानां श्रेष्ठं चतुर्मुखं सर्वसृज्यसृष्टेः प्राक् उत्पद्यमानं सर्वाधिकः **महर्षिः** निरङ्कुशसार्वज्ञ्यवान् संसाररुग्द्रावकतया **रुद्र**शब्दवाच्यो नारायणः असौ अतिशयित[प्र]ज्ञानादियुक्तः स्यात्' इत्यनुग्रहेणापश्यत्---तादृशो भगवान् शुद्धया बुद्ध्या---परमात्मविषयबुद्ध्या योजयत्वित्यर्थः । अत्र वक्तव्यं सर्वं **श्वेताश्वतरप्रकाशिकायां** वर्णितम ॥ ८४ ॥

**यस्मात्....सर्वम्** । यस्मात **अपरम्** अन्यत **परम्** उत्कृष्टं[वस्तु] नास्ति । यस्माच्च सूक्ष्मम् , अधिकपरिमाणं वस्तु वा (वा वस्तु?)नास्ति । तादृशो निःसमाभ्यधिकः अवाप्तसमस्तकामतया तृणीकृतब्रह्मरुद्रादिप्रपञ्चः परमपद आस्ते । तेन **पुरुष**शब्दितेन वासुदेवेन व्याप्तं सकल-

---

८४. एवं स्वस्य सर्वपरिकरानुकूल्यमभ्यर्थ्य, तत्फलभूतभगवद्ज्ञानसंपत्तिमर्थयते यो देवानामिति। पश्यत जायमानम। 'जायमानं हि पुरुषं यं पश्येत् मधुसूदनः। सात्त्विकः स तु विज्ञेयः'। अस्य रुद्रपरत्वेऽपि निर्वाहः वेदार्थसंग्रहतात्पर्यदीपिकायां दर्शितः। मन्त्रोऽयं श्वेताश्वतरेऽपि।

८५. यस्मादिति मन्त्रः श्वेताश्वतरे (३), मुण्डके (१-१-७) च।

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहितं गुहायां विभ्राजते यद् यतयो विशन्ति ॥ ८६ ॥
वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयश्शुद्धसत्त्वाः ।

---

जगदित्यर्थः। अयमपि मन्त्रः श्वेताश्वतरप्रकाशिकायां व्याख्यातः॥८५

(मोक्षोपायः)

**न कर्मणा...विशन्ति** । **यत्** अमृतत्वं यतयः प्राप्नुवन्ति, यच्चामृतत्वं **नाकस्य** भगवल्लोकस्य(?) उपरि परमव्योमनि निहितं विराजते, तत् अमृतत्वं कर्मप्रजाधनैर्न प्राप्यम् । अपितु, 'संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि' इत्युक्तभगवच्चरणारविन्दशरणवरणलक्षण- त्यागेनैव **एके** कतिचित् प्राप्ता इत्यर्थः । भक्तिनिष्ठानामप्यङ्गतया प्रपदनस्यापेक्षितत्वात् प्रपन्नानाञ्च प्रधानतयाऽपेक्षितत्वात्, 'तस्य च वशीकरणं तच्छरणागतिरेव' इति भाषणाच्च यथोक्त एवार्थः ॥ ८६ ॥

**वेदान्त....सर्वे** । **यतयः** संन्यासिनः यमादियुक्ताः वेदान्त- जनितज्ञानेन सुनिश्चिततत्त्वहितपुरुषार्थाः संन्यासलक्षणप्रपदनेन निरस्त-

---

८६-८७. न कर्मणेति । कर्मादीनामप्यपवर्गप्रापकत्वे सर्वे प्राप्नुयुः । त्यागमात्रस्य तथात्वात्तु एके कतिपय एव प्राप्नुवन्ति । कर्मादिना केऽपि न प्रापुः । त्यागिनोऽपि केचित् साक्षान्मोक्षार्थ- यथावस्थितत्यागाकरणात् न प्रापुरित्याशयः । 'न कर्मणा न प्रजया धनेन' इति धर्मार्थकामानामनुपयुक्तत्वं दर्शितम् ।

एते मन्त्राः यतीनामेव संभावनायां सांप्रदायिकैर्विनियुज्यन्ते । तदनुगुणोऽर्थस्तु—कर्मपदमवाग्लोकसाधककर्मपरम् । लोकैषणातः पुत्रेषणातो वित्तैषणातश्च व्युत्थाय भिक्षाचर्यं चरन्त इह विवक्षिताः। त्यागः=संन्यासः । यतयो द्विविधाः—इहैव भक्तियोगं निष्पाद्य

**ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥ ८७ ॥**

---

भक्तिशिरोऽभिपापनया निर्मलान्तःकरणाः अनुष्ठितोपायाः **परान्तकाले** चरमशरीरवियोगकाले **ब्रह्मलोके** भगवल्लोके **परामृतात्** उत्कृष्टात् असंसारिणः=परमात्मानं प्राप्य । ल्यब्लोपे पञ्चमी । सर्वे **परिमुच्यन्ति** बन्धान्मुक्ता भवन्तीत्यर्थः ॥ ८७ ॥

---

नाकात् परतः परमे व्योमनि स्थितं साक्षादेव केचित् विशन्ति । ते एके इहोक्ताः । ये वेदान्तविज्ञानसंपन्नाः ये सुनिश्चितार्थाः भक्तिपरिणयानुगुणसत्त्वशुद्धिं संन्यासयोगात् प्राप्ताः, ते, 'ब्राह्मं संन्यासिनां स्मृतम्' इत्युक्तरीत्या चतुर्मुखलोकं प्राप्य परस्य ब्रह्मायुषोऽवसानकाले मुख्यस्यामृतत्वस्य लाभाय तावदायुष्कादमृतत्वात् मुक्ता भवन्ति । अतः शीघ्रं साक्षान्मुक्तिप्राप्तिकामैः दहरकुहरस्थो देव उपासितव्यो यतिभिः प्रणवेनेति । एवम्, 'ते ब्रह्मलोके तु' इत्यर्धस्य 'ब्रह्मणा सह ते' इति वचनात्सर्वैकार्थ्येऽप्यविरोधादेव श्रीभाष्ये कार्याधिकरणे कार्यात्ययसूत्रे पूर्वपक्षे उक्तस्यार्थस्य सिद्धान्ते अनुसरणम् । श्रुतप्रकाशिकायां तु अन्यादृशार्थस्यापि संभावितत्वमाशय्य ब्रह्मलोकः=भगवल्लोक इत्युक्तम् । मुण्डकमन्त्राभिप्रायेणापि तत् स्यात् । वस्तुतो गीताभाष्ये (१८-४१), 'त्यागेनैके', 'संन्यासयोगात्' इति त्यागसंन्यासपदे सात्त्विकत्यागपरे भाषिते । तदनुसारेण च मुण्डकभाष्ये भाषितमेव । एवञ्च सात्त्विकत्यागरूपसंन्यासस्य उक्तधर्मार्थकामात्मकत्रिवर्गत्यागरूपस्य चतुर्मुखलोकप्रापकत्वे प्रमाणाभावात् प्रकृतभाष्योक्त एव, ते ब्रह्मलोके तु इत्यादेरर्थः । चरमेति । अन्तकालः=शरीरवियोगकालः। 'अन्तकाले च मामेव', 'ते त्वन्तकाले' इति यथा । परः चरमोऽन्तकालः। परान्तकालः परामृतादित्यत्र ल्यब्लोपे पञ्चमीति पूर्वपक्षे उक्तं श्रु. प्र. । कार्यम् । प्रसङ्गात् ब्रह्मणो हेतोरिति हेतुपञ्चमी सिद्धान्ते उक्ता, यथा मुण्डकभाष्ये ॥

दहरं (दह्रं) विपाप्मं(पं) परवेश्मभूतं यत् पुण्डरीकं पुरमध्यँस्थम् ।
तत्रापि दहरं (दह्रं) गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम् ॥

(दहरविद्या)

**दहरं...तदुपासितव्यम्** । 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तर आकाशः, तस्मिन् यदन्तः तदन्वेष्टव्यम्' इति छान्दोग्योक्तरीत्या उपास्यतया संनिहितस्य ब्रह्मणः पुरभूतस्योपासकशरीरस्य मध्येऽवस्थितं (संस्थितं) **दहरम्** अल्पं **विपाप्मं** निरस्तपापं परमात्मनो वरवेश्मभूतं यत् हृदयपुण्डरीकम्, तत्रापि यत् अल्पं **विशोको**पलक्षितापहतपाप्मत्वादिगुणकं **गगनं** गगनवदपरिच्छेद्यं ब्रह्म, तस्मिन् अन्तश्च यत्, तदुभयमप्युपासितव्यमित्यर्थः । अत्र वक्तव्यं सर्वं **छान्दोग्यप्रकाशिकायामुक्तं**; तत्रैव द्रष्टव्यम् ॥ ८८ ॥

---

**८८. तत्रापीत्यपिशब्दः पूर्ववाक्यस्थयच्छब्दस्य प्रकृतवाक्येपि अनुषङ्गार्थः । यद् गगनं विशोकम्, यच्च तस्मिन्नन्तः, तदुपासितव्यमिति योजना । तदिति समाहारैकवद्भावः । आत्मतदन्तर्वर्तिगुणजातयोरुपास्यत्वमुक्तं भवति । गुणजातञ्च विशोकत्वघटितमपहतपाप्मत्वाद्यष्टकमिति धर्मिणो विशोक इति विशेषणात् ज्ञायते । ननु विशोकपदेन शोकनिषेधः कृतोऽचेतने अप्रसक्त इति गगनपदं चेतनविशेषवाचि ज्ञायते चेत्—दह्रं विपाप्ममिति अपहतपाप्मवाचिविपाप्मपदस्वारस्यात् प्रथमदहरमपि चेतनं ज्ञायेतेति चेन्न—पाप्मशोकपदयोर्वैलक्षण्यात् । पुण्डरीकपदस्य च शरीरान्तर्वर्तिवाचिनः अचेतन एव प्रसिद्धेः । आकाशादिशब्दस्य चेतनपरत्वं प्रसिद्धम् । तत्रापि तस्य परमात्मन्येव प्रयोगः । प्रत्यभिज्ञायते चात्रच्छान्दोग्यदहरविद्या । तस्मात् दहरविपाप्मजीववर्ति आत्मस्वरूपमिति वा हृदयपुण्डरीकान्तर्गतभूताकाशान्तर्वर्तीति वा परमात्मान्तर्वर्ति किञ्चि-**

यद् वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिर्लीनस्य यः परस्स महेश्वरः ॥ [२४] (अनु १०) ८९ ॥
अजोऽन्यस्स्तुवुताभिस्सर्वमष्टौ च ॥

---

दहरविद्योपास्यदेवताविशेषः क इति जिज्ञासायाम् , नारायणस्य तदुपास्यत्वं प्रतिपादयितुं सकलपरविद्योपास्यत्वौपयिकं महेश्वरत्वं नारायणस्य दर्शयति **यद्वेदादौ...महेश्वरः** । 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । स्रवत्यनोङ्कृतं ब्रह्म (पूर्वं) परस्ताच्च विशीर्यते' इति मानव-

---

दन्यद् व्योमातीतमिति वा न वाक्यार्थ इति ।

८९. एवमुपास्यमुक्तं प्रणवार्थनारायणाभिन्नमिति भाष्यते यद् वेदेति । ब्रह्मणः प्रणवमिति । 'वेदाद्यन्तरूपतया वेदबीजभूतप्रणवस्य' इत्यादिवेदार्थसंग्रहपरामर्शी—स्वरः = प्रणवो वेदस्यादौ अन्ते च प्रतिष्ठितः प्रोक्तः; वेदोत्पत्तिप्रलयकारणं प्रणव इति वेदबीजत्वं प्रणवे पूर्वार्धप्रतिपाद्यं भायते । 'ओङ्कारप्रभवा वेदाः' इति प्रणवे वेदकारणत्वं प्रसिद्धम् । 'अकारश्चाप्युकारश्च' इति मनुवाक्यं तु वेदान्तर्गत–वेदप्रकृतिभूतप्रणवघटक–अकाराद्युद्धाराभिप्रायमपि स्यादिति न ततो वेदप्रकृतिकत्वस्य प्रणवे निर्धारणम् । यद् वेदबीजभूतप्रणवबीज अकारवाच्यम् , तदेव अकारकार्यप्रणवकार्यवेदप्रतिपाद्यं महेश्वरत्वशालि भवतीति उपास्यस्य अकारार्थनारायणत्वमत्रोक्तं भवति । प्रणवार्थे विवादादर्शनात् प्रणवप्रकृत्यर्थ एव तदर्थ इति स्थापनाभिप्रायेण, 'तस्य यः परः' इत्यनुक्त्वा 'तस्य प्रकृतिर्लीनस्य यः परः' इत्युक्तम् । कथम् अकारः प्रकृतिरिति चेत् , 'समस्तशब्दमूलत्वात् अकारस्य स्वभावतः' इति तत प्रसिद्धमेव । न्यायसिद्धाञ्जने च अकारप्रणवादेः प्रकृतिविकृतिभावादेः प्रपञ्चः ।

इदमत्रावधेयम्—अकारो हि कण्ठाधोभागस्थानोत्पाद्यः । अन्ये तु

स्मरणात् वेदाद्यन्ते[च] प्रतिष्ठितः स्वरः प्रणवः । तस्य प्रकृतिः अकारः । समस्तशब्दमूलत्वादकारस्य । तत्र लीनत्वं तद्रूपतामापन्नत्वम् । अका-

---

वर्णाः तदुपरितन-अधरपुटपर्यन्तनानास्थानभवाः। अतः सर्ववर्णपूर्व-भावित्वौचित्यात् अकारः सर्वप्रकृतिः। प्रणवश्च प्रथमस्थानजन्य-अकार-मारभ्य ओष्ठाधरसंयोगरूपचरमस्थानजन्यमकारपर्यन्तप्रत्याहारात् सर्ववर्णप्रदर्शकः । तेन मकारपर्यन्तो वर्ण अकार एव ; सर्वो वर्णः अकार एवेत्यवधार्यते । अक्षरसमाम्नाये यकारादेर्मकारानन्तरं निर्देशोऽपि मकारोत्पत्तिस्थानपूर्वस्थानकत्वात् सर्वस्यापि वर्णस्य, अन्ते मकारो मन्तव्यः । एवं प्रणवे सर्ववर्णप्रत्याहारात् तेषाञ्च वर्णानां चतुर्विंशतितत्त्वादिसर्वप्रपञ्चवाचित्वस्याऽऽगमसिद्धत्वात् वेदानां प्रणवघटकवर्णसमाहारविशेषरूपत्व-तदर्थसर्वप्रपञ्चवर्णन-परत्वाभ्यां प्रणवप्रकृतिकत्ववर्णनम् । ईदृशं वेदप्रकृतित्वं मनसिकृत्यैव मनुना, 'स्रवत्यनोङ्कृतं ब्रह्म' इति स्मृतमिति प्रकृतभाष्यं वेदार्थ-संग्रहश्च समानाभिप्रायके एव । ईदृशस्य च प्रणवस्य सर्ववर्णपूर्व-स्थानगः सर्वकारणनारायणपरः अकारः प्रकृतिः । एवं विद्यमानं अकारस्य विशेषं प्रकृतमन्त्रविख्यापयिषितं कृत्वैव वेदार्थसंग्रहे, 'तस्य प्रकृतिर्लीनस्य' इत्यस्य संभवदप्यर्थान्तरमुपेक्षितम् । किं तदिति चेत्—अथर्वशिखाभाष्याथर्वशिखाविलासदर्शितरीत्या, 'ततोऽभूत् त्रिवृदोङ्कारः' इति नादजन्यत्वमपि प्रणवे संप्रतिपन्नम् । नादश्च परवासुदेवपर इति स्पष्टम् । एवञ्च अनिरुद्धादिव्यूहवाचकाकारादि-समुदायरूपप्रणवस्य नादात्मकप्रकृतिलीनस्य यः परः, स परवासुदेवो महेश्वर इति । एवमर्थानुक्तिः, 'अकारो वै सर्वा वाक्', 'अ इति ब्रह्म' इत्यादिबहुप्रमाणप्रतिपन्नार्थविशेषविवक्षामनुरुध्य । नादस्य प्रणवप्रकृतित्ववर्णनं हि प्रणवप्रतिपाद्यव्यूहप्रकृतित्वस्य वासुदेवे सत्त्वमात्रात् स्यादिति तावता न पूर्वोक्ता विशेषाः सिद्ध्यन्तीति ।

स्वरः प्रणव इति। प्रणवस्य स्वरशब्दवाच्यत्वं छान्दोग्ये (१-४-५)

सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं प्रभुम् ॥ ९० ॥

रस्येति यावत् । तस्य यः परः प्रतिपाद्यः । इदम्परः, तत्परः इत्यादौ परशब्दस्य वाच्ये प्रयोगदर्शनात् । 'अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः', 'अकारो विष्णुवाचकः' इति श्रुतिस्मृतिभ्याम् अकारवाच्यो विष्णुः । स एव महानीश्वर इत्यर्थः ॥ ८९ ॥

( नारायणस्य सर्वविद्यावेद्यत्वम् )

पूर्वस्मिन्ननुवाके दहरविद्योपास्यो नारायण एवेत्युक्तम् । अधुना तु परविद्याप्रकरणेषु [शिव]शम्भुपरब्रह्मपरज्योतिः परतत्त्वपरमात्मादि-शब्दनिर्दिष्टस्य वस्तुनो नारायणत्वं प्रतिपाद्यते—**सहस्रशीर्षं....विश्वशम्भुवम्** । लिङ्गभूयस्त्वाधिकरणे भगवता **भाष्यकृता**, "न च सहस्रशीर्षमित्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपासिना संबन्धः शङ्कनीयः । 'तस्मिन् यदन्तस्तदुपासितव्यम्' इति उपासिगतेन कृत्प्रत्ययेन

---

श्रूयते । अतेव तत्रापि ऋग्वेदाद्यारम्भे प्रणवस्य स्वर्यमाणत्वमुक्तम् । न कर्मणेति मन्त्रार्थश्च तत्र उपाख्यानमुखेन दर्शितः ।

अत्र महेश्वरपदेन, 'यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम्' इत्युक्तार्थपरेण, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्वेताश्वतरप्रत्यभिज्ञानाम् प्रपञ्चकारणकारणत्वलाभः । अन्ये ईश्वराः व्यष्ट्यन्तर्गतकतिपयमात्रकारणभूताः । अयं तु व्याप्तिसमष्टिसर्वकारण-मायाधिष्ठाता महान् ईश्वर इति । एवञ्च सर्ववाचकजातप्रकृतिभूता-कारवाच्यः सर्ववाच्यजातप्रकृतिभूतनारायण इत्यर्थः ।

...९०-९५.. अकारवाच्यो दहरविद्योपास्य इत्युक्तत्वात् दहर-

विश्वतः परमं नित्यं विश्वं नारायणँ हरिम् ।

---

उपास्यस्य कर्मणोऽभिहितत्वात् तदुपास्ये द्वितीयानुपपत्तेः । 'विश्वमेवेदं पुरुषः', 'तत्त्वं नारायणः परः' इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे द्वितीया वेदितव्या । 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः', 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः', 'स ब्रह्मा स शिवः सेन्द्रः सोक्षरः परमः स्वराट्' इति निर्देशैः सर्वस्मात् परो नारायण एव सर्वत्रोपास्य इति निर्णीयमानत्वाच्च प्रथमार्थे द्वितीयेति निश्चीयते" इति भाषितम् । व्यासार्यैरपि, 'द्वितीयान्तपदस्वारस्यानुरोधे तु विद्यात्, उपासीत इति विधिपदाध्याहारः । प्रथमान्तपदस्वारस्यानुरोधे तु नाध्याहारः । सहस्रशीर्षमित्यादिद्वितीयायाः, 'येनावृतं खञ्च दिवं महीञ्च' इतिवत् प्रथमार्थत्वाश्रयणमात्रमिति वर्णितम् ।

विश्वाक्षत्वं सर्वविषयकसाक्षात्कारवत्त्वम् विश्वशम्भुत्वं सकल-

---

विद्योपास्यस्य नारायणत्वं सिद्धमिति नारायणानुवाको न तद्विद्योपास्यस्य नारायणत्वविधानार्थं प्रवृत्तः, नापि तद्विद्यायां वेद्यगुणविशेषविधानार्थः । अभ्यस्तनारायणपदबलेनान्यार्थप्रतीतेः । व्यक्तमिदं लिङ्गभूयस्त्वाधिकरणे । तत् दर्शयति पूर्वस्मिन्निति । अत्र प्रतिश्लोकं चतुर्थश्लोके च प्रतिपादं नारायणपदावृत्तेर्दर्शनात् नारायणत्वविधाने निर्भरोऽवसीयते । अत एव द्वितीयाः प्रथमार्थे । न तु उपजीवतीत्यत्र कथञ्चित् द्वितीयान्तानामाकर्षणक्लेशो वा क्रियापदाध्याहारक्लेशो वा तदर्थम् । तथाच सहस्रशीर्षादिर्नारायणः, विश्वतःपरमादिर्नारायणः, विश्वपत्यादिर्नारायणः, महाज्ञेयादिर्नारायणः, परब्रह्मपरतत्त्वादिर्नारायणः इत्युच्यते ।

विश्वाक्षमिति सर्वज्ञत्वोक्त्या सहस्रशीर्षपदम्, 'अनेकबाहूदर-

विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥ ९१ ॥

पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ।

नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥ ९२ ॥

नारायण परं ब्रह्म तत्त्वं नारायणः परः ।

नारायण परो ज्योतिरात्मा नारायणः परः ॥ ९३ ॥

---

जगत्क्षेमङ्करत्वम् । ननु विश्वं नारायणमिति कथं विश्वस्य नारायणत्वमित्याशङ्क्य उक्तम्—विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवतीति । विश्वेनात्मतयोपजीव्यतया विश्वत्वम्, न तु स्वरूपेणेत्यभिप्रायः । नारायण परं ब्रह्मेत्यत्र नारायणात् परं ब्रह्मेति नार्थः शङ्कनीयः पूर्वापरविरोधात् । "नारायणः परं ब्रह्म" इति महोपनिषदि स्फुटमावे-

---

चकत्वेनेवम्' इत्युक्तरीत्या यथाश्रुतार्थमेवेत्याशयेन तत्पदाव्याख्यानम्। 'देवम्, विश्वम्, विश्वशम्भुवम्' इति पदानां द्विःश्रुतानामेकं साक्षात् योगव्युत्पत्त्या, अन्यत् चिदचिद्द्वारा च नारायणपरम् । विश्वपदं श्रीसहस्रनामभाष्ये स्वरूपरूपगुणविभवैः सर्वं विशतीति परिपूर्ण इति यौगिकमुक्तम् । अथात्र द्वितीयं प्रयुक्तयोः देवपदविश्वपदयोः अपर्यवसानवृत्त्या परमात्मपरत्वोपपादनाय, 'विश्वमेवेदं पुरुषस्तद् विश्वमुपजीवति' इत्युक्तम्। अस्तु वा एकं देवपदं क्रीडाद्यर्थे यौगिकम् : अन्यत् देवतात्वाकारपरमिति विश्वपदमात्रे अपर्यवसानवृत्तिः। तदिति क्लीबनिर्देशः. 'विश्वं विष्णुः' इतिवत् योगव्युत्पत्त्या विश्वमिति निर्दिष्टं नारायणं प्रपञ्चरूपविश्वमुपजीवतीति अन्वये। पतिं–स्वामिनम्। आत्मेश्वरम् । आत्मा स्वमेव ईश्वरो यस्येति बहुव्रीहिः । स्वाधीनस्वैश्वर्यमित्यर्थः । शिवत्वं =निरुपाधिकशुद्धिमत्त्वम् । शाश्वतत्वं प्रसिद्धशिवव्यावृत्तये शिवविशेषणमिति श्रुतप्रकाशिका । 'स ब्रह्मा

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः [२५]॥ ९४ ॥
अनन्तमव्ययं कविँ समुद्रेऽन्तं विश्वशम्भुवम् ।

---

दनात् । समुद्रे अन्तः स्थानं यस्य स समुद्रेन्तः । सप्तम्याः, "तत्पुरुषे कृति बहुलम्" इत्यलुक् । "अन्तः समाप्तौ स्थाने च निर्णयेऽभ्यन्तरेऽपि च" इति नैघण्टुकाः । इतरत् स्पष्टम् ।

न च सहस्रशीर्षमित्यादिद्वितीयायाः येनावृतं खञ्च दिवं महीञ्च' इतिवत् प्रथमार्थत्वाश्रयणे, 'तस्मिन् यदन्तस्तदुपासितव्यम्' इति प्रकृतदहरविद्योपास्यविशेषसमर्पकतया तदेकवाक्यतैव स्यात्, न तु सर्वपरविद्योपास्यनिश्चायकत्वमस्यानुवाकस्येति चेत्—गुणोपसंहारपादे 'अस्यानुवाकस्य दहरविद्योपास्यनिश्चायकत्वमेव युक्तम् । पद्मकोश-प्रतीकाशमिति अस्मिन्ननुवाके दहरविद्याप्रत्यभिज्ञानात् प्रकृतहानानौ-चित्यात्' इति पूर्वपक्षे प्राप्ते—उच्यते, "लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि" । यद्यपि दहरविद्या प्रकृता ; तदेकवाक्यत्वञ्च युक्तम् तथापि सकलपरविद्योपास्यनिर्धारणार्थत्वे बहूनि लिङ्गान्युपलभ्यन्ते । तत्तत्परविद्यावाक्यगतानि परब्रह्मपरतत्त्वादिपदरूपाणि चिह्नानीह वाक्ये

---

स शिवः' इति शिवान्तर्यामित्वं वक्ष्यते । महाज्ञेयम्=ज्ञेयतमम् । अद्वारकवृत्त्या सहस्रशीर्षादिपदैरिव शरीरात्मभावनिबन्धनसद्वारक-वृत्त्या सर्ववस्तुवाचकपदैरप्ययमेवोच्यते इति स्पष्टं प्रत्याय्यते यच्च किञ्चिदिति श्लोकेन । द्वितीयं विश्वशम्भुवमिति पदं अष्टमूर्तितया विश्वरूपो यः शम्भुः, तदन्तर्यामीत्यर्थकम् ।

पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् ॥ ९५ ॥
अधो निष्ट्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति ।

---

दृश्यन्ते । यदि प्रकृतविद्योपास्यदेवताविशेषसमर्पकमिदं वाक्यजातं स्यात्, परब्रह्मपरतत्त्वादिशब्दप्रयोगो नारायणपदावृत्तिश्च न स्यात् । एकेन नारायणपदेनैव समीहितसिद्धेः। अतः परब्रह्मादिपदवाच्यस्य नारायणत्वविधानायैवायं संरम्भः, "शिवश्च नारायणः, शक्रश्च नारायणः" इतिवत् परं ब्रह्मापि नारायणः, परतत्त्वमपि नारायणः इति । वाक्यभेदोऽपि न दोषाय । तत्र लिङ्गं प्रकरणाद् बलीयः । तदप्युक्तं पूर्वकाण्डे, "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति ।

न च सकलपरविद्योपास्यनिश्चायकत्वे पद्मकोशप्रतीकाशमिति दहरविद्योपास्यविशेषेणोपसंहारो न युक्त इति वाच्यम्—'ऐतदात्म्यमिदं सर्वम्' इति सामान्येन निर्दिष्टस्य तत्त्वमसीति विशेषे उपसंहारवत् सकलपरविद्योपास्यतया अभिहितस्य नारायणस्य प्रकृतदहरविद्योपास्यतयोपसंहारे दोषाभावात्' इति स्थितम् । प्रकृतमनुसरामः ।

(नारायणस्य सर्वहृदयावस्थितत्वम्)

पद्म....तिष्ठति । निष्ट्या ग्रीवाबन्धनम् । 'सुपां सुलुक्' इति

---

९५. एवं तावत् सर्वस्यात्मनः चिदचिदन्तर्यामित्वमेकरूपमुपपाद्य देहिषु शम्भुब्रह्मादिषु सामान्यतो विशेषतोऽपि वा तत्तद्देहस्थहृदयाविर्भूततत्प्रत्यक्षमन्याहृशमन्तर्यामित्वमपि तत्तद्याचि-

 तित्वन्धनमिति ज्ञापयितुं देहे हृदये परमात्मनः

हृदयं तद् विजानीयाद् विश्वस्याऽऽयतनं महत् ॥ ९६ ॥
संततँ सिराभिस्तु लम्बत्याकोशसंनिभम् ।
तस्यान्ते सुषिरँ सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् ॥ ९७ ॥

---

पञ्चम्याः लुक् । निष्टयाया अधः अधस्तात् नाभ्या ऊर्ध्वं वितस्तिमात्रे अधोमुखं पद्माकारमपि च यत् हृदयमास्ते इत्यर्थः । **हृदयं—महत्** । तत् हृदयं विश्वात्मकस्य भगवतः **आयतनं** आधारभूतं विजानीयादित्यर्थः ॥ ९०-९६ ॥

**संततं...प्रतिष्ठितम्** । तत् हृदयमीषन्मुकुलितपुण्डरीकसदृशं सिराभिस्तु(?) लम्बते । तदन्ते सूक्ष्मं **रन्ध्रम्** । तत्र सर्वात्मकं ब्रह्म

---

स्थितिविशेषमुपवर्णयितुं पद्मकोशेत्यादि। एतदर्थं प्रवृत्तेन वाक्यजातेन, 'यत् पुण्डरीकं पुरमध्यसंस्थम्' इत्यादिकं दहरविद्यावाक्यमर्थात् विवृतं भवति। न तु तदर्थमेवैतद्वाक्यजातप्रवृत्तिः। अत एव एतदुपवर्णनानन्तरं 'स ब्रह्म स शिवः' इत्यादिना सर्वप्रकारसर्वान्तर्यामित्वप्रयुक्तसर्वपदवाच्यत्वनिगमनमिति । अथवा पद्मकोशेत्यादेरयमाशयो भाष्याद्यनुसारी—दहरविद्यावेद्यस्य सर्वविद्यावेद्यस्य च प्रागुक्तत्वात् एवमुपवर्ण्यमानहृदयवर्ती यो दहरविद्योपास्यः परमात्मा, स एव तत्तद्विद्योपास्यब्रह्मशिवाद्यन्तर्यामीति उक्तार्थोपसंहारः पद्मकोशेत्यादिना क्रियत इति ।

९६. निष्ट्याशब्दो भास्करमतः । निष्टिशब्द इकारान्तो विद्यारण्यस्य। वितस्तिः=द्वादशाङ्गुलमानम्। हृदयस्थानं तस्य विश्वायतनत्वञ्चोक्तम् । अथ तत्राग्निशिखामध्ये विश्वपदवाच्यः परमात्मा नीलतोयदनिभविग्रहो व्यवस्थित इति वक्तुं तत्र जाठराग्निप्रवेशोपयिकीं तस्याधोमुखीं स्थितिं सुषिरञ्च दर्शयति संततमिति। संततं =

तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः ।
सोऽग्रभुग् विभजंस्तिष्ठन्नाहारमजरः कविः ॥ ९८ ॥
संतापयति स्वं देहमापादतलमस्तकम् ।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः(ता) ॥ ९९ ॥

---

उपासकानुग्रहाय संनिहितम् । **तस्य मध्ये महान्....कविः** । सर्वतः प्रसृतः सर्वतोज्वालः तस्य हृदयस्य मध्ये जाठराग्निर्वर्तते । सः [तु] **अजरः** सर्वदा उन्निद्रः **कविः** शब्दायमानः **आहारं** भुक्तमशितपीतादिकम् 'अन्नमशितं त्रेधा विधीयते' इत्यादिप्रकारेण विभजन् अग्रे अशितादिकं पूर्वं स्वयमश्नातीत्यर्थः । **संतापयति....मस्तकम्** । देहगत ऊष्मा सर्वोऽपि तदधीन इत्यर्थः ॥ ९७ ॥

**तस्य मध्ये वह्नि...व्यवस्थितः** । वह्नेः **शिखा**[आत्म] ज्वाला । अणीयसी ऊर्ध्वा **अणीयोर्ध्वा** इति कर्मधारयः । संधिश्छा-

---

**सम्यग्व्याप्तम् । सुषिरम् । अयं भूताकाशः ; न तु दहराकाशो गगनं विशोक इत्युक्तः परमात्मा । सर्वमिति । अन्तर्यामिणः प्रतिहृदयमवतीर्णतया स्वरूपेण च सर्वात्मत्वज्ञापनाय सर्वशब्दविश्वशब्दाभ्यां तदुक्तिः ।**

**९८-९९. कोऽसावग्निरित्यत्राह सोऽग्रेति । स इत्यादि मस्तकमित्यन्तमेकवाक्यमेव वा स्यात् । स्वं स्वयं यत्र देहे वर्तते तम् । नन्वशितपीतजरणार्थो जाठराग्निरधःस्थितः कथं हृदयमध्ये वर्तत इति शङ्कायाम्, अन्यत्र स्थितस्यापि तस्य ज्वाला सूक्ष्मा ऊर्ध्वगामिनी तत्र प्रविष्टाऽस्तीति तद्द्वारत्वमेवाग्निमत्त्वमित्युपपादयितुमाह तस्य मध्ये वह्नीति । विद्यारण्यस्तु—तस्यान्ते हृदयस्य समीपे**

नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा ।
नीवारशूकवत् तन्वी पीताभा स्यात् तनूपमा ॥ १०० ॥

---

न्दसः । व्यवस्थित इति लिङ्गव्यत्ययश्छान्दसः । **नील....भास्वरा ।** नीलतोयदश्यामलभगवद्विग्रहाश्रयत्वात् मध्यस्थनीलतोयदविद्युन्निभेत्यर्थः । **मध्यस्थे**ति नीलतोयदविशेषणस्य पूर्वनिपाताभावश्छान्दसः। **नीवार.... तनूपमा ।** नीवाराग्रवत् सूक्ष्मा स्वप्रकाशा **तनूपमा** तन्वी=अल्पा उपमा यस्याः सा अणुसदृशीति यावत् (असदृशीति यावत्) । **स्यात्**

---

सुषिरं सुषुम्नानाडीनालम् । तस्य मध्ये = तन्नालमध्ये इति, उपरि च, 'तस्य मध्ये-अग्निमध्ये' इत्येवमाह । वह्निज्वाला जीवप्रभेति भास्करः। 'अग्निः= जीवः । वह्निशिखा =शिखेव शिखा परमात्मविग्रहः' इति कूरनारायणीयम् । वेदार्थसंग्रहे, 'सेयं दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहितनीलतोयदा विद्युदिवाऽऽभातीत्यर्थः' इत्यनेन वह्निशिखापदं यथाश्रुतार्थमिति, तत्र परमात्मनः स्वरूपं विग्रहोऽस्तीति च ज्ञायते । विद्युतो मध्यस्थनीलतोयदत्वकथनं वह्निशिखायाः नीलतोयदाभविग्रहविशिष्टत्वज्ञप्तये । यदि शिखेव शिखेत्यर्थ इष्यते, तर्हि वह्निशिखापदेन वह्नेः शिखेव, भास्करस्य प्रभेव भगवतोऽपृथक्सिद्धा श्रीर्लक्ष्येत ; न तु जीवो वा भगवद्विग्रहकान्तिर्वा । यथा नीलतोयदमध्ये जाता विद्युत् विष्वग्व्याप्तवती मध्यस्थनीलतोयदा भवति, तथा श्रीस्तन्वी पीताभा वोढुर्हरेर्बाहान्तराले स्थिताऽपि स्वाभया सुबहु व्याप्य स्वप्रभामध्यस्थभगवद्विग्रहा हृदयमध्यस्थाग्निमध्ये विभ्राजते इत्यर्थो युज्यते । एवमग्निज्वालातिरिक्तार्थस्वीकारे च, न 'तस्य मध्ये महानग्निः', 'वह्निशिखा' इति मिथः पुनरुक्तमिति शङ्कायाः प्रसक्तिः ।

"नागाचलेश ! निखिलोपनिषन्मनीषा मञ्जूषिकामरकतं

तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।

स ब्रह्मा स शिवः सेन्द्रः सोक्षरः परमः स्वराट् ॥ [२६] (अनु. ११)॥

नारायणः स्थितो व्यवस्थितः चत्वारि च ॥

---

अस्तीत्यर्थः । **तस्याः....व्यवस्थितः** । स्पष्टोऽर्थः । **स ब्रह्मा.... स्वराट्** । शरीरात्मभावप्रयुक्तः सामानाधिकरण्यव्यपदेशः । **अक्षरः** मुक्तः । **स्वराट्** अकर्मवश्यः । **परमः** उत्कृष्टः ॥ ९८—१०१ ॥

---

परिचिन्वतां त्वाम् । तन्वी हृदि स्फुरति कापि शिखा मुनीनां सौदामनीव निभृता नवमेघगर्भा ॥"

इति श्रीदेशिकसूक्तिरेतदर्थवर्णनपरा नूनम्, 'कापि तन्वी' इति अत्रत्यतन्वीपदप्रयोगेण तन्वीमणिं श्रियं ग्राहयति । निखिलोपनिषन्मनीषेति नारायणानुवाकाभिसंहितसर्वोपनिषद्विद्योक्तिः । भगवदुपासने प्रवृत्तानां भगवत्सनाथा श्रीः कृपया प्रत्यक्षीभवति । न च भगवदुपासने अग्निशिखास्फूर्तिर्नैयत्यम् । अतः शिखेह श्रीरिति विज्ञायते । एवञ्च सर्वपरविद्यावेद्यो नारायण इति वदन् अयमनुवाकः श्रीविशिष्टस्य तस्य सर्वहृदयकुहरस्थत्वं सर्वविद्यावेद्यत्वञ्च दर्शयतीति सुशोभनमेतत् । बृहदारण्यके, 'तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशः' (६२) इत्येतत्पूर्वापरवाक्यजातमिहानुसंधेयम् ।

व्यवस्थितः = विशेषेण हिरण्मयविग्रहविशिष्टतया अवस्थितः ।

१०१. सेन्द्रः सः = इन्द्रः । पादपूरणार्थो लोपः, 'सैष दाशरथी रामः' इतिवत् । अत एवात्र सहरिरिति प्रक्षिप्तमिति सिद्धम् । एकाक्षराधिक्यस्याप्यसहनेन लोपे क्रियमाणे सत्येव अक्षरत्रयमेलनायोगात् । परम इत्यस्य पश्चात् व्याख्यानं मुक्तस्याकर्मवश्यत्वप्रयुक्तं परमत्वमिति ज्ञापनार्थम् ।

१०२. एवं दहरोपासनं सर्वपरविद्योपास्यश्चोक्तम् । नीलतोयदाभः श्रीनिवासो निर्दिष्टः तत्रोपासनमन्त्रः कश्चित् प्रदर्श्यते स्मृतं

ऋत॑ँ स॒त्यं प॑रं ब्र॒ह्म पु॒रुष॑ं कृ॒ष्णपि॑ङ्गलम् ।
ऊ॒र्ध्वरे॑तं वि॒रूपा॑क्षं वि॒श्वरू॑पाय॒ वै नम॑: ॥ [२७] (अनु. १२) १०२ ॥
आ॒दि॒त्यो वा ए॒ष ए॒तन्म॑ण्ड॒लं तप॑ति॒ तत्र॒ ता ऋच॒स्तदृचा

---

(कृष्णपिङ्गलभगवन्मन्त्रः)

**ऋतं...नमः । ऋतम् ।** ऋ गतौ । सर्व[त्र]गतम् । **सत्यं** निर्विकारम् । **कृष्णपिङ्गलम्** लक्ष्मीशोभासंप्रयुक्ततया कृष्णपिङ्गलम् । अथवा भगवद्विग्रहस्यातसीपुष्पसंकाशतया प्रतिपादनात् अतसीपुष्पस्य मयूरग्रीवासदृशतया कृष्णपिङ्गलवर्णत्वात् कृष्णपिङ्गलत्वोपपत्तिः । 'नमस्ये परमानन्दवपुषं कृष्णपिङ्गलम् । नारायणं जगन्नाथं वासुदेवमनामयम्' इति योगार्णववचनात् । [**ऊर्ध्वरेतम्** ?] ऊर्ध्वमुत्कृष्टं **रेतो** वीर्यं यस्य स तथोक्त इत्यर्थः । 'रेतश्शब्देन विकार उच्यते । विकारात् उत्तीर्णतया ऊर्ध्वरेतम्' इति **भट्टभास्करेण** व्याख्यातम् । **विरूपाक्षम्** विरूपे अक्षिणी यस्य स **विरूपाक्षः । वाराहे,** 'तस्य चिन्तयतो नेत्रात् तेजः समभवन्महत् । दक्षिणं वह्निसंकाशं वामं तुहिनसंनिभम्' इत्युक्तेः शीतोष्णत्वेन परस्परविलक्षणत्वात् विरूपाक्षत्वम् ॥ १०२ ॥

(आदित्यान्तर्वर्तिहिरण्मयपुरुषोपासनम्)

हृदयान्तर्वर्त्युपासनमुपदिश्य आदित्यान्तर्वर्त्युपासनमुपदिशति

---

सत्यमिति । विरूपाक्षान्तरव्यावृत्तये ऊर्ध्वरेतं विरूपाक्षमित्युक्तम् । अत आह विरूपे इति । रुद्रपरत्वे हि विरूपाण्यक्षीणि इति वा, विरूपमक्षि ( निटिलस्थं ) इति वा विग्राह्यम् ।

१०३. अध्यात्मं उक्तरूपस्याधिदैवतमुपासनान्तरमुच्यते । तपति...य एष इति । उक्तञ्च विष्णुपुराणे (२-११)—

मण्डल ँस ऋचां लोकोऽथ य एष एतस्मिंन् मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्ना मण्डल ँस साम्नां लोकोऽथ य एष एतस्मिंन् मण्डलेऽर्चिषि पुरुषस्तानि यजू ँषि स यजुषा मण्डल ँस यजुषां लोकस्सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः ॥ [२८] (अनु.१३) १०३ ॥

आदित्यो वै तेज ओजो बलं यशश्चक्षुश्श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तत् सत्यमन्नमायुरमृतो जीवो विश्वः कतमः स्वयम्भुः प्रजापतिः

---

**आदित्यो वा एष....पुरुषः** । प्रत्यक्षदृष्टादित्यमण्डलतद्गतार्चिस्तद्गतपुरुषाणाम् ऋक्सामयजूरूपत्वं तन्मण्डलत्वं तल्लोकत्वञ्च । अतश्चैतत्त्रयरूपतया त्रय्येव विद्या तपतीत्यर्थः । एवं त्रयीमण्डलरूपत्वं आदित्ये कमनीयविग्रहयुक्ततया योगिभिर्दृश्यमान उपासितव्य इत्यर्थः ॥१०३॥

**आदित्यो वै तेजः....संवत्सर इति** । **तेजः** प्रतापः । **ओजः** कान्तिः । सत्सु साधुः **सत्यः** । **सत्यं** निर्विकारम् । आदित्यस्यैव तेज आद्यात्मकत्वम् । **कः किं कं कतम** इति पृच्छ्यमानसर्ववस्तुरूपत्वमपि तस्यैवेत्यर्थः । **इति**शब्दः प्रकारवचनः । एवञ्जातीयक-

---

'यैव शक्तिः परा विष्णोः ऋग्यजुस्सामसंज्ञिता ।
सैषा त्रयी तपत्यंहो जगतश्च हिनस्ति यत् ॥' एवं सा सात्त्विकी शक्तिर्वैष्णवी या त्रयीमयी...भास्वन्तमधितिष्ठति' इति ।

१०४. एतद्विषयमुपासनम्, अवान्तरफलमिश्रमपवर्गञ्च तत्फलमाह ब्रह्मणः सायुज्यमित्यादिना ।

संवत्सर इति संवत्सरोऽसावादित्यो य एष पुरुष एष भूतानामधिपति-र्ब्रह्मणः सायुंज्यँ सलोकतामाप्नोत्येतासामेव देवतानाँ सायुंज्यँ सार्ष्टिताँ समानलोकतामाप्नोति य एवं वेदेत्युपनिषत् ॥ [२९]

(अनु १४.) १०४ ॥

घृणिः सूर्य आदित्योमर्चयन्ति तपः सत्यं मधु क्षरन्ति तद् ब्रह्म

---

त्वमपि तस्यैवेत्यर्थः । **संवत्सरोऽसौ....निषत्** । आदित्ये यः पुरुषः स एव सम्यक् वसन्ति सर्वभूतान्यस्मिन्निति **संवत्सरः** । इदं संवत्सरत्वोपपादनमुपलक्षणं पूर्वनिर्दिष्टतेजस्त्वादिगुणानामपि । **सायु-ज्यम्** । युज्यत इति **युक्** गुणः । सायुज्यं=समानगुणत्वम् । **सार्ष्टितां** समानभोगत्वम् । **एतासां** प्रसिद्धानां [देवतानां] वायुः, 'लोकपालः' इति पूर्वनिर्दिष्टानां वा सार्ष्टित्वसालोक्ये प्राप्नोतीत्यर्थः ॥ १०४ ॥

**घृणिः--सुवरोम्** । अपां प्रशंसार्थोऽयं मन्त्रः अपां प्राशनाभि-मन्त्रणादौ विनियुज्यते । **सूर्ये** सूर्यमण्डले विद्यमानम् आदित्यं **घृणिः** घृणयः [इत्यर्थः] वचनव्यत्ययश्छन्दसः ; किरणाः **अर्चयन्ति** पूजयन्ति । तापकैः (संतापकैः) किरणैर्युक्तो भवति । आदित्यमर्चयन्तीत्यर्थे **आदित्योमर्चयन्तीति** छान्दसः ओकारः । सत्यं **[तपः]** तपः

---

१०५. घृणिरित्यादिः कश्चिदुपासनमन्त्रः । तै. ब्रा. काठके (१–९) एतत्प्रपञ्चः । उक्तश्च भट्टभास्करेणापि, "सावित्रोऽष्टाक्षरः प्रणवान्तो मन्त्रः काठके विख्यातवैभवः" इति । आदित्योमित्यत्र आदित्यपदात् परः प्रणव इत्याशयः । अर्चयन्तीत्यादिरनुष्टुबिति च तेनोक्तमिति तदन्यत् । एवञ्च सति, 'अपां प्रशंसार्थोऽयम्' इत्यादि-

तदाप आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवःसुवरोम् ॥ [३०]
(अनु १५.) १०५ ॥

सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रस्सन् महो नमो नमः । विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानञ्च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ [३१] (अनु १६.) १०६ ॥

---

फलभूतं **मधु** भोग्यं **क्षरन्ति** निष्पादयन्ति । आदित्यकिरणेभ्य एव वृष्ट्युत्पत्तेः । तदेव बृहत्त्वगुणयोगात् ब्रह्म । तदेव **आप** इत्युच्यते । (?) भूरादिव्याहृत्यर्थाः (र्थोऽपि) प्रणवार्थोऽपि आप एवेति अपां प्रशंसा ॥

**(त्वरितरुद्राः)**

त्वरितफलार्थिभिर्जप्यतया **त्वरितरुद्र**समाख्याताः षोडश-सप्तदशाष्टादशाः त्रयोऽनुवाकाः रुद्रस्तुतिरूपाः । **सर्वो वै...अस्तु** । रुद्रस्य जगन्निर्वाहकत्वात् **सर्वो वै रुद्र** इत्युक्तिः । **पुरुष....नमः** । **पुरुषः** सर्ववीर्यसंपन्न इत्यर्थः । **महः** महान् । **नमो नम** इति वीप्सा पूज्यत्वातिशयप्रतिपादनार्था । **विश्वं....अस्तु** । स्पष्टोऽर्थः ॥ १०६ ॥

---

भाष्यं नूनं मूलान्तरमवलम्ब्य । अत्र, आपो ज्योती रसोऽमृतं ब्रह्म' इत्यंशो न व्याख्यातः, नूनं आदित्यकिरणजनितं मधु ब्रह्म आपः इति पूर्वकृतमपां वर्णनमेवात्र संक्षिप्तमित्याशयेन ।

१०६. सर्ववीर्येति । परमात्मन एव पुरुषपदमुख्यार्थत्वात् अस्य विशिष्य पुरुषत्वोक्तिः स्कन्दसंभववर्णनादिप्रसिद्धविलक्षण-वीर्यख्यापनायेत्याशया स्यात् । यद्वा, 'सर्वो वै रुद्र इत्यस्योपपादनाय रुद्रस्य पुरुषात्मकत्वपरत्वाद्वाक्यस्य' इति वक्ष्यमाणश्रुतप्रकाशिका-घट्टस्थितात् वाक्यात् पुरुषपदं भगवत्परमिति तदनुगुणार्थमिदं नेयम्।

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शन्तमँ हृदे।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु॥ [३२] (अनु १७.) १०७॥
नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः॥
[३३] (अनु १८.) १०८॥
यस्य वैकङ्कत्यग्निहोत्रहवणी भवति प्रतिष्ठिताः

---

**कद्रुद्राय...हृदे।** क इवाऽऽचरतीति **कत्।** स्रष्टेत्यर्थः। **प्रचेतसे** प्रकृष्टबुद्धिशालिने। **मीढुष्टमाय** सेक्तृतमाय। वर्षादिभिर्लोकसेचकाय। **तव्यसे** तपस्विने। **हृदे** हृद्याय। **शंतमं** मनःसुखावहं स्तोत्रं **वोचेम** वदा(दे)म इत्यर्थः॥ १०७॥

**नमो....नमः। हिरण्यबाहवे** रमणीयबाहवे। 'देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु' इत्यत्र हिरण्यालङ्कृतपाणिरिति **भट्टभास्कर**व्याख्यानात् हिरण्यालङ्कृतबाहवे इति वाऽर्थः। **हिरण्यपतये** धनानां पतये (पत्ये?)। **अम्बिकापतये** उमापतय इत्यर्थः। आदरार्थं **अम्बिकापतये उमापतय** इति द्विरुक्तिः। **'सर्वो वै रुद्रः, पुरुषो वै रुद्रः'** इति श्रवणात् **रुद्रशब्द**स्य परमात्मपरत्वम्' इति **व्यासार्यैः** सर्वव्याख्यानावसरे वर्णितम्। तापनीये च, 'ऋतं सत्यं परं ब्रह्म नृकेसरिविग्रहं कृष्णपिङ्गलमूर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् उमापतिः पशुपतिः पिनाकी ह्यमितद्युतिः ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः' इति नृसिंहपरतया उमापतिप्रभृतिशब्दानां व्याख्यातत्वात् भगवत्परत्वं युक्तमेव॥ १०८॥

(होमानुबन्धि) **यस्य....प्रतिष्ठिताः।** यस्य यजमानस्य अग्निहोत्र-

प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै ॥ [३४] (अनु १९.) १०९ ॥
कृणुष्वपाज इति पञ्च ॥ [३५] (अनु २०.) ११० ॥
अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्तेषाᳫं सर्वभूतानां

होमसाधनभूतपात्रविशेषो विकङ्कताख्यवृक्षविशेषप्रकृतिको भवति, तस्य प्रतिष्ठिता भवन्ति । के प्रतिष्ठिता भवन्तीत्यत्राह **प्रत्येवास्याहुतय** इति । आहुतयः प्रतिष्ठिताः भवन्ति । ताः [प्रतिष्ठिताः] यजमानस्य प्रतिष्ठित्यै प्रकल्पन्त इत्यर्थः ॥ १०९ ॥

**कृणुष्व....पञ्च ।** रक्षोजनशान्त्यर्थाः पञ्च मन्त्राः इह पठितव्या इत्यर्थः ।

१०९. प्रतिष्ठिताः, प्रतितिष्ठन्ति, प्रतिष्ठित्यै इति भूतभवद्भविष्यत्सु त्रिष्वपि कालेषु प्रतिष्ठास्थितिरुक्तेत्यपि ज्ञायते ।

तै. सं. (१-२-१४)

*कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्ताऽसि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥
तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।
तपूँष्यग्ने जुह्वा पतङ्गान् असंदितो वि सृज विष्वगुल्काः ॥ २ ॥
प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशँसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् ॥३॥
उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥४॥
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥५

माता मेदिनी महती मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा का या सा सत्येत्यमृतेति वसिष्ठः ॥ [३६]
(अनु २१.) १११ ॥

---

(पृथिवीप्रशंसा) अदितिः...वसिष्ठः। देवगन्धर्वमनुष्यपितृसुरसर्वभूतमातृत्वयुक्ता, मेदिन्यादिशब्दप्रवृत्तिनिमित्तगुणवती, 'कतमा का या सत्या अमृत्या' इत्यादिशब्दिता [अदितिशब्दिता] भूमिरेव। खण्डनानर्हत्वात् भूमेरेवादितित्वम् । एवं भूमिं वसिष्ठः प्रशशंसेत्यर्थः ॥ १११ ॥

---

१११. अदितिरित्यादिर्लक्ष्म्यंशप्रतिपादक इति (नञ्जीयर्) श्रीसूक्तभाष्ये । आपो वा इत्यादिना अभिमन्त्र्य प्रोक्षणमाह्निकग्रन्थे इज्यास्नानघट्टे निरटङ्कि। ततः प्रातःस्नानं प्रथमत उपवर्ण्य तदनन्तरमुपादानकालावसानात् प्राक् मुमुक्षुकर्तव्यमुपासनादिकमुपवर्ण्य, अथ माध्याह्निकस्मारणाय तदुपयोगिमन्त्रान् कांश्चिदनुसंधत्ते इति ज्ञायते। अत एव माध्याह्निकस्य [illegible]व्यप्रस्तोतव्यत्वात् आपः पुनन्तु इति मन्त्रः पूर्वं पठितः। तत्प्रसङ्गात् सायंप्रातःकालिकप्राशनार्थमन्त्रयोः पश्चादुक्तिः । अथ मध्याह्नेऽपि कर्तव्यगायत्र्यावाहनप्राणायामोपस्थानादिकथनम् । अथ च [illegible]वदाराधनवैश्वदेवपञ्चमहायज्ञातिथ्यकरणादि संगृहीतम् 'ओमन्तश्चरति' इति । ततो भोजनानुबन्धिनो मन्त्रा इति वर्ण्यते तावदिज्याकालिकम् । वर्णयिष्यते च ततः स्वाध्यायकालिकमिति संक्षेपः। तदत्रोपादानकाले इज्याद्युपकरणभूतनानापार्थिवादिद्रव्यसंभरणपरस्य युज्यते लक्ष्म्यंशपृथिवीस्तुतिः। तथा आपः पुनन्तु पृथिवीमिति वक्ष्यन् आदौ पृथिवीमपश्च क्रमेण प्रशंसतीति च भाव्यम् ।

अदितिः सर्वभूतानां मातेत्यन्वयः। न केवलं देवादीनां पञ्चानाम्, सर्वेषामपि स्थावरान्तानां भूतानां मातेत्यर्थः। 'कतमा =सुखतमा,

आपो वा इदꣳ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽमृतमापोऽन्नमापः सम्राडापो विराडापः स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवराप ओम् ॥ [३७] (अनु २२) ११२ ॥

आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् ।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ॥
यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ।

**आपो ओम्** । सम्यक् राजतीति **सम्राट्** । विशिष्य राजती (त इ)ति **विराट्** । स्वयमेव राजत इति **स्वराट्** । ओमिति ब्रह्मात्मकत्वमुच्यते । सर्वात्मकत्वेन अपां प्रशंसार्थोऽयं मन्त्रः तदभि मन्त्रणादौ विनियुक्तः ॥

**(माध्याह्निकापोशनमन्त्रः)**

**आपः...माम्** । स्पष्टोऽर्थः । **पुनन्तु ब्रह्मणस्पतिः** । **ब्रह्मणः** चतुर्मुखस्य वेदस्य वा पतिर्नारायणः पृथिवीं पुनातु (नन्तु) इत्यर्थः । **पुनन्त्विति** वचनव्यत्ययश्छान्दसः । **ब्रह्मपूता पुनातु माम्** । **ब्रह्मणा** परमात्मना पूता पृथिवी मां पुनात्वित्यर्थः । **यदुच्छिष्टं...स्वाहा** ।

---

काया–कायरूपेण परिणता' इति विद्यारण्यः। 'कतमा–अशक्यनिर्धारणा, का–अव्यक्तरूपा–या सा यादृशी भवति तादृशी' इति भास्करः।

११२. सम्राट् =लोकेश्वरश्चतुर्मुखादिः। विराट् =विराट्पुरुषो व्यूहादिः । स्वराट् = अनन्याधिपतिः ॥

११३. पृथिवी =प्रतिगृहीतभोग्यभोगोपकरणभोगस्थानभूता । ब्रह्मपूतेत्यत्र ब्रह्मेति पृथक्पदं परमतम् । पूर्वं पूतेति अप्पूतत्वोक्तिवत् अत्रापि ब्रह्मणस्पतिपूतत्वं वक्तव्यम् ; ब्रह्मणस्पतिर्नारायण एव परं

सर्वं पुनन्तु मामापोऽसताञ्च प्रतिग्रहꣳ स्वाहा ॥ [३८] (अनु २३) ११३॥

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यदह्ना पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। अहस्तदवलुम्पतु। यत् किञ्च दुरितं मयि। इदमहं माममृतयोनौ। सत्ये ज्योतिषि जुहोमि स्वाहा ॥ [३९] (अनु २४) ११४ ॥

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यद्रात्र्या पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। रात्रिस्तदवलुम्पतु। यत् किञ्च दुरितं मयि। इदमहं

स्पष्टोऽर्थः। अयं [च] मन्त्रः अपामाचमने विनियुक्तः ॥ ११३ ॥

(सायमापोशनमन्त्रः)

**अग्निश्च....रक्षन्ताम्**। **मन्युः** क्रोधः, **मन्युपतयः** क्रोधप्रवर्तकाश्चक्षुरादयश्च क्रोधकृतेभ्यः पापेभ्यो मां रक्षन्ता(?)मित्यर्थः। **यदह्ना...मयि**। **शिश्ना** शिश्नेनेत्यर्थः। मनोवागादिना (मन आदिना) अह्नि कृतं पापम् अहरेव **लुम्पतु** छिनत्तु; नाशयत्वित्यर्थः। **इदमहम्** अहमिमं माम् **अमृतानां** मुक्तानां **योनौ** स्थाने **सत्ये** ब्रह्मणि **जुहोमि** समर्पयामीत्यर्थः। अयञ्च मन्त्रः अपामाचमने पापशोधके विनियुक्तः ॥

(प्रातरापोशनमन्त्रः) **सूर्यश्च...स्वाहा**। पूर्ववदर्थः। सर्वप्राणि-

ब्रह्मेति ब्रह्मपदं तत्परं कृत्वा ऐकपद्यमाश्रितमिह। उच्छिष्टं दात्रा स्वोपयुज्यमानद्रव्यांशभूतं यत् दत्तम्, तादृशम्। उच्छिष्टादि सर्वं पार्थिवादिरूपं तथा असत्प्रतिग्रहं तथारूपञ्च मां शोधयत्त्वित्यर्थः ॥

मामममृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ [४०] (अनु. २५)

आयातु वरदा देवी (वि) अक्षरं ब्रह्मसंमितम् ।

गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व नः ॥

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि [४१] (अनु. २६) ११६

---

स्तुतिहेतुत्वात् परमात्मनः सूर्यत्वम् ॥ ११५ ॥

(**गायत्र्यावाहनम्**) **आया**त्वित्यनुवाको गायत्र्यावाहने विनियुक्तः **आयातु वरदा देवी ।** गायत्रीदेवी आयात्वित्यर्थः । **अक्षरं...नः** हे छन्दसां मातः ! त्वमागत्य **गायत्रीं** गायत्रीच्छन्दस्कं वाच्येन ब्रह्मणा पूज्यत्वेन **संमितं** समम् **इदम् अक्षरं** वर्णरूपं ब्रह्म बृहत्त्वगुणयुक्तं **जुषस्व** सेवस्व । **ओजोऽसि....गायत्रीमावाहयामि । ओज** कान्तिः । **सहः** सामर्थ्यम् । ओजआदीनां साधनमसीत्यर्थः **नामासि** नामाप्यसीत्यर्थः । **विश्वायुः** विश्वेषामायुस्साधनमसीत्यर्थः **अभिभूः** परेषामभिभाविका । **ओं**शब्दो हि, "ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इत्युक्तरीत्या ब्रह्मवाचकः । ब्रह्मात्मिका असीत्यर्थः । इतरत् स्पष्टम् ॥ ११६ ॥

---

११६. नामाप्यसीति । अत्र, धामासि, नामासि इति असिपदावृत्त्यभावात् नामेति प्रसिद्धौ । देवानां प्रसिद्धं धामासि, देवानां धामत्वेन प्रसिद्धाऽसीति वाऽर्थः सुवचः। अथापि धाम्नीव नाम्न्यपि देवानामन्वयार्थं असिपदानावृत्तिरिति सुवचत्वात्, देवानां नाम्नो यशस

ओं भूः । ओं भुवः । ओं सुवः । ओं महः । ओं जनः । ओं तपः । ओं सत्यम् । ओं तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥ [४२] (अनु २७.) ११७ ॥

(प्राणायाममन्त्रः) **ओं भूः ....ओं सत्यम्** । भूलोकाद्याः सप्तापि लोकाः **ओं** ब्रह्मात्मका इत्यर्थः । **ओं...प्रचोदयात्** । **नः** अस्माकं **धियो यश्चोदयति** सुप्तानि ज्ञाने(विज्ञाने)न्द्रियाणि [यत्] प्रेरयति, तत् **सवितुः** जगत्कारणस्य **वरेणियं** वरणीयम् उपास्यं **भर्गः** तेजः—परमात्मस्वरूपं **धीमहि** ध्यायेमे(मही)त्यर्थः ॥ **ओमापो...सुवरोम्** । गायत्र्या इदं शिरः । **आपो ज्योतिः** तदुपलक्षितानि भूतानि, **रसः** तद्गुणाश्च, **अमृतं ब्रह्म** मुक्तात्मा, तत् सर्वम् **ओम्** ब्रह्मेत्यर्थः । **भूर्भुवस्सुवरोम्** लोकत्रयमपि ब्रह्मैवेत्यर्थः ॥ ११७ ॥

साधनत्वेन गायत्रीवर्णने अतिशयलाभाच्च नामाप्यसीति भाषितम् ।

११७. ओंभूरित्यादिः प्रथमो मन्त्रः प्राणायाममन्त्र इति प्रसिद्धम् । पुनः ओंभूरित्यादिरपि प्रायः स एवाधिकप्रणवरहितः । अयम्, एतदनन्तरः ओंतदिति मन्त्रश्च पूर्ववत् वैकल्पिकौ प्राणायाम-मन्त्राविति परोक्तम् ॥ यत् प्रेरयति तत् इति क्वचित् पाठः । तदा गायत्र्यां श्रूयमाणयोर्यत्तच्छब्दयोरेव प्रतिसंबन्धित्वौचित्यात् य इति पुलिङ्गशब्दस्य यदिति विपरिणाम आदृत इति भाव्यम् । यच्छब्देन सवितारमेव गृहीत्वा, तस्य सवितुरिति तच्छब्दमर्थसिद्धं मत्वा क्लीबतच्छब्दस्य प्रसिद्धपरामर्शितया योजनाऽप्यस्ति । यथा,

"यो देवः सविताऽस्माकं धियो धर्मादिगोचराः । प्रेरयेत् तस्य यद् भर्गस्तद्वरेण्यमुपास्महे ॥" इति स्मृतिमनुसृत्य शतदूषण्याः—

ओं भूर्भुवस्सुवर्महर्जनस्तपस्सत्यं तद् ब्रह्म तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥ [४३] (अनु. २८) ११८ ॥

ओं तद् ब्रह्म । ओं तद् वायुः । ओं तदात्मा । ओं तत् सत्यम् । ओं तत् सर्वम् । ओं तत् पुरोर्नमः ॥ [४४] (अनु. २९) ११९ ॥

उत्तमे शिखरे देवी भूम्यां पर्वतमूर्धनि ।

---

**ओं भूः....पुरोर्नमः** । अस्मिन्ननुवाके प्रणवस्यैव सर्वात्मत्वेन स्तुतिः । **पुरः** पूर्वभावि । कारणमित्यर्थः । [रेफश्छान्दसः ।] अतः तस्मै प्रणवाय नम इत्यर्थः ॥ ११८-११९ ॥

(**गायत्र्युपस्थानम्**) **उत्तमे....यथासुखम्** । मेर्वादिमूर्धभागे तत्रापि उत्तमे शिखरे विद्यमानायां **भूम्यां** भोग्यप्रदेशविशेषे यथासुखं

---

"प्रतिपुरुषमनेकाः प्रत्यवस्थं विचित्राः
शुभगतिषु धियो यश्चोदयत्यञ्जसा नः ।
अखिलचिदचिदन्तर्यामि तद् विष्णुसंज्ञं
सवितुरहमुपासे तस्य देवस्य भर्गः ॥"

इति । अत्र तस्येति सवितृविशेषणं प्रतिसंबन्धिनिर्देशः। सवितुर्जगत्कारणस्येति । अयमर्थः सर्वसंमतः । सवितृपदस्य निद्राणजनप्रबोधकतया सुप्तर्धीप्रेरकसूर्यपरत्वेऽप्युपासनं तदन्तर्वर्तिन एव वरणीयस्य विष्णोरिति नानुपपत्तिः । 'स यश्चायं पुरुषे' इति वाक्योक्तरीत्या अन्तर्यामिरूपस्य सूर्यमण्डलस्थविष्णुसंज्ञपरमात्मरूपत्वात् विष्णुसंज्ञत्वम् ।

११८-११९. अस्मिन्ननुवाक इत्येकत्वमविवक्षितम् । अतोऽनुवाकद्वयत्वेऽपि न दोषः ।

१२०. उत्तमे इति । देवीति द्विः श्रूयते । तत्र द्वितीयं संबुद्धि-

ब्राह्मणेभ्यो ह्यनुज्ञानं गच्छ देवि यथासुखम् ॥ [४५] (अनु. ३०) ॥

ओमन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु। त्वं यज्ञस्त्वं विष्णुस्त्वं वषट्कारस्त्वँ रुद्रस्त्वं ब्रह्मा त्वं प्रजापतिः॥ [४६] (अनु. ३१) १२१॥

अमृतोपस्तरणमसि ॥ [४७] (अनु. ३२) १२२ ॥

---

गच्छ। ब्राह्मणेभ्यः त्वदुपासकैर्ब्राह्मणैः अनुज्ञानं कृतमिति शेषः॥१२०॥

**(सर्वात्मकब्रह्मोपासनादिमन्त्रः)**

**ओमन्तः...प्रजापतिः** । ओङ्कारवाच्यस्त्वं सर्वात्मकोऽन्तश्चरसीत्यर्थः। शिष्टं स्पष्टम्। ब्रह्मोपासने विनियुक्तोऽयं मन्त्रः ॥१२१॥

**( भोजने पूर्वापोशनम् ) अमृतोपस्तरणमसि** । पूर्वापोशन(चमन)मन्त्रोऽयम् । पात्रे(त्र) हविषो असंसर्गाय क्रियमाणद्रवद्रव्यसेचनमुपस्तरणम् । हे अमृत ! त्वमुपस्तरणमसीति हस्तस्थजलस्याभिमन्त्रणम् । उपस्तीर्यतेऽनेनेति व्युत्पत्त्या उपस्तरणसाधनमुच्यते ॥

---

रिति निर्विवादम्। 'प्रथमं तु असंबोधनम्; देवी शिखरे तिष्ठति' इति विद्यारण्यः। तदपेक्षया शिखरादौ देवी देवनशीला क्रीडापरा त्वमिति भास्करव्याख्यानं श्रेयः। यथासुखमित्येतदनुसृत्य, शिखरे वा भूम्यां वा मूर्धनि वेति स्थलविकल्पो भास्करेष्ट इत्यलमधिकेन। ब्राह्मणैरिति। ब्राह्मणेभ्यः ब्राह्मणानां सकाशात् अनुज्ञानं प्राप्तमित्यर्थोऽपि नासंमतः।

१२२. अमृतोपस्तरणमिति। उपरि अमृतापिधानमित्यत्र अमृतरूपमाच्छादनमिति व्याख्यानात् अत्र अमृतमयमुपस्तरणमिति पाठस्तदनुगुणः। अमृतेति संबुद्धिरिह चेत्, तत्रापि तथा सुवचम्। अमृतं जुहोमीत्यत्रा-तपदमन्नपरं व्याख्यास्यते। अतः अमृतस्या-

प्राणे निविष्टोऽमृतं जुहोमि। प्राणाय स्वाहा। अपाने निविष्टोऽमृतं जुहोमि। अपानाय स्वाहा। व्याने निविष्टोऽमृतं जुहोमि। व्यानाय स्वाहा। उदाने निविष्टोऽमृतं जुहोमि। उदानाय स्वाहा। समाने निविष्टोऽमृतं जुहोमि। समानाय स्वाहा। ब्रह्मणि म आत्माऽमृतत्वाय॥ [४८] (अनु. ३३) १२३॥

---

(प्राणाहुतिमन्त्रः)

**प्राणे....स्वाहा।** प्राणसंतर्पणेऽभिनिविष्टस्सन् अमृतभूतमन्नमह जुहोमीत्यर्थः। एवमुत्तरत्रापि। **ब्रह्मणि म आत्माऽमृतत्वाय।** मे आत्मा ब्रह्मणि हुतः=समर्पितस्सन् अमृतत्वाय कल्पतामित्यर्थः॥१२३

---

न्नस्योपस्तरणमित्यपि स्यात्। उक्तञ्च भास्करेण, 'उपस्तरणमास्तरणं अमृतरूपान्नसदनम्' इति। उपस्तरणपदस्य मीमांसाप्रसिद्धमर्थं दर्शयति पात्र इत्यादिना। इदं यावत्संभवमत्र ग्राह्यम्। यागे चतुरवत्तादौ हविरवदानात् प्राक् उपस्तरणं पश्चादभिघारणञ्च क्रियते अवत्तहविर्धारकपात्रे हविषोऽसंसर्गाय। अत्रेदमुपस्तरणं न भोजनपात्रे करे वा तदसंसर्गाय। अस्य आपोशनमन्त्रत्वस्योक्तत्वात्। किंतु वैश्वानराग्नौ होम्यस्य हविषो मध्ये गलादिसंलग्नतावारणाय स्यात्। 'शयानस्य पुंसो मञ्चोपरि पटादिरूपोपस्तरणवत् प्राणदेवताया इदमुपस्तरणम्; अपां प्राणवासस्त्वप्रसिद्धेः' इति विद्यारण्यः। 'भोजनकाले आदावन्ते च द्रवभूतं ग्राह्यम्। मध्ये कठिनम्' इति विष्णुपुराणे। नूनं तथासति बहिरग्निना जलमध्ये तण्डुलादिपाक इव अन्तरपि पाकः सुकर इति। उपस्तरणादि च तत्सूचकमिव। अभिमन्त्रणमिति। हस्तस्थजलेन पुंसा उपस्तरणतापादकं प्राशनं करिष्यता मन्त्रः प्रयोक्तव्य इति भावः; 'इत्यपः पिबेत्' इति स्मृतेः॥

१२३. ब्रह्मणि म इत्यनेन दर्शयिष्यमाणस्य ब्रह्मणि समर्पणस्य

प्राणे निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। प्राणाय स्वाहा॥ अपाने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। अपानाय स्वाहा॥ व्याने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। व्यानाय स्वाहा॥ उदाने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। उदानाय स्वाहा॥ समाने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। समानाय स्वाहा॥ ब्रह्मणि म आत्माऽमृतत्वाय॥
[४९] (अनु. ३४) १२४॥

अमृतापिधानमसि॥ [५०] (अनु. ३५) १२५॥

श्रद्धायां प्राणे निविश्यामृतँ हुतं। प्राणमन्नेनाऽऽप्यायस्व॥ अपाने निविश्यामृतँ हुतं। अपानमन्नेनाप्यायस्व॥ व्याने निविश्यामृतँ हुतं। व्यानमन्नेनाप्यायस्व॥ उदाने निविश्यामृतँ हुतं। उदानमन्नेनाप्यायस्व॥ समाने निविश्यामृतँ हुतं। समानमन्नेनाप्यायस्व॥

---

**प्राणे....स्वाहा।** अयं मन्त्रः पूर्वेण मन्त्रेण विकल्पितः। शिवस्सन् हे हूयमानौदन ' **अप्रदाहाय** जाठराग्निकृतदाहाभावाय मां प्रविशेत्यर्थः। एवमुत्तरत्रापि॥ १२४॥

**(उत्तरापोशनम्) अमृतापिधानमसीति।** अमृतरूपमाच्छादनमसि; उत्तरापोशनार्थहस्तस्थजलाभिमन्त्रणमंत्रः॥ १२५॥

**(भोजनानन्तरोपयुक्तमन्त्राः) श्रद्धायां....आप्यायस्व।** जाठराग्निं प्रति वचनमिदम्। श्रद्धायां स्थित्वा। श्रद्धालुना मयेति यावत्।

---

शेषभूतमिदं प्राणधारणम्। न पुनरिन्द्रियपुष्ट्यर्थं भोजनमिति ज्ञाप्यते।

ब्रह्मणि म आत्माऽमृतत्वाय ॥ [५१] (अनु. ३६) १२६ ॥

प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकस्तेनान्नेनाप्यायस्व ॥ [५२] (अनु. ३७) १२७ ॥

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः ।

ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥ [५३] (अनु. ३८) ॥

---

[इत्यर्थः] । प्राणे निमित्ते हुतमन्नम् । तेन प्राणं पोषयस्व । [**हुतम् तेन** प्राणं पोषयेत्यर्थः] [एवमुत्तरत्रापि ।] ॥ १२६ ॥

**प्राणानां....आप्यायस्व** । इदमपि जाठराग्निं प्रति वचनम् । प्राणानां जाठराग्न्यधीनत्वात् तेषां ग्रन्थिरसि । जाठराग्निना ग्रथिताः प्राणा हि देहे वर्तन्ते । **रुद्रोऽसि** रोदयिताऽसि । **अन्तकः** भुक्तान्नस्य नाशकः । तादृशस्त्वं **मा** मां **विश** जरणार्थं ज्वालया व्याप्नुहीत्यर्थः ॥

**अङ्गुष्ठ....विश्वभुक्** । अङ्गुष्ठपरिमाणहृदयमाश्रितः, अत एवाङ्गुष्ठपरिमाणः, सर्वस्य जगतः **ईशः** नियन्ता **प्रभुः** शेषी **पुरुषः** शब्दितो

---

१२६—१२८. भुक्त्वा आचम्य श्रद्धायामित्यादयः प्रयुज्यन्ते । तत्र च क्रमविशेषादिकमाह्निकग्रन्थोद्धृतव्यासवचनादेवम्—

"अमृतापिधानमसीत्युपरिष्टादपः पिबेत् ।
आचम्याङ्गुष्ठमात्रेति पादाङ्गुष्ठे तु दक्षिणे ॥
निःस्रावयेद्धस्तजलमूर्ध्वहस्तः समाहितः ।
हुतानुमन्त्रणं कुर्यात् श्रद्धायामिति मन्त्रतः ॥
अथाक्षरेण स्वात्मानं योजयेत् ब्रह्मणीति हि ॥"

अनेन वचनेन अङ्गुष्ठमन्त्रः दक्षिणपादाङ्गुष्ठे ऊर्ध्वहस्तजलनिःस्रावणे विनियुक्त इति अङ्गुष्ठञ्च समाश्रित इत्यत्राङ्गुष्ठपदं दक्षिणपादाङ्गुष्ठपरं स्यात् । 'चकारः शिरःपर्यन्तसमुच्चये । आपादमस्तक-

मेधा देवी जुषमाणा(नुदमाना) न आगाद्विश्वाची भद्रा सुमनस्यमाना।
त्वया जुष्टा जुषमाणा दुरुक्तान् बृहद्वदेम विदथे(धे) सुवीराः॥ १२९ ॥

---

वासुदेवः अनेन प्राणादिहोमेन **प्रीणाति** प्रीणातु । यतोऽसौ विश्वं स्वयमेव भुङ्क्ते, अतस्तस्यैव प्राणाद्याहुतिभोक्तृत्वात् प्रीणात्वित्यर्थः । अयञ्च मन्त्रो भोजनानन्तरं जप्यः ॥ १२८ ॥

(**मेधासूक्तम्** ) **मेधा...सुमनस्यमाना** । विश्वमञ्चतीति **विश्वाची** विश्वव्यापिनी, **सुमनस्यमाना** सर्वासु प्रजासु शोभनमनोयुक्ता **मेधादेवी** मेधाप्रदा देवी, **जुषमाणा** प्रीतियुक्ता सती **आगात्** आगच्छतु । **त्वया....सुवीराः** । हे देवि ! पूर्वं **दुरुक्तान्** गर्हितान् शब्दान् **जुषमाणाः** सेवमाना वयम् , इदानीं त्वया **जुष्टाः** अनुगृहीतास्सन्तः गुणैर्बृहत् श्लाघ्यगुणयुक्तं वचो **वदेम** [वदामः] । यस्माद् भवती सुवीराः वाचो **विदधे** विहितवती । त्वया सुवीर्ययुक्तानां वाचामस्मासु [सं]विधानात् वयं समीचीनं वचस्त्वदनुग्रहादनन्तरं वदाम इत्यर्थः ॥

---

व्यापीत्यर्थः' इति विद्यारण्यः । विश्वभुक्छब्दः प्राणाय स्वाहेत्यादौ प्राणादिपदानामन्तर्यामिपर्यन्तत्वं ज्ञापयतीति दर्शयति यत इत्यादिना॥

१२९-१३०. एवं बुभुक्षितं न प्रतिभाति किञ्चिदिति क्लेशः परिहृतः । अथ स्वाध्यायकालः । मेधासूक्तमिदं लक्ष्मीपरमिति (नञीयर् ) श्रीसूक्तभाष्ये । जुषमाणा इति लटा सर्वदा दुरुक्तसेवनमस्माकं स्वभाव इति ज्ञाप्यते । विदथे इति तवर्गद्वितीयपाठो भास्करादिमतः। विदथे ज्ञाने सतीति भास्करः। विदथे यज्ञे अनुष्ठिते सतीति विद्यारण्यः। एवञ्च, 'त्वया अजुष्टा' इति पदच्छेदेन पूर्वं त्वया अजुष्टत्वात् दुरुक्तान् जुषमाणा वयं इदानीं विदथे सति सुवीराः

त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया ।
त्वया जुष्टश्चित्रं विन्दते वसु सा नो जुषस्व द्रविणेन मेधे ॥ [५४]
[ (अनु. ३९) १३० ॥

मेधां म इन्द्रो ददातु मेधां देवी सरस्वती ।
मेधां मे अश्विनौ (ना वुभा)देवावाधत्तां(त्तं) पुष्करस्रजौ(जा) ५५
अप्सरासु (च) या मेधा गन्धर्वेषु च यन्मनः ।
दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषताम् ॥ [५६] (अनु. ४१) ॥

**त्वया....मेधे** । त्वया अनुगृहीतो मन्त्रद्रष्टा भवति । त्वया अनुगृहीतो ब्रह्मा प्राप्तश्रीर्भवति । त्वयाऽनुगृहीतश्चित्रं धनं लभते । हे मेधाप्रदे देवि ! तादृशी त्वं द्रविणेन अनुगृहाण ॥ १३० ॥

**मेधां...स्रजौ** । इन्द्रः, सरस्वती, पद्ममालालङ्कृतौ अश्विनौ देवौ च मेधां प्रयच्छन्त्वित्यर्थः ॥ १३१ ॥

**अप्सरासु....जुषताम्** । अप्सरासु अप्सरस्स्वित्यर्थः । **यत् मनः** या मेधा । अप्सरस्सु गन्धर्वेषु च देवेषु, मनुष्येषु च विद्यमाना

सन्तो बृहद् वदेमेत्यपि सुवचम् । त्वया ब्रह्मेत्यादावपि जुष्ट इत्यनुषज्यते । त्वयेति पदद्वयसत्त्वात् त्वया कश्चित् ब्रह्मा भवति, त्वया कश्चित् प्राप्तश्रीर्भवतीत्यर्थः स्यात् । आगतश्रीरिति विद्यारण्यकृतः छेदोऽत्रानादृतः । 'धार्यो गतश्रिय आहवनीयः' (पू-मी-९-४) इत्यादौ गतश्रीरित्यस्य प्राप्तश्रीरित्यर्थे प्रसिद्धत्वात् ।

१३१. लक्ष्म्याख्यमेधादेवीविभूतिभ्य इन्द्रादिभ्योऽपि मेधामाशास्ते मेधां म इति ।

१३२. अन्यसर्वगतमेधाऽऽशासनं स्वस्मिन् करोति अप्सरास्विति ।

आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या ।
ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषताम् ॥ [५७]
[ (अनु ४२) १३३ ॥

सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।

---

[सा] सुरभिः श्रेष्ठा मेधा मां जुषतां प्राप्नोत्वित्यर्थः ॥ १३२ ॥

(**पञ्चब्रह्माख्यमन्त्रः**) **सद्योजातं....सदाशिवोम्** । अत्र **तापनीये**—,'ईशानः सर्वविद्यानाम्' इत्यादीनां नृसिंहे भगवति प्रयुक्तत्वात्, **स्कान्दे** निर्वाणखण्डे—"सद्योजातप्रवृत्तिस्त्वमीशिषे क्षेत्ररक्षक । वामदेवः प्रतिष्ठाया (य) वासनां तनुमाश्रितः ॥"
इत्यादिना रामविषयतयोपबृंहितत्वाच्च भगवद्विषया एवैते मन्त्राः । संकल्पसमय एव करणान्तरनैरपेक्ष्येण चिदचिद्रूपेण भगवतो जातत्वात्

---

१३३. आ जगम्या =आगच्छतु इति भास्करः। जगम्या =भृशं गन्तुं योग्येति विद्यारण्यः । पिन्वमाना =सिञ्चन्ती प्रीणयन्ती वा ।

१३४. सद्योजातमित्यारभ्य सदाशिवोमित्यन्तं रुद्रपरं प्रतीयते । व्याख्यातञ्च परैस्तथैव सद्योजात-वामदेव-अघोर-तत्पुरुषादिपदानि महादेवसंबन्धिपञ्चवक्त्रान्तर्गतानां पश्चिमोत्तरदक्षिणप्राचीनवक्त्रादीनां क्रमेणाभिधायकानीति च विद्यारण्यः। 'शङ्करात् ज्ञानमन्विच्छेत्' इति पूर्वोक्तमेधायाः रुद्राधीनत्वात् तस्य विशेषेण पुरस्कार इत्यपि सुवचम्। अथापि, 'अस्य पञ्चानुवाकस्य पञ्चब्रह्मसमाख्यत्वात् परब्रह्मपरतया व्याख्यानं युक्तम् । तत्र, 'साक्षादप्यविरोधं जैमिनिः' इति न्यायस्य बाधकभावे रुद्रविशिष्टविवक्षायाःकार्यत्वेऽपि सर्वत्र रुद्रविवक्षा नावश्या । श्रुतिस्मृतिबलाच्च ब्रह्मपरत्वमेव प्रतीयते इति मत्वाऽऽह अत्र तापनीय इति । तत्र ईशान इत्यादिग्रहणेऽपि सर्वस्यैकविषयकत्वात् सद्योजातपदस्य नृसिंहावतारे सुघटितत्वाच्च सर्वतत्परम् ।

भवेभवे नातिभवे भजस्व मां भवोद्भवाय नमः॥ [५८] (अनु.४३) १३४॥

वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ [५९] (अनु.४४) १३५ ॥

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यस्सर्वतश्शर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ [६०] (अनु.४५) १३६ ॥

---

सद्योजातत्वम् । **भवेभवे** योनौ योनौ **नातिभवे** अतिशयेन नोत्पद्येय । **मा** मां **भजस्व** अनुगृहाण । **भवस्य** कार्यवर्गस्योद्भवो यस्मात् तादृशाय नम इत्यर्थः । **वामः** शोभनो देवो **वामदेवः** । संसाररुजं द्रावयतीति **रुद्रः** । संहारकत्वात् **कालः** । कलाकाष्ठादिविकरणहेतुत्वात् कालविकरणत्वम्। **कलविकरण** इति ह्रस्वश्छान्दसः। **मनोन्मनः (न्मननः)** मनोविकर्ता । **अघोरेभ्य** इत्यादिना घोराघोरसर्ववस्तुरूपत्वमुच्यते । सर्वतो वर्तमानेभ्यः शर्व (शङ्कर) संबन्धिभ्यो रुद्ररूपेभ्यो नम इत्यर्थः ।

---

भवेभवे इति । भवेभवे न ; किंतु अतिभवे भजस्व=न संसारार्थं, किंतु भवातिलङ्घनार्थं मां भजस्वेति विद्यारण्यः। नञमुपमानार्थं कृत्वा भवविषय इवापवर्गविषयेऽपि भजस्वेति भास्करः। अत्र भाष्ये अतिभवे इति भूधातुरात्मनेपदी ।

१३६. शर्वेति संबोधनमिति परे। अत्रापि भाष्ये न तदसंमतिः। ते इति रुद्राभिमुख्येन श्रुत्युक्तोऽर्थः निष्कृष्टरूपेण पारोक्ष्येणात्र प्रदर्शित इत्येतावन्मात्रम्। अत्र शर्वेति परमात्मसंबोधनात् ते रूपेभ्य इति दिव्यमङ्गलविग्रहग्रहणं स्यात्, न तु रुद्रशरीरस्येति रुद्ररूपेभ्य इत्युक्तमिति ध्येयम् । भाष्ये रुद्ररूपेभ्यः=शंकरसंबन्धिभ्य रूपेभ्य इति पाठः स्यात ।

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥
[६१] (अनु. ४६) १३७ ॥

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ [६२] (अनु. ४७) १३८॥

ब्रह्ममेतु माम् । मधुमेतु माम् । ब्रह्ममेव मधुमेतु माम् । यास्ते

---

**ब्रह्माधिपतिः** ब्रह्मणो वेदस्याधिपतिः, **ब्रह्मणोऽधिपतिः** चतुर्मुखस्याधिपतिः, **ब्रह्मा** चतुर्मुखशरीरकः, **सदाशिवः** सर्वदा निरवद्यः **ओम्** प्रणववाच्यः मे **शिवोऽस्तु** शिवप्रदोऽस्तु—शुभावहोऽस्तु ॥

(**त्रिसुपर्णमन्त्राः**) **ब्रह्ममेतु माम्**....ब्रह्ममिति मकारश्छान्दसः। **ब्रह्म** स्वरूपेण गुणैश्च बृहद् वस्तु माम् **एतु** प्राप्नोतु । मनसि नित्यं संनिधत्तामित्यर्थः । **मधुमित्यत्रापि** मकारश्छान्दसः । **मधु** मधुवद् भोग्यमृतम् । आनन्दरूपमित्यर्थः। **ब्रह्ममेव** । अत्रापि मकारश्छान्दसः । ब्रह्मैव तत् [यत्] **मधु** भोग्यमित्यर्थः । अत्रापि मकारश्छान्दसः ।

**यास्ते सोम प्रजाः** । सौति-उत्पादयतीति **सोमः** परमात्मा । हे सोम! याः प्रजाः, ताः सर्वाः **ते** तव शेषभूता इत्यर्थः ।

---

१३९—१४१. उपरि त्रिसुपर्णनामकाः त्रयोऽनुवाकाः। सुपर्णः पक्षिराजः तत्तुल्या इति वा, सुपर्णः= प्रणवः-ऊर्ध्वनेतृत्वात् तद्युक्त इति वा तदर्थ इति भास्करः। प्रणवश्चैकैकानुवाकान्ते द्रष्टव्यः। अत्र ब्रह्ममित्यादिवाक्यत्रयं प्रत्यनुवाकं सुपर्णपदविवक्षितं स्यात्। त्रयः सुपर्णा यत्र स इति व्युत्पत्त्या अनुवाकस्यैकैकस्य त्रिसुपर्णत्वम्। अत एव इमं त्रिसुपर्णमिति त्रिसुपर्णान्तरव्यावृत्तये इदंशब्दः।

सोम प्रजा वत्सोऽभिसो अहम्। दुःष्वप्नहन् दुरुष्ष्वहा। यास्ते सोम प्राणाँस्ताञ्जुहोमि। त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्। ब्रह्महत्यां वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आ सहस्रात् पङ्क्तिं पुनन्ति। ओम्॥[६३] (अनु.४८)॥

ब्रह्म मेधया। मधु मेधया। ब्रह्ममेव मधु मेधया। अद्या नो

---

**वत्सोऽभि सो अहम्।** सोऽहं ते अभि अभिमतः (त) वत्सः वत्सवत् पोष्यः। **दुःस्वप्नहन् दुरुष्ष्वहा** त्वं दुःस्वप्नदोषाणां हन्ता, **दुरु** दुष्टानां **स्वहा स्वं** धनं हन्तीति स्वहा। उ इत्यनर्थकः। **याः....जुहोमि।** हे सोम! **याः** ये इत्यर्थः। लिङ्गव्यत्ययश्छान्दसः। **तान्** (तानि) इन्द्रियाणि **ते** त्वयि जुहोमि। कायेन वाचा मनसेन्द्रियैर्वा यत् करोमि, तत् सर्वं परमात्मने समर्पयामीत्यर्थः।

**त्रिसुपर्ण....ओम्।** **त्रिसुपर्ण**शब्दितमेतदनुवाकत्रयं(?) गुरुदक्षिणायाच्ञामन्तरेण, 'कृपया निःस्पृहो वदेत्' इत्युक्तरीत्या कृपापारवश्येन ब्राह्मणमध्यापयन्ति ये, ते **सोम**शब्दितं ब्रह्म प्राप्नुवन्तीत्यर्थः। शिष्टं स्पष्टम्। ओमित्येतत् विघ्नशान्त्यर्थंत, ब्रह्मानुस्मरणार्थं वा॥

**ब्रह्म मेधया। मधु मेधया। ब्रह्ममेव मधु मेधया।** ब्रह्म समीची-

---

क्रमेणेमे ब्रह्महत्याभ्रूणहत्यावीरहत्यापापनिवर्तकाः। भ्रूणः वेदवेदाङ्गवित्। अनुष्ठानपरो ब्राह्मणो वीरः। 'अभिषिक्तः क्षत्रियो वा, गुणवान् पुत्रो च' इति च परोक्तम्।

'दुरुष्वह' इति विद्यारण्यपाठः। दुःस्वमुत्कर्षेणाभिभवेत्यर्थः। दद्यात्, पठन्ति इत्युक्तसर्वकर्तृग्रहणं एत इति; त इति च तथा।

देव सवितः प्रजावंत्सावीस्सौभगम् । परा दुष्वप्निय॑ँ सुव ॥ विश्वानि देव सवितर्दुरितानि परासुव । यद् भद्रं तन्म आसुव ॥

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः ॥

मधु नक्तमुतोषसि मधुमत् पार्थिव॑ँ रजः । मधु द्यौरस्तु नः पिता ॥

मधुमान्नो वनस्पतिर्मधुमा॑ँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥

य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । भ्रूणहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति । आ सहस्रात् पङ्क्तिं पुनन्ति । ओम् ॥ [६४] (अनु. ४९) १४० ॥

ब्रह्म मेधवा । मधु मेधवा । ब्रह्ममेव मधु मेधवा ।

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।

श्येनो गृध्राणा॑ँ स्वधितिर्वनाना॑ँ सोमः पवित्रमत्येति रेभन् ॥

ह॑ँसश्शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।

---

नया स्वविषयबुद्ध्या संयोजयत्वित्यर्थः । मधु आनन्दरूपमित्यर्थः ॥

**ब्रह्म...मेधवा** । [मेधवा मेधयेत्यर्थः । यद्वा] **मेधो** यज्ञः । तां (?) वाति गमयतीति **मेधवा** । 'सुपां सुलुक्' इति लुक् । स्वविद्या-हेतुभूतयज्ञादिकर्मानुष्ठापक (?) इत्यर्थः । **ब्रह्मा देवानां....इति, हँसः....**इति मन्त्रौ व्याख्यातौ । **य इमं.... पुनन्ति । वीरहत्यामिति** 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्युक्तां वीरहत्यामित्यर्थः । अन्यः स्पष्टार्थः ॥ १४१ ॥

---

मधु वाताः, ब्रह्मा देवानामिति पूर्वोक्तानामेव पुनः पाठः तद्घटितस्य त्रिसुपर्णत्वाभिप्रायेण ।

नृषद्वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥

य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । वीरहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ सहस्रात् पङ्क्तिं पुनन्ति । ओम् ॥ [६५] (अनु. ५०)

प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ [६६] (अनु. ५१)

वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिः संकल्पा मे शुध्यन्तां ज्योतिरहं विरजाविपाप्मा भूयासँ स्वाहा ॥ [६७] (अनु. ५२)

शिरःपाणिपादपार्श्वपृष्ठोदरजङ्घशिश्नोपस्थपायवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ [६८] (अनु. ५३)

त्वक्चर्ममाँसरुधिरमेदोऽस्थिमज्जा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ [६९] (अनु. ५४)

शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ [७०] (अनु. ५५)

---

## (विरजो होममन्त्राः)

**प्राणापान...** । एते सन्यासार्थविरजस्त्वार्था होममन्त्राः । **ज्योतिरहं....भूयासम्** । स्वप्रकाशज्ञानस्वरूपोऽहं रजस्तमोभ्यामस्पृष्टो निरस्तपापो भूयासमित्यर्थः । **रेतश्शब्देनेन्द्रियमुच्यते** ।**...आकूतिः** अभिप्रायः । **आनन्दमयस्य** परमात्मनः शोध्यत्वञ्च भजनप्रपदनलक्षण-

---

६४२. प्राणादीनां सर्वेषामिह शुद्धिस्तावत् प्रवृत्तिमार्ग-प्रावण्यापादनरूपदोषराहित्यम् । आनन्दमयस्य परमात्मन इति ।

पृथिव्यप्तेजोवाय्वाकाशा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासᳪं स्वाहा ॥ [७१] (अनु. ५६)

अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासᳪं स्वाहा ॥ [७२] (अनु. ५७)

विविट्टिः स्वाहा ॥ [७३] (अनु. ५८)

घषोत्काय स्वाहा ॥ [७४] (अनु. ५९)

उत्तिष्ठ पुरुष हरे(री) लोहितपिङ्गलाक्षि देहिदेहि ददापयिता

---

प्रसदनोपायेन प्रसाद्यत्वम् । **विविट्टिः** स्वाहा । विशेषेण **विट्टिः** व्याप्तिः । ज्ञानव्याप्तिरस्त्वित्यर्थः। **घषः** घोषः स्वगुणकीर्तनम् । तत्रो**त्कः** उत्सुकः परमात्मा । तस्मै स्वाहा । हे पुरुष ! हरे ! लोहितपुण्डरीकवत् पिङ्गले अक्षिणी यस्य स तथोक्तस्त्व**मुत्तिष्ठ** अस्मद्रक्षणजागरूको भव ।

---

इदमानन्दमयाधिकरणे व्यक्तम् । विविट्टिरिति । विष्लृ व्याप्तौ । विष्टिरिति रूपम् । विट्टिरिति च्छान्दसम् । विविट्टयै इति चतुर्थ्यन्तं विद्यारण्यपठितम्। विविट्टीति विसर्गरहितः पाठो भास्करस्य। व्याप्नुहीत्यर्थः। घषेत्यत्र कषेति विद्यारण्यः। हरे इति भास्करमतोऽपि पाठः। लोहितपुण्डरीकवदिति । अत्र, 'तस्याः शुभे वाममरालपक्ष्मराजीवृतं शुक्लविशालकृष्णम्' इति सीतानयने शुक्लत्वकृष्णत्वयोरिव भगवतोऽक्ष्णः अंशतो लोहितत्वपिङ्गलत्वयोः कथनेन लोहितश्च तत् पिङ्गलञ्चेति विग्रहः संभवति—अथाप्यक्ष्णः पैङ्गल्यमिदं नाधिकम् , किन्तु पुण्डरीकवत् अल्पमिति ज्ञापनायैवमुक्तम् । यद्वा हरे इत्यत्र हरितेति पाठे यथा तत् संबोधनम्, भगवतो हरणशीलत्वात् हरितवर्णत्वाद्वा, तथा लोहितेति पृथक्संबुद्धिर्भाष्येऽपि । पुण्डरीकवदिति

मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ [७५]
[(अनु. ६०) १४२ ॥

ओꣳ स्वाहा ॥ [७६] (अनु. ६१)

सत्यं परं परꣳ सत्यꣳ सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदा चन;

---

देहि त्वद्विषयकज्ञानशक्त्यादिकं देहि । तद्दानहेतुभूता एते सर्वे समग्रा भवन्त्वित्यर्थः । **ओं स्वाहा** ओमितिशब्दवाच्याय परमात्मने स्वाहा इत्यात्महविस्समर्पणमन्त्रः ॥ १४२ ॥

**(न्यासोपन्यासः)**

ब्रह्मविद्यायां सत्यतपआदीनि साधनान्युपवर्ण्य सं(१)न्यासशब्दितं प्रपदनमेव सर्वोत्कृष्टं चतुर्मुखादि मतमिति प्रतिपादयितुमुपक्रमते **सत्यं परं**—**सत्यं पर**मिति निर्दिष्टस्यैव **परं सत्य**मिति आनुपूर्वीभेदेन

---

अक्षिपैङ्गल्यप्रकारविवेकाय स्वयं प्रयुक्तम्; न तु लोहितपदार्थः । दानहेतुभूता इति । शुद्ध्यन्तामिति बहुवचनान्तपदगताकाङ्क्षानुरोधात् ददापयिता इति कथमपि बहुवचनान्तं भाव्यम् । ददापयिता मे इत्यस्य मह्यं दापयिता भवेति वा अस्त्विति वाऽर्थस्वीकारेऽपि, दानप्रसङ्गात् दानहेतुभूतानां सर्वेषां शुद्धिः प्रतिबन्धकराहित्येन समग्रतैव शुद्ध्यन्तामिति पदेन विवक्षितेति वाऽभिप्रायः ।

१४३. प्रपदनमेवेति । ननु संन्यासार्थविरजाहोमानामेव प्राक् प्रस्तुतत्वात् संन्यासश्रैष्ठ्यविधानमेवात्र युक्तम् । अत एव, 'ब्राह्मं संन्यासिनां स्मृतम्' इति ब्रह्मलोकप्रापकत्वात् संन्यासस्य, न्यासस्य ब्रह्माख्यचतुर्मुखरूपेण स्तुतिर्घटते । एतदनुवाकविवरणमुत्तरानुवाकः । तत्र युञ्जीतेति न्यासाङ्गभक्तिविद्याविधिः । अत एव संन्यासिनो यज्ञाभावेन न्यूनताशङ्कां प्राप्तां परिहर्तुं तस्यैवं विदुष इत्यादिना यज्ञकल्पनां कृत्वा अन्ते चतुर्मुखलोकप्राप्तिपूर्वकब्रह्मप्राप्तिः

न्यासे ब्रह्मत्वानुसंधानानुगुणमुच्यते इति चेत्—उच्यते । पूर्वानुवाकोक्तमन्त्राणां संन्यासार्थहोममन्त्रत्वेऽपि तत्प्रतिपाद्यार्थानुसंधानं सर्वेषामपि मुमुक्षूणामविशिष्टम् । एवमपि यत्किञ्चिदुपबृंहणवशात् तेषां संन्यासमन्त्रत्वावधारणे, एतदाद्यनुवाकानामपि तथैवोपबृंहणान्तरवशात् प्रपदनविषयत्वं प्रमितं न बाधितुं क्षमम् । तथाहि प्रपदनप्रकरणे, 'तेषां तु तपसां न्यासमतिरिक्तं तपः श्रुतम्' इति प्रकृतश्रुतिरुपबृंहिता । 'हविर्गृहीत्वाऽऽत्मरूपं वसुरण्वेति मन्त्रतः। जुहुयात् प्रणवेनाग्नावच्युताख्ये सनातने' इति च वसुरण्वेत्यादिभागस्य प्रपदनविषयत्वं दर्शितमिति न तत्र भक्तिविद्याविधिरपि संभवति । तदुपरितनम्, 'एतद्वै महोपनिषदं देवानां गुह्यम्' इति वाक्यञ्च, 'इदं महोपनिषदं देवानां गुह्यमुत्तमम्' इति प्रपदनविषयतयोपबृंहितम् । न च संन्यासाश्रम एव गुह्यतमो देवैर्भोगप्रवणैरनुष्ठीयमान इति सुवचम् । अतो भोगप्रवृत्तैर्भक्त्युपायानुष्ठानावकाशमलभमानैर्देवैरन्ते प्रपत्त्या देवदेवो वशीक्रियत इति प्रप[illegible]स एव प्रघट्टकार्थः । 'न्यासो ब्रह्मा' इति स्तवनादिकञ्चोपरि विवेचयिष्यते !

अत एवेदमपि निरस्तम्, यत्—न्यास इह प्रपदनमपि अङ्गप्रपत्तिरेव । तपआदीनां ब्रह्मविद्यासाधनानां मध्ये न्यासः परम इत्येव ह्यत्रोच्यते । तेन विद्यामुख्याङ्गत्वमेव सिद्ध्यति । अङ्गी च भक्तियोगः, 'ओमित्यात्मानं युञ्जीत' इति विहितः; युजिश्रवणात् । अत एव तच्छेषभूता विदुषो यज्ञत्वकल्पनरूपा पुरुषविद्या श्रीभाष्येऽप्युक्तेति । तत्प्रकरणस्य स्वतन्त्रप्रपत्तिपरतायाः पूर्वोक्तोपबृंहणसिद्धत्वेनार्थान्तरकल्पत्ययोगात् । श्रीभाष्याद्याशयश्चाग्रे दर्शयिष्यते ।

तथाचात्र प्रकरणे सत्यादीनि परम्परया मोक्षसाधनानि पूर्वं दर्शितानि । अथ मानसमिति साक्षात् साधनं भक्तियोगः । अथ लघूपायो न्यासः । एवं गृहस्थाद्याश्रम एवाग्निहोत्राद्यङ्कोपासनानुष्ठानं पूर्वमुपदिश्य तत्र तदनिष्पत्तिं मन्यमानस्य संन्यासाश्रम-

सतां हि सत्यम्; तस्मात् सत्ये रमन्ते तप इति तपो नानशनात् परम्; यद्धि परं तपस्तद् दुर्धर्षं तद् दुराधर्षम्; तस्मात् तपसि रमन्ते दम इति नियतं ब्रह्मचारिणस्तस्माद् दमे रमन्ते शम इत्यरण्ये मुनय-स्तस्माच्छमे रमन्ते दानमिति सर्वाणि भूतानि प्रशंसन्ति; दाना-न्नातिदुष्करम्; तस्माद् दाने रमन्ते धर्म इति धर्मेण सर्वमिदं परि-

---

निर्देशः । **सतां हि सत्यम्** सतां हि पुरुषाणां सत्यमभिमतम् । **तपः इति**=निर्दिष्टं तपः परमिति मत्वा **तपसि रमन्त** इत्युत्तरत्रान्वयः । **दम इति**=ब्रह्मचारिणो दम एव साधनीय इति मत्वा नियतं दमे

---

प्रवेशपद्धतिमासूच्य ततोऽपि झडित्यपेक्षितालाभं प्रतियतः प्रपन्नं देवगुह्यमुपनिषत् अन्ते उपदिशतीति ध्येयम् ।

तप इति, दम इति इत्यादौ सत्यं परमिति वाक्यात् परमित्यनुषज्यते । तत्र संभवत्येकवाक्यत्वे, 'अग्नय इत्याह' इतिवत् पृथग्वाक्यत्वं न युक्तमिति, 'दानमिति सर्वाणि' इत्यत्रेव एकवाक्यत्वं मत्वेत्यध्याहारेण दर्शयति तपः परमिति मत्वेति । निर्दिष्टमित्यस्य, तपो नानशनादित्यारभ्य दुराधर्षमित्यन्तेन निरुक्तमित्यर्थः । दुर्धर्षं दुरभिभवं अविनाश्यफलम् । दुराधर्षम् । आङ् ईषदर्थे । अप्रतिबध्य-फलम् । तस्माद्दम इति । तस्मादित्यस्य परत्वादित्यर्थः ।

दमः बहिरिन्द्रियनिग्रहः, शमः अन्तरिन्द्रियनिग्रह इति प्रायिकवादः सोऽर्थ इह ध्वन्यते । ब्रह्मचारिणां हि तदात्वे उद्धत बहिरिन्द्रियनि-ग्रहेऽपि गूढान्तरिन्द्रियनिग्रहो न संभवति, समावर्त्य गृहे एवमेवं स्थास्यामीति मनोरथानां प्रवहणात् । अरण्ये तु मुनयो वानप्रस्था अनुभूतगार्हस्थ्याः विरक्ता इति भवति तेषां शमः ।

गृहीतम्; धर्मान्नातिदुश्चरम्; तस्माद्धर्मे रमन्ते प्रजन इति भूया<sup></sup>ँसस्तस्माद् भूयिष्ठाः प्रजायन्ते तस्माद् भूयिष्ठाः प्रजनने रमन्तेऽग्नय इत्याह तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते यज्ञ इति (यज्ञो हि देवानाम्) यज्ञेन हि देवा दिवं गतास्तस्माद् यज्ञे रमन्ते मानसमिति विद्वाँसस्तस्माद् विद्वाँस एव मानसे रमन्ते न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा; तानि वा एतान्यवराणि तपाँसि न्यास एवात्यरेचयत् य एवं वेदेत्युपनिषत्॥ [७७]

(अनु. ६२) १४३ ॥

---

स्थिता इत्यर्थः । **प्रजायन्ते** प्रजाः प्रजनयन्तीत्यर्थः । **मानसं** मनसा भगवन्मननमित्यर्थः । **परो हि** ब्रह्मा [ब्रह्मा] सर्वोत्कृष्टः । तस्य यन्मतं [न्यासशब्दितम्], तदेव सर्वोत्कृष्टमित्यर्थः । [ब्रह्मा हि परः परो हि ब्रह्मेति निर्देशो दार्ढ्यार्थः । ] ॥ १४३ ॥

---

मानसमिति । आहुरिति शेषः । ज्ञानयोगभक्तियोगादिस्तदर्थः । विद्वांसः । न तु सर्वे । न्यास इति आहेति शेषः । तत्र ब्रह्मा कर्तेति पूर्ववाक्यशैल्या ज्ञायते । तदाह तस्य यन्मतमिति । तन्मतस्यादर्तव्यत्वे हेतुरुच्यते ब्रह्मा हि पर इति । परत्वं पूर्वोक्तविद्वदाद्यपेक्षया । सर्वज्ञरुद्रादेः परत्वभ्रमव्युदासाय परो हि ब्रह्मेति । यद्यपि उत्तरानुवाके, 'न्यास इत्याहुर्मनीषिणो ब्रह्माणं' इति विवरणादत्र न्यास इति इत्युच्यमानः ब्रह्मा परमात्मा । न्यासस्य परमात्मन्युपायत्वाध्यवसायरूपत्वात् परमात्मत्वोपचारः । ब्रह्मशब्दार्थः परमात्मेत्येव ब्रह्मा हि पर इत्यादिना वर्ण्यते इत्यर्थवर्णनमुचितम्—अथापि पूर्वशैल्यनुगुणत्वाय सोऽर्थो न दर्शितः । तदर्थस्वीकारे तु पूर्वं पराभिप्रायान् प्रदर्श्य श्रुतिः स्वाभिप्रायमाहेति वक्तव्यम् । अत्यरेचयत्=अत्यक्रामत् । य

प्राजापत्यो हारुणिः सुपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच—

सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितम् तस्मात् सत्यं परमं वदन्ति तपसा देवा देवतामग्र आयन् तपसर्षयस्सुवरन्वविन्दन् तपसा सपत्नान् प्रणुदामारातीँ स्तपसि सर्वं प्रतिष्ठितम् तस्मात् तपः परमं वदन्ति दमेन दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणस्सुवरगच्छन् दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितम् तस्माद् दमः परमं वदन्ति॥ शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दन् शमो भूतानां दुराधर्षँ शमे सर्वं प्रतिष्ठितम् तस्माच्छमः परमं वदन्ति दानं यज्ञानां वरूथं दक्षिणा लोके दातारँ सर्वे भूतान्युपजीवन्ति॥ दानेनारातीनपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितम् तस्माद् दानं परमं वदन्ति॥

---

**प्राजापत्यो ह...**। अरुणाख्यप्रजापतेः पितुः सुपर्णाया मातुश्चापत्यमित्यर्थः । **सत्येने**त्यादिः पूर्वोक्तसत्यादीनां (पूर्वोक्तस्य) प्रपञ्चः । **दिवि आदित्यो रोचते** इति योजना । **देवतामग्र आयन्** देवत्वं प्राप्ता इत्यर्थः । **सुवरन्वविन्दन्** स्वर्गं प्राप्ता इत्यर्थः । **सपत्नान्** द्वेषयुक्तान् अरातीनित्यर्थः । **सपत्न**शब्देन उत्कटद्वेषयुक्तता अभिप्रेता ।

---

इति वाक्यस्य प्रतिसंबन्धिवाक्यमध्याहार्यम् ।

१४४ उपाख्यानमुखेन पूर्वानुवाकार्थो विव्रियते प्राजापत्य इत्यादिना । देवताम् । देवस्य भावो देवता देवत्वम् । भावे तल् ।

धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितम् तस्माद् धर्मं परमं वदन्ति ।

प्रजननं वै प्रतिष्ठा [लोके] साधुप्रजायास्तन्तुं तन्वानः पितृणामनृणो भवति तदेव तस्यानृणम् तस्मात् प्रजननं परमं वदन्त्यग्नयो

---

दानं यज्ञानां वरूथं दक्षिणाः (?)। दक्षिणाः पुरुषाः [दानं ?] यज्ञानां वरूथं वरिष्ठं वदन्तीत्यर्थः । प्रजायास्तन्तु प्रजासंततिमित्यर्थः ।

---

दमः शमः इति द्वितीयार्थे प्रथमा । वरूथशब्दस्य तनुत्राणवाचित्वात् ऋत्विगाद्यानतिसाधनद्रव्यवाचिदक्षिणापदमेव गृहीत्वा, 'यज्ञानां स्वरूपरक्षकं दानमेव दक्षिणा' इत्यपि वाक्यार्थः सुवचः ।

धर्मो नित्यकर्मादिः श्रौतः स्मार्तश्चेति भास्करः । वापीकूपादिनिर्माणरूप इति विद्यारण्यः। श्रीभाष्ये (लघुसि) 'धर्मेण पापम्' इति वाक्यमुदाहृत्य धर्मपदमनभिसंहितफलधर्मविषयं व्याख्यातम् । दानयज्ञादेः पृथगुक्त्या पापापनोदनार्थतयैव विहितप्रायश्चित्तरूपधर्मविषयकत्वस्यात्रौचित्यात् प्रतीतावपि तद्व्यतिरिक्तानामपि कर्मणामनभिसंहितफलानां पापापनोदकत्वसंभवादविशेषात् सर्वग्रहणं भाष्याभिमतमिति च तत्रैव व्याख्यासु दर्शितम् ।

अयं भावः—मुमुक्षूपयोगिनां सत्यादीनामेवात्र प्रकृतत्वात् तेषु सर्वेषु सात्त्विकत्यागपूर्वमनुष्ठेयेषु अनभिसंहितफलत्वमविशिष्टमिति धर्मो विश्वस्येति प्रथमधर्मपदं प्रायश्चित्तादिविशेषपरमेव यद्यपि—अथापि प्रकरणस्यानभिसंहितफलसत्यादिपरत्वेऽपि तत्र विशेषे प्रवृत्तिसंपत्तये तदेव सत्यादिकं नित्यकाम्यवैदिकलौकिकसाधारणसामान्यमुखेन स्तूयते, किञ्चिद्विप्रपरिग्रहावसरे प्ररोचनाय विप्रत्वेन नानाविप्रस्तवनवत् । तथाच, तपसा देवाः, तपसर्षय इत्यादौ तपआदिपदानि विभिन्नतपोव्यक्तिपराणि । तद्वत् धर्मेण पापमपनुदतीति

वै त्रयी विद्या देवयानः पन्था गार्हपत्य ऋक् पृथिवी रथन्तरमन्वाहार्यपचनो यजुरन्तरिक्षं वामदेव्यमाहवनीयस्साम सुवर्गो लोको बृहत् तस्मादग्नीन् परमं वदन्त्यग्निहोत्रँ सायं प्रातर्गृहाणां निष्कृतिः स्विष्टँ सुहुतं यज्ञक्रतूनां प्रा(परा)यणँ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति ; यज्ञ इति (यज्ञो हि देवानाम्) यज्ञेन हि देवा दिवं गता यज्ञेनासुरानपानुदन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितम् तस्माद् यज्ञं परमं वदन्ति ; मानसं वै प्राजापत्यं पवित्रम् मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितम् तस्मान्मानसं परमं वदन्ति ॥१४॥

---

**गार्हपत्य ऋक् पृथिवी रथन्तरम्** । गार्हपत्यस्य ऋक्पृथिवीरथन्तररूपत्वम् । एवमुत्तरत्रापि । **निष्कृतिः** पापप्रायश्चित्तम् । **प्रायणं** प्रकृष्टगतिः । **सुवर्गस्य ज्योतिः** दीपवत् प्रकाशकम् । तत्प्राप्तिहेतुभूतमित्यर्थः ।

---

तादृशसर्वधर्मपरमेव सत् धर्मो विश्वस्येति विवक्षितप्रायश्चित्तधर्मप्रशंसार्थं भवितुमर्हतीति । अग्नीनां त्रयीत्वं कृत्स्नाया अपि त्रय्या अग्निसाध्यकर्मप्रवणत्वात् । देवयानत्वं देवलोकप्रापककाम्यकर्मसाधनत्वात् । मोक्षप्रयोजकानभिसंहितफलकर्मसाधनत्वादर्चिरादिरूपदेवयानत्वमेव वा । रथन्तरं वामदेव्यं बृहदिति सामविशेषाः । स्विष्टं = शोभनं इष्टं यागो यत्र तत् । प्राजापत्यमिति प्रजापतेरुपासनव्यग्रत्वात् । मानसेन मनसेति । मनसा यत् साधु पश्यतीति, तत् मानसापरपर्यायोपासनाबलेनैवेत्यर्थः । मानसा इति । ऋषीणां मानसत्वं ब्रह्ममनोजन्यत्वम् । अथापि मानसशब्दवाच्यत्वमात्रेण प्रकृतमानसस्तुतिः । मनःशक्तिमत्त्वं वा मानसत्वम् ।

न्यास इत्याहुर्मनीषिणो ब्रह्माणम् ब्रह्मा विश्वः कतमः स्वयम्भुः प्रजापतिः संवथ्सर इति संवथ्सरोऽसावादित्यो य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा ॥ याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधि वनस्पतयः प्रजायन्त ओषधिवनस्पति-भिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिश्शान्त्या चित्तं

---

**न्यास....इति** । 'ब्रह्मा विश्वः कतमः स्वयम्भुः प्रजापतिः संवत्सरः' इति निर्दिष्ट ब्रह्माणं तदन्तर्यामिणं परमात्मानमेव सिद्धोपाय तया मनीषिणो न्यासमाहुरित्यर्थः । संवत्सरशब्दवाच्यत्वं कथमित्या शङ्क्य आदित्यस्य संवत्सरशब्दवाच्यत्वात् तत्स्थपुरुषस्यापि संवत्सर शब्दवाच्यत्वमित्याह **संवत्सरोऽसावादित्यः....ब्रह्मात्मा** ।

तत्प्रसङ्गादन्नदानं प्रशंसति **याभिरादित्यः...ब्रह्म योनिः** । **श्रद्धा** आस्तिक्यबुद्धिः। **मेधा** ग्रहणधारणसमर्थबुद्धिः । **मनीषा** श्रवण जन्यधीः । **मनः** मननम् । **चित्तं** भगवद्विषयकप्रेमरूपम् ।

---

१४५. कोऽसौ ब्रह्मेत्यत्राह ब्रह्मेति । कतमः= सुखतम इति विद्यारण्यः । अनिर्धार्यतम इति भास्करः । कथमन्तरिक्षस्थस्याऽऽ-दित्यस्य, सत्यलोकस्थस्य ब्रह्मणश्चैक्यमित्यत्र आशयं स्फुटयति य एष इति । ब्रह्मात्मा = ब्रह्मण आत्मा । आदित्यमण्डलान्तर्वर्ती चतुर्मुखा-न्तर्याम्येव ब्रह्मपदार्थ इहेति भावः । आत्मानं वेदयतीति । तथाच वर्षमुखेन आत्मवेदनपर्यन्तोपायभूतादित्यान्तर्वर्ति-परमपुरुषाभिन्नो ब्रह्मात्मा न्यास इति न्यासप्रशंसा । अतश्च न्यासिनां आत्मवेदनपर्यन्तं परमात्मानुग्रहबलात् स्वतो भवितुमर्हतीति च ज्ञाप्यते ।

चित्तेन स्मृतिँस्मृत्या स्मारँस्मारेण विज्ञानं विज्ञानेनात्मानं वेदयति तस्मादन्नं ददन्त्सर्वाण्येतानि ददात्यन्नात् प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्म योनिः ॥ १४५ ॥

स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षञ्च द्यौश्च दिशश्चवान्तरदिशाश्च स वै सर्वमिदं जगत् स च भूतँ स भव्यम् ॥ १४६ ॥

---

**स्मारं** निरन्तरस्मरणम् । **विज्ञानं** दर्शनसमानाकारज्ञानम् । **आनन्दो ब्रह्म योनिः** जगत्कारणम् । प्राप्यत इति शेषः ॥ १४५ ॥

**स वा एष पुरुषः पञ्चधा पञ्चात्मा** । परव्यूहविभवान्तर्याम्यर्चावतारलक्षणभगवच्छास्त्रोक्तप्रकारेण विभक्तः पञ्चानां प्रकृतिकालत्रिविधजीवानामात्मेत्यर्थः ॥ १४६ ॥

---

अथ अन्नं भवतीत्यारभ्य, आत्मानं वेदयतीत्यन्तेनोक्तमेवान्नमयादिकोशप्रदर्शितान्नप्राणादिप्रधानार्थमात्रग्रहणेन संगृह्य मुखान्तरेण प्रदर्श्यते तस्मादन्नमिति । आनन्दो ब्रह्म योनिरिति पदैः, 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादि, 'अन्योऽन्तर आत्मानन्दमयः', 'ब्रह्मविदाप्नोति', 'तस्माद्वा एतस्मादात्मनः', 'स इदं सर्वमसृजत' इति च प्रागुक्तं प्रत्यभिज्ञाप्यते ।

१४६. स वा एष पुरुष इति । 'य एष आदित्ये पुरुषः' इति प्रस्तुत इत्यर्थः । पञ्चधा पञ्चात्मेति । अत्रान्नप्राणादीनां प्रस्तुतत्वात् अन्नमयादिरूपेण पाञ्चविध्यमपि सुवचम् । एवञ्च, "अन्नमयो भूतात्मा प्राणमय इन्द्रियात्मा मनोमयः संकल्पात्मा विज्ञानमयः कालात्मा आनन्दमयो लयात्मा" इति सुबालोपनिषदम् (५), "भूतात्मा

जिज्ञासु(स?)क्लृप्त ऋतजा रयिष्ठाः श्रद्धासत्यो महस्वान् तमसोपरिष्टात् ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान् तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ॥ १४७ ॥

---

**जिज्ञासुक्लृप्तः** जिज्ञासूनां प्रेप्सूनां क्लृप्तः साध्यः। **ऋतजाः** ऋतेन सत्येन जायते लभ्यत इति **ऋतजाः**। **रयिष्ठाः**। **रयिः** नित्यविभूतिः। तन्निष्ठ इत्यर्थः। **श्रद्धासत्यः**। यस्यास्तिक्यबुद्धिः, तस्यैव सत्यः सत्त्वेन (सत्यत्वेन) प्रतीयमान इत्यर्थः। **हृदा** भक्त्येत्यर्थः। **उपयाहि** उपयाति ॥ १४७ ॥

---

चेन्द्रियात्मा च प्रधानात्मा तथा भवान्। आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥" इति विष्णुपुराणश्चानुसृत्य पञ्चधा पञ्चात्मेत्यस्यार्थो वर्णयितुं शक्यते। 'पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः' इति पाङ्क्तान्तर्गतानां पञ्चानाम् अनन्तरं निर्देशात् ततोपि पञ्चात्मत्वं स्यात्। तद्वत् प्रामाणिकत्वात् प्रकारान्तरमपि न दुष्यतीति परव्यूहेत्येवं व्याख्यातम्।

१४७. जिज्ञासक्लृप्त इति सर्वसंमतपाठः। क्लृप्तजिज्ञास इति पदमित्थं व्यत्यस्तमिति च भास्कराद्युक्तम्। पूर्वं परव्यूहेति व्याख्यानादत्रापि प्रथमान्तपदानि हार्दव्यूहपरविभवार्चापराणि स्युरिति विमृश्यम्। ऋतं = सत्यप्रत्यनीकं सततविकारास्पदमव्यक्तम्। तत्र सृष्ट्याद्यर्थमाविर्भूतः ऋतजाः। 'प्रथमजा ऋतस्य' इति चान्यत्र। तस्यैव सत्य इति। अन्ये हि अवतीर्यं स्वात्मप्रदर्शनेऽप्यवजानन्तीति तेषामन्यथा प्रतीयमानः। 'हृदा-भक्त्या' इति, 'हृदा मनीषा' इत्यत्रत्यभाष्यानुसारात्। भक्तिरिह हार्दं प्रेम ; न भक्तियोगः। न्यासप्रकरणात्।

वसुरण्यो(ण्वो) विभूरसि प्राणे त्वमसि संधाता ब्रह्मंस्त्वमसि विश्वसृक् तेजोदास्त्वमस्यग्नेर्वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणे त्वा महस ओमित्यात्मानं

---

(न्यासविधिः)

न्यासशब्दितप्रपदनकरणभूतमन्त्रमाह **वसुरण्यो विभूरसि...।** **वसुरण्यः** वसुप्राप्यः । 'रण गतौ' इति हि धातुः । वसूपलक्षितसर्वदेवतोपास्य इत्यर्थः । **विभुत्वं** व्यापकत्वम् । **प्राणे त्वमसि संधाता ।** प्राणशब्दितकार्यकारणसंघातसंयोजक इत्यर्थः । **विश्वसृक्** विश्वस्रष्टा । **द्युम्नोदाः** कान्तिद इत्यर्थः । **उपयाम** त्वां शरणमुपगच्छाम । **गृहीतोऽसि** महता कालेन दृष्टोऽसि । कस्मै प्रयोजनायेत्यत्राह **ब्रह्मणे**

---

१४८. वसुरण्य इति पाठे रवि गताविति धातुः । वसुरण्व इति पाठे रण धातुः। स शब्दार्थो गत्यर्थश्च । 'विश्वसृक् = विश्वसृट् ; छान्दसं वर्णान्तरम्' इति भास्करः । विश्वसृत् इति विद्यारण्यः । उपयामगृहीतपदं सोमरसविषये श्रुतिप्रसिद्धम् । उपयामशब्दस्य पृथ्वीवाचित्वं स्वीकृत्य पार्थिवं मृन्मयं दारुमयञ्च सोमरसग्रहपात्रं तदर्थ इति तत्रोक्तम् । एवञ्च सति, 'हविर्गृहीत्वाऽऽत्मरूपं वसुरण्येति मन्त्रतः' इत्यागमानुसारात् जीवात्मनः सोमरूपहविष्ट्वेन स्तव इति वक्तव्यम् । तत्र वसुरण्यादिमन्त्रस्य साक्षात् परमात्मपरतायाः स्फुटत्वात्, उपयामेत्यादि महस इत्यन्तं जीवात्मपरं पृथक्कार्यम् । एवं वर्णने अर्थक्लेशं पर्यालोच्य अन्यथा व्याख्यातमत्र । उपयामगृहीत इत्यस्य एकपदत्वमप्येभिः पुरुषसूक्तभाष्ये दर्शितम् । पृथ्वीपरस्य उपयामपदस्य उपयम्यन्ते = नियम्यन्ते सर्वभूतानि अस्मिन्, अनेन वेत्युपयाम इति व्युत्पत्तिर्दर्शिता भास्करेण । एवञ्च परमात्मपरमपीदं

श्रीतैतद्वै महोपनिषदं देवानां गुह्यं य एवं वेद ब्रह्मणो महिमानमाप्नोति
स्माद् ब्रह्मणो महिमानमित्युपनिषत् ॥ [७८] (अनु. ६३) १४८ ॥

तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धाः पत्नी शरीरमिध्म-

---

**वा महसे** । महते ब्रह्मणे तुभ्यमित्यर्थः । त्वत्प्राप्त्यर्थमिति यावत् ।
**मोमित्यात्मानं युञ्जीत**(?) । **ओमिति** मन्त्रेणापि भगवच्छेषत्वप्रति-
पादकेन पुनरात्मसमर्पणं कर्तव्यमेवेत्यर्थः । एतद्वै **महोपनिषदम्** महोप-
निषत्प्रतिपाद्यम् । **देवानां गुह्यम्** देवानामपि दुर्विज्ञानमित्यर्थ ॥ १४८॥

**(न्यासस्य निरपेक्षत्वम्)**

एवं विदुषा क्रियमाणस्य आत्महविस्समर्पणरूपयज्ञस्य प्रसिद्ध-
यज्ञाङ्गनैरपेक्ष्येण प्राशस्त्यं दर्शयति **तस्यैवं....होत्रं सत्रम्** ।

---

भवितुमर्हति । मनःपरं वा । भगवच्छेषत्वेति । अत्र, 'जुहुयात् प्रणवेनाग्नावच्युताख्ये सनातने' इति स्मृत्यनुसारेणार्थवर्णनाय प्रणवे परावरात्मवाचकाक्षरविवेकादिकं श्रीमति रहस्यत्रयसारे मूलमन्त्राधिकारे स्फुटं दर्शितम् । महोपनिषदमिति । विशिष्य एतन्नामकोपनिषद्विशेषग्रहणे नियामकाभावात् महत्य उपनिषदो महोपनिषद इति विग्राह्यम् । तेन न्यासस्य नानोपनिषद्विहितत्वं स्थितमुक्तं भवति । तस्माद् ब्रह्मण इति । एतदर्थं उपरिष्टात् ।

१४९. तस्यैवमित्यादेः श्रीभाष्यकारनिगमान्तगुरुदर्शितयोजनाद्वयमुपरि दर्शयिष्यति । तत्र श्रीनिगमान्तगुरुदर्शितां योजनामेवानुसृत्य व्याख्यातुमारभते—एवं विदुषेत्यादि । तस्येति यज्ञविशेषणम् । न्यासरूपस्येत्यर्थः । एवं विदुष इत्यस्य उक्तन्यासविद्यानिष्ठस्येत्यर्थः । उपरि, एवं विद्वानित्यस्याप्ययमेवार्थः । पूर्वं उपयामगृहीतोऽसीति पदप्रयोगात् सोमरूपहविष्ट्वेनाऽऽत्माऽध्यवसित इति

मुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्, यावद्ध्रियते सा दीक्षा, यदश्नाति यत् पिबति तदस्य सोमपानं, यद् रमते तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो यदस्य विज्ञानं तज्जुहोति (यत्सायं प्रातरत्ति तत्समिधो) यत्सायं प्रातर्मध्यन्दिनश्च तानि सवनानि, ये अहोरात्रे ते दर्शपूर्णमासौ, येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि, य ऋतवस्ते पशुबन्धाः, ये संवत्सराश्च परि-

---

समर्पणीय आत्मैव यजमानः । **तपःशब्देन** आलोचनरूपज्ञानमुच्यते । **शमयिता दक्षिणा** । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्युक्तरीत्या शान्तिहेतुभूतम् , 'आनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता' इति सर्वभूतानुकूल्योपयोगि सर्वं ब्रह्मात्मकमिति यद् ज्ञानम् , तद् दक्षिणेत्यर्थः । **यावद् ध्रियते सा दीक्षा** । यावत्कालं प्राणधारणम् सा दीक्षेत्यर्थः । **रमते** क्रीडतीत्यर्थः । **संवत्सरपरिवत्सरौ** ऽवद्भेदौ ।

---

न्यासोऽयं कश्चित् सोमयागः। तत्राप्युत्कृष्टत्वात् एकस्यापि बहुसमवेतफलसाधनत्वाच्च सत्रात्मक इति कृत्वा तत्रत्यानि अङ्गानि अत्र न्यासेऽपि कर्तृपकरणभूतशरीरादौ कल्पयति। यजमानापेक्षया उपकरणानामन्यत्वाय आत्मा यजमान इति शुद्धात्मानं यजमानत्वेन दर्शयति। तपो दमश्शमयितेति विद्यारण्यपाठो न भास्करग्रन्थे। शमयितेत्यस्य संस्कर्तेत्यर्थः प्रकृतासङ्गत इति परिशील्य न्यासविद्यासंबन्धोचितमर्थमाह सर्वं खल्विति।

दर्शपूर्णमासचातुर्मास्यपशुबन्धानां सत्राङ्गत्वाभावेऽपि संवत्सरादिसाध्यसत्रमध्यपातित्वात् तद्वदत्रापि तत्सद्भावप्रदर्शनार्थं

वत्सराश्च तेऽहर्गणाः, सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ एतद्वै जरामर्यमग्निहोत्रँ सत्रम् ॥ १४९ ॥

य एवं विद्वानुदगयने प्रमीयते, देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं

---

आत्मसमर्पणरूपत्वात् **सर्ववेदसं** सर्वस्वदक्षिणं सत्रमित्यर्थः (सत्रञ्च तावदेवेत्यर्थः) । **जरया** वयोहान्या **म्रियते** समाप्यत इति **जरामर्यम्** । यावज्जीवमनुष्ठेयमग्निहोत्रं सत्रञ्च तदेवेत्यर्थः ॥ १४९ ॥

**(प्रकृतन्यासविद्याफलम्)**

एतद्विद्यानिष्ठानामुदगयनमरणे देवलोकप्राप्तिपूर्वकादित्यसायुज्य-

---

तत्कीर्तनम् । एतद्वै जरामर्यमग्निहोत्रं सत्रमित्यनेन इदमेवाग्निहोत्रादिसत्रान्तसर्वकर्मेति रूपणम् । अतः पुनः सत्रत्वोक्तिर्नानुपपन्ना । अथवाऽस्य नामविशेषकल्पनमिदम् । पूर्वं ब्रह्मणे महस इति महःपदोक्तं ज्योतिः, 'जुहुयात् प्रणवेनाग्नावच्युताख्ये' इत्यग्नित्वेन स्मृतं अग्निपदेन गृह्यते चेत्, तत्राग्रनेतरि पापप्रदाहके आत्महविषो होम इति इदमग्निहोत्रमपि भवति; एवं सतां त्रायकत्वात् सत्रञ्चेत्यपि ध्येयमिति सिद्धं न्यासस्य सोमयागत्वरूपणरूपमिदं सर्वमिति।

यद्वा सवनानीत्यन्तेन अस्य न्यासस्य सोमयागत्वेन कल्पितस्याङ्गानि दर्शितानि । अथ तस्य भक्तिविद्यावत् कर्मसापेक्षता नास्तीति ज्ञापनाय विद्वत्संबन्ध्यहोरात्रादेर्दर्शपूर्णमासादित्वेन रूपणम् । सोमयागाङ्गनिरूपणावसाने वक्तव्योऽप्यवभृथः, तत्त्वेन रूपितस्य मरणस्याहोरात्रार्धमाससंवत्सरादिपश्चाद्भावित्वात् , पश्चादुक्तः । अथवा विदुषो यज्ञस्येति यज्ञे विद्वत्संबन्धित्वकथनात् विद्याङ्गभूतयज्ञस्येत्यप्यर्थो लभ्यते । एवञ्च न्यासस्याङ्गभूतो यज्ञः क

गत्वा चन्द्रमसस्सायुज्यं गच्छत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति, तस्माद् ब्रह्मणो महिमानमाप्नोति तस्माद्

---

पूर्वकब्रह्मप्राप्तिः ; दक्षिणायनमरणे पितृलोकप्राप्तिपूर्वकचन्द्रमस्सायुज्यपूर्वकब्रह्मप्राप्तिरित्याह **य एवं....ब्रह्मणो महिमानम्** । **प्रमीयते** म्रियत इत्यर्थः । **तस्मात्**=ततः पश्चादित्यर्थः ॥

अत्र, 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति पूर्वानुवाकविहितप्रपदनस्तुतिपरतया, 'तस्यैवं विदुषो यज्ञस्य' इत्यादिसंदर्भो **वेदान्ताचार्यै**र्योजितः । **भगवता तु भाष्यकृता**, 'पुरुषविद्यायामपि चेतरेषामनाम्नानात्' इत्यधिकरणे, '**तैत्तिरीये** पूर्वानुवाके, 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति **ब्रह्मविद्याम**भिधाय तत्फलत्वेन, 'ब्रह्मणो महिमानमाप्नोति' इत्युक्त्वा, '**तस्यैवं विदुषः**' इत्यादिना

---

इत्यपेक्षायां अयज्ञाङ्गानि गृहीत्वा एतन्न्यासाङ्गस्य यज्ञस्य (अर्थात् सोमाख्यस्य) इमानि अङ्गानीत्युक्त्या न कश्चिद् यज्ञोऽङ्गमिति, वास्तवसोमयागो नाङ्गमिति सिध्यति । अथ अंशान्तरेषु दर्शादित्वरूपणात् दर्शादेरप्यनङ्गत्वसिद्धिः । तेन न्यासस्येतरानिरपेक्षत्वमुक्तं भवतीत्यलं बहुना ।

१५०. एवं न्यासविद्यातत्स्तुतिपरतया प्रकृतप्रघट्टकार्थवर्णनं यन्मूलकम्, तदाह अत्रेति योजित इत्यन्तेन । तथाचाधिकरणसारावल्यां रहस्यग्रन्थेषु च सांप्रदायिकतया तद्दर्शितमर्थमादृत्य एवं व्याख्यानमिति भावः । पुरुषविद्याधिकरणश्रीभाष्यविरुद्धः कथमयं संप्रदाय इत्यत्र तत्रापि संमतिप्रदर्शनार्थं श्रीभाष्योक्तं दर्शयति भगवता त्विति । पक्षद्वयेऽपि न विरोध इति । अयं भावः—रहस्यार्थः

आम्नाता पुरुषविद्या तस्यैव ब्रह्म विदुषो यज्ञत्वकल्पनमिति गम्यते। अतो ब्रह्मविद्याङ्गत्वात् ब्रह्मप्राप्तिरेव फलम्। 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायात्। छान्दोग्ये तु पुरुषविद्या आयुःप्राप्तिफला। अतः फलभेदात् विद्याभेदः" इति भाषितम्। पक्षद्वयेऽपि न विरोधः।

---

सुतरां गोपनीय इति साक्षात् स्वाचार्यशासनमनुल्लङ्घितवता भाष्यकृता स्वपरसाधारणब्रह्मसूत्रादिव्याख्यारूपग्रन्थेषु न रहस्योद्घाटनमकारि। अत एव गीताभाष्ये चरमश्लोके अङ्गप्रपत्तियोजनैवादर्शि। अतः पुरुषविद्याधिकरणे, 'ओमित्यात्मानं युञ्जीत' इत्यस्य आगमाद्यनुरोधेन न्यासविद्यात्वं, 'तस्यैवं विदुष' इत्यादेः तत्स्तुतिरूपत्वञ्च भाषित्वा, 'काचिद् ब्रह्मविद्या तत्रोक्ता, तदङ्गं पुरुषविद्या' इत्येतावदुक्तम्। न्यासविषयोपदेशसंप्रदायक्रमात्तु तत्त्वं ज्ञातव्यमिति।

अत्रेदं बोध्यम्—'तस्यैवं विदुषः' इत्यादिकं केवलं पूर्वविद्यास्तुतिमात्रम्, न तु वेदनविशेषविधिरूपमितीदं न केवलमस्मत्संप्रदायवेद्यम्; शाङ्करभाष्येऽपि पुरुषविद्याधिकरणे तदुक्तेः। श्रीभाष्यानुक्तं शाङ्करभाष्यस्थं तत्, प्रत्यधिकरणं परमतनिराकरणनिर्भरायां श्रुतप्रकाशिकायां यत् न निराकृतम्, तेन संप्रदायानुमतत्वं सुग्रहम्। तस्यैवं विदुष इत्यादेः पुरुषविद्यानामभाक्त्वं यद्यपि श्रीभाष्यादिष्विव परमतार्वाचीनग्रन्थेष्वपि दृश्यते, अथापि शाङ्करभाष्यपरामर्शे छान्दोग्यपैङ्गिरहस्ययोः पुरुषविद्या तथा व्यवहृताऽस्ति। तैत्तिरीये पुरुषयज्ञकल्पनाभिमानात् पुरुषविद्यानामसद्भावशङ्कामात्रमिति प्रतीयते। स्तुतिपरतया पूर्वब्रह्मविद्यान्तर्भावपक्षे च पृथक् पुरुषविद्येति विद्याव्यपदेशो नातीव समञ्जसः। तदादृतसूत्रपाठोऽपि, "पुरुषविद्यायामिव चेतरेषामनाम्नानात्" इति इवशब्दघटितः। तेन तैत्तिरीये छान्दोग्यपुरुषविद्यायामिव आम्नानं नास्तीत्युच्यते। श्रीभाष्ये तु, 'पुरुषविद्यायामपि च' इति अपिशब्दघटितपाठः स्वसंप्रदाय-

अत्र, 'विदुषो यज्ञत्वकल्पनम्' इति भाष्यस्वारस्यात् **विदुषो यज्ञस्य** इति षष्ठ्यौ समानाधिकरणे। ततश्च विद्वान् यज्ञः, तस्यात्मा यजमान इत्यर्थः। न चैवं सति वाक्यभेदः शङ्कनीयः। विदुषो यज्ञस्यात्मा यजमान इति सिद्धवत्कारेणैव विद्वान् यज्ञ इत्यस्यार्थस्य सिद्धत्वात्। न च विदुषि यज्ञत्वकल्पने तस्यैवात्मतया आत्मनो यजमानत्वं विरुद्धम्, यज्ञत्वयजमानत्वयोरेकत्र विरोधादिति वाच्यम्—**विद्व**च्छब्देन कार्यकारणसंघातविशिष्टस्य, **आत्म**शब्देन निष्कृष्टविशेष्यमात्रस्य [च?] प्रतिपादनसंभवेन च (?) विरोधाभावात्।

---

क्रमागतत्वात् स्वीकृतः। चकारस्य सत्त्वाच्च अपिर्विरोधार्थः प्रतीयते। तेन तैत्तिरीयसंदर्भे पुरुषविद्यारूपे सत्यपीति पुरुषविद्यात्वमत्र कृत्वा चिन्तेयमिति ज्ञाप्यते। श्रीभाष्येऽपि सिद्धान्तारम्भे, "उभयत्राम्नातयोर्विद्ययोः पुरुषविद्यात्वेऽपि" इति अपिना तदसंमतिः सूच्यते। एका ब्रह्मविद्या, अपरा पुरुषविद्या, न द्वयी पुरुषविद्येत्यान्तराशयः। पुरुषविद्यात्वस्वीकारेऽप्यैक्याभाव उपरि भाष्ये न्यरूपि। तथा च, 'तस्यैवं विदुषः' इत्यादेः पृथग्विद्यात्वाभावः स्तुतिरूपत्वञ्च सूत्रतोऽपि सिद्ध्यतीति सम्यगयं संप्रदाय इति।

भाष्यस्वारस्यादिति। 'विदुषो यज्ञत्वकल्पनम्' इति भाष्यस्य विद्वत्संबन्धी यो यज्ञः, तत्त्वकल्पनमित्यर्थस्वीकारे, यज्ञे विद्वत्संबन्धित्वस्य सिद्धस्यानुवादवैयर्थ्यम्, विदुष इत्यस्य प्रधानभूतकल्पनपदार्थान्वयभङ्गः कस्य यज्ञत्वमित्यत्र भाष्ये न्यासस्येत्यध्याहारक्लेशश्चेति भावः। अत्र विद्वद्रूपो यज्ञ इति पुरुषविद्यापूर्वपक्षिसंमतार्थखण्डने शाङ्करभाष्ये विद्वत्संबन्धी यज्ञ इत्यर्थवर्णनं कृतमनुसृत्य छान्दोग्यभाष्यादौ यत् स्वोक्तम्, तदुपेक्ष्य विदुषि यज्ञत्वकल्पनमेवास्मद्भाष्यार्थत्वेनात्र स्वारस्यबलात् स्वीकृतमित्यवधेयम्। सर्वमिदं

अत्र व्यासार्यैः, ब्रह्मणो महिमानमाप्नोतीति फलस्य कीर्ति-तत्वात् अस्मिन्ननुवाके तत्कीर्तने पौनरुक्त्यमाशङ्क्य, 'तस्या एव विद्यायाः पुरुषविद्यालक्षणमङ्गमभिधाय साङ्गमभिहितायाः स्तुत्यर्थं पूर्वानु-वाकोक्तफलमेवानूद्यते' इत्युक्तम् । 'सोमापौष्णं त्रतमालभेत पशुकामः' इति श्रुतेन प्रधानफलेन पशुना, 'ऊर्ग्वा उदुम्बरः, ऊर्क् पशवः' इति अङ्गभूतोदुम्बरतायाः स्तुतिवत् अङ्गभूतपुरुषविद्याया अङ्गिभूतब्रह्मविद्या-फलभूतब्रह्मप्राप्तिजनकत्वेन स्तुतिरिह क्रियते । अथवा पूर्वानुवाकोक्त-ब्रह्मप्राप्तिः (सेः ?) दक्षिणोत्तरायणमरणनिमित्तक–सूर्यचन्द्रसायुज्यप्राप्तिपूर्व-कत्वलक्षणे(ण ?)गुणविधानार्थं पूर्वानुवाकोक्तफलकीर्तनम् । अतो न पौनरुक्त्यमित्यपि वदन्ति ।

उत्क्रान्तिपादे — दक्षिणायने प्रमीतानाम्, 'अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति' इति श्रवणात् चन्द्रप्राप्तेरवश्यम्भावात् चन्द्रं प्राप्तानाञ्च, "यदा तत पर्यवैति', 'अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति श्रवणात् पुनरावृत्तिरवश्यम्भाविनी । ततश्च दक्षिणायनमृतानां न ब्रह्मप्राप्तिः संभवति । ननु, "दिवा च शुक्लपक्षश्च षण्मासा उत्तरायणम् । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हि-तम्।" इति निशामरणस्य निन्दितत्वावेदनेनाधोगतिहेतुत्वप्रतीतेः निश्चि

---

तैत्तिरीयसंदर्भस्य पुरुषविद्यात्वं कृत्वा चिन्तया । अभिमतः स्तुति-रूपार्थस्तु प्रागेव भाषित इति तत्र विद्वत्संबन्धी यज्ञ इत्येवार्थ इति ।

त्रैतम् । त्रयाणां वत्सानां युगपज्जातानां समुदायः त्रितम् । तत्र भवः=तदन्यतमः त्रैतः। ऊर्क्=अन्नरसः अन्यत् पू. मी. १-१-२ अधिकरणे द्रष्टव्यम् ।

मृतस्य ब्रह्मप्राप्तिर्नास्तीति, "निशि नेति चेत्" इति सूत्रखण्डेन पूर्वपक्षं कृत्वा, "न संबन्धस्य यावद्देहभावित्वात्" इति सूत्रखण्डेन सिद्धान्तितम् । तस्य ह्ययमर्थः—कर्मसंबन्धाभावे शरीरान्तरपरिग्रहासंभवात् यावद्देहं कर्मसंबन्धो वक्तव्यः । निशि मृतस्यापि ब्रह्मविदः प्रारब्धव्यतिरिक्तकर्मणां विद्यया नष्टत्वात्, अवशिष्टप्रारब्धस्य भोगेन नष्टत्वात्, 'तस्य तावदेव चिरम्' इति प्रारब्धकर्मार्जितशरीरपातमात्रस्यैवान्तरायत्वश्रवणाच्च प्रारब्धकर्मार्जितशरीरनाशे पुनःशरीरान्तराप्रसक्तेः निशि मृतस्यापि ब्रह्मविदोऽस्त्येव ब्रह्मप्राप्तिः। "दिवा च शुक्लपक्षश्च" इत्येतत्तु अब्रह्मविद्विषयमिति पूर्वाधिकरण एव स्थितत्वात् कथमस्याः शङ्काया उत्थितिरिति चेत्—सत्यम् । दक्षिणायनमृतस्य चन्द्रप्राप्तिश्रवणात् चन्द्रं प्राप्तस्य पुनरावृत्तिश्रवणाच्च, भीष्मादीनां ब्रह्मविदामुत्तरायणप्रतीक्षादर्शनाच्च दक्षिणायन मृतस्य न ब्रह्मप्राप्तिः इत्यधिकाशङ्कायामुच्यते–'अतश्चायनेऽपि दक्षिणे । अयनेऽपि दक्षिणे मृतस्य पूर्वाधिकरणोक्तयुक्त्याऽस्त्येव ब्रह्मप्राप्तिः। चन्द्रं प्राप्तस्यापि विदुषः, 'तस्माद् ब्रह्मणो महिमानमाप्नोति' इति वाक्यशेषे ब्रह्मप्राप्तिश्रवणात् चन्द्रप्राप्तिर्विश्रमहेतुमात्रम् । चन्द्रं प्राप्तस्य पुनरावृत्ति-

---

विश्रमहेतुमात्रमिति। न तु कर्मिण इव फलभोगानन्तरपातहेतुरित्यर्थः। अन्यथा, 'तस्माद् ब्रह्मणः' इति वाक्यशेषस्य पुनरावृत्त्यनन्तरभाविब्रह्मप्राप्तिपरत्वाश्रयणे आदित्यप्राप्तिविषये एवमुक्त्यसंभवेन तत्राविलम्बितब्रह्मप्राप्तेरेव तदर्थतया वैरूप्यप्रसङ्गादिति भावः ।

ननु दक्षिणायनमरणे चन्द्रमस्सायुज्यमिदं किं सर्वब्रह्मविद्विषयम्, उत प्रकृतविद्यानिष्ठविषयम् । नाद्यः; अर्चिराद्यातिवाहिकपुरुषप्राप्तिमात्रस्यैव सर्वपरवित्साधारणतया तत्रतत्र सर्व-

वचनमब्रह्मविद्विषयम् । भीष्मादीनां स्वच्छन्दमरणानामुत्तरायणप्रतीक्षण-मुत्तरायणप्राशस्त्यप्रदर्शनार्थम् । ननु—

यत्र काले त्वनावृत्तिमावृत्तिश्चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ! ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥

---

क्रोडीकरणार्थप्रवृत्तेषु कथनात्। अयनभेदेन आदित्यचन्द्रमस्सायुज्य-रूपफलभेदस्य साधारणतयाऽनुक्तेः। नान्त्यः, विशेषाभावात्। प्रकृत-विद्यानिष्ठस्येदृशसायुज्यरूपफलांशप्रयोजकाकारस्य न्यासविद्या-शरीरे अप्रतीतेरिति चेन्न—पूर्वमत्रैव भाष्ये 'एतद्विद्यानिष्ठानामुदगयन-मरणे इति ग्रन्थेन अवान्तरफलस्यैतद्विद्यामात्रफलताया उक्तत्वात् । तत्प्रयोजकाकारस्य विद्याशरीरेऽनुपलम्भेऽपि वचनबलात् विशिष्टस्य फलत्वसंभवात् । उपलभ्यते चाऽऽकारः। अत्र हि वसुरण्यादिमन्त्रे, 'वर्चोदास्त्वमस्यग्नेः', 'ब्रह्मणे त्वा महसे' इत्यनेन ब्रह्मप्राप्त्यर्थार्चि-रादिगतिप्रार्थनामभिव्यज्य, 'वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमसः' इति सूर्यस्य चन्द्रस्य च महिमप्रदत्वमधिकमनुसंधेयं प्रदर्श्यते । न चैतत् गतिविशेषव्यञ्जनादिना चरितार्थमिति उपरि फलविशेषकीर्तनबलात् तदनुगुणार्थपरतयैवैतद् योज्यमिति ।

तर्हि, 'त्वमसि विश्वसृक्' इति 'विधाता विश्वसृड्विधिः' इति कोशप्रसिद्धचतुर्मुखवाचिपदप्रयोगात्, पूर्वम्, 'न्यास इत्याहुर्म-

इति स्मरणं कथमुपपद्यताम् । तत्राह—"योगिनः प्रति स्मर्येते स्मार्ते चैते" । अस्मिन् प्रकरणे अर्चिरादिगतिः धूमादिगतिरित्येते द्वे गती **स्मार्ते** स्मर्तव्यत्वेन योगिन इति (योगिनः प्रति?) स्मर्येते ; न तु मुमूर्षतां कालविशेषोऽभिधीयते । 'नैते सृती पार्थ जानन् योगी मुह्यति कश्चन' इत्युपसंहारात् । 'यत्र काले त्वनावृत्तिम्' इत्यस्य यत्कालाभि-

---

नीषिणो ब्रह्माणम्' इति ब्रह्मत्वकीर्तनाच्च चतुर्मुखलोकप्राप्तिरप्यवान्तरफलमस्तु। अवश्यमेतदेष्टव्यम्—अन्यथा, 'य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद् ब्रह्मणो महिमानम्' इत्यस्यार्थवर्णनायोगात् । न च परब्रह्मप्राप्तिरूपार्थस्यैवेयं द्विरुक्तिरिति युक्तम् ; प्रथममश्रुतस्य तस्मादित्यस्य पश्चाच्छ्रवणात् । आप्नोतीति पुनरप्रयोगाच्च । अतः एवं विद्वान् आदौ चतुर्मुखं प्राप्नोति ; तदूर्ध्वञ्च परं ब्रह्मेत्येव तदर्थः । तस्मादिति तदनन्तरवाचिशब्दात् । एतद्विवरणरूपोत्तरानुवाकान्तिमवाक्येऽपि प्रथमं तस्मादिति पदं आदित्यादिमहिमप्राप्त्यनन्तरमित्यर्थकम् । ब्रह्मण इति च चतुर्मुखार्थकम् । द्वितीयश्च तस्मादिति चतुर्मुखप्राप्त्यनन्तरमित्यर्थकम् । ब्रह्मण इति च परब्रह्मार्थकम् । न पुनरत्रापि द्विरुक्तिः । अर्थभेदात् इति चेत्—काममस्तु । का नो हानिः । वस्तुतो द्विरुक्तित्वस्य पुरःस्फूर्तिकत्वात् चतुर्मुखवाचिस्पष्टपदाभावाच्चैतदर्थ उपेक्षितः । मन्त्रघटकविश्वसृक्पदस्यापि योगार्थप्रसिद्ध्या समष्टिव्यष्टिसर्वस्रष्टृपरत्वमेव न्याय्यमिति न विद्याशरीरे चतुर्मुखनिवेशः । प्रथमानुवाके तस्मादित्यस्य भक्त्यपेक्षयाऽप्युत्कृष्टतपस्त्वेन कथितन्यासमात्रादित्यर्थः संभवति । यद्वा, 'य एवं वेद ब्रह्मणो महिमानमाप्नोति' इत्यनेन नाव्यवधानेन मोक्षप्राप्तिरभिमता, किन्तु किञ्चिद्व्यवधानेनेति गमयितुम् , 'तस्माद्ब्रह्मण' इति द्वितीयवाक्यम् । तत्र तस्मादिति पदं मन्त्रे 'सूर्यस्य', 'चन्द्रमसः' इत्युक्त्युप-

ब्रह्मणो महिमानमित्युपनिषत् ॥ [७९] (अनु. ६४) १५० ॥

हरिः ओ(३)म् । इति तैत्तिरीयोपनिषदि द्वितीयः प्रश्नः ।

इति नारायणोपनिषत्

---

मानिदेवताभिरतिवाहितो ब्रह्म प्राप्नोति, तं मार्गं वक्ष्ये इत्येवार्थः । अतो योगिनो गतिद्वयचिन्ताविधानार्थोऽयं संदर्भ इति स्थितम् ।

इत्युपनिषत् । समाप्तेति शेषः ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमत्ताताचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिपादसेवा-
समधिगतपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु
तैत्तिरीयोपनिषत्प्रकाशिका संपूर्णा ॥

॥ शुभमस्तु ॥

---

स्थापित-तत्तत्सायुज्यपरमिति एतद्विवरणार्थप्रवृत्तोत्तरानुवाकगता-भ्यामेकार्थाभ्यां तस्मादिति पदाभ्यां ज्ञायत इति सिद्धं पदत्रयमेकार्थ-मिति ।

इत्युपनिषत् । अत्रोपनिषत्पदं संपूर्णतैत्तिरीयोपनिषत्परमिति ॥

इत्थमीशादिवद् भाष्यपरिष्कारं यथामति ।
व्यधत्त तैत्तिरीयस्य वात्स्यः श्रीवीरराघवः ॥

इति तैत्तिरीयोपनिषद्भाष्यपरिष्कारः संपूर्णः

श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः

श्रीरस्तु ॥

—:*०*:—

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ओं शान्तिः शान्तिः शान्तिः ॥

(द्वितीयप्रश्ने अनुवाकदशिन्यादिसंख्या)

अंभसि भूरन्नये भूरन्नं भूरन्नये च पाहिनो यश्छन्दसां नमो ब्रह्मण ऋतन्तपो यथावृक्षस्याणोरणीयान् सहस्रशीर्षमृतमादित्यो वा एष आदित्यो वै तेज ओजो घृणिस्सर्वो वै कद्रुद्राय नमो हिरण्यबाहवे यस्य वैकङ्कती कृणुष्वपाजोऽदितिरापो वा इद<sup>ँ</sup> सर्वमापः पुनन्त्वग्निश्च सूर्यश्चायात्वोंभूरोंभूर्भुवः सुवरोंतदुत्तम ओमन्तश्चरत्यमृतोपस्तरणमसि प्राणे निविष्टः, प्राणे निविष्टः शिवोऽमृतापिधानमसि श्रद्धायां प्राणे निविश्य प्राणानामाङ्गुष्ठमात्रो मेधादेवी मेधां म इन्द्रो दधात्वप्सरा स्वामां मेधा सद्यो वामदेवायाऽघोरेभ्यस्तत्पुरुषायेशानो ब्रह्ममेतु ब्रह्ममेधया, ब्रह्ममेधया प्राणापान वाङ्मनः शिरःपाणि त्वक्चर्म शब्दस्पर्श पृथिव्यन्नमय विविट्टिघपोत्कायोत्तिष्ठो॰ सत्यं प्राजापत्यस्तस्यैवं चतुष्षष्टिः ॥ ६४ अ ॥

अंभसि वृषा ह<sup>ँ</sup> सः सर्वो वा आयात श्रद्धायां तत्पुरुषाय पृथिव्येकान्नाशीतिः ॥ ७९ ॥ द ॥

शुभमस्तु ॥

श्रीः

# परिशिष्टम् ।

अथ, **अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ** (पु. 106-7) **कृणुष्व पाज इति पञ्च** (पु. 168) इति गृहीतानां मन्त्राणां विशिष्य **श्रीरङ्गरामानुजमुनि**भिरव्याख्यानात् **श्रीकूरनारायणभाष्य**मिहोद्ध्रियते—

"एवं परमात्मसूक्तमाम्नातम् । एतत्सूक्तशेषतया, 'अद्भ्यः संभूतः' इत्युत्तरनारायणाख्योऽनुवाकः, 'हिरण्यगर्भ' इत्यष्टावृचश्च, 'अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ' इति प्रतीकोपादानेन समाम्नाताः । एषाञ्च परमात्मप्रतिपादनपराणामन्यत्र पठितानामिहातिदेशसामर्थ्यात्, कल्पसूत्रकारविनियोगमन्तरेणापि लिङ्गादिना परमपुरुषसमाराधनादौ कर्मणि विनियोगः कल्प्यः । 'उत्तरनारायणेनाऽऽदित्यमुपतिष्ठते' इति सूत्रकारेण अस्य **आदित्य**शब्दवाच्यस्यादित्यान्तरवस्थितस्य नारायणस्योपस्थान एव विनियोगो दर्शितः । आदित्यान्तरवस्थितो नारायणोऽप्यादित्यशब्दवाच्यः । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति **आदित्य**शब्दादपि ण्ये कृते पुनरपि आदित्य इति रूपसिद्धिः । तथा च **श्रुति**रपि, 'असावादित्यो ब्रह्म' इति आदित्यान्तरवस्थितं परं ब्रह्मैव आदित्यशब्देन वदति । तथा, 'स यश्चायं पुरुषे, यश्चासावादित्ये' इत्यादित्यान्तरवस्थानं भगवतः श्रूयते ।

तत्र पुरुषनारायणोक्तपुरुषशब्दवाच्यात् विश्वकर्मणोऽण्डसृष्टिः, चतुर्मुखादिसृष्टिः, नामरूपव्याकरणम्, तदर्थमखिलव्याप्तिः, तत्फलभूतं सर्वधारकत्वं सर्वशब्दवाच्यत्वं सर्वशेषित्वम्, एवमेव निखिलवेदवेद्यत्वम्, महापुरुषत्वम्, आदित्यवर्णत्वम्, तदनुबन्धि पुण्डरीकाक्षत्वम्, अपहतपाप्मत्वम्, तमसः परत्वम्, तद्वेदनस्य मुक्त्युपायत्वम्, तद्व-

व्यतिरिक्तसाधनानां मुक्त्यनुपायत्वम्, स्वासाधारणदिव्यलोकचारित्वम्, स्ववेदनाश्रमजत्वाव्ययत्वादिसर्वैश्वर्येण सह स्वविभूतिभूतदेवमनुष्यादिषु तत्सजातीयत्वेन स्वेच्छयैव धर्मसंस्थापनार्थं [अवतरणं?] दोषा (देवता?)-द्यापन्निवारकत्वम्, अनुकूलानामापादि पुरःस्थायित्वम्, पूर्वजत्वम्, अवतारावस्थस्य समाश्रयणीयत्वम्, तत्समाश्रितानां मन्त्रादिस्रष्टृत्वम्, तेषां देवादिनियन्तृत्वम्, एवम्भूतसर्वप्रभावानुभूतश्रीभूमिमहिषीकत्वम्, अवतारे तत्प्रकारस्य अकालकाल्यत्वम्, आदित्यादिविभूतिमत्त्वम्, सर्वप्रशासितृत्वम्, स्वचरणारविन्दप्रापकत्वमित्येतेऽर्थाः प्रतिपाद्यन्ते ।

**अद्भ्यः संभूतः पृथिव्यै रसाच्च । विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद् रूपमेति । तत् पुरुषस्य विश्वमाजानमग्रे ॥**

अनूद्य सृष्टिं पूर्वोक्तामाद्यया त्रिष्टुभोच्यते ।
तत्सृष्टस्य च शेषत्वं शेषिता स्रष्टुरीशितुः ॥

'अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्' इति प्रक्रियया भूतान्तरसंसृष्टाभ्योऽद्भ्यः अण्डात्मादिप्रपञ्चः संभूतः । **पृथिव्यै रसाच्च** । अण्डात्मनः पृथिव्याः **रसात्** अन्नविशेषात् यः तदन्तर्वर्ती देवतिर्यङ्मनुष्यस्थावरादिरूपेण विभक्तो भूतसर्गः प्रतिपादितः स च द्विविधः सर्गः **विश्वकर्मणः समवर्तताधि** । सर्वं सृष्ट्यादिकं कर्मास्येति विश्वकर्मा पुरुषोत्तमः । तस्मादध्यक्षभूतात् । **अधिः** ईश्वरार्थो वा । विश्वकर्मण ईश्वरात् । **समवर्तत** लोक लोकेश्वरादिविभागेन संवृत्तः । तथा च **पुरुषसूक्ते**, 'विराजोऽधि पुरुषः' इति अण्डसर्गः, 'पश्चाद् भूमिमथो पुरः' इति भूतभौतिकसर्गश्चेति द्विप्रकारोऽयं सर्ग उक्तः । एवमण्डरूपेण तदन्तर्गतचतुर्विधरूपेण

ईश्वरेशितव्यविभागेन च संवृत्तस्य **तस्य** प्रपञ्चस्य **त्वष्टा** सर्वनामरूप-व्याकर्ता भगवान् **रूपं विदधत्** तत्तच्चेतनकर्मानुगुणजातिगुणस्वरूप-विशिष्टांस्तांस्तान् विधाय **एति** तद्धारणपोषणनियमनैः तदात्मकतया व्याप्नोति । तथा च **श्रुतिः**, 'तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनु-प्रविश्य । सच्च त्यच्चाभवत्' इति । **तत्** तस्मात् एवं प्रपञ्चस्वरूपविधानात् तद्विभागकरणात् तन्नियमनात् तद्व्याप्तेश्च **इदं विश्वं पुरुषस्य** पुरुषोत्त-मस्य शेषमिति यावत् । **आजानमग्रे** । एवमग्रे अहं **आजानं** ज्ञातवान् इति वेदात्मा ब्रवीति । तथा च **श्रुतयः**, 'पतिं विश्वस्य', 'पतिं पतीनाम्', 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'भूतस्य ज्ञातः पतिरेक आसीत्', 'यस्येमाः प्रदिशो यस्य बाहू', 'यस्मात्सि न तमन्तरेमि' इति । **महा-भारते**, 'कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्' इत्यादि । एतदुक्तं भवति—संसारसागरमग्नानां सर्वेषां जन्तूनामिदमेवोज्जीवनं ज्ञानमिति वेदात्मनोऽभिप्राय इति ॥ १ ॥

**"वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् ।**
**तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय ॥"**

दौर्लभ्यमुक्तज्ञानस्य सप्रयोजनता तथा ।
अनुपायत्वमन्येषां त्रिष्टुभोक्तं द्वितीयथा ॥

**एतम्** उक्तगुणविशिष्टम् । **महान्तम् आदित्यवर्णं पुरुषम्** नीलतोयदमध्यस्थ-विद्युल्लेखाप्रख्यममन्दसौन्दर्यसौकुमार्यलावण्य-यौवनाद्य-शेषमङ्गलगुणाकरम् । **तमसः** प्राकृतात् सर्वस्माल्लोकात् **परस्तात्** उत्तरस्मिन् स्वासाधारणे परमपदे वर्तमानं पुण्डरीकाक्षं श्रियःपतिमहमेव वेद । मद्हृदयज्ञाश्च महात्मानोऽपि जानन्ति । "अहं वेद्मि महात्मानं

रामं सत्यपराक्रमम् । वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः'' इति । मद्हृदयमजानन्तः कुदृष्टयो ज्ञानविहीना विनष्टा भवेयुरिति भावः । तथाच भगवच्छास्त्रे **श्रीसात्वते,** 'नित्यं नित्याकृतिधरं तेजसा सूर्यवर्चसम्', 'आवाहयाम्यमरवृन्दनताङ्घ्रियुग्मम्' इत्यादि। **श्रीपौष्करे,** 'पूर्वकर्ममलार्तानां ध्यायिनां खेदशान्तये स्वदन्तेन्दुवयोत्थेन ह्लादयन् गोगणेन तु । स्रग्वस्त्राभरणैर्युक्तं स्वानुरूपैरनूपमैः चिन्मयैः स्वकान्तिभिश्च अन्योन्यरुचिरञ्जितैः' इति । **जयाख्ये** च, 'सूर्यायुतसहस्राभं सर्वदेवनमस्कृतम् ।', 'ध्यायेच्चतुर्भुजं विप्र शङ्खचक्रगदाधरम्', 'सहस्रशिरसे तुभ्यं सहस्रवदनाय च । सहस्रनयनश्रोत्र सहस्राद्भुतविक्रम । सहस्रसूर्यवपुषे सहस्रेन्दुगभस्तये । नमः परमहंसाय परात् परतराय च ॥', 'हृदम्बुजगुहावासपरमव्योमशायिने' इत्यादि । **श्रीमद्रामायणे,** 'व्यक्तमेष महायोगी' इत्यादि । **वायुप्रोक्तशैवयोः,** "वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः" इत्यादि । तद्ज्ञानवतां योगिनां फलञ्चाह **तमेवं विद्वानमृत इह भवति** । तं पुरुषोत्तमं **एवं विद्वान्** पुरुषनारायणोत्तरनारायणाभ्यामुक्तप्रकारेण यो महात्मा मद्हृदयज्ञो **विद्वान्** जानाति, स **इहैवामृतो भवति**[1] संसारदशायामेव मुक्तसूरिभोग्यभगवद्गुणामृतास्वादतृप्त्या तानपि अतिशेते इत्यर्थः ।

ज्ञानान्तराणां साधनान्तराणाञ्च परमपुरुषप्राप्तिलक्षणस्य मोक्षस्यासामञ्जस्येनानुपायत्वमाह **नान्यः पन्था विद्यतेऽयनाय** । **अयनाय** भगवत्प्राप्तये अन्यः **पन्थाः** उपायो न विद्यते । तस्मात् संसारगर्तात्

1. 'अमृतत्वञ्चानुपोष्य (4-2-7) इति सूत्रखण्डोक्तमत्र भाव्यम् ।

उत्तितीर्षुभिः इदमेव इदमनुवाकोक्तं ज्ञानं प्रणिपातपरिप्रश्नसेवादिभिः प्रयत्नेन संपाद्यमित्यर्थः।

तथाच श्रुतिः, 'एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्', 'ज्ञात्वा तमेवं मनसा हृदा च', 'भूयो न मृत्युमपयाति विद्वान्', 'य एवं विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति', 'ज्ञात्वा तमेवं मुच्यते सर्वपाशैः', 'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्व-मेति', 'अमृतस्यैष सेतुः', 'ब्रह्मविदाप्नोति परम्', 'ब्रह्म वेद ब्रह्मैव भवति' इति। मनुरपि, 'रुक्माभम्' इत्यादि। शङ्खः, 'यं वै विदित्वा न बिभेति मर्त्यो नान्यः पन्था विद्यते चायनाय' इति ॥ २ ॥

ननु तमसः परस्तात् स्वासाधारणे सकलवाङ्मनसागोचरे परमे पदे सुखमासीनस्य पुरुषोत्तमस्य स्वरूपरूपगुणविभवादिकं एतेनानुवाक-द्वयेन प्रतिपादयितुमशक्यम्। प्रतिपादितेऽपि अनेन संसारिणा संकुचित-ज्ञानेन येन केन चित् प्रतिपत्तुमपि दुष्करम्। एवञ्च सति ज्ञाना-न्मोक्षः सुतरां इत्याशङ्क्य परिहरति—

**"प्रजापतिश्चरति गर्भे अन्तः। अजायमानो बहुधा विजायते।**
**तस्य धीराः परिजानन्ति योनिम्। मरीचीनां पदमिच्छन्ति वेधसः॥"**

विषयस्यातिभूमित्वात् ज्ञानदौष्कर्यशङ्किनाम्।
अवतारेण सौलभ्यं त्रिष्टुभोक्तं तृतीयया॥

**प्रजापतिः** प्रजानामसद्व्यावृत्तानां सर्वेषां पतिः स्वामी रक्षिता। पातेर्डतिप्रत्ययः। **गर्भे** स्वसृष्टे ब्रह्माण्डे। **अन्तः** मध्ये। चरति विग्रह-वान् भूत्वा। स्वचरणकमलसमाश्रयणसौकर्याय देवमनुष्यादिसजातीय-तया तदातदा स्वयमवतीर्य चेतनैः सह चरति। तथाऽऽह स्वयमेव,

'यदायदा हि धर्मस्य ग्लानिर्भवति भारत ! । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति ॥ तर्हि अविकारश्रुतिविरोध इत्यत्राह **अजायमान** इति । **अजायमानः** स्वयमकर्मवश्यतया सतत-निर्विकारोऽपि । आश्रितार्थं **बहुधा** सुरनरतिरश्चामपि रूपेण स्वे-च्छया **विजायते** विविधं जायते 'इच्छागृहीताभिमतोरुदेह' इति । **तस्य** प्रजापतेः **योनिं** तथावतारहेतुम् अवताररहस्यतत्त्वम् **धीराः** प्राचेतसपराशरपाराशर्यशुकशौनकपराङ्कुशनाथयामुनरामानुजाचार्यादयः । **परिजानन्ति** सर्वप्रकारमवगच्छन्ति । किंविशिष्टाः ? **वेधसः** विधा-तारः लीलाधीनसकलबन्धनविमोक्षणादिव्यापाराः **मरीचीनां** असंकुचित-नित्यज्ञानतेजोनिधीनां अनन्तवैनतेयविष्वक्सेनादीनां सूरीणां **पदं** स्थानं **इच्छन्ति** प्राप्नुवन्ति । **अनेकार्थत्वात्** धातूनाम् । त एव ज्ञाने प्रभवन्ति, नान्ये इति भावः । तथा **श्रुतिः**, 'ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः' । तथाच **यामुनाचार्याः**, 'त्वदाश्रितानाम्' इत्यादि ॥ ३ ॥

स्वविभूतिमध्ये स्वांशांशेन सुरनरतिरश्चां समानधर्ममत्स्यकूर्मादि-रूपेण योऽवतरति, स एव सर्वभोगमोक्षप्रद इत्याह—

"यो देवेभ्य आतपति । यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये ॥"

अंशांशेनावतीर्णस्य रामकृष्णादिमूर्तिभिः ।
तस्यैव सर्वशेषित्वं चतुर्थ्या त्रि(ऽनु ?)ष्टुभोच्यते ॥

मत्स्यकूर्मवराहनृसिंहवामनादिरूपेणावतरन् यः **देवेभ्यः** देवार्थम्—**देवाः** स्वाज्ञानुवृत्तिशीलाः। तत्परिपन्थिनोऽसुराः। **आदित्यपुराणे,** "तस्मिन् हरणविप्रस्वबुद्धद्‍या ये नमेहिरे(?)किंचयिष्यन्ति(?)ते देवाः मन्तव्यास्त्वितरेऽसुराः ॥" इति। **वैष्णवे धर्मे,** "विष्णुभक्तिपरो देवो विपरीतस्तथाऽसुरः" इति। **गीतोपनिषदि,** "द्वौ भूतसर्गौ लोके अस्मिन् दैव आसुर एव च। दैवो विस्तरशः प्रोक्त आसुरं पार्थ! मे शृणु ॥" इत्यादि **आतपति** असुरराक्षसादीन् निर्दहति। **श्रीमद्रामायणमहाभारतादिकं** सर्वमत्र प्रमाणम्। **यो देवानां पुरोहितः।** **देवानामनुकूलानां** सर्वभयापनोदनाय स्वप्रकाशाय च **पुरः** पुरस्तात् **हितः** स्थितः। सर्वेषामनुकूलानां प्रत्यक्षतामापन्न इति यावत्। कथं प्रत्यक्षतापन्न इत्यपेक्षायामाह **पूर्वो यो देवेभ्यो जातः।** य पूर्वभ्यो **देवेभ्यः** देवार्थं **जातः** संभूतः, तस्मात् प्रत्यक्षतापन्न इति। प्रतिपर्यायं **य** इति उक्तार्थे शास्त्रसिद्धत्वप्रसिद्धिं द्योतयति। य एवं प्रसिद्धो भगवदवतारः, तस्मै स्वात्मानं निवेदयति **नमो रुचाय ब्राह्मये।** **रुचाय** रोचनशीलाय प्रत्यक्षतापन्नाय। रुच दीप्तौ। इगुपधलक्षणः कः। **ब्राह्मये** ब्रह्मांशभूताय। भगवदवतारायेत्यर्थः। छान्दसः तद्धितप्रत्ययः। अथवा **ब्राह्मये** ब्रह्मसंबन्धिने। **ब्रह्म** वेदः। तत्संबन्धित्वञ्च तत्प्रतिपाद्यत्वम्। 'अन्तरतः कूर्मं भूतं सर्पन्तम्', 'स वराहो रूपं कृत्वोपन्यमज्जत्', 'त्रीणि पदा विचक्रमे', 'नमः कृष्णाय देवकीपुत्राय' इति **श्रुति**शतसहस्रैरुक्तगुणत्वेन वेदप्रतिपाद्याय। **नम** इति, तस्मै स्वत्वात्मानमात्मीयञ्चोभयं समर्पयति। तथाच **निरुक्तब्राह्मणे,** 'अहमपि न मम। भगवत एवाहमस्मि याः काश्चन............भवन्ति, मम

न ममताऽस्ति तासु, भगवत एव ताः इति । तथा च **आश्वलायने गृह्ये,** 'नमसा स्वध्वर इति नमस्कारेण वै खल्वपि न वै देवा नमस्कार इति यज्ञो वै नम इति हि ब्राह्मणं भवति' इति ॥ ४ ॥

एवं वेदपुरुषो भगवद्गुणानुभवपरवशचेताः आत्मानमात्मीयं च नमोवचनेन निवेद्य पितेव पुत्रं सकलप्राणिजातं भगवति प्रवणीकृत्य उत्तरयाऽनुष्टुभा नम उक्तेर्माहात्म्यमाह—

**"रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन् ।**

**यस्त्वेवं ब्राह्मणो विद्यात् । तस्य देवा असन् वशे ॥"**

नम उक्त्या च देवत्वं देवाश्च **वशवर्तिनः** ।

नमःप्रभावो विदुषां पञ्चम्याऽनुष्टुभोदितः ॥

**ब्राह्मं** ब्रह्मसम्बन्धि **रुचं** तेजः आत्मयाथात्म्यस्वरूपम् । आत्मनः तेजस्त्वं ब्रह्मसंबन्धित्वञ्च श्रुतयो वदन्ति, 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाश्चरन्ति' इति । **स्मृतिरपि,** 'न तद् भासयते सूर्यो न शशाङ्को न पावकः । यद् गत्वा न निवर्तन्ते तद् धाम परमं मम' इति । **जनयन्तः** प्रकृतिसंसर्गेण विपर्यस्तमात्मस्वरूपं यथावस्थितमाविर्भावयन्तः। तथा, 'प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते', 'ज्ञानं वैराग्यमैश्वर्यं धर्मञ्च मनुजेश्वर' इति। **देवाः** सात्त्विकाग्रेसराः परमैकान्तिनः **अग्रे** कृतयुगादौ **तदब्रुवन्** द्विषट्काष्टषड्वर्णादिकमब्रुवन् । 'वयं नाम प्रब्रवामा घृतेनास्मिन् यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोवमीद्गौर एतत्' । अथवा देवस्य पुरतः **तत्** नमःपूर्वकमभिगमनम**ब्रुवन्** अकुर्वन् इत्यर्थः । तद्वचनेन भगवच्छेषभूतं यथावस्थितमात्मयाथात्म्यमलभन्त । तथाच **श्रीनारायणीये,** 'अहो एकान्तिनः

सर्वान् प्रीणाति भगवान् हरिः । विधिप्रयुक्तां पूजाञ्च गृह्णाति शिरसा स्वयम् । एकान्तिनस्तु पुरुषा गच्छन्ति परमे पदे । नूनमेकान्तिधर्मोऽयं श्रेष्ठो नारायणप्रियः । सहोपनिषदान् वेदान् ये विप्राः सम्यगास्थिताः । पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः । तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम् ' इति । **वैष्णवे धर्मे,** 'नम इत्येव यो ब्रूयात् मद्भक्तः श्रद्धयाऽन्वितः । तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद ! ॥' इति । तत्रैव, 'नमस्कारः स्मृतो यज्ञः सर्वयज्ञोत्तमः शुभः । नमःकृत्वा महायज्ञमश्वमेधफलं लभेत् । प्रणम्य दण्डवद् भूमौ नमस्कारेण योऽर्चयेत् । स यां गतिमवाप्नोति न तां क्रतुशतैरपि । अग्निहोत्राश्च वेदाश्च ये वा यज्ञाः सदक्षिणाः । तस्मिन् प्रतिष्ठिता नित्यं तस्मात् विष्णुं नमाम्यहम् ।' 'शाठ्येनापि नमस्कारः प्रयुक्तश्चक्रपाणये । संसारस्थाणुबन्धानामुद्वेजनकरो हि सः' इति । **श्रीगीतोपनिषदि,** 'नमो नमस्तेऽस्तु सहस्रकृत्वः' इत्यादि । एतदुपबृंहणीयानि वेदवाक्यानि, 'भूयिष्ठां ते नम उक्तिं विधेम', 'नमो विष्णवे बृहते करोमि', 'उप त्वे यज्ञ नमः उप ते नममुद्वी(?)सं नमः', 'ह्रीस्ते नमः' इति । **श्रीनृसिंहपुराणे,** 'नमस्कारः स्मृतो यज्ञः सर्वयज्ञेषु चोत्तमः। नमस्कारेण चैकेन अष्टाङ्गेन हरिं यजेत्' इति । न केवलं नमोवचनकर्तार एव कृतिनः, तस्य प्रभावज्ञा अपि कृतिनः इत्याह **यस्त्वेवमित्यादि** । **ब्राह्मणः** ब्रह्म अनितीति ब्राह्मणः वेदहृदयज्ञः यः कश्चित् **एवं विद्यात्** नमोमाहात्म्यं जानीयात् । 'य एतेन यजते, य उ चैनमेवं वेद', 'तत्पुरुषस्य विश्वमाजानमग्रे', 'वेदाहमेतं पुरुषं महान्तम्' इति पूर्वमेवोक्तम् । **तुशब्देन** सर्वेभ्यो ज्ञानिभ्यो वैलक्षण्यं विवक्षितम् । तस्य

**देवाः** चतुर्मुखाद्याः सर्वे । तथाच **वैष्णवधर्मे,** 'सर्वस्य सर्वसंस्थस्य सर्वसारस्य योगतः । ये विष्णुं प्रणतास्तेषां वशे सर्वाश्च देवताः ।' इति । **वशे असन्** अधीना भवन्ति । 'द्रवन्ति दैत्याः प्रणमन्ति देवताः' इति ह्युच्यते । 'सर्वेऽस्मै देवा बलिमावहन्ति' इत्युक्तम् । परमपुरुषयाथात्म्यविदं महापुरुषं सर्वेऽपि चतुर्मुखाद्या देवाः पुनःपुनः प्रणम्य स्तुतिवचनमुखराः स्वार्थं सकलमभ्यर्थ्य तदनुग्रहं प्रतीक्षन्त इत्यर्थः॥

अभीष्टप्रार्थना **ह्रीश्च त** इत्यादिना शेषेण ।

[1]**ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण॥**

हे भगवन्! **ह्रीः** क्षमा पृथ्व्यपरपर्याया अक्षयवीर्या च । **लक्ष्मीः** सर्वैर्लक्षणीया समाश्रयणीया च । ते उभे **ते** तव महापुरुषस्य **पत्न्यौ** सकलसंरक्षणमहाध्वरदीक्षितस्य सहधर्माचरणे दीक्षिते इति यावत् । 'पत्युर्नो यज्ञसंयोगे' इति नकारोऽन्तादेशः । तथाच **श्रुतिः,** 'अस्येशाना जगतो विष्णुपत्नी', मही देवीं विष्णुपत्नीम्' इति । 'ईश्वरीं सर्वभूतानां त्वामिहोपह्वये श्रियम्' इति **श्रीसूक्तञ्च** । 'ईशाना देवी भुवनस्याधिपत्नी', 'इमां सुनावमारुहं शतारित्रां शतस्फयामच्छिद्रां पारयिष्णुम्' इति । 'अदितिर्देवा' इत्यनुवाकश्च ।

हे श्रियःपते! अहश्च रात्रिश्च **अहोरात्रे ते पार्श्वे** । पुरुषस्य यथा पार्श्वे विधेये, तथा अहोरात्राद्यात्मा कालो विधेय इति । तस्मात् **इदानीं मुक्तिम्** अन्यांश्च भोगादीन् अविलम्बितमेव कल्पयेत्यभिप्रायः । तथा च **महाभारते,** 'कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।

ईशते भगवानेकः सत्यमेतद् ब्रवीमि ते ॥', 'कालचक्रं जगच्चक्रं युगचक्रं च केशवः । आत्मयोगेन भगवान् परिवर्तयतेऽनिशम् ॥' इत्यादि । **अहोरात्र**शब्देन सूर्यचन्द्रौ लक्ष्येते । तथा च **श्रुतिः**, 'धाता यथापूर्वमकल्पयत्', 'भीषाऽस्मात् वातः पवते भीषोदेति सूर्यः' इत्यादि । **नक्षत्राणि** सर्वाणि ज्योतींषि तव **रूपं** शरीरम् । **वैष्णवे पुराणे**, 'सर्वे ध्रुवा महाभाग प्रबुद्धा वातरश्मिभिः' 'ग्रहर्क्षताराधिष्ण्यानि । यानि मूर्तान्यमूर्तानि अत्र वा तत्र वा क्वचित् । सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः' इति । **अश्विनौ व्यात्तम्** । अश्विनौ संसारिणां सकलतापभिषजौ तव **व्यात्तम्** आस्यव्यादानम् ; वाचिकप्रयत्न इति यावत् । सर्वेषां प्राणिनां अश्विनिर्दिष्टानामौषधानां रक्षकत्वात् त्वमेव सकलैश्वर्याणां सकलग्रहादीनां सकलभिषजां च सर्वथा निर्वाहकः । तस्मादस्माकं सकल**मिष्टं** सकलमभिलषितं ऐहिकामुष्मिकं साक्षादपवर्गञ्च **मनिषाण** अनुमन्यस्व ; देहीति यावत् । मनोतेर्व्यत्ययेन श्नाप्रत्यये, 'सिब् बहुलं लेटि' इति सिपि लेटि रूपम् । धात्वन्तरं वा छान्दसमन्वेष्टव्यम् । **अमुं मनिषाण** । **अमुमि**ति विशेषप्रार्थना, युष्मच्चरणारविन्दमेवास्मभ्यं देहीति । किं विशिष्याभिधीयते । **सर्वं मनिषाण** । यत् संसारिणां हितत्वेन तव मतम्, तत् सर्वं त्वमेव देहीति । तथा च **श्रीवत्साङ्कमिश्राः**, 'तदपि किमपि हन्त ! दुर्वासनाशतविवशतया यदभ्यर्थये' इत्यादि । तथाच **श्रुतयः**, 'एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्', 'यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । **श्रीवैष्णवे पुराणे,**

'तस्मिन् प्रसन्ने किमिहास्त्यलभ्यम्' इत्यादि। **वैष्णवधर्मे,** 'रत्नपर्वतमारुह्य यथा रत्नं नरो मुने। सत्त्वानुरूपमादत्ते तथा कृष्णान्मनोरथान्॥' 'भौमान् मनोरथान् स्वर्गं स्वर्गिवन्द्यं च यत् पदम्। प्राप्नोत्याराधिते विष्णौ मुक्तिमप्यतिदुर्लभाम्॥' 'यद् दुर्लभं यद् दुराप मनसो यन्न गोचरम्। तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः॥' 'ऐश्वर्यं संततिं श्रेष्ठामारोग्यं द्रव्यसंपदः। ददाति भगवान् विष्णुः गतिमग्र्यांश्च तोषितः॥' 'शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायिनां नित्यमपवर्गप्रदो हरिः॥' इत्यादिपरस्सहस्रवचनानि द्रष्टव्यानि॥

---

## उत्तरनारायणपरिष्कारः

श्रीः। परव्यूहविभवहार्दार्चारूपेण पञ्चविधा भगवन्मूर्तिः प्रसिद्धा। तत्रेह उत्तरनारायणे प्रथममन्त्रे विश्वकर्मण इत्यादिना जगद्व्यापारप्रवणं व्यूहरूपं सर्वमभिप्रेतम्। एवमवतीर्णः पर एवेति तमसः पारवर्ति पररूपं प्रदर्श्यते द्वितीये। तृतीयारम्भे हार्द उक्तः। 'स एषोऽन्तश्चरते बहुधा जायमानः' इति च श्रुतिः। तृतीये तुरीये च विभवो विशदमुक्तः। 'रुचं ब्राह्मं जनयन्तः' इति दैवसैद्धाद्यर्चापरं स्वरसतः। आसु सर्वास्वपि मूर्तिषु भगवत उपास्यत्वं श्रीभूसमेतत्वं सर्वेश्वरतया मोक्षान्तसर्वफलप्रदत्वञ्चोपरि वर्ण्यत इत्यनुसंधेयम्। उत्तरनारायणस्यास्य पदवाक्यार्थसारः अस्मत्कृते वेदान्तपुष्पाञ्जलावपि द्रष्टव्यः। अत्रापि संग्रहेण मन्त्राणामर्थ उच्यते—

अद्भ्य इति। विश्वं कर्म= क्रियमाणं यस्य तस्मात् विश्वस्रष्टुः व्यूहरूपात् भगवतः अधि= उपरि पृथिव्यै= अण्डरूपपृथिव्याधिपस्याय, रसात्= परमात्मनो लीलारसोत्पत्तेर्हेतोश्च यद्वा स्वयमुभय-

भाव्यत्वादिह भगवदनुभवरसहेतोश्च अद्भ्यः=एकोदकरूपात् प्रलयानन्तरभावात् समुद्रात् चतुर्मुखः संभूतः॥ त्वष्टा=सर्व नामरूपव्याकरणकर्ता परमात्मा तत्पुरुषस्य=स्वभृत्यभूतस्य तस्य= चतुर्मुखस्य सृज्यभूतं विश्वं रूपं स्वयं विदधत्-कुर्वन् सन् आजानम्= तदुत्पत्तिप्रभृति तत् रूपम् एति=प्रविष्टो भवति । श्रुत्यन्तरे, सृष्ट्वा अनुप्राविशत्, अनु प्रविश्य व्याकरोत् इति उभयविधनिर्देशोऽस्ति। तत्र क्रिययोः समानकालिकत्वात् पौर्वापर्यमविवक्षितमिति अनया श्रुत्या ज्ञाप्यते ॥ तेन सर्वस्य तद्रूपत्व(शरीरत्व)सिद्धिः। व्यूहावतार उक्तः । वेदाहमित्यादेरर्थः तमःपरिवर्तिविषयकत्वात् पररूपविषयकतया स्पष्टः । हार्दावतार उच्यते प्रजापतिरिति । परमात्मा एकैकप्रजाया अपि पतिस्सन् तन्नियमनाय शरीरान्तः हृदयपुण्डरीकगर्भे चरति। अजायमानः=पुण्यपापरूपकर्माधीनजन्मः रहितोऽपि, जीवात्मकृतपुण्यपापार्थमपि स्वयमुत्पत्त्यावश्यकत्वाभावेऽपि कर्माधीनतत्तत्प्रजोत्पत्तिकाले बहुधा=तत्तदंगुष्ठप्रमितहृदपेक्षया बहुविधतां प्राप्य, विशेषेण='अनश्नन्नन्यो अभिचाकशीति' इत्युक्तरीत्या अजहत्स्वस्वभावः श्रेयांश्च जायते । तस्य भगवतः योनिम्—उत्पत्तिहेतुं कर्मरूपकारणातिरिक्तं वात्सल्यादिकं धीराः बुद्धिमन्त एव जानन्ति। ये वेधसः=स्रष्टारः मरीचीनां पदं= यशःप्रभास्थानं परमपदं परमात्मनः इच्छन्ति=प्रेप्सन्ति। अत्र विभवावतारोऽपि गर्भे इत्यादिस्वारस्यात् ज्ञायत एव। सोऽनन्तरेणाप्युच्यते यः परमात्मा देवानां पुरः=तत्प्रार्थनातः प्रागेव हितस्सन् देवेभ्यः=तेषां कार्यसिद्धये आ=समन्तात् तपति=तपः कुरुते, सिद्धाश्रमे वामन इव। परिश्रम्य च सर्वं करोति। तप आलोचने ; आलोचयति च। यः पूर्वः प्रथमं देवेभ्यः जातः=आविर्भूतश्च विष्णूपेन्द्रादिरूपेण तस्य ब्राह्मये=परब्रह्मसंबन्धिने रुचाय=तेजसे अवताररूपाय नमः॥ ईदृशं ब्राह्मं रुचं=तेजः स्वप्रार्थनया जनयन्तः=

आविर्भावयन्तो देवाः ब्रह्मरुद्रसनकादयः अग्रे=अवतारात् प्रागेव अब्रुवन्। किमिति। यो जीवः ब्राह्मणः=ब्रह्मनिष्ठः एवं विद्यात्= 'इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ' इति जानीयात्। तस्य=उपासकस्य देवाः सर्वे प्राक् तेनाऽऽराधिता एव संप्रति वशे असन्=वश्या भवन्ति। 'तस्मै देवा बलिमावहन्ति' इति॥ रुचं ब्राह्मं जनयन्त इति अर्चारूपनिर्माणप्रतिष्ठानादिकं देवा अग्रे तदब्रुवन् इत्यत्र प्रतिष्ठोपयोगिसर्वविधमन्त्रोच्चारणादिकञ्च विवक्षितम्॥ आश्रितप्रार्थनापारवश्यापादनमथ क्रियते ह्रीरिति। हे भगवन्! ह्रीः=भूदेवी च, लक्ष्मीश्च ते पत्न्यौ=त्वत्कर्तृकजगद्रक्षणमहायज्ञे सहधर्मचारिण्यौ। "पापानां वा शुभानां वा...न कश्चिन्नापराध्यति" इति लक्ष्मीराह। "आर्द्रापराधिनि जनेऽप्यभिरक्षणार्थं रङ्गेश्वरस्य रमया विनिवेद्यमाने। पार्श्वे परत्र धरणिर्यदि तत्र न स्यात् प्रायेण तस्य वदनं परिवर्तितं स्यात्" इति भूदेवीविषयम्, अहोरात्रे पार्श्वे= अहनि रात्रौ वा सर्वदा स्वेच्छयाऽवतरेत्। नक्षत्राणि रूपम्= अवताररूपेषु आविष्कारतारतम्यम् अतिविचित्रम्। अश्विनौ व्यात्तम्= अवतीर्य क्रियमाण उपदेशादिः सर्वोऽपि अश्विदेवकृतौषधवत् मोक्षान्तसर्वारोग्यप्रदः। इष्टम्=उपेयम्, अमुम्=उपायं सर्वं स श्रीभूसमेतः सर्वेष्वप्यवतारेषु अर्चापर्यन्तेषु स्थित्वा प्रजाभ्यः संकलयति। एवमयं परत्वसौलभ्यपरिपूर्णः श्रियःपतिः पुरुषोत्तम इति।

इत्युक्तमूरभिजन उत्तरनारायणार्थमाचष्ट।
सच्चक्रवर्तिवंश्यो वात्स्यः श्रीवीरराघवो नाम॥

—o—o—

## हिरण्यगर्भ इत्यष्टौ

तत्र आद्यया भगवतः परत्वं जगत्कारणत्वं जगद्व्याप्तिः तत्फलादिकं च प्रतिपाद्यते—

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥१॥**

**अग्रे** सृष्टेः प्राक् प्रलयावस्थायां **हिरण्यगर्भः हिरण्यस्य** रमणीयस्य परमव्योम्नो गर्भभूतः स्वासाधारणे दिव्यास्थाने **समवर्तत** सम्यङ्निवसति स्म । तथाच, 'देवानां पूरयोध्या', 'तस्यां हिरण्मयः कोशः' इत्यादिषु परमपदस्वरूपं दर्शितम् । **भूतस्य जातः पतिरेक आसीत्** । ततः सृष्टिकाले सर्वाणि भूतजातानि सृष्ट्वा तेषां **पतिः** नियन्ता चासीत् । स एव पुरुषोत्तमः **दाधार पृथिवीं द्याम्** । **पृथिवीं** पृथिव्युपलक्षितान् अधोलोकान् व्याप्य दाधार । **उत** अपिच **द्यां** स्वर्गोपलक्षितान् उपरिलोकांश्च दाधारेति संबन्धः । **कस्मै देवाय हविषा विधेम** । य एव सर्वरक्षादिविनोदनः तस्मै **किंशब्दवाच्याय** महते प्रजापतये आपन्नानां सर्वेषां रक्षणायैव एवं जगत्सृष्ट्यादिभिः सर्वकालं संक्रीडमानाय **हविषा** आत्मरूपेण हविषा, पुरोडाशादिना वा **विधेम** सपर्यां विदधीमहीति प्रार्थना । **विधेमेति** लिङिआशिषि अङ् ॥

द्वितीयया तस्यैव सर्वानुरञ्जकत्वं शेषित्वञ्चाह—

**यः प्राणतो निमिषतो महित्वैक इद् राजा जगतो बभूव ।**
**य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ २ ॥**

**प्राणतः** जीवतः स्थावरस्य, **निमिषतः** प्राणादिकर्तुः संकुचित-ज्ञानस्य पादादिविहीनस्य उदरसर्पिणो जन्तोः, **जगतः** जङ्गमस्य= गमनशीलस्य देवतिर्यङ्मनुष्याख्यस्य प्राणिजातस्य, तथा ये(?) **द्विपदश्चतुष्पदः** इति, अपादोदरसर्पिण इति जन्तूनां त्रैविध्यमाम्नातम् ।

**महित्वा** महत्त्वेन **एक इत्** एक एव ; न द्वितीयः । **राजा बभूव** अनुरञ्जकोऽभूत । तस्यतस्य धारकपोषकभोग्यत्वादिप्रदानेन प्रतिपक्षनिरसनेन संवर्धनेन च संरक्षकोऽभूत् । यः अस्य स्थावरजङ्गमात्मकस्य द्विपदश्चतुष्पदश्च **ईशे** ईष्टे नियामकोऽभूत । **कस्मै देवाय हविषा विधेमेति** गतम् । **जगतः** इति गमेः क्विप् । 'गमः क्वौ' इति अनुनासिकलोपः । 'ह्रस्वस्येति' तुगागमः । '**द्युतगमिजुहोतीनां द्वे च**' इति द्वित्वम् ॥

तृतीयया तस्यैवान्यासंभावनाभूमिभूतमौदार्यं दर्शयति—

**य आत्मदाः बलदाः यस्य विश्व उपासते प्रशिषं यस्य देवाः ।**
**यस्यच्छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ ३ ॥**

यः **आत्मदाः** समाश्रितेभ्यः स्वाश्रयणमहाधर्मस्यानुगुणमन्यत् प्रदेयमजानन् स्वात्मानं ददाति । एवं स्वयैव परया कृपया आत्मानं प्रदाय विभूतिद्वयनिर्वाहकमात्मानं भोक्तुं बलमपि ददातीति **बलदाः ।** ददातेः विजन्तं पदद्वयमिदम् । अनुकूलेभ्यः प्रदातुस्तस्य सर्वेश्वरस्य सर्वत्रान्यासंभावनीयं महामहिमानं दर्शयति **यस्य विश्व** इति । **विश्वे** प्राणिनः **यस्य प्रशिषम् प्रशीः** प्रशासनम् दिव्याज्ञाम उपासते शिरोभिः । 'भीषाऽस्माद्वातः पवते', 'एतस्य वा अक्षरस्य प्रशासने' इत्यादि**श्रुतिः** तस्याज्ञां प्रदर्शयति । 'श्रुतिः स्मृतिर्ममैवाज्ञा', 'प्रशासितारं सर्वेषाम्', 'शास्ता विष्णुरशेषस्य' इत्यादिका **स्मृतिश्च** । **यस्य देवाः ।** द्योतनादिगुणयुक्ताः सर्वसमाराध्याः वरप्रदाश्चेन्द्रादयोऽपि यस्य शेषभूता इति यावत् । तदाज्ञानुवर्तित्वे मनुष्यादीनां देवोत्तमानामिन्द्रादीनामपि न विशेष इति **यस्य देवा** इति दर्शितम् । **यस्य**-

च्छायाऽमृतमिति। **अमृतं** मरणादिधर्मरहितमक्षरं परमं पदं यत्, तत् यस्य छायावत् विधेयम् अनुवर्तनैकस्वरूपमित्यर्थः। एतेन दिव्यायाः त्रिपान्महाविभूतेरनुवर्तनाप्रकारो दर्शितः। तथा **मूलसंहितायाम्**, 'तद् यथा तरुणवत्सा वत्सम् वत्सो वा मातरम्, छाया वा सत्त्वमनुगच्छेत् तथा' इति, 'अदुग्धा इव धेनवः' इत्यादि च। **यस्य मृत्युः** सकलप्राणिमारणादिकर्माधिकृतो मृत्युः यस्य शेषभूत इत्यर्थः। तथा, 'मृत्युर्धावति पञ्चमः' इति। तथाच स्वयं यमः प्राह, 'प्रभुरहमन्यनृणां न वैष्णवानाम्', 'हरिगुरुवशगोऽस्मि न स्वतन्त्रः', 'प्रभवति संयमने ममापि विष्णुः' इति। **कस्मै देवायेति** गतम्।

चतुर्थ्या विभूतिविशेषं दर्शयति—

**यस्येमे हिमवन्तो महित्वा यस्य समुद्रँ रसया सहाहुः।**
**यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम॥ ४॥**

इमे **हिमवन्तः** स्निग्धशीतलच्छायावन्तः घनाघनसलिलादिपदार्थसार्थाः यस्य। शेषभूता इति यावत्। **महित्वा** महत्त्वेन **यस्य समुद्रं रसया सहाहुः। रसया** भूम्या। **रसा**शब्द उपलक्षणार्थः। तत्स्थैः प्राणिभिः सह **समुद्र**मपां निधिम् तत्स्थं प्राणिजातञ्च **यस्याहुः** यस्य शेषभूत इति तद्विदः प्राहुः। तथा, 'कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्' इति। **यस्येमाः। इमाः।** प्राच्यादयः प्रधानदिशः तत्स्थाः प्राणिनश्च यस्य शेषभूता इति। **प्रदिशो यस्य बाहू। प्रदिशः** विदिशः तत्स्थाः प्राणिनश्च यस्य बाहू बाहुवद् विधेया इति। अथवा यस्येमाः प्रदिशः इमाः प्रधाना दिशः यस्य बाहू। यस्येति वाक्यभेदात् विदिशश्चेत्यर्थः। तस्मै, **कस्मै देवायेति** गतम्॥

पञ्चम्या सर्वलोकानां लोकेश्वराणामपि तदधीनत्वं दर्शयति—

**यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितौ व्येति कस्मै देवाय हविषा विधेम ॥ ५ ॥**

**यम्** उक्तगुणम् **अवसा** अवनेन हेतुना **तस्तभाने** अतिसंस्तम्भनशीले । यङ्लुगन्तात् ताच्छील्ये चानश् । **क्रन्दसी** असुरभयादिना क्रन्दमाने इमे द्यावापृथिव्यौ मनसा **अभ्यैक्षेताम्** आभिमुख्येन निजभीतिनिरसनार्थं **ऐक्षेताम्** अक्षीणि आर्पयताम् । रेजमाने दीप्यमाने अपि यमेव सर्वकालं स्वरक्षणाय प्रार्थयेते । **यत्राधि** यस्मिन् स्वामिनि नियन्तरि, 'अधिरीश्वरे' इति कर्मप्रवचनीयसंज्ञायाम्, 'यस्मादधिकं यस्य चेश्वरवचनम्' इति सप्तमी । सति, सूरः सूर्यः **उदितौ** उद्गमे[1] उदेति, अस्तमये व्येति । यस्मिन् ईशे सति उदयास्तमययोः सूर्यः प्रभवतीत्यर्थः । **श्रीमद्रामायणे**, 'सूर्यस्यापि भवेत् सूर्यो ह्यग्नेरग्निः प्रजापतिः' इति । **कस्मै देवाये**ति गतम् ॥

पुनरपि तस्य महिमातिशयः षष्ठ्या प्रपञ्च्यते—

**येन द्यौरुग्रा पृथिवी च दृढे येन सुवः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ६ ॥**

**येन** सर्वेश्वरेण **द्यौः** विद्याधरादीनां क्रीडास्थानं द्वितीयो लोकः, **उग्रा** सूक्ष्मावयवस्वरूपा तेजोमयी, **पृथिवी** पृथुतरा स्थूलावयवसंस्थाना, **दृढे** अशिथिले यथासंस्थाने येन समवस्थिते इति यावत् । **येन स्तभितम्** । येन परमसुखस्थानं सुवः **स्वर्गा**ख्यो लोकः **स्तभितं**

---

1 यत्र यस्मिन् उदितौ उधि=उदयविषये ईश्वरे सति सूर्य उदेतीत्यर्थोऽभिमतः स्यात् ।

यथास्थानं निश्चलमवस्थापितम् । येन **नाकः** । दुःखासंभिन्नो ब्रह्मादि-लोकश्च **स्तभितः** सुखोत्तरं स्थापितः । **योऽन्तरिक्षे रजसो विमानः ।** यश्च रजसः परस्तात् वर्तमाने **अन्तरिक्षे** परमाकाशे **विमानः** विगत-मानः अप्रमेयस्वरूपगुणविभवः । तस्मिन् **वैकुण्ठाख्ये** दिव्यलोके अयोध्याभिधानायां दिव्यपुर्यामानन्दमये मण्टपरत्ने श्रीपरिच्छिन्ने दिव्यपर्यङ्के दिव्यसूरिभिः परिचर्यमाणचरणारविन्दो नित्यं यथासुखमास्ते । **कस्मै देवायेति** पूर्ववत् ॥

सप्तम्या तेनैव ब्रह्मसृष्टिं देवानां नियमनञ्च दर्शयति—

**आपो ह यन्महतीर्विश्वमायन् दक्षं दधाना जनयन्तीरग्निम् ।**
**ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥**

**महतीः** बृहत्यः प्रलयावस्थिताः **अग्निं जनयन्तीः** अग्रगण्यं ब्रह्माणं जनयितुं क्षमाः **दक्षं** उत्साहम्—दक्षतेरुत्साहकर्मणो रूपम्—**दधानाः** ब्रह्माण्डजननयोग्योत्साहवत्यः आपः **विश्वमायन्** सर्वाणि भूतानि व्याप्तवत्य इति यावत् । 'अप एव ससर्जादौ तासु वीर्यमपा-सृजत्' इति । एवमपः सृष्ट्वा तन्मुखेन सर्वमुत्पादितवान् यतः, ततो हेतोः **देवानां** ब्रह्मादीनाम् **एक एवासुः निरवर्तत** समाधिकरहितः प्राणवत् धारको निर्वृत्तोऽभूत् । तस्मै **कस्मै देवायेति** पूर्ववत् ॥

अष्टम्या तस्यैव ब्रह्मादीनां स्वामित्वं दर्शयति—

**यश्चिदापो महिना पर्यपश्यत् दक्षं दधाना जनयन्तीरग्निम् ।**
**यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम ॥ ८ ॥**

**चिदित्यवधारणे** । य एव दक्षं दधानाः [अग्निं ?] जनयन्तीः **आपः** व्यत्ययेन द्वितीयार्थे प्रथमा ; **महिना** महिम्ना **पर्यपश्यत्**=

ब्रह्माण्डादिकं यथा जनयितुं समर्था भवन्ति, तथा वीक्षणं कृतवान् । यश्च **देवेष्वधि** सर्वेषां देवानां स्वामी **देवः** जगत्कर्मधर्मा **एकः** समाधिकरहितः **आसीत्** स्वयमेवासीत, नान्यप्रेरितः । तथा, 'आनीदवातँ स्वधया तदेकम्' इति । तस्मै **कस्मै** महते प्रजापतये **देवाय** निरुपाधिकक्रीडाविजिगीषादिसर्वार्थवते **हविषा** आत्मरूपेण, पुरोडाशादिभिर्वा **विधेम** तस्मै शेषभूताः परिचर्यां विदधीमहि[1] ॥

---

1. टि. अत्राष्टभिर्मन्त्रैः क्रमेण सर्वलोकाधारत्वं लोकान्तर्वर्तिसर्वविधप्राणिनियन्तृत्वं सर्वफलप्रदत्वं पर्वतसमुद्रभूमण्डलादिलोकगतसर्वाचेतनशेषित्वं जगद्रक्षनार्थप्रार्थ्यमानानेकावतारत्वं द्युप्रभृतिसर्वलोकगोचरपतनप्रतिबन्धानुगुणधारणनिपुणत्वं अग्नेरुत्पादकत्वं तादृशावनुग्राहकत्वसहितदेवदेवत्वमिति गुणान् भगवतः संकीर्त्य स एव सर्वकर्मसमाराध्य इति स्थापितमित्यनुसंधेयम् ॥

*—*—*

(पु. 168) अत्र रक्षोजनप्रशान्त्यर्थं **कृणुष्व पाज** इत्यादयः पञ्च मन्त्रा जप्या इति 'कृणुष्व पाज इति पञ्च' इति प्रतीकोपादानेन आम्नाताः । सर्वाः त्रिष्टुभः । अस्य विरोधिनो राक्षसान् विनाशयेति प्रथमया भगवन्तं प्रार्थयते—[तै-सं. १-२-१४]

**कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।**

**तृष्वीमनु प्रसितिं द्रूणानोस्ताऽसि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥**

हे **अग्ने** ! अग्रनयनशील ! पुरुषोत्तम ! **नः** अस्माकं **पाजः** बलं **कृणुष्व** कुरु । व्यत्ययेन श्नुः । **पाजो** बलम् । पीत्वा जनयतीति **पाजः** । परबलादीन् जलमिव पीत्वा स्वीयान् जनयति, उज्जीवयतीति

वा **पाजशब्दो** बले वर्तते । तत्र निदर्शनम् **प्रसितिं न पृथ्वीम्** पृथुतरां प्रसितिम् । सूत्ररज्जुनिर्मितां प्रसितिं जालमिव । षिञ् बन्धने । प्रसयनस्य बन्धनस्य हेतुत्वात् प्रसितिरिति जालमुच्यते । **न** उपमार्थे । यथा प्रसितिर्मत्स्यादीनावृणोति, तथा त्वं बलेनास्मद्विरोधिनः सर्वान् आवृण्विति । किञ्च **याहि** आयाहि । क इव । राजेव । यथा सर्वप्रजारञ्जनार्थं राजा **अमवान्** अमात्यवान् इभेन परमवाहनेन याति, तथा पुरुषोत्तम ! त्वमपि वेदमूर्तिना औपवाह्येन गरुडेन त्वदसाधारणपरिजनपरिच्छदान्वितोऽस्मत्प्रतिबन्धनिरासार्थं आगच्छ । अपि च तृष्वीं प्रसितिं=विस्तारवत् जालम् **अनु** क्रमेण **द्रूणानः** द्रावयमाणः विक्षिपन् **अस्तासि** अस्मच्छत्रून् क्षेप्तासि । न केवलं क्षेप्तासि । **रक्षसः** राक्षसान् पापादीन् **तपिष्ठैः** तापकतरैः तव दिव्यैरायुधैः **विध्य** ताडय विनाशयेत्यर्थः ।[1]

[2]कृणुष्वपाज इति होमार्थं पञ्च मन्त्रा उपादीयन्ते । ते चाग्नेयाः ।

ओजः पाजो जप इत्यादि बलनामसु पठ्यते । 'पातेर्जुक् च' इत्यसुनन्तं प्रयुक्तम् । बलस्य रक्षणहेतुत्वात् । **प्रसितिः** बन्धनरज्जुः वागुरा । **पृथ्वी** दीर्घा । वागुरामिव **पाजो** बलम् रक्षांसि परितः कुरु । यथा कश्चित् राजा **अमवान्** अमात्यैः सहितः, अरोगो वा जपहोमादिभिः शत्रूणां रोगान् उत्पादयन् इभेन याति, तद्वत् रक्षांसि प्रति याहि । 'शीघ्रत्रिष्वोत्रियंतूर्णम्' इति क्षिप्रनामसु पठ्यते । **अनुद्रूणानः** अनुधावन् । छान्दसो दीर्घः । त्रिष्वीं तूर्णां **प्रसितिं** मत्स्य-

---

1. 2. **एवं व्याख्यानरीतिद्वयं मुद्रितमस्ति । द्वितीयव्याख्यान एव निगमन इवोपक्रमेऽपि होमार्थत्वकीर्तनं कर्तव्यं कृतमस्ति ।**

वन्धिनीम् । सा हि क्षिप्ता शीघ्रा पतति । अस्तासि क्षेप्तासि । भवानेवासु-भर्ती प्रसितिं कृत्वा तपिष्ठैः तपनशीलैः जपैः रक्षसः रक्षांसि विध्य ॥

तवं भ्रमास आशुया पंतन्त्यनुं स्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसंदितो वि सृज विष्वंगुल्काः ॥ २ ॥

**भ्रमासः** भ्रमणशीलाः उल्काः **आशुया** शीघ्राः । जसो ऽसुगागमः । आजादेशः । **पतन्ति** पतन्तु । **शोशुचानः** अत्यन्तदीप्यमानस्त्वं **धृषता** धार्ष्ट्येन । इगुपधलक्षणः कः । तसि सुपो लुक् । **अनुस्पृश** दहेत्यर्थः । **अग्ने !** **तपूंषि** तपनशीलाः उल्काः **पतङ्गान्** शलभानिव विष्वक् विसृज जुह्वा असंदितः । ये केचित् जुह्वामाज्यं गृह्णन्ति, तेष्वग्निर्जुह्वा बद्धो भवति ; नान्यत्र गच्छति । तथा जुह्वा असंदितः यजमानेषु सत्स्वपि तत्र न गच्छति । एवमस्मत्निकटे यन्त्रितः सन् रक्षांसि प्रति उल्का विसृजेत्यर्थः ।

प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥३॥

**तूर्णितमः** अतिशीघ्रः **प्रति** रक्षः **स्पशः** हिंसकान् विसृज । **अस्याः** **विशः** मनुष्याः यन्मह्यम् (मनुष्याय मह्यं ?) **अदब्धः** अदाहकः **पायुः** रक्षकः भव । **नः** अस्माकम् । दूरे अन्तिके वा यः **अघशंसः** पापमिच्छति, तं प्रति स्पशो विसृज । हे अग्ने ! **ते** तव **किः** कश्चिदपि **व्यथिः** व्यथादाता **मा दधर्षीत्** न धृष्णुयात् । तूर्णिर्मन्युरिति क्रोधनाम ।

उदंग्ने तिष्ठ प्रत्यातंनुष्व न्यंमित्राँ ओषतात्तिग्महेते ।
यो नो अरातिँ समिधान चक्रे नीचा तं धंक्ष्यतसं न शुष्कम् ॥४॥

अग्ने ! **तिग्महेते** तीक्ष्णज्वाल ! उत्तिष्ठ । अमित्रान् प्रति हेतीः **आतनुष्व** प्रसारय । अमित्रान् **न्योषतात्** दह । **नः** अस्माकं यः **अरातिं** शत्रुत्वं चक्रे, हे **समिधान** वर्धमानज्वाल ! शुष्कम् **अतसं न** इन्धनसार्थमिव **नीचा** न्यग्भूतं तं **धक्षि** दह ॥

ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातु जूनां जामिमजामिं प्रमृणीहि शत्रून् ॥ ५

**अध्यस्मत्** अस्मत्तः **ऊर्ध्वः** अस्माकमधिपतिः भव । भूत्वा च शत्रून् प्रति विध्य । दैव्यानि तव रूपाणि माहात्म्यानि च दैव्यानि **स्थिरा** स्थिराणि **तनुहि** सकृत् प्रकाश्य (?) तिरोभावय । **यातु** यातूनि रक्षांसि । हिंसा वा । तत्र **जूनां** वेगवतीम्, 'क्विब्वचि' इति क्विप् । तेषां मध्ये **जामिं** मन्दम् **अजामिं** त्वरमाणं वा **शत्रून् प्रमृणीहि** मारय । यः पूर्वं प्रहृतः तमपि प्रहर । हतोऽयमिति मोपेक्षिष्ठाः यश्च न प्रहृतः कुतश्चित् कारणात्, तमपि प्रहर । वराकोऽयं न हन्तव्य इति चेतसि मा कृथाः । एवं हतमपि घातयितुकामैर्होमः कार्यः ॥

इति तैत्तिरीयोपनिषद्व्याख्यानान्तर्गतं भागत्रय-
**श्रीकूरनारायणीयं संपूर्णम्** ॥ शुभमस्तु ॥

—o—o—

## ब्रह्महृदयम्

भूराद्याः सप्त व्याहृतयः, तत् सवितुरित्यादिर्गायत्री, ओमाप इत्यादि गायत्रीशिरः। सर्वमिदं (पु. 731) २७. अनुवाके पठितम्। अयं प्राणायाम-मन्त्रः । इदं ब्रह्महृदयमिति नाम्ना व्यवहृतं बोधायनधर्मसूत्रे २. ४. ८.

श्री·

## ॥ तैत्तिरीयोपनिषदर्थसंग्रहकारिकाः ॥

वल्लीत्रयात्मके प्रश्ने प्रथमे ब्रह्मवर्चसम् ।
आनन्दमयविद्यैतदाश्रितञ्चोच्यते क्रमात् ॥ १ ॥

प्रश्ने द्वितीये कथितो योगिनामाह्निकक्रमः ।
अनुस्यूतप्रधानार्थं पशोऽत्र बहुबोधिनि ॥ २ ॥

शिक्षावल्ल्यां शान्तिपाठस्तनश्शिक्षार्थसंग्रहः ।
ततो वक्तुं संहितायामधिलोकाद्युपासनाः ॥ ३ ॥

ऐश्वर्यशिष्यसंपत्तिसहितं ब्रह्मवर्चसम् ।
प्रेप्सतः पठिता मन्त्राः प्रणवाद्यैः समाश्रये ॥ ४ ॥

व्याहृतीनां चतुष्केऽथ चतुर्धा दृष्टिरीरिता ।
यतस्स्याद्ब्रह्मसंवित्तिर्मोक्षस्साराज्यमोदकृत् ॥ ५ ॥

पाङ्क्तोपदेशस्तत्रैव प्रणवस्य पुरस्क्रिया ।
स्वाध्यायादेश्च साहित्यं सर्वधर्मैस्तपो हि तत् ॥ ६ ॥

वेदानुवचनं पश्चादन्तेवास्यनुशासनम् ।
शान्तिपाठः पुनरिति शिक्षावल्ल्यर्थसंग्रहः ॥ ७ ॥

आनन्दवल्ल्यामानन्दमयविद्योपदिश्यते ।
पञ्च भूतानि सृष्ट्वैव शरीरे पाञ्चभौतिके ॥ ८ ॥

देहप्राणमनोजीवभिन्नो ब्रह्म तदन्तरः ।
आनन्दमय आस्ते, तमुपासीनो जगत्सृजः ॥ ९ ॥

सर्वानन्दप्रदस्यैयमज्ञानां भयकारिणः ।
आविरिञ्चमलभ्यो यस्त्ववाङ्मनसगोचरः ॥ १० ॥

तस्यानन्दस्तमत्यन्तमश्नुते परमे पदे ।
उपसंक्रम्य तं पुण्यपापभीतिहतेरिति ॥ ११ ॥
जगज्जन्मस्थितिध्वंसहेतुत्वं लक्षणं विदन् ।
अन्नप्राणमनोजीवभिन्नं ब्रह्मेत्यवैद् भृगुः ॥ १२ ॥
विद्याङ्गान्नव्रताद्युक्त्वा वल्ल्यामत्र तथाविदः ।
अन्नान्नादानन्दगानं कामान्नित्यादि चेरितम् ॥ १३ ॥
प्रश्नान्तरे त्रिलोकीस्थः स्तुतो नित्यैः परे पदे ।
सर्वकर्मसमाराध्यः कालहेतुरगोचरः ॥ १४ ॥
'हिरण्यगर्भ' इत्येवं 'अद्भ्यस्संभूत' इत्यपि ।
श्रुतो जातश्च जनयन्नवतीर्णोऽवतारयन् ॥ १५ ॥
भजनीयोऽभीष्टदश्च वर्ण्यते प्रथमं परः ।
अथोच्चनीचदेवानां प्रार्थना फलकामिभिः ॥ १६ ॥
मृद्दूर्वाग्रहणं स्नानमघमर्षणसूक्ततः ।
भूराद्युपासनामन्त्रो ब्रह्मणो भोग्यता प्रभोः ॥ १७ ॥
कर्मादिमुक्त्यहेतुत्वं दह्रस्यैवमुपास्यता ।
नारायणः सर्वविद्यावेद्य इत्यपि शिष्यते ॥ १८ ॥
अथादित्यस्थितोपास्तिर्मन्त्रा माध्याह्निकादिगाः ।
मेधाभिवृद्ध्यै देवानामर्थना शुद्धिकामना ॥ १९ ॥
न्यासस्यातिशयस्तेन यज्ञाद्यङ्गानपेक्षया ।
परस्य ब्रह्मणः प्राप्तिश्चाऽऽदिश्यन्ते क्रमादिह ॥ २० ॥
सांहिती प्रथमा वल्ली वारुणी वल्लिकाद्वयी ।
याज्ञिक्युपनिषत् पश्चात् तैत्तिरीयमिति स्थितम् ॥ २१ ॥

॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

श्रीः

# सभाष्यतैत्तिरीयोपनिषद्विषयसूची ।

—:*o*:—

## तैत्तिरीयोपनिषद्गतप्रमाणाकरः

—०—०—

## तैत्तिरीयमन्त्रसूची

—०—०—

## अन्त्याः शारीरकविचाराः



श्रीभाष्यतट्टीकासूक्तयः अन्यानि बहूनि सूत्राणि तत्तत्स्थलोपात्तानि विषयसूच्यां द्रष्टव्यानि ।

---

## तदुपनिषद्गताः उपनिषदन्तरमन्त्राः (क्वचिदीषद् भेदः)

| | | |
|---|---|---|
| 4 | ऋतं वदिष्यामि...अवतु वक्तारम् | ऐ. आत्म. 6. |
| 59 | भीषास्मादित्येतदर्थकमन्त्रान्तरम् | क. 1. 6. 3. |
| 90 | ब्रह्मणः परिमरः | ऐ. ब्रा. अन्तिमखण्डे |
| 104 | नैनमूर्ध्वं | श्वे. 4. |
| 105 | न संदृशे | क. 1. 6. 9 ; श्वे. 4. |
| 105 | हृदा मनीषा | क 1. 6-9; श्वे 3. 4. |
| 110 | विश्वतश्चक्षुः | श्वे. 3. |
| 138 | अणोरणीयान् | क. 2-20 ; श्वे. 3. |
| 138 | सप्त प्राणाः | मु. 2. 1-8. |
| 139 | अतः समुद्राः | मु. 2-1-9. |
| 141 | अजामेकां | श्वे. 4. |
| 141 | हंसः शुचिषत् | क. 5-2. |
| 148 | यो देवानां | श्वे. 3. |
| 148 | यस्मात् परं | मु. 1-1-7 ; श्वे. 3 |
| 149 | वेदान्तविज्ञान | मु. 3-2. 6 |
| 158 | पञ्चकोश | मु. 2. 2. |
| 159 | हृदयं | मु. 2-2. |

## अत्रैव द्विः पठिताः मन्त्राः (कचिदीषद् भेदः)

| | | | |
|---|---|---|---|
| शं न इत्यादि | पृ 2 28 | अग्ना नो | 143 184 |
| यतो वाचः | 45 67 | विश्वानि | 143 |
| तत्पुरुषाय | 119 183 | मधु वाता | 143 185 |
| ब्रह्मा देवानां | 140 185 | मधु नक्त | 144 185 |
| हंस शुचिषत् | 141 185 | मधुमान्नो | 144, 185 |

## ऋषीणामिह नामानि

| | | | |
|---|---|---|---|
| (1) माहाचमस्यः | पृ 13 | (6) त्रिशङ्कुः | 24 |
| (2) प्राचीनयोग्यः | 17 | (7) भृगुर्वारुणिः | 76 |
| (3) राथीतरः | 22 | (8) प्राजापत्य आरुणिः | 192 |
| (4) पौरुशिष्टिः | 22 | (9) सुपर्णेयः | 192 |
| (5) नाको मौद्गल्यः | 22 | | |

## अपूर्वपदानि

| | | | |
|---|---|---|---|
| विचर्षण | पृ 10 | स्पृणुते | 68 |
| प्रवनाः | 12 | समाजाः | 89 |
| अहरिं | 12 | ब्रह्मणः परिमरः | 90 |
| पाङ्क्तम् | 18 | सनि | 116 |
| रेरिवा | 23 | आयजस्व | 132 |
| ऊर्ध्वपवित्रः | 23 | पदवीः | 140 |
| युक्ताः | 27 | रेभन् | 140 |
| आयुक्ताः | 27 | दुरोण | 141 |
| अलूक्षाः | 27 | कुविन् | 143 |
| अभ्याग्याताः | 27 | निघ्न्या | 158 |
| भीषा | 59 | सारिता | 165 |
| आजानजदेवाः | 62 | विदथे | 179 |
| चिरलोकलोकाः | 62 | चित्तं | 195 |
| कर्मदेवाः | 62 | सारं | 196 |

—o—o—

श्री

श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः

# ऐतरेयभूमिका

अष्टोत्तरशतोपनिषत्कोशे मुक्तिकोपनिषदि उपनिषदो नाम्ना क्रमेण निर्दिश्यन्ते । तत्र—

ईशाकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरि ।
ऐतरेयञ्च छान्दोग्य बृहदारण्यकं तथा ॥

इत्येकया कारिकया प्रसिद्धा दशोपनिषद परिगण्यन्ते । तत्राऽऽदौ ईशावास्यमित्यत्र ईशपद न प्रविष्टम् , किं तु ईशा इति तृतीयान्त मित्यस्य संप्रतिपन्नत्वात् अत्र कारिकायाम् ईशकेनेति पाठापेक्षया ईशाकेनेति पाठ सन्तो रोचयन्ते ।

अत्रोपनिषदा नामकरणं नानाहेतुकम् , यथा—ईशेति, केनेति च, आद्ययोरुपनिषदोरारम्भे पदमस्तीति ईशोपनिषत् केनोपनिषदिति उपक्रमस्थपदघटनया तयोर्व्यपदेश । एवमीशावास्योपनिषदित्यपि।

कठोपनिषदिति नाम तु कठाख्याध्यापकप्रोक्तकाठकशाखान्तर्गतोपनिषत्त्वात् ।

प्रश्नोपनिषदिति तु नाम नोपक्रमपदमनुसृत्य , नापि शाखाप्रवचनकर्तृनामग्रहणेन , किंतु तत्र षड्भि खण्डै षण्णा प्रश्नाना पृथक् पृथक् समाधानात् । प्रश्नोपनिषदियमथर्ववेदपिप्पलादशाखान्तर्गता ।

मुण्डक—माण्डूक्य—तैत्तिरीयोपनिषन्नामनिर्देशे तु तत्तन्नामकशाखान्तर्गतोपनिषत्त्वमेव निबन्धनम् । मुण्डकशाखान्ते मुण्डकोपनिषत् । मण्डूकशाखान्ते च माण्डूक्यम् ।

तत्र श्रीभाष्यकारव्यासार्यादिसंमतो मुण्डकपाठक्रमः शाङ्करादितो विलक्षणः; अदृश्यत्वाधिकरणे श्रीभाष्यादौ 'धर्मशास्त्राणीत्यन्तेन' इत्यादि सूक्तिदर्शनात् । स च पाठक्रमः प्रकृतश्रीरङ्गरामानुजस्वामिकृते उपनिषद्भाष्ये अदृश्यमानोऽपि एतत्कृतायां **भावप्रकाशिकायां** लक्ष्यतमा एवेत्यादिकं टिप्पणे प्रदर्श्य तदनुगुणो मुण्डकमूलपाठोऽस्माभिरमुद्रि इति विद्वांसो विदन्ति ।

एवं माण्डूक्योपनिषद्यपि कश्चिदस्ति विवादः । किं शाङ्करादौ व्याख्याताः श्लोकाः गौडपादीयकारिकाः उत माण्डूक्यमन्त्रा इति । तत्र वैतथ्यादिप्रकरणगतानां गौडपादीयत्वं निर्विवादम् । आगम प्रकरणीयश्लोकतत्त्वज्ञप्तये च इदमस्ति वक्तव्यम् । शाङ्करभाष्यं तावत् न शास्त्रभूतमाण्डूक्योपनिषदः ; किंतु गौडपादीयप्रकरणग्रन्थस्य । काममागमप्रकरणगताः श्लोकाः गौडपादकारिका मा भूवन् · भवन्तु श्रौतमन्त्रा एव; अथापि तद्दृष्टाः । गौडपादप्राक्काले च माण्डूक्योपनिषदानुपूर्वी श्लोकरहितैव । यदाह उपनिषद्ब्रह्मयोगी—"तामेतामुपनिषदं व्याचिख्यासोः गौडपादाचार्यस्य माण्डूक्यगूढाशयानुवादिन्यः श्रुतयो मन्त्राश्च प्रादुर्बभूवुः सहस्रशः । तत्र कांश्चिन्मन्त्रान्....माण्डूक्योपनिषदः प्रत्यंशं विभागशो योजयामास । ....शिष्टश्रुतिमन्त्रजातमर्थतः संगृह्य कारिकारूपेण प्रकरणत्रयं रचयामास" इति । सैषा तत्संप्रदाये केषाञ्चित्

गौडपादाचार्ये ऋषित्वधारणा। तदन्वारोहेण तदन्यमतस्थैरपि कैश्चित् तत्सरण्यनुसरणम्।

**तैत्तिरीयम्।** व्यासशिष्ये वैशम्पायने शिष्यान् यजुर्वेदमध्यापयति स्वस्य केनापि निमित्तेनाऽऽपतितं ब्रह्महत्यादोषमपनेतुं स्वस्थाने तद्व्रतचरणाय शिष्यान् नियमितवति तदा, 'अन्येषामल्पतेजसां शिष्याणां किमत्र नियोजनेन। अहमेक एतद्व्रतं यथावच्चरिष्यामि' इति भक्तिश्रद्धात्वरणापूर्वं प्रवृत्तं परमर्षिं योगिनं याज्ञवल्क्यं स्वशिष्यं ब्राह्मणावमानित्वेन आक्षिप्य, 'अधीतं परित्यज्य शिष्यतां विसृज्य गन्तव्यम्' इति आदिष्टवति, यद् याज्ञवल्क्यः योगबलेन अधीतं यजुर्भागं स्वशरीरात् मांसरूपेण बहिश्छर्दयित्वा अपजगाम, तत् अन्ये वैशम्पायनशिष्याः वेदेऽभिमानात् तित्तिरपक्षिणो भूत्वा मांसं छर्दितं भक्षयामासुः। एवं तित्तिरकृतप्रचारं तैत्तिरीयमिति (वि. पु. ६-५)। नारायणोपनिषदपि तैत्तिरीयत्वात् अनन्तरप्रश्नत्वाच्च तैत्तिरीयोपनिषच्छब्देनैव विशिष्टाद्वैतिभिः गण्यते ऐकग्रन्थ्येन।

**छान्दोग्यम्।** छन्दोगाः सामवेदगायिनः। तदीयं छान्दोग्यम्। ताण्डिशाखोपनिषत्। **बृहदारण्यकम्।** अरण्ये भवमारण्यकम्। अरण्ये अधीयमानमिति यावत्। त्रिवर्गपरायणैः पूर्वभागे अधीयमाने, यत् मुमुक्षुभिर्वानप्रस्थादिभिरारण्यकैरतिशयेनाधीयते, तस्मादारण्यकमिति सर्वस्यामपि शाखायां ब्राह्मणगतोऽन्त्यभागः कीर्त्यते, यस्यान्तिमो भागः सर्वत्रोपनिषदिति व्यपदिश्यते। तत्रेयं शुक्लयजुर्वेदोपनिषत् अन्यापेक्षया बृहत्त्वात् बृहदारण्यकमिति भण्यते।

यथैवमुपनिषदन्तराणाम्, तथा ऐतरेयोपनिषदः एवं नामनिर्देशो

निदानं तावत् —कस्यचिन्महर्षेः **इतरा** नाम काचित् पत्नी अवर्तिष्ट, यामुपेक्ष्य अन्यामेव भार्यां स बहुमेने । एवं भार्यान्तरपुत्रैकनिहितप्रेणि पत्यौ स्वपुत्रमुपेक्षितवति इतरा सा स्वशक्त्या महीदेवीं साक्षात्कृत्य तदनुग्रहेण पुत्रं विलक्षणवेदभागवेदिनमकरोत् । अत एवायम् इतरापुत्र ऐतरेयो महिदास इति व्यपादिश्यत । यथा छान्दोग्येऽपि (४-१६)। तत्प्रोक्तमृग्वेदब्राह्मणमैतरेयम्। तदन्तर्गतेय**मैतरेयोपनिषत्।**

संहिता, ब्राह्मणमिति द्वेधा विभज्यते हि सर्वो वेदः । तत्र ऋक्संहिता दशमण्डलात्मिका इदमैतरेयब्राह्मणञ्चाद्यत्वे उपलभ्यमानः ऋग्वेदः । अत्र ऐतरेयारण्यकमिति आरण्यकपञ्चकमस्ति । तत्र द्वितीयं तृतीयञ्चारण्यकमुपनिषत्संज्ञम् । तत्र द्वितीयान्तेऽयमात्मषट्काख्यो भागः, यस्य शाङ्करभाष्यमिव आस्माकभाष्यमपि वरीवर्तीत्यादि व्यक्तं टिप्पणे ।

अस्य भागस्येदं भाष्यमेतावता कालेन न मुद्रयित्वा प्रकाश्यं प्रापीति न केवलमेतावत्, किंतु अत्र मद्रमण्डले अनुपलब्धमेव च सर्वत्राऽऽसीत् । यतो भाष्यकारैरस्य परं भाष्यं न प्रणिन्ये इत्यपि केचित् वदितुं लेखितुञ्च व्यवस्यन्ति स्म । अत एवोपनिषदां मतत्रयभाष्यार्थं द्रमिडभाषयाऽनूद्य मुद्रयन्तः, 'नास्त्यस्य विशिष्टाद्वैतभाष्यं श्रीरङ्गरामानुजभाष्यम्' इति लेखने धाष्ट्यं जगृहुः । को हि नाम विशाले देशे विशिष्टान् विदुषो विचार्य सदसद्भावनिश्चये प्रवर्तते । आपाततोऽनुपलम्भमात्रेण अभावव्यवहार इत्ययं सहज एव सर्वेषां दोषः । तत्र लेखनकौशलविकलाश्चेत्, नास्तीत्येव सहसा लिखन्ति ; निपुणास्तु नोपलब्धमितीति विशेषः । अमुद्रितस्यापि अस्य भाष्यस्य

तालकोशः पत्रात्मकः कोशश्च महीशूरनगरप्रान्ते तत्रतत्र समुल्लसति, अधीयते च तत्रस्थैरिति बहोः कालादस्माभिः केवलमाकर्णितम् ; न साक्षादध्यक्षितम् । एवंस्थिते **प्रकृतविशिष्टाद्वैतभाष्यप्रचारसमिति-कार्यदर्शिनः श्री. गूडलूर् रङ्गस्वामितातार्यमहोदयाः** महता प्रयत्नेन श्रीनारायणपुरात् मातृकां भाष्यस्यास्य संपाद्य मामेतन्मुद्रणे समुदयोजयन्निति महदिदं भाग्यम् ।

अत्र केचिदापाततः एवं विशेरते–एतावदमुद्रितमप्रकाशितश्चेदं भाष्यं श्रीरङ्गरामानुजस्वाम्यनुगृहीतमिति कुतः ? अन्य एवेमे रङ्गरामानुजा इति वा न कुतः इति । अत्रेदं ते प्रष्टव्याः— ये अन्यासामुपनिषदां भाष्यप्रणेतारः, त एवेमे इति स्वीकारे किं नो हीयत इति । न खल्वेभिः स्वामिभिरैतरेयं न व्याख्यातमिति स्वयमेव कुत्रापि निरदेशि । नो खलु पारम्परिकोऽपि संप्रदायविदामुपदेश एवं कश्चित् कर्णकुहरं कुहाप्यधिगतोऽस्ति । न च लोके कस्यापि प्राचो ग्रन्थकृतो ग्रन्थाः सर्वेऽपि सुरक्षिताः संप्रापितप्रचाराश्चेति कश्चित् प्रतिज्ञातुं पारति । षष्ठिप्रबन्धनिर्माणालङ्कर्मीणतया प्रसिद्धानामेषां ग्रन्थास्ते के इति साम-स्त्येन गणयितुं न खलु कश्चिदियताऽपि कालेन अलम्भविष्णुः। प्रसिद्धि-श्चैषां सर्वत्र देशे नूनमनपलप्या **दशोपनिषद्भाष्यकारा** इति । सन्ति कतिपये एकद्वादिकतिपयोपनिषन्मात्रव्याख्यातार इति तान् व्यावर्तयि तुमेव दशोपनिषद्भाष्यकारा इति व्यपदेशः। किञ्चेमे दशाधिकानां श्वेता-श्वतर कौषीतकि-अथर्वशिखा-अग्निरहस्य-मान्त्रिकोपनिषदामपि भाष्य-प्रणेतारः कथङ्कारं दशान्तर्गतमैतरेयं कतिपयनिमेषनिर्मेयव्याख्यानमुपे क्षिवन्तः स्युः । न वा ईशावास्योपनिषदः श्रीदेशिकचरणानुगृहीतं

सुबालोपनिषदः श्रीव्यासार्यानुगृहीतञ्च भाष्यं यथा, तथा ऐतरेयस्यापि प्राचीनं प्रशस्तं परमादरपदमस्ति भाष्यम्, येन तद्बहुमानादेभिर्भाष्य-प्रणयनमुपेक्षितं स्यादित्यूहस्य स्यादवसरः। न च मूलमलभ्यम्; शांकरभाष्य एव मूलस्याप्युपलम्भात् नूनमेभिर्दशोपनिषद्भाष्यकारैरी-शोपनिषदोऽपि स्वयमेकं भाष्यं प्रणीतं स्यात्; प्रणीतानामनुपलम्भोऽपि हि संभाव्यत इति विमर्शे कार्ये उपलभ्यमानमिदमदसीयं भाष्यमन्यदीयं स्यादिति किमिति वयं शङ्कितुमीश्महे। सत्यं बहवः श्रीरङ्गरामानुजाः पृथिव्यामवर्तिषत, वर्तन्ते च। आहुश्च प्रतितन्त्रपरिष्क्रियेति कश्चिद् ग्रन्थः श्रीरङ्गरामानुजीयो नैतदीयः, किन्तु महीशूरप्रान्तस्थिताचार्या-न्तरविरचित इति—अथापीदं भाष्यमपि तथा अन्यदीयमित्यत्र न किञ्चित् प्रमाणम्। एतदीयमेवेत्यत्र तु साधकं संलक्ष्यते।

तथाहि—या खलु गतिरन्यासामुपनिषदां भाष्यस्य, न ततो वैलक्षण्यमिह विशेषतो लक्ष्यते। अबाधितस्थलेषु अनसूयया शाङ्करं भाष्यमादृत्य तथा प्रत्यभिज्ञाकरमेव पङ्क्तिविन्यसनं क्रियत इतीदमन्योप-निषद्भाष्येषु अत्र च सममेव लक्ष्यते। सिद्धान्तविरोधे वा स्वारस्याति-शयदृष्ट्या वा स्वयं तत्रतत्रार्थान्तरमादृत्य व्याख्यानम्, पदवाक्य-योजनासु प्रकारान्तरपरिग्रहश्चेत्येतदपि तथा। यत् पुनस्तत्रतत्रेवात्र काऽपि अधिकरणरचना न वर्तितेति, तत् सत्यपि गतिसामान्यादित्यादौ एत-द्वाक्योदाहरणे एतदीयविषयवाक्यमेवाधिकृत्य विशिष्य कस्यचिदधि-करणस्य प्राचीनविरचनविरहात्। अस्ति केनोपनिषदो माण्डूक्योप-निषदश्च भाष्यम्, यत्राप्येवमधिकरणरचना नास्तीति। किं बहुना।

यदेभिरुपनिषद्भाष्यादेरात्मीयस्य प्रत्यभिज्ञापनाय सर्वत्रैकरूपमङ्गल श्लोकाद्युपनिबन्धनमन्यत्र कृतमस्ति, तदत्रापि **अतसीगुच्छसच्छायम्, व्यासं लक्ष्मणयोगीन्द्र**मिति तुल्यरूपं चकासत् अन्यदीयत्वभ्रमोन्मेष-प्रसक्तिमपि परिहरतीत्यलं गमकान्तरगवेषणेन ।

कदेदं भाष्यमाचार्यैर्निरमायीति चेत्— अस्तु कदापि । किं तेन? दशानामुपनिषदां क्रमेणैते भाष्यं निबबन्धुरिति न शक्यं निर्बन्धुम् । तथाहि— तत्तदुपनिषद्व्याख्यानोपक्रमे, 'अतसीगुच्छ-सच्छायम्', 'व्यासं लक्ष्मणयोगीन्द्रम्' इति श्लोकद्वयमात्रमुपनि-बद्धवन्त इमे छान्दोग्यव्याख्यानोपक्रम एव पञ्चसंस्कारवेदान्तविज्ञान-पारमहंस्यपरिग्रहानुग्राहकान् आचार्यांस्त्रीन् त्रिभिः श्लोकैर्विशिष्य प्रशंसन्तीत्येतावता छान्दोग्यव्याख्यानमेवोपनिषद्व्याख्यानेषु प्रथम-मिति न संभावयितुं साम्प्रतम्; छान्दोग्यव्याख्याने बृहदारण्यक-प्रकाशिकायाः पूर्वकृताया उल्लेखनात् (छा. १-२.) । तर्हि किमिति तत्र विशिष्य सर्वस्वाचार्यसंकीर्तनमिति चेत्— स्वयमाचार्याणामेषां छन्दोगत्वात् छान्दोग्ये आदरातिशयस्यायं कश्चिदाविष्कारप्रकार इति वा, 'छान्दोग्यभाष्यनिर्माणारम्भकाल एव पारमहंस्यं प्राप्तं स्यात् । अतस्तत्र कृतज्ञतानुसंधानेऽवश्यापतिते अर्थात् पश्चात्तनानां विस्पष्ट-विवेकोपयोगितया स्वकीयसर्वाचार्यसंकीर्तनम्' इति वा किमपि छान्दोग्य-भाष्योपक्रम एव तदुक्तौ कारणं विमृश्यम् । तथाच छान्दोग्यप्रकाशि-कातः प्राक् बृहदारण्यकप्रकाशिका । एवं मुण्डकप्रकाशिकायामपि कठवल्लीप्रकाशिकाया इव (मु. २-२-११), बृहदारण्यकप्रकाशिकाया

अपि (१-१-३.) निर्देशात् मुण्डकव्याख्यानात् प्रागेव बृहदारण्यक व्याख्यानम् । छान्दोग्यभाष्ये (६-८-१) मुण्डकोपनिषत्प्रकाशिकानुसंधानात् बृहदारण्यकात् पश्चात् मुण्डकम्, ततोऽर्वाक् छान्दोग्यं व्याख्यातमिति विमृश्यते । बृहदारण्यकप्रकाशिकायाश्च (४-१-२०) कौषीतकीप्रकाशिकाऽस्ति निर्दिष्टा । छान्दोग्ये पुरुषविद्याप्रकरणे श्रीभाष्यसूक्तिव्याख्यानरीतिर्या प्रादर्शि, ततोऽधिका सरणिः तैत्तिरीये तदवसरे प्राकाशीति छान्दोग्यात् पश्चात् तैत्तिरीयं व्याख्यातमित्यङ्गीकार्यम् । न केवलमेतावत्, निर्दिष्टा च तत्र (२-१०) छान्दोग्यप्रकाशिका । एवमत्र तैत्तिरीयव्याख्याने कठवल्लीप्रकाशिका (२.१.११) श्वेताश्वतरप्रकाशिका (१-१-४३) च समुल्लिखिताऽस्तीति दशोपनिषदनन्तर्गता श्वेताश्वतरोपनिषदपि कौषीतकीव प्रागेव व्याख्यातेत्यवसीयते । कठवल्लीभाष्यात् (४-२) श्वेताश्वतरभाष्ये (द्वितीयान्त्ये) परमात्मनि प्रत्यक्त्वोपपादने वैशद्यातिशयदर्शनान्न कठोपनिषद्व्याख्यानात् प्राक् श्वेताश्वतरव्याख्यानं व्यरचीति भाव्यते । प्रश्नोपनिषद्व्याख्यारम्भे 'क्रमात् प्रश्नोपनिषदम्' इति निर्देशात् केनकठप्रश्नाः क्रमेण व्याख्याता इत्यूह्यते । तदत्र न दशोपनिषत्संख्यानक्रम आद्रियत । यस्या उपनिषदो व्याख्यानं यदा तेभ्योऽरोचत, तदा तत् निरवर्तीत्येव वक्तव्यं भवति । तत् ऐतरेयमप्येवं कदाचित् कृतभाष्यमित्येतावदेवाद्यत्वे सुवचम् ।

अत्र चैतरये द्वितीयतृतीययोर्द्वयोरप्यारण्यकयोरुपनिषत्त्वस्य सर्वसंप्रतिपन्नत्वात् शाङ्करव्याख्यानस्य तत्कृत्स्नविषयेऽभावेऽपि विद्या-

रण्यीयस्य, ततः प्राक् आनन्दतीर्थीयस्य च सद्भावात् विशिष्टाद्वैतव्याख्यानमेकं कृत्स्नविषये आवश्यकम् । तत् सर्वोपनिषद्भाष्यमुद्रणानन्तरं स्वयं वा कृत्वा मुद्रणीयमित्यभिसंधायास्माभिः वेदान्तपुष्पाञ्जलासदीये द्वितीयतृतीयारण्यकविद्याविषयसंग्रहणेन श्रीवेङ्कटाद्रिनाथस्तवो न्यबन्धि । अथाप्यद्य श्रीरङ्गरामानुजमुनिस्वामिभाष्यस्य शाङ्करभाष्यवत् द्वितीयारण्यकान्तर्गतात्मषट्कमात्रमधिकृत्य निबद्धस्य समुपलब्धतया तावन्मात्रमुद्रणमावश्यकमधुना निरवर्ति । एभिरेतावन्मात्रस्य भाष्यविधानञ्च, 'भागान्तरस्य सगुणब्रह्मपरतां स्वयमेवाऽऽतिष्ठमानैर्हि शङ्कराचार्यैरात्मषट्कमात्रं निर्गुणपरमिति कृत्वा तावतो भाष्यं प्राणीयत । वस्तुतो भागान्तरवत् अयमपि सगुणैकविषयक एव' इत्येतद्वास्तवार्थप्रतिपादनमात्रनिर्भरतयेतीदं टिप्पणेऽप्यदर्शि ।

अस्य चैतरेयभाष्यस्य एकमेवादर्शमाधारं कृत्वा मुद्रणमकारि । सन्तोऽपि देशान्तरे आदर्शा अन्ये न सुकरसंपादना आसन्निति, यथा, भूतैतन्मातृकां स्वयं कलयद्भिर्महात्मभिः अन्यैश्च क्षन्तव्यम्, यदि शोधितप्रकारस्य वास्तवपाठस्थितेश्च यत्र क्वापि किञ्चिद् वैषम्यं लक्ष्यते । शिष्टं प्रथममुद्रणोपोद्घाते ।

—उत्तमूर् ति. वीरराघवाचार्यः

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

श्रीनिवासपरब्रह्मणे नमः ।

# उपनिषद्भाष्यपरिष्कारः

अस्तु श्रीवेंकटाद्रौ सततमिह लसन् ऐतरेये यथैवं
सृष्ट्वा लोकांस्तदीशानपि मनुजमुखं देहि तत्र प्रविष्टः ।
दृश्यश्चेन्द्रो विरक्तैस्तनुकरणमतिज्ञातृतद्भोग्यनेता
प्राज्ञो ब्रह्माखिलात्मा शुभगुणनिलयः श्रीनिधिः श्रेयसे नः ॥

आत्मषट्कमात्रमत्र व्याख्यायते। ऐतरेयारण्यकं पञ्चधा विभक्तम्। तत्र द्वितीयं तृतीयञ्चारण्यकमुपनिषत्संज्ञम् । अत एव एतदात्मषट्करूपभागानन्तर्गतं, 'अ इति ब्रह्म' इत्यादिकं 'बह्वृचोपनिषदि' इति उपनिषत्त्वनिर्देशपूर्वकं तात्पर्यचन्द्रिका(10-33)दौ उदाहृतम् । अत्र पञ्चमारण्यकमार्षमिति विद्यारण्यः । तदत्र द्वितीयतृतीययोर्द्वयोरपि आरण्यकयोः व्याख्याने कृत एव पूर्णयमैतरेयोपनिषद् व्याख्याता भवति । अथापि भागान्तरस्य सगुणब्रह्मपरत्वमुक्त्वा तदुपेक्ष्य एतन्मात्रं निर्गुणपरं कृत्वा परैर्व्याख्यातमिति अस्यापि सगुणपरत्वस्थापनाय एतन्मात्रं व्याख्यायते इति सूचयितुम्, ऐतरेयोपनिषदः इत्यनुक्त्वा आत्मषट्कस्येत्युक्तम् । द्वितीयारण्यके आत्मा वा इदमेक एवेत्यारभ्य पठितं खण्डषट्कमात्मषट्कमिति प्रसिद्धम् ।

अयमत्र एतदर्थसंग्रहः—प्रथमे खण्डे, परमात्मना प्रथमतो लोकसृष्टिं संकल्प्य लोकानाम्, ततो लोकपालसृष्टिं संकल्प्य पुरुषविशेषस्य, ततस्तदवयवेभ्यो व्यष्टिसृष्ट्युपयोगिवागादिकरणतदधिष्ठातृदेवतानाञ्च कृता सृष्टिरुक्ता । द्वितीये सर्वोत्कृष्टमानुषशरीरनिर्माणेन तत्र करणानां तत्तद्देवताधिष्ठितानां प्रवेशनं सर्वत्राशनायापिपिसाव्यापनञ्च। तृतीये अन्नसृष्टिः, करणानां कार्यव्यवस्थाकल्पनम्, तत्त्वदर्शिकर्तव्यदर्शनाद्यनुगुणं शरीरे जीवविशिष्टस्वप्रवेशश्च । चतुर्थे जन्मप्रबन्धक्लेशचिन्तनपूर्विका तत्परिहारेणामृतत्वाय प्रवृत्तिः ।

श्रीः

# ऐतरेयोपनिषत्

## ऋग्वेदान्तर्गता

*[ वाङ्मे...शान्तिः ]

हरिः ओम्—आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्

---

श्रियै नमः । श्रीनिवासपरब्रह्मणे नमः ।
श्रीमते रामानुजाय नमः ।

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

**श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम् ।**

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान्(स्मद्)गुरूनपि ।
आत्मषट्कस्य विवृतिं करवाणि यथामति ॥

भोग्यभोगस्थानतदुपकरणविलक्षणप्रत्यगात्म-तदात्मभूतपरमात्म-स्वरूपप्रतिपादनाय इन्द्रादिपदानामपि हेयत्वप्रदर्शनाय च प्रकरणमारभ्यते **आत्मा वा इदमेक एवाग्र आसीत्** । इदं जगत् सृष्टेः प्राक्

---

पञ्चमे देहेन्द्रियज्ञानजीवविलक्षणान्तरात्मप्राज्ञब्रह्मज्ञानादमृतत्वम् । षष्ठे विद्याधिगमौपयिकशान्तिपाठप्रकार इति ।

विवृतिमिति । स्वकीयोपनिषद्व्याख्यानस्य तत्रतत्र प्रकाशिकापदेन स्वयं निर्देशेऽपि तैत्तिरीयोपक्रमे, 'तैत्तिरीयकवेदान्तविवृतिं करवाण्यहम्' इतिवत् इहापि विवृतिमित्युक्तमिति द्रष्टव्यम् ।

---

* अस्य शान्तिपाठस्यानुपूर्वी अत्रैव षष्ठखण्डे द्रष्टव्या ।

**किञ्चन मिषत्॥ स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत—**

एक आत्मैवासीत् । वैशब्दोऽवधारणे । 'तमः परे देव एकीभवति' इत्युक्तरीत्या परमात्मना अविभक्ततमोवस्थमेवाऽऽसीदित्यर्थः । ब्रह्मादिषु जगत्कारणभूतेषु सत्सु कथमेक एवाऽऽसीदित्युच्यते इत्यत्राह— **नान्यत् किञ्चन मिषत्**। तद्व्यतिरिक्तमन्यत् । [**किञ्चन ?**] किमपि । [सर्वं ?] निर्व्यापारमेवासीत् । अनेन करणकळेबरादिराहित्यमभिप्रेतम् । 'एको ह वै नारायण आसीत् । न ब्रह्मा, नेशानः' (महोप. १) इत्यादि-श्रुत्यर्थोऽनुसंधेयः ॥ **स ईक्षत लोकान्नु सृजा इति** । लोकान् सृजानीति संकल्पमकरोदित्यर्थः । **ईक्षते**त्याडभावश्छान्दसः ।

---

आत्मेति । 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावः तस्मादात्मेति कथ्यते' (लिङ्ग. पु. ९६) इति स्मृतिः । आप्नोति, आदत्ते, अत्ति, अततीति आत्मा । आप्तिः=यथार्थज्ञानं व्याप्तिश्च । आदत्ते कारणात् कार्यमाविर्भावयति ; आराधनञ्च कर्म प्रतिगृह्णाति । अत्ति=भुङ्क्ते, संहरति । अतति=सततमस्ति, नित्य इति ; सर्वदा रक्षणाय सन्तरति वा। इति आत्मा परमात्मा। इदमिति स्थूलचिदचिद्विशिष्टात्मवाचि । एवं वस्तुस्थितावपि सुखग्रहणाय इदमिति स्थूलप्रपञ्चरूपविशेषणमात्रं गृहीत्वा फलितार्थमाह तमःपर इत्यादिना। मिषत्=सव्यापारं अन्यत् किमपि नासीदिति श्रुत्यर्थः। यत् ब्रह्मरुद्रादिचेतनजातं शरीरव्यापारमन्तरा कार्यकरणाक्षमत्वात् तत्करणकाले सर्वदा सव्यापारम्, तत् नासीदिति यावत्। तत्रापि चेतनानां नित्यत्वात् न स्वरूपनिषेधः; किन्तु करणकलेबरवत्तया तन्निषेध इति मत्वा निष्कृष्टमंशमाह अनेनेति। तथाच सर्वस्य करण-कलेबराभावात् प्रलीनत्वात् न कारणत्वप्रसक्तिरिति भावः। 'नान्यत्' इति वाक्येन भगवतो जगद्व्यापारार्थं विग्रहोऽपि नास्तीति ज्ञाप्यते।

**अम्भो मरीचीर्मरमापः। अदोऽम्भः परेण दिवम्, द्यौः प्रतिष्ठा, अन्तरिक्षं मरीचयः, पृथिवी मरः, या अधस्तात् ता आपः।**

---

**स इमाँल्लोकानसृजत।** तानेव लोकानाह **अम्भो मरीचीर्मरमापः।** अम:प्रभृतीन् स्वयमेव श्रुतिर्व्याचष्टे **अदोऽम्भः परेण दिवम्।** अम्भश्शब्दवाच्यो लोको द्युलोकात् परस्तादित्यर्थः। **द्यौः प्रतिष्ठा।** तस्याम्भसो लोकस्य द्यौराश्रय इत्यर्थः। **अन्तरिक्षं मरीचयः।** अन्तरिक्षमेव मरीचिलोक इत्यर्थः। सूर्यादिमरीचिव्याप्तत्वात् मरीचिरित्युच्यते। **मरीचयः** इति बहुत्वोक्तिर्नि .... .... .... यीमेदायत्ता(?) मरीचिलोकादिभेदाभिप्राया। **पृथिवी मरः।** म्रियन्ते अस्मिन् भूतानीति **मरः पृथिवी**=पृथिवीलोकः। या **अधस्तात्**

---

तेन 'स ईक्षत' इति वक्ष्यमाणमीक्षणं विग्रहादिनिरपेक्षमिति सूच्यते। सृजै इति लोडुत्तमपुरुषः। आत्मनेपदं छान्दसमिति सृजानीत्युक्तम्।

अम्भ इत्यादि। द्युलोकतदूर्ध्वलोकस्थितानां देवानां, 'देवान् भावयतानेन ते देवा भावयन्तु वः' इत्युक्तरीत्या वृष्टिद्वारा अस्मदुपकारित्वं सूचयितुमम्भश्शब्देन द्युलोकादिग्रहणम्। इतो जलादेः मुक्तजीवानाञ्च नेत्रीणां मरीचीनामन्तरिक्षव्यापित्वात् अन्तरिक्षस्य मरीचिपदेन ग्रहणम्। मरणधर्मिण्यां पृथिव्यां जातं मर्त्यशरीरमेव मुक्तिहेतुतया परिकल्पितमिति मरणभीतैः. 'अमृतः समभवत्' इति वक्ष्यमाणममृतत्वं संपादनीयमिति त्वराविधित्सया पृथिवीगतमरणधर्मज्ञापनाय तस्याः मर इति निर्देशः। नागलोकादेः समुद्रप्रवेशादिना प्राप्यत्वात् तत्र आप इति प्रयोगः।

बहुत्वोक्तिरिति। अत्र ग्रन्थः पतितः। शक्यार्थकिरणबहुत्वात् तदवच्छिन्नान्तरिक्षप्रदेशबहुत्वाच्च मरीचय इति बहुत्वोक्तिरिति परोक्तम्। सृजै इति श्रुत्यनुकरणं पदविभागव्यक्तये।

स ईक्षत, इमे नु लोकाः; लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्।

तमभ्यतपत्, तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डम्; मुखात् वाक्; वाचोऽग्निः। नासिके निरभिद्येताम्; नासिकाभ्यां प्राणः; प्राणात् वायुः। अक्षिणी निरभिद्येताम्; अक्षीभ्यां चक्षुः; चक्षुष आदित्यः। कर्णौ निरभिद्येताम्; कर्णाभ्यां श्रोत्रम्; श्रोत्रात् दिशः। त्वङ्‌ निरभिद्यत; त्वचो लोमानि; लोमभ्य ओषधिवन-

---

ता आपः। पृथिवीलोकस्याधस्तना लोका आप इत्युच्यन्त इत्यर्थः।

**स ईक्षत...सृजा इति**। भोगस्थानसृष्ट्यनन्तरम्, 'अम्भः-प्रभृतयो लोका सृष्टाः। एषां लोकानां पालकान् सृजै' इति संकल्पम-कृतेत्यर्थः। **सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्**। **सः** अप्शब्दोपलक्षितेभ्यः पञ्चभ्यो भूतेभ्यः शिरःपाण्यादिमन्तं पुरुषं कर्तुं **समुद्धृत्य** अद्भ्यस्समुपादाय **अमूर्च्छयत्** पिण्डं कृतवानित्यर्थः।

**तमभ्यतपत्**। तं पिण्डं पुरुषविधमुद्दिश्य **अभ्यतपत्** अभि-ध्यानं=संकल्पं कृतवान्। **तस्याभितप्तस्य मुखं निरभिद्यत, यथाऽण्डम्**। तस्याभितप्तस्य पिण्डस्य मुखाकारं सुषिरमजायत, यथा पक्षिणोऽण्डम् तथेत्यर्थः। **मुखाद्वाग्वाचोऽग्निः**। मुखादधिष्ठानात् वागिन्द्रियमुत्पन्नम्।

---

पिण्डं कृतवानिति। अयं सृष्टः पुरुषो ब्रह्मा स्यात्। तच्छरीराद्धि देवादिसृष्टिः प्रसिद्धा। तदेतं सृष्ट्वा व्यष्टिसृष्टौ जनयिष्यमाण-जीवराश्युपयोगीन्द्रियवर्गं तदधिष्टातृदेवतावृन्दञ्च तदीयमुखादि-प्रदेशादाविष्कृत्य ततो यथायथं प्राणिजातं स्रक्ष्यतीति मन्तव्यम्। अत एवोपरि, 'एनं पितामहमागत्य' इति निर्देक्ष्यते। एषां लोक-पालत्वम् उक्तचतुर्विधलोकवर्तिप्राण्यपरपर्यायलोकपालकत्वात् ॥१॥

**स्पतयः। हृदयं निरभिद्यत; हृदयात् मनः; मनसश्चन्द्रमाः। नाभिर्निरभिद्यत; नाभ्या अपानः; अपानात् मृत्युः। शिश्नं निरभिद्यत; शिश्नाद्रेतः; रेतस आपः॥**

इति ऐतरेयोपनिषदि आत्मषट्के प्रथमः खण्डः॥

अथ द्वितीयः खण्डः

**ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतन्। तमशनायापिपासाभ्यामन्ववार्जत्। ता एनमब्रुवन्, 'आयतनं नः प्रजानीहि, यस्मिन् प्रतिष्ठिता अन्नमदाम' इति।**

---

ततो या तदधिष्ठातृदेवता। एवञ्चाधिष्ठानं करणं देवता च त्रयं क्रमेण निर्भिन्नमित्यर्थः। एवमुत्तरत्रापि। **नाभ्या अपानः। अपानः** पाय्विन्द्रियमित्यर्थः। **अपानान्मृत्युः।** तस्याधिष्ठानदेवतेत्यर्थः। **शिश्नाद्रेतः।** रेतश्शब्देन प्रजननेन्द्रियमुच्यते। **रेतस आपः।** अ(अब?)भिमानिदेवतैव तस्याधिष्ठानदेवतेत्यर्थः॥ १॥

**ता एता देवतास्सृष्टा अस्मिन् महत्यर्णवे प्रापतन्।** एता अग्न्यादयो देवताः लोकपालत्वेन संकल्प्य सृष्टाः अस्मिन् महति संसारार्णवे रागद्वेषादिमहाग्राहग्रस्ते (स्ताः?) पतिता अभूवन्। **तमशनायापिपासाभ्यामन्ववार्जत्।** प्रथमोत्पादितं पिण्डं अशनायापिपासाभ्यां संयोजितवान्। तस्य कारणभूतस्य अशनायादिदूषितत्वेन तत्कार्यतया सृष्टा अपि देवताः अशनायादिदूषिता अभूवन् इति। **ता एनमब्रुवन्।**

---

**अस्मिन् महत्यर्णव इत्यनेन अद्भ्य एव पुरुषमिति प्रागुक्तानामपां ग्रहणेऽपि तासामर्णवत्वेन वर्णनं तत्पातः संसारार्णवपात इति ज्ञापनायैवेति ध्येयम्।**

**ताभ्यो गामानयत्। ता अब्रुवन्, 'न वै नोऽयमलम्' इति। ताभ्योऽश्वमानयत्। ता अब्रुवन्, 'न वै नोऽयमलम्' इति।**

**ताभ्यः पुरुषमानयत्। ता अब्रुवन्, 'सुकृतं बत' इति। पुरुषो**

---

....**अन्नमदामेति।** **ताः** देवताः अशनायापिपासाभ्यां पीड्यमाना **एनं** पितामहमागत्य, 'अस्मभ्यमधिष्ठानं विधत्स्व। तत्र प्रतिष्ठिता अन्नं भक्षयित्वा अशनायां निवर्तयिष्यामः' इति [अब्रुवन् ?]।

**ताभ्यो गामानयत्।** गवाकृतिविशिष्टं पिण्डमानीय अधिष्ठानत्वेन प्रदर्शितवानित्यर्थः। **ता अब्रुवन्, न वै नोऽयमलमिति।** **ताः** देवताः अयं पिण्डोऽस्माकं न पर्याप्त इत्युक्तवत्यः। **ताभ्योऽश्वमानयत्। ता अब्रुवन्न वै नोऽयमलमिति।** तिर्यक्षु गवाश्वादिषु इन्द्रियतदधिष्ठातृदेवतानां सम्यक्कार्यकरत्वाभावादिति भावः।

**ताभ्यः...सुकृतं बतेति।** स्वयोनिभूतपुरुषं दृष्ट्वा सुकृतं आत्मने शोभनमिदमधिष्ठानं कृतमिति देवता अब्रुवन्नित्यर्थः। **पुरुषो वाव सुकृतम्।** सर्वपुण्यकर्महेतुत्वात् पुरुषस्य सुकृतत्वमुपपद्यत इति भावः।

---

**तिर्यक्ष्विति। 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इति कैमुत्यसिद्धमन्येषामपर्याप्तत्वम्। स्वयोनिभूतेति। स्वयोनिभूतचतुर्मुखशरीरतुल्यं स्वाधिष्ठानाय सृष्टं यत् मनुष्यशरीरम्, तदित्यर्थः। सुकृतमिति। श्लिष्टम्। सम्यक् कृतमधिष्ठानं सुकृतम्; अधिष्ठानदेवतासुकृतफलत्वादपि सुकृतम्; मनुष्यशरीरात्मकैतत्पुरुषवर्तिनां जीवानामेव सुकृतसंपादनसामर्थ्यादपि सुकृतम्। तथाच पूर्वं श्रुतम्, "पुरुषे त्वेवाऽऽविस्तरामात्मा। स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति, विज्ञातं पश्यति, वेद श्वस्तनम्, वेद लोकालोकौ, मर्त्येनामृत-**

वाव सुकृतम् । ता अब्रवीत्, 'यथायतनं प्रविशत' इति ।

अग्निर्वाग् भूत्वा मुखं प्राविशत् । वायुः प्राणो भूत्वा नासिके प्राविशत् । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् । दिशश्श्रोत्रं भूत्वा कर्णौ प्राविशन् । ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन् । चन्द्रमा मनो भूत्वा हृदयं प्राविशत् । मृत्युरपानो भूत्वा नाभिं प्राविशत् । आपो रेतो भूत्वा शिश्नं प्राविशत् ।

तमशनायापिपासे अब्रूताम्, 'आवाभ्यां अधि(भि)प्रजानीहि' इति । स ते अब्रवीत्, 'एतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमि' इति । तस्मात् यस्यै कस्यै च देवतायै हविर्गृह्यते, भागि-

---

**ता अब्रवीत् यथायतनं प्रविशतेति** । ईश्वर इति शेषः ।

**अग्निर्वाग्भूत्वा मुखं प्राविशत्** । वागभिमानी अग्निर्वागेव भूत्वा=वाग्रूपो भूत्वा स्वयोनिं मुखं प्राविशत् । एमुत्तरत्रापि । **वायुः ...प्राविशन्** । पूर्ववदर्थः ।

**तमशनायापिपासे अब्रूताम्, आवाभ्यामभिप्रजानीहीति** ॥ एवं लब्धाधिष्ठानासु देवतासु तमीश्वरं अशनायापिपासे आवाभ्यामधिष्ठानं विधत्स्वेत्यब्रूताम् । **स ते अब्रवीत्...भागिन्यौ करोमीति** । एतास्वेव देवतासु वृत्तिसंविभागेन युवामनुगृह्णामि ; एतास्वेव देवतासु युवां भागवत्यौ करोमि इति ईश्वरः अशनायापिपासे प्रत्यब्रवीदित्यर्थः । **तस्माद्यस्यै कस्यै च....भवतः** । अशनायापिपासाविशिष्टाया

---

मीण्सत्येवं संपन्नः" इति। यथायतनमिति। चतुर्मुखशरीरात् यतोयत आयतनात् यद्यदिन्द्रियतो युष्मन्निष्क्रमणमासीत्, तत्तदायतनसजातीये संप्रतिसृष्टपुरुषवर्तिनि आयतने तत्तदिन्द्रियेण सह तत्तदधिष्ठातृतया प्रविशतेत्यर्थः। भागिन्याविति । अशनायापिपासा-

न्यावेवास्यामशनायापिपासे भवतः ॥ इति द्वितीयः खण्डः ॥

अथ तृतीयः खण्डः ॥

**स ईक्षतेमे नु लोकाश्च लोकपालाश्च ; अन्नमेभ्यस्सृजा इति । सोऽपोऽभ्यतपत् । ताभ्योऽभितप्ताभ्यो मूर्तिरजायत । या वै सा मूर्तिरजायत, अन्नं वै तत् ।**

---

(?)भवता एव देवतायागविभागत्वात् (अशनायापिपासाविशिष्टाया एव देवताया भागवत्त्वात् ?) तयोरपि भागवत्त्वमस्तीति भावः । ततश्चेन्द्रादीनामप्यशनायादूषितत्वात् तत्पदेभ्योऽपि विरज्येतेति भावः ॥ २ ॥

**स ईक्षत...सृजा इति** । लोकांश्च लोकपालांश्च सृष्ट्वा एषामशनायाविशिष्टानामन्नं सृजानीति संकल्पमकरोदित्यर्थः । **सोऽपोऽभ्यतपत्** । अप उद्दिश्याभिध्यानं कृतवानित्यर्थः । **ताभ्योऽभि...अन्नं वै तत्** । अभिध्यातेभ्यस्स (अभिध्याताभ्यः ताभ्यः ?) कठिनात्मा अन्नरूपः परिणामोऽजायतेत्यर्थः ।

अशनायापिपासानुकूल(?)लोकलोकपालानां पुरतस्सृष्टमन्नं **पराङ्** भोग्यभूतं भक्ष्यभूतमिति यावत् **अत्यजिघांसत्** अतिक्रम्य गन्तुमैच्छत्, मार्जारादिवक्त्रस्थितमूषिकादिवत् पलायितुमारभतेत्यर्थः **तद्वाचाऽजि-**

---

पदाभ्यां तत्तदिन्द्रियविषयानुभवतृष्णा पुरुषगतोच्यते । पुरुषस्यैवं तृष्णामुत्पाद्य तेन तत्तृप्तये कार्ये कृते देवतास्तृप्यन्ति; तृष्णा च तृप्तिं शान्तिं प्रपद्यत इति अस्ति अशनायादेर्देवतया सह भागित्वम् । एवं देवताशरीरेऽपि अशनायादेस्तृप्तिर्देवताव्यापाराधीना अनुसंधेया ॥२

लोकाः=प्राणिनः । अजिघांसदित्यत्र अन्नं कर्तृ । 'हन हिंसागत्योः' इति गत्यर्थेऽयं प्रयोगः; 'पद्धतिः', संहननम्' इत्यादिवत् । कूलं पिपतिषतीतिवत् औपचारिकः प्रयोगः । पलायितुमित्यादि । पुरुष-

तदेत(न)दभिसृष्टं सत् पराङत्यजिघांसत्। तद्वाचाऽजिघृक्षत्। तन्नाशक्नोद्वाचा ग्रहीतुम्। स यद्धैनद्वाचाऽग्रहैष्यत्, अभिव्याहृत्य हैवान्नमत्रप्स्यत्॥ तत् प्राणेनाजिघृक्षत्। तन्नाशक्नोत् प्राणेन ग्रहीतुम्। स यद्धैनत् प्राणेनाग्रहैष्यत्, अभिप्राण्य हैवान्नमत्रप्स्यत्॥ तच्चक्षुषाऽजिघृक्षत्। तन्नाशक्नोच्चक्षुषा ग्रहीतुम्। स यद्धैनच्चक्षुषाऽग्रहैष्यत्, दृष्ट्वा हैवान्नमत्रप्स्यत्॥ तच्छ्रोत्रेणाजिघृक्षत्। तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम्। स यद्धैनच्छ्रोत्रेणाग्रहैष्यत्, श्रुत्वा हैवान्नमत्रप्स्यत्॥ तत्त्वचाऽजिघृक्षत्। तन्नाशक्नोत् त्वचा ग्रहीतुम्। स यद्धैनत् त्वचाऽग्रहैष्यत्, स्पृष्ट्वा हैवान्नमत्रप्स्यत्॥ तन्मनसाऽजिघृक्षत्।

---

**घृक्षत्** पलायमानमन्नं प्रथमोत्पन्नः लोकलोकपालकार्यकारणसंघातलक्षणः पिण्डो वाग्व्यापारेण अन्नं(?) ग्रहीतुमैच्छत। **तन्नाशक्नोद्वाचा ग्रहीतुम्**। स्पष्टोऽर्थः। **स यद्धैनद्वाचाऽग्रहैष्यत्, अभिव्याहृत्य हैवान्नमत्रप्स्यत्**। यदि वाग्व्यवहारेणैवान्नं ग्राह्यं स्यात्, अन्नमिति वाचा व्यवहृत्यैव सर्वेऽपि तृप्तिं प्राप्नुयुरित्यर्थः। अतो वाग्ग्रहणयोग्या(?)न्नाभावा[द् वाचा ग्रहीतुं नाशक्नो ?]दित्यर्थः।

**तत् प्राणेन...विसृज्य हैवान्नमत्रप्स्यत्**। पूर्ववदर्थः।

---

प्रयत्नविशेषमन्तरा स्वयमेवाशनायाशमकं नासीदिति तात्पर्यम्। विद्यारण्यस्तु पलायनादिशक्तं मार्जाराद्यन्नं मूषकादिप्राण्येव अन्नपदेन गृह्णाति। तदर्थेन करणेनागृहीत्वा इन्द्रियान्तरेण ग्रहीतुं कुतोऽयतिष्टेत्यत्राह प्रथमोत्पन्न इति। अन्नग्रहीतुः पुंसोऽन्यस्य तदानीमभावेन तन्मूलं शिक्षणाप्रसक्तेः स्वयञ्चापरिचयादेवमिति भावः। लोकेत्यादि। चतुर्मुखः, वागाद्यभिमानिदेवता, सृष्टं प्राणि च मनुष्यादि, सर्वमशनायापरीतमन्नग्रहणे प्रवृत्तमिति भावः। अभिप्राण्य = प्राणशब्दवाच्यनासावायुसंबन्धि कृत्वा। आघ्रायेति यावत्।

तन्नाशक्नोन्मनसा ग्रहीतुम्। स यद्धैनन्मनसाऽग्रहैष्यत्, ध्यात्वा हैवान्नमत्रप्स्यत् ॥ तच्छिश्नेनाजिघृक्षत्। तन्नाशक्नोच्छिश्नेन ग्रहीतुम्। स यद्धैनच्छिश्नेनाग्रहैष्यत्, विसृज्य हैवान्नमत्रप्स्यत् ॥

तदपानेनाजिघृक्षत्। तदावयत्। स एषोऽन्नस्य ग्रहो यद्वायुः अन्नायुर्वा एष यद्वायुः ॥

स ईक्षत कथं न्विदं मदृते स्यादिति। स ईक्षत कतरेण प्रपद्य इति। स ईक्षत—यदि वाचाऽभिव्याहृतम्, यदि प्राणेनाऽभिप्राणितम्, यदि चक्षुषा दृष्टम्, यदि श्रोत्रेण श्रुतम्, यदि त्वचा स्पृष्टम्, यदि मनसा ध्यातम्, यद्यपानेनाऽभ्यपानितम्, यदि शिश्नेन विसृष्टम्, अथ कोऽहमिति।

---

**तदपानेनाजिघृक्षत्तदावयत्** ॥ **अपानेनाजिघृक्षत्**। मुखरन्ध्रगतेन वायुना अजिघृक्षत्। [**आवयत्** ?] अशितवानित्यर्थः। **स एषोऽन्नस्य ग्रहो यद्वायुः**। वायुरेवान्नग्राहीत्यर्थः। **अन्नायुर्वा एष यद्वायुः** अन्नमेव वायुर्जीवनं (अन्नमेव **आयुः** जीवनं ?) यस्य सः। अन्नजीवनक इत्यर्थः ॥

**स ईक्षत कथं न्विदं मदृते स्यादिति**। एवं लोकलोकपालादीन् सृष्ट्वा लोकलोकपालसंघातस्थितिम् अन्ननिमित्तिकां च कृत्वा, 'लोकपालाद्यधिष्ठितपुरं पुरस्वामिनं मां विना कथं प्रभवेत्। न हि राजानधिष्ठितं पुरं कार्याय प्रभवति' इत्येवं अचिन्तयत्। **स ईक्षत यदि वाचाऽभिव्याहृतं....अथ कोऽहमिति**। यदि मां विनैव वागादिभिः स्वस्वकार्यं कृतं स्यात्, तदा कस्याहम्, मे शेषित्वं (कस्याहं स्वामी ; शेषित्वं मे?) (कः स्वामहम् ; शेषित्वं मे ?) कथं स्यादित्यर्थः।

---

अपानेनेति। गलान्तर्गच्छतो वायोरधोगतित्वादपानता।

स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत। सैषा विदृतिर्नाम द्वाः तदेतन्नान्दनम्। तस्य त्रय आवसथाः त्रयः स्वप्नाः अयमावसथोऽयमावसथोऽयमावसथ इति ॥

---

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत**। एवमीक्षित्वा मद्भृत्यभूतप्राणवर्गद्वारभूतमुखादिना स्वामिनो मम प्रवेशोऽनुचित इति मत्वा मूर्धसीमानं विदार्य तद्द्वारा, 'अनेन जीवेनात्मना' इति श्रुत्यनुसाराज्जीवशरीरकतया प्रविवेशेत्यर्थः। **सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम्**। तदेतद्द्वारं विदारितत्वात् विदृतिसंज्ञकम्। तदेतद्द्वारं नान्दनं नन्दनम्। द्वारान्तरवत् न जुगुप्सितमित्यर्थः। स्वार्थे अण्। **तस्य त्रय आवसथाः त्रयः स्वप्नाः अयमावसथोऽयमावसथोऽयमावसथ इति**। तस्य जीवशरीरकस्यात्मनः त्रयः स्वप्नवदाश्चर्यभूताः

---

जीवशरीरकतयेति। सर्वव्यापिनः परमात्मनः विदार्य तद्द्वारा प्रवेशस्य स्वरूपतोऽसंभवात्, प्रमाणबलाच्च जीवविशिष्टस्य प्रवेश इति सिद्ध्यति। अत्र सर्वदा विभोः परमात्मनः, सृष्टिमध्ये शरीरेषु, मूर्धविदारणपूर्वकप्रवेशकथनमनुपपन्नमिति शंकायां शाङ्करोक्तं समाधानं तावत्—अत्यल्पमिदं चोद्यम्। बहु चैवं चोदनीयमस्ति। ज्ञानेन्द्रियकर्मेन्द्रियविकलस्याऽऽत्मनः ईक्षणम् अद्भ्यः पुरुषस्य समुद्धरणं संमूर्च्छनं च ह्यनुपपन्नम्। एवं मुखादिभ्यो वागादीन्द्रियाग्न्यादिदेवतोत्पादनम्, देवतानामशरीराणाममूर्तानामशनायादिसंयोजनम्, शरीरविकलाभिस्ताभिरायतनान्नादिप्रार्थनम्, अचेतनस्यान्नस्यापि स्वयमभक्ष्यत्वाय पलायनमित्यादि चानुपपन्नमेवेति। तर्हि किं श्रुतिरप्रमाणमेव; न। तात्पर्यविषये प्रामाण्यात्। यो हि श्रुतेर्विवक्षितोऽर्थः, तत्र सा प्रमाणम्; न तु वाच्यार्थ एव। यथा प्राशस्त्यपराणामसंभावितार्थपराणामर्थवादानां विधिशेषा-

आवसथाः। के ते ? **अयमावसथः**—जाग्रद्दशायां चक्षुः, स्वप्नदशाया-मन्तःकरणम्, सुषुप्तिदशायां हृदयाकाश इति ॥

---

भाम्। एकः परमात्मा सत्यः, अन्यत् सर्वं मिथ्येति निश्चयार्थं श्रोतृसुखप्रतिपत्तये आख्यायिकागर्भा सैषा सृष्ट्यादिकल्पना। अस्तु वा लौकिकमायाविन इव महामायाविनः सर्वशक्तेर्देवस्य माययैव सर्वमघटितघटनं संपद्यमानमिति।

अत्रास्मदीयः समाधिस्तु—'शक्तयः सर्वभावानामचिन्त्यज्ञान-गोचराः', 'आत्मनि चैवं विचित्राश्च हि' इत्याद्युपपत्तिपरिशीलिनाम्, 'पश्यत्यचक्षुः' इत्यादिप्रमाणबलात् अकरणस्यापि परमात्मनः ज्ञान-चिकीर्षाकृतयो नानुपपन्ना इति सुलभो विवेकः। देवतानाञ्च सृष्टानां किञ्चिद्रूपदेहयुक्तानामेव स्वनियम्यसर्वजैवेन्द्रियाधारभूता-यतनादिप्रार्थना स्वार्थविलक्षणातिशयितायतनप्रार्थनाऽपि भोगार्थी नानुपपन्ना। अतः परमात्मनो विदारणपूर्वकप्रवेशः कथमिति शङ्कैव शिष्यते, न त्वन्याऽनुपपत्तिः। तत्र प्रागेव परमात्मनः प्रविष्टत्वेऽपि एकैकस्मिन्नपि देहे देह-करण-देवता-परमात्मादिरूपानेकांशसद्भाव-विवेचनार्थमेवं वर्णनवाचोयुक्तिरिति। यद्वा, 'अनेन जीवेनात्मनाऽनु-प्रविश्य' इत्युक्तरीत्या जीवविशिष्टस्वप्रवेशः जीवप्रवेशपर्यवसायीह विवक्षितः। अथवा देहाकारसंस्थानप्राग्भाविसंस्थानविशेषावच्छिन्ना-चेतनांशनियमनौपयिकधर्मभूतज्ञानपरिणामस्य सर्वात्मनः परमात्मनः देहसृष्टौ तत्संस्थाननियमनौपयिक–तच्छरीरकत्वव्यवहारनिर्वाहक–विलक्षणस्वधर्मभूतज्ञानविकासविशिष्टतया स्थितिरिह मूर्धादि-पादान्तव्यापिनी प्रवेश इत्युच्यते। तदिदम्, 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्यत्रापि भाव्यम्। अस्तु वा हार्दविग्रहयुक्तस्येह पुरुषे प्रवेशः देहसृष्ट्यनन्तर उच्यत इति। शेषमाकरे द्रष्टव्यम्।

त्रयः स्वप्ना इति। स्वाप्नमिथ्यात्वेऽपि स्वप्नमिथ्यात्वाभावात् स्वप्नवदत्यन्ताल्पकालत्वं त्रयाणां विवक्षितमिति परमार्थभूषणे

स जातो भूतान्यभिव्यैख्य(क्ष)त्। किमिहान्यं वावदिष(शे)दिति।

---

**स जातो भूतान्यभिव्यैक्षत्** (?)। स तस्मिन् प्रविष्टस्सन्, सर्वाणि पञ्च भूतानि नामरूपवत्तया अकृतेत्यर्थः। [वैक्षत् नामरूपव्याकरणं] जीवशरीरकःसन् प्रविष्टो नामरूपभागभवदित्यर्थः। **किमिहान्यं वावदिषदिति**। यत किंचिद्वस्त्वस्ति तत् सर्वम्, एकात्मतया स्थितः **अन्यं वावदिषत्**— वाशब्द इवार्थे—एकात्मतया स्थितं वस्तु दृश्यमिव भिन्नात्मकमिव वि(व?)दितुमैच्छत्। अविवि(व?)दिष-

---

(पु 65:–7·4) अस्माभिरुपपादितम्।

जात इति। जननम् = आत्मनो देहसंयोगविशेषः। अप्राकृतहार्दविग्रहपरिग्रहो वा। व्यैख्यत्। इष गतौ। लङि ऐष्यदिति रूपम्। षस्य सः, 'सहस्रशीर्षा' इतिवत्। ख्यइति वर्णस्थाने क्षकारोऽपि क्वचित् कोशे। विशेषेण भूतानि प्रति गमनं नाम नामरूपव्याकरणपर्यन्तगमनमेवेति। शाङ्करे, 'अभिव्यैख्यत् = व्याकरोत्' इति व्याख्या। 'किमिहान्यं वावदिषत्' इतीदं तत्र न व्याख्यातम्। व्याकरोदित्यस्य व्यक्तं न ज्ञातवानित्यर्थ इत्यानन्दगिरिः। तेनोपरितनवाक्यमपि व्याख्यातम्। अत्र तु भाष्ये व्याकरोदिति व्याख्यां परं स्वीकृत्य, 'नामरूपे व्याकरोत्' इत्यत्रेव तदर्थो वर्णितः; उपरितनवाक्यञ्चान्यथैव स्वारस्यात् व्याख्यातम्। 'तन्नामरूपाभ्यां व्याक्रियत', 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्युक्तस्य नामरूपव्याकरणस्य पाञ्चभौतिकशरीरान्तर्वर्तित्वपर्यन्तत्वात् तथा निष्कर्षति जीवशरीरकः सन् इत्यादिना।

किमिहेत्यादेः यत् किञ्चिद्वस्तु इत्यादिर्व्याख्या। अत्र उपलभ्यमानपाठस्यैवानुसारे एवमर्थः—तत् सर्वमेकात्मतया स्थित इत्यत्र एकात्मतया तत् सर्वं स्थित इति योजना। सर्वमिति स्थितिक्रियाविशेषणम्। तत् सर्वरूपेण स्थित इत्यर्थः। तत्र एक[illegible] हेतुः।

प्राणेन्द्रियविशिष्टपाञ्चभौतिकशरीरान्तःप्रविष्टः एकात्मतया तत्सर्वं रूपेण स्थितः सन् एवमेकात्मतया स्थितं वस्तु दृश्यमिव भिन्नात्मकमिव वदितुमैच्छदिति योजना। दृश्यमिवेत्यस्य केवलदृश्यमिव दृष्ट्रनात्मकमिवेत्यर्थः। तदेव भिन्नात्मकमिति शब्दान्तरेण विवृतम्, अथवा भिन्नात्मकमिवेत्यस्य स्वभिन्नदेवतान्तरात्मकमिवेत्यर्थः तथाच जीवविशिष्टस्वात्मकं वस्तु जीवानात्मकमिव, स्वानात्मकमिव स्वभिन्नकिञ्चिदात्मकमिव च वदितुमैच्छदित्युक्तं भवति वस्तुतः स्वात्मकत्वे सत्यपि जीवानां तदज्ञानं स्वतन्त्रात्मत्वजीवान्तर परतन्त्रत्वभ्रमञ्चोत्पादितवानिति यावत्। सर्वोऽयं तात्पर्यार्थः शब्दार्थस्तु—किमिहान्यं वावदिषत्। इह स्थितं सर्वं अन्यं व स्वानात्मकमिव स्वभिन्नात्मकमिव वक्तुमैच्छत् किम्, यतः लोके कोऽपि जीवविशिष्टभगवदात्मकं वस्तु तदात्मकं न जानाति विपरीतं तु जानातीति। अवादिषदित्येव श्रुतिपाठात् अविदृषदि पाठाभावात् वद्धातुरेवात्र भाष्याभिमतः स्यात्। न विद्धातुः प्रमैकनिधेः भगवतः स्वयं विपरीतवेदनवत्त्वेच्छाया अयोगाच्च।

किमिहान्यं वावदिशेदित्यपि काचित्कः पाठः। तदा दिशेत् उप दिशेदित्यर्थः। वावदिषदिति पाठेऽपि शषयोरभेदात् वावदिशत् इति विभागः सुकरः। तत्रैवमर्थोऽपि भवति। स परमात्मा भूतानि प्राणिनोऽभिमुखीकृत्य विविच्य दृष्टवान्, 'इह भूतेषु प्राणिषु किं भूत अन्यं मां दिशत् इदमिति निर्दिशदस्ति' इति। एतदर्थमेव हि तस्यान्तः प्रवेशः। एवं तदनुग्रहे सति कश्चित् तमपश्यदिति उपर्युच्यत इति

इदञ्च किमिहेत्यादिकं परोक्षप्रिया इव हि देवा इत्यन्तम्, 'यदि सर्वं भगवदनुप्रविष्टम्, तत्तज्जीवानुप्रविष्टञ्च, तर्हि तथैव कथं न लक्ष्यते' इत्यत्र, 'जीवप्राचीनकर्मयित्ततत्संकल्पवशादेवैवम्' इति समाधातुं प्रवृत्तमिति ध्येयम्। अत्र किंशब्दप्रयोगः वस्तुगत्या ईश्वरस्य तादृशविपरीतज्ञानजननसंकल्पवत्त्वेऽपि तद्वचनकर्तृत्वाभावात् वचन पर्यन्तेऽपि तस्येच्छा आसीत् किमिति उत्प्रेक्षायत्तः। तच्च विपरीत

स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीं ३। तस्मादिदन्द्रो नाम। इदन्द्रो ह वै नाम। तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण।

---

दित्यस्य अवदिषदिति छान्दसं रूपम्। **स एतमेव पुरुषं, ब्रह्मततममपश्यदिदमदर्शमिति....परोक्षप्रिया इव हि देवाः।** **सः** जीवः **एतमेव** जीवशरीरकं **पुरुष**शब्दितवासुदेवं **ततमं** व्याप्ततमं **ब्रह्म** निरतिशयबृहत्त्वाश्रयं अपश्यत्। नारायणमेव ब्रह्मभूतं ज्ञातवानित्यर्थः। कथं ज्ञातवानित्यत्राऽऽह **इदमदर्शमिति**। हस्तामलकवदिदमदर्शमिति ब्रह्म

---

ज्ञानस्य लोके प्रतिष्ठितत्वप्रदर्शनाय। अथवा किमिति प्रश्ने। यस्मात् तस्य जीवेन सहेहानुप्रवेशेऽपि तद्दर्शनं न भवति, तस्मात् आ सृष्टेः स विपरीतोपदेशेन सर्वं जनं भ्रामयामास किमिति प्रश्नः। अन्यं वेत्यत्र अन्यपदं जीवपरमिति स्वात्मानं जीवाभिन्नमेव वदितुमैच्छत् किमिति वा प्रश्नः। इतिः प्रश्नसमाप्तौ।

नायं विपरीतमुवाद; किन्तु, 'यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.) इत्युक्तरीत्या सम्यगर्थमुपदिदेश च। अत एव हि तत्त्वदर्शिनः तमेव हस्तामलकवदपश्यन्; किमुत स्वात्मानमिति समाधानं श्रुत्योच्यते स एतमेवेति। स इति तच्छब्दः औचित्यात् जीवमात्रपरः; अत्र प्रकरणे यथायथं प्रयोगदर्शनात्। अन्यमिति पदपरामृष्टजीववाची वा। वस्तुगत्या तस्मादन्यो जीवः तं पुरुषं ब्रह्म स्वस्मिन् स्वशरीरकत्वाद्युपयोग्याकारेणात्यन्तं ततम् अत एव भिन्नत्वात् 'इदम्' इति साक्षात्कृतवानिति तस्य तदीयसदुपदेशायत्तत्वात् न विपरीतवचनकुतूहलं तस्येति भावः। यदि, 'व्यैख्यत् इत्यस्य विकल्पेन ज्ञातवानित्यर्थः; तस्य ज्ञानस्याकारः इतीत्यन्तेन दर्श्यते' इति मन्यते, तदा इह मदनुप्रविष्टेषु किं पृथग्भूतं कश्चिद् विवदिषदिति चिन्तितवानित्यर्थः। न पृथग्भूतम्, किंतु सर्वत्र ब्रह्म ततमेवापश्यदित्युपर्युच्यते।

**परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥**

**इति तृतीयः खण्डः ॥**

---

साक्षात्कृतवानित्यर्थः । अत्र **ततम**मित्यत्र एकतकारलोपश्छांदसः । [ब्रह्मततमं ब्रह्मणा व्याप्तं पुरुषमपश्यत् ।] अत्र ब्रह्मणि दृश्यमाने **इदं** शब्दप्रयोगात् प्रत्यग्ब्रह्मणोर्भेदार्थ(?)सूचनमिति द्रष्टव्यम् । **तस्मात्** इदं दृष्टवानिति प्रवृत्तिनिमित्तवशादिदन्द्र इति तन्नाम्नि प्रयोक्तव्ये इन्द्र इति परोक्षेणाऽऽचक्षते । न तु स्पष्टमिदन्द्र इति । तत् कुत इत्यत्राह— **परोक्षप्रिया इव हि देवा** इति । देवानामनतिस्फुटतया कथनमेव प्रियं भवति । अतः इन्द्र इत्येवाचक्षते । न त्विदन्द्र इति इत्यर्थः ॥३॥

---

**एकतकारलोप इति । अत्र ततममपश्यदित्यत्र ततं अं अपश्यदित्यपि पदच्छेदः स्यात् । आत्मषट्कादस्मादव्यवहितपूर्वमेव, 'अ इति अत्रैवैतरेये निर्दिष्टत्वात् । अ इति भगवतो नारायणस्य वाचकमिति च प्रसिद्धम् । अत्र छान्दस इत्येतदनन्तरं ब्रह्मतततमं= ब्रह्मणा व्याप्तं पुरुषमपश्यदिति पाठो दृश्यते । स च योजनान्तररूपत्वात् द्रष्टव्यमित्येतदनन्तरं द्रष्टव्यः । अस्मिन् पक्षे स एतमेवेति मूले स इति परमात्मपरमपि स्यात् । स्तोत्ररत्नभाष्ये, (श्लो. ११) 'तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेणेति ब्राह्मणोक्त्या सर्वदर्शिपरमात्मविषयः' इति श्रीदेशिकसूक्तिस्वारस्ये परिशील्यमाने, 'परमात्मा इदमित्यपश्यत्' इत्यर्थ इह विवक्षित इति, तेन तदीयं सर्वदर्शित्वमनया भङ्ग्या ज्ञापितमिति चाभिमतं प्रतीयते । तत्रायं श्रुत्यर्थः— परमात्मा सर्वस्यान्तःप्रविश्य, 'एवमस्मत्प्रवेशानन्तरं लोकः किं सर्वमन्यथा द्रक्ष्यति, उतास्मदात्मकम्' इति पर्यालोच्य सर्वयथावस्थिताकारसाक्षात्कारे प्रवृत्य, सर्वमिदम् 'इदमदर्शम्' इति पश्यन् न जीवमात्रतया अचेतनमात्रतया च अपश्यत्, किंतु ब्रह्मणा व्याप्तमेव**

अथ चतुर्थः खण्डः ॥

[अपक्रामन्तु गर्भिण्यः]

पुरुषे ह वा अयमादितो गर्भो भवति, यदेतद्रेतः। तदेत(न)त् सर्वेभ्योऽङ्गेभ्यस्तेजः संभू(भृ)तमात्मन्येवात्मानं बिभर्ति। तद्यदा

---

वैराग्यसिद्ध्यर्थं जन्ममरणप्रबन्धं तदवस्थाश्च श्रुतिर्दर्शयति ?]

**पुरुषे ह वा अयमादितो गर्भो भवति, यदेतद्रेतः** । अयं संसरन् पुरुषः (षे?षं?) प्रथमतो रेतोरूपेण गतोऽभवत् । **तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजस्संभृतमात्मन्येवात्मानं बिभर्ति** । पुरुषस्य सर्वेभ्योऽङ्गेभ्यस्समुत्पन्नं यत् वीर्यं तदेव रेत इत्युच्यते (रेत इत्युच्यते, तदेव?) स्वात्मनि जीवं बिभर्ति । रेतस्संसृष्टो जीवो वर्तते इत्यर्थः। एतत्प्रतिपादनं

---

ब्रह्मात्मकमेवापश्यदिति । इदमिति बुद्धिर्बाह्यविषयिणी न तन्मात्रे विश्राम्यति ; किन्तु तद्विशिष्टे ब्रह्मणि मयि । ईदृशविशिष्टदर्शनानुगुणोऽन्तःप्रवेशोऽस्माकं संपन्न इति निश्चिकायेति यावत् । एवं यथावत् कृत्स्नवेदनात् सर्वदर्शित्वं ब्रह्मणः । एवं विशिष्टादर्शिनां पुनः असर्ववित्त्वमेवेति विशिष्टस्य द्रष्टव्यत्वोपदेशो श्रुतिनिर्भरः । एवञ्च स एतमित्यत्र स इति जीवपरं चेत्, इदन्द्र इति पदं इदमिति दृश्यमानपरमात्मपरम् । स इति परमात्मपरं चेत्, इदन्द्र इति विशिष्टवेषेण सर्वदृश्यपदार्थदर्शीत्यर्थकमिति ध्येयम् ।

इदमदर्शमिती ३ इति प्लुतिः द्रष्टृगतपरितोषादिचित्तवृत्तिद्योतिकेति परे । इतिशब्दानन्तरमेव प्लुतिश्रवणात् वेदपुरुषस्य परितोषादिकं प्लुतद्योत्यं स्यात् ।

पुरुषे भवति । पञ्चाग्निविद्योक्तरीत्या आदौ पुरुषगतो भवतीत्यर्थः । संसरन्नित्येतत् गर्भ इत्यस्य व्याख्यानम् । पूर्वं पश्चाच्च गर्भे

स्त्रियां सिञ्चति, अथैत(न)ज्जनयति । तदस्य प्रथमं जन्म ॥

तत् स्त्रिया आत्मभूयं गच्छति, यथा स्वमङ्गम्, तथा । तस्मा-देनां न हिनस्ति । साऽस्यैतमात्मानं अत्र गतं भावयति ।

सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति ।

---

तु वैराग्यहेतुरिति द्रष्टव्यम् । तद्यदा स्त्रियां सिञ्चति, अथैतज्जनयति । तादृशं रेतः यदा पुमान् स्त्रियां सिञ्चति तत उत्तरक्षणे एतत् गर्भरूपं जनयति । **तदस्य प्रथम जन्म** । निषेक एव प्रथमजन्मेत्यर्थः ॥

**तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गम्, तथा ।** गर्भे निषिक्तं रेतः [तथा] स्त्रिया यथा करचरणा(ण ?)सिरादिकमैक्यं गच्छति तद्वदेव, तदङ्गभूतमेव ततो **बिभर्ति** तिष्ठतीत्यर्थः । (तदङ्गभूतमेव तिष्ठतीत्यर्थः । ततो बिभर्ति ।?) **तस्मादेनां न हिनस्ति । साऽस्यै तमात्मानमत्र गतं भावयति** । अत्र इदं(?) [गतं?] रेतोरूपेणानु-प्रविष्ट भर्तृरूपमात्मानं **भावयति** वर्धयति । तस्मात् सा न कैरपि **बाधयितव्या** पीडनीया ॥

**सा भावयित्री भावयितव्या भवति ।** रेतोरूपेण प्रविष्टं भर्तृरूपमात्मानं वर्धयन्ती स्त्री भर्त्रादिभिर्भोज्यभक्ष्यादिना पोषयितव्या भवति । उपकारकजनमनु प्रत्युपकारस्य कर्तव्यत्वादिति भावः । **तं स्त्री गर्भं बिभर्ति ।** तादृशरेतोरूपेण प्रविष्टं भर्तारं गर्भरूपं बिभर्ती

---

संबन्धात् संसृतिकुक्षिगतत्वाद्वा गर्भत्वम् । उत्तरक्षण इति । अथे-त्यस्य सेचनाव्यवहितोत्तरक्षण एवेत्यर्थः । जनयतेः कर्ता पिता ।

'तस्मादेनां न हिनस्ति' इत्यस्य, अङ्गभूतत्वादेव गर्भस्तां न बाधत इति शाङ्करादिव्याख्या । अत्र तु, एनां गर्भिणीं न हिंस्यादित्यर्थ इष्ट

**सोऽग्र एव कुमारं जन्मनोऽग्रे अधिभावयति। स यत् कुमारं जन्मनोऽग्रेऽधिभावयति, आत्मानमेव तद् भावयति, एषां लोकानां संतत्यै ; एवं संतता हीमे लोकाः। तदस्य द्वितीयं जन्म॥**

---

त्यर्थः। **सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति**। स पिता **अग्रे** प्रागेव गर्भ एव कुमारम्, उत्पत्तेरूर्ध्वं [च?] जातकर्मादिना, **भावयति** पोषयति। **स यत् कुमारं जन्मनोऽग्रेऽधिभावयति, आत्मानमेव तावत् भावयति**। स पिता जन्मन ऊर्ध्वं कुमारमग्रे प्रथमतो जातकर्मादिसंस्कारैर्भावयतीति यत् स्वार्थं(त्म ?)संवर्धनमेव। स्वस्यैव रेतोरूपेण तत्र प्रविष्टत्वात्। "पतिर्जायां प्रविशति' इत्यादिश्रवणात्। किमर्थमात्मानं पुत्ररूपेण जनयित्वा भावयतीत्यत्राह **एषां लोकानां संतत्यै**। अविच्छेदार्थमित्यर्थः। यदि हि पुत्रोत्पादनादि न कुर्युः, तर्हि इमे लोका विच्छिद्येरन्। **एवं संतता हीमे लोकाः**। एवं

---

इव। न बाधयितव्या = न बाधवती कार्या। न केवलं न हिंस्या, किंतु पोषयितव्या चेत्याह सेति। 'अग्र एव कुमारं जन्मनोऽग्रे अधि' इत्यत्र अग्रपदद्वयं अधीति च कालत्रयपरम्। गर्भधारणकाले पुंसवनादि, प्रसवकाले सुखप्रसवाद्यर्थमन्त्रप्रोक्षणादि, उत्तरकाले जातकर्मादि इत्याहुः। उत्तरवाक्य इवात्रापि एकम् अग्र इति पदं प्रथमत इत्यर्थकमेव स्यात्। यदि तु अधिभावनं नाम अतिशयितसंस्करणमिति विद्यारण्यार्थः, तदा पूर्ववाक्ये अग्रे इति पदद्वयं पूर्वोत्तरकालवाचि स्यात्। पतिर्जायामिति। "पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते" इति पूर्णा श्रुतिः। एवं संतता हीति। प्रकारान्तरेण सृष्टीर्विधाय मन्त्रतपःप्रभृतिशक्तिवैकल्ये लोकसंतत्यभावचिन्तया ब्रह्मादिभिरेवं सृष्टेव

सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते। अथास्यायमि-

पुत्रोत्पादनकर्म कुर्वता इमे लोकाः **संतताः** व्याप्ताः भवन्ति । **तदस्य द्वितीयं जन्म** । उपनयनादिसंस्कारलक्षण(णं?)द्वितीयं जन्मेत्यर्थः ॥

**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते** । अस्य पितुः पुत्ररूपोऽयमात्मा पुण्यकर्मभ्यः कर्तव्येभ्यः प्रतिनिधीयते । पुत्रः प्रतिनिधिस्थानीयः (प्रतिनिधिः तत्स्थानीयः?) सन् अतीते पितरि तत् कर्तव्यं कर्म सर्वं करोतीत्यर्थः । ततश्च पित्रा कस्यचित् कर्मणोऽवश्य-कर्तव्यस्याकरणेऽपि पुत्रकृतेनैव तत् कृतं भवतीत्यर्थः । **संप्रत्ति-विद्यायां** (बृह. ३-५-१७) तथोक्तत्वात् । **अथास्यायमितर आत्मा कृतकृत्यः** । पुत्रस्य प्रतिनिहितत्वादेव, **अस्य अयमात्मा** पित्रात्मा

---

तिर्यगादिष्विव मनुष्येष्वपि प्रवर्तनं पुराणादौ द्रष्टव्यम् । उपनय-नादीति । अत्र मातृशरीरान्निर्गमनं द्वितीयं जन्मेति परे । लोकप्रसिद्धश्च तत् । उच्यते चात्र, जन्मनोऽग्रे इति । अथापि तस्यानुवादमात्रत्वात्, पूर्ववाक्यविहितस्यैवात्र तदिति परामृष्टव्यत्वात्, 'मातृतो जायते तदस्य द्वितीयमिति वाक्याभावात्, अधिभावयति, तदस्य द्वितीय-मित्येव श्रवणात् उपनयनान्तसंस्कार एव द्वितीयजन्मत्वेनात्र स्वरस-प्रतीत इत्याशयः । प्रसिद्धश्च धर्मशास्त्रेषु द्विजानामुपनयनं द्वितीयं जन्मेत्यतः जातकर्मादीत्यनुक्त्वा उपनयनादीत्युक्तम् ।

संप्रत्तिविद्यायामिति । बृहदारण्यके (३-५-१७) 'अथातः संप्रत्तिः' इत्यारभ्य पठितेयम् । कृतकृत्यो भवतीति । अथशब्द आनन्तर्यवाचकः 'प्रतिनिधेः कृतत्वात्' इत्येवं पूर्ववाक्यार्थस्योत्तर-वाक्यार्थे प्रयोजकत्वं दर्शयति । तच्च प्रायणे नान्वेति; प्रतिनिध्य-करणेऽपि प्रायणात्, ऐहिकार्थमपि प्रतिनिधिकरणाच्च । किन्तु कृत-कृत्यत्वे तदन्वयः । स च, कृतकृत्यो भवतीति वाक्यसमाप्तौ सुघटित

तर आत्मा कृतकृत्यः । वयोगतः प्रैति ; स इतः प्रयन्नेव पुनर्जायते— तदस्य तृतीयं जन्म ॥ तदुक्तमृषिणा—

"गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्नथ श्येनो जवसा निरदीयम् ॥" इति ।

---

कृतकृत्यो भवतीत्यर्थः । **वयोगतः प्रैति ; स इतः प्रयन्नेव पुनर्जायते । तदस्य तृतीयं जन्म ।** एवं पुत्रे निक्षिप्तभारस्य वयोगतस्य जीर्णस्य मरणान्तरं यत् पुनर्जन्म, तत् तृतीयं जन्मेत्यर्थः । स्त्रियो(यां?) रेतोरूपेण प्रवेशनं प्रथमं जन्म । ततो बहिर्निर्गमनं द्वितीयं जन्म । तस्यैव पितुः प्रेत्य पुनर्भवनं तृतीयं जन्म । यद्यप्याद्यजन्मद्वयं पुत्रगतम् ; तृतीयं तु पितृगतम्—तथापि पितापुत्रयोरैक्याभिप्रायेण तथोक्तिरिति द्रष्टव्यम् ॥ **तदुक्तमृषिणा ।** तदेतद्वस्तु ऋषिणा मन्त्रेणाप्युक्तमित्यर्थः ।

**गर्भे...निरदीयमिति ।** अहं गर्भ एव **सन्** वर्तमानः एषां देवानां **विश्वा** विश्वानि, समस्तानि **जनिमानि** जननानि, **अन्ववेदम्** अन्वभूवम् । **नु**शब्दो वितर्के । **मा** मां **आयसीः पुरः** अयोविकारवन्निर्गमनप्रतिबन्धकानि शरीररूपाणि पुराणि शतसंख्याकानि **अरक्षन्** संसारकारागृहनिर्गमनप्रतिबन्धकतया स्थितानीत्यर्थः । पश्चात्तु देशिकोपदेशजनितोपायज्ञानेन, श्येनो यथा जवात् निर्गच्छति तथा, निर्ग-

---

इति कृतकृत्य इत्यस्य प्रैतीत्यनेनैकवाक्यता नादृता । वयोगतः प्रैतीति कथनं तु पुनर्जन्मनिरूपणार्थमिति भावः ।

बहिर्निर्गमनमिति उपनयनान्तसंस्कारोपलक्षकम् । पूर्वं तथोक्तत्वात् ।

श्येनो यथेति । अयं हि वामदेवः पुरुषरूपः ऋषिरेवं सूक्तमाह । तस्मादस्य जवसेति सूचितं श्येनसाजात्यमिह विवक्षितम् । न तु

**गर्भे एवैतच्छयानो वामदेव एवमुवाच ॥**

**स एवं विद्वान् अस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥**

**[यथास्थानं गर्भिण्यः] इति चतुर्थः खण्डः ।**

---

तोऽस्मीति मन्त्रार्थः । **गर्भे एवैतच्छयानो वामदेव एवमुवाच ।** अनेन प्रकारेण तद्(एतद्?)वाक्यं उवाचेत्यर्थः ॥

**स एवं विद्वान्....अमृतः समभवत् ।** एवं संसरन्नेव पूर्वं स्थितो वामदेवः ब्रह्मविज्ञान[संपन्नः ?] सन् अस्मात् शरीरसकाशा(?)-(विनाशा ?)दूर्ध्वमुत्क्रम्य अर्चिरादिमार्गेण भगवल्लोके सर्वान् कामान् आप्त्वा अपहतपाप्मत्वादीन् कल्याणगुणान् अनुभवन् मुक्तोऽभवदित्यर्थः । 'मुखं व्यादाय स्वपिति' इतिवत् आप्त्वेति सर्वकामानुभवस्य अमृतत्वप्राप्तेश्च पौर्वापर्यमविवक्षितमिति द्रष्टव्यम् । अत्र स एवं विद्वानित्युक्त्या इतरे सर्वे संसारघटीयन्त्र(न्त्रे?)परिवर्तमाना देहात्मभ्रमनिमग्नाः पुत्रपौत्रादीनप्यात्मानं मन्यमानाः शोचयन्ती(शोचन्ती ?)ति भावः ॥४॥

---

श्येनत्वमेवेत्याशयेन एवमुक्तम् । शाङ्करविद्यारण्यीयादावप्येवमेव । अत्र ऋग्वेद(मं, ४-२७-१)भाष्ये विद्यारण्यदर्शितः एवं श्लोकः—, 'श्येनभावं समास्थाय गर्भात् योगेन निस्सृतः । ऋषिर्गर्भे शयानः सन् ब्रूते गर्भे नु सन्निति' इति । उपरि चास्य गर्भक्लेशानुभवविरहः श्येनकृत्यादि च तत्र वर्ण्यते । तदस्य वामदेवस्य जननात् प्राक् गर्भे स्मृतं श्येनपक्षिरूपस्वपूर्वजन्मवृत्तमत्रोक्तं स्यादिति प्रतीयते । अथापि अमृताहरणादिवर्णनात् तादृशप्रसिद्धश्येनसाजात्यमेव तत्रापि विवक्षितमित्येव सर्वसंमतम् ।

अस्य चतुर्थखण्डस्यारम्भे, 'अपक्रामन्तु गर्भिण्यः' इति ;

अथ पञ्चमः खण्डः ।

कोयमात्मेति वयमुपास्महे कतरः स आत्मा ।

[1]कोयमात्मेति वयमुपास्महे कतरस्स आत्मा । पूर्वं ब्रह्म-विदः सर्वे मिलित्वा अस्माकमुपास्यभूत आत्मा कः, स कीदृग्गुण-विशिष्ट इति मीमांसाञ्चक्रुरित्यर्थः । अयं भावः-देहेन्द्रियमनःप्राणधीजीव-

खण्डान्ते, 'यथास्थानं गर्भिण्यः' इति च वेदकोश उपलभ्यते । उपनिषद्भाष्ये तु परकीयेऽपि नेदं स्पृष्टम् । नूनं सम्यग्रक्षणेऽपि श्येनरूपेण गर्भान्निष्क्रमणरूपार्थश्रवणे गर्भिण्यो जातु बिभीयुरिति तासामेतदर्थश्रवणान्निवर्तनार्थमित्थं प्राचीनैरुपनिबद्धमिदं न वेद-वाक्यमिति सर्वैरपि न व्याख्यातमिति स्यात् । [1]

कोयमात्मेति । अत्र उपास्मह इत्यत्र यमिति शेषपूरणेन वयं यमुपास्महे, अयमात्मा क इति, स आत्मा कतर इति वाक्यार्थो ग्राह्यः । यद्वा कोयमित्यत्र कः यं इति पदच्छेदेन 'यं वयमात्मेत्युपास्महे स आत्मा कः, कतरः' इत्येवार्थो युक्तः । बहूनां मध्ये कस्यात्मत्व-मिति जिज्ञासासत्त्वात् कतर इति कतम इत्यर्थकम् । कतम इति

1 यतं चतुर्थखण्डं द्वितीयाध्यायत्वेन, आत्मा वा इत्यादिकम् एतत्पूर्वभागं प्रथमाध्यायत्वेन च निर्दिश्य अस्मिन् द्वितीयेऽध्याये खण्डचतुष्टयविभागः क्वचिदादृतोऽस्ति—प्रथमं जन्मेत्यन्तः प्रथमः, द्वितीयं जन्मेत्यन्तो द्वितीयः, तदुक्तमृषिणेत्यन्तः तृतीयः, अवशिष्ट-श्चतुर्थ इति । प्रथमेऽध्याये तु यथानिर्दिष्टमेव खण्डत्रयम् । कोय-मात्मेत्यारभ्य च तृतीयोऽध्यायः । तत्रापि खण्डत्रयम्, मनश्चैत-दित्यन्तम्, नामधेयानि भवन्तीत्यन्तम्, इत्युपनिषदित्यन्तश्चेति । एवंरूपस्य विभागस्य उपक्रमोक्तात्मषट्कनामाननुगुणत्वात् शाङ्करादि-व्याख्यायामनिर्देशाच्च इहापि आदरणं न कृतम् । एवं तत्तत्खण्डे अवान्तरवाक्यविभागोऽपि अर्थाननुसारित्वात् परैरनिर्देशाच्च नादृत इति ध्येयम् ।

प्रयोक्तव्ये कतर इति प्रयोगस्तु, देहेन्द्रियाद्यतिरिक्तवास्तवात्मनिर्धारणानन्तरमपि स आत्मा जीवात्मा परमात्मा वेति द्वयोरेकतरजिज्ञासा भवतीति सूचनाय। अथवा कतर इति कीदृग्गुणविशिष्ट इत्यर्थकं भाष्याभिमतम्।

अत्र वाक्यशैल्या पर्यालोच्यमानायामेवं योजना प्रतीयेत—कोयमित्यारब्धस्य प्रश्नस्य 'वश इति' इत्यत्र इतिशब्देनोपसंहारः। ततः सर्वाण्येवेत्यादिना समाधानम्। तत्र येनवेति वाकाराणां श्रवणात् चक्षुरादीनां मिथो हि भेदः सूचितः। यदेतद्धृदयं मनश्चेति हृदये मनसि च एकयच्छब्दस्य? प्रयोगात्तु द्वयोरवस्थाभेदेऽपि धर्म्यैक्यमस्तीति सूच्यते। संज्ञानं विज्ञानमित्युपक्रमे पृथक् यच्छब्दस्याप्रयोगात् एतच्छब्दश्रवणाच्च एतन्मन एव संज्ञानादिपदविवक्षितम्, यथा श्रुत्यन्तरे, 'कामो विचिकित्सा श्रद्धा' इत्यारभ्य. 'सर्वं मन एव' इति, तथेति। तथाच यानीमानि चक्षुरादीनि उक्तानि, तेषु कतम आत्मा, उत तदन्य इति प्रश्नः। सर्वातिरिक्तं प्रज्ञानं ब्रह्मैवात्मेति उपर्युच्यते सर्वाण्येवेत्यादिनेति। अत्र तु भाष्ये योजनेयं नेष्टा। उपरि एष ब्रह्मेत्यादिना भूतभौतिकदेवतिर्यङ्मनुष्यस्थावरजीवानां प्रज्ञानात्मकत्वस्य वक्ष्यमाणत्वात् तद्वत् उपकरणभूतेन्द्रियमनःप्राणधर्मभूतज्ञानानामपि तदात्मकत्वस्य वक्तव्यस्य कथनपरतया न्यूनतापरिहारेण वाक्यार्थवर्णनं युक्तम्। येनवेत्यादिसंदर्भस्य अयमयं वाऽऽत्मेति कोटिसमर्पकत्वे तत्र जीवात्मपरमात्मरूपकोट्यनुल्लेखादपि न्यूनता स्यात्। संज्ञानं विज्ञानमित्यादीनां धर्मभूतज्ञानविशेषरूपमुख्यार्थत्यागेन तत्करणमनःपरत्वमपि क्लिष्टम्। इतिशब्दश्च प्रयत्नादिरूपधर्मभूतज्ञानप्रकारग्राही भवितुमर्हति। संज्ञानमित्यादौ पुनर्यच्छब्दाप्रयोगश्च पूर्वमेव येन विजानातीति प्रयोगादिबलात् ज्ञानादिकरणापेक्षया ज्ञानभेदः सुस्पष्ट इत्याशयेन। अतः कतरः स आत्मा इत्यत्रैव प्रश्नसमाप्तिः; येनवेत्यादि च समाधानमिति। तत्र चक्षुरादिकरणानां प्राक् तत्तद्देवताधिष्ठितत्वस्य

येन वा (रूपं) पश्यति, येन वा (शब्दं) शृणोति, येन वा गन्धानाजिघ्रति, येन वा वाचं व्याकरोति, येन वा स्वादु चास्वादु च विजानाति, यदेतद्धृदयं मनश्च एतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं

---

परमात्मानः आत्मशब्दप्रयोगविषयाः । एषां मध्ये उपास्य आत्मा क इति मीमांसाञ्चक्रुरिति । एवं मीमांसित्वा जातनिश्चयप्रकारमाह **येन वा रूपं पश्यति...येन वा स्वादु च अस्वादु च विजानाति ।** अनेन चक्षुश्श्रोत्रघ्राणवाग्रसनेन्द्रियोपलक्षितानि सर्वाणि बाह्येन्द्रियाणि उक्तानि भवन्ति । यानि वा [येन वा पश्यति] इन्द्रियाणीति पर्यवसितोऽर्थः। **यदेतत् हृदयं मनश्च** । अनेनान्तरिन्द्रियमुक्तं भवति । **हृदयं मन** इत्यवस्था अन्तरिन्द्रियस्य भेदः (इति अन्तरिन्द्रियस्यावस्थाभेदः ?) ।

**एतत् संज्ञानमाज्ञानं....वश इति।** एते सर्वे धर्मभूतज्ञानावस्थाविशेषाः । **संज्ञान**मेकत्वेन ज्ञानम् । **आज्ञान**मीषद्ज्ञानम् । **विज्ञानं**

---

कथितत्वात् परमात्माधिष्ठितत्वं तेषां नास्तीति भ्रम स्यादिति तन्निवारणं पृथक् पूर्वं कृत्वा, 'कथमिदम्, तेषां देवतान्तराधिष्ठितत्वात्' इत्याशङ्कायां एष ब्रह्मेत्यादिना चतुर्मुखप्रभृतीनां सर्वेषामपि तदधिष्ठितत्वादित्युपपाद्य तदनन्तरं भूतभौतिकाद्यपि तदधिष्ठितमुच्यत इति वाक्यस्वारस्यमवधेयमिति भाष्याशयः ।

मीमांसित्वेति । मीमांसामुपक्रम्य विस्तृतां मीमांसां कर्तव्यां सूचयित्वा शिष्यक्लेशपरिहाराय तामप्रदर्श्य सारमाहेत्यर्थः । अत्र परमात्मविवेकाद्यर्थे खण्डे–येनवेत्यादिना इन्द्रियाणि, एतत् संज्ञानमित्यादिना धर्मभूतज्ञानम्, एष ब्रह्मेत्यादिना देवान्, अथ भूतानि, अथ तिर्यङ्मनुष्यस्थावराणि च क्रमेण निर्दिश्य सर्वस्य प्रज्ञानशब्दवाच्यब्रह्मप्रतिष्ठितत्वं तदात्मकत्वमुक्तम्। एवञ्चास्य सर्वस्य परमात्म-

**मेधा दृष्टिः धृतिर्मतिः मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति। सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ एष ब्रह्मा एष इन्द्र एष प्रजापतिः एते सर्वे देवाः। इमानि च पञ्च महा-**

---

विभिन्नतया ज्ञानम्। **प्रज्ञानं** प्रकृष्टतया ज्ञानम्। **मेधा** धारणवती बुद्धिः। **दृष्टिः** प्रत्यक्षम्। **धृतिः** निश्चयरूपज्ञानविशेषः। **मतिः** मननम्। **मनीषा** स्वातन्त्र्यात्मकबुद्धिविशेषः। **जूतिः** प्रीतिः। **क्रतुः** उपासनम्। **असुः** प्राणः। **कामः** असन्निहितविषयाकाङ्क्षा। **वशः** इच्छा।

**सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति। प्रज्ञान-**शब्दितज्ञानस्वरूपस्य ब्रह्मणः, उक्तानि बाह्यान्तरि(रे ?)न्द्रियप्राणज्ञानानि नामधेयानि=तच्छरीराणि भवन्तीत्यर्थः। तस्यैव रूपभेदाः इति यावत्। यथा नामधेयानीमानि प्रतिपत्तिप्रयोजकतया तदेकशेषभूतानि भवन्ति, तथेत्यर्थः। एवमिन्द्रियमनःप्राणधीव्यतिरेकमुपास्यस्यात्मनः प्रदर्श्य ब्रह्मेन्द्रादिव्यतिरेकं साधयति **एष...एते सर्वे देवाः।** ब्रह्माद्या अपि देवास्तन्नामधेयानि, तच्छरीरभूता इत्यर्थः। इतश्च जीवानामु-

---

नियम्यतया तद्भिन्नत्वात् तत्रतत्र परमात्मत्वभ्रान्तिर्न कार्येत्युक्तं भवति।

**असुः प्राण इति।** यद्यपि पूर्वोत्तरसंदेशवशात् असुपदं लक्षणया जीवनौपयिकमनोवृत्त्यात्मकधर्मभूतज्ञानावस्थापरं युक्तम्, अथापि इन्द्रियादीनामिव मुख्यप्राणस्यापि भगवदात्मकत्वस्य वक्तव्यस्यानुक्त्या न्यूनता स्यादिति संदष्टस्यापि मुख्यार्थ एवादृतः। अत एव वक्ष्यति बाह्यान्तरेन्द्रियप्राणज्ञानानीति। सर्वाण्येवैतानीत्यस्यार्थपरत्वेन शब्दपरत्वाभावात् नामधेयानीत्येतत् लाक्षणिकं व्याख्यातम्। तत्तदर्थवाचकशब्दपरत्वे तु प्रज्ञानस्य नामधेयानीति, सर्वस्यापि शब्दस्य आपातप्रतीतस्वार्थविशिष्टपरमात्मवाचित्वादुच्यते इति स्यात्।

**भूतानि पृथिवी वायुराकाश आपो ज्योतींषीति, एतानि, इमानि च क्षुद्रमिश्राणीव बीजानि, इतराणि चेतराणि च अण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि च, अश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरम्, सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥**

---

पास्यात्मव्यतिरेक उक्तो भवति। भूतभौतिकशरीरव्यतिरेकं साधयति **इमानि च पञ्च महाभूतानीति**। तान्येव दर्शयति **पृथिवी वायुराकाश आपो ज्योतींषीति**। निर्दिष्टानि पञ्च महाभूतानीत्यन्वयः। **एतानीमानि च क्षुद्रमिश्राणीव बीजानि। क्षुद्रैः** अल्पकैर्मिश्राणि। **इव**शब्दोऽनर्थकः। तत् द्वेधा दर्शयति **इतराणि चेतराणि च**। तान्येव दर्शयति **अण्डजानि** पक्ष्यादीनि; **जारुजानि** जरायुजानि, मनुष्यादीनीत्यर्थः। **स्वेदजानि चोद्भिज्जानि च**। **स्वेदजानि** यूकादीनि; **उद्भिज्जानि** वृक्षादीनि। **अश्वा गावः पुरुषा हस्तिनः, यत्किचेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्**। **यच्च** गवाश्वपुरुषहस्तिपतत्र्यात्मकं जङ्गमं प्राणिजातम्, यच्च स्थावरम्, तत् सर्वं च। **प्रज्ञानेत्रं, प्रज्ञाने प्रतिष्ठितम्**। प्रज्ञैव **नेत्र**मस्येति प्रज्ञानेत्रम्। नीयते अनेनेति **नेत्रम्** अन्तर्यामीत्यर्थः। **प्रज्ञाने** ब्रह्मणि उत्पत्तिस्थितिलयकालेषु प्रतिष्ठितम्। प्रज्ञानाश्रयमित्यर्थः। **प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा**। सर्वस्य जगत इति शेषः। **प्रज्ञानं ब्रह्म**। अतः प्रज्ञानमेव ब्रह्म। तस्य सर्वान्तर्यामित्वेन स्वरूपतो गुणतश्च निरतिशयबृहत्त्वस्य प्रज्ञान एव सत्त्वात् इति भावः।

---

**इतराणि =योनिजानि। इतराणि =अयोनिजानि।**

स एतेनैव प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्वान् कामान् आप्त्वाऽमृतस्समभवत् समभवदिति ओं इत्युपनिषत् ॥ इति पञ्चमः खण्डः

---

अथ षष्ठः खण्डः

वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम् । आविरावि(वी)र्म एधि । वेदस्य म आणी स्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान् संदधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद् वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । अवतु

---

**स एतेनैव प्रज्ञेनाऽऽत्मना असाल्लोकादुत्क्रम्य अमुष्मिन् स्वर्गे लोके सर्वान् कामान् आप्त्वा अमृतस्समभवत् समभवदित्यों।** स एवंवित् असाल्लोकादर्चिरादिमार्गेण भगवल्लोकं गत्वा प्राज्ञेन ब्रह्मणा सह 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्युक्तरीत्या सर्वान् कल्याणगुणान् अनुभवन् आविर्भूतब्र(ब्रा ?)ह्मस्वरूपो भवतीत्यर्थः ॥५॥

**वाङ्मे मनसि....प्रतिष्ठिता** ........................ ॥ ६ ॥

---

स्वर्ग इति । स्वर्गशब्दस्य भगवल्लोकपरत्वं केनकठादौ दृष्टम् ; कठोपनिषद्भाष्ये सुदूरप्रपञ्चनेन स्थापितश्च । ब्रह्मणा सहेति सहशब्दप्रयोगः 'सह ब्रह्मणा' इति उपात्तश्रुत्यनुसारात् । उत्क्रमणाद्यमृतभवनान्ते सर्वत्र ब्रह्माधीनत्वज्ञापनाय प्रज्ञेनात्मनेति तृतीयेत्यर्थान्तरग्रहणेऽपि न क्षतिः ।

वाङ्मे इति षष्ठखण्डविवरणं शाङ्कर इवात्राप्युपेक्षितम्, केवलशान्तिपाठत्वात् । तदर्थसंग्रहश्च...........भक्तिश्रद्धादिना प्रवृत्तस्य मे वाक् मनश्च मिथः प्रतिष्ठितम् । मम उपर्युपरि आविर्भव (हे वाक् !) । वेदस्य मह्यमानयनसमर्थे भवथः (हे वाङ्मनसे !) । मम श्रुतं=ज्ञानं मा परित्यज (हे मनः !) । सर्वेष्वहस्सु रात्रिषु च

कारम् ॥ ओं शान्तिः शान्तिः शान्तिः ॥

इति आत्मषट्के षष्ठः खण्डः ॥

## इति ऐतरेयोपनिषत् (आत्मषट्कम्) ।

॥ श्रीरस्तु ॥

---

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावुदञ्चयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमत्ताताचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपाद-
सेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनि
पादसेवासमधिगतपारमहंस्यस्य **श्रीरङ्गरामानुजमुनेः**
कृतिषु **ऐतरेयोपनिषत्प्रकाशिका** संपूर्णा ॥

---

अधीतमनुसंधास्यामि—इति रीत्या भाव्यः ॥

ब्रह्मसूत्रविषय इव उपनिषद्विषयेऽपि श्रीभाष्यमेव भाष्यम् । अस्मादृशव्याख्यानं तु तद्विवरणमात्रमित्याशयेन भाष्यसुधामित्यादि, आद्रियतां मदुक्तिमिति च ।

श्रुत्यन्तलक्ष्मणमुनेः श्रीपदाम्बुजसेविना ।
श्रीरङ्गलक्ष्मणमुनिप्रापितज्ञानसंपदा ॥
तर्कार्णवाद्युपाख्येन नैकाः कृतवता कृतीः ।
वीरराघवसंज्ञेन वात्स्यसच्चक्रवर्तिना ॥
ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
ऐतरेयात्मषट्कं तद्भाष्यञ्चैवं परिष्कृतम् ॥

इति श्रीवात्स्यवीरराघवाचार्यकृतिषु
**ऐतरेयोपनिषद्भाष्यपरिष्कारः संपूर्णः** ॥

श्री लक्ष्मीहयवदनपरब्रह्मणे नमः ॥

शुभमस्तु

# ऐतरेयोपनिषत्

## (ऐतरेयारण्यकेषु द्वितीयतृतीयारण्यकरूपा)

### (तत्र आत्मषट्कात् पूर्वभागः)

---

### ऐतरेयोपनिषदर्थसंग्रहः ।

तैत्तिरीयादौ, 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति' इत्येवमुपक्षिप्तानि उपकरणानि अधिकृत्यात्र प्रपञ्चः। गवामयनाख्यसत्रे यत् उपान्त्यमहः महाव्रतनामकम्, तत्रत्ये निष्केवल्याख्ये उक्थशस्त्रे पृथक्फलार्थविविधदृष्टिविधानमुखेन च तत्त्वेऽवतारणमत्र क्रियते। 'योऽसौ सोऽहम्' इति मोक्षार्थोपासनम्, मुमूर्षोर्मोक्षार्थकर्तव्यप्रकारश्च दर्श्यते । अत्रैवं प्रत्यध्यायं खण्डक्रमेणार्थस्थितिः—

### पूर्वभागे—प्रथमाध्याये

१. कर्मब्रह्मात्मकवैदिकसत्यपथातिक्रमात् पक्षिस्थावरसरीसृपरूपेण जन्म । अग्निवाय्वादित्योपासिनामुत्कृष्टफलम्। (वेदत्रयप्रवर्तकलोकत्रयदेवतारूपाग्निवाय्वादित्यकथनं वेदोक्तसर्वदेवतोपलक्षणम् ।)

२. उक्थे अधिदैवतमध्यात्मञ्च दृष्टिभेदा अग्निवाय्वादित्याराधनता च।

३. पूर्वं, 'पुरुष एवोक्थम्' इति शरीरं प्रस्तुत्य, 'अयमेव महान् प्रजापतिरहमुक्थमस्मि' इति विहिते भावने विषयस्य (मनुष्यशरीरस्य) प्रजापतिकार्यसंताने परमसारत्वम्, अन्नमयतया हिरण्मयत्वञ्च ।

४. तत्र पादाग्रादिक्रमेण ब्रह्मणः शिरःश्रयणम् । तत्र चक्षुश्श्रोत्रमनोवाक्प्राणरूपाणां श्रियां स्थितिः। तत्रापि स्वोत्क्रमणप्रवेशाभ्यां शरीरस्य शीर्णत्वोत्थानक्षमत्वकरणवपस्य प्राणस्येतरापेक्षयोत्कृष्टा (प्राणसंवादः) ।

५. आसां श्रियां स्वस्वदेवताधिष्ठितानां अध्यात्मं संयोगोऽधिदैवतञ्च । तत्र प्राणान्नादित्यानां सत्यशब्देन योगव्युत्पत्त्या ग्रहणम् । छन्दोग्ये च प्रस्तावोद्गीथप्रतिहारेषु प्राणादिदृष्ट्युक्तेस्तेषां विशिष्टता।

## प्रथमोऽध्यायः

खण्डः १. हरिः ओम्—एष पन्थाः, एतत् कर्म, एतद् ब्रह्म,

---

६. छन्दोमयदेहे छन्दोन्तरेषु लोमादिभूतेषु बृहत्याः प्राणरूपतेति बृहतीमयमुक्थं प्राणः। वाग्रपतन्तिसंबद्धनामात्मकदामबद्धे जगति सर्वस्य प्राणविष्टब्धता। (तन्तिः=दीर्घमहारज्जुः। दाम=पाशः।)

७. उक्तवागादिपञ्चकेन स्वस्वाधिष्ठानार्थसृष्टदेवतामुखेन तत्तत्देवतानियम्यनिखिललोकफलसंपादनं पुरुषाय क्रियत इति पुरुषस्य विभूतिमत्त्वम्।

८. उक्तवागादिपञ्चकस्य ब्रह्मगिरित्वं पाप्मगिरणात् गिरित्वञ्च। प्राणस्य भूतित्वाभूतित्वामृतदेवतात्वानि।

---

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

ऐतरेयब्राह्मणस्थं यदारण्यकपञ्चकम्।<br>
महाव्रताख्यं कर्मात्र प्रथमारण्यकेरितम्॥ १॥<br>
एकमेकाहमितरन्महानाम्न्यंशमभ्यधुः।<br>
सत्रावयवमन्यच्च त्रिविधं तन्महाव्रतम्॥ २॥<br>
महानाम्न्याख्यमन्त्रास्तु चतुर्थारण्यकोदिताः।<br>
महाव्रतप्रयोगश्च दृश्यं आर्षे तु पञ्चमे॥ ३॥<br>
आरण्यकं द्वितीयं यत् तृतीयञ्चोभयं विदुः।<br>
ज्ञानकाण्डं द्वयञ्चेदमृग्वेदोपनिषन्मतम्॥ ४॥<br>
आत्मषट्कं द्वितीयान्ते तद्व्यथावदभाष्यत।<br>
तत्पूर्वोत्तरभागार्थः संग्रहेण प्रदर्शितः॥ ५॥<br>
द्वितीयमुद्रणे त्वत्र भागयो मुद्र्यमाणयोः।<br>
दुर्ग्रहाणां तु शब्दानामर्थः संगृह्यते तयोः॥ ६॥

एष पन्था इति कर्म ब्रह्मणोर्ग्रहणम्। उभयोरपि सत्यत्वम्। ब्रह्मप्राप्त्युपायाङ्गभूतस्य कर्मणः सात्त्विकत्यागपरिकर्मितस्य, 'अनृतेन हि प्रत्यूढाः' इत्युक्तानृतकर्मविलक्षणत्वात्। अनृतं तु काम्यं कर्म

एतत् सत्यम् । तस्मान्न प्रमाद्येत् । तन्नातीयात् । न ह्यत्यायन् पूर्वे । येऽत्यायंस्ते पराबभूवुः । तदुक्तमृषिणा,

> "प्रजा ह तिस्रोऽत्यायमीयुः न्यान्या अर्कमभितो विविश्रे ।
> बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेश ॥"

इति । 'प्रजा ह तिस्रोऽत्यायमीयुः' इति । या वै ता इमाः प्रजास्तिस्रो अत्यायमायन् । तानीमानि वयांसि वङ्गावगधाश्चेरपादाः । 'न्यान्या अर्कमभितो विविश्र' इति । ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम् । 'बृहद्ध तस्थौ भुवनेष्वन्तः' इति । अद उ एव बृहत् भुवनेष्वन्तः असावादित्यः । 'पवमानो हरित आविवेश' इति । वायुरेव पवमानो दिशो हरित आविष्टः ।

---

कृत्रिमत्वात् कृतमिति निन्द्यते, नास्त्यकृतः कृतेनेति । तस्मान्न प्रमाद्येत् = सत्यात् पथो न भ्रश्येत् । यथावत् कर्मानुतिष्ठेत्; ब्रह्म च जानीयात् । तन्नातीयात् । उभयविलक्षण उपायोऽस्तीति मत्वा तदतिक्रमं न कुर्यात् । अत्यायन् = अत्यक्रामन् । अत्यायम् = अतिक्रमम् । अन्याः वैदिकश्रद्धावत्यस्तु प्रजाः अर्कम् = अग्निम् । निविविश्रे = निविष्टाः । बृहत् = आदित्यः । पवमानः—वायुः।तावुभावप्यभिनिविष्टा इत्यनुषंगेण वर्णनीयम् । इमे त्रयः वेदत्रयप्रवर्तकाः लोकत्रयदेवताभूताः । इदं वैदिकसर्वदेवतोपलक्षणम् । एतन्मन्त्रविवरणमनन्तरं वेदेनैव क्रियते प्रजाहेत्यादिना । तानीमानीति वयोवङ्गावगधेरपादानां ग्रहणम् । वयांसि पक्षिणः। वंगाः = वनगताः—वृक्षाः अवगधाः व्रीह्याद्योषधयः; रक्षकत्वात् अभिलप्यमाणत्वाच्च। अव रक्षणे, गृधु अभिकांक्षायाम् । ईरपादाः सरीसृपाः ।

ख. २. उक्थमुक्थमिति वै प्रजा वदन्ति । तदिदमेवोक्थम् इयमेव पृथिवी । इतो हीदं सर्वमुत्तिष्ठति, यदिदं किञ्च । तस्याग्निरर्कः ; अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते । अन्तरिक्षमेवोक्थम् । अन्तरिक्षं वाऽनु पतन्ति । अन्तरिक्षमनु धावयन्ति । तस्य वायुरर्कः, अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते । असावेव द्यौरुक्थम् । अमुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च । तस्यासावादित्योऽर्कः । अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते । इत्यधिदैवतम् ।

अथाध्यात्मम् । पुरुष एवोक्थम् । अयमेव महान् प्रजापति-रहमुक्थमस्मीति विद्यात् । तस्य मुखमेवोक्थम्, यथा पृथिवी तथा । तस्य वागर्कः । अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते । नासिके एवोक्थं यथाऽन्तरिक्षं तथा । तस्य प्राणोऽर्कः । अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते । तदेतत् ब्रध्नस्य विष्टपम्, यदेतत् नासिकाग्रे

---

२. कर्माङ्गे उक्थशास्त्रे दृष्टिरूपोपासनं विधीयते—यतः किञ्चिदुत्तिष्ठति, तत् उक्थम् । देवताप्रसादोत्थितिहेतुरुक्थं सर्वोत्थितिहेतुर्पृथिवीत्वेन द्रष्टव्यम । तस्यार्कः = पृथिवीभूतोक्थशास्त्र-संबन्धी अर्च्यो देवः अग्निरिति तत्संबन्धिनः अशीतिसंख्याकास्तृचाः अन्नमिति। अथान्तरिक्षदृष्टिः। तस्य = अन्तरिक्षभूतस्योक्थस्य । अथ तत्र द्युलोकदृष्टिः । तस्य = द्युलोकभूतस्योक्थस्य । अधिदैवं दृष्टिरुक्ता ; अध्यात्ममुच्यते । पूर्वमुक्थे पृथिवीदृष्टिरुक्ता, अत्र मुखदृष्टिः ; अर्कोऽप्यध्यात्ममन्यः। अन्नं तु यथापूर्वम् । एवमन्तरिक्षवत् नासिका । विनतं = निम्नं नासिकामूलं ब्रध्नस्य = सूर्यस्य विष्टपं = स्थानम् । तत्र ब्रह्मणो ध्येयत्वात् । द्योवत् ललाटम् । पृथिवीत्वदृष्टिरुक्थे विहिता । सा पृथिवी भोक्तृभोग्यात्मिका । अत्तृत्वमाद्यत्वञ्च पृथिव्याम्। अत उपासकोऽप्यत्ता आद्यश्च । तथा एतदीक्षितव्यानामपि अत्तृत्वमाद्यत्वञ्च ॥

विनतमिव । ललाटमेवोक्थं यथा द्यौः, तथा । तस्य चक्षुरर्कः । अन्न-मशीतयः । अन्नेन हीदं सर्वमश्नुते ।

समानमशीतयोऽध्यात्मञ्चाधिदैवतञ्चान्नमेव । अन्नेन हीमानि भूतानि सर्वाणि समनन्ति३ । अन्नेनेमं लोकं जयति । अन्नेनामुम् । तस्मात् समानमशीतयोऽध्यात्मञ्चाधिदैव-ञ्चान्नमेव ।

तदिदमन्नमन्नादम् । इयमेव पृथिवी । इतो हीदं सर्वमुत्तिष्ठति, यदिदं किञ्च । यद्ध किञ्चेदं प्रेर्ता३ इ, तदसौ सर्वमत्ति । यदु किञ्चातः प्रैर्ती३, तदियं सर्वमत्ति । सेयमित्याद्याऽत्त्री । अत्ता ह वा आद्यो भवति । न तस्येशे, यन्नाद्यात् यद्वैनं नाद्युः ।

३. अथातो रेतसः सृष्टिः । प्रजापते रेतो देवाः । देवानां रेतो वर्षम् । वर्षस्य रेत ओषधयः । ओषधीनां रेतोऽन्नम् । अन्नस्य रेतो रेतः । रेतसो रेतः प्रजाः । प्रजानां रेतो हृदयम् । हृदयस्य रेतो मनः । मनसो रेतो वाक् । वाचो रेतः कर्म । तदिदं कर्म कृतमयं पुरुषो ब्रह्मणो लोकः । स इरामयः । यद्धीरामयस्तस्माद्धिरण्मयः । हिरण्मयो ह वा अमुष्मिन् लोके संभवति । हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे, य एवं वेद ॥

---

प्रेर्ते = म्रियते। ईर गताविति धातुः। इण् गताविति धातौ प्रैति इतिवत्।

३. पुरुषस्य महत्त्वमुक्तम्, तदुपपाद्यते अथात इति । रेतश्शब्दः सारवाची ; यथा छान्दोग्यारम्भे रसशब्दः। अन्नस्य रेतो रेत इति । शुक्राख्यं प्रसिद्धं पुरुषरेत एवान्नसारभूतमित्यर्थः । कर्म कृतम् अयं पुरुषः । शरीरस्य कर्माधीनत्वात् कर्मसारत्वाच्चैवमुक्तिः । एवं महत्त्वात् पुरुषे = शरीरे ब्रह्म वसति । पुरुष एष एव हिरण्मयः ; यस्मात् इरामयः = अन्नमयः । हिरण्मयत्वदृष्टौ हिरण्मयदेहप्राप्तिः ।

४. तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम् । यत् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्, तस्मात् प्रपदे । तस्मात् प्रपदे इत्याचक्षते । शफाः, खुरा इत्यन्येषां पशूनाम् । तदूर्ध्वमुदसर्पत्; ता ऊरू अभवताम् । उरु गृणीहीत्यब्रवीत्; तदुदरमभवत् । उर्वेव मे कुर्वित्यब्रवीत्; तदुरोऽभवत् । उदरं ब्रह्मेति शार्कराक्ष्या उपासते । हृदयं ब्रह्मेत्यारुणयः । ब्रह्मा हैव ता३इ । ऊर्ध्वं त्वेवोदसर्पत्; तच्छिरोऽश्रयत । यच्छिरोऽश्रयत, तच्छिरोऽभवत् । तच्छिरसः शिरस्त्वम् । ता एताः शीर्षञ्छ्रियः श्रिताः, चक्षुः श्रोत्रं मनो वाक् प्राणः । श्रयन्तेऽस्मिन् श्रियः । य एवमेतत् शिरसः शिरस्त्वं वेद ।

ता अहिंसन्त, 'अहमुक्थमस्म्यहमुक्थमस्मि' इति । ता अब्रुवन्, 'हन्तास्माच्छरीरादुत्क्रामाम । तद् यस्मिन् न उत्क्रान्ते इदं शरीरं पत्स्यति तदुक्थं भविष्यति' इति। वागुदक्रामत्। अवदन् अश्नन् पिबन् आस्तैव । चक्षुरुदक्रामत् । अपश्यन् अश्नन् पिबन् आस्तैव । श्रोत्रमुदक्रामत् ।

---

४. पुरुषस्य शरीरस्य ब्रह्मप्रवेशार्हं स्थानमुक्तम् । ब्रह्मणस्तत्र पादाग्रे आरभ्य शिरःपर्यन्तप्रवेशमाह । प्रपदाभ्यां = पादाग्राभ्याम् । प्रशब्दः प्रथमं ब्रह्मप्रतिष्ठात्वं वक्ति । पश्वादिदेहे शफ एव पादाग्रम् । गृणीहि = गिरणयोग्यं विपुलं छिद्रं कुरु । ब्रह्म हैव ता १३ इति । अहेत्यव्ययम् । ते इत्यत्र प्लुतनिबन्धनः विकारः । ते = उदरं हृदयं ब्रह्मैव । शीर्षन् = शिरसि । श्रियः पञ्च चक्षुरादयः । श्रीश्रितत्वात् शिरस्त्वम् ।

उक्तेषु वागादिषु प्राणप्राधान्यमाह ता इत्यादिना । यस्योत्क्रमणे देहस्य पतनम्, यस्य प्रवेशे च देहस्य कार्यक्षमतयोत्थानम्, स प्राण एव प्रथममुत्क्रमणात् पतनमुच्यते, ततः प्रवेशादुत्थितिः। अहिंसान्त-

अशृण्वन् अश्नन् पिबन् आस्तैव । मन उदक्रामत् । मीलित इवाश्नन् पिबन्नास्तैव । प्राण उदक्रामत्। तत् प्राण उत्क्रान्तेऽपद्यत तदशीर्यत अशारीती३ तच्छरीरमभवत् । तच्छरीरस्य शरीरत्वम् । शीर्यंते ह वा अस्य द्विषन् पाप्मा भ्रातृव्यः, पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति, य एवंवेद ।

ता अहिंसन्तैव, 'अहमुक्थमस्म्यहमुक्थमसि' इति । ता अब्रुवन् , 'हन्तेदं पुनः शरीरं प्रविशाम । तद् यस्मिन् नः प्रपन्ने इदं शरीरमुत्थास्यति, तदुक्थं भविष्यति' इति । वाक् प्राविशत् ; अशयदेव । चक्षुः प्राविशत् ; अशयदेव । श्रोत्रं प्राविशत् ; अशयदेव । मनः प्राविशत् ; अशयदेव । प्राणः प्राविशत् ; तत् प्राणे प्रपन्ने उदतिष्ठत् । तदुक्थमभवत् । तदेतदुक्थां३ प्राण एव । प्राण उक्थमित्येव विद्यात् । तं देवा अब्रुवन् , 'त्वमुक्थमसि । त्वमिदं सर्वमसि । तव वयं स्मः ; त्वमस्माकमसि' इति । तदप्येतदृषिणोक्तम् , "त्वमस्माकं तव स्मसि" इति ।

५. तं देवाः प्राणयन्त । स प्रणीतः प्रातायत । प्रातायीती३ तत् प्रातरभवत् । समागादिती३ तत् सायमभवत् । अहरेव प्राणो रात्रिरपानः । वागग्निश्चक्षुरसावादित्यः चन्द्रमा मनः दिशः

---

हिंसामकुर्वन् । प्राण उक्थमित्येव विद्यात्—वागाद्यपेक्षया प्राणश्रैष्ठ्यात् उक्थे प्राणदृष्टिः कार्या । उक्थ-उत्थशब्दयोरीषदेव भेद इति प्राणस्योत्थानहेतोः उत्थत्वात् उक्थे उत्थान्तर्भावाच्च उक्थे प्राणदृष्टिर्युक्तेति । अशारि =शीर्णम् । स्मसि =भवामः ।

५. प्राणस्य प्रातः सायमहो रात्रिरिति कालात्मकत्वमाह । प्रातायत—स्वविधेयवागादिरूपेण विस्तारं प्राप्तः। प्राताथि = विस्तृतः। समागादिति। वागादीनां व्यापारोपरमकाले अस्मिन् समाहारात् संगतत्वम्। वागग्निरित्यादिना वागादीनामिव तत्तदभिमानिदेवतानामपि

श्रोत्रम् । स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविर्विः, वतमित्येतत् तदुक्तं भवति। एतद्ध स्म वै तद्विद्वान् आह हिरण्यदन् वैदः, न तस्येशे यं मह्यं न दद्युरिति, प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेद, एतद्ध तत् । अनीशानानि ह वा अस्मै भूतानि बलिं हरन्ति, य एवं वेद । तत् सत्यम् । सदिति प्राणः, तीत्यन्नम्, यमित्यसावादित्यः । तदेतत् त्रिवृत् । त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति । स यदि ह वा अपि मृषा वदति, सत्यं हैवास्योदितं भवति, य एवमेतत् सत्यस्य सत्यत्वं वेद ॥

६. तस्य वाक् तन्तिः, नामानि दामानि। तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम् । सर्वं हीदं नामनी३ सर्वं वाचाऽभिवदति । वहन्ति ह वा एनं तन्तिसंबद्धाः, य एवं वेद । तस्योष्णिग् लोमानि, त्वग् गायत्री, त्रिष्टुब्मांसम्, अनुष्टुप् स्नावानि, अस्थि जगती, पङ्क्तिः मज्जा, प्राणो बृहती । सच्छन्दोभिश्छन्नः । त साच्छन्दांसीत्याचक्षते । छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणो यस्यां कस्याञ्चिद् दिशि

---

प्राणाभिमानिदेवताधीनत्वोक्तिः। हिरण्यदन् = हिरण्यदन्तः । प्राणः सत्यम्। सत्तियमित्यक्षरत्रयं क्रमात् प्राण-अन्न-आदित्यरूपेण द्रष्टव्यम्। एतदुपासनं छान्दोग्ये उषस्त्युपाख्याने, प्राणाधिकरणे च द्रष्टव्यम्।

६. वाक्तन्तिरिति । तन्तिः = बलीवर्दानां बहूनां बन्धनार्था दीर्घा रज्जुरेका । शंकुद्वयबद्धा प्रसारिता तन्तिरित्युच्यते । तत्र एकैकबन्धनार्थं योजितानि दामानि पाशा भवन्ति । एकैकप्राणिनामेव एकैकः पाशः । एतद्बद्धत्वं जीवस्य प्राणस्य च । सितं = बद्धम्, सामान्यतो वाक्संबन्ध उक्तः। वाग्विशेषैः छन्दोभिश्छादितत्वं पापात्

कामयते, य एवमेतच्छन्दसां छन्दस्त्वं वेद । तदुक्तमृषिणा ; 'अपश्यं गोपाम्' इति । एष वै गोपाः एष हीदं सर्वं गोपायति । 'अनिपद्यमानम्' इति। न ह्येव कदाचन संविशति। 'आ च परा पथिभिश्चरन्तम्' इति । आ च ह्येष परा च पथिभिश्चरति । 'स सध्रीचीस्स विषूचीर्वसानः' इति । सध्रीचीश्च ह्येष विषूचीश्च वस्ते इमा एव दिशः । 'आवरीवर्ति भुवनेष्वन्तः' इति। एष ह्यन्तर्भुवनेष्वावरीवर्ति। अथो 'आवृतासोऽवतासो न कर्तृभिः' इति । सर्वं हीदं प्राणेनावृतम् । सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धः । तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्धः, एवं सर्वाणि भूतानि आपिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येव विद्यात् ।

७. अथातो विभूतयोऽस्य पुरुषस्य । तस्य वाचा सृष्टौ पृथिवी चाग्निश्च । अस्यामोषधयो जायन्ते ; अग्निरेनाः स्वादयति, इदमाहरत, इदमाहरतेति । एवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च । यावदनु पृथिवी, यावदन्वग्निः, तावानस्य लोको भवति ; नास्य तावल्लोको जीर्यते, यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च, य एवमेतां वाचो विभूतिं वेद ।

प्राणेन सृष्टौ अन्तरिक्षञ्च वायुश्च । अन्तरिक्षं वाऽनु चरन्ति ।

---

रक्ष्यमाणत्वञ्च प्राणस्याह तस्येति । ऋषिणेति । वेदेनेत्यर्थः । मन्त्रं खण्डशो धृत्वा व्याख्याति अपश्यमित्यादिना । अथो इत्यारभ्य मन्त्रान्तरग्रहणम् । तत्र छादनप्रतिपादकभागमन्त्रस्य मुख्यतया ग्रहणम् आवृतास इति ।

७. उक्तानां पञ्चानां प्रपञ्चनेन पुरुषविभूतित्वमाह । पूर्वापरानुगुण्यात् प्राणपदं प्राणवायुपरमेव युक्तम् । अथापि प्राणे प्राणवायुसंबन्धाधिक्यात् घ्राणमेव प्राणपदविवक्षितमाहुः। प्राणस्येतरा-

अन्तरिक्षमनुश्रृण्वन्ति । वायुरस्मै पुण्यं गन्धमावहति । एवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षञ्च वायुश्च । यावदन्वन्तरिक्षं यावदनु वायुः, तावानस्य लोको भवति ; नास्य तावल्लोको जीर्यते, यावदेतयोर्न जीर्यतेऽन्तरिक्षस्य च वायोश्च, य एवमेतां प्राणस्य विभूतिं वेद ।

चक्षुषा सृष्टौ द्यौश्चाऽऽदित्यश्च । द्यौर्हास्मै वृष्टिमन्नाद्यं संप्रयच्छति आदित्योऽस्य ज्योतिः प्रकाशं करोति । एवमेतौ चक्षुः पितरं परिचरतो द्यौश्चादित्यश्च । यावदनु द्यौः यावदन्वादित्यः, तावानस्य लोको भवति ; नास्य तावल्लोको जीर्यते, यावदेतयोर्न जीर्यते दिवश्चादित्यस्य च, य एवमेतां चक्षुषो विभूतिं वेद ।

श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च । दिग्भ्यो हैनमायन्तीं३ । दिग्भ्यो विश्रृणोति । चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय कर्मणे । एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च । यावदनु दिशो यावदनु चन्द्रमाः, तावानस्य लोको भवति ; नास्य तावल्लोको जीर्यते, यावदेतेषां न जीर्यते दिशाञ्च चन्द्रमसश्च, य एवमेतां श्रोत्रस्य विभूतिं वेद ।

मनसा सृष्टा आपश्च वरुणश्च । आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे ; वरुणोऽस्य प्रजां धर्मेण दाधार । एवमेते मनः पितरं परिचरन्ति आपश्च वरुणश्च । यावदन्वापो यावदनु वरुणः, तावानस्य लोको भवति ; नास्य तावल्लोको जीर्यते, यावदेतेषां न जीर्यतेऽपाञ्च वरुणस्य च, य एवमेतां मनसो विभूतिं वेद ।

---

पेक्षया प्राधान्येऽपि पुरुषापेक्षया विभूतित्वं युज्यते । सर्वथा प्राणादिपञ्चकस्य ब्रह्मगिरेर्निरूपणमिहेति प्राणः कथमपि घटनीयः ।

८. आपा:३ इत्याप इति तदिदमाप एव। इदं वै मूलम्, अदस्तूलम्, अयं पिता, एते पुत्राः। यत्र ह क्व च पुत्रस्य, तत् पितुः। यत्र वा पितुः, तद्वा पुत्रस्येत्येतत् तदुक्तं भवति। एतद्ध स वै तद् विद्वानाह महिदासः ऐतरेयः, 'आऽहं मां देवेभ्यो वेद; ओमहं देवान् वेद; इतःप्रदाना ह्येते इतः संभूता इति।

स एष गिरिश्चक्षुः श्रोत्रं मनो वाक् प्राणः। तं ब्रह्मगिरिरित्याचक्षते। गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यम्। पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति, य एवं वेद।

स एषोऽसुः; स एष प्राणः; स एष भूतिश्चाभूतिश्च। तं भूतिरिति देवा उपासाञ्चक्रिरे। ते बभूवुः। तस्माद्धाऽप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति। अभूतिरित्यसुराः; ते ह पराबभूवुः। भवत्यात्मना; पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति, य एवं वेद। स एष मृत्युश्चैवामृतश्च। तदुक्तमृषिणा, 'अपाङ् प्राङेति स्वधया गृभीत' इति।

---

८. प्राणादीनां पञ्चानां ब्रह्मगिरिशब्दपरिभाष्यत्वमाह। अपां प्राणाप्यायकत्वात् तासां प्राधान्येन ग्रहणम्। आप्यायकसर्वभूतोपलक्षणमेतत्। तूलमिति कार्यवस्तु उच्यते। पिता = पुरुषः। पुत्राः = प्राणादयः। इतराख्यायाः स्त्रियः पुत्रः ऐतरेयः। एतन्नाम्नैव ऐतरेयब्राह्मणमिति व्यवहारः। आऽहं मां देवेभ्य इति। आ- अभिविधौ। अहं मां देवपर्यन्तं वेद। ओमदिति। आ उ मत् इति च्छेदः। अहं देवान् मत्पर्यन्तान् वेदेत्यर्थः। चक्षुश्श्रोत्रमनोवाक्प्राणपञ्चकं गिरिरिति ब्रह्मगिरिरिति च व्यपदिश्यते। गिरति भ्रातृव्यं = शत्रुं विनाशयति। अथ असुत्वादिभिः प्राणप्रशंसा। स्वधया—अन्नेन। गृभीतः = गृहीतः।

अपानेन ह्ययं यतः प्राणो न पराङ् भवति । 'अमर्त्यो मर्त्येनासयोनिः' इति । एतेन हीदं सर्वं सयोनि । मर्त्यानि हीमानि शरीराणी३, अमृतैषा देवता । 'ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युः, न निचिक्युरन्यम्' इति । निचिन्वन्ति हैवेमानि शरीराणी३ । अमृतैवेषा देवता । अमृतो ह वा अमुष्मिन् लोके संभवति; अमृतः सर्वेभ्यो भूतेभ्यो ददृशे, य एवं वेद य एवं वेद ॥

## इति ऐतरेयद्वितीयारण्यके प्रथमोऽध्यायः

## अथ द्वितीयोऽध्यायः

१. एष इमं लोकमभ्यार्चत् पुरुषरूपेण, य एष तपति । प्राणो

---

अमर्त्यः प्राणः । मर्त्येन–शरीरेण । दीर्घश्छान्दसः । तानि शरीराणि शश्वद् भवन्ति । विष्वक् भवन्ति विनश्यन्ति । तत एव मर्त्यानि सन्ति अन्यदमर्त्यं निश्चाययन्ति । प्राणस्यामृतत्वोक्तिः एकैकजीवग्राह्यसर्वशरीरानुवर्तित्वात् । अमर्त्यजीवनिरन्तरसहायत्वाद्वा ॥

इति प्रथमोऽध्यायः ॥

द्वितीयाध्यायपरिष्कारः

१—२. प्राणादित्ययोरैक्यम् । प्राणस्यानेकेष्यादिनाम-योगार्थयोगात् तत्तदृष्यादिनामवत्त्वम् ।

३. त्रिः उक्थगतबृहतीसहस्रशंसनतोषितेन इन्द्रेण विश्वामित्राय (प्रतर्दनायेव) प्राणात्मस्वतत्त्वोपदेशः ।

४. बृहतीसहस्रे शरीरात्मप्राणविवेचनम् । षट्त्रिंशदक्षर-बृहतीछन्दस्सहस्रगताक्षराणां उक्तपुरुषसंबन्धिशतपरिमितायुर्घटक-दिनसमसंख्याकत्वम् । एवंवित् परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति । तत्, 'योऽहं सोऽसौ, योऽसौ सोऽहम्' इति भावयेदिति ।

वाव तदभ्यार्चत ; प्राणो ह्येषः, य एष तपति । तं शतं वर्षाण्यभ्यार्चत् । तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति । तं यत् शतं वर्षाण्यभ्यार्चत्, तस्माच्छतर्चिनः । तस्माच्छतर्चिन इत्याचक्षते एतमेव सन्तम् । स इदं सर्वं मध्यतो दधे, यदिदं किञ्च । स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च, तस्मान्माध्यमाः' । तस्मान्माध्यमा इत्याचक्षते एतमेव सन्तम् । प्राणो वै गृत्सोऽपानो मदः । स यत् प्राणो गृत्सोऽपानो मदः, तस्मात् गृत्समदः तस्मात् गृत्समद इत्याचक्षते एतमेव सन्तम् । तस्येदं विश्वं मित्रमासीत् यदिद किञ्च । तद् यदस्येदं विश्वं मित्रमासीत् यदिदं किञ्च, तस्मात् विश्वामित्रः । तस्माद्विश्वामित्र इत्याचक्षते एतमेव सन्तम् । तं देवा अब्रुवन्, अयं वै नः सर्वेषां वाम इति । तं यद् देवा अब्रुवन् अयं वै नस्सर्वेषां वाम इति, तस्मात् वामदेवः । तस्मात् वामदेव इत्याचक्षते एतमेव सन्तम् । स इदं सर्वं पाप्मनोऽत्रायत, यदिदं किञ्च । स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च, तस्मादत्रयः । तस्मादत्रय इत्याचक्षत एतमेव सन्तम् ॥

२. एष उ एव बिभ्रद् वाजः । प्रजा वै वाजः । तमेष बिभर्ति । यद् बिभर्ति तस्माद् भरद्वाजः । तस्माद् भरद्वाज इत्याचक्षते एतमेव सन्तम् । तं देवा अब्रुवन् अयं वै नः सर्वेषां वसिष्ठ इति । तं यद् देवा अब्रुवन् अयं वै नः सर्वेषां वसिष्ठ इति, तस्माद् वसिष्ठः ।

---

१-२. द्वितीयेऽध्याये एष इममित्यादिना [illegible] प्राणं नानामहर्षिनामधेयवत्त्वेन स्तौति । प्राणेऽन्वयार्हतया [illegible] निरुच्यन्ते । ईदृशप्राणविशिष्टत्वादेव महर्षीणामीदृशनामकत्व- मित्याशय इव ॥

तस्माद् वसिष्ठ इत्याचक्षत एतमेव सन्तम् । स इदं सर्वमभिप्रागात् यदिदं किञ्च । स यदिदं सर्वमभिप्रागात् यदिदं किञ्च, तस्मात् प्रगाथाः । तस्मात् प्रगाथा इत्याचक्षत एतमेव सन्तम् । स इदं सर्वमभ्यपवयत यदिदं किञ्च । स यदिदं सर्वमभ्यपवयत यदिदं किञ्च, तस्मात् पावमान्यः । तस्मात् पावमान्य इत्याचक्षत एतमेव सन्तम् । सोऽब्रवीत् अहमिदं सर्वमसानि, यच्च क्षुद्रम्, यच्च महदिति । ते क्षुद्रसूक्ताश्चाभवन्, महासूक्ताश्च । तस्मात् क्षुद्रसूक्ताः । [1]तस्मात् क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तम् । सूक्तं वतावोचतेति । तत् सूक्तमभवत् । तस्मात् सूक्तम् । तस्मात् सूक्तमित्याचक्षत एतमेव सन्तम् । एष वा ऋक् । एष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत । स यदेभ्यो सर्वेभ्यो भूतेभ्योऽर्चत तस्मादृक् । तस्मात् ऋगित्याचक्षत एतमेव सन्तम् । एष वा अर्धर्चः एष ह्येभ्य सर्वेभ्योऽर्धेभ्योऽर्चत । स यदेभ्यः सर्वेभ्यो अर्धेभ्योऽर्चत, तस्मादर्धर्चः । तस्मादर्धर्च इत्याचक्षते एतमेव सन्तम् । एष वै पदम् । एष हीमानि सर्वाणि भूतानि पादि । स यदिमानि सर्वाणि भूतानि पादि, तस्मात् पदम् । तस्मात् पदमित्याचक्षत एतमेव सन्तम् । एष वा अक्षरम् । एष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति; न चैनमति क्षरन्ति । स यदेभ्यो सर्वेभ्यो भूतेभ्यः क्षरति, न चैनमति क्षरन्ति, तस्मादक्षरम् । तस्मादक्षरमित्याचक्षत एतमेव सन्तम् । ता वा एताः ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् ॥

---

1 क्षुद्रसूक्तवचननिगमनं महासूक्तनिगमनोपलक्षणम् ।

३. विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषसाद । स ह अन्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच, ऋषे प्रियं वै मे धामोपागाः ; स वा ऋषे द्वितीयं शंसेति । स ह, अन्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच, ऋषे प्रियं वै मे धामोपागाः ; स वा ऋषे तृतीयं शंसेति । स ह, अन्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच, ऋषे प्रियं वै मे धामोपागाः ; वरं ते ददामीति । स होवाच त्वामेव जानीयामिति । तमिन्द्र उवाच, प्राणो वा अहमस्मि ऋषे, प्राणस्त्वम् । प्राणः सर्वाणि भूतानि । प्राणो ह्येष य एष तपति । स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि । तस्य मेऽन्नं मित्रं दक्षिणम् । तद्वैश्वामित्रम् । एष तपन्नेवास्मीति होवाच ।

४. तद्वा इदं बृहतीसहस्रं संपन्नम् । तस्य यानि व्यञ्जनानि, तच्छरीरम् । यो घोषः स आत्मा । य ऊष्माणः स प्राणः । एतद्ध

---

३. महाव्रतस्याह्नः संबन्धि बृहतीसहस्रं शंसितुमारब्धवति इन्द्र उपनिषसाद = आगत्य विश्वामित्र समीपे उपविवेश । महर्षिस्त-दाशयं बुध्वा तदन्नत्वेन तत् शशंस । तेन तस्य प्रियं धाम स्वर्गमयं प्राप्तवान् । तत्रापि तत्प्रेरणया द्विस्तदेव शंसितवति स प्रीतो वरं ददौ । विश्वामित्रं प्रति तदा प्राणात्मस्वात्मोपदेशः कृतः । कौषीतकिब्राह्मणे प्रतर्दनायेन्द्रेणोपदिष्टं यथा ।

४. बृहतीसहस्रे व्यञ्जनाक्षरेषु शरीरत्वस्य घोषाक्षरेषु आत्मत्वस्य ऊष्मसु प्राणत्वस्य दृष्टिः । बृहतीछन्दसः षट्त्रिंशद्-

स वै तद्विद्वान् वसिष्ठो बभूव, तत एतं नामधेयं लेभे। एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच। एतदु हैवेन्द्रो भरद्वाजाय प्रोवाच। तस्मात् स तेन बन्धुना यज्ञेषु हूयते। तद्वा इदं बृहतीसहस्रं संपन्नम्। तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति। तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति। व्यञ्जनैरेव रात्रीराप्नुवन्ति; स्वरैरहानि। तद्वा इदं बृहतीसहस्रं संपन्नम्। तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद। तद् **योऽहं सोऽसौ; योऽसौ सोऽहम्**। तदुक्तमृषिणा, सूर्य आत्मा जगतस्तस्थुषश्च। इत्येतदु हैवोपेक्षेतोपेक्षेत ॥

## इति ऐतरेयारण्यके द्वितीयोऽध्यायः।

## अथ तृतीयोऽध्यायः

१. यो ह वा आत्मानं पञ्चविधमुक्थं वेद, यस्मादिदं सर्वमुत्तिष्ठति,

---

क्षराणि। षट्त्रिंशतमिति च्छान्दसम्। एवञ्च तत्सहस्रस्य षट्त्रिंशत्सहस्राणि। पुरुषस्याऽऽयुषोऽहान्यपि तावन्त्येव। तत्र व्यञ्जनेषु तद्रात्रिदृष्टिः, स्वरेषु अहर्दृष्टिश्च। अथ तस्य प्रज्ञामयत्वादिसंपत्तिः। तद् योऽहं सोऽसौ इत्युपासनलाभः। मदन्तर्याम्येव सूर्यमण्डलान्तर्वर्तीति तदर्थः। 'स यश्चायं पुरुषे यश्चासावादित्ये' इत्यत्रोक्तमेतत्। "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति सूत्रे, 'व्यतिहारो विशिंषन्ति हीतरवत्' इति सूत्रे च इदमुपात्तं द्रष्टव्यम्। एवं ध्यायन् उपेक्षेत= उपशान्तः सन् साक्षात्कुर्यादित्यर्थः। अध्यायः ॥२.

## तृतीयाध्यायपरिष्कारः

१. उक्थे पाञ्चभौतिक आत्मेति वेदनं विहितम्। तत्र नैकधा

स संप्रतिवित् पृथिवी वायुराकाश आपो ज्योतींषीति, एष वा आत्मोक्थं पञ्चविधम्, एतस्माद्धीदं सर्वमुत्तिष्ठति । एतमेवाप्येति । अयनं ह वै समानानां भवति, एवं वेद ।

तस्मिन् योऽन्नञ्चान्नादञ्च वेद, अहास्मिन्नन्नादो जायते। भवत्यस्यान्नम् । आपश्च पृथिवी चान्नम् । एतन्मयानि ह्यन्नानि भवन्ति । ज्योतिश्च वायुश्चान्नादम् । एताभ्यां हीदं सर्वमन्नमत्ति । आवपनमाकाशः । आकाशे हीदं सर्वं समोप्यते । आवपनं ह वै समानानां भवति, य एवं वेद ।

---

अन्नान्नादविभागः । २ पुरुषे अप्राणि–प्राणि–सर्वापेक्षया आत्माविर्भावाधिक्यम्; प्रज्ञानाधिक्यात् । ३ पुरुष–तदीयप्राण–तत्कृत–यज्ञ–तदन्तर्गतसोमयागानां पञ्चविधत्वम् । ४ उक्थस्य बहुमुखं पाञ्चविध्यम् । तत्र स्तोभाक्षरसहस्रबृहतीसहस्रयोः संख्यासाम्यकभावनाविशेषः ।

५ छन्दोन्तरत्यागेन बृहतीसहस्रस्यैवात्र संपादनम् ।

६ उक्थस्य परमवाङ्मयत्वम् । मितामितस्वरसत्यानृतरूपेण वाङ्मयपाञ्चविध्यम् । सत्यस्य पुष्पफलता । अनृतस्य मूलस्येवानाविर्भाव्यत्वम्; मूलाविर्भावे सर्वशोषणात् । सर्ववाङ्मूलत्वादि च ।

७ बृहतीसहस्रस्येन्द्रत्वभावने इन्द्रभावप्राप्तिः । प्राप्तस्य पुनर्भवश्च । ८ यत् सत्यस्य सत्यम्, तस्य वागादिसर्वदेवाधिपे प्राणे योगः । तद् ब्रह्म विदुषः तेन ब्रह्मणा स्वर्गप्राप्तिः । आत्मा स्त्रीपुंनपुंसकभेदभिन्नः । अ इति ब्रह्म । अहमिति तद्विषयीकरणम् । एवं महाव्रतोक्थबृहतीसहस्राक्षरप्रधानभूताकारवाच्यब्रह्मोपासनस्य देवरथस्य वाक्छ्रोत्रचक्षुर्मनःप्राणरूप-ईषादण्ड-चक्र-युग्य-संग्रहीत्रधिष्ठातृप्रचाल्यस्य कामहत्या मोक्षहेतुता ।

३–१. पाञ्चभौतिकतया पञ्चविध आत्मा देहः। तद्रूपेणोक्थ-

तस्मिन् योऽन्नञ्चान्नादञ्च वेद, अहास्मिन्नन्नादो जायते। भवत्य-स्यान्नम्। ओषधिवनस्पतयोऽन्नम्। प्राणभृतोऽन्नादम्। ओषधिवनस्पतीन् हि प्राणभृतोऽदन्ति।

तेषां य उभयतोदन्ताः पुरुषस्यानु विधां विहिताः तेऽन्नादाः। अन्नमितरे पशवः। तस्मात्त इतरान् पशूनधीव चरन्ति। अधीव ह्यन्नेऽन्नादो भवति। अधीव ह समानानां जायते, य एवं वेद॥

२. तस्य य आत्मानमाविस्तरां वेद, अश्नुते हाविर्भूयः। ओषधिवनस्पतयो यच्च किञ्च प्राणभृत् स आत्मानमाविस्तरां वेद। ओषधिवनस्पतिषु हि रसो दृश्यते; चित्तं प्राणभृत्सु। प्राणभृत्सु त्वेवाऽऽविस्तरामात्मा। तेषु हि रसोऽपि दृश्यते; न चित्तमितरेषु। पुरुषे त्वेवाऽऽविस्तरामात्मा। स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति, विज्ञातं पश्यति, वेद श्वस्तनम्, वेद लोकालोकौ, मर्त्येनामृतमीप्सत्येवं संपन्नः। अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम्। न विज्ञातं वदन्ति, न विज्ञातं पश्यन्ति, न विदुः श्वस्तनम्, न लोकालोकौ। त एतावन्तो भवन्ति। यथाप्रज्ञं हि संभवाः॥

---

दृष्टिः। तत्र पृथिवीजलयोरन्नत्वम्, अग्निवाय्वोरन्नादत्वम्। अवकाशप्रदानेन भोक्तृभोग्यप्रवेशार्हत्वात् आकाश आवपनम्। एवमोषधिवनस्पतीनामन्नत्वं प्राणभृतामन्नादत्वम् प्राणभृत्सु उभयतोदन्ताः अन्नादाः अन्ये पशवोऽन्नम्। संप्रतिशब्दः सम्यगित्यर्थे। संप्रतिवित् = सम्यग्वित्। अधिजायते = उपरि भवति। अशनेति अशनायेत्यर्थः।

३ २. आत्मन अतिशयेनाऽऽविर्भावः स्थावरापेक्षया जङ्गमेषु; तत्रेतरापेक्षया पुरुषे। लोकालोकौ = फलाफले, भोग्याभोग्ये।

३. स एष पुरुषः समुद्रः सर्वं लोकमति यद्ध किञ्चाश्नुते, अत्येनं मन्यते । यद्यन्तरिक्षलोकमश्नुते, अत्येनं मन्यते । यद्यमुं लोक-मश्नुवीत, अत्येवैनं मन्येत ।

स एष पुरुषः पञ्चविधः । तस्य यदुष्णम्, तज्ज्योतिः । यानि खानि स आकाशः । अथ यल्लोहितं श्लेष्मा रेतः ता आपः । यच्छरीरं सा पृथिवी । यः प्राणः स वायुः ।

स एष वायुः पञ्चविधः । प्राणोऽपानो व्यान उदानस्समानः । ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति । प्राणस्य ह्यन्वपायमेता अपियन्ति । स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद् यज्ञः । स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः । स एष यज्ञानां संपन्नतमो यत् सोमः । एतस्मिन् ह्येताः पञ्च विधा अधिगम्यन्ते । यत् प्राक् सवनेभ्यः सैका विधा ; त्रीणि सवनानि ; यदूर्ध्वम्, सा पञ्चमी ॥

---

३-३. अशनपानमात्रज्ञाखिलप्राणभृदपेक्षया वर्तमानश्वस्तनलोकालोकादिसर्वविषयकज्ञानप्राप्त्यर्हतया पुरुषस्य प्राधान्यमुक्तम् । तत्र समुद्रत्वभावना, समुद्रस्य नदीतटाकाद्यतिशायित्वात् ।

पुरुषस्य पञ्चभूताधीनत्वात् पञ्चविधत्वम्, तदन्तर्गतस्य वायोः प्राणापानादिभेदात् पञ्चविधत्वम्, तत्र प्राणाधीनत्वं चक्षुः श्रोत्रमनोवाचाम् । तदन्तर्गतवागधीनस्थितेर्यज्ञस्याग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमरूपतः पाञ्चविध्यम् । तत्र सोमस्य सुत्यादिनप्राक्क्रियमाणकर्मकलाप - सवनत्रय - तदनन्तरवभृथाद्युदवसानीयान्तकर्मरूपभागपञ्चकवत्त्वात् पञ्चविधत्वम् ।

४. यो ह वै यज्ञे यज्ञं वेद, अहन्यहः, देवेषु देवमध्यूह्लन् । स संप्रतिवित् । एष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूह्लो यदेतन्महदुक्थम् । तदेतत् पञ्चविधं त्रिवृत् पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतः, गायत्रं रथन्तरं बृहद् भद्रं राजनमिति सामतः, गायत्र्युष्णिक् बृहती त्रिष्टुप् द्विपदेति च्छन्दस्तः, शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानम् । पञ्चकृत्वः प्रस्तौति, पञ्चकृत्व उद्गायति, पञ्चकृत्वः प्रतिहरति, पञ्चकृत्व उपद्रवति, पञ्चकृत्वो निधनमुपयन्ति । तत् स्तोभसहस्रं भवति ।

एवं ह्येताः पञ्च विधा अनुशस्यन्ते । यत् प्राक् तृचाशीतिभ्यः, सैका विधा । तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी । तदेतत् सहस्रं तत् सर्वं तानि दशदशेति वै सर्वम् । एतावती हि संख्या दशदशतः तच्छतं दशशतानि तत् सहस्रं तत् सर्वं तानि त्रीणिच्छन्दांसि भवन्ति । त्रेधा विहितं वा इदमन्नमशनं पानं खादः तदेतैराप्नोति ।

५. तद्वा इदं बृहतीसहस्रं संपन्नम् । तद्धैतदेके नानाछन्दसां सहस्रं प्रतिजानते किमन्यत् सदन्यत् ब्रूयामेति । त्रिष्टुप्सहस्रमेके जगतीसहस्रमेकेऽनुष्टुप्सहस्रमेके । तदुक्तमृषिणा 'अनुष्टुभमनु चर्चूर्य-

---

२. ३. ४. अथाध्यूह्लम् =उपरि स्थितमुच्यते । सोमयागेषूक्तेषु सहस्रसंवत्सरः श्रेष्ठः । तत्रान्तिमं महाव्रतमहः उपरि स्थितम् । तत्रोक्थं निष्कैवल्यशस्त्रम् । तत् पञ्चविधम्, पञ्चविधसोम-पञ्चविध-साम - पञ्चविधच्छन्दः - पञ्चविधाङ्गादिशालित्वात् । निधनभागस्य सर्वगेयत्वात् उपयन्तीति बहुवचनम् ।

२. ३. ५. छन्दोन्तरसहस्रापेक्षया बृहतीसहस्रप्राशस्त्यमारभ्य बृहतीसहस्रादरणे पूर्णायुर्यशःप्राप्तिरुक्ता ।

माणमिन्द्रं निचिक्युः कवयो मनीषा' इति। वाचि वै तदैन्द्रं प्राणं न्यचायन् इत्येतत् तदुक्तं भवति। स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः। ईश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह अकृत्स्नो ह्येष आत्मा यद्वागभि हि प्राणेन मनसेऽस्यमानो वाचा नानुभवति। बृहतीमभिसंपादयेत्। एष वै कृत्स्न आत्मा यद् बृहती। सोऽयमात्मा सर्वतः शरीरैः परिवृतः। तद् यथाऽयमात्मा सर्वतः शरीरैः परिवृतः, एवमेव बृहती सर्वतश्छन्दोभिः परिवृता। मध्यं ह्येषामङ्गानामात्मा, मध्यं छन्दसां बृहती। स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः ईश्वरो ह तु पुरायुषः प्रैतोः इति ह स्माह कृत्स्नो ह्येष आत्मा यद् बृहती। तस्मात् बृहतीमेवाभिसंपादयेत् ॥

६. तद्वा इदं बृहतीसहस्रं संपन्नम्। तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्यैकादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभः। आत्तं वै भूयसा कनीयः। तदुक्तमृषिणा—वाचमष्टापदीमहामिति अष्टौ हि चतुरक्षराणि भवन्ति। नवस्रक्तिमिति बृहती संपद्यमाना नवस्रक्ति। ऋतस्पृशमिति सत्यं वै वागृचा स्पृष्टा। इन्द्रात् परि तन्वं ममे इति। तद् यदेवैतद् बृहतीसहस्रमनुष्टुप्संपन्नं भवति। तस्मात्तदैन्द्रात् प्राणात् बृहत्यै वाचमनुष्टुभं तन्वं सन्निर्मिमीते। स वा एष वाचः परमो विकारो यदेतन्महदुक्थम्। तदेतत् पञ्चविधं मितममितं

---

२. ३. ६. अष्टाक्षरपादचतुष्टयापेक्षया नवाक्षरपादचतुष्टयात्मकबृहतीछन्दःश्रेयस्ता, परमवाग्विकारत्वं चोक्तम्। तच्च पाञ्चविध्यं ऋग्गाथेति विभियते। तदर्थश्चैवम्—पादव्यवस्थापन्नो मन्त्रः

स्वरः सत्यानृते इति । ऋग्गाथा कुम्ब्या तन्मितम् । यजुर्निगदो वृथा वाक् तदमितम् । सामाथो यः कश्च गेष्णः स स्वरः । ओ३मिति सत्यम् । नेत्यनृतम् । तदेतत् पुष्पं फलं वाचो यत् सत्यम् । स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः पुष्पं हि फलं वाचः सत्यं वदति। अथैतन्मूलं वाचो यदनृतम् । तद्यथा वृक्ष आविर्मूलः शुष्यति ; स उद्वर्तते— एवमेवानृतं वदन् आविर्मूलमात्मानं करोति ; स शुष्यति ; स उद्वर्तते। तस्मादनृतं न वदेत् । दयेत त्वेनेन । पराग्वा एतद्रिक्तमक्षरं यदेत-दो३मिति । तद्यत् किञ्चोमित्याह, अत्रैवास्मै तद्रिच्यते । स यत् सर्व-मोंकुर्यात्, रिञ्च्यादात्मानम् । स कामेभ्यो नालं स्यात् । अथैतत् पूर्णमभ्यात्मं यन्नेति । स यत सर्वं नेति ब्रूयात् पापिकाऽस्य कीर्ति-र्जायेत । सैनं तत्रैव हन्यात् । तस्मात् काल एव दद्यात् ; काले न

---

ऋक् । तद्विशेषः लोकप्रसिद्धार्थकः 'प्रातः प्रातरनृतं ते वदन्ति' इत्यादिः गाथा । आचारशिक्षारूपा कुम्ब्या । सर्वमिदं मितम् अत्रैतावदक्षरमिति व्यवस्थावत्त्वात्। अन्यदमितं यजुरादि,तद्व्यवस्था-विरहात् । तत्र यजुर्मन्त्रो इषेत्वेत्यादिर्हि न पादबद्धः । यजु-र्विशेष एव निगदः । अर्थवादस्तु किञ्चिदर्थाविधायकत्वादर्थान्तर-परत्वाच्च वृथा वागित्युच्यते । अथ साम=गीतिरूपो मन्त्रः । तत्र पर्वभेदः गेष्णशब्दवाच्यः । सामगेष्णयोः स्वरशब्दवाच्यता । एवं मितामितस्वररूपविधात्रयमुक्तम् । अवशिष्टं द्वयं सत्यमनृतमिति । ओमिति सत्यम् नेत्यनृतम् । अत्र विद्यारण्यभाष्ये ओमित्यस्य ब्रह्मार्थ-कत्वं नेत्यस्य प्रपञ्चार्थकत्वञ्च दर्शितम् । 'सत्यानृते मिथुनीकृत्य' इत्युपरितनवाक्ये सद्भावात् शांकरभाष्ये ब्रह्मणोऽज्ञानस्य च विषये तथा प्रयोगात् तदैककण्ठ्यसंपिपादयिषयेव तथोक्तिः ।

दद्यात् । तत् सत्यानृते मिथुनीकरोति । तयोर्मिथुनात् प्रजायते भूयान् भवति । यो वै तां वाचं वेद । यस्या एष विकारः, स संप्रतिवित् । अकारो वै सर्वा वाक् । सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति । तस्यै यदुपांशु स प्राणः, अथ यदुच्चैस्तच्छरीरम् । तस्मात् तत् तिर इव । तिर इव ह्यशरीरम् । अशरीरो हि प्राणः । अथ यदुच्चैस्तच्छरीरम् । तस्मात् तदाविः । आविर्हि शरीरम् ।

७. तद्वा इदं बृहतीसहस्रं संपन्नम् । तद् यशः । स इन्द्रः । स भूतानामधिपतिः । स य एवमेतमिन्द्रं भूतानामधिपतिं वेद, विस्रसा हैवास्माल्लोकात् प्रैति इति ह स्माह महिदास ऐतरेयः; प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति । तदाहुर्यदनेन रूपेणामुं लोकमभिसंभवतीं३, अथ केन रूपेणेमं लोकमाभवतीं३ । तद्यदेतत् स्त्रियां लोहितं भवति, अग्नेस्तद्रूपम् । तस्मात् तस्मान्न बीभत्सेत । अथ यदेतत् पुरुषे रेतो भवति, आदित्यस्य तद्रूपम् । तस्मात् तस्मान्न बीभत्सेत । सोऽयमात्मेममात्मानममुष्मा आत्मने संप्रयच्छति आसावात्माऽमुमात्मानमिमस्मा आत्मने संप्रयच्छति । तावन्योन्यमभिसंभवतः ।

---

उपरि स्पष्टमेव, ओमित्यस्य अस्तित्वत्यंगीकारपरत्वं नेत्यस्य नास्तीति निषेधपरत्वञ्चाभिधाय, याचकं सर्वं प्रति ओमित्युक्तौ दातुः सर्वहानिः स्यात्, नेत्येव सर्वदोक्तौ लुब्ध इत्यपकीर्तिरेवेत्युभयनिन्दया पात्रापात्रयुक्तायुक्तविमर्शेन सत्यानृतयोर्मिथुनीकरणं युक्तमिति दर्शितमिति नात्र ब्रह्मप्रपञ्चग्रहणप्रसक्तिः । प्रपञ्चस्यासत्यत्वासिद्धेश्च । सामान्यतः सत्यार्थकम् ओमिति, मिथ्यार्थकं 'न' इतीत्यर्थस्तु स्यान्नाम।

२. ३. ७. बृहतीसहस्रे, तत् यस्य प्रियं तस्येन्द्रस्य भावना । ततः स्वर्गप्राप्तिः पुनरावृत्तिश्च ।

अनेनाह रूपेणामुं लोकमभिसंभवति, अमुनो रूपेणेमं लोकमाभवति ॥
८. तत्रैते श्लोकाः ।

यदक्षरं पञ्चविधं समेति युजो युक्ता अभि यत् संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥
यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत् संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥
यद् वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदुचोल्बणिष्णु ।
तद्वियूया कवयोऽन्वविन्दन् नामायत्ता समतृप्यञ्छुतेऽधि ॥
यस्मिन्नामा समतृप्यञ्छृ(छु)तेऽधि तत्र देवाः सर्वयुजो भवन्ति ।
तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान् ॥
नैनं वाचा स्त्रियं ब्रुवन् नैनमस्त्रीपुमान् ब्रुवन् ।
पुमांसं न ब्रुवन्नेनं वदन् वदति कश्चन ॥
अ इति ब्रह्म तत्रागतमहमिति ॥

---

२. ३. ८. अथेन्द्रान्तर्यामिब्रह्मोपासनं विवक्षुः पञ्चविधवाग्रूपोकथे यद्दृष्टिः, तत् सत्यस्य सत्यम् । सत्यं जीवतत्त्वम् । तस्यापि सत्यं ब्रह्म । तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं मोक्षस्थानमेति । प्रथमसत्यं देहादिविलक्षणमित्याह नैनमिति । एनमात्मानं स्त्रीति वाचा नपुंसकमिति वाचा पुमानिति वाचा वदन् न वदति आत्मनि-लिंगाभावात्; स्त्रीत्वादिभेदस्य शरीरगतत्वात् । एवं देहादि-विलक्षणजीवात्मविलक्षणं परमात्मानमाह 'अ इति ब्रह्म' इति । पूर्वं, 'ब्रह्मणा स्वर्गम्' इत्यत्रापि इदमेव ब्रह्म विवक्षितम् । न हिरण्यगर्भः । अः इत्युक्त्या ब्रह्म विष्णुरिति सुस्पष्टम् । अ इति भगवतो नारायणस्य प्रथमाभिधानमिति हि प्रसिद्धम् । अहमिति पदमपि

तद्वा इदं बृहतीसहस्रं संपन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति। तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति। जीवाक्षरेणैव जीवाहराप्नोति ; जीवाह्ना जीवाक्षरमिति।

अनकाममारोऽथ देवरथः । तस्य वागुद्धिः । श्रोत्रे पक्षसी । चक्षुषी युक्ते। मनः संग्रहीता। तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा, 'आ तेन यातं मनसो जवीयसा निमिषश्चिज्जवीयसेति जवीयसेति ॥' इति ऐतरेयारण्यके द्वितीयारण्यके तृतीयोऽध्यायः ।

[अथ आत्मषट्कं चतुर्थादिसप्तमाध्यायान्तम्]

**अथ चतुर्थोऽध्यायः** । आत्मा वा इद...परोक्षप्रिया इव हि देवाः ॥

**अथ पञ्चमोऽध्यायः** । अपक्रामन्तु गर्भिण्यः । पुरुषे हवा अयं... अमृतः समभवत् समभवत् ॥

**अथ षष्ठोऽध्यायः** । यथास्थानं तु गर्भिण्यः। कोऽयमात्मेति....अमृतः समभवत् समभवत् ॥

**अथ सप्तमोऽध्यायः** । वाङ्मे मनसि....अवतु वक्तारम् ॥

[इति आत्मषट्कम् ॥ इदं प्रागेव भाष्यादिना व्याख्यातम्]

---

स्यान्तर्यामिविवक्षया तत्र प्रसरति। एवं मोक्षार्थोपासनमिह विधाय तदुपासनसिद्धये अनकाममारः काममार एव भवन् वैराग्यवर्धको देवरथ उच्यते । कठोपनिषदि, 'आत्मानं रथिनं विद्धि' इत्यादिना मोक्षार्था काचित् प्रक्रियोपन्यस्ता । अत्र पूर्वोक्तब्रह्मगिरिशब्दवाच्यप्राणादिपञ्चकस्य रथत्वं विशदीक्रियते । वाक्‌रथे ईषादण्डः ; श्रोत्रे चक्रे ; चक्षुषी युक्ते=युग्ये अश्वद्वयरूपे ; मनः सारथिः प्रग्रहो वा ; प्राणः रथी सारथिर्वा । एवं प्राणादिपञ्चकस्य सर्वोपनिषत्प्रशस्तस्य कार्यमत्र विवृतं द्रष्टव्यम् ।

## अथ तृतीयारण्यकम्

### प्रथमोऽध्यायः

अथातः संहिताया उपनिषत्। पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेयः। आकाशः संहितेत्यस्य माक्षव्यो वेदयाञ्चक्रे। स हाविपरिहृतो मेने, न मेऽस्य पुत्रेण समगादिति। समाने वै तत्परिहृतो मन इत्यागस्त्यः। समानं ह्येतद् भवति वायुश्चाकाशश्च। इत्यधिदैवतम्। अथाध्यात्मम्। वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयः। अथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपम्। मनसा वा अग्रे संकल्पयति। अथ वाचा व्याहरति। तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति। समानमेनयो-रत्र पितुश्च पुत्रस्य च। स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राण-संहतः। स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति। इति नु माण्डूकेयानाम्॥

३-१-२. अथ शाकल्यस्य। पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः संधिः पर्जन्यः संधाता। तदुतापि यत्रैतद्बलवदनूद्गृह्णन्त्सन्दधदहोरात्रे वर्षति,

---

[१] १. संहितोपनिषत्। पूर्वरूपोत्तररूपसंहिताविषयदृष्टि-प्रकाराः। २. पूर्वोत्तररूपसंधिसंधातृविषयकदृष्टिभेदः।

३. संहिता – पद–क्रमापरपर्यायनिर्भुज-प्रतृणानुभयविषयक-दृष्टिभेदः। ४. तत्र गृहधारकप्रधानवंशतुल्यप्राणदृष्टिः।

५. संहितापदार्थवर्णने मतभेदः पूर्वोत्तराक्षरमध्यावकाश-स्वरादिभेदकरतद्विशेष परसंनिकर्षरूपः।

६. संहिताविषयनानादृष्टयः तैत्तिरीयोक्तकिञ्चित्प्रकारश्च।

द्यावापृथिव्यौ समधातामित्युताप्याहुः इतीन्वधिदैवतम् । अथाध्यात्मम् पुरुषो ह वा अयं सर्व आन्दम्, द्वे विदले भवत् इत्याहुः । तस्येदमेव पृथिव्या रूपम्, इदं दिवः, तत्रायमन्तरेणाकाशो यथाऽसौ द्यावापृथिव्यावन्तरेणाकाशः । तस्मिन्नस्मिन्नाकाशे प्राण आयत्तो यथाऽमुष्मिन्नाकाशे वायुरायत्तः । यथाऽमूनि त्रीणि ज्योतींषि, एवमिमानि पुरुषे त्रीणि ज्योतींषि । यथाऽसौ दिव्यादित्यः, एवमिदं शिरसि चक्षुः, यथाऽसावन्तरिक्षे विद्युत्, एवमिदमात्मनि हृदयम् । यथाऽयमग्निः पृथिव्याम्, एवमिदमुपस्थे रेतः । एवमु ह स्म सर्वलोकमात्मानमनुविधायाह इदमेव पृथिव्या रूपम्, इदं दिवः । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥

३·१·३ अथातो निर्भुजप्रवादाः। पृथिव्यायतनं निर्भुजं दिव्यायतनं प्रतृणम् अन्तरिक्षायतनमुभयमन्तरेण । अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेत् अच्योष्ठावराभ्यां स्थानाभ्यामित्येनं ब्रूयात् । अथ यद्येनं प्रतृणं ब्रुवन्तमुपवदेत्, अच्योष्टा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयात्, यस्त्वेवोभयमन्तरेणाह तस्य नास्त्यपवादः । यद्धि संधिं विवर्तयति, तन्निर्भुजस्य रूपम् अथ यच्छुद्धे अक्षरे अभिव्याहरति, तत् प्रतृणस्याग्र उ एव उभयमन्तरेणोभयं व्याप्तं भवति । अन्नाद्यकामो निर्भुजं ब्रूयात्, स्वर्गकामः प्रतृणम्, उभयकाम उभयमन्तरेण । अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत्, पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यद्येनं प्रतृणं ब्रुवन्तं पर उपवदेत्, दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उप-

वदेत् अन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयात् । यथा तु कथा च ब्रुवन्वाब्रुवन्तं वा ब्रूयात्, अभ्याशमेव यत् तथा स्यात् न त्वेवान्यत् कुशलात् ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने च न ब्राह्मणं ब्रूयात् । नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः ॥

३-१-४. अथातोऽनु व्याहाराः । प्राणो वंश इति विद्यात् । स य एनं प्राणं वंशमुपवदेच्छक्नुवन् चेन्मन्येत प्राणं वंशं समधां३ प्राणं मा वंशं संदधतं न शक्नोषीत्याह प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । अथ चेदशक्नुवन्त मन्येत प्राणं वंशं समधित्सिषन्तं नाशकः संधातुं प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । यथा तु कथा च ब्रुवन्वाब्रुवन्तं वा ब्रूयात् अभ्याशमेव यत् तथा स्यात् । न त्वेवान्यत् कुशलद्ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रुयात् । नातिद्युम्ने च न ब्राह्मणं ब्रूयात् । नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः ॥

३. १. ५. अथ खल्वाहुर्निर्भुजवक्त्राः । पूर्वमक्षरं पूर्वरूपम् उत्तरमुत्तररूपम्, योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति । स य एवमेतां संहितां वेद, संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माह ह्रस्वो माण्डूकेयः, पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपम् । योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन संधिं विवर्तयति येन स्वरास्वरं विजानाति येन मात्रामात्रां विभजते सा संहितेति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।

अथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रः, अक्षरे खल्विमे अविकर्षन् अनेकीकुर्वन् यथावर्णमाह ; तद् यासौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण संधिविज्ञपनी, साम तद्भवति ; सामैवाहं संहितां मन्य इति । तदप्येतदृषिणोक्तम्—बृहस्पते म परः साम्नो विदुरिति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥

३. १. ६. बृहद्रथन्तरयो रूपेण संहिता संधायत इति तारुक्ष्यः। वाग्वै रथन्तरस्य रूपं प्राणो बृहत् उभाभ्यामु खलु संहिता संधीयते वाचा च प्राणेन च । एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तारुक्ष्यः । एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तारुक्ष्यः । तदप्येतदृषिणोक्तम् । रथन्तरमाजभारा वसिष्ठो भरद्वाजो बृहदाचक्रे अग्नेरिति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । वाक् प्राणेन संहितेति कौण्ठरव्यः । प्राणः पवमानेन पवमानो विश्वैर्देवैः विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषाऽवरपरा संहिता । स यो हैतामवरपरां संहितां वेद, एवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन संधीयते यथैषा संहिता । स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेत् , अभिव्याहार्षं नेत्येव विद्यात् दिवं संहितागमद्विदुषां देवानामेवं भविष्यतीति शश्वत् तथा स्यात् । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । वाक् संहितेति पञ्चालचण्डः । वाचा वै वेदाः संधीयन्ते

वाचा छन्दांसि वाचा मित्राणि संदधति वाचा सर्वाणि भूतानि अथो वागेवेदं सर्वमिति । तद् यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक् तदा प्राणं रेढि । अथ यत्र तूष्णीं वा भवति स्वपिति वा, प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेढि तावन्योन्यं रीढो वाग्वै माता प्राणः पुत्रः । तदप्येतदृषिणोक्तम्—एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे तं पाकेन मनसा पश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरमिति । स य एवमेतां संहिता वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । अथातः प्रजापतिसंहिता । जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः संधिः प्रजननं संधानम् सैषादितिः संहिता । अदितिर्हीदं सर्वं यदिदं किञ्च पिता च माता च पुत्रश्च प्रजननञ्च । तदप्येतदृषिणोक्तम्—अदितिर्माता स पिता स पुत्र इति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति ॥

इति ऐतरेयतृतीयारण्यके प्रथमोऽध्यायः ।

## अथ द्वितीयोऽध्यायः

३-२-१. प्राणो वंश इति स्थविरः शाकल्यः तद् यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युः, एवमस्मिन् प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः । तस्यैतस्यात्मनः

---

[२] १–२–३. पुरुषस्य अहस्संमानत्वम् । अक्षरसंमानत्वम् । अथ संवत्सरसंमानत्वम्; तदेवम्–शरीरपुरुष-छन्दःपुरुष-वेदपुरुष-महापुरुषभेदेन चतुर्विधे पुरुषे शरीरात्मकपुरुषसारभूतप्रज्ञात्मनः

प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं मज्जानः स्वररूपं मांसं लोहितमित्येत दन्यच्चतुर्थमन्तस्थारूपमिति ह स्माह ह्रस्वो माण्डूकेयः । त्रयं त्वेव न एतत् प्रोक्तम् । तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्टिशतानि त्रीणीतस्तानि सप्तविंशतिशतानि भवन्ति सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः । स एषोऽहःसमानश्चक्षुर्मयः श्रोत्रमय-श्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतमहःसमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेद अह्नां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति ॥

३. २. २. अथ कौण्ठरव्यः—त्रीणि षष्टिशतान्यक्षराणां त्रीणि षष्टिशतान्यूष्मणां त्रीणि षष्टिशतानि संधीनाम् । यान्यक्षराण्यवोचाम, अहानि तानि ; यानूष्मणोऽवोचाम ; रात्रयस्ताः ; यान्त्संधीनवोचाम, अहोरात्राणां ते संधय इत्यधिदैवतम् । अथाध्यात्मम्—यान्यक्षराण्यधि-दैवतमवोचाम, अस्थीनि तान्याध्यात्मम् । यानूष्मणोऽधिदैवत-मवोचाम । मज्जानस्तेऽध्यात्मम् । एष ह वै संप्रतिपाणो यन्मज्जा । एतद्रेतः । न ह वा ऋते प्राणाद्रेतः सिच्यते । यद्वा ऋते प्राणाद्रेतः सिच्येत, पयेत् न संभवेत् । यान्त्संधीनधिदैवतमवोचाम, पर्वाणि

---

संवत्सरात्मकमहापुरुषसारस्याऽऽदित्यस्य च 'स यश्चायं पुरुषे यश्चा-सावादित्यः' इत्यैक्यं सर्ववेदविन्मीमांस्यत्वं सर्वान्तरत्वं परब्रह्मत्वं चेति । चक्षुःश्रोत्रमनोवाङ्मयच्छन्दोमयोक्तात्मध्यानम् ।

४. चतुर्थे एवमादित्येनैकीभूतस्य शारीरात्मनो हानिप्रसक्तौ मुमूर्षुतासूचकानां एवमेतन्मभूतानां दुर्निमित्तदुःस्वप्नानामापत्तौ एवमेवं मन्त्रजप-होम-ब्राह्मणभोजन-चरुप्राशनपूर्वकं इतराज्ञेयत्वविशिष्टसार्व-श्यशालिनं स्वात्मान्तर्वर्तिनमात्मानं विद्यादिति ।

तान्यध्यात्मम् । तस्यैतस्य त्रयस्यास्थ्नां मज्ञां पर्वणामिति पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतस्तदशीतिसहस्रं भवति । अशीतिसहस्रं वा अर्कलिनो बृहतीरहरभिसंपादयन्ति । स एषोऽक्षरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतमक्षरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेद, अक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते, पुत्री पशुमान् भवति, सर्वमायुरेति ॥

३-२-३. चत्वारः पुरुषा इति बाध्वः । शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति । शरीरपुरुष इति यमवोचाम स एवायं दैहिक आत्मा । तस्य योऽयमशरीरः प्रज्ञात्मा सरसः । छन्दः पुरुष इति यमवोचाम, अक्षरसमाम्नाय एव । तस्यैतस्याकारो रसः । वेदपुरुष इति यमवोचाम, येन वेदान् वेद ऋग्वेदं यजुर्वेदं सामवेदम् तस्यैतस्य ब्रह्मा रसः । तस्माद् ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत् । महापुरुष इति यमवोचाम, संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्या भावयन्नन्यानि । तस्यैतस्यासावादित्यो रसः । स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् । तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तम् ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।

आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

इत्येतामनुविधं संहितां संधीयमानां मन्य इति ह स्माह बाध्वः । एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते । एतमग्नावध्वर्यवः । एतं महाव्रते छन्दोगाः । एतमस्यामेतं दिवि एतं वायावेतमाकाश एत-

मप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते । स एष संवत्सरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतं संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति ;

३ २-४. दुग्धदोहा अस्य वेदा भवन्ति । न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमिति । तदप्येतदृषिणोक्तम्—

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।

यदीं शृणोत्यलकं शृणोति न हि प्र वेद सुकृतस्य पन्थाम् इति ।

न तस्यानूक्ते भागोऽस्ति ; न वेद सुकृतस्य पन्थानमित्येतत्तदुक्तं भवति । तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयात् ; न परस्मै महाव्रतेन स्तुवीत ; न परस्मा एतदहः शंसेत् । कामं पित्रे वाऽऽचार्याय वा शंसेत् । आत्मन एवास्य तत् कृतं भवति ।

स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम । तौ यत्र विहीयेते, चन्द्रमा इवादित्यो दृश्यते, न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा, व्यस्तः पायुः, काककुलायगन्धिकमस्य शिरो वायति, संपरेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात् । स यत् करणीयं मन्येत तत् कुर्वीत । यदन्ति यच्च दूरक इति सप्त जपेत् ; आदित् प्रत्नस्य रेतस इत्येका ; यत्र ब्रह्मा पवमानेति षट् ; उद्वयं तमसस्परीत्येका । अथापि यत्र छिद्र इवादित्यो दृश्यते, रथनाभिरिवाभिख्यायेत, छिद्रां वा छायां पश्येत् तदप्येवमेव विद्यात् ।

अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वाऽऽत्मानं पश्येत्, विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयाताम्, तदप्येवमेव विद्यात्। अथाप्यपिधायाक्षिणी उपेक्षेत, तद्यथा बटरकाणि संपतन्ती दृश्यन्ते, तानि यदा न पश्येत्, तदप्येवमेव विद्यात्। अथाप्यपिधाय कर्णा उपशृणुयात्, स एषो अग्नेरिव प्रज्वलतो यदा न शृणुयात्, तदप्येवमेव विद्यात्। अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा, अमेघे वा विद्युतं पश्येत्, मेघे वा विद्युतं न पश्येत्, महामेघे वा मरीचीरिव पश्येत्, तदप्येवमेव विद्यात्। अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत्, तदप्येवमेव विद्यात्। इति प्रत्यक्षदर्शनानि। अथ स्वप्नाः। पुरुषकृष्णं कृष्णदन्तं पश्यति, स एनं हन्ति, वराह एनं हन्ति, मर्कट एनमास्कन्दयति, आशु वायुरेनं प्रवहति, सुवर्णं खादित्वाऽपगिरति, मध्वश्नाति, बिसानि भक्षयति, एकपुण्डरीकं धारयति, खरैर्वराहैर्युक्तैर्याति, कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति, स यद्येतेषां किञ्चित् पश्येत, उपोष्य, पायसं स्थलीपाकं श्रपयित्वा, रात्रीसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान् भोजयित्वा-चरुं स्वयं प्राश्नीयात्। स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातो अनादिष्टः श्रोता मन्ता द्रष्टा देष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तपुररुषः स म आत्मेति विद्यात् ॥

३-२-५. अथ खल्वियं सर्वस्यै वाच उपनिषत्। सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषदः इमां त्वेवाचक्षते। पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वराः। अग्ने रूपं स्पर्शाः वायोरूष्माण आदि-

त्यस्य स्वराः । ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वराः । चक्षुषो रूपं स्पर्शाः श्रोत्रस्योष्माणो मनसः स्वराः । प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः ।

अथ खल्वियं दैवी वीणा भवति । तदनुकृतिरसौ मानुषी वीणा भवति । यथोस्याः शिर एवममुष्याः शिरः, यथाऽस्या उदरमेवमनुष्या अम्भणम्, यथास्यै जिह्वैवममुष्यै वादनम्, यथास्यास्तन्त्रय एवममुष्या अङ्गुलयः, यथाऽस्याः स्वराः एवममुष्याः स्वराः, यथाऽस्याः स्पर्शाः, यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती, यथा ह्येवेयं लोमशेन चर्मणा पिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता । लोमशेन ह स्मवै चर्मणा पुरा वीणा अपिदधति । स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति, भूमिप्रास्यकीर्तिर्भवति यत्र क्वचाऽऽर्या वाचो भाषन्ते विदुरेनं तत्र । अथातो वाग्रसः यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत तत्रैतामृचं जपेत् । ओष्ठापिधाना नकुलीदन्तैः परिवृता पविः सर्वस्यै वाच ईशाना चारु मामिह वादयेदिति वाग्रसः ॥

३. २. ६. अथ हास्मा एतत् कृष्णहारितो वाग्ब्राह्मणमिवोपोदाहरति । प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः स छन्दोभिरात्मानं समदधात् यच्छन्दोभिरात्मानं समदधात् तस्मात् संहिता । तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा । स यो हैतौ

---

५. वर्णविशेषेषु लोकविशेषदेवताविशेषेन्द्रियादिविशेषभावनम् । शरीरात्मकवीणायाः दारुमयवीणायाश्च नानासारूप्यभावनादि सत्कीर्तये । सर्वत्र सभादौ सर्वश्लाघ्यव्यवहारसिद्धिकरो वाग्रसश्च ।

णकारषकारौ अनुसंहितमृचो वेद सबलां सप्राणां संहितां वेदायुष्यमिति विद्यात् । स यदि विचिकित्सेत् सणकारं ब्रुवाणी३ अणकारां३ इति, सणकारमेव ब्रूयात् । सषकारं ब्रुवाणी३ अषकारां३ इति, सषकारमेव ब्रूयात् । ते यद्वयमनुसंहितमृचोऽधीमहे, यच्च माण्डूकेयीयमध्यायं प्रब्रूमः, तेन नो णकारषकारावुपाप्ताविति ह स्माह ह्रस्वो माण्डूकेयः । अथ यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमः, तेन नो णकारषकारौ उपाप्ताविति ह स्माह स्थविरः शाकल्यः । एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः, किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे; वाचि हि प्राणं जुहुमः प्राणे वा वाचम् यो ह्येव प्रभवः स एवाप्ययः । ता एताः संहिता नानन्तेवासिने प्रब्रूयात् नासंवत्सर-वासिने नाप्रवक्त्र इत्याचार्या आचार्याः ॥

इति ऐतरेयतृतीयारण्यके द्वितीयोऽध्यायः

## इति ऐतरेयोपनिषत्

---

६. संहितायां णकारो बलमिति, षकारः प्राण इति ध्यायेदिति । एवमौपनिषदार्थविदः प्राणस्य परमात्मनः सर्ववाक्प्रतिपाद्यत्वं तद्विषयकव्यवहारमात्रकर्तव्यत्वञ्चाध्यवस्यन्तः वाचिकमानसव्यापार-वन्तोऽपि 'किमर्था वयमध्येष्यामहे, किमर्था वयं यक्ष्यामहे' इति फलात् विरज्य सकलकाम्यकर्मतो निवृत्य ब्रह्मैकताना भवन्तीति ।

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
ऐतरेयात्मषट्कञ्च परिष्कृतवता ततः ॥
वीरराघवसंज्ञेन तत्पूर्वोत्तरभागयोः ।
वात्स्येन विहिता सेयं संग्रहेण परिष्कृतिः ॥

शुभमस्तु

## ऐतरेयोपनिषद्विषयाः

## ऐतरेयोपनिषदर्थसंग्रहकारिकाः

१. आसीदात्मैक एवाग्रे आदौ लोकान् ससर्ज सः ।
लोकपालान् सिसृक्षुः स पुरुषञ्चाऽऽदितोऽसृजत् ॥

२. मुखादिभ्यस्तदङ्गेभ्यो जीवानां करणान्यसौ ।
वागादीनि, ततोऽग्न्यादीश्यैषामधिदेवताः ॥ (ख-१)

३. अशनायापिपासाभ्यां सृष्टाभ्यामाकुलेऽखिले ।
भोगायतनमस्राक्षीदन्नं स्रक्ष्यन् अतःपरम् ॥

४. गवाश्वादिषु तासाञ्च विभवन्न्यूनतां विदन् ।
सृष्ट्वा मानुषमत्तैता साकमक्षैर्न्यवेशयत् ॥ (ख-२)

५. अन्नं सृष्ट्वाऽथ करणं व्यवस्थाप्य च तद्ग्रहे ।
स्वयमन्तर्विवेशैवं तेनेन्द्रेण जगत् ततम् ॥ (ख-३)

६. पुरुषं प्राप्य जीवस्य प्रवेशो यः स्त्रियां ततः ।
तदेव प्रथमं जन्म द्वितीयं जातसंस्क्रिया ॥

७. तृतीयञ्च वयोहानौ यत् प्रेत्य भवनं पुनः ।
एवं जन्मशतं विद्वान् वामदेवो व्यमुच्यत ॥ (ख-४)

८. इत्थं विदन् परात्मानं प्राज्ञं ब्रह्म नियामकम् ।
अक्षप्राणज्ञानदेवभूतभौतिकजीवतः ॥ (ख-५)

९. पृथग्भूतमुपासीनो भवेत् तेनामृतः क्रमात् ।
शान्तिपाठः षष्ठ एवमात्मषट्कार्थसंग्रहः ॥ (ख-६)

**ऋषिनाम—वामदेवः । ऋग्वेदमन्त्रः—"गर्भेनुसन्"**

**अपूर्वपदानि—**अन्ववार्जत्. आभजामि. विदृति. नान्दनम्. अभिव्यैख्यत. *वावदिषत. इदन्द्रः इन्द्रः. प्रतिधीयते. जारुजानि. प्रज्ञानेत्रम्. आणी.

*वावदिषदिति एकं पदमिव परेषाम्, उक्तवानिति, वदिष्यामीति वा अर्थे ॥ लोकनामानि—अम्भः मरीचिः. मरः आपः.

श्रीः

# छान्दोग्योपनिषत्

(सामवेदीयताण्डिशाखान्तर्गता)

ओं आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि, सर्वं ब्रह्मौपनिषदम्, माऽहं ब्रह्म निराकुर्याम्, मा मा ब्रह्म निराकरोत्, अनिराकरणमस्तु, अनिराकरणं मेऽस्तु, तदात्मनि निरते य उपनिषत्सु धर्माः ते मयि सन्तु, ते मयि सन्तु । ओं शान्तिः शान्तिः शान्तिः ।

---

श्रीः

श्रीश्रीनिवासपरब्रह्मणे नमः

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

## श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम्

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥

---

श्रीः

श्रीश्रीनिवासपरब्रह्मणे नमः ।
श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## उपनिषद्भाष्यपरिष्कारः

अयमिह वृषशैले निस्तुलं वर्धमानः
कलिकलुषमपोह्य प्रीणयन् प्राणिजातम् ।
अपि गुरुपरिषन्मय्यञ्जलाऽस्मिन् सदुक्त्या
प्रयांततुमनसि स्तां भूरिभव्यप्रसक्ती ॥

हरिः ओम्—ओमित्येतदक्षरमुद्गीथमुपासीत ; ओमिति

---

श्रीशैलपूर्णवंशाब्धिकौस्तुभस्य जगद्गुरोः ।
श्रीमतस्तातयार्यस्य चरणौ शरणं वृणे [व्रजे] ॥ २ ॥
श्रीतातगुरुसेवाप्तवेदान्तयुगलाशयः ।
वात्स्यानन्तगुरुः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥ ३ ॥
यत्सेवावैभवाल्लब्धा मया परमहंसता ।
तमहं शिरसा वन्दे परकालमुनीश्वरम् ॥ ४ ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्याऽन्यान् गुरूनपि ।
छन्दोगोपनिषद्व्याख्यां करवाणि यथामति ॥ ५ ॥

ब्रह्मविद्यौपयिकं कर्माङ्गविषयम् आदौ उपासनमुपदिश्यते **ओमित्येतत्....उपासीत । उद्गीथम्** उद्गीथभक्त्यवयवभूतम् ओमित्येतदक्षरमुपासीतेत्यर्थः । ओमित्यक्षरस्य उद्गीथत्वासंभवेन सामानाधिकरण्यार्थमुद्गीथपदस्य वा अक्षरपदस्य वा मुख्यार्थत्यागेन लक्षणायां समाश्रयणीयायाम्, 'एतस्यैवाक्षरस्योपव्याख्यानम्' इत्युपसंहारानुगुण्यात्

---

**मुपनिषत् स्वयं सामोपनिषत्त्वात् उद्गीथरूपं प्रणवं प्रस्तुत्य तदनुबन्ध्युपासनान्युपदिश्य तन्महिमानं दर्शयति । तत्राष्टप्रपाठके छान्दोग्ये आदिमं प्रपाठकद्वयं सामाश्रितनानोपासनाप्रधानम् । अनन्तरेषु तु प्रपाठकेषु अनेका ब्रह्मविद्याः विधास्यन्ते । तदौपयिकत्वादादौ एतदुपदेश इत्याशयेनाह ब्रह्मविद्यौपयिकमिति । कर्माङ्गविषयमिति । कर्मकाण्डात् ज्ञानकाण्डे पुरुषमाकर्षन्ती उपनिषत् कर्मप्रवणं तमादौ कर्माङ्गानुबन्ध्युपासनोपदेशेन आवर्ज्य अथ स्वतन्त्रब्रह्मोपासनान्यादेष्टुमिच्छतीति च भावः । उद्गीथभक्त्यवयवेति । एकैकस्यापि**

ह्युद्गायति । तस्योपव्याख्यानम् ॥ १ ॥

---

उद्गीथशब्दस्य जघन्यतया च तस्यैवोद्गीथावयवलक्षकत्वं युक्तम्, न तु मुख्यस्य ओमित्येतदक्षरमित्यस्य ओङ्कारावयवयुक्तोद्गीथलक्षकत्वं युक्तमिति द्रष्टव्यम् । स्वयमेव श्रुतिरोङ्कारस्योद्गीथशब्दप्रतिपाद्यत्वे हेतुमाह **ओमिति ह्युद्गायति** । लोक ओमिति ह्यारभ्यैवोद्गायति । अत उद्गीथावयवत्वादुद्गीथशब्दप्रतिपाद्यत्वं युक्तमित्यर्थः । **तस्योपव्याख्यानम्** । **तस्य** ओमित्यक्षरस्य । **उपव्याख्यानम्** एव(इद)मुपासनम्, एवं

---

साम्नः पञ्च भक्तयः=भागाः-हिङ्कारः, प्रस्तावः, उद्गीथः, प्रतिहारः, निधनमिति । वक्ष्यते चोपरि, 'पञ्चविधं सामोपासीत' इति; 'सप्तविधम्' इति च । तत्रोद्गीथभक्तिर्मध्यमा । सा च नियमेन प्रणवप्रक्रमेणैव गीयत इति अष्टाक्षरमन्त्रस्येव उद्गीथस्य प्रणवः प्रथमावयव इति । जघन्यतयेति । असञ्जातविरोधित्वेन उपक्रमप्राबल्यस्योपक्रमाधिकरण(पू.मी.)सिद्धत्वादिति भावः । इदमुपलक्षणम्—प्रणवयुक्तपूर्णोद्गीथोपासनविधित्वे उद्गीथे प्रणवनैयत्येन 'ओमित्येतदक्षरम्' इत्यस्य वैयर्थ्यञ्चेति ध्येयम् । अत एव उद्गीथे प्रणवदृष्टिर्न विधातुं शक्या । प्रणवस्य तद्युक्तपूर्णोद्गीथापेक्षया निकृष्टत्वात्; उत्कृष्टे निकृष्टदृष्टेरयोगात् । नापि प्रणवे उद्गीथदृष्टिः; उद्गीथ इत्युपासीतेति इतिशब्दाभावेन उद्गीथशब्दस्योद्गीथत्वपर्याप्त्यधिकरणपर्यन्तार्थविवक्षया उद्गीथत्वाश्रयमात्रविवक्षया संभवतः सामानाधिकरण्यस्य त्यागायोगात् । कर्माङ्गे अनङ्गभूतकिञ्चिद्दृष्टेरेव, औद्गात्रेऽत्र उद्गीथेऽन्यदृष्टेरेव च बहुलमुपरिवर्णनेन तद्रीतित्यागायोगाच्च ॥ एतावता उपास्य उद्गीथांशो निर्दिष्टः । उपास्यगुणाः, तत्प्रशंसा,

एषां भूतानां पृथिवी रसः, पृथिव्या आपो रसः, अपामोषधयो रसः, ओषधीनां पुरुषो रसः, पुरुषस्य वाक् रसः, वाच ऋक् रसः, ऋचः साम रसः, साम्न उद्गीथो रसः ॥ २ ॥

स एष रसानाँ रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ॥३॥

---

विभूतिः, एवं फलमित्यादिकथनम् । क्रियत इति शेषः । (१)

**एषां**.... । एषां स्थावरजङ्गमात्मकभूतानां पृथिवी **रसः** परायणम् । भूतानां पृथिव्याधारकत्वादिति भावः । **पृथिव्या आपो रसः** । तस्याः जलप्रकृतिकत्वादिति भावः । **अपामोषधयो रसः** । तत्परिणामत्वादिति भावः । **ओषधीनां पुरुषो रसः** । अन्नपरिणामत्वात् शरीरस्येति भावः । **पुरुषस्य वाक् रसः** । वाचोऽत्युपकारकत्वादिति भावः । **वाचः ऋक् रसः** । ऋचां गम्भीरार्थकत्वादिति भावः । **ऋचः साम रसः** । गीतिसारत्वात् साम्नामिति भावः । **साम्न उद्गीथो रसः** । श्राव्यत्वात् सार इत्यर्थः। अत्रोद्गीथशब्देन उद्गीथावयव ओङ्कार उच्यते । (२)

**स एषः**....। **स एषः** ओङ्कारः । **रसतमः परमः** भूतादीनामुत्तरोत्तररसानामतिशयितो रसः । इतोऽधिको रसो नास्तीत्यर्थः । **परार्ध्यः परस्य** ब्रह्मणः अर्धं स्थानमर्हतीति परार्ध्यः । 'छन्दसि च' इति यत् । ब्रह्मवत् ओङ्कारस्याप्युपास्यत्वादिति भावः । **अष्टमः** ।

---

व्याख्यानमिति । क्रियत इति शेष इति । 'अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्ति' इत्यनुशासनबलात्, भवतीत्युपसंहारानुरोधाच्चान्यथाऽध्याहारेऽपि अत्रैवार्थे तात्पर्यादेवम् ॥

परायणमिति । परत्वं यज्ञादिसत्कर्मान्वयापादकत्वादिनोत्कृष्टत्वात् । अर्थात् एषां भूतानामित्यादिना जन्तोः भूलोके पुरुषरूपेण जनित्वा उद्गीथगानमुपादेयतममित्युक्तं भवति ।

कतमाकतमर्क्, कतमत्कतमत् साम, कतमःकतम उद्गीथ इति विमृष्टं भवति ॥ ४ ॥

वागेवर्क् प्राणः साम, ओमित्येतदक्षरमुद्गीथः ॥ ५ ॥

---

अयमुद्गीथः, **पृथिवी रसः पृथिव्या आपो रस** इति परिगणनाया-मष्टम इत्यर्थः । **यदुद्गीथः**। य उद्गीथ इत्यर्थः । (३)

**वाच ऋग्रसः, ऋचः साम रसः, साम्न उद्गीथो रसः** इति ऋक्सामोद्गीथानां प्रस्तुतत्वात् तानि विमृशति **कतमा....** । कतमा-कतमेति वीप्सा आदरार्था । का ऋगित्यर्थः । एवमुत्तरत्रापि **कतमत् कतमत् सामे**त्यादौ द्रष्टव्यम्। **इति विमृष्टं भवति**। [प्राचीनैः] विमर्शः कृतो भवतीत्यर्थः। विमर्शनिष्पन्नमर्थमाह **वागेव...उद्गीथः।**

---

तानि विमृशतीति । उद्गीथविमर्श एव प्रकृतः । अथापि तत्र ऋचः साम्नश्च निविष्टत्वस्य वक्ष्यमाणत्वात् तद्विमर्शोऽपि कृतः । तथाच ऋचां साम्नां तदवयवभूतोद्गीथव्यक्तीनाञ्चानन्तत्वात्, उद्गी-थस्य शाखाभेदेन स्वरभेदादप्यनेकत्वात् कीदृगृगारूढकीदृशसामा-वयवकिंरूपोद्गीथविषयकमुपासनमत्र विवक्षितमिति विमर्शः क्रियत इति । विमृष्टं भवतीत्यत्र भावे क्तप्रत्ययाश्रयणे विमर्शो भवतीत्यर्थः सिध्येत् । तात्पर्यातिशयादरेण तु विमर्शः कृतो भवतीत्युक्तम् । अयमर्थः—रसतमत्ववर्णनावसरे, 'वाचः ऋग्रसः ऋचस्साम रसः साम्न उद्गीथो रसः' इति निर्देशस्वारस्यात् वाक्कार्येषु शब्देषु ऋचो रसत्वोक्तौ ऋक्सामान्यं रस इत्येव सिद्ध्यति । अतः तत्सामान्या-रूढसामसामान्यं तदवयवभूतोद्गीथसामान्यञ्च तत्रैव दर्शितं भव-तीति सर्वविषयकत्वमुपासनस्य तत एव विमृष्टं भवतीति । तस्मात् कतम उद्गीथ उपास्य इत्यनुक्त्वा तत्र रसतमत्वगुणविधानारम्भः कथमिति न शङ्क्यम् ; अत्रैव एकहेलया सर्वज्ञापनादिति । क्वचित् कोशे, 'प्राचीनैर्विमर्शः कृतो भवति' इति पाठः । वागेव ऋगिति ।

**तद्वा एतन्मिथुनम्, यद् वाक् च प्राणश्च, ऋक् च साम च। तदेतन्मिथुनम् ओमित्येतस्मिन् अक्षरे सँसृज्यते।**

---

ऋचो वागिन्द्रियोच्चारणसाध्यत्वात् वागेव ऋक्; सामगानस्य प्राणनरूपश्वासधारणसाध्यत्वात् प्राण एव साम; उद्गीथभक्त्यवयवत्वात् ओमित्यक्षरमेवोद्गीथ इत्यर्थः। (४-५)

**तद्वा....प्राणश्च।** स्त्रीलिङ्गशब्दवाच्यतया वाचः स्त्रीत्वम्, प्राणस्य पुल्लिङ्गशब्दवाच्यतया पुंस्त्वमिति भावः। **ऋक् च साम च।** अत्रापि तदेतन्मिथुनमित्यनुषज्यते। उक्तरीत्या वाक्प्राणयोर्मिथुनत्वेन तदभिन्नत्वेन ऋक्सामयोरपि मिथुनत्वं द्रष्टव्यम्। **तदेतत्....संसृज्यते।** ऋक्सामात्मकं तदेतन्मिथुनं ओमित्येतस्मिन्नक्षरे उद्गीथावयवभूते संसृज्यते। उद्गीथस्य ऋगारूढसामभक्तिरूपत्वेन ऋक्सामरूपतया उद्गीथावयवप्रणवस्य ऋक्सामाभ्यां संसृष्टत्वात् तदात्मकमिथुनेन संसृष्टत्वमित्यर्थः। वाक्प्राणात्मकमिथुनाध्यासविशिष्टर्क्सामसंसृष्टतया उद्गीथावयवप्रणवोपासनं कर्तव्यमित्यर्थः। (६)

---

**सर्वापि हि ऋक् वाक्कार्या। सर्वं साम प्राणव्यापारसाध्यम्। यादृशतादृशस्वरकं ओमित्यक्षरत्वाक्रान्तं सर्वं सामावयवभूतमुद्गीथ इति भावः।**

**अथात्र सर्वोद्गीथावयवप्रणवे कामाप्तिगुणविधानमारभ्यते तद्वा इत्यादिना। कामाप्तिर्मिथुनसंसर्गाधीना। साम्नि ततो मिथुनसंसर्गो भाव्यः। तत्र च ऋक्सामसंसर्ग एवास्ति। तत्र साम्नः पुंस्त्वाभावात् मिथुनं दुरुपपादम्। अतस्तत्कारणवाक्प्राणयोर्मिथुनत्वं ऋक्सामयोस्तदध्यासञ्च प्रतिपाद्य ईदृशमिथुनसंसृष्टत्वात् भवति कामाप्तिरिति ज्ञापयितुं वाक्प्राणादिप्रस्तावः।**

यदा वै मिथुनौ समागच्छतः, आपयतो वै तावन्योन्यस्य कामम् ॥६॥

आपयिता ह वै कामानां भवति, य एतदेवंविद्वानक्षरमुद्गीथमुपास्ते ॥ ७ ॥

तद्वा एतदनुज्ञाक्षरम्; यद्धि किञ्चानुजानाति, ओमित्येव तदाह । एषो एव समृद्धिः, यदनुज्ञा ।

समर्द्धयिता ह वै कामानां भवति, य एतदेवं विद्वानक्षर-

---

**यदा....कामम्** । यदा दम्पती मिथुनीभूतौ ग्राम्यधर्माय संसृज्येयाताम् , तदा अन्योन्यकामप्रापकत्वं प्रसिद्धमित्यर्थः । **मिथुनाविति** पुंस्त्वद्विवचने छान्दसे । ततश्च ओङ्कारोऽपि स्वसंसृष्टमिथुनेन कामप्रापक इति भावः । तदुपासकोऽप्युद्गाता स्वोपास्यौङ्कारवत् यजमानकामप्रापक इत्याह **आपयिता....मुपास्ते** । कामाप्त्यादिविशिष्टोद्गीथावयवोपासनस्य यजमानगतकामाप्तिरेव फलमित्यर्थः । (७)

**तद्वा एतदनुज्ञाक्षरम्** । ओङ्कारोऽनुज्ञाक्षरमित्यर्थः । तदेवोपपादयति **यद्धि....तदाह** । लोके हि अनुज्ञां प्रयच्छन् पुरुषः ओमित्यनुजानातीत्यर्थः । (८)

**एषो....ज्ञा** । उशब्दः प्रसिद्धौ । लोके समृद्धिमान् हि ओमित्यनुज्ञां प्रयच्छति । अतोऽनुज्ञारूपस्य ओङ्कारस्य समृद्धिमूलत्वात् अनुज्ञारूप ओङ्कार एव समृद्धिरित्यर्थः । एवं समृद्धिगुणविशिष्टौङ्कारोपासनस्य फलमाह **समर्द्धयिता...मुपास्ते** । यजमानस्य कामसमृद्धिं करोतीत्यर्थः ।

---

**यजमानेति । मूले आप्तेत्यनुक्त्वा आपयिता इति निर्देशः, 'आर्त्विज्यमित्यौडुलोमिः' इति सूत्रार्थं दर्शयतीति** ध्येयम् ।

मुद्गीथमुपास्ते ॥ ८ ॥

तेनेयं त्रयी विद्या वर्तते, ओमित्याश्रावयति ओमिति शँसति ओमित्युद्गायति एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥ ९ ॥

---

उपास्यमोङ्कारं प्ररोचनार्थं स्तौति **तेनेयं....। तेन** प्रकृतेन उपास्येन ओङ्कारेण **त्रयी विद्या** त्रयीविहितं कर्म प्रवर्तत इत्यर्थः। तदेवोपपादयति **ओमिति....गायति** । ओङ्कारपूर्वकत्वादाश्रवण शंसनोद्गानानामित्यर्थः। किमिति ओङ्कारपूर्वकमेवाऽऽश्रवणादिकं क्रियत इत्यत्राह **एतस्यैव....रसेन** । **रसेन** सारभूतेन **महिम्ना** माहात्म्येन युक्तस्यैतस्य ओङ्कारलक्षणस्य अक्षरस्य **अपचित्यै** पूजार्थमित्यर्थः। (९)

---

कार्यनिर्वाहसामर्थ्यपौष्कल्यम्। तादृशो हि प्रार्थितश्चेत्, ओमित्यनुजानातीति। एवमनुज्ञाया अभावे कार्यानिष्पत्त्या समृद्ध्यभावात् अनुज्ञा समृद्धिः इत्याद्यपि भाव्यम्। कामसमृद्धिमिति। पूर्वमपेक्षितकामप्राप्तिरुक्ता। इदानीमुपायान्तरलभ्यस्य फलस्य समृद्धिरुक्तेति भेदः।

उपास्यमिति। उपासनस्य विधीयमानत्वात् प्ररोचना युक्तेति दर्शयितुमिदं पदम्। तेनेयमित्यत्र तेनेति पदं सोपासनप्रणवपरामर्शीति, 'समाहारात्' इति पूर्वपक्षसूत्रे उक्तम्। सिद्धान्ते तु तत्र न निर्भरः; उद्गीथावयवभूतप्रणवस्यैवोपासनसंस्पर्शात् स्ववाक्योक्ताश्रवणाद्यन्वयिशुद्धप्रणव एव तदलाभात्। 'तद्वा एतदनुज्ञाक्षरम्' इति पूर्ववाक्ये तच्छब्दस्य केवलप्रणवपरत्वात्। तेनोभौ कुरुत इत्युत्तरवाक्येऽप्युपासनविशिष्टस्यापरामर्शाच्च। तत्र हि तच्छब्दः विद्वदविद्वदुभयान्वयिप्रणवमात्रपरः। त्रयीति। आश्रवणे शंसने उद्गीथे चाध्वर्योर्होतुरुद्गातुश्च क्रमेण कर्तृत्वात् तत्तद्वेदरूपत्रय्याः प्रणवाधीना वृत्तिरिति।

तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च न वेद; नाना तु विद्या चाविद्या

---

'ननु अनेवंविद्भिरपि कर्मणोऽनुष्ठीयमानत्वदर्शनात् विद्या-वैयर्थ्यम्' इत्याशङ्क्य, 'सत्यं विद्वद्भिरविद्वद्भिरपि लोके ओङ्कारेण कर्मानुष्ठीयते तथापि विद्याविद्ये विलक्षणफले; विद्यया क्रियमाणं हि कर्म वीर्यवत्तरं भवति; अतादृशे तु न तथा' इत्याह **तेन....भवति**। **नाना तु** विलक्षणफले इत्यर्थः। **यदेव**। कर्मेत्यर्थः। **विद्या** उपासनम्। **श्रद्धा** आस्तिक्यबुद्धिः। **उपनिषच्छब्देन** उपनिषज्जन्यं ब्रह्मात्मकत्वज्ञानमुच्यते। कर्मणो वीर्यवत्तरत्वं नाम प्रबलकर्मान्तरा-प्रतिबद्धफलकत्वम् ॥

---

इत्याशङ्क्येति। अत्र मूले तेनोभौ इत्यादिराशङ्काग्रन्थः। नानात्वित्यादि परिहारग्रन्थ इति शाङ्करे प्रतीयते। तुशब्दोऽपि तदा स्वरसः। एवं वाऽस्तु। उद्ग्रन्था शङ्का; तत्परिहर्तुर्वाक्यमेव तेनेत्या-दिकं सर्वमिति वाऽस्तु इति गूढोऽभिसंधिरिह भाव्यः।

विलक्षणफले इति। विद्याकर्मणोः स्वरूपभेदस्य स्पष्टत्वात् नानेति पदं न तत्परम्। किंतु फलद्वारा पृथक्त्वपरमिति भावः। एष एव तु नानापदार्थः, 'पृथग्घ्यप्रतिबन्धः फलम्' इति सूत्रे दर्शितः। इदमेव विव्रियते यदेव विद्ययेति वाक्येन। अत्र विद्यया श्रद्धयोप-निषदा करोतीत्यनुक्त्वा विद्यामात्रस्य प्राङ् निर्देशः तस्या एव मुख्यत्वम्, श्रद्धोपनिषदोस्तु तदुपयोगित्वमिति ज्ञापनाय। केचित् कर्मकाण्डश्रद्धालवः उपनिषदामूपरप्रायतां मन्यन्ते। अतथाभूय, अस्ति कश्चिदौपनिषदः परमपुरुष इति च विश्वस्य, तदर्थभक्ति-योगाङ्गकर्माणि कर्मकाण्डकथितप्रकारेण प्रागनुष्ठितैरन्यादृशैः कर्मभिः अवरदेवतार्थैः कथमपि प्रतिबद्धफलानि मा भूवन्निति श्रद्धया

च ; यदेव विद्यया करोति श्रद्धयोपनिषदा, तदेव वीर्यवत्तरं भवति । इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥ १० ॥

इति प्रथमाध्याये प्रथमः खण्डः ।

---

इति....भवति । रसतमत्वकामाप्तिसमृद्धिगुणकत्वादिभिरुक्तप्रकारैर्विशिष्टमभिहितमुपासनं सर्वमेतदक्षरविषयकमेवेत्यर्थः। ततश्चोपास्यभेदशङ्का न कार्येति भावः ॥ (१०)

---

यद्येतादृग्विद्यया कर्म करोति, तदा तद् वीर्यवत्तरं भवतीति विशिष्टार्थः। ब्रह्मात्मकत्वज्ञानार्थकोपनिषत्पदेन 'ब्रह्मार्पणम्' इति रीत्या कर्म कुर्वतां विषये ईदृशविद्यानामुपयोग इति दर्श्यते ।

अत्र विद्ययेति तृतीया कस्मिन्नर्थे इति चेत्—विद्यापदस्य कर्मानुष्ठानोपयोग्यर्थज्ञानपरत्वाभावात् उद्गीथादिविद्यापरत्वात्, कर्मणश्च क्रतोरुद्गीथादिनिर्वर्त्यत्वेऽपि तद्विद्यानिर्वर्त्यत्वाभावात् इत्थंभूतलक्षणे तृतीया । यश्च वेदेति प्रागुक्तरीत्या यत् विद्योपलक्षितः करोतीति विद्या पुरुषविशेषणम् । विद्यया सह करोतीति सहार्थे वा । अथवा उपपदविभक्तेः कारकविभक्तिर्बलीयसीति करण एव । करणत्वञ्चेदं फलकरणतारूपमिति यथाश्रयभावाधिकरणसिद्धान्तभाष्यानुसारिसारावल्यादिसिद्धम् । यद्यपि विद्यया करोतीति कर्मनिरूपितं करणत्वमेव बुद्ध्यते, अथाप्यस्याः कर्मनिर्वर्तकत्वाभावात् कर्मगतशक्त्यतिशयाधायकत्वरूपानुग्राहकत्वात्मकं तदिति फलकरणत्वमेव तत् भवति। वीर्यं हि नाम कार्यानुकूला शक्तिः। तस्याः प्रतिबन्धकनाश्यत्वं प्रसिद्धम्। वीर्येऽतिशयश्च सत्यपि प्रतिबन्धके कार्योपधायकत्वम् । स एव वीर्यातिरेको विद्याफलमिति ॥ अत्र यदेव विद्ययेति वाक्यं स्वारस्यात् कर्माङ्गाश्रितसर्वविद्यानां वीर्यातिरेकफलविधानार्थम् । 'आश्रवण-शंसनवत् उद्गानस्यापि विद्यां विनैव कर्मोप-

एतत्खण्डान्तर्गतवाक्यविषयाणि अधिकरणानि उपन्यस्यन्ते—

(१) **अङ्गपादे,** 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' इत्येवञ्जातीयकानां वाक्यानाम्, 'इयमेव जुहूः, स्वर्गो लोक आहवनीयः' इत्यादिवाक्यवत् स्तावकत्वमेव, न तु रसतमत्वादिलक्षणोपास्यगुणसमर्पकत्वम्। 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति नोपासनं विधीयते। उद्गीथविधिसिद्धानुष्ठानौपयिकज्ञानसामान्यवाची हि **उपासन**शब्दः। अतोऽनुवाद एव। ततश्च रसतमादिवाक्ये समभिव्याहृतविध्यभावेन तदेकवाक्यतया स्तावकत्वाभावेन उद्गीथपदोपस्थापितक्रतुप्रकरणगतोद्गीथविध्येकवाक्यतयैव रसतमादिवाक्यानां स्तावकत्वम्। न च स्तावकवाक्यानां स्तुत्यविधिसमभिव्याहारनियमोऽस्ति।

---

**कारकत्वात्, सर्वयजमानकामसमृद्धेः अन्यतोऽपि सिद्धेश्च कर्मकाण्डोक्ताधिकं न किमपि वक्तव्यमस्ति' इत्याशङ्कायाम्, उपनिषदुक्ता विद्या वीर्यातिरेकहेतुरिति सामान्येन तत्परिहारार्थत्वादस्य वाक्यस्य। अतो यत्र विशिष्य फलान्तरमुक्तम्, तत्र तद्वा एतद्वा फलम्; अन्यत्रैतदेवेति।**

**उक्तप्रकारैर्विशिष्टमिति रसतमत्वादिसर्वगुणविशिष्टोद्गीथोपासनमेकमिदमित्युक्तमत्र शाङ्करेऽपि।**

**एतत्खण्डेति। उपासनस्वरूपसत्ता, तद्विषयभूतोपास्यस्वरूपम्, उपासनफलम्, फलोत्पत्तिकालः इतीमानि क्रमेण व्युत्पादयितुमर्हाणीति विमृश्य अधिकरणानामुपन्यसने व्यत्यासादरः। एतदधिकरणचतुष्टयवत् "यदेव विद्ययेति हि" इति सूत्रमपि भाव्यम्। उद्गीथविद्यासंबन्धीनि अधिकरणान्तराणि तु अनन्तरखण्डादौ**

'एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि' इत्यतिदिष्टार्थवादेषु व्यभिचारात् ॥ अस्तु वा उद्गीथमुपासीतेत्युपासनविधिः; तदेकवाक्यता च रसतमादिवाक्यानाम्–तथापि रसतमादिवाक्यानां नोपासनविषयसमर्पकत्वेनैकवाक्यत्वम्, 'ओमित्येतदक्षरम्' इत्यनेनैव उपास्यलाभात्। अपितु उपास्योद्गीथस्तावकत्वेनैव; उपास्योद्गीथमादाय स्तुतिमात्रस्योपलम्भात् इति 'स्तुतिमात्रमुपादानादिति चेत्' इति सूत्रखण्डेन पूर्वपक्षं कृत्वा, 'नापूर्वत्वात्' इति सूत्रखण्डेन च, 'भावशब्दाच्च' इति सूत्रेण च सिद्धान्तः कृतः।

अयमर्थः—उद्गीथे रसतमत्वादीनां मानान्तराप्राप्तत्वेन अनुवादमुखेन स्तुत्यसंभवात्; 'इयमेव जुहूः' इत्यादौ जुहूविधेः संनिहित-

---

अत्र स्तुतिमात्राधिकरणश्रीभाष्ये, उपासनविधिरेव नेति पूर्वपक्षः, उपासनविधिसत्त्वात् रसतमत्वादिः उपास्याकार इति सिद्धान्तश्च स्फुटः। एवञ्च सूत्रादिगतिपरामर्शे अत्र चतुर्थपादे, 'विद्यैव तावदुपनिषदि विधीयमाना काचिन्नास्ति, यद्विषये विशेषविचारस्तृतीयपादे' इति आपातजैमिनीयानुयाय्याशङ्कायां परमपुरुषार्थहेतुभूताः भक्तिविद्याः, "पुरुषार्थोऽतः" इत्यधिकरणेन स्थापयित्वा अथोद्गीथविद्यादिकर्माश्रितोपासनापलापिनां मतिमपाकर्तुं स्तुतिमात्राधिकरणप्रवर्तनमिति ज्ञायते। एवमुपासनविध्यभावशङ्कापरिहारार्थमेव च, 'भावशब्दाच्च' इति सूत्रमप्यत्र। अथापि अत्राधिकरणे श्रीभाष्यादौ उद्गीथमुपासीतेति उपासनविधिवाक्यमधिकृत्य न विचारः, किन्तु रसतमादिवाक्यमेवेति हेतोः, उपासनविधिसद्भावेऽपि रसतमत्वादि न विधेयमित्यपि पूर्वपक्षः, विधेयमिति च सिद्धान्त इति भावप्रकाशिकायां पक्षद्वयमवलम्ब्याधिकरणरचना

तया तदेकवाक्यत्वेन तत्स्तावकत्वसंभवेऽपि क्रतुप्रकरणगतोद्गीथविधेः असंनिहिततया तदेकवाक्यत्वाभावात् ; 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यादिवत् तदेकवाक्यताकल्पकवचनान्तराभावात् । 'ओमित्येतदक्षर-मुद्गीथमुपासीत' इति संनिहिते विस्पष्टविधिप्रत्यययुक्ते क्रियावाचिनि भावशब्दे विद्यमाने तदेकवाक्यतामनादृत्य क्रतुप्रकरणगतोद्गीथविध्येक-वाक्यताकल्पनस्यान्याय्यत्वात् ।

ननु संनिहितोपासनविध्येकवाक्यत्वेऽपि उपास्योद्गीथस्ताव-कत्वेनैव रसतमादिवाक्यानामेकवाक्यताऽस्तु ; न तु उपास्यसमर्प-कत्वेनेति चेन्न ; उपासनविषयसमर्पकतया प्रवृत्तिविशेषक[र]त्वे संभवति व्यर्थप्रायस्तुतित्वकल्पनाया अन्याय्यत्वात् ।

---

दर्शिता । तदनुसारेणात्रापि, 'नोपासनं विधीयते', 'अस्तु वा— उपासनविधिः' इति पक्षद्वयमुपन्यस्तमिति ध्येयम् ।

एतद्ब्राह्मणान्येवेति । सन्ति चातुर्मास्यानि । तत्र चत्वारि पर्वाणि वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयाख्यानि । तत्र प्रथमे वैश्वदेवपर्वणि अष्टौ हवींषि विहितानि । तत्रार्थवादः, 'वार्त्रघ्नानि वा एतानि हवींषि' इति । तत्राऽऽद्यानि, 'आग्नेयमष्टा-कपालं निर्वपति सौम्यं चरुं पौष्णं चरुम्' इत्याद्युक्तानि पञ्च हवींषि वरुणप्रघासेऽपि विहितानि पञ्चसञ्चराः । तत्रेदं वाक्यं श्रूयते, एतद्-ब्राह्मणानीति। वैश्वदेवपर्वगतानि हवींषि यादृशब्राह्मणवाक्ययुक्तानि, वरुणप्रघासगतानि इमान्यपि तद्ब्राह्मणकान्येवेति तदर्थः । तत्र ब्राह्मणशब्देन अर्थवादस्याङ्गविधीनाञ्च ग्रहणमिति (पू. मी. ७-१-४.) सिद्धान्तितम्। सर्वथा अर्थवादस्य वैश्वदेवगतस्य वरुणप्रघासविधिभि-

अतो रसतमत्वादिकमप्युपास्यमेव । ततश्च रसतमत्वादिविशिष्ट-तयैवोद्गीथोपासनं कर्तव्यं त[त्]त्फलार्थिभिरिति स्थितम् ॥

(२) तथा **[गुणोपसंहारपादे १]**, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादौ निर्विशेषसामान्येन व्यवहारासंभवात् विशेषाकाङ्क्षायां तत्तच्छाखागतानामेवोद्गीथव्यक्तीनां संनिहितत्वात् तन्मात्रविषयत्व-मेवोद्गीथश्रुतेः युक्तम् । ततश्च ताण्डिशाखागतरसतमत्व-कामाप्ति-हिरण्मयपुरुष-आकाशादिदृष्टिविशिष्टोपासने ताण्डिशाखागतोद्गीथ-व्यक्तेरेव क्रतुमध्यप्रयुक्ताया उपास्यत्वम्, न तु शाखान्तरगतोद्गीथ-व्यक्तेः । न च सर्वशाखागतोद्गीथानामैक्यं शङ्क्यम्; स्वरादिभेदेन उद्गीथव्यक्तीनां भिन्नत्वात् । न चोद्गीथश्रुतेः संकोचलक्षणबाधप्रसङ्ग इति वाच्यम्-'शुक्लं पटमानय' इत्यादौ **पट**शब्दस्य व्यक्तिविशेषार्थ-कत्वेऽपि,

> "जातिव्यक्ती गृहीत्वेह वयं तु श्रुतलक्षिते ।
> कृष्णादि यदि मुञ्चामः का श्रुतिस्तत्र पीड्यते ॥"

---

क्रतुप्रकरणगतोद्गीथविधिसमभिव्याहारस्य रसतमादिवाक्येऽभावेऽपि तदेकवाक्यता भवितुमर्हतीति भावः । तत्र एतद्ब्राह्मणानीति विशेषवचनबलात् व्यवहितयोरेकवाक्यत्वं युक्तम्; न त्वत्र, गमकाभावादिति सिद्धान्त्याशय उपरि दर्शयिष्यते ।

ताण्डिशाखागतेति । छान्दोग्यगतेत्यर्थः । श्रुतलक्षिते इति । जातेः श्रुतत्वं व्यक्तेर्लक्षितत्वञ्चात्रोक्तम् । मीमांसावाक्यमिदमिति तन्मते तत् युक्तम् । अस्मन्मते तु जातिवत् व्यक्तेरपि श्रुतत्वमेव । अथापि, 'सर्वत्र सामान्यं पदार्थः, विशेषो वाक्यार्थः' इति न्यायेन शब्दस्य सर्वव्यक्तिवाचित्वेऽपि संनिहितकतिपयव्यक्तिग्रहणेन

इति [उक्त]न्यायेन श्रुत्यर्थभूताया: पटत्वजाते:, लक्ष्याया व्यक्तेश्चा-परित्यागेन पटश्रुत्यबाध इत्युक्तरीत्या—उद्गीथश्रुतेरप्यबाधात् तत्त-च्छाखागतोद्गीथमात्रविषयत्वमेव – इति पूर्वपक्षे प्राप्ते,

उच्यते—'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ।' तुशब्द: पूर्वपक्षव्यावृत्त्यर्थ: । उद्गीथाद्यङ्गावबद्धा उपासना: तत्तच्छाखागतोद्गीथ-व्यक्तिष्वेव न व्यवतिष्ठेरन् । अपितु प्रतिशाखं संबध्येरन् । शुक्लं पट-मानयेत्यादौ शुक्लपदसमभिव्याहारान्यथानुपपत्त्या विशिष्टैकार्थप्रत्यायनाय अविशेषप्रवृत्तश्रुते: पीडनेऽपि प्रकृते तादृशबाधकाभावेन अविशेष-प्रवृत्तोद्गीथश्रुते: सन्निधिमात्रेण संकोचाभावात् (संभवात्) शाखान्तरगत: क्रतुमध्ये प्रयुज्यमान: उद्गीथ: शाखान्तरोक्तोपासनप्रकारेणाप्युपास्य इत्यर्थ: । 'मन्त्रादिवद्वाऽविरोध: ।' शाखान्तराम्नातानां मन्त्रादीनां शाखान्तराम्नातक्रतुसंबन्धवत् शाखान्तरगतोपासनानामपि शाखान्तर-गतोद्गीथसंबन्धे विरोधाभावात् इति स्थितम् ॥

(३) तथा **गुणोपसंहारपादे**--'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिना विहितानामङ्गावबद्धोपासनानाम् अव्यभिचरितक्रतुसंबन्धि-जुहूपस्थापितक्रतुफलनिराकाङ्क्षपर्णतादिवत अव्यभिचरि-क्रतुसंबन्धयु-

---

**वाक्यार्थवर्णनमेव गामानयेत्यादौ दृष्टमिति संनिहितोद्गीथव्यक्तिरेव ग्राह्येति पूर्वपक्षी मन्यते । यावति विशेषे संकोचाभावे समभि-व्याहृतपदान्वयभङ्ग:, तावत्संकोच इष्ट: सर्वत्र । न चात्रोद्गीथपदस्य स्वरसस्थितसर्वोद्गीथग्राहकत्वे काचिदनुपपत्तिरिति सिद्धान्ती ।**

**अव्यभिचरितक्रतुसंबन्धीति । पर्णतावाक्यस्य क्रतुप्रकरणेऽ-भावेऽपि जुह्वा: क्रतोरन्यत्रोपयोगाभावात् क्रतुसंबन्धस्तस्या अव्यभि-**

द्गीथोपस्थापितक्रतुफलेनैव नैराकाङ्क्ष्यात्, 'तदेव वीर्यवत्तरं भवति' इति वीर्यवत्तरत्वादिश्रवणानामर्थवादत्वात् व्रीहिप्रोक्षण-पर्णतादिवत् अङ्गत्वात् उपासनानि क्रतौ नियमेनोपादेयानीति पूर्वपक्षे प्राप्ते— उच्यते। 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्।' निर्धारणं निश्चयेन मनसोऽवस्थापनम्; ध्यानमित्यर्थः। तस्योपासनस्य **अनियमः** नियमेनाननुष्ठानम्, 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्यनियमदर्शनात्; तस्योपासनस्य प्रबलकर्माप्रतिबन्धरूपवीर्यवत्तरत्वलक्षणफलान्तरवत्त्वेन कर्माङ्गत्वाभावादित्यर्थः। अयं भावः— पर्णतोदुम्बरता(त्वा)दिस्थले विधिविभक्त्यश्रवणादर्थवादेनैव विधिशक्तिमुपजनय्य पुनस्तेनैव फलसमर्पणे विरम्यव्यापारात् वाक्यं भिद्येत। उपासनायां तु विस्पष्टविधिश्रवणात् न फलविधित्वे[ऽपि] वाक्यभेदशङ्का। अतः पर्णतोदुम्बरतादिविध्यपेक्षया उपासनविधेर्वैषम्यात् फलविधित्वं संभवति इति स्थितम्।

---

चरित इति क्रत्वन्वयनियम इति। संबन्धीत्येव सर्वग्रन्थपाठः; न संबन्धेति। ततः अव्यभिचरितं यथा तथा क्रतुसंबन्धीति विग्रहः। प्रबलेति। क्रतुफलस्य प्रबलकर्माप्रतिबन्धरूपं वीर्यवत्तरत्वलक्षणं फलान्तरं अप्रतिबद्धफलकत्वरूपस्य वीर्यवत्तरत्वस्य लक्षणं = निरूपणं यत् फलान्तरं क्रतुफलादन्यत् फलमिति वा; तद्वत्त्वेनेत्यर्थः। विधिविभक्तिः लिङादिः। अर्थवादेनैवेति। विध्यभावादविहितस्य स्तुत्यनासंभवात् अर्थवादलब्धस्तुतिबलात् विधिकल्पनेति प्रथमं स्तुतिबोधनव्यापारोऽर्थवादस्य; तदनन्तरं विहितस्य फलाकाङ्क्षायां पुनस्तस्यैव फलबोधनव्यापार इति विरम्यव्यापारः। अत एव वाक्यद्वयेऽभ्युपेयव्यापारद्वयस्यैकत्र स्वीकारात् वाक्यभेददोषश्च।

(४) तथा **अङ्गपादे**—मुक्तिव्यतिरिक्तफलकोपासनानामुद्गीथ-
वेद्यारहितयज्ञादिकर्मनिष्पाद्यानामपि यज्ञादिरूपसाधननिष्पत्तौ सत्यां
वेलम्बे हेत्वभावादिह जन्मन्येव निष्पत्तिरिति पूर्वपक्षे प्राप्ते, उच्यते—
ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ।' मुक्तिव्यतिरिक्तफलकमुपासनं
**अप्रस्तुतप्रतिबन्धे** प्रतिबन्धाभावे **ऐहिकं** इहैव [जन्मनि भवम् इहैव]
न्मनि [सं]भवति । सति प्रतिबन्धे जन्मान्तरे । 'न च प्रतिबन्धासंभवः
धाभावः) शङ्कनीयः ; 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव
र्यवत्तरं भवति' इत्युद्गीथविद्यायाः प्रबलकर्मान्तराप्रतिबद्ध(न्ध ?)-
लकत्वावेदनेन प्रबलकर्मान्तरप्रतिबन्धस्यानुज्ञातत्वात् । न च, 'तमेतं
दानुवचनेन ब्राह्मणा विविदिषन्ति' इति यज्ञादेर्वेदनसाधनत्वश्रवणात्
ारीर्यभिचारादिवत् नियतैहिकत्वमेव किं न स्यादिति वाच्यम्—

---

'विविदिषन्ति यज्ञेन' इत्यादिविहितानि कर्माणि वीर्यवत्तर-
त्राय विद्यासहितमनुष्ठीयन्ते । वेदनञ्च, 'चतुर्विधा भजन्ते माम्'
त्यादिप्रामाण्यात् सर्वफलार्थम् । तदिदं मुक्तिव्यतिरिक्तफलकं
क्तिफलकञ्च वेदनमुद्दिश्य कर्माण्यनुष्ठीयमानानि प्रकृतोद्गीथ-
द्यादिप्रबलोत्तेजकाभावे प्रबलकर्मप्रतिबद्धफलानि भवेयुरिति,
ङ्गपादे विद्याङ्गकर्मनिरूपणानन्तरमन्ते तत्कार्यनिष्पत्तिप्रकारः
ूत्रितः । तमपि प्रकृतविद्यासंबन्धित्वात् दर्शयति तथेत्यादिना ।
हैवेति । ननु ऐहिकमित्यस्य इहैव जन्मनि भवमित्यर्थस्वीकारे
क्तिव्यतिरिक्तफलकस्येव मुक्तिफलकस्याप्युपासनस्याप्रतिबन्धे
हिकत्वमेतदधिकरणसिद्धमिति उत्तराधिकरणं व्यर्थं स्यात् । अतः
हिकपदमैहिकफलकोपासनरूपपक्षसमर्पकं वाच्यम् ; न तु भाष्य-
रम् । उपरि सूत्रे मुक्तिफलेति तत्फलकोपासननिर्देशवत् इति चेन्न ;

शुष्यच्छालिसंपत्ति-वैरिविशेषविपत्तिफलकत्वेन विहितानां तेषां नियतैहिकत्वेऽपि विद्यासाधनयज्ञादिकर्मणां तज्जन्मनि विद्योद्देशेनाविहिततया पश्वादिफलकचित्रेष्ट्यादिवत् नियतैहिकत्वाभावात् । पूर्वतन्त्रे चतुर्थाध्याये **योगसिद्ध्यधिकरणे** तथा निर्णीतत्वात् इति स्थितम् ॥

(५) तथा तदुत्तराधिकरणे—'यक्षानुरूपो बलिः' इति न्यायेन

---

सिद्ध्या तदधिकरणवैयर्थ्यात् । अधिकाशङ्कया तत्प्रवृत्तिरिति चेत्, अस्याधिकरणस्य सर्वपरत्वेऽपि तत्र विशिष्याधिकाशङ्कया आक्षेपे तत्प्रवृत्तिरिति सुवचम् । तथाच, कर्मणि अप्रस्तुतप्रतिबन्धे सति कर्मफलमैहिकमिति सूत्रार्थः । वस्तुतः ऐहिकपदं पक्षपरं साध्यपरं वेति विमर्शो भावप्रकाशिकायां द्रष्टव्यः ।

ननु चित्रेष्ट्यादिदृष्टान्तेऽप्यनियतैहिकत्वमसिद्धमित्यत्र तत् पूर्वमीमांसासिद्धमित्याह पूर्वेति । योगसिद्धीति । 'योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात्' इति तत्र सिद्धान्तसूत्रम् । तत्राधिकरणे वर्णकद्वयम् । प्रथमवर्णके सर्वे कामाः एकप्रयोग एवेति पूर्वः पक्षः । यत्र कामनायोगः तस्यैकस्यैवैकस्मिन् प्रयोगे सिद्धिरिति सिद्धान्तः । द्वितीयवर्णके पश्वादेरैहिकामुष्मिकत्वं सिद्धान्तितम् । अधर्मेणाप्रतिबन्धे इह जन्मनि, अन्यदा अमुत्रेति। ननु तर्हि तदधिकरणन्यायेनैवोपासनविषयेऽपि सिद्धौ इदं शारीरकाधिकरणं व्यर्थमिति चेन्न; विचारवैषम्यात् । तत्र हि विहितकर्मजन्याः कामाः सर्वेऽपि स्वर्गादिविशेषादमुत्रैव भवेयुरिति पूर्वपक्षे, अर्थ्यमानस्य फलस्य देहान्तरोत्पत्त्येकलभ्यत्वाभावात् यथायोगं सिद्धिः = योग्यतानुसारेणात्रापि सिद्धिः, प्रतिबन्धवशादनुभवयोग्यताया अभावे तु तत्रेति सिद्धान्तितम् । नियतैहिकमपि किञ्चित् कर्मास्तीति च प्रदर्श्य नियतामुष्मिकत्वं निराकृतं तत्र । अत्र तु शारीरके तत्रोक्तनियतैहिकाभिचारादिवत् नियतैहिकत्वं पूर्वपक्षीष्टम् । प्रतिबन्धं प्रदर्श्य तन्निराकृतमिति ।

**प्रथमे द्वितीयः खण्डः**

देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्याः । तद्ध देवा उद्गीथमाजहुः, 'अनेनैनान् अभिभविष्याम' इति ॥ १ ॥

ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे; तँ हासुराः

---

बलवत्कर्मसाध्यानां मुक्तिफलकब्रह्मोपासनानां प्रबलकर्मान्तरप्रतिबन्धासंभवात् नियतैहिकत्वमेवेति पूर्वपक्षे प्राप्ते—उच्यते, 'एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थास्तदवस्थावधृतेः ।' मुक्तिफलकविद्यानामप्यैहिकत्वनियमो नास्ति, अ(?)प्रस्तुतप्रतिबन्धस्वरूपावस्थायाः विशेषेण तत्राप्यवधृतत्वात् । तत्रापि प्रबलानां ब्रह्मविदपचारादिप्रतिबन्धकानां संभवात् । द्विरुक्तिरध्यायपरिसमाप्त्यर्था । प्रकृतमनुसरामः । (१-१)

उद्गीथावयवे ओङ्कारे मुख्यप्राणदृष्टिं विधातुमाख्यायिकां प्रस्तौति **देवासुराः...प्राजापत्याः ।** द्विविधाः प्रजापतिसुताः देवा सुराः **यत्र** यस्मिन् काले **परस्परं संयेतिरे** युद्धं कृतवन्त इत्यर्थः । **प्राजापत्या** इति अपत्यार्थे, 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यः । **तद्ध...इति। तत्** तदा [ह प्रसिद्धं यथा तथा] देवाः **अनेनैव** उद्गीथावयवेन ओङ्कारेणोपासितेन **एनान्** असुरान् **अभिभविष्यामः** जेष्यामः इत्यभिसंधाय उद्गीथ(थं)प्रणव(प्राण)मुपायत्वेन स्वीकृतवन्त इत्यर्थः ।

**ते....चाक्रिरे** । **ते** देवाः घ्राणेन्द्रियत्वेनोद्गीथमुपासितवन्त इत्यर्थः । नासिकायां भवं **नासिक्यम्** । 'शरीरावयवाच्च' इति यत् ।

---

**नासिक्यं प्राणमिति । घ्राणमित्यनुक्त्वा एवमुक्तिः, 'उद्गीथे प्राणदृष्टिः शास्त्रोक्ता । प्राणश्च वायुविशेषवत् इन्द्रियमपीति मुख्यामुख्यानवबोधेन घ्राणरूपप्राणे प्रवृत्तिर्देवानामासीदिति ज्ञापयितुम् ।**

पाप्मना विविधुः। तस्मात् तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च; पाप्मना ह्येष विद्धः ॥ २ ॥
अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ; ताँ हासुराः पाप्मना विविधुः ; तस्मात् तयोभयं वदति सत्यञ्चानृतञ्च ; पाप्मना ह्येषा विद्धा ॥ ३ ॥

अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे ; तद्धासुराः पाप्मना विविधुः। तस्मात् तेनोभयं पश्यति दर्शनीयञ्चादर्शनीयञ्च ; पाप्मना

---

**तं....विविधुः**। तं नासिक्यं प्राणमसुराः स्वकीयेन पाप्मना संयोजितवन्तः। पापहेतुभूतवृत्त्या संयोजितवन्त इति यावत्। **तस्मात्.... विद्धः**। **तस्मात्** पापसंसर्गाद्धेतोः पुरुषो घ्राणेन सुरभि च दुर्गन्धिं चोभयं जिघ्रति। तस्मान्नासिक्यः प्राणः पापविद्ध एवेत्यर्थः। **अथ.... विद्धा**। पूर्ववत्। **अथ....विद्धम्**। **अदर्शनीयम्** अमेध्यादिक-

---

उपरि चक्षुरित्यादावपि प्राणमिति पदस्यानुषङ्गः। सुरभि च दुर्गन्धि चेति। वागादौ वक्ष्यमाणानुसारात् घ्रातुमर्हमनर्हञ्चेत्यर्थः। अत एव पापहेतुभूतवृत्त्येति भाषितम्। वृत्तिरिन्द्रियव्यापारः। तस्याः पापहेतुत्वं निषिद्धत्वात्। दुर्गन्ध्याघ्राणं निषिद्धमेवेति। तस्मान्नासिक्य इति। पूर्ववाक्ये तस्मादिति हेतोर्निर्दिष्टत्वात् अत्र पाप्मना हीति हिशब्दो न हेताविति भावः। ननु बृहदारण्यके, 'घ्राणेन्द्रियमुद्गातृ भूत्वा यजमानेषु भोगविशेषं स्वात्मने कल्याणघ्राणञ्च फलमकामयत। तदा असुराः तत्कार्यभङ्गकामाः पाप्मवेधेन घ्राणे दुर्गन्धाघ्राणं कल्पयामासुः' इत्युक्तम्। तत् युज्यते। अत्र तु घ्राणादेरुद्गातृत्वकल्याणघ्राणकामित्वाद्यनुक्त्या देवानामेवोद्गीथे घ्राणादिदृष्टिकर्तृत्वात् घ्राणादिदूषणमसुरकृतं किमर्थमिति चेत्—निकृष्टे उत्कृष्टदृष्टेरेव कर्तव्यत्वात् उद्गीथे घ्राणदृष्टिं क्रियमाणां दूषयितुं घ्राणे निकर्षकल्पनाय तद् दूषयामासुरित्येवं योयुज्यते।

ह्येतत् विद्धम् ॥ ४ ॥

अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे ; तद्धासुराः पाप्मना विविधुः । तस्मात् तेनोभयँ शृणोति श्रवणीयञ्चाश्रवणीयञ्च ; पाप्मना ह्येतद् विद्धम् ॥ ५ ॥

अथ ह मन उद्गीथमुपासाञ्चक्रिरे ; तद्धासुराः पाप्मना विविधुः ; तस्मात् तेनोभयँ संकल्पयते संकल्पनीयञ्चासंकल्पनीयञ्च ; पाप्मना ह्येतत् विद्धम् ॥ ६ ॥

अथ ह, य एवायं मुख्यः प्राणः; तमुद्गीथमुपासाञ्चक्रिरे ; तँ हासुरा ऋत्वा विदध्वँसुः ; यथाऽश्मानमाखणमृत्वा विध्वँसेत, एवम् ॥ ७ ॥

---

मित्यर्थः । **अथ ह श्रोत्र....विद्धम्** । **अश्रवणीयं** पापवचनमित्यर्थः । **अथ ह मनः...विद्धम्** । **असंकल्पनीयं** पापमित्यर्थः ।

**अथ...चक्रिरे** । उद्गीथावयवमोङ्कारं मुख्यप्राणत्वेनोपासितवन्त इत्यर्थः । **तं...विदध्वंसुः** । तं मुख्यप्राणं पाप्मना वेद्धुं प्रवृत्ता असुराः **तं ऋत्वा** प्राप्य स्वयमेव **विदध्वंसुः** । विध्वस्ता अभवन् इत्यर्थः। तत्र दृष्टान्तमाह—**यथाऽश्मानं...एवम्** । 'आखन्यत इति **आखणं** मृत्पिण्डः । यथा मृत्पिण्डोऽश्मानं प्राप्य विध्वस्तो भवति, एवम्' इति व्यासार्यैर्व्याख्यातम् । **आखणमिति** च्छान्दस णत्वम् ;

---

मुख्यः प्राण इति । मुखे अङ्गे भवः मुख्यः; नासिक्य इतिवत् । 'आसन्यं प्राणमूचुः' इति च श्रुत्यन्तरम् । आस्य-मुख-वदनादिशब्दाः संस्कृते व्याहाराभ्यवहारसाधनावयवसंस्थान एव मुख्याः, न तु ललाटादौ । इन्द्रियाणां प्राणशब्दगौणार्थत्वात् तद्वारकं प्राणपदमुख्यार्थत्वरूपं मुख्यत्वमप्यस्ति प्राणवायोः । तत्तु प्राणापानव्यानादिसर्वसाधारणम् । सामान्यतः प्राणवायुत्वदृष्टिरेवाभिमता चेत्, कामं तदप्यस्तु ।

**यथाऽश्मानमाखणमृत्वा विध्वँसते, एवँ हैव स विध्वँसते, य एवंविदि पापं कामयते. यश्चैनमभिदासँति ; स एषोऽश्माखणः ॥८॥**

---

नपुंसकत्वञ्च ।

एतद्विद्यायाः फलमाह—**यथा....दासति** । **एवंविदि** एतद्विद्यानिष्ठे यः पापं कर्तुं कामयते, यश्चैनं **अभिदासति** हिनस्ति, सः अश्मप्राप्तलोष्टवत् ध्वस्तो भवतीत्यर्थः । 'दा लवने' इत्यतः, 'दो अवखण्डने' इत्यतो वा लेटि, 'सिब्बहुलं लेटि' इति सिपि दासतीति रूपम् ।

**स एषोऽश्माखणः** । **स एषः** एतद्विद्यानिष्ठे पापकामः **अश्माखणः** अश्मप्राप्ताखण इत्यर्थः । एतेन 'खनो घ च' इति घप्रत्ययस्य, 'करणाधिकरणयोः' इत्यनुवृत्त्या कर्मण्यभावात् , करणार्थ एव घप्रत्ययो वक्तव्यः । अतः **आखण**शब्दस्याश्मविशेषणत्वमेव वक्तव्यम् । 'खननसाधनतया दृढमश्मानं प्राप्य यथा लोष्टादिकं ध्वंसते' इति हि तस्यार्थः । अत एव **स एषोऽश्माखण** इति वाक्यशेषे अश्मविशेषण-

---

नयमयूखमालिकोक्तं पक्षमपास्यति एतेनेति। अश्मविशेषणत्वमेवेति। आखण इति पृथक्पदमश्मविशेषणम्। आखणपदद्वयमपि यथानुशासनं पुल्लिङ्गम्। स एष इति प्रकृत उपासक उच्यते। तस्य आखणाश्मत्वं ध्वंसकतया तत्तुल्यत्वादिति भावः। आखन्यते अनेनेत्याखनः इति माधवी धातुवृत्तिः। नेयं शङ्का शाङ्करानुसारिणः। शाङ्करभाष्येऽप्याखणशब्दस्य कर्मव्युत्पत्तेरेव गृहीतत्वात्। परंतु अखनः=खनितुमशक्यः। अखण एव आखण इत्यश्मविशेषणं कृतम्। तदा कर्तुरध्याहारे आखणशब्दव्युत्पादने च क्लेशः। तत्रापि अश्माखण इत्यैकपद्यमेवादृतम्। तदपि चिन्त्यम्—आखणस्याश्म-

**नैवैतेन सुरभि न दुर्गन्धि विजानाति ; अपहतपाप्मा ह्येषः; तेन यदश्नाति यत् पिबति तेनेतरान् प्राणानवति ; एतमु एवान्ततोऽ-**

---

त्वमेव आखणस्य श्रूयते—इति शङ्काऽपास्ता । **वाजसनेयके** समान प्रकरणे, 'यथाऽश्मानमृत्वा लोष्टो विध्वंसते' इति श्रवणेन तत्समानार्थ त्वस्य वक्तव्यतया आखणशब्दस्य लोष्टवाचित्वस्यैवोचितत्वात् । बहुल- ग्रहणेन कर्मण्यपि घप्रत्ययस्योपपत्तेः । इतरथा कर्तृवाचिपदाध्याहार- प्रसङ्गात् । 'स एषोश्माखणः' इत्यत्र **अश्माखण**शब्दस्य समस्तस्य अश्म- प्राप्ताखणवाचित्वेन, **अश्म**शब्दसामानाधिकरण्येन**आखण**शब्दस्याश्म विशेषणत्वाभावात् । पूर्ववाक्ये नपुंसकलिङ्गनिर्दिष्टस्यापि स एष इति पुल्लिङ्गसामानाधिकरण्येन **आखण**शब्दस्य पुल्लिङ्गत्वोपपत्तेश्चेति द्रष्टव्यम्।

इतरप्राणाद्यपेक्षया तस्य वैषम्यमाह **नैव....विजानाति । एतेन** मुख्यप्राणेनेत्यर्थः । पुरुष इति शेषः । तत्र हेतुमाह **अपहतपाप्मा ह्येषः** । स्पष्टोऽर्थः । **तेन यत्....अवति** । तेनैव हेतुना तस्यापहत पाप्मत्वेनै(त्वादे)व प्राणान्तरवत् आत्मम्भरित्वाभावात् स्वाशितपीतादिना इतरान् प्राणान् रक्षतीत्यर्थः । **एतमु....क्रामति** । यत एव प्राणादि-

---

**विशेषणत्वे आखणाश्मेति समासापत्तेः । सिद्धान्ते तु अश्मप्राप्ताखण- रूपार्थविवक्षया अश्माखण इति समासोपपत्तिः । एवञ्च तदनुसारेण स एष इति नोपासकपरम् ; किन्तु द्वेषिपरम् । स एष इत्यस्य पूर्ववाक्यार्थे यत् प्रधानम्, तत्परामर्शित्वस्यैव युक्तत्वाच्च । तत्र च ध्वंसमानः प्रधानम्, न तु एवंवित् ।**

**नैवेतेन सुरभीति । नन्वयमप्रसक्तप्रतिषेधः ; मुख्यप्राणस्य आघ्राणसामर्थ्याभावात् । उच्यते । घ्राणादीनां मुख्यप्राणाधीन- प्रवृत्तिकत्वात् मुख्यप्राणगतपाप्मवशादेव घ्राणादीनां दुर्गन्धादि-**

विद्भ्वोत्क्रामति ; व्याददात्येवान्तत इति ॥ ९ ॥

तँ हाङ्गिरा उद्गीथमुपासाञ्चक्रे ; एतमु एवाङ्गिरसं मन्यन्ते, अङ्गानां यद् रसः ॥ १० ॥

---

प्राणसमुदायो मुख्यप्राणाशितपीतलब्धसत्ताकः, अत एव **अन्ततः** मरणकाले मुख्यप्राणाशितादेरभावेन एतम**विद्भ्वा** अलब्ध्वा उत्क्रामतीत्यर्थः। 'विद्ऌ (विदिर्) लाभे' इति हि धातुः। **व्याददात्येवान्ततः।** **अन्ततः** मरणकाले सर्वप्राणानामुत्क्रमणादेव आस्यव्यादानं करोतीत्यर्थः।

**तं....चक्रे।** **तम्** अध्यस्तप्राणभावम् **उद्गीथम्** उद्गीथावयवमोङ्कारमङ्गिराः ऋषिरुपासाञ्चक्रे इत्यर्थः। केचित्तु अङ्गिरसोपास्यमेव मुख्यप्राणमङ्गिरसं वदन्तीत्याह **एतमु....रसः।** अङ्गानां प्राणाधीन-

---

**ग्राहकत्वमिति किं न स्यादिति शङ्कापरिहारार्थमयं ग्रन्थ इति। घ्राणादेर्दुर्गन्धादिग्राहकत्ववत् न मुख्यप्राणस्य किञ्चिदनिष्टापादकत्वमित्यत्र तात्पर्यम्। प्रत्युतास्य घ्राणाद्युपकारकत्वमतिशयितमित्याह तेन यदश्नातीति। बृहदारण्यके एतदर्थविस्तरः। व्याददात्येवेति। अशिताद्युपयोजनेन धातूनां शरीरे यथावत् स्थापनेन कायव्यूहनकारी हा निष्क्रान्त इति सूचनायेव जातं व्यादानम् अशितनिक्षेपेऽपि न निवर्तत इति एवकाराशयः। खेषु स्थितं प्राणमत्र स्थापयितुकामा इव अन्ते उपसर्पन्तः तमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति। एतद्वृन्दनिष्क्रमणार्थमिवेदं व्यादानम्। परस्मैपदम्, "आङो दोऽनास्यविहरणे" इति पर्युदासात्।**

**एतदेवोपासनमुद्गीथप्राणोपासककतिपयर्षिनामविवक्षितगुणविशेषविषयकं कर्तव्यम्। न तु नाम्नः ऋषिरूपमुख्यार्थो ग्राह्यः। तत्तदृषिणाऽप्येवमेतस्योपासितत्वादित्युपदिशति तं हेत्यादिना। अस्य अयास्याऽऽङ्गिरसत्वबृहस्पतित्वब्रह्मणस्पतित्वानि बृहदारण्य-**

**तेन तँ ह बृहस्पतिरुद्गीथमुपासाञ्चक्रे; एतमु एव बृहस्पतिं मन्यन्ते, वाग्घि बृहती, तस्या एष पतिः ॥ ११ ॥**

---

स्थितित्वेन प्राणस्याङ्ग(उद्गि)रसत्वमिति भावः । अङ्गरसमङ्गिरसं वदन्ति परोक्षप्रियत्वात् देवानामिति भावः । **तेन....चक्रे । तेन** (अङ्गिरसत्वेन) (आङ्गिरसत्वेन) अङ्गिरस्त्वेन गुणेन बृहस्पतिरुपासितवानित्यर्थः **एतमु....पतिः** । वागिन्द्रियस्य सर्वार्थप्रकाशकत्वादिना **बृहत्त्वम्** (त्वात्) । तस्य [च] मुख्यप्राणाधीनत्वात् प्राणस्य वाक्पतित्वम् । अत उपास्यस्यैव बृहस्पतित्वं मन्यन्त इत्यर्थः । **तेन तं हायास्यः....चक्रे।**

---

कोक्तानि । अत्र तु अङ्गिरस्त्वबृहस्पतित्वायास्यत्वान्युक्तानि । अङ्गिर-आङ्गिरसयोर्निर्वचनम्, अङ्गानां रसः इति ; बृहस्पतिनिर्वचनं बृहत्याः वाचः पतिरिति ; अयास्यनिर्वचनं तत्र,—'अयमास्येऽन्तः' इति । अत्र तु, 'आस्यात् अयत' इति । एतमु एवाङ्गिरसमित्यत्र अङ्गिरः पदानुसारात् अङ्गिरसमिति च्छेदो युक्तः । शाङ्करभाष्ये अङ्गिरसमिति परकृतच्छेदस्यानुवादोऽस्ति। स्वयं तु, 'तेनासावाङ्गिरस' इत्युक्तम् । अत्र, अङ्गिरा उपासाञ्चक्रे, अयास्य उपासाञ्चक्रे इति पृथक्पृथक् कथनात् अयास्यो नाङ्गिरा इति ज्ञायते । स एव त्वयास्यः अङ्गिरोवंश्यः स्यात्, आङ्गिरस इति तत्रोक्तेः । प्राणे एवमनेकर्ष्यादिनामनिर्वचनमैतरेयारण्यकेऽपि ।

तेन अङ्गिरस्त्वेनेति । अध्ययनार्थकल्पितविरामस्य वाक्यमध्येऽपि दर्शनात्, 'तेन तं ह' इति वाक्यत्रयगतमपि पदं पूर्वपूर्ववाक्यान्वयि कृत्वा, 'यस्माद्धेतोरङ्गानां रसः तेन हेतुना अङ्गिरसं मन्यन्ते' इत्येवंरीत्याऽर्थवर्णनं सुकरम् । तेन कारणेन तेन निरुक्ताङ्गिरस्त्वधर्मेण अङ्गिरा अप्युपासाञ्चक्र इति वा— अथापि तेनेति पदं विनैव तदर्थसिद्ध्या, उत्तरत्रैवमन्वयसंभवेन च यथाश्रुतवाक्यभेदस्वीकारेणैव व्याख्यानमकारि। माध्वे तु तेनेतिपदं पूर्ववाक्य एव पठितम्।

तेन तँ हायास्य उद्गीथमुपासाञ्चक्रे ; एतमु एवायास्यं मन्यन्ते, आस्यात् यदयते ॥ १२ ॥

तेन तँ ह बको दाल्भ्यो विदाञ्चकार ; स ह नैमिषीयाणामुद्गाता बभूव ; स ह स्मैभ्यः कामानागायति ॥ १३ ॥

---

**तेन** बृहस्पतित्वेन अयास्यः ऋषिरुपासितवानित्यर्थः । **एतमु...दयते।** **आस्यात्** मुखात् **अयते** निर्गच्छतीत्यर्थः ।

**तेन तं ह बको....चकार । तेन** पूर्वोक्ताङ्गिरस्त्वबृहस्पतित्वायास्यत्वादिगुणविशिष्टतया दल्भसुतो बकनामा ऋषिरुपासितवानित्यर्थः । **स ह....बभूव ।** स्पष्टोऽर्थः । **स ह....आगायति । सः** दाल्भ्यो बकः एभ्यो नैमिषीयेभ्यो यजमानेभ्यः शत्रुपराभवादीन् कामान् गानेन विद्यामाहात्म्यात् संपादितवानित्यर्थः । **आगायति स्म ।** 'लट् स्मे' इति [लट् भूतेऽपि] लट् ।

---

नन्वङ्गिरा अपि उक्तयोगार्थेनाङ्गिरस्त्वेनोद्गीथोपासनं कर्तव्यं त्यक्तुं नार्हति । तत् बृहस्पतौ तद्वर्णने को विशेष इति चेत्—अङ्गिराः कदाचित् स्वनामाभिमानात् तथोपासितवान् स्यात्, न त्वन्य इति मा भ्रमः । योगार्थगौरवादेवं ह्यन्येऽप्युपासते इति ज्ञाप्यत इति ।

विदाञ्चकारेति । नन्वत्र उपासाञ्चक्र इत्यप्रयोगात् उद्गीथमिति पदाभावाच्च उक्ताङ्गिरस्त्वादिविशिष्टतया प्राणं बको बुबुध इत्येव वाक्यार्थोऽस्त्विति चेत्—एवं तर्हि आगायति स्मेत्यत्रोपासनं विवक्षणीयम् । आदितः प्रभृति विद्युपास्त्यारेकार्थ एव प्रयोगदर्शनादत्रैव तद् विवक्षितम् । 'आगाता भवति । य उपास्ते' इति तदुत्तरवाक्ये आगानोपासनयोर्भिन्नत्वप्रतीतेश्च ।

आगाता ह वै कामानां भवति, य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते—इत्यध्यात्मम् ॥ १४ ॥

इति प्रथमाध्याये द्वितीयः खण्डः।

---

**आगाता....उपास्ते**। एवमुपासको यजमानकामानां गानेन संपादयिता भवतीत्यर्थः। **इत्यध्यात्मम्**। अध्यात्ममुद्गीथोपासनं समाप्तमित्यर्थः। आत्मशब्देन इन्द्रियमनःप्राणादिसंघात उच्यते। **अध्यात्मम्** आत्मनीत्यर्थः। आत्मविषयमिति यावत्।

(१) एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते। **अङ्गपादे**—'ऋत्विक्परिक्रयस्याङ्गानुष्ठानमात्रार्थत्वात्, अङ्गावबद्धोपासनानाञ्च, तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्' इति सूत्रोक्तन्यायेनाङ्गत्वात्, 'शास्त्रफलं प्रयोक्तरि' इति न्यायेन यजमानगामिफलसाधनभूतोपासनस्य यजमानेनैव कर्तव्यत्वात्, 'गोदोहनेन पशुकामस्य प्रणयेत्' इति श्रुतपश्वर्थगोदोहनादेरनङ्गत्वेऽपि ऋत्विक्कर्तृक[ग]प्रणयननिवर्तकस्य गोदोहनस्य यजमानेनोपादातुमशक्यतया ऋत्विक्

---

अङ्गपाद इति। एतत्खण्डान्तिमवाक्यव्याख्यानावसरे तद्विषयकाधिकरणस्योपस्थिततमत्वात् सूचीकटाहन्यायाच्च प्रथममेतदधिकरणोपन्यासः। शास्त्रफलं प्रयोक्तरीति। (पू मी. ३ ७) इदं पूर्वपक्षसूत्रम्। अत्राधिकरण एव फलस्य यजमानगामित्वेऽपि परिक्रयविधिबलात्, यत् ऋत्विजा कर्तुं शक्यम्, तत् तेनैव कार्यमिति निर्णीतम्। अतोऽत्र इति न्यायेनेत्यस्य इत्यधिकरणन्यायेनेति नार्थः, विरोधात्। किंतु एतत्सूत्रोक्तयुक्त्येत्यर्थः। शास्त्रीयकर्मफलमनुष्ठातृगतं यजेत स्वर्गकाम इत्यादावात्मनेपदबलात् प्रतीयते। आत्मनेपदस्य कर्तृगामिक्रियाफलपरत्वात्। अत्राप्युद्गीथमुपासीतेत्यात्मने-

कर्तृकत्वेऽपि उद्गातृकर्तृके उद्गीथे यजमानस्योपासनसंभवात् उपासनं याजमान(यजमानकर्तृक)मेव । औद्गात्रसमाख्यानं तु, 'शास्त्रफलं प्रयोक्तरि' इति (न्यायेन) न्यायविरोधादुपेक्षणीयम्। अतः फलस्य स्वामिगत्वात् फलस्वामियजमानकर्तृकमेवोपासनमित्यात्रेयमतमिति, 'स्वामिनः फलश्रुतेरित्यात्रेयः' इति सूत्रेण पूर्वपक्षं कृत्वा, उपासनान्यपि ऋत्विक्कर्माणि (ए)वस्युः । प्रयोगाङ्गस्य ऋत्विजः प्रयोगान्तःपात्युद्गीथाद्युपासनेऽपि

---

पदमस्तीति युक्तिः । स्वार्थे स्वयं प्रवृत्तिरेव लोके औत्सर्गिकीति च । अङ्गावबद्धोपासनं फलस्वामिकर्तृकम् उपासनत्वात् भक्तिविद्यावदिति श्रीभाष्यदर्शितमप्यनुसंधेयम् । ननु पूर्वमीमांसाधिकरणेनैव परिक्रीतकर्तृकत्वं सिद्ध्यतीति शारीरकाधिकरणं व्यर्थमिति चेत्— उच्यते । नियमेन कर्तव्यस्य ऋत्विग्वरणस्य, नियमेन यत् कर्तव्यम्, तदर्थत्वमेव युक्तम् । एवंभूतमेव ऋत्विजा क्रियते । यद्यपि गोदोहनादिद्रव्यं फलार्थत्वात् अनियतम्, तथापि प्रणयनादिक्रियायाः द्रव्यादिकमन्तरेणानिष्पत्तेः अपेक्षितद्रव्यत्वाद्याकारेण नियतत्वमस्त्येव । उद्गीथाद्युपासनं तु सर्वथैवानियतम्, कर्मानुपकारकत्वादिति नेदमनियतं तदातदा यजमानेनाद्रियमाणं नियतकर्मप्रवृत्तः ऋत्विगनुष्ठास्यति । किञ्चानियतमपि गोदोहनादि न यजमानशक्यप्रयोगम् । तथात्वे ऋत्विक्कर्तृकप्रणयनाद्यनिष्पत्तेरिति तत्र कामं तथा, न त्वत्रेत्यधिकाशङ्का । कर्तॄणां प्रयोगाङ्गत्वात् प्रयोगमध्यपातिसर्वार्थमेव वरणमिति सिद्धान्त्याशय इति ।

न्यायविरोधादिति । न केवलं न्यायः, अत्रोपरि, 'एतमु एवाहमभ्यगासिषम् । तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच' इत्यादौ उपासकस्योद्गातुरेव फलवर्णनात् वचनमप्यनुकूलमिति शङ्कितुराशयः । सिद्धान्ते, 'अभ्यगासिषम्' इत्यत्र उद्गातृद्वारा यज-

कर्तृत्वसंभवात्। 'तं ह बको दाल्भ्यो विदाञ्चकार। स ह नैमिषीयाणा-मुद्गाता बभूव। स ह स्मैभ्यः कामानागायति' इति उद्गातृदाल्भ्यगत विद्याया यजमानकामसंपादकत्वदर्शनलिङ्गाच्च ऋत्विक्कर्तृकमेवोपासनम् न च ऋत्विक्कर्तृकोपासनस्य फलं ऋत्विग्गतमेव स्यादिति शक्यशङ्कः (शङ्क्यम्); ऋत्विजां परार्थतया तेषां वचनमन्तरेण फलसंबन्धानुपपत्तेः 'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते, यजमानायैवैतामाशिषमा शासते' इति श्रुतेश्च। 'तस्मादु हैवंविदुद्गाता ब्रूयात् क ते काममागायानि इति ऋत्विग्गतविज्ञानस्य यजमानगामिफलकत्वावेदनलिङ्गाच्च न, 'शास्त्र-फलं प्रयोक्तरि' इति न्यायावतारः। ततश्च परिक्रयविधिबलात् उत्सृष्टस्य ऋत्विक्कर्तृक[त्व]स्य याजमानसमाख्याद्यपवा(ख्यापा)दकाभावात् लिङ्गानुग्रहात्, औद्गात्रसमाख्यानाच्च आर्त्विज्यमेवोपासनमिति 'आर्त्विज्यमित्यौडुलोमिः, तस्मै हि परिक्रीयते' इति सूत्रेण सिद्धान्तितम्। सूत्रस्य चायमर्थः—उपासन**मार्त्विज्यम्** ऋत्विक्कर्म। **तस्मै** क्रतुप्रयोगाय हि ऋत्विक् **परिक्रीयते**। अतोऽनङ्गभूतमप्युपासनं क्रतुप्रयोगान्तःपातित्वात् ऋत्विजैवानुष्ठेयमिति स्थितम्॥

(२) तथा **गुणोपसंहारपादे** [च] चिन्तितम्—तत्र हि—

वाजिनां तावत्, 'द्वया ह वै प्राजापत्या देवाश्च' इत्यारभ्य 'ते ह देवा ऊचुः, हन्तासुरान् उद्गीथेनासुरविध्वंसनं प्रतिज्ञाय उद्गीथे वागादिमनःपर्यन्तदृष्टौ असुरैरभिभवमुक्त्वा, 'अथ हेममासन्यं प्राणमूचुः इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपरिभवमुक्त्वा, 'भवत्यात्मना, परा-

---

**मानोऽहमगासिषमिति विवक्षा स्यात्।** उत्सृष्टस्य = उत्सर्गसिद्धस्य

**ऽस्य** द्विषन् भ्रातृव्यो भवति, य एवं वेद' इति शत्रुपराजयफलाय उद्गीथे प्राणदृष्टिर्विहिता ।

एवं **छन्दोगाना**मपि—'देवासुरा ह वै यत्र संयेतिरे' इत्यारभ्य, 'तद्ध देवा उद्गीथमाजह्रुः । अनेनैनान् अभिभविष्याम इति' इत्युद्गीथेनासुरपराभवं प्रतिज्ञाय तद्वदेव उद्गीथे वागादिदृष्टौ दोषमभिधाय, 'अथ ह य एवायं मुख्यः प्राणः, तमुद्गीथमुपासाञ्चक्रिरे' इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा, 'यथाऽश्मानमाखणमृत्वा विध्वंसते, एवं हैव स विध्वंसते य एवंविदि पापं कामयते' इति शत्रुपराभवायोद्गीथे प्राणदृष्टिर्विहिता ।

तत्र उभयत्राप्यध्यस्तप्राणभावस्योद्गीथस्यैवोपास्यत्वश्रवणेन रूपाभेदात्, शत्रुपराभवरूपफलसंयोगाविशेषात्, उद्गीथविद्येति समाख्यैक्याच्च तयोरैक्यमिति पूर्वः पक्षः । तत्र राद्धान्तच्छायया परिचोद्य परिहरति-'अन्यथात्वं शब्दादिति चेन्न ; अविशेषात्' । **वाजसनेयके**, 'ते हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्य एष प्राण उदगायत्' इति उद्गानकर्तरि प्राणदृष्टिविधानात्, **छान्दोग्ये**, 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे' इति उद्गानकर्मणि प्राणदृष्टिविधानात् शब्दादुपास्यरूपान्यथात्वप्रतीतेः विद्याभेद इति चेत्—न ; देवासुरसंग्रामोपक्रमादिबहुसारूप्यात् । **वाजसनेयकेऽपि**, 'हन्तासुरान् यज्ञे उद्गीथेनात्ययाम' इत्युद्गीथेनोपक्रमात् तदविरोधाय, 'तेभ्य एष प्राण उदगायत्' इति उद्गानकर्मरूप एवोद्गीथे—पाकादिषु सौकर्यातिशयविवक्षया, 'पच्यते ओदनः स्वयमेव' इति ओदने कर्तृत्वोप-

चारवत्—उद्गानकर्मण्येव कर्तृत्वोपचारोपपत्तेरुद्गीथ एवोभयत्राप्युपास्यः। अतो विद्यैक्यम्—इति प्राप्ते—

प्रचक्ष्महे— 'न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्'। **न वेति** पूर्वपक्षं व्यावर्तयति। **प्रकरणभेदात्—छान्दोग्ये,** 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति प्रकृतोद्गीथावयवप्रणवविषयकमुपासनम्; **वाजसनेयके** प्रणवस्याप्रकृतत्वात, 'उद्गीथेनात्ययाम' इति कृत्स्नोद्गीथस्यैव प्रस्तुतत्वात् कृत्स्नोद्गीथविषयकमेवोपासनम्; अतो रूपभेदाद्विद्याभेदः। किञ्च छान्दोग्ये उद्गीथस्याध्यस्तप्राणभावस्योपास्यत्वम्, वाजिनां तु, 'अथ हेममासन्यं प्राणमूचुः त्वं न उद्गायेति, तथेति तेभ्य एष प्राण उदगायत्' इति अध्यस्तप्राणभावस्योद्गातुरुपास्यत्वम्। न च **वाजसनेयके** उद्गातुरुपास्यत्वे, 'उद्गीथेनात्ययाम' इत्युपक्रमविरोधः शङ्कनीयः। उद्गातुरुपासने उद्गीथस्यानुप्रविष्टतया उपक्रमावगतस्योद्गीथस्यापरित्यागात्। अत्र च वक्तव्यं **बृहदारण्यकप्रकाशिकाया**मुक्तं तत्रैवानुसंधेयम्।

---

**उद्गीथस्यानुप्रविष्टतयेति। उद्गातरि प्राणदृष्टिर्नाम नोद्गातारं चैत्रत्वादिना गृहीत्वा तत्र प्राणदृष्टिः; किन्तु उद्गातृशब्दप्रवृत्तिनिमित्तभूतोद्गीथकर्मकगानकर्तृत्वाकारेण गृहीत्वा। अत उद्गीथस्योपास्यतावच्छेदकत्वात् फलप्रयोजकत्वमिति। अत्र च वक्तव्यमिति। बृहदारण्यके 'उद्गीथेनात्ययाम' इत्यत्र उद्गीथपदं उपरितनबहुवाक्यानुरोधात् उद्गातृलक्षकम्; यद्वा भाष्यतट्टीकानुरोधादुक्तरीत्यैव लक्षणां विना निर्वाह इति पक्षद्वयमित्यर्थः। परोवरीयस्त्वादिवत् इति सौत्रपदस्य हिरण्मयत्वविशिष्टपुरुषदृष्ट्यैक्यं यथा परोवरीय-**

'संज्ञातश्चेत् तदुक्तम्, अस्ति तु तदपि'। ननु उद्गीथविद्येति संज्ञैक्यात् विद्यैक्यमुक्तमिति चेन्न—तत् संज्ञैक्यं विधेयभेदेऽप्यस्त्येव; यथा अग्निहोत्रसंज्ञा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च। छान्दोग्यगतप्रथमप्रपाठकोदितासु बह्वीषु विद्यासु उद्गीथविद्येति संज्ञैक्यस्य दर्शनाच्च तदप्रयोजकमिति भावः। 'व्याप्तेश्च समञ्जसम्'। छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि विद्यासु, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिषु उद्गीथावयवस्य प्रणवस्य व्याप्तत्वेन तन्मध्यपातित्वादस्या अपि विद्याया उद्गीथावयवप्रणवविषयत्वमेव। ततश्च छान्दोग्यवाजसनेयकयोर्बह्वर्थवादसारूप्येऽपि छान्दोग्यगतविद्याया अध्यस्तप्राणभावोद्गीथावयवप्रणवविषयत्वात्, वाजसनेयकोद्गीथविद्यायाश्चाध्यस्तप्राणभावोद्गानकर्तृविषयत्वात् प्रधानभूतोपास्यभेदे बह्वर्थवादसारूप्यस्याप्रयोजकत्वात् विद्याभेद इति स्थितम्। प्रकृतमनुसरामः। १-२.

---

स्त्वविशिष्टतद्दृष्टौ न, तद्वदित्यर्थः।

संज्ञात इति। संज्ञातश्चेत्तदुक्तमित्येकं वाक्यम्; शङ्कानुवादरूपम्, 'तत् विद्यैक्यं संज्ञैक्यप्रयुक्तं चेत्' इति।

तन्मध्यपातित्वादिति। यद्यप्यत्रैव, 'य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते' इति अक्षरपदं कृत्स्नोद्गीथव्यावर्तकं स्पष्टमुपसंहारे श्रूयते—अथापि प्रथमखण्डे उपक्रमेऽप्यक्षरपदश्रवणात् तस्य खण्डस्य प्रणवमात्रविषयकत्वेऽपि द्वितीयखण्डे सामान्यत उद्गीथशब्दस्यैव श्रवणात् तस्य कृत्स्न एव मुख्यत्वात् उपक्रमानुसारेणोपसंहारो नेय इति शङ्कायां तृतीयेऽपि अक्षरस्यैवाधिकारात् मध्येऽपि तद्विषयकत्वमेव स्थाप्यत इति ध्येयम्। अत्राधिकरणे द्वितीयसूत्रं उद्गातृविद्यात्वे बृहदारण्यके उद्गीथविद्येति कथं संज्ञेति शङ्कापरिहारपर्यवसायि; तृतीयसूत्रं छान्दोग्यस्यापि कृत्स्नोद्गीथविषयत्व-

### प्रथमे तृतीयः खण्डः

अथाधिदैवतम्—य एवासौ तपति, तमुद्गीथमुपासीत। उद्यन् वा एष प्रजाभ्य उद्गायति; उद्यँस्तमोभयमपहन्ति; अपहन्ता ह वै भयस्य तमसो भवति, य एवं वेद ॥ १ ॥

---

**अथाधिदैवतम्**। उद्गीथस्योपासनमुच्यत इति शेषः। **अधिदैवतम्।** देवतायामित्यर्थः। देवताविषय(यं)कमिति यावत्। **य... मुपासीत।** आदित्यदृष्ट्या उद्गीथमुपासीतेत्यर्थः। कर्माङ्गभूतोद्गीथापेक्षया कर्माराध्यस्याऽऽदित्यस्योत्कृष्टत्वात्, अपकृष्टे उत्कृष्टदृष्टेरेव न्याय्यत्वात् आदित्यदृष्ट्योद्गीथस्योपास्यत्वं द्रष्टव्यम्। अयमर्थः "आदित्यादिमतयश्चाङ्ग उपपत्तेः" इत्यधिकरणसिद्धः। तच्चाधिकरणं **बृहदारण्यकप्रकाशिका**यामुपन्यस्तं तत्रैवानुसंधेयम्।

उद्गीथेऽध्यस्यमानस्याऽऽदित्यस्योद्गीथसाम्यमाह **उद्यन्.... गायति।** वैशब्दोऽवधारणे। **एषः** आदित्यः **उद्यन्** उद्गच्छन्नेव प्रजानामर्थप्रकाशनं कुर्वन् उद्गायतीव भवति। उद्गीथोऽपि प्रजानामुद्गायतीव भवतीत्यर्थः। **उद्यन्...हन्ति।** उद्यन्नेवादित्यः तमोजनितं प्राणिनां भयमपहन्तीत्यर्थः। तमोभयापहन्तृत्वगुणविशिष्टतया उद्गीथे आदित्योपासनस्य फलमाह **अपहन्ता...वेद।** अन्धकारादिप्रयुक्तभय[ाप]हन्ता भवतीत्यर्थः।

---

मिति शङ्कावारकमिति, 'गाता गेयश्च गेये सकलमसकलञ्च' इति प्रधानार्थद्वयस्थापनप्रधानं सूत्रद्वयमिति विमृश्यम्।

उद्गायतीव भवतीति। ननु उद्गायन्निव भवतीति युक्तं प्रयोक्तुम्। न तु तिङन्तोपरि तिङन्तमिति चेन्न–'पचति भवति, पक्ष्यति भवति' इत्यादिप्रयोगस्य महाभाष्ये दर्शितत्वात् तथैवैतत्समर्थनसंभवात्।

समान उ एवायञ्चासौ च; उष्णोऽयम्, उष्णोऽसौ; स्वर इतीममाचक्षते, स्वर इति प्रत्यास्वर इत्यमुम्; तस्माद्वा एतमिमम-मु(वा)ञ्चोद्गीथमुपासीत ॥ २ ॥

अथ खलु व्यानमेवोद्गीथमुपासीत; यद्वै प्राणिति स प्राणः,

---

**समान....चासौ च।** **अयम्** अध्यात्मप्रकरणे उक्तः प्राणश्च, **असौ** अधिदैवतप्रकरणे उच्यमान आदित्यश्च समान एवेत्यर्थः। तदेव दर्शयति **उष्णो....ऽसौ।** **अयं** प्राण उष्णः। उच्छ्वासस्योष्णतयो-पलभ्यमानत्वात्। **उष्णोऽसौ।** सवितुश्चोष्णत्वं स्पष्टमेवेति भावः। **स्वर...इत्यमुम्।** इमं प्राणं स्वर इत्याचक्षते। स्वरः गन्तेत्यर्थः। (स्वृ शब्दोपतापयोः) इत्यस्मात्, धातूनामनेकार्थत्वात्, कर्तरि अचि रूपम्। **अमुं** आदित्यं स्वर इति प्रत्यास्वर इति च आचक्षते, उदयास्तमययोः गमनप्रत्यागमनस(व)त्त्वात्। प्राणस्य वायुरूपतया सदा-गतित्वेन प्रत्यागमनाभावान्न प्रत्यास्वरसंज्ञेति भावः। अतः स्वरसंज्ञा-वत्त्वात् औष्ण्याच्च प्राणादित्यौ परस्परसमानावित्यर्थः। **तस्मात्....मुपासीत।** **तस्मात्** उभयोरपि समत्वात् **इमं** प्राणं वा **अमुमादित्यं वा** **एतम्** एतादृशगुणकमुद्गीथमुपासीत। उद्गीथेऽध्यस्तमुपासीतेत्यर्थः॥

प्रकारान्तरेणोद्गीथोपासनमाह **अथ...मुपासीत।** उद्गीथं व्यानत्वेनोपासीतेत्यर्थः। को व्यान इत्यत्राह **यद्वै...व्यानः।** पुरुषो मुखनासिकेन **यत्** यं वायुं **प्राणिति** बहिर्निःसारयति, सः

---

इमं प्राणं वेति। अत्राध्यात्ममुपासनमधिदैवतमुपासनञ्च पृथक्फलसाधनतया पृथक्पृथगनुष्ठेयमिति प्राणादित्ययोरुपासने कथमपि समुच्चयप्रसक्त्यभावात् इममुमुञ्चेति मूले चकारश्रवणेऽपि वाकारार्थ उक्तः।

द्पानिति सोऽपानः ; अथ य प्राणापानयोः संधिः स व्यानः ।
ो व्यानः सा वाक् ; तस्मादप्राणन् अनपानन् वाचमभिव्याहरति ॥३॥
या वाक् सर्क् ; तस्मादप्राणन् अनपानन् ऋचमभिव्याहरति ;
र्क् तत् साम ; तस्मादप्राणन् अनपानन् साम गायति ; यत् साम स
द्गीथः ; तस्मादप्राणन् अनपानन् उद्गायति ॥ ४ ॥
अतो यान्यन्यानि वीर्यवन्ति कर्माणि, यथा—अग्नेर्मन्थनम्
नथनम् ) आजेः सरणम् , दृढस्य धनुष आयमनम्—, अप्राणन्

---

'णाख्यो वायोर्वृत्तिविशेषः । मुखनासिकेन यं वायुमन्तराकर्षति,
ोऽपानाख्यवृत्तिविशेषः। तयोरन्तरालवृत्ति(तयोरन्तर्वृत्ति) (तयोरान्तर्वृत्ति)
ाेषरूपः संधिः व्यान इत्यर्थः ।

उद्गीथे व्यानाध्यास(से)हेतुमाह—**यो व्यानः सा वाक्** ।
चो व्याननिर्वर्त्यत्वात् वाक् व्यान एवेत्यर्थः । वाचो व्याननिर्वर्त्यत्वे
क्मिाह **तस्मात्....व्याहरति** ॥ **तस्मात्** वाचो व्याननिर्वर्त्य-
ादेव हेतोः **अप्राणन् अनपानन्** श्वासमोक्षाकर्षणलक्षणप्राणापानौ
नैव [तत्संधिरूपया व्यानवृत्त्या] वाचमभिव्याहरतीत्यर्थः । **या....**
**द्गायति** । अप्राणता अनपानता पुंसा क्रियमाणत्वादेव व्यानस्य
गृक्सामोद्गीथानामैक्यमित्यर्थः ।

**अतो...मुपासीत** । लोके अग्निमथनमर्यादाधावन-दृढधनु-

---

मुख्यमासन्यं प्राणमुद्गीथमुपासीतेत्युक्तम् । अथ व्यानदृष्टिः
धीयते । अत्र फलानिर्देशात् फलं कर्मवीर्यवत्तरत्वमित्युक्तं शाङ्करे ।
तो यान्यन्यानीति । अतोऽन्यानीत्यन्वयः एतद्भिन्नानीत्यर्थः । अभि-
ाहारति, उद्गायतीति संप्रत्युक्तवागिन्द्रियकार्यभिन्नानीति यावत् ।
र्यादाधावनेति। 'आजिः =मर्यादा। सरणं =धावनम्'इति शाङ्करम्।

**अनपानँस्तानि करोति ; एतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥**

**अथ खलूद्गीथाक्षराण्युपासीत, उत् गी थ इति। प्राण एव उत्; प्राणेन ह्युत्तिष्ठति ; वाग् गीः ; वाचो ह गिर इत्याचक्षते ; अन्नं थम् ; अन्ने हीदँ सर्वँ स्थितम् ॥ ६ ॥**

---

रारोपणादि-वीर्यवत्(तराणि)कर्माणि व्यानसाध्यान्येव। अतो हेतोः उद्गीथाख्यवीर्यवत्कर्मणोऽपि व्यानसाध्यत्वात् व्यानमेवोद्गीथमुपासीतेत्यर्थः ॥

**अथ...थ इति** । उत् गी थ इति त्रीणि उद्गीथनामानुप्रविष्टाक्षराण्येवोपासीतेत्यर्थः । **प्राण एव उत्** । उदित्यक्षरे प्राणबुद्धिः कार्येत्यर्थः। तत्र हेतुं (हेतुः)आह **प्राणेन ह्युत्तिष्ठति**। स्पष्टम्। **वाग् गीः**। गी(गीः) इत्यक्षरे वाग्बुद्धिः कार्या ।[तत्र हेतुः **वाचो....चक्षते** ।] वाचो गीश्शब्दवाच्यत्वात् गी इत्यस्य वागध्यासाधिष्ठानत्वमुपपद्यत इति भावः । **अन्नं थम्** । थमि(थ इ?)त्यक्षरे अन्नबुद्धिः कर्तव्येत्यर्थः । तत्र हेतुः अन्ने....स्थितम् । अन्नस्य सर्वस्थानत्वेन थकारवत्त्वसाम्यात्

---

**एवं अर्थे काश्चित् दृष्टय उक्ताः ; वक्ष्यन्ते च । मध्ये वाचकशब्दे दृष्टिरुच्यते । तत्रोद्गीथरूपे वाचकशब्दे वर्णत्रयपृथक्कारेण चतुर्धा दृष्टिरुच्यते वागन्नादिसिद्धिफला । बृहदारण्यके तु वाग्विशिष्टप्राणं प्रस्तुत्य, प्राणः उत्, वाक् गीथा इति द्वेधा विभागमात्रं कृतम् (३-३-२३)। ननु किमिति मध्ये वाचकशब्दे दृष्टिविचार इति चेत्—उच्यते। विशिष्योद्गीथमात्रे वक्तव्या दृष्टिरुक्ता। अथ तु प्रणवत्वेन सामत्वेन वा सामान्याकारेण, तथा सामशब्दघटकाक्षरविभागपूर्वं सामान्यतः सामविचारपूर्वं चोद्गीथचिन्तनानि वक्ष्यन्ते। अतो विशेषभूतार्थदृष्टेरवसितत्वात् विशेषनामदृष्टिः प्रस्तूयत इति युक्तमिति ।**

**द्यौरेव उत्, अन्तरिक्षं गीः, पृथिवी थम्; आदित्य एव उत्, वायुर्गीः, अग्निः थम्; सामवेद एव उत्, यजुर्वेदो गीः, ऋग्वेदः थम्; दुग्धेऽस्मै वाग् दोहम्, यो वाचो दोहः, अन्नवान् अन्नादो भवति, य एतान्येवं विद्वान् उद्गीथाक्षराण्युपास्त उद् गी थ इति ॥७**

**अथ खल्वशीःसमृद्धिरुपसरणानीत्युपासीत—येन साम्ना स्तोष्यन् स्यात्, तत् सामोपधावेत् ॥ ८ ॥**

---

थशब्दे अन्नबुद्धिर्युज्यत इति भावः ॥ प्रकारान्तरेणोद्गीथाक्षरोपासनमाह **द्यौरेव...ऋग्वेदः थम्** । [उदक्षरे द्युलोकादित्यसामवेददृष्टिः, गीर (गी अ?)क्षरे अन्तरिक्षवायुयजुर्वेददृष्टिः, थम(?)क्षरे पृथिव्यग्नि-ऋग्वेद-दृष्टिश्च कार्येत्यर्थः । उक्तस्य चतुर्विधस्योद्गीथनामाक्षरोपासनस्य फलमाह] **दुग्धेऽस्मै वाग् दोहम्** । वाक् अस्मै उपासकाय दोहं दोग्धि [इत्यर्थः] । कं दोहमित्यत्राऽऽह **यो वाचो दोहः**। वाक्साध्यं फलमित्यर्थः फलान्तरमप्याह **अन्नवान् अन्नादो भवति** । प्रभूतान्नो दीप्ताग्निश्च भवतीत्यर्थः । **य....इति** । स्पष्टोऽर्थः ॥

**अथ...त्युपासीत** । आशीस्समृद्धिहेतुभूतानि **उपसरणानि** उपासनानीति मत्वोपासनं कुर्यादित्यर्थः । केषामुपासनं कार्यमित्यत्राह **येन...धावेत्**। **उपधावेत्** चिन्तयेत्। उपासीतेत्यर्थः। [शिष्टं स्पष्टम्।]

---

आशीस्समृद्धिः—आशिषः समृद्धिः। 'अन्नं वै प्राणा' इतिवत् उपचारात् समृद्धिहेतुभूतानीत्यर्थलाभः। इति इत्यस्य इति मत्वेत्यर्थः। शाङ्करे तु 'आशीस्समृद्धिः' इत्येतदनन्तरं 'उच्यत' इति शेषपूरणं कृतम् । उपसरणानि = उपसर्तव्यानि ध्येयानि, इति = वक्ष्यमाणप्रकारेण इति च व्याख्यातम् । उपसरणपदं वक्ष्यमाणोपधावनोपसरणोभयपरम् । सामादीनां बहिः स्थित्या विप्रकर्षात् उपधावनमुक्तम । स्वात्मनस्तु

यस्यामृचि, तामृचम्; यदार्षेयम्, यां देवतामभिष्टोष्यन् स्यात्, तां देवतामुपधावेत् ॥ ९ ॥

येनच्छन्दसा स्तोष्यन् स्यात्, तच्छन्द उपधावेत्; येन स्तोमेन स्तोष्यमाणः स्यात्, तँ स्तोममुपधावेत् ॥ १० ॥

यां दिशमभिष्टोष्यन् स्यात्, तां दिशमुपधावेत् ॥ ११ ॥

आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन् अप्रमत्तः। अभ्याशो ह यदस्मै स कामः समृद्ध्येत, यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ १२ ॥

इति प्रथमाध्याये तृतीयः खण्डः ।

---

**यस्यामृचि तामृचम्** । यस्यां ऋचि साम्ना स्तोष्यन् स्यात्, तामृचं चिन्तयेदित्यर्थः **यदार्षेयम्, तमृषिम्।** ऋषिसंबन्धि आर्षेयम्। ऋषिदृष्टमित्यर्थः । यस्यार्षेयं **यदार्षेयम्** । शिवभागवतवत् समासः । साम यदृषिकम्, तमृषिं चिन्तयेदित्यर्थः। **यां...धावेत्**। स्पष्टम्। **येन.... धावेत्**। **छन्दः** गायत्र्यादिकमित्यर्थः। **येन स्तोमेन...धावेत्**। **स्तोमः** त्रिवृत्पञ्चदशादिलक्षणः ऋक्संख्याविशेषः । **यां....धावेत्** । यद्दिगभिमुखतया स्तोष्यन् स्यात, तां दिशञ्च ध्यायेदित्यर्थः । **आत्मानं... अप्रमत्तः** । उक्तं सर्वं ध्यात्वा **अन्ततः** अन्ते **आत्मान**मपि [च] **उपसृत्य** ब्रह्मात्मकं ध्यात्वा **कामं** आत्मन इष्टं ध्यायन् **अप्रमत्तः** अवहितः=स्वरवर्णाद्यभ्रेषानुकूलमनोवधानयुक्तस्सन् बहिष्पवमानादिस्तोत्रमारभेतेत्यर्थः । **अभ्याशो...स्तुवीतेति** । यत्कामनया [एवंवित्]

---

नन्वत्र ब्रह्मात्मकत्वं कुतो लभ्यते। यावता शाङ्करे, 'आत्मानं स्वं रूपं गोत्रनामादिभिः' इत्येव व्याख्यातमिति चेत्—स्वफलार्थं केवलस्वात्मध्यानं न स्वरसमिति एवमुक्तमिति। यद्वा सर्वं ध्यात्वा अन्ते आत्मानमप्युपसृत्येत्युक्त्वा तत्र, 'आत्मानमुपसृत्य' इत्यस्य ब्रह्मात्मकं

प्रथमे चतुर्थः खण्डः

ओमित्येतदक्षरमुद्गीथमुपासीत ; ओमिति ह्युद्गायति । तस्योपव्याख्यानम् ॥ १ ॥

देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन् ; ते छन्दोभि-

---

स्तोत्रं करोति, स कामः यस्मात् कारणात् अभ्याशः क्षिप्रं समृद्ध्येत समृद्धिं प्राप्नोतीत्यर्थः। अभि आङ्पूर्वात् अश्नोतेः (अश्नातेः) असुनि अभ्याश इति रूपम् । क्षिप्रफलसिद्धिरुपसरणफलमित्यर्थः। द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ १-३.

**ओमित्येतत्....व्याख्यानम्**। पूर्ववदर्थः। अत्रोक्तस्यैवोद्गीथोपासनस्य पुनःपरामर्शो मध्ये उद्गीथनामाक्षराद्युपासना(या) (क्षरोपास

---

ध्यात्वेति तात्पर्यार्थ उक्तः । तेन उक्तं सर्वं ब्रह्मात्मकं ध्यात्वेत्युक्तं भवति । तथा च आत्मानमित्यस्य सर्वनामरूपपर्यवसानभूमिं परमात्मानमित्यर्थः। अन्ततः= द्वारभूतानां चिन्तनानन्तरम् । उपसृत्य । पूर्वं यत्रयत्रोपधावितम् तत्रतत्रैवास्यान्तःस्थित्या पुनर्धावनप्रसक्त्यभावादुपसरणमेवोक्तम् ॥ पूर्वोक्तदृष्टीनां आशिषः प्रबलकर्माप्रतिबन्धादि फलम् । एषां तु उपसरणानामाशिषः क्षिप्रसमृद्धिः फलम् । समृद्धिः—पौष्कल्यम् । आत्मानमिति ब्रह्मात्मकत्वध्यानस्याप्युक्तत्वाद्धि न किञ्चिद्वैकल्यप्रसक्तिः। उक्तं हि श्रीमति रहस्यत्रयसारे परदेवतापारमार्थ्याधिकारे, 'यथावदविज्ञाय करणे फलानि विकलानि ; भगवच्छरीरत्वादिविज्ञानपूर्वं करणे च पूर्णानि' इति । एवमेकैकोपधावनस्यापि अन्तरात्मभूतपरमात्मोपसरणावसानत्वात् उपसरणानि इत्येवादौ उपनिषदि श्रुतम् ॥ इमानि चोपसरणानि सर्वविद्याशेषभूतानि, उक्तरीत्या विशिष्योद्गीथविद्याविधानस्यात्रावसितत्वात् इहापि तदावश्यकत्वज्ञप्तये संप्रत्युक्तानि ॥

रच्छादयन्; यदेभिरच्छादयन्, तत् छन्दसां छन्दस्त्वम् ॥ २ ॥

तानु तत्र मृत्युः, यथा मत्स्यमुदके परिपश्येत्, एवं पर्यपश्यदृचि साम्नि यजुषि। ते नु विदित्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ ३ ॥

---

नया)न्तरितत्वादिति द्रष्टव्यम्। **देवाः....प्राविशन्**। देवाः मरणभीताः [सन्तः] वैदिकं कर्म प्रारब्धवन्त इत्यर्थः। **ते छन्दोऽभिरच्छादयन्**। **छन्दोभिः** कर्मविनियुक्तैर्वैदिकैर्मन्त्रैः मृत्युभीताः सन्त आत्मानं छादितवन्त इत्यर्थः। वैदिकमन्त्रकञ्चुकच्छन्ना इति यावत्। **यत्... छन्दस्त्वम्**। छादकत्वादेव (वैदिकमन्त्राणां) छन्दसां छन्दस्त्वमित्यर्थः। **तानु...यजुषि**। उशब्दो निरर्थकः। **तान्** देवान् कर्मपरान्, यथा मत्स्यग्राही उदके मत्स्यं परिपश्यति, एवं मृत्युः त्रयीविहित(तं) कर्मानुप्रविष्टान् कर्मश्रेष(भ्रंश)समयं प्रतीक्ष्य ग्रहीतुमैच्छदित्यर्थः। **ते नु....प्राविशन्**। ते देवाः मृत्योश्चिकीर्षितं ज्ञात्वा[ऋक्सामयजूरूप]त्रयीविहितयज्ञादिकर्मभ्यः [उद्गताः] (ऊर्ध्वा अधिका) (उद्गातारः) कर्मनिर्मलीकृतान्तःकरणास्सन्तः स्वरशब्दितमोंकारमुपासितुं प्रवृत्ता इत्यर्थः। [नुशब्दः खल्वर्थः]। कथं पुनः स्वरशब्दवाच्यत्वमोंकारस्येत्यत्राह—

---

**देवा वै इति। लोके कुतश्चिद्भीताः जनाः कचित् गह्वरे प्रविश्य लीना भवन्ति। तत्र दृष्टाश्चेत्, ततोऽपि निष्क्रम्य दुर्गं प्रविश्याऽऽत्मानं रक्षन्ति इति दृष्टम्। तथा कृतं देवैरिति अत्रोक्तम्। तत्र विद्यायाः छन्दसाञ्चामूर्ततया वस्तुतः प्रवेशो छादने च कर्मत्वकरणत्वायोगात् तात्पर्यान्तरं दर्शितं वैदिककर्मेत्यादिना। यदा वा ऋचमिति। इदमेव तैत्तिरीयेऽप्युक्तम्–'यो(यत्) वेदादौ स्वरः प्रोक्तः' इति। तत्र, 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्युक्तमेव। 'देवा वै' इत्यादिना मुखान्तरेणात्र दर्शितम्। तत्रोक्त-**

यदा वा ऋचमाप्नोति, ओमित्येवातिस्वरति ; एवँ साम ; एवं यजुः ; एष उ स्वरः ; यदेतदक्षरमेतदमृतमभयं तत् प्रविश्य देवा अमृता [अभया] अभवन् ॥ ४ ॥

स य एतदेवं विद्वानक्षरं प्रणौति, एतदेवाक्षरँ स्वरममृतमभयं प्रविशति ; तत् प्रविश्य, यदमृता देवाः, तदमृतो भवति ॥ ५ ॥

इति प्रथमाध्याये चतुर्थः खण्डः ।

प्रथमे पञ्चमः खण्डः

अथ खलु य उद्गीथः स प्रणवः ; यः प्रणवः स उद्गीथ इति

---

**यदा...यजुः** । यदा वै ऋगादिकं **आप्नोति** आरभते, तदा ओमिति **अतिस्वरति** शब्दं करोतीत्यर्थः । **एष उ स्वरः** । तस्मात् **एष** ओङ्कार [एव] स्वर इत्यर्थः। **यत्....अभयं** । [ओंकार एव मरणभयादिनिवर्तक इत्यर्थः।] **तत्...अभवन्** । मरणभयादिनिवर्तकमोंकारं(यदेतदोंकारम्) प्रविश्य देवा अमृता अभयाश्चाभवन्नित्यर्थः ।

**स य....भवति** । य एतदेवाक्षरं स्वरममृतमभयं **प्रणौति** स्तौति—'णु स्तुतौ' इति [हि] धातुः । उपास्त इति यावत्—, तादृशामृतत्वादिगुणकं प्रणवं प्रविश्य, देवाः यादृशामृतत्व(त्वादि)युक्ताः, [स] तादृशो भवतीत्यर्थः । १. ४.

प्रणवोद्गीथयोरेकत्वविज्ञानमनेकपुत्रफलकमुपदिश्यते—अथ...

---

स्त्यागश्च आत्मार्पणरूपं प्रपदनं स्वरस्य प्रणवस्यार्थ इति । 'स्वरमेव प्राविशन्' इति च तदेवोच्यते । 'ओमित्यात्मानं युञ्जीत', 'एतद्वै महोपनिषदं देवानां गुह्यम्' इति च न्यासघट्टे तत्र । अमृताभयरूपेणोद्गीथाक्षरोपासनफलं तत्र प्रवेशः । तदर्थज्ञानपूर्वकभक्तिप्रपत्तिनिष्पत्तिरिति यावत् । प्रवेशफलममृतत्वमिति ध्येयम् ।

असौ वा आदित्य उद्गीथ एष प्रणवः; ओमिति ह्येष स्वरन्नेति ॥ १ ॥

'एतमु एवाहमभ्यगासिषम्; तस्मान्मम त्वमेकोऽसि' इति ह कौषीतकिः पुत्रमुवाच, 'रश्मी{ँ}स्त्वं पर्यावर्तया(यता)त्, बहवो वै ते भविष्यन्ति'; इत्यधिदैवतम् ॥ २ ॥

अथाध्यात्मम्—य एवायं मुख्यः प्राणः, तमुद्गीथमुपासीत;

---

**इति**। उद्गात्रा प्रयुज्यमानो य **उद्गीथः** उद्गीथावयव ओंकारः, स एव होत्रा प्रयुज्यमानः प्रणवः। यश्च होत्रा प्रयुज्यमानः प्रणवः, स एवोद्गात्रा प्रयुज्यमान उद्गीथावयव ओंकार इतीतरेतरैक्याध्यासः कर्तव्य इत्यर्थः।

एवं तयोरैक्यं कृत्वा तत्रादित्यदृष्टिमुपदिशति **असौ....प्रणवः**। कथमादित्यस्य प्रणवत्वमित्यत्राह **ओं....एति**। **एषः** आदित्यः **ओमिति स्वरन्** कर्तव्यकर्मणां ओमित्यनुज्ञां कुर्वन्निवोदेतीत्यर्थः। 'स्वृ शब्दोपतापयोः' इति हि धातुः। अतः सविता प्रणवः, अत एवोद्गीथश्चेति भावः। **एतमु....उवाच**। एतमादित्यमेवोद्गीथमहं गीतवानस्मि। न तु बहुरश्मिगुणविशिष्टतयोपासितवानस्मि। तेन दोषेण मम त्वमेक एव पुत्रोऽभूरिति कौषीतकिः स्वपुत्रमुवाचेत्यर्थः। **रश्मीन्... भविष्यन्ति**। तस्मात् त्वं बहुरश्मिविशिष्टादित्यविज्ञानावृत्तिं कुरु। तव रश्मिबहुत्वविज्ञानमहिम्ना बहवः पुत्रा भविष्यन्तीत्यप्युवाचेति पूर्वेण संबन्धः। **पर्यावर्तयादिति** पुरुषव्यत्ययः छान्दसः। लेटि, "लेटोऽडाटौ" इत्याडागमः। **इत्यधिदैवतम्**। उपदिष्टमिति शेषः।

**अथाध्यात्मम्**। उपदिश्यत इति शेषः। **य...उपासीत**।

---

**त्रोक्त्या तदनुसारादेतावदुक्तम्। आदित्यमुख्यप्राणदृष्टिकरम्बितमेव तत् विवक्षितम्। तथाविधस्यैव पुत्रफलकत्वोक्तेः।**

ओमिति ह्येष स्वरन्नेति ॥ ३ ॥

'एतमु एवाहमभ्यगासिषम्; तस्मान्मम त्वमेकोऽसि' इति ह कौषीतकिः पुत्रमुवाच, 'प्राणाँस्त्वं भूमानमभिगायतात्, बहवो[वै]मे भविष्यन्ति' इति ॥ ४ ॥

अथ खलु—य उद्गीथः स प्रणवः, यः प्रणवः स उद्गीथ इति—होतृषदनाद्धैवापि दुरुद्गीथ(त)मनुसमाहरतीति अनुसमा-

---

स्पष्टोऽर्थः। **ओं....एति। एष** प्राणो वागादिप्राण[प्र]वृत्त्यर्थं ओमित्यनुज्ञां कुर्वन्निव संचरति। तस्मात् प्राण एव प्रणवः, उद्गीथश्चेत्यर्थः। **एतमु....उवाच।** पूर्ववदर्थः। **प्राणान्...भविष्यन्तीति। मे** (मम ?) बहवः पुत्रा भविष्यन्तीत्यभिसंधाय मुख्यं प्राणमुपासीनस्त्वं **भूमानं** बहुत्वमाश्रितान् वागादीन् प्राणांश्च मुख्यप्राणेन सहाभिसंधाय **अभिगायतात्** उद्गानं कुरु इत्यर्थः। उक्तप्रणवोद्गीथैकत्वविज्ञानफलमाह **अथ....समाहरतीति। अपि दुरुद्गीथं** वेदनहीनमप्युद्गीथमित्यर्थः। **होतृषदनात्** होतृकर्तृकोद्गीथप्रणवैक्यज्ञानादित्यर्थः। **होतृ-**

---

अथ खल्विति। उद्गीथे आदित्यत्वं तृतीयखण्डारम्भेऽप्युक्तम्। अत्रोद्गीथप्रणवैक्यमुपपाद्य प्रणवभूतोद्गीथे रश्मिविशिष्टादित्यदृष्टिः विधीयते। उद्गीथप्रणवैक्योपदेशः, 'आदित्यस्य रश्मित इवोद्गीथस्यानेकवेदव्यापिप्रणवरूपतया भूमाऽस्तीति ज्ञापनार्थः। 'बहवो वै ते', 'बहवो मे' इत्युभयं समानार्थम्। परंतु प्रथमं वाक्यं वक्त्रभिप्रायानुवादरूपम्, द्वितीयमनुसंधातृभिप्रायाकारात्मकम्। अतः ते, मे इति निर्देशभेदः। भूमानमिति। भूमपदस्य बहुत्वमेव मुख्यार्थः। अथापि महिमादिपदवत् प्राणानिति धर्मिवाचिपदसामानाधिकरण्यमिष्टम्।

हरतीति ॥ ५ ॥

इति प्रथमाध्याये पञ्चमः खण्डः ।

---

षदनादित्यत्र, 'पूर्वपदात्....' इति षत्वम् । अयं भावः—उद्गीथ-प्रणवैकत्वविज्ञानं होत्राऽपि कर्तव्यम् ; उद्गात्रापि कर्तव्यम् । प्रणवे होतुः, उद्गीथे उद्गातुश्च कर्तृत्वात् । तत्रोद्गातुरेतादृशैकत्वविज्ञानाभावेन दोषयुक्तमप्युद्गात्रा प्रयुज्यमानमुद्गीथं होता स्वीयोद्गीथप्रणवैकत्वविज्ञान-माहात्म्यादनुसमाहरति समादधाति=अदुष्टं करोतीति । अनुसमा-हरतीति द्विरुक्तिर्विद्यासमाप्त्यर्था ।

---

भाषितत्वात् होतृषदनपदमपि ज्ञानविशेषपरमिति ज्ञापयितुं होतृ-षदनपदं पश्चात् व्याख्यातम् । अत्र शाङ्करे, 'होतुः सदनं स्थानम् । हौत्रात् कर्मण इति फलितार्थः' इति व्याख्यातम् । होतृस्थान-सकाशात् दुरुद्गीथसमाधानमायातीत्युक्तौ हौत्रकर्मवशाद्भवती-त्यर्थसिद्धेः । दुरुद्गीतमिति पठित्वा, 'उद्गीतमुद्गानम् ; तस्य दुष्टत्वं स्वरादिविपर्ययः' इति तत्रोक्तम् । हौत्रं कर्म च शंसनाख्यम् । तत्र प्रणवप्रयोगोऽस्ति । तथाचायमत्र भामतीकल्पतरुदर्शितनिष्कर्षः—उद्गीथप्रणवैक्यविज्ञाने उद्गातृकर्तृके सति, यथावत्प्रयुक्तप्रणवघटित-होतृशंसनात् उद्गीथस्य स्वरादिविपर्ययकृतदोषोऽपि परिहृतो भव-तीति । अत्र वेदनविधिप्रकरणे वेदनहानिप्रयुक्तदुष्टत्वं तत्परिहारश्च प्राप्तं परित्यज्य स्वरादिविपर्ययपरिहारोपदेशो न सङ्गतः । किञ्चैता-दृशार्थादरणेन, 'समाहारात्' इति सूत्रे वेदननियमपूर्वपक्षो दुरुपपादः। स्वरादिविपर्ययदोषस्य औद्गात्रज्ञानविशिष्टहोतृशंसनपरिहार्यत्वकथने स्वराद्यावश्यकतैव सिद्ध्येत्। न ज्ञाननियमः, दोषपरिहारकमात्रत्वात् ; प्रायश्चित्तवत् । अतो वेदनहीनमुद्गीथमित्यर्थोऽस्मद्भाष्याद्दतः । दुरुद्गीथमिति पाठः तद्भाष्यादावपि लक्ष्यते । इति होतृषदनादित्यस्य

इत्यस्मिन् उद्गातृज्ञाने सति हौत्रशंसनादित्यर्थोऽपि क्लिष्टः। षद्लृ विशरणगत्यवसादनेषु। गत्यर्था बुद्ध्यर्थाः। तथाच इति होतृषदनात् इत्याकारकहोतृकर्तृकवेदनादित्यर्थः। एवञ्चोद्गातृकर्तृकोद्गीथप्रणवैक्य-वेदनविहीनमुद्गीथं होतृकर्तृकताहशवेदनात् समादधातीति विशिष्टार्थः। दुरुद्गीतमिति पाठेऽपि कर्मणि क्त इति प्रकृतोद्गीथग्रहणं सुकरम्। दुरित्यनेन वेदनस्यात्यावश्यकत्वं व्यज्यत इति पूर्वपक्षी। अत्र नयमयूखमालिका मतद्वयार्थमिश्रणेन संकुला।

अत्र श्रुतौ उद्गीथप्रणवैक्यवेदनपूर्वकं उद्गीथे आदित्यादिदृष्टि-रूपं वेदनं प्रकृतम्। तत्र होतृकर्तृकैक्यवेदनकृतं समाधानं तत्तुल्या-कारकान्यकर्तृकवेदनहानावेव युज्यत इति, वेदनविहीनोद्गीथरूप-दुरुद्गीथे वेदनस्यैवमाकारकत्वमर्थसिद्धम्। यदि तु पुत्रफलार्थ-प्रकृतपूर्णवेदनहीनत्वमेव दुष्टत्वं विवक्षितम्, तर्हि, 'अथ खलु...स उद्गीथ इति' इत्यस्य पूर्वोक्तार्थप्रतीकग्रहणरूपतां स्वीकृत्य, इति होतृषदनादित्यस्य इत्यारभ्योक्तकृत्स्नविषयकहोतृकर्तृकवेदनादित्यर्थ-वर्णनमनुरूपम्। होतृकर्तृकोद्गीथप्रणवैक्यज्ञानादित्येवार्थेऽपि प्रयो-ज्यत्वार्थिका पञ्चमीति तन्मूलकहोतृकर्तृकपूर्णवेदनं लभ्येत। तथा-चोद्गात्रा संकल्पितस्य वेदनस्य तेनाननुष्ठानेऽपि होत्रानुष्ठानं प्रणवोद्गीथैक्यात् भवितुमर्हतीति होतृकर्तृकवेदनं तत्स्थाने उपदि-श्यते। एवञ्च इति होतृषदनादित्यत्र इतिशब्दः ऐक्यस्य हेतुत्वपरो-ऽपि स्यात्। ननु, 'वेदनहानौ अन्येन समाधानं ब्रुवत्' इति समाहार-सूत्रभाष्ये वेदनहानौ वेदनादन्येन समाधानभाषणात् होतृशंसन-परमेव सदनपदमिति चेन्न—शुद्धशंसनस्यैव वेदनफलपुत्रादिहेतुत्वे शंसनस्य नियताङ्गतया वेदनस्याननुष्ठानापत्तेः। अतः उद्गातृकर्तृ-कोद्गीथाश्रितप्रकृतवेदनाभावे अन्येन होतृकर्तृकप्रणवाश्रितवेदने-नेत्येव तदर्थः। अस्तु वा इतिहोतृषदनादित्यत्र इतिशब्दस्य हेतुपरत्वे होतृषदनात् होतृस्थानादिति। एवञ्च अन्यत इत्यस्य होतृस्थानादि-

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते । **गुणोपसंहारपादे**—**'अङ्गेषु यथाश्रयभावः'**। अङ्गेष्वाश्रितानामुपासनानां क्रतोर्बहिः प्रयोगासंभवेन आश्रयतन्त्रत्वस्य वक्तव्यतया प्रयोगवचनेनाऽऽश्रयाणामुद्गीथादीनां समुच्चयनियमेन आश्रितानामपि समुच्चयनियमो युक्तः; इतरथा तदाश्रितत्वानुपपत्तेरित्यर्थः। **'शिष्टेश्च'** । 'गोदोहनेन पशुकामस्य प्रणयेत्' इतिवत् [1]अधिकारान्तराश्रवणेन 'उद्गीथमुपासीत' इति उद्गीथाङ्गतया उपासनविधानाच्च नियमेनोपासना उपादेया । न च वीर्यवत्तरत्वरूपफलार्थत्वस्य, 'तन्निर्धारणानियमः....' इत्यत्रोक्तत्वात् कथं तस्योद्गीथाङ्गत्वमिति वाच्यम्; 'उद्गीथमुपासीत' इति वाक्येन उपासनस्योद्गीथरूपाश्रयसंबन्धे वीर्यवत्तरत्वरूपफलसंबन्धे च बोध्यमाने वाक्यभेदप्रसङ्गात् । न च वाक्यभेदभीत्या तस्य फलविधित्वासंभवेऽपि तस्य फलाकाङ्क्षायां रात्रिसत्रन्यायेन वीर्यवत्तरत्वस्यैवाऽऽर्थवादिकस्य फलत्वकल्पनं संभवतीति वाच्यम्—पर्णतादावपि तथा प्रसङ्गात् । **'समाहारात्'** । 'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' इति उपासनस्य समाहारनियमो दृश्यते । उद्गातृकृतवेदनहानिप्रयुक्तोद्गीथवैगुण्यस्य होतृकर्तृकप्रणवोद्गीथैकत्वविज्ञानेन समाधानोक्त्या उपासनस्याऽऽवश्य-

---

पु. ३६७ कर्तव्यमिति। कर्तुं योग्यमित्यर्थः। भावप्रकाशिकानुरोधात्। न तूभाभ्यामपि युगपदनुष्ठेयमिति । नापि होत्रा प्रथमं तत्करणं संकल्पनीयम् । उद्गीथे हि प्रकृतदृष्टौ स्वरसतः कर्तृत्वमुद्गातुः। औद्गात्रसमाख्यानुरोधाच्च । तेन यथासंकल्पमकरणे उद्गीथप्रणवैक्यरूपमौचित्यं प्रदर्श्य होतुस्तदधिकारोऽनुमन्यतेऽत्रेति ।

1. अधिकारान्तरेति । विधिवाक्ये फलसंयोगेत्यर्थः ।

कत्वप्रतीतेरित्यर्थः । **'गुणसाधारण्यश्रुतेश्च'** । उपासनगुणस्य उपास्यस्य प्रणवस्य, 'तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयति, ओमिति शंसति, ओमित्युद्गायति' इति साधारण्यश्रुतेश्चोपासनावश्यकता गम्यते । प्रकृतपरामर्शिना **तेने**ति शब्देन उपास्यस्य प्रणवस्यैव प्रतीतेः । अत उपासननियमोऽस्तीति प्राप्ते—

उच्यते। **'न वा तत्सहभावाश्रुतेः'** । न वा क्रतुषूपादाननियमः उद्गीथोपासनादेः । कुतः ? **तत्सहभावाश्रुते**ः=उद्गीथाङ्गभावा-श्रुतेरित्यर्थः । वीर्यवत्तरत्वरूपफलार्थतया गोदोहनतुल्यत्वेन क्रत्वर्थत्वा-भावादिति भावः । न च पर्णतादेरपि पुरुषार्थत्वप्रसङ्गः । पर्णतायाः जुहूसंबन्धेऽप्यव्यापाररूपतया फलनिष्पादकत्वाभावेन फलाकाङ्क्षाया एवाभावात् फलकल्पनाया अप्रसक्तेः। अतः फलाकाङ्क्षासिद्ध्यर्थं क्रतूप-रागेण(कारेण) व्यापाररूपतां संपादयितुं जुहूलिङ्गेन क्रतुमुपस्थाप्य

---

**उपास्यस्य प्रणवस्य=सोपासनप्रणवस्य ।**

**जुहूसंबधेऽपीति । जुह्वसंबन्ध इव केवलजुहूसंबन्धेऽपीत्यर्थः।** फलायेोद्गीथाद्याश्रयविशिष्टेति प्रथमतः फलाकांक्षायामार्थवादिक-फलस्योद्देश्यत्वेनान्वये सिद्धे उद्गीथस्य नोद्देश्यत्वमेवेत्यर्थः। न चाश्रयत्वस्यापि कर्मत्वरूपत्वात् फलोद्गीथोभयकर्मकत्वे वाक्यभेद एवेति वाच्यम्—उपासनस्य ज्ञानरूपतया विषयाकाङ्क्षायां, 'सविषयकधातुयोगे विषयित्वं द्वितीयार्थः' इति न्यायेन उद्गीथस्य विषयत्वेनैवान्वयात् । तदुक्तं सारावलौ, "आश्रयालम्बभावात्" इति । आलम्बो विषयभावः । एवञ्च सति, 'मनो ब्रह्मेत्युपासीत', 'आत्मानमुपासीत' इत्यादाविव उद्गीथस्योपासनाङ्गत्वं तु न भवति। उद्गीथस्य क्रत्वङ्गतया निर्णीतस्य क्रतुफलेनैव प्राकरणिकेन फल-वत्तया उपासनाङ्गत्वायोगात् । तथाचोद्गीथस्याश्रयत्वं पर्यवसित-

तत्संबन्धबोधकशब्दो वा कल्प्यः; जुहूशब्दस्य वा जुहूसंबन्धिक्रतुलक्षकत्वं कल्प्यम्। ततश्च क्रतुफलेनैव नैराकाङ्क्ष्यात् रात्रिसत्रन्यायेनाऽर्थवादिक-फलकल्पना न समुन्मिषति । इह उपासनायाः स्वयं व्यापाररूपायाः क्रतूपरागमन्तरेणैव फलाकाङ्क्षा संभवति। सत्याञ्च फलाकाङ्क्षायां वाक्यशेषस्यैव फलसमर्पकतया परिणामसंभवे फलवत्कर्मान्तरबोधक-वाक्यकल्पनाद्यनपेक्षणात् । तस्मात् वाक्यशेषश्रुताय तस्मैतस्मै फला-योद्गीथाद्याश्रयविशिष्टोपासनविधिरित्येव युक्तम् । न च उपासनाना-माश्रयतन्त्रत्वात् सति आश्रये तत्तन्त्राणामुपासनानामप्यावश्यकत्वमिति वाच्यम् । इदमेव ह्युपासनानामप्याश्रयतन्त्रत्वम् , यत् आश्रये सत्येव वृत्तिः, नान्यदाऽस्तीति ; न तु यावदाश्रयसत्त्वं वृत्तिरिति । ततश्च कामोपबद्धत्वादुपासनानाम् , कामनानाञ्चानित्यत्वात् तदवबद्धानामप्यु-पासनानामनित्यत्वमेव । **'दर्शनाच्च'**। 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' इति [2]ब्रह्मणो वेदनेनैव सर्वेषां रक्षणं ब्रुवती श्रुतिरुद्गातृप्रभृतीनां वेदनस्यानियमं दर्शयतीति स्थितम् ।

**केचित्तु**—उद्गीथविद्यायाः क्रत्वर्थत्वाभावे, 'अन्यथात्वं शब्दात्

---

मिति न दोषः। ततश्चोद्गीथः उपासनस्यालम्बनतयोपकारकमात्रम्; नाङ्गम्। 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादौ तु गोदोहनस्य व्यापारानाविष्टस्य फलकरणत्वायोगात् प्रणयनं तदुपकारकम्; प्रणयनस्य च व्यापारस्य द्रव्यमन्तरा निष्पत्त्यभावात् तस्य गोदोहन-मप्युपकारकमिति भेदः।

केचित्तु इति। अत्रास्वरसोऽभिमतः। नान्यथात्वाधिकरण-

---

2. एतदर्थविचारोऽस्मदीये भाष्यार्थदर्पणे ।

इति चेत्' इत्यधिकरणे, 'उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलकत्वेऽप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमिति देवताधिकरणे प्रतिपादितम्' इति भाष्यं विरुद्ध्येत। तथा **पुरुषार्थाधिकरणे**, 'यदेव विद्यया करोति' इति विद्यायास्तृतीयाश्रुत्या कर्माङ्गत्वप्रतिपादनात् न विद्यातः पुरुषार्थ इति, 'तच्छ्रुतेः' इति सूत्रेण पूर्वपक्षे कृते, तत्र विद्याशब्दस्य प्रकृतोद्गीथविद्याविषयत्वेन उद्गीथविद्यामात्रस्य कर्माङ्गत्वेऽपि न ब्रह्मविद्यायाः कर्माङ्गत्वमस्तीत्येतदर्थप्रतिपादकयोः, 'असार्वत्रिकी' इति सूत्रतद्भाष्ययोर्विरोधश्च स्यात् । अतश्चास्त्येव क्रत्वर्थत्वम् । न च, 'तन्निर्धारणानियमः', 'अङ्गेषु यथाश्रयभावः' इत्यधिकरणद्वयविरोधः ; तयोः नियतक्रत्वर्थत्वप्रतिक्षेपमात्रपरत्वात् । न च क्रत्वर्थत्वेऽप्यार्थवादिकफलस्वीकारे पर्णताया अपि अपापश्लोकश्रवणफलकत्वप्रसङ्ग इति शङ्क्यम् ;

---

भाष्यविरोधः। उद्गीथविद्यायाः क्रत्वनङ्गत्वस्योपर्येव वक्ष्यमाणतया तस्यांशस्य सिद्धावसिद्धावपि तदधिकरणरचना संभवतीति प्रदर्शनार्थत्वात् तत्रत्यभाष्यस्य । तदुक्तं सारावलौ । नापि, 'असार्वत्रिकी' इति सूत्रभाष्यविरोधः। तत्र विद्याशब्दो न सर्वविद्यापरः, किंतूद्गीथविद्यापर इति नास्त्येवावसरः पूर्वपक्षस्येत्येतावदेवोच्यते, नोद्गीथविद्याया अङ्गत्वमपि। 'अङ्गेषु...' इत्यधिकरणे च विद्ययेति तृतीया फलकरणत्वपरेति स्पष्टमभाषि। अतो न कर्माङ्गत्वम्। नापि मन्त्रार्थवादोक्तफलार्थत्वं क्रत्वर्थत्वञ्चात्र भाष्यकृदिष्टम्, तथासति प्रस्तरप्रहरणादेः यथा क्रतुरेव प्रयोजकः, न मन्त्रार्थवादफलम्, तथेह वीर्यवत्तरत्वादिकमप्रयोजकम्; उद्गीथ एव प्रयोजक इति स्यात् । तथाचानियमसिद्धान्तभङ्गः स्यात् । व्यक्तमिदमस्मत्कृतश्रीभाष्यविषयविमर्शमालायाम्‌...

**प्रथमे षष्ठः खण्डः**

**इयमेवर्क्, अग्निस्साम, तदेतदेतस्यामृच्यध्यूढँ साम; तस्मा-दृच्यध्यूढँ साम गीयते; इयमेव सा, अग्निरमः, तत् साम ॥ १ ॥**

---

प्रस्तरप्रहरणस्य क्रत्वर्थस्यापि सूक्तवाकमन्त्रप्रतिपाद्यफलार्थत्ववत्, उपकोसलविद्याङ्गभूताया **अग्निविद्यायाः**, 'नास्यावरपुरुषाः क्षीयन्ते' इति प्रतिपन्नब्रह्मविद्याऽविरोधितदुपयोगिफलार्थत्ववच्च क्रत्वर्थाया अपि पर्णताया अर्थवादप्रतिपन्नक्रत्वविरुद्धफलार्थत्वे न दोष इति **भाष्य-काराशय** इति वदन्ति। अन्ये तु, 'अन्यथात्वं शब्दात्' इत्यत्र भाष्य-स्यान्वारुह्योक्तित्वात् क्रत्वर्थत्वं न भाष्यकृदभिमतमिति वदन्ति ॥ प्रकृतमनुसरामः। १-५.

प्रकारान्तरेणोद्गीथोपासनं प्रस्तूयते **इयमेव...साम**। ऋचि [**इय**मित्युक्त]पृथिवीदृष्टिः, साम्नि अग्निदृष्टिश्च कर्तव्येत्यर्थः। **तद्...साम**। **तदेतत्** अग्न्याख्यं साम **एतस्यां** पृथिवीरूपायामृचि **अध्यूढम्** उपरिस्थि-तमित्यर्थः। अत एवाद्यापि ऋगारूढमेव साम गीयत इत्याह **तस्मात्... गीयते**। एवं ऋक्सामयोः पृथिव्यग्निदृष्टिं विधाय सामनामावयव-भूतयोः **साशब्द-अमशब्दयोः** पृथिव्यग्निदृष्टिः कर्तव्येत्याह **इयमेव.... अमः**। उक्तोऽर्थः। **तत् साम**। **तत्** तत एव परस्परसंसृ(स्पृ)ष्टपृथि-व्यग्निरूपसाशब्दामशब्दमेलनेन सामव्यवहारो लोके प्रवर्तत इत्यर्थः।

---

अथ षष्ठे सप्तमे च खण्डे क्रमात् उद्गीथाश्रिता अन्तरादित्य-विद्या, अन्तरक्षिविद्या च पृथक्फलार्था प्रस्तूयते। तत्रोभयत्र उपास्यस्य हिरण्मयपुरुषस्य ऋक्सामगेष्णत्वं वक्ष्यते। तत्र ऋक्सा-मयोर्विशेषणभूताः काश्चित् दृष्टय आदौ विधीयन्ते इयमेवेत्यादिना।

अन्तरिक्षमेवर्क्, वायुस्साम; तदेतदेतस्यामृच्यध्यूढँ साम; तस्मादृच्यध्यूढँ साम गीयते; अन्तरिक्षमेव सा, वायुरमः, तत् साम ॥

द्यौरेवर्क्, आदित्यस्साम; तदेतदेतस्यामृच्यध्यूढँ साम; तस्मादृच्यध्यूढँ साम गीयते; द्यौरेव सा आदित्योऽमः, तत् साम ॥ ३ ॥

नक्षत्राण्येवर्क्, चन्द्रमास्साम; तदेतदेतस्यामृच्यध्यूढँ साम; तस्मादृच्यध्यूढँ साम गीयते; नक्षत्राण्येव सा, चन्द्रमा अमः, तत् साम ॥

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्क्, अथ यन्नीलं परःकृष्णम् तत् साम; तदेतदेतस्यामृच्यध्यूढँ साम; तस्मादृच्यध्यूढँ साम गीयते; अथ यदेवैतदादित्यस्य शुक्लं भाः सैव सा, अथ यन्नीलं परःकृष्णम् तदमः, तत् साम ॥ ५ ॥

अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः

---

**अन्तरिक्ष....साम**। (२, ३, ४) । पूर्ववदर्थः ।

**अथ....ऋक्। शुक्लं भाः**। शुक्ला दीप्तिरित्यर्थः। **शुक्ल**मिति लिङ्गव्यत्ययश्छान्दसः । **अथ....साम । परःकृष्णम्** अतिशयेन कार्ष्ण्यरूपम् । परःकृष्णमिति प्रसिद्धं यत् नीलम्, तत् सामेत्यर्थः । आदित्ये कार्ष्ण्यस्य समाहितदृष्टिभिरीक्ष्यमाणत्वात् तदस्तीति द्रष्टव्यम् । अत्र **पर**शब्दः सान्तो द्रष्टव्यः । **तत्....साम** । स्पष्टार्थम् ।

एवमृचि पृथिव्यन्तरिक्षद्युनक्षत्र आदित्यगतशुक्लभारूपत्वदृष्टिम्, साम्नि अग्निवाय्वादित्यचन्द्र-आदित्यगतनीलभारूपत्वदृष्टिञ्च विधायाऽऽह-**अथ....दृश्यते । अन्तरादित्ये** आदित्यमण्डलस्यान्तः **हिरण्मयः** रमणीयः [यो] योगिभिर्दृश्यत इत्यर्थः । 'दृश्यते त्वग्र्यया

---

य एष इति । परविद्यानिष्ठैर्दृश्यमानतया प्रसिद्धः परमात्मैव संप्रति दृष्ट्यर्थं गृह्यत इत्यभिसंधिः । आदित्यमण्डलस्यान्तरिति ।

बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुत्यैकार्थ्यात् । "**हिरण्मय इति**

नन्वयं परमात्मा हिरण्मयपुरुषः किमादित्यमण्डलान्तर्वर्ती, उत तदन्तर्वर्तिरविशरीरान्तर्वर्ती? नाद्यः; 'य एष एतस्मिन् मण्डले पुरुषः' इति बृहदारण्यके श्रवणेऽपि, श्रीविष्णुपुराणे (२-११) 'ऋग्यजुस्सामभूतोऽन्तः सवितुर्द्विज तिष्ठति', 'आत्मसप्तगणस्थं तं भास्वन्तमधितिष्ठति' इति मण्डलान्तर्वर्तिसप्तगणमध्ये सवितुरन्तरेव स्थितेर्विशिष्योक्तत्वात् । नान्त्यः; तथासति अन्तरादित्ये इत्यस्य आदित्यपुरुषस्यान्तरित्येव व्याख्यानसंभवात् शिरोवेष्टनायोगात्—उच्यते । मण्डलान्तर्वर्तित्वेऽपि तत्पुराणोक्तरीत्यैव द्वादशस्वादित्येषु मध्ये एकैकस्मिन् मासि एकैकस्यान्तःस्थितेरिष्टत्वेन, मण्डलाद्बहिस्तत्र तदवृत्त्या च अव्यवस्थितादित्यतच्छरीराणामुपास्यकोटिनिवेशमकृत्वा प्रणाल्या मण्डलान्तर्वर्तित्वेनैव स उपास्य इति ज्ञापनार्थं मण्डलस्यान्तरिति व्याख्यानम् । अत एव श्रुतिस्मृतिश्रीभाष्यटीकादौ मण्डलग्रहणम् । तथाच सिद्धान्तनिगमनेऽपि श्रीभाष्यम्, 'अत आदित्यमण्डलाक्ष्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव' इति । न खलु गृहान्तर्वर्तिपेटिकाद्यन्तर्वर्तिनो गृहान्तर्वर्तित्वमनुपपन्नम् । तथेह भाव्यम् । गीताभाष्येऽपि, 'ज्योतिषां रविरंशुमान्' इत्यत्र रविरादित्यगण इति भाषितम् । तेष्वादित्येषु विष्णुः साक्षात् परमात्मा साक्षादादित्यमण्डलान्तर्वर्त्यपि । 'रामः शस्त्रभृतामहम्' इत्यत्र तात्पर्यचन्द्रिका, 'आदित्यान्तर्गतो विष्णुस्तु रामतुल्यः' इति । वस्तुतस्तु तत्रैव, 'स्तम्भस्थदर्पणस्यैति यो य आसन्नतां नरः । छायाऽऽदर्शनसंयोगं स स प्राप्नोत्यथात्मनः (२-११-१९) एवं सा वैष्णवी शक्तिः' इति आदित्यमण्डले आविर्भूय स्थित एव परमात्मा रविशरीरे प्रतिसंगतः पितृदेवमनुष्यादिसर्वापेक्षितनिर्वाहक इति निरूपणात् मण्डलान्तर्वर्तित्वमेव संप्रतिपत्तव्यम् ।

रूपसामान्यात्, चन्द्रमुखवत्" इति [हि] **वाक्यकारः**। ततश्च **हिरण्मय**शब्दस्य न मुख्यार्थो ग्राह्य इति वाक्यकाराभिप्रायः। ततश्च हिरण्मयत्वमुज्ज्वलत्वमित्यर्थः। ततश्च नीलतोयदाभस्यापि हिरण्मयत्वे नानुपपत्तिः। यद्वा, 'कच्चिन्न तत् हेमसमानवर्णं तस्याननम्" इति **श्रीमद्रामायण**प्रयोगात्, 'पश्यते रुक्मवर्णम्' इति श्रुतेश्च नीलतोयदाभस्यापि रुक्मवर्णत्वं संभवति। तत्र हेतुश्च संप्रदायगम्यः। एतत् सर्वं **वेदार्थसंग्रहश्रुतप्रकाशिका**यां स्पष्टम्; तत एवावगन्तव्यम्।

अत्र केचित्–"कप्यासं पुण्डरीकम्' इति वाक्ये **कप्यास**शब्देनाऽऽदित्यमण्डलमुच्यते। **पुण्डरीकमि**त्यनेन हृदयपुण्डरीकमुच्यते। अतश्च यथा सूर्यमण्डलं हृदयपुण्डरीकञ्चोपासनस्थानम्, एवमुपासकस्याक्षिणी अपि परमात्मन उपासनस्थानम्" इति परोक्तव्याख्यानदूषणावसरे

---

वाक्यकारः=ब्रह्मनन्दी। वाक्यम्=एतदुपनिषद्व्याख्या। मुख्यार्थः=हिरण्यविकारत्वम्। हिरण्मयत्वे=हिरण्मयशब्दवाच्यत्वे। 'दाण्डिनायन' इत्यादिना हिरण्मयशब्दो निपातितः। यद्वेति। अत्र पक्षेऽपि वाक्यं सुयोजम्—हिरण्मय इति प्रयोगः न हिरण्यलोहविकारत्वात्, किंतु रूपसामान्यात् तद्वर्णसमानवर्णत्वात् तत्सदृशरूपार्थे तत्पदप्रयोगश्च चन्द्रमुखशब्दे दृष्ट इति। हिरण्यशब्दो रूपसामान्यात् परवासुदेवविग्रहपरः। तद्विकारत्वरूपं हिरण्मयत्वञ्चादित्यान्तर्वर्तिपुरुषे इति वाऽस्तु। रुक्मवर्णत्वं संभवति इति। अत्र, 'मयूरकण्ठच्छवि शुद्धहेम' इति प्रकृतविषये तात्पर्यचन्द्रिका—(४-६) गृहीतं शिल्पशास्त्रवचनम्, 'नित्यश्रीर्व्रह्मबिम्बे श्रुतः' इति सारावल्यादि चानुसंधेयम्। वेदार्थेति। वेदार्थसंग्रहे गुरुमुखात् यत् श्रुतम् तस्य प्रकाशिकायां तात्पर्यदीपिकाख्यतद्व्याख्यायामित्यर्थः।

**व्यासार्यैः**, 'आदित्यमण्डलरूपस्थानावरुद्धे अक्ष्णोः स्थानतया विधानं न संभवति' इत्युक्तेः आदित्यमण्डलस्थानमुत्पत्तिशिष्टमिति प्रतीयते। ततश्च **य एषोऽन्तरादित्य** इति वाक्यमुपासनोत्पत्तिपरम्। ततश्च **पुरुषो दृश्यत** इत्यत्र 'द्रष्टव्यः' इत्यर्थ इति **व्यासार्या**भिप्रायः। न च आदित्यमण्डलस्योत्पत्तिशिष्टत्वे उत्पत्तिशिष्टस्थानावरुद्धे भाष्यकृदभिमत-पुण्डरीकदलामलायताक्षत्वादेः कथं विधानमिति वाच्यम्—पुण्डरीकाक्षत्वादेरुत्पत्तिशिष्टादित्यमण्डलस्थानाविरुद्धत्वात् उत्पत्तिशिष्टाविरुद्ध-गुणानां विधानसंभवात्॥ नन्वेवं, 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्युत्पत्तिशिष्टसार्वात्म्यावरुद्धे, मनोमयत्वादीनां विधानं न संभवति' इत्याक्षिप्य, 'सर्वं खलु' इति वाक्यस्य उपासीतेत्यनेन एकवाक्यत्वाभावेन सार्वात्म्यस्य नोत्पत्तिशिष्टत्वम्' इति **व्यासार्यैः** समर्थनमयुक्तं स्यात्। 'मनोमय-त्वादीनामुत्पत्तिशिष्टसार्वात्म्याविरोधात्' इत्येव परिहारसंभवेन वाक्य-भेदमाश्रित्य सार्वात्म्यस्योत्पत्तिशिष्टत्वाभावसमर्थनं मुधा इति चेत्—उपायान्तरस्योपायान्तरादूषकत्वात्—इति वदन्ति।

अन्ये तु–'आदित्यमण्डलस्थानावरुद्धे' इति नोत्पत्तिशिष्टस्थानावरुद्धत्व-[पर्यन्त]मभिप्रेतम्। अपितु युगपदनुपसंहरणीयादित्यमण्डलरूपाक्षिरूप-स्थानद्वयविधाने अष्टदोषदुष्टविकल्पप्रसङ्गात् इत्येव तात्पर्यम्—इत्याहुः।

'यदा पश्यः पश्यते रुक्मवर्णम्' इति प्रकरणे, 'मनसा तु विशुद्धेन' इति रुक्मवर्णविग्रहविशिष्टस्य विशुद्धमनोग्राह्यतोक्तेः, आरोपिताकारस्य विशुद्धमनोग्राह्यत्वाभावात्, अनारोपितत्वं सिद्धम्।

**हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः ॥ ६ ॥ तस्य यथा कप्यासं पुण्डरीकम्, एवमक्षिणी ;**

---

'ईक्षतिकर्म व्यपदेशात् सः' इत्यत्र ईक्षणस्य परमात्म(र्थे?)विषयत्वं वक्तव्यम् इति परैरप्यङ्गीकृतत्वाच्च । 'आदित्यवर्णं तमसः परस्तात्' इति तमःपारवर्तिन आदित्यवर्णविग्रहविशिष्टत्वाभिधानेन कल्पितत्वाप्रसक्तेः । न हि कल्पितस्य तमःपारवर्तित्वं संभवति ।

**हिरण्यश्मश्रुर्हिरण्यकेशः**=रमणीयश्मश्रुकेशः, **आ प्रणखात्, सर्व एव सुवर्णः**=रमणीयसर्वावयव इत्यर्थः । **तस्य....अक्षिणी** । कं पिबतीति **कपिः** आदित्यः । तेन अस्यते क्षिप्यते, विकास्यत इति **कप्यासम्** । तथाऽऽह **वाक्यकारः**, "आदित्यक्षित्त्वं वा श्रीमत्त्वात्" इति । यद्वा कं पिबतीति **कपिः** नालम् । तस्मिन् आस्त इति **कप्यासम्** । अपचितादपि पङ्कजात् नालस्थस्य पुण्डरीकस्य शोभातिशयशालित्वात् तादृशमिह विवक्षितम् । यद्वा **कं** जलम् । 'आस उपवेशने' इति धातुः अपिपूर्वकः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनात् अकारलोपः । के जलेऽप्यास्त इति **कप्यासं** सलिलस्थमित्यर्थः । एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धान्तितत्वमभिप्रेत्य **भगवता**

---

**प्रणखात्=नखाग्रात् । क्षिप्तं वेति । वाशब्दः पूर्वोक्तार्थव्यावृत्त्यर्थः । अत्र पूर्वपक्षभूतार्थत्रयं तावत्—कपिः=मर्कटः । आसं=जघनम् । कप्यासपदं कपिजघनसदृशरूपार्थे लाक्षणिकमिति, कप्यासम् ईषद्विकसितमिति, कप्यासं=सूर्यमण्डलम्—यथा सूर्यमण्डलं हृदयपुण्डरीकञ्चोपासनस्थानम्, तथा अक्षिणी अपि उपासनस्थानमित्येवम् । अत्र ईषद्विकसितमित्यर्थः तदनुगुणयोगव्युत्पत्त्यलाभात् नेष्टः ।**

**भाष्यकारेण वेदार्थसंग्रहे**, 'गम्भीराम्भस्समुद्भूत-सुमृष्टनाल-रविकरविकसित-पुण्डरीकदलामलायतेक्षण' इत्यभिहितम् । मर्कटजघन सदृशपुण्डरीकसादृश्यादि अर्थान्तरं तु अश्लीलत्वादिदोषदुष्टतया वाक्यकृदनादृतत्वात् **भाष्यकारेणा**प्यनादृतम् ।

यद्यपि **अमरकोशे**, 'पुण्डरीकं सिताम्भोजम्' इत्यनुशिष्टम्— तथापि **शबरस्वामि**ना नवमाध्याये, 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इति विहितायामिष्टौ, 'पौण्डरीकाणि बर्हींषि भवन्ति' इति स्तरणार्थत्वेन विहितेषु पुण्डरीकेष्वतिदेशप्राप्तस्य, 'दर्भैः स्तृणीत हरितैः' इति मन्त्रस्य **दर्भ**पदस्थाने **पुण्डरीक**पदं **हरित**पदस्थाने **रक्त**पदमूहितव्यम् — इत्युक्तत्वात् रक्ताम्भोजमेव पुण्डरीकमिति द्रष्टव्यम् ।

---

**तृतीयोऽर्थः कप्यासपुण्डरीकपदयोः प्रतीतसामानाधिकरण्यभङ्गाद्यनेकदोषदूषितः। सर्वमिदं श्रीभाष्यकारैः शिष्येभ्य उपदिष्टं गभीरया, 'गम्भीराम्भ' इत्यादिस्वसूक्त्यैव ध्वनितम् । विस्तरोऽन्तरधिकरणटीकादौ। पौण्डरीकाणीति। पुण्डरीकमेव पौण्डरीकम्, यद्वा पुण्डरीदलम्। बर्हिःकार्याणि स्तरणादीनि पुण्डरीकसाध्यानि भवन्तीति च श्रुत्यर्थमाहुः। पुण्डरीकपदमिति। दर्भपदस्थाने प्रकृतजातिवाचकपदोहमात्रस्य शबरस्वाम्युक्तत्वात् पद्मपदमेवोहितव्यं खण्डदेव आह। पुण्डरीकपदोहमेव पार्थसारथिमिश्रः। अत्रेदं बोध्यम्—कल्हारहल्लकयोः रक्तत्वभेद इव अम्भोजेऽपि ईषत्सितत्वं पूर्णसितत्वमिति भेदोऽस्ति। पुण्डरीकपदस्य सितत्वविशिष्टपद्मवाचित्वेऽपि तावता कोकनदव्यावृत्तिमात्रं चिकीर्षितम्; न तु सामान्यपद्मव्यावृत्तिरपि। अमरकोशेऽपि अथशब्दादिकमप्रयुज्य, 'पुण्डरीकं सिताम्भोजम्' इत्युक्तिरेवमभिप्रायाऽपि स्यात् । पद्मादिपदार्थाघटकं सितत्वं**

तस्योदिति नाम ; स एष सर्वेभ्यः पाप्मभ्य उदितः ; उदेति ह

---

**तस्य उत् इति नाम** । स्पष्टोऽर्थः । तस्योन्नामकत्वे हेतुमाह—**स एष सर्वेभ्यः पाप्मभ्य उदितः**। सर्वपापोद्गतत्वात् उन्नामक[त्वम्] इत्यर्थः । नीडात् शकुन्तस्योद्गमनवत् पापपञ्जरादुद्गमनरूपमुख्यार्थस्य कुत्राप्यभावात् उद्गमनेन तत्संबन्धराहित्यं लक्ष्यते । 'नैनं सेतुमहोरात्रे तरतः, न जरा न मृत्युः न शोको न सुकृतं न दुष्कृतम्' इति परमात्मनः सुकृतदुष्कृत संबन्धाभावो हि प्रतिपाद्यते । तरतेः प्राप्तिवाचित्वात् । **पाप**शब्दश्च पुण्यपापरूपोभयविधकर्मपरः । परमात्मप्रकरणेषु, 'नैनं सेतुं ........ न सुकृतं....पाप्मानोऽतो निवर्तन्ते' इति सुकृतेऽपि **पाप्म**शब्दप्रयोगात्, 'पाप्मानः कालजरामृत्युशोकादयः संख्याततत्वात्' इति **वाक्यकारवचनात्**, अलौकिकत्वे सति अनिष्टफलसाधनत्वरूपवृत्तिनिमित्तयोगात् पुण्यस्यापि **पाप**शब्दाभिधेयत्वोपपत्तेः।

---

पुण्डरीकपदशक्यकोटिप्रविष्टमित्येतावदेव कोशात् सिद्ध्येत् । अतः श्रुतिप्राचीनप्रयोगाद्यनुसारेण कोशार्थो निर्धार्यः । पुण्डरीकपदञ्च शुद्धधवले ईषत्सिते च यथायथं ग्राह्यम् । तत्र सितरक्ते पद्मसामान्ये श्रुतौ पुण्डरीकपदप्रयोगात् शुद्धसितरूपविशेषपर्यवसाने मानाभावात् पुण्डरीकपदेन जातिवाचिना सितत्वांशस्याप्युक्तावपि, तद्गतरक्तत्वांशस्यानुक्तस्य कथनार्थं रक्तपदमूहितव्यमितीहाभिमतं स्यादिति । (अत एव पर्यन्तरक्ते सिते त्वाचरोगविशेषे पुण्डरीकपदं वाचस्पत्यादौ दर्शितमित्यन्यदेतत् । ) पर्यन्तरक्तत्वं अंशे सितत्वं मध्ये समुन्नतत्वममलत्वायतत्वादि च पुण्डरीकदलसाम्यमक्ष्णः ।

उदितः। उत्=ऊर्ध्वं इतः=गतः। उत्क्रान्तः। उदेति–उत्क्रामति । कुत्रापीति । विभुत्वात् परमात्मनि उद्गमनं यथा न संभावितम्,

**वै सर्वेभ्यः पाप्मभ्यः, य एवं वेद ॥ ७ ॥ तस्य ऋक् च साम च**

---

मुमुक्ष्वपेक्षया स्वर्गादीनामप्यनिष्टत्वात् । 'एते वै निरयास्तात स्थानस्य परमात्मनः ।' 'क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् । 'क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥' इति स्मरणात् । सर्वपापोदितत्वं नाम कर्मवश्यतागन्धराहित्यमिति फलितोऽर्थः । कृतानामपि कर्मणां फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदैश्वरस्वभावविशेषोऽपहतपाप्मत्वाख्यः सर्वपापोदितशब्दार्थ इति द्रष्टव्यम् । एवं नामविशिष्टज्ञानफलमाह **उदेति...वेद** । स्पष्टोऽर्थः ।

**तस्यर्क् च साम च गेष्णौ** । पृथिव्यग्न्यादिदृष्टिविशिष्टतया प्राक् प्रस्तुते ऋक्सामे एतस्य **गेष्णौ** गानरूपे । यद्यपि ऋचो गानाश्रयत्वेऽपि न गानरूपत्वम्—तथाप्यभेदोपचारेण गेष्णत्वोक्तिर्द्रष्टव्या । अव्युत्पन्नो **गेष्ण**शब्दः । व्यत्ययेन पुंस्त्वम् । अग्नीन्द्रादिप्रतिपादक-

---

तथा अणौ जीवेऽप्यसंभावितमेव, पाप्मनाममूर्तत्वादिति भावः । संबन्धराहित्यश्चेदं न संबन्धध्वंसरूपम्, श्रुत्यन्तरविरोधात् । अतः परमात्मविषये अत्यन्ताभावरूपमित्याह नैनमिति । कर्मसामान्यात्यन्ताभावरूपं फलितार्थं दर्शयितुं पाप्मशब्दविवक्षितमाह पापशब्दश्चेति । तत्र श्रुतिस्मृतियुक्तीः क्रमेण दर्शयति परमात्मेति । अन्तरादित्यविद्याफलस्योपरि वक्ष्यमाणत्वात् मध्ये, 'उदेति ह वै सर्वेभ्यः' इति फलान्तराभिधानं उपासकपापहतिकरणौपयिकं यत् निरुपाधिकं स्वतस्सिद्धं नित्यमुक्तव्यावृत्तं पाप्मोदितत्वम्, तस्य स्वभावविशेषस्य पापप्रतिभटत्वरूपस्यात्र विवक्षेति ज्ञापनार्थमित्याशयेनाऽऽह कृतानामपीति । न हि नित्यादिनिष्टेदशधर्मवेदनात् कश्चित् पाप्मभ्य उदेति ।

**गेष्णौ ; तस्मादुद्गीथः ; तस्मात्त्वेवोद्गाता, एतस्य हि गाता ॥**

**स एष ये चामुष्मात् पराञ्चो लोकाः तेषाञ्च ईष्टे देवकामानाञ्च इत्यधिदैवतम् ॥ ८ ॥ इति प्रथमाध्याये षष्ठः खण्डः**

---

ऋक्सामगेयत्वोक्त्या सर्वात्मकत्वमुक्तं भवति। **तस्मादुद्गीथः...गाता।** यस्मादुन्नामकत्वं परमात्मनः, अत एव तद्गानरूपत्वात् द्वितीयभक्तेः **उद्गीथ**संज्ञत्वम्, तद्गातुरुद्गातृसंज्ञाकत्व(वत्त्व,)ञ्चेत्यर्थः । यद्वा परमात्मन उन्नामकत्वात् ऋक्सामगेष्णत्वाच्च उ(?)ष्णस्य (?) परमात्मनः उद्गीथत्वमुपपद्यते । तत उद्गीथे परमात्मदृष्टिर्युक्तेत्यर्थः ।

**स....कामानाञ्च । स एषः** हिरण्मयः पुरुषः आदित्यमण्डलोर्ध्ववर्तिलोकानां देवभोग्यभोगोपकरणभोगस्थानानाञ्च नियन्तेत्यर्थः । **इत्यधिदैवतम्** । [उपासनम्] उपदिष्टमिति शेषः ।

---

यद्वेति । अत्र कल्पे उद्गीथे परमात्मदृष्टिः। पूर्वकल्पे तु कर्माङ्गोद्गीथगानकाले पूर्वोक्तपरमात्मचिन्तनपूर्वकं ऋक्सामयोस्तद्गेष्णतया उद्गीथे उन्नामकपरमात्मगानरूपत्वचिन्तनमात्रमिति भेदः। दृष्टिपक्षः शाङ्करदर्शितः। 'परोवरीयस्त्वादिवत्' इत्यत्र श्रीभाष्यटीकयोरप्येवम्। इममेव पक्षं सोऽमुनैव इति वाक्यार्थवर्णनात् प्रागपि दर्शयिष्यति। तथाच तस्मादुद्गीथ इत्यस्य तस्मात् परमात्मा उद्गीथः उन्नामकत्वात् गीयमानत्वाच्चेत्यर्थः । एवञ्चोद्गीथशब्दप्रतिपाद्यत्वस्योद्गीथ इव परमात्मन्यपि सत्त्वात् उद्गीथे परमात्मदृष्टिर्युज्यत इति सिद्ध्यति। उद्गेष्णस्य परमात्मन इत्यत्र पाठो निरीक्ष्यः; परमात्मनो गेष्णत्वस्य गानरूपत्वस्याभावात् । ऋक्सामगेष्णकत्वस्यैव शाङ्करेऽप्युक्तेः। यद्वा गेष्णशब्दस्याव्युत्पन्नत्वात् गानमात्रपरत्वे अनिर्भरस्य यद्यपीत्यनेन पूर्वं सूचितत्वात् गानतया साम्नो गेष्णत्वस्य, गानसाधनतया ऋचोऽपि तत्त्वस्य चेव गेयतया परमात्मनोऽपि

प्रथमे सप्तमः खण्डः

अथाध्यात्मम्—वागेवर्क्, प्राणस्साम ; तदेतदेतस्यामृच्यध्यूढँ साम; तस्मादृच्यध्यूढँ साम गीयते ; वागेव सा, प्राणोऽमः, तत् साम ॥१॥

चक्षुरेवर्क् आत्मा साम, तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; चक्षुरेव सा, आत्माऽमः, तत् साम ॥ २ ॥

श्रोत्रमेवर्क्, मनस्साम ; तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; श्रोत्रमेव सा, मनोऽमः, तत् साम ॥ ३ ॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क्, अथ यन्नीलं परःकृष्णम् तत साम ; तदेतदेतस्यामृच्यध्यूढँ साम ; तस्मादृच्यध्यूढँ साम गीयते ; अथ यदेवैतदक्ष्णः शुक्लं भाः सैव सा, अथ यन्नीलं परःकृष्णम् तदमः, तत् साम ॥ ४ ॥

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क् ; तत् साम ;

---

**अथाध्यात्मम्** । उपदिश्यत इति शेषः ।

**वागेवर्क्...तत साम** । (१, २, ३, ४.) । सर्वं पूर्ववत् ।

एवमृचि वाक्चक्षुःश्रोत्र अक्षिगतशुक्लभारूपत्वदृष्टिम्, साम्नि-प्राणच्छायात्ममनो-अक्षिगतपर कृष्णरूपत्वदृष्टिञ्च विधायाऽऽह—**अथ यः.... ब्रह्म** । चक्षुषि यः पुरुषो योगिभिर्दृश्यते, स एव ऋग्यजुस्सामात्मा, उक्थादिशस्त्रात्मा, ब्रह्म चेत्यर्थः । अतोक्थस्य त्र्यपेक्षया

---

गौणत्वं भवितुमर्हति। तथाचोद्गीथस्य उद्गानत्वात् उन्नामकपरमात्मगानत्वाच्चोद्गेष्णत्वम्, परमात्मनः उत्त्वे सति गेष्णत्वादुद्गेष्णत्वम्। एवमुद्गेष्णत्वादुद्गीथत्वमिति । 'वाक् गीथा' इति बृहदारण्यकात् ऋक्सामरूपवाग्विषयतया गीथावत्त्वात् गीथत्वं च परमात्मनः ।

चक्षुरेवर्क् आत्मा साम । अत्र आत्मशब्दः चक्षुर्निष्ठच्छायात्मपर इति उपरितनावतरणवाक्यात् ज्ञायते । सैवर्गित्यादि । अक्षि-

तदुक्थम्; तत् यजुः; तत् ब्रह्म। तस्यैतस्य तदेव रूपम्, यदमुष्य रूपम्; यावमुष्य गेष्णौ तौ गेष्णौ; यन्नाम, तन्नाम ॥ ५ ॥

स एष ये चैतस्मादर्वाञ्चो लोकाः तेषाञ्च ईष्टे, मनुष्यकामानाञ्चेति ॥

तद् य इमे वीणायां गायन्ति, एतं ते गायन्ति; तस्मात्ते धनसनयः॥६॥ अथ य एतदेवं विद्वान् साम गायति, उभौ स गायति ॥

---

पृथक्परिगणनं गोबलीवर्दन्यायेन द्रष्टव्यम्। **तस्य....नाम**। **तस्यैतस्य** अक्ष्यन्तर्वर्तिनः परमपुरुषस्य, आदित्यान्तर्वर्तिनो यत् हिरण्मयत्वादिरूपम्, उदिति नाम, ऋक्सामरूपगेष्णौ च, तानि सर्वाणि भवन्तीत्यर्थः।

**स एष....कामानाञ्चेति**। **एतस्मात्** अक्षिस्थानात् अधोवर्तिनां लोकानां मनुष्यभाग्यादीनाञ्च एष नियन्तेत्यर्थः।

**तद्....गायन्ति**। यस्मादयमीश्वरः, तस्मात् हेतोः वीणागायकाः सर्वेऽपि इममेव गायन्तीत्यर्थः। तस्य सर्वात्मकत्वेन देवमनुष्यादिकर्मकगानस्यापि परमात्मविषयत्वादिति भावः। **तस्मात्ते धनसनयः**। **सनिः** लाभः। धनानां सनिर्येषां ते **धनसनयः**। ईश्वरगायकत्वादेव वीणागायकानां धनलाभवत्त्वम्। न ह्यनीश्वरगातृत्वे धनप्रसक्तिरस्तीति भावः। **अथ य....गायति**। अध्यात्माधिदैवत-

---

विद्यायां ऋगाद्यात्मत्वमधिक उपदिष्टाकारः, तदेव रूपमित्यादित्रयमतिदिष्टाकारः।

कामानाञ्चेति इति इतिशब्देन अध्यात्मविषयसमाप्तिज्ञापनाच्च तद् य इम इत्यादि उपासनद्वयशेषभूतम्। लौकिकेऽपि गाने गायकानामज्ञत्वेऽपि सर्वकर्मसमाराध्यः स एव सर्वत्र वस्तुतो गेयः फलप्रदश्च। एवं विदित्वा सामगाने कृते गानाराध्यत्वं तस्य तत्तदुपासनेऽनुसंहितं भवतीति विशिष्टार्थः। उभौ स गायतीति ॥

सोऽमुनैव, स एष ये चामुष्मात् पराञ्चो लोकाः, ताँश्चाऽऽप्नोति देवकामाँश्च ॥७॥ अथानेनैव, ये चैतस्मादर्वाञ्चो लोकाः, ताँश्चाऽऽ-प्नोति मनुष्यकामाँश्च ॥

तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥ 'कं ते काममागायानि' इति। एष ह्येव कामागानस्येष्टे, य एतदेवं (य एवं) विद्वान् साम गायति, साम गायति ॥ इति प्रथमाध्याये सप्तमः खण्डः

---

भिन्नविद्यायुक्तः सन् उद्गीथं यो गायति, स चाक्षुषमादित्यस्थश्च गायतीत्यर्थः । उद्गीथस्य चाक्षुषेण परमात्मना आदित्यान्तर्वर्तिना च परमात्मना ऐक्याध्यासविशिष्टतया तादृशोद्गीथगायकस्यैव परमात्म-गायकत्वादिति भावः ।

तस्यैवंविदः फलमुच्यते **सोऽमुनैव....मनुष्यकामांश्च ।** **सः** विद्वान् **अमुनैव** आदित्यान्तर्वर्तिना उपासितेन **स एषः** तदुपासना-विशिष्ट एष तदूर्ध्वं(एतस्मात् ऊर्ध्वं)लोकान् देवकामांश्चाप्नोति [इत्यर्थः]; **अनेन** अक्ष्यन्तर्वर्तिना उपासितेन मनुष्यलोका[द]धस्तनलोकान् मनुष्यकामांश्चाप्नोति [इत्यर्थः] । चक्षुरादित्यस्थानवर्तिपरमात्मोपासनया सर्वलोकावाप्तिर्भवतीत्यर्थः ।

**तस्मादु...आगायानीति** । **एवंवित्** एतादृशविद्यायुक्त उद्गाता यजमानं प्रति **ब्रूयात्** । किमितीत्यत्राह **कं ते**, 'हे यजमान !

---

तस्य वा अस्य वा उभयस्य गानेऽपि एवं विद्वान् स्यादित्यर्थः । अथ फलवाक्ये स इति पदयोः पदं प्रथमं गानाराध्यत्वविदित्यर्थकम्। द्वितीयं उक्तोपासनाविशिष्टार्थकम् ।

पूर्ववाक्याऽऽपतितं, चेदनं फलस्वामिगतमिति भ्रमं व्यावर्तयति तस्मादिति ।

ते कं देवकामं मनुष्यकामं वा आगायानि गानेन संपादयानीति —[प्र]ब्रूयादित्यर्थः । नन्वेतादृशोक्तौ उद्गातुः कथं सामर्थ्यमित्यत्राह एष...गायति । एवंविदुषः सामगस्य कामसंपादकगानसामर्थ्यमस्तीत्यर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था ।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते—

समन्वयाध्याये प्रथमपादे-अन्तरादित्ये अन्तरक्षिणि च वर्तमानत्वेन श्रुतः पुरुषो जीव एव । 'हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः' इति शरीरसंबन्धश्रवणात् । शरीरत्वस्यैव कर्मजन्यतावच्छेदकत्वेन कर्माजन्यशरीरासंभवात् प्रक्रमश्रुतेन शरीरित्वलिङ्गेन जीवत्वे निश्चिते औपसंहारिकं सर्वपापोदितत्वमापेक्षिकं नेतव्यमिति पूर्वपक्षे प्राप्ते--उच्यते । 'अन्तस्तद्धर्मोपदेशात्' । आदित्याक्ष्यन्तर्वर्ती पुरुषः परमात्मैव ; परमात्मधर्मोपदेशात् । कर्मवश्यतागन्धराहित्यलक्षणं नित्याविर्भूतं सर्वपापोदितत्वं न परमात्मनोऽन्यत्र संभवति । तच्च चरमश्रुतमपि, 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति फलरूपतात्पर्यलिङ्गात् प्रबलम् । तथा ऋक्सामगेयत्वाक्षिप्तम् , 'सैवर्क् तत्साम' इति वाक्यश्रुतञ्च सार्वात्म्यं परमात्मधर्मः । तथा अक्ष्यादित्यवर्त्येकपुरुषगतोर्ध्वाधोवर्तिलोककामेश्वरत्वरूपं निरङ्कुशं सर्वकामेश्वरत्वमपि, 'सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च, अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च' इति वाक्यशेषप्रतिपन्नफलरूपतात्पर्यलिङ्गानुगृहीतत्वात् प्रबलम् । अतः प्रबलैः परमात्मलिङ्गैः परमात्मत्वे निर्णीते, 'अजायमानो बहुधा विजायते' 'अजोऽपि

सन् अव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥', '[परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय] संभवामि युगे युगे ॥', 'इच्छागृहीताभिमतोरुदेहः' इति श्रुतिस्मृत्यनुसारेण अजहत्स्वस्वभावस्यैव परमात्मनो मायाशब्दित-संकल्पमात्रेणोपासकपरित्राणायाप्राकृतदिव्यविग्रहपरिग्रहोपपत्तेः(त्तिः)—

—एतेन नित्यसर्वज्ञस्य सर्वशक्तेर्ज्ञानार्थं प्रवृत्त्यर्थं वा करणानपेक्षणात् आत्मानन्दतृप्तस्य विग्रहेप्साऽसंभवाच्च विग्रहो न संभवतीति शङ्का प्रत्युक्ता । करणानपेक्षज्ञानक्रियस्यापि परमात्मन उपासकानुग्रहार्थं भोगार्थञ्च विग्रहस्वीकारोपपत्तेः । प्रभूतानन्दानामप्यानन्दान्तरापेक्षादर्शनेन निरतिशयानन्दस्वरूपस्यापि ब्रह्मणः प्रीतिविशेषापेक्षायाः संभवात् । न च विग्रहस्य भोग्यत्वे स्वरूपभोग्यत्ववैकल्यं शङ्क्यम् ; स्वसंबन्धिभोग्यत्वस्य स्वभोग्यत्वातिशयावहत्वेन वैकल्यावहत्वाभावात् । तत्र च, 'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।

तद् विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥

समस्तशक्तिरूपाणि तत् करोति जनेश्वर ।

देवतिर्यङ्मनुष्यादि(ख्या)चेष्टावन्ति स्वलीलया ॥'

'नित्याऽलिङ्गा(ङ्ग्या) स्वभावसंसिद्धिः इन्द्रियाकारा, अङ्गप्रत्यङ्गव्यञ्जन-

---

'परिग्रहोपपत्तेः' इत्यस्य, न हिरण्मयविग्रहसंबन्धानुपपत्तिः परमात्मनः' इत्युत्तरत्रान्वयः । मध्येऽवान्तरशङ्कापरिहारः ।

नित्याऽलिङ्ग्येत्यादि । नित्या । परवासुदेवमूर्तेर्नित्यत्वात् । अलिङ्ग्या अप्रतर्क्या । स्वभावसंसिद्धिः स्वरूपेणैव आम्नाता ;

**प्रथमे अष्टमः खण्डः**

**त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यः, चैकितायनो दाल्भ्यः, प्रवाहणो जैबलिरिति ; ते होचुः—उद्गीथे वै कुशलाः स्मः,**

वर्ती', 'उज्जहारात्मनः केशौ सितकृष्णौ' 'अंशांशेनावतीर्योर्व्याम्' इत्यादिप्रमाणात् नित्यस्य विग्रहस्य अशिथिलसंस्थानस्यैव अप्राकृतानन्तावतारहेतुत्वमुपपद्यते। चतुर्मुखदेहस्य संस्थानाशैथिल्येऽपि अनेकदेहोत्पादकत्वदर्शनात्। ततश्चोपासकानुग्रहार्थं स्वेच्छासृष्टाप्राकृतशरीरसंबन्धस्य प्रमाणसिद्धस्य परमात्मनि सत्त्वात्—न हिरण्मयविग्रहसंबन्धानुपपत्तिः परमात्मनः। अतः अक्ष्यादित्यान्तर्वर्ती परमात्मा।

नन्वादित्यपुरुषादन्यः परमात्मैव नास्तीत्यत्राऽऽह, **'भेदव्यपदेशाच्चान्यः'**। 'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद' इत्यादित्यपुरुषावेद्यस्य तन्नियन्तुः परमात्मनः अन्यस्य प्रमाणसिद्धत्वात् तद्व्यतिरिक्तो नास्तीति न शङ्क्यम्। न च नित्यमुक्तव्यतिरिक्तः परमात्मा नास्तीत्यपि शक्यं वक्तुम् ; 'य आत्मनि तिष्ठन्' इति पर्याये परिशुद्धमुक्तात्मभ्योऽपि भेदप्रतिपादनात्।

अतः अन्तरादित्ये अन्तरक्षिणि च वर्तमानः परमात्मा—इति स्थितम्। प्रकृतमनुसरामः॥ १-७.

प्रकारान्तरेणोपासनं विधातुमाख्यायिकामाह **त्रयो ....जैब-**

---

स्वप्रकाशा। नयनगोलकादिहस्तपादादितदवयवाङ्गुल्यादिपुंस्त्वव्यञ्जकश्मश्रूवादिमतीत्यर्थः। इन्द्रियाकारेति पृथक्पदं वा।

**नवमखण्डे परोवरीयस्त्वादि-विशिष्टाकाशाख्य-परमात्मदृष्टिरुद्गीथे विधास्यते। तदर्था आख्यायिका अष्टमे।**

**हन्तोद्गीथे कथां वदाम इति ॥ १ ॥ तथेति ह समुपविविशुः ।**

**स ह प्रवाहणो जैबलिरुवाच-भगवन्तावग्रे वदताम्; ब्राह्मणयो-र्वदतोर्वाचँ श्रोष्यामीति ॥ २ ॥ स ह शिलकश्शालावत्यश्चैकितायनं दाल्भ्यमुवाच—हन्त त्वा पृच्छानीति । पृच्छेति होवाच ॥ ३ ॥**

---

**लिरिति** । शालावत्सुतः शिलकनामा, दल्भगोत्रश्चिकितायनसुतः, जीवल-सुतः प्रवाहणनामा त्रयस्ते (त्रय एते)उद्गीथविज्ञाने निपुणा बभूवुरित्यर्थः। **शालावत्यः । शालावच्छब्दादपत्यार्थे** अणि तदन्तात्, स्वार्थे, 'अभि-जिद्विदभृच्छालावत्' इत्यादिना यञ् प्रत्ययः। **दाल्भ्यः। दल्भ(दल्भ्य)-**शब्दात् गोत्रापत्येऽर्थे गर्गादित्वात् यञ् । **चिकितायन**शब्दादपत्यार्थे ऋषित्वादणि **चैकितायनः। जीवल**शब्दात् अत इञि **जैबलिः। ते... वदाम इति।** वयमुद्गीथविज्ञा(धा)ने कुशला भवामः। अतो विद्यावैशद्याय वादकथां परस्परं प्रवर्तयाम इत्यूचुरित्यर्थः। **तथेति ह समुपविविशुः।** तथा कुर्म इत्यन्योन्यमुक्त्वा एकत्रोपविष्टवन्त इत्यर्थः ।

**स...उवाच** । प्रवाहणः क्षत्रियः तौ ब्राह्मणौ प्रागल्भ्या-दुवाचेत्यर्थः । [उक्तिमेवाह] **भगवन्तौ....श्रोष्यामीति । भगवन्तौ** पूजावन्तौ=ब्राह्मणौ अग्रे **वदतां** वादकथां कुरुताम् । तत्प्रकारं श्रोष्यामीति । **स...पृच्छानीति** । स्पष्टोऽर्थः । [तत्र दाल्भ्यस्य प्रत्युक्तिमाह **पृच्छेति होवाच** । स्पष्टम् ।]

---

**गोत्रापत्य इति। अपत्यार्थत्वे हि द्व्यामुष्यायणत्वकल्पनाक्लेशः । वादकथामिति । तिस्रः कथा भवन्ति वादो जल्पो वितण्डा च । तत्त्वनिर्णिनीषुकथा वादः । अन्ये विजिगीषुकथे । कथा विचारः । एकत्रेति । समित्येकीकारे । संभूयोपविविशुः। तेन एकत्रेति लब्धम्।**

का साम्नो गतिरिति। स्वर इति होवाच। स्वरस्य का गतिरिति। प्राण इति होवाच। प्राणस्य का गतिरिति। अन्नमिति होवाच। अन्नस्य का गतिरिति। आप इति होवाच ॥ ४ ॥

अपां का गतिरिति। असौ लोक इति होवाच।

अमुष्य लोकस्य का गतिरिति। 'न स्वर्गं लोकमतिनयेत्' इति होवाच—'स्वर्गं वयं लोकँ सामाभिसँस्थापयामः; स्वर्गसँस्तावँ हि साम' इति ॥ ५ ॥

---

[शिलकः पृच्छति] **का साम्नो गतिरिति**। गतिः अयनं प्राप्यमित्यर्थः। [स दाल्भ्यः] स्वर इति ह **उवाच** [प्रत्युवाच।] स्वरात्मकत्वात् साम्नः इति भावः। [शिलकः पृच्छति] **स्वरस्य.... इति**। [दाल्भ्य उत्तरमाह] **प्राण....**। प्राणनिर्वर्त्यत्वात् स्वरस्येति भावः। एवमुत्तरत्राप्यौचित्यमनुसंधेयम्। ['अपां का गतिः' इति पृष्टो दाल्भ्यः] **असौ लोक** इति होवाच। द्युलोकादेव वृष्टिप्रभवादिति भावः।

[अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्यः आह] **न स्वर्गं....**। स्वर्गं लोकमतीत्य[।]परमाश्रयान्तरं साम न नयेत्। स्वर्गलोकव्यतिरिक्तमाश्रयान्तरं साम न प्रापयेदित्यर्थः। न वदेदिति यावत्। **स्वर्गं....सामेति**। अतो वयमपि **साम अभि** साम प्रति आश्रयत्वेन स्वर्गं लोकं सम्यक् स्थापयामः। [**हि** यस्मात् साम **स्वर्गसंस्तावम्** 'स्वर्गो वै लोकः सामवेदः' इति श्रुत्या स्वर्गत्वेन साम्नः स्तूयमान-

---

का साम्नो गतिरिति। प्रश्नवाक्यानन्तरं पप्रच्छेत्येवं पृथक्क्रियापदाप्रयोगात् उत्तरवाक्ये परं प्रयोगात् एकवाक्यत्वं युक्तमित्याशयेन, इति पृष्टो दाल्भ्य इत्येवमध्याहरिष्यति। इयं रीतिः सर्वत्र, उपरितनखण्डाद्दावपि भाव्या।

तँ ह शिलकश्शालावत्यश्चैकितायनं दाल्भ्यमुवाच—अप्रतिष्ठितं वै किल ते दाल्भ्य! साम; यस्त्वेतर्हि ब्रूयात्, 'मूर्धा ते विपतिष्यति' इति, मूर्धा ते विपतेदिति ॥ ६ ॥

हन्ताहमेतत् (भगवत्तो) वेदानीति। विद्धीति होवाच। अमुष्य लोकस्य का गतिरिति। अयं लोक इति होवाच। अस्य लोकस्य का गतिरिति। न प्रतिष्ठां लोकमतिनयेदिति होवाच; प्रतिष्ठां वयं लोकँ सामाभिसंस्थापयामः, प्रतिष्ठासँस्तावँ हि सामेति ॥ ७ ॥

---

स्वादित्यर्थः। तं ह शिलकः...विपतेदिति। "हे दाल्भ्य! अप्रतिष्ठितं स्वर्गलोकं सामगतिपरम्पराविश्रान्तिभूमिं वदतस्तव मते साम अप्रतिष्ठितमेव स्यात्। एतस्मिन् समये यः कश्चिदागत्य, 'वादकथायामयुक्तमर्थं प्रतिजानानस्य ते मूर्धा विपतिष्यति' इति यदि ब्रूयात्, तदा विपतेदेव ते मूर्धा। न संशयः। मया तु सौहार्दात् तथा नोक्तम्। अतो जीवसि" इति शिलक उक्तवानित्यर्थः।

हन्त....विद्धीति होवाच। तर्हि अहं सामगतिपरम्पराविश्रान्तिभूमिं त्वत्तो जानीयामिति [दाल्भ्येन] प्रार्थितः [शिलकः] तथेत्युक्तवानित्यर्थः। [अनुमतो दाल्भ्यः पृच्छति] अमुष्य....इति। [शिलक उत्तरमाह] अयं लोक....। यागदानहोमादिभिर्भूलोकस्य स्वर्गोपजीव्यत्वादिति भावः।

अस्य....सामेति। पृथिवीलोकस्य का गतिरिति दाल्भ्येन पृष्टः शिलकः प्रतिष्ठां पृथिवीलोकमतिक्रम्य सामगतिपरम्पराविश्रान्तिभूमिमन्यः कश्चिदपि न वदेत (अन्यत्र कश्चिदपि वदेत्)। अतो

---

य कश्चिदित्यादि। य इत्यस्य प्रतिसंबन्धि तेनेतिपदं मूर्धेति वाक्येऽध्याहार्यमेवमर्थविवक्षया।

**तँ ह प्रवाहणो जैवलिरुवाच—अन्तवद्वै किल ते शालावत्य! साम ; यस्त्वेतर्हि ब्रूयात्, 'मूर्धा ते विपतिष्यति' इति, मूर्धा ते विपतेदिति॥ हन्ताहमेतद् भगवत्तो वेदानीति। विद्धीति होवाच ॥ ८ ॥**

**इति प्रथमाध्याये अष्टमः खण्डः**

**प्रथमे नवमः खण्डः**

**अस्य लोकस्य का गतिरिति। "आकाश" इति होवाच— "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ; आकाशं**

---

वयमपि तथैव वदामः । 'इयं वै रथन्तरम्' इति **श्रुत्या** साम्नः प्रतिष्ठालोकत्वेन स्तूयमानत्वात् । स्वर्गस्य ज्योतिश्चक्रलग्नतया बम्भ्रम्यमाणत्वेन प्रतिष्ठात्वाभावेऽपि पृथिव्यास्तु स्थिरत्वात् प्रतिष्ठात्वम् इत्युक्तवानित्यर्थः।

**तं ह प्रवाहणः....साम** । अन्तवतीं पृथिवीं सामगतिपरम्पराविश्रान्तिभूमितया प्रतिजानानस्य ते मते साम अन्तवदेव स्यादित्यर्थः । **यस्त्वेतर्हि....होवाच** । पूर्ववदर्थः ।

[**हन्ताहमेतदि**त्यादि शिलक आह। **विद्धी**ति राजोवाचेत्यर्थः]

[एवमनुमतः शिलको राजानं पृच्छति] **अस्य...होवाच** । अस्य पृथिवीलोकस्य का गतिरिति शालावत्येन पृष्टः प्रवाहणः, आकाश इत्युक्तवानित्यर्थः । अत्र **आकाशते**=प्रकाशते, **आकाशय**तीति वा व्युत्पत्त्या **आकाश**शब्दो ब्रह्मपरः ; 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यादौ **आकाश**शब्दस्य ब्रह्मण्यपि प्रसिद्धत्वात् ; न तु भूताकाशपर इति द्रष्टव्यम् । तदेव गतित्वं प्रपञ्चयति **सर्वाणि ह....यन्ति** । चिदचिदात्मकप्रपञ्चः आकाशादेवोत्पद्यते ; तत्रैव लीयत इत्यर्थः ।

---

भगवत इति। अज्ञातार्थोपदेष्टृत्वात् क्षत्रियेऽपि प्रवाहणे आचार्यत्वाभिसंधिः। दाल्भ्यात् शिलकोऽधिकः ; ततः प्रवाहणः।

प्रत्यस्तं यन्ति ; आकाशो ह्येवैभ्यो ज्यायान् ; आकाशः परायणम्॥१॥

स एष परोवरीयान् उद्गीथः ; स एषोऽनन्तः। परोवरीयो हास्य भवति ; परोवरीयसो ह लोकान् जयति ; य एतदेवं विद्वान् परोवरीयाँसमुद्गीथमुपास्ते ॥ २ ॥

तँ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच, 'यावत्त

---

**आकाशो....ज्यायान्** । ज्यायस्त्वं नाम सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयनिरुपाधिकोत्कर्षः । **आकाशः परायणम्** । **परायणत्वं** परमगतित्वम् । परमप्राप्यत्वमिति यावत् ।

**स एष परोवरीयानुद्गीथः** । व(प्र)रः उत्कृष्टः । **वरीयान्** उत्कृष्टतरः । वरीयसामपि वर (पर) इत्यर्थः। अत्र **परः**शब्दः सकारान्तो द्रष्टव्यः । एवंरूप **आकाश उद्गीथः** । परमात्मदृष्टिविशिष्ट उद्गीथ इत्यर्थः । उद्गीथे एतादृशाकाशदृष्टिः कर्तव्येति यावत् । **स एषोऽनन्तः** । उद्गीथेऽध्यस्यमानोऽयमाकाशः **अनन्तः** अपरिच्छिन्न इत्यर्थः । ततश्चानन्तस्य **आकाश**शब्दितस्य परमात्मन एव सामगतिपरम्पराविश्रान्तिभूमित्वात् मत्पक्षे, 'अन्तवद्वै किल ते साम' इत्युक्तः अन्तवत्त्वदोषो न प्रसरतीति भावः ।

**परोवरीयो...मुपास्ते** । यः परोवरीयांसमेत**माकाश**शब्दितं परमात्मानं विद्वान् आकाशत्वेनोद्गीथमुपास्ते, तस्य परोवरीस्त्वगुणकं जीवनं भवति । परोवरीयस्त्वगुणकसकललोकावाप्तिश्च भवति ।

प्रवाहणः [स्व]उक्तार्थं संवादयति **तं....उवाच** । अतिधन्वनामा

---

परोवरीयानिति। दाल्भ्येन सामगतिकाष्ठात्वेनोक्तात् स्वर्गात् वरीयान् अयं लोकः ; ततोऽपि परः प्रवाहणोक्त आकाशः परोवरीयान् ।

**(न्त) एनं प्रजायामुद्गीथं वेदिष्यन्ते, परोवरीयो हैभ्यस्तावदस्मिन् लोके जीवनं भविष्यति ॥ ३ ॥ तथाऽमुष्मिन् लोके लोक' इति । स य एतमेवं विद्वान् उपास्ते, परोवरीय एव हास्यास्मिन् लोके जीवनं भवति, तथाऽमुष्मिन् लोके लोक" इति, लोके लोक इति ।**

**इति प्रथमाध्याये नवमः खण्डः**

---

शुनकसुतः उदरशाण्डिल्याय ऋषये—**उदर**शब्देन संततिर्लक्ष्यते । संततिशाली शाण्डिल्य इत्यर्थः । तस्मै-एनमुद्गीथमुक्त्वा अन्यदप्युवाचे-त्यर्थः । किं तदित्यत्राह **यावन्त....भविष्यति । वेदिष्यन्त** इत्येतत् व्यत्ययेनात्मनेपदम् । **प्रजायां** त्वत्संततौ यावन्तः पुरुषा एनमुद्गीथमुपासिष्यन्ते, तेषामुत्कृष्टमिह लोके जीवनं भविष्यतीत्यर्थः । **तथाऽमुष्मिन् लोकेलोक इति** । तथा सर्वस्मि(अमुष्मि)न्नपि पर-लोके भविष्यतीत्यर्थः । **परोवरीयो जीवन**मित्यनुषङ्गः । **लोकेलोक** इति वीप्सायां द्विर्वचनम् । **इति अतिधन्वा उवाचे**ति पूर्वेणान्वयः । अत इदानीन्तनानामपि तद्विदां तत् फलमस्तीत्याह **स य.... लोकेलोक इति** [स्पष्टोऽर्थः] । **लोकेलोक इति । लोकेलोक इतीति** द्विरुक्तिर्विद्यासमाप्त्यर्था ।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते— **समन्वया-ध्याये** प्रथमपादे—उद्गीथे अध्यस्योपास्यमानाकाशो भूताकाश एव । **आकाश**शब्दस्य भूताकाशे रूढत्वेन **रूढाकाश**शब्दाभ्यासादिति पूर्व-पक्षे प्राप्ते— उच्यते—**'आकाशस्तल्लिङ्गात्'** । **आकाश**शब्दाभिधेयः

---

**परोवरीय इत्यस्य जीवनमिति विशेष्यमुत्तरवाक्यलभ्यम् । अमुष्मिन् लोके लोक इति वीप्सा उपरितनसर्वप्राकृतलोकग्रहणार्था ।**

परमात्मा । निखिलजगदेककारणत्वसर्वज्यायस्त्वपरायणत्वादीनां परमात्मलिङ्गानां भूताकाशे असंभवात् । भूताकाशस्याचेतनवर्गं प्रति कारणत्वसंभवेऽपि चिदचिद्वर्गकारणत्वासंभवात् । सर्वैः कल्याणगुणैः सर्वोत्कृष्टत्वलक्षणज्यायस्त्वस्याप्यसंभवात् अचेतनस्य । स्वरूपभिन्नत्वेन मोक्षविरोधितया च हेयस्य (हेय)शब्दादिनिषिद्धविषयप्रावण्यजनकतया सकलपुरुषार्थविरोधिनः अचेतनस्य परायणत्वलक्षणप्राप्यत्वस्य चासंभवात्। तस्य [च], 'का साम्नो गतिः' इत्युपक्रमलक्षणतात्पर्यलिङ्गेन प्रतिपिपादयिषितत्वावगमात् । तथा, 'अन्तवद्वै किल ते दाल्भ्य (शालावत्य ?) साम'इति पृथिवीलोकस्यान्तवत्त्वोक्तिदूषणपूर्वकमुपक्षिप्तस्य, 'स एषोऽनन्तः' इत्यनन्तत्वलिङ्गे च प्रतिपिपादयिषितत्वावगमात् । प्रतिपिपादयिषितपरायणत्वानन्तत्वपरोवरीयस्त्वादिलिङ्गविरोधे अभ्यस्ताया अपि श्रुतेः दुर्बलत्वात् (च) **आकाशशब्दः** आकाशते आकाशयतीति वा योगवशेन परमात्मपर एव ।

ननु 'सर्वाणि ह वा इमानि भूतानि' इति श्रुत्यैवाऽऽकाशस्य जगत्कारणत्वाऽऽवेदनात् (अवगमात् ) यथाश्रुताकाशस्यैव जगत्कारणत्वमभ्युपेतव्यमिति चेन्न—'सदेव सोम्येदमग्र आसीत् ', 'आत्मा वा इदमेक एवाग्र आसीत्', 'एको ह वै नारायण आसीत्' इत्यादियोग्यार्थानुवादरूपबहुवाक्यविरोधे एकस्यानुवादरूपस्यायोग्यार्थस्यास्य [वाक्यस्य] दुर्बलत्वेन स्वार्थप्रतिपादनसामर्थ्याभावात् । अत **आकाशशब्दो** यौगिकया वृत्त्या ब्रह्मपर एव ।

---

हेयेति पाठे तत् निषिद्धविषयेऽन्वेति। योग्यार्थेति वाक्ये विशेषणम्।

यत्त्वत्र **व्यासार्यैः**, 'अर्थाविरोध एव रूढिप्राबल्यमित्यप-शूद्राधिकरणनयोपजीवनेनावयवशक्त्या निर्वाहो भाष्ये उक्तः। रूढ्यपरित्यागेन अपर्यवसानवृत्त्या **आकाश**शब्दस्याकाशशरीरकपरमात्म-परतया निर्वाहोऽप्यभिमतः' इत्युक्तम्—तत् उपायान्तरसंभवप्रदर्शन-मात्रपरम्; न तु प्रकृताभिप्रायम्। अनन्यथासिद्धभूताकाशलिङ्गसत्त्व एव, 'जीवमुख्यप्राणलिङ्गात्' इति सूत्रोक्तन्यायावतारात्।

'परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी॥'

**इत्याचार्योक्तेः**। भूताकाशशरीरकात् ब्रह्मणः सकलचेतनाचेतन-वर्गोत्पत्त्यभावेन 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यत्र**आकाश**शब्दस्य भूताकाशशरीरकब्रह्मप्रतिपादकत्वासंभवात्। न चाकाशावस्थस्य ब्रह्मणो निखिलकारणत्वासंभवेऽपि आकाशावस्थोपलक्षि-

---

अर्थाविरोध एवेति। रूढ्यर्थविरोधे तु शूद्रपदस्य शोचितृत्व-रूपयोगार्थवत् प्रकृतोपयुक्तो योगार्थो गृह्यते इति भावः। आचा-र्योक्तेरिति। न्यायसिद्धाञ्जन इति शेषः। न केवलमिदम्। व्यासार्यै-रपि, 'साक्षादप्यविरोधम्' इत्यत्र एवमेवोक्तेः। नन्वेवं सति पाञ्चरात्राधिकरणसिद्धान्तसूत्रभाष्यविरोधः, तत्र, "यथा आकाश-प्राणादिशब्दाः" इति अपर्यवसानवृत्तिप्रदर्शनात्। अत आचार्य-कारिकायामपि, 'निरुक्त्यादेः' इति आदिपदेनापर्यवसानवृत्तिरपि गृह्यते। तल्लिङ्गानन्यथासिद्धौ अपर्यवसानवृत्तिमात्रम्, अन्यत्र तूभयमपीति भेद इति चेत्—उच्यते। योगशक्तेरपर्यवसानवृत्तेश्चा-विशेषेण स्वीकारे उपास्याकारभेदेनाष्टदोषदुष्टविकल्पापत्तेः केनापि विनिगमकेन कश्चिदेवार्थो विवक्षणीयः। सकृत्प्रयुक्तशब्दनयाच्च।

प्रथमे दशमः खण्डः

**मटचीहतेषु कुरुषु आट(टि)क्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥**

---

तस्य तत् संभवतीति वाच्यम्— तथा सति **आकाश**शब्दस्यात्यन्ता मुख्यत्वप्रसङ्गादिति द्रष्टव्यमिति स्थितम् । प्रकृतमनुसरामः । १-९

प्रस्तावोद्गीथप्रतिहारभक्तिलयविषयकोपासनानि विधातुमाख्यायिकामाह—**मटची.... उवास** । चक्रस्य सुतः उषस्तिनामा कश्चन ऋषिः **मटचीहतेषु** अश्मवृष्टिकृतदुर्भिक्षदूषितेषु कुरुदेशेषु **आट(टि)क्या** अनुपजातपयोधरादिव्यञ्जनया भार्यया सह **इभ्यानां** गजारोहाणां ग्रामे अनशनेन **प्रद्राणकः** कुत्सितां गतिमापन्नः ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादं काङ्क्षन्नुवास । 'द्रा कुत्सायां गतौ' इति हि धातुः । चक्रस्य गोत्रापत्यमित्यर्थे, "अश्वादि"त्वात् फञि(ङि) चाक्रायण इति रूपम् ।

---

**तत्र यद्यपि अपर्यवसानवृत्तौ प्रथमप्रतीतार्थपरित्यागाल्लाघवम्— तथापि भूताकाशान्तर्यामित्वेन रूपेण सर्वकारणत्वाभावादर्थस्वारस्यभङ्गः । न हि अनन्यथासिद्धं लिङ्गं किमप्यस्ति, येन असारस्येऽपि तद्विवक्षा कर्तव्या स्यात् । अतोऽसारस्याभावात् योगव्युत्पत्तिः । अत एव सूत्रकृता इन्द्रप्राणाधिकरण एव अन्तर्यामिपर्यन्तविवक्षायै शास्त्रदृष्टिः प्रदर्शिता । न तु पूर्वम् । पाञ्चरात्राधिकरणभाष्यं तु यत्रापर्यवसानवृत्तिराकाशादिपदे भवितुमर्हति तत्स्थलाभिप्रायं नेयमिति ।**

**मटच्यः अशनय इति शाङ्करम् । अटनमर्हतीति आटिकी । बहिरधिकं पर्यटनार्हत्वञ्चानुपजातव्यञ्जनात्वमेव । अन्यादृशीनां गृह एव स्थितेः ।**

स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे। तँ होवाच, 'नेतोऽन्ये विद्यन्ते, यच्चये (यच्च ये) मे इमे उपनिहिता' इति ॥ २ ॥

'एतेषां मे देहि' इति होवाच। तानस्मै प्रददौ। 'हन्तानुपानम्' इति। 'उच्छिष्टं वै मे पीतँ स्यात्' इति होवाच ॥ ३ ॥ 'न स्विदेते-

---

**स....बिभिक्षे**। सोऽन्नार्थी अटन् **कुल्माषान्** कुत्सितान् माषान् खादन्तमिभ्यं याचितवान्। 'कुल्माषादञ्' इति निर्देशात् कुत्सितमाषार्थे **कुल्माष**शब्दस्य साधुत्वम्। **तं...निहिता इति**। **इतः** मया भक्ष्यमाणादुच्छिष्टराशेः कुल्माषा अन्ये न विद्यन्ते। **यत्** यस्माद्धेतोः **इमे** कुल्माषाः **मे चये मे** मया भक्ष्यमाणे **चये** उच्छिष्टराशौ **उपनिहिताः** प्रक्षिप्ताः। अतः किं करोमीत्युषस्तिमिभ्य उवाचेत्यर्थः।

**एतेषां....होवाच**। उच्छिष्टानामपि मध्ये **मे** मह्यमपि किञ्चित् देहीति इभ्यमृषिः प्रार्थितवानित्यर्थः। **तानस्मै प्रददौ**। **तान्** कुल्माषान् उषस्तये इभ्यो दत्तवानित्यर्थः। **हन्त....होवाच**। अथ समीपस्थमुदकं गृहीत्वा हन्त! गृहाणानुपानमिति इभ्येनोक्तः [स ऋषिः] तदुदकपाने [न] उच्छिष्टोदकपानं मे स्यादिति प्रत्युवाचेत्यर्थः।

---

चये इति। 'समुदायश्चयो गणः' इत्यमरः। शाङ्करेऽपि चये इत्येव पदच्छेदः।

एतेषामिति षष्ठीप्रयोगात् अंशमात्रभिक्षणमुषस्तिकृतम्। इभ्यस्तु महानयं ब्राह्मणः सत्स्वपि कुल्माषत्वमदीयत्वोच्छिष्टत्वेषु प्रार्थयत इति प्रीत्या सर्वानपि कुल्माषान् प्रकर्षेण ददौ। अत एव 'अतिशेषान्' इति वक्ष्यति। अनुपानञ्चात एव तदैव ग्राहयितुं प्रायतत।

ऽप्युच्छिष्टा' इति । न वा अजीविष्यमिमानखादन्' इति होवाच, 'कामो म उद्पानम्' इति ॥ ४ ॥

स ह खादित्वाऽतिशेषान् जायाया आजहार । साऽग्र एव सुभिक्षा बभूव ; तान् प्रतिगृह्य निदधौ ॥ ५ ॥

स ह प्रातः संजिहान उवाच, 'यद् बतान्नस्य लभेमहि, लभेमहि धनमात्राम् ; राजाऽसौ यक्ष्यते ; स मा सर्वैरार्त्विज्यैर्वृणीत' इति॥६

तं जायोवाच, 'हन्त पते ! इम एव कुल्माषा' इति । तान्

---

**न स्वित्....पानमिति** । 'किमेते इदानीं त्वया मत्तो गृहीताः कुल्माषा अनुच्छिष्टा' इति इभ्येन पर्यनुयुक्तः (ऋषिः), 'कुल्माषाखादने स्वस्य जीवनहानिर्भवति। तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं **कामः** कामकारितं निषिद्धं स्यात्' इत्युवाचेत्यर्थः ।

**स....आजहार** । **सः** उषस्तिः स्वयं किञ्चित् (तान्?) भक्षयित्वा **अतिशिष्टान्** अवशिष्टान् जायायै दत्तवानित्यर्थः । **सा निदधौ** । **सा** जाया अग्रे प्रागेव **सुभिक्षा** लब्धान्ना बभूव । तथापि स्त्रीस्वभावात् अनवज्ञाय तान् कुल्माषान् पत्युर्हस्तात् प्रतिगृह्य निक्षिप्तवती ।

**स...धनमात्राम्** । **स** होषस्तिः प्रातः **संजिहानः** शयनं परित्यजन्नेव पत्न्यां शृण्वत्यामिदमुवाच । किं तत्? । यदि (यत्) अन्नस्य स्तोकमपि लभेमहि, तेन प्राणान् धृत्वा **धनमात्राम्** अल्पधनं लभेमहीत्यर्थः । कथं धनमात्रा लभ्यत इत्यत्राह **राजाऽसौ...वृणीतेति** । राजाऽसौ नातिदूरे यजते, स मां दृष्ट्वा सर्वाणि आर्त्विज्यानि त्वया कारयितव्यानीति [मां] प्रार्थयेतेत्युवाचेत्यर्थः । **तं....कुल्माषा**

---

तदाह तानस्मै प्रददौ । हन्तानुपानम् इति ।

स ह खादित्वेति उपरि कथनात् खादनं ततो निष्क्रम्य गत्वा मध्ये मार्गमिति ज्ञायते । सुभिक्षा=बालात्वाद्वा स्वयं प्राणात्यया-

खादित्वाऽमुं यज्ञं विततमेयाय ॥ ७ ॥

तत्रोद्गातॄन् आस्तावे स्तोष्यमाणानुपोपविवेश ।

स ह प्रस्तोतारमुवाच, ॥ ८ ॥ 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता, तां चेदविद्वान् प्रस्तोष्यसि, मूर्धा ते विपतिष्यति' इति ॥ ९ ॥

---

**इति** । 'हे पते ! ये मद्धस्ते(स्त) निक्षिप्ताः त्वया कुल्माषाः, त इम एव । एतान् गृहाण' इति जाया प्रत्युक्तवतीत्यर्थः । **तान्...एयाय** । तानेव पर्युषितोच्छिष्टान् कुल्माषान् भक्षयित्वा **विततं** विस्तीर्णं यज्ञं गतवानित्यर्थः ।

**तत्र...उपविवेश** । आस्तुवन्त्यस्मिन् । इति **आस्तावः** स्तोत्रस्थानम् । सदसि स्तोतुं प्रवृत्तानां उद्गातृप्रस्तोतृप्रतिहर्तॄणां **उप** समीपे उपविष्टवानित्यर्थः ।

**स....विपतिष्यतीति** । [**सः** उषस्तिः प्रस्तोतारं प्रति इत्थमुवाचेत्यर्थः । उक्तिमेवाह **प्रस्तोतः....**।] हे प्रस्तोतः ! **प्रस्तावमन्वायत्ता** प्रस्तावभक्तौ अध्यस्य या देवता उपास्या, तामविदित्वा यदि विदुषो मम समीपे प्रस्तोष्यसि, मूर्धा ते विपतिष्यतीत्यर्थः। यद्यपि, 'तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च न वेद' इति अविदुषोऽप्यार्त्विज्याधि-

---

पत्तिदशाप्राप्तेर्वा साधुभिक्षितशमितक्षुत । इदमुषस्तिवृत्तम्, 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' इति सूत्रे दर्शितम् । वक्ष्यते च तदर्थं इह भाष्ये प्राणविद्यायाम् ।

उद्गातॄनिति । इदं बहुवचनान्तत्वान्नोद्गातृमात्रपरम्; किंतूच्चगानकर्तृत्रितयपरम् । एतत्सूचनाय भाष्ये 'प्रस्तोत्रुद्गातृ' इत्यनुक्त्वा उद्गातृप्रस्तोत्रित्युक्तम् । अत्र उद्गातॄनिति द्वितीयाया अन्वयाय आगत्येत्यध्याहृतं शाङ्करे ।

एवमेवोद्गातारमुवाच, 'उद्गातर्या देवतोद्गीथमन्वायत्ता, तां चेदविद्वानुद्गास्यसि, मूर्धा ते विपतिष्यति' इति॥ १० ॥

एवमेव प्रतिहर्तारमुवाच, 'प्रतिहर्तर्या देवता प्रतिहारमन्वा-

---

कारोऽस्ति, तथापि विद्वत्संनिधौ अविदुषः कर्माधिकारो नास्तीति भावः। **एवमेव....विपतिष्यतीति**। पूर्ववदर्थः। **एवमेव...**।

---

अन्वायत्तेति। ननु अन्वायत्ता देवतेत्यस्य अधिष्ठातृदेवतेत्यर्थस्यैव पर्याप्तत्वात् किमिति अध्यस्योपास्येत्यर्थ उक्तः?। अत एव, 'प्रस्तावप्रतिहारविषयमप्युपासनं वक्तव्यम्' इति शाङ्करमपि विमृश्यम्। पूर्वं, 'स एष परोवरीयानुद्गीथ' इति उद्गीथे आकाशादिदृष्टिर्यथा समानाधिकरणनिर्देशादवसीयते, न तथाऽत्र किञ्चित्। किञ्चात्र प्रस्तावादौ प्राणादिदृष्टिश्चेत्, किं तत्फलम्? अनुक्तेः। कर्मवीर्यवत्तरत्वमेव सामान्यश्रुतिसिद्धमिति चेत्—तर्हि एकत्र कृतया दृष्ट्यैव तत्सिद्धौ अन्यदृष्टिद्वयविधानं व्यर्थम्। एकस्मिन् प्रयोगे त्रीन् पुरुषानुद्दिश्य तिसृणां दृष्टीनामुपदेशः तदनुष्ठानञ्च न एकं फलमुद्दिश्य भवितुमर्हति। एत एव समतिसृष्टाः स्तुवतामिति च दर्शितमेव त्रिभिरप्युपदिष्टोपयोजनम्। अतः, पूर्वम्, 'आशीस्समृद्धिरुपसरणानि' इत्युक्तरीत्या अपेक्षितफलसमृद्धिकरमधिष्ठातृदेवताचिन्तनमेवात्र प्रतीयते। प्राणाधिकरणश्रुतप्रकाशिकायामपि, 'उद्गीथप्रतिहारयोर्देवतात्वेन अन्नादित्यावुक्तौ' इत्येतावदेव प्रकाशितम्—इति चेत्—सत्यम्। अथापि उद्गीथदेवताया आदित्यस्य कथनावसरे, उच्चैस्सन्तं गायन्तीति उद्गीथपदार्थसंक्रमणेन तदुपवर्णनमन्तरादित्यविद्यायामिव तत्र तद्दृष्टिं द्योतयति। तथा प्रतिहारदेवताया अन्नस्य, 'प्रतिहरमाणानि' इति प्रतिहारशब्दार्थान्वयेन वर्णनमपि। एवञ्च प्रस्तावघट्टेऽप्येवं द्रष्टव्यम्। प्रस्तावो हि अप्रकाशस्याभिनवः प्रकाशः। अभिसंभवन्ति, उज्जिहत इति च स एवोच्यते।

यत्ता, तां चेदविद्वान् प्रतिहरिष्यसि, मूर्धा ते विपतिष्यति' इति।
ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ ११ ॥

इति प्रथमाध्याये दशमः खण्डः

प्रथमे एकादशः खण्डः

अथ हैनं यजमान उवाच, 'भगवन्तं वा अहं विविदिषाणि' इति। 'उषस्तिरस्मि चाक्रायण' इति होवाच ॥ १ ॥ स होवाच, 'भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषम्; भगवतो वा अहमवित्त्या(त्त्या)ऽ-

---

स्पष्टोऽर्थः। **ते....आसाञ्चक्रिरे,** ते ह प्रस्तोत्रादयः **समारताः** उपरताः सन्तः मूर्धपातभयात् तूष्णीमेव स्थिता इत्यर्थः। १-१०

**अथ....विविदिषाणीति**। को भवानिति भवन्तं ज्ञातुमिच्छामीति उषस्तिं यजमान उक्तवानित्यर्थः। **उषस्तिरस्मि....उवाच।** स ऋषिरिति शेषः। स्पष्टोऽर्थः।

**स....अवृषि**। तमृषिं यजमान उवाच। किमिति। भगवन्तं सर्वगुणोपेतं श्रुत्वा सर्वाण्यार्त्विज्यानि भगवदधीनानि कर्तुं **पर्यैषिषम्**

---

अन्वायत्तेति पदमपि नाधिष्ठातृवाचि। प्रत्युत देवतायत्तमधिष्ठेयम्। अत एवान्यत्र (१-९-२) अन्वायत्तानीत्यस्य उपजीवन्तीत्यर्थ उक्तः। सादृश्यार्थे च अनुशब्दोऽनुशिष्टः, 'पश्चात्सादृश्ययोरनु' इति। श्रुतप्रकाशिकायामपि देवतात्वेनेत्यस्य अध्यस्योपास्यदेवतात्वेनेत्यर्थो न क्लिष्टः। शाङ्करार्थानुवादरूपत्वात् तदभिमत एव तदर्थः। अतः प्रकृते एवमुचितम्। किमिति दृष्टित्रयमिति चेत्-विनिगमनाविरहात्। त्रयोऽपि चादौ भर्त्सिताः। त्रीनप्युपसन्नान् प्रति तिस्रो दृष्टयश्चोपदिष्टाः। तथा तदैव गृहीत्वाऽनुष्ठीयमानासु या काचित् सम्यङ्निष्पन्ना वीर्यवत्तरत्वे फलिष्यति। अन्यथा आशीस्समृद्धिप्रकरण एव सर्वमिदं श्रुत्योक्तं स्यात्, सङ्गत्यतिशयादित्याशयः।

**न्यानवृषि ॥ २ ॥ भगवाँस्त्वेव मे सर्वैरार्त्विज्यैः' इति । 'तथा' इति; 'अथ तर्हि एत एव समतिसृष्टाः स्तुवताम् ; यावत्त्वे(त्ते)भ्यो धनं दद्याः, तावन्मम दद्या' इति । 'तथा' इति ह यजमान उवाच ॥ ३ ॥**

---

भगवतोऽन्वेषणं कृतवानस्मि । भगवतः **अविद्या**— **विदिः** लाभः । '**इक् कृष्यादिभ्यः**' इति इक् । सा न भवतीत्यविदिः । तया अविद्या— अलाभेन इमान् ऋत्विजः **अवृषि** वृतवानस्मीत्यर्थः । **भगवांस्तु... आर्त्विज्यैरिति** । इतःपरमपि भगवानेव सर्वैः **आर्त्विज्यैः** ऋत्विक्कर्मभिर्वृत इत्युवाचेत्यर्थः । सर्वार्त्विज्यार्थं वृत इति यावत् ।

**तथेति...दद्या इति** । अत(थ?) उषस्तिः तथेत्यभ्युपगम्य अनन्तरं, 'त्वया पूर्वं वृता एत एव मया **समतिसृष्टाः** सम्यक् प्रसन्नेनानुज्ञाताः उपदिष्टदेवतास्सन्तः **स्तुवतां** स्तुवन्तु । किन्तु एभ्यो यावत् धनं प्रयच्छसि, तावत् मम दद्याः इत्युक्तवानित्यर्थः । **तथेति ह यजमान उवाच** । स्पष्टोऽर्थः ।

---

**एभिः सर्वैरार्त्विज्यैरिति** । एभिः—सामवेदसंबन्धिभिः। आर्त्विज्यं = ऋत्विक्कर्म । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति कर्मणि ष्यञ् । **अविद्येति** । अत्र 'अवित्त्या' इति शाङ्करादिपाठः। अवित्तिः= अलाभः। **भगवांस्त्वेवेति** । अत्र राज्ञा क्रियापदाप्रयोगः अनेकार्थं व्यनक्ति । राज्ञो वैयाकुलीञ्च दर्शयति । 'पूर्वमेभिरार्त्विज्यैरुद्दिष्टः वरणार्थमन्वेषितश्च भगवान् । पश्चादिमे वृता आसन् । पुनर्वरीतुमिष्टश्च । वृतानां निरासो युज्येत किम्? भगवतः सर्वार्त्विज्यसंबन्धे संप्रत्युपायं भगवानेव ब्रवीतु' इत्येवम्। **समतिसृष्टाः**। अतिसर्गः=कामचार इति 'प्रैषातिसर्ग' इत्यत्र प्रसिद्धम् । स चानुज्ञैव । **ममेति** । मह्यमिति वक्तव्ये ममेत्युक्त्या मुमुक्षोरुषस्तेः नव स्वार्थन्वाभिसंध्यभावः सूच्यते।

अथ हैनं प्रस्तोतोपससाद, "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता, तांश्चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् ; कतमा सा देवता" इति ॥ ४ ॥

'प्राण' इति होवाच, 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति ; प्राणमभ्युज्जिहते ; सैषा देवता प्रस्तावमन्वायत्ता ; तांश्चेदविद्वान् प्रा(प्र)स्तोष्यो मूर्धा ते व्यपतिष्यत्

---

**अथ हैनं प्रस्तोतोपससाद ।** उषस्तिवचनं श्रुत्वा प्रस्तोता विनयेन तत्समीपं [आ]गतवानित्यर्थः । **प्रस्तोतर्या....देवतेति ।** भगवान् मां प्रति, प्रस्तोतर्या देवतेत्यादिना यां देवता**मवोचत्** उक्तवान्, सा देवता केति प्रस्तोता तमृषिं पप्रच्छेत्यर्थः ।

**प्राणः....** । प्राण एव प्रस्तावमन्वायत्ता देवतेत्युषस्तिरुवाचेत्यर्थः । **अत्र** प्राणयितृत्वगुणयोगात् **प्राण**शब्देन परमात्मोच्यते । [अत एव] **प्राण**शब्दस्य मुख्यप्राणपरत्वं व्यावर्तयति **सर्वाणि... अन्वायत्ता** । **प्राणमेवाभि** प्राणमभिलक्ष्य । प्राणे इति यावत् । **संविशन्ति** । समित्येकीकारे । ऐक्येन विशन्ति । लीयन्त इत्यर्थः । **प्राणमभ्युज्जिहते** प्राणादेवोद्गच्छन्तीत्यर्थः । **[सैषा]** सर्वभूतलयोत्पत्तिस्थानत्वेन वेदान्तेषु प्रसिद्धा प्राणरूपा देवता प्रस्तावभक्ति**मन्वायत्ता** अनुगता=प्रस्तावभक्तौ अध्यस्योपास्येत्यर्थः । **तां....मयेति** । 'तां चेदविद्वान् प्रस्तोष्यसि, मूर्धा ते विपतिष्यति' इति मदुक्त्यनन्तरमपि मदुक्तिमनादृत्य तद्देवतामनभिज्ञाय यदि प्रास्तोष्यः, तदा मूर्धा ते व्यपतिष्यदेव । अतः साधु कृतं त्वया मत्समीपमागत्य विनयेन पृच्छतेति भावः।

तथोक्तस्य मया' इति ॥ ५ ॥

अथ हैनमुद्गातोपससाद, 'उद्गातर्या देवतोद्गीथमन्वायत्ता ताञ्चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्; कतमा सा देवता' इति ॥ ६ ॥

'आदित्य' इति होवाच, 'सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैःसन्तं गायन्ति। सैषा देवतोद्गीथमन्वायत्ता। तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मया' इति ॥ ७ ॥

अथ हैनं प्रतिहर्तोपससाद, 'प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता ताञ्चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्; कतमा सा देवता' इति ॥ ८ ॥

'अन्नम्' इति होवाच, 'सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति। सैषा देवता प्रतिहारमन्वायत्ता। तां

---

अत्र **मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेत्युक्त्या** विदुषैवमुक्तस्याविदुषः तदनादरेण कर्मकरणे प्रत्यवायः, न तु विदुषाऽनुक्त(मत)स्याप्यविदुष इति भावः। [व्यासार्यैस्तु **मूर्धा ते व्यपतिष्यदित्यस्य**, आत्मसत्ता न लभ्येतेत्यर्थ इति आत्मसत्ताहानिपर्यन्तः प्रत्यवायो वर्णितः।]

**अथ हैनमुद्गाता....देवतेति**। पूर्ववदर्थः। **आदित्यः**। उद्गीथेऽध्यस्योपास्य आदित्य इत्यर्थः। **सर्वाणि....गायन्ति**। **उच्चैः सन्तं** उच्चैः स्थितमधःस्थितानि सर्वाणीमानि भूतानि गायन्तीत्यर्थः। प्रस्तावप्राणयोः प्रशब्दवत्त्वेन साम्यवत् उद्गीथोच्चैस्थितादित्ययोः तुच्छब्दवत्त्वेन साम्यमिति भावः। शिष्टं पूर्ववत्।

**अथ हैनं प्रतिहर्ता....देवतेति**। पूर्ववत्। **अन्नमिति** प्रतिहारभक्तौ अन्नमध्यस्योपास्यमित्यर्थः। **सर्वाणि....**। **प्रतिहरमा-**

**चेद्विद्वान् प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मया' इति । तथोक्तस्य मयेति ॥ ९ ॥**

**इति प्रथमाध्याये एकादशः खण्डः**

---

**णानि** । भक्षयन्तीत्यर्थः । सन्तीति शेषः । अत्र **प्रतिहरमाणानी**ति **प्रति**शब्दवत्त्वेन अन्नप्रतिहारयोः साम्यात् प्रतिहारे अन्नाभिमानिदेवताध्यासः । ततश्च प्रस्तावोद्गीथप्रतिहारभक्तिषु क्रमेण प्राणादित्यान्नदृष्टिः कर्तव्येत्यर्थः । **तथोक्तस्य मयेति तथोक्तस्य मयेति** इति द्विरुक्तिः विद्यासमाप्त्यर्था । शिष्टं पूर्ववत् ।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते--**समन्वयाध्याये** प्रथमपादे, 'प्राणस्य [निखिल]भूतजातप्रवृत्तिहेतुत्वसंभवात् **प्राण**शब्देन मुख्यप्राण एवाभिधीयताम्' इति पूर्वपक्षे प्राप्ते, शिलाकाष्ठाद्यचेतनस्वरूपस्य, शुद्धस्य जीवस्वरूपस्य च मुख्यप्राणाधीनस्थितिकत्वाभावात् प्रसिद्धवन्निर्दिष्टसकलचेतनो(चेतनाचेतनो ?)त्पत्तिलयहेतुत्वस्य परमात्मव्यतिरिक्ते असंभवात् , चेतनवाचि**देवता**शब्दस्याप्यचेतने मुख्यप्राणे असंभवाच्च परमात्मैव प्राणयितृत्वादियोगवशेनाभिधीयते' इति **अत एव प्राणः** इति सूत्रेण सिद्धान्तितम् ।

ननु प्रस्तावोद्गीथप्रतिहारभक्त्यनुगतत्वेन देवतात्वेन च निर्दिष्टेषु प्राणादित्यान्नेषु प्राणस्यैव परमात्मत्वम् , आदित्यान्नयोस्तु न तथात्वमित्यत्र किं विनिगमकम् ? चेतनवाचि**देवता**शब्दः त्रिष्वपि समानः ।

---

'सर्वाणि ह वा इमानि भूतानि' इति सर्वभूतग्रहणेन स्तवनस्यात्र तिसृष्वपि देवतास्वविशेषात् प्राणमात्रस्य ब्रह्मत्वं सूत्रकृदभिमतं कथं युज्यत इत्याशङ्क्ते नन्विति ।

प्राणवाक्यशेषे प्रसिद्धप्राणासंभावितासंकुचितसर्वभूतसंवेशनोद्गमनाधारत्व-श्रवणवत् . आदित्यान्नवाक्यशेषयोरपि असंकुचितसर्वभूतगेयत्व–सर्व-भूतोपजीव्यत्वयोः प्रसिद्धादित्यान्नासंभावितयोः श्रवणाविशेषात् । यदि च आदित्यवाक्ये **सर्वभूत**शब्दः आदित्यगानयोग्यचेतनविशेषपरतया, अन्नवाक्यशेषे[ऽपि] अन्नोपजीवनयोग्यचेतनविशेषपरतया[च] संकोच्यते, **देवता**शब्दश्च, "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" इति सूत्रोक्तन्यायेनाभिमानिदेवतापरतया योज्यते, तर्हि प्राणेऽपि तथाऽस्तु ; विशेषाभावादिति चेत् —

उच्यते । **प्राण**शब्दस्य, 'प्राणस्य प्राणम्' 'यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम्' इत्यादिषु परमात्मन्यपि निरूढत्वात्, 'सर्वाणि ह वा इमानि भूतानि' इत्यादिवाक्यशेषस्वारस्याच्च परमात्म-परत्वमाश्रितम् । **अन्नादित्य**शब्दयोस्तथात्वात् चेतनवाचिदेवताशब्दस्य केवलादित्यमण्डलान्नयोरभावात् तदभिमानिदेवतापरत्वम् । अन्नाभिमानि-देवतायाश्च भूतभक्ष्यत्वं तदधिष्ठेयान्नाभेदारोपेणोपपद्यते । 'सर्वाणि ह वा इमानि भूतानि आदित्यमुच्चैस्सन्तं गायन्ति' इति प्रतिपादितं सर्वभूतगेयत्वं परमात्मनोऽपि न संभवति । **भूत**शब्दो हि प्राणिनिकाये-महाभूतेषु च रूढः । महाभूतस्य गातृत्वप्रसक्तेरेवाभावात् प्राणिनि-कायपरत्वं वक्तव्यम् । तदपि न संभवति । न हि सर्वेऽपि प्राणिनः परमात्मानं गायन्ति; स्थावरेषु पश्वादिषु चाभावात् । तस्माद् गानयोग्य-प्राणिविशेषपरत्वेन संकोचः परमात्मपरत्वेऽप्यावश्यक इति **आदित्य**-शब्दस्य लोकव्युत्पत्तिविरुद्धं(द्धपरत्वं) परमात्मपरत्वं नाश्रयणीयम् ।

## प्रथमे द्वादशः खण्डः

अथातः शौव उद्गीथः । तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥

---

एवमन्नवाक्यशेषेऽपि 'प्रतिहरमाणानि' इति मक्ष्यमाणत्व न परमात्मनि मुख्यम् । अत **आदित्यान्न**शब्दयोः ब्रह्मपरत्वाभावेऽपि **प्राण**शब्दस्य ब्रह्मपरत्वं सिद्धमिति द्रष्टव्यम् ॥ प्रकृतमनुसरामः । १-११

अतीतखण्डे अन्नाप्राप्तिनिमित्ता उच्छिष्टपर्युषितभक्षणलक्षणा कष्टावस्थोक्ता । अनन्तरमन्नलाभाय श्वदृष्टः उद्गीथः प्रस्तूयते । **अथातश्शौव उद्गीथः** । **शौवः** श्वदृष्टः उद्गीथः । प्रस्तूयत इति शेषः । **शौव** इति टिलोपश्छान्दसः । **तद्ध....वव्राज** । अत्र वाशब्दश्चार्थे । बकग्लावनामद्वययुक्तो दल्भसुतो मित्रासुतश्च स्वाध्यायं कर्तुमुद्वव्राज ग्रामान्निर्गतवानित्यर्थः ।

---

उच्छिष्टपर्युषितेति । तथाच श्रीभाष्यम्—'इभ्योच्छिष्टभूतान् स्वोच्छिष्टभूतान् पर्युषितांश्चखाद' इति । छान्दस इति । शौवन इति वास्तवं रूपम् । वाशब्दः चार्थे इति । एकनाम्नाऽऽह्वानादिकाले नामान्तराप्रयोगात् एककालाप्रयोगरूपविरोधसूचनाय वाकारः प्रयुक्तः । तावता न नाम्नोर्भिन्ननिष्ठत्वम् । किन्तु एकस्मिन्नेव पुरुषे समुच्चय इति भावः । बकग्लावयोर्भिन्नत्वे तु चकार एव श्रुतौ प्रयुक्तः स्यात् । न च प्रकृतोद्व्रज्यादिकर्तृत्वं बकस्य ग्लावस्य वेति वेदपुरुषेणानवधारितम्; येन वाकारोऽन्यथोपपद्येत । अत एव, 'एकस्यैव नामद्वयं चेत्, बको ग्लावो वा दाल्भ्य इति निर्दिश्येत । अतो दल्भसुतो बकः, अन्यस्तु मैत्रेयो ग्लावः' इति न शङ्क्यम् । ग्लाव इति मित्राकृतं नाम, बक इति दल्भकृतमिति सूचनाय तथोक्तिः । ननु दाल्भ्यो दल्भगोत्रापत्य-

तस्मै श्वा श्वेतः प्रादुर्बभूव । तमन्ये श्वान उपसमेत्योचुः, "अन्नं नो भगवानागायतु ; अशनायाम वै' इति ॥ २ ॥

तान् होवाच, 'इहैव मा प्रातरुपसमीयात' इति । तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ॥ ३ ॥

ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्ती-

---

**तस्मै...बभूव** । तत्स्वाध्यायेन तोषितः कश्चन ऋषिः श्वेतशुनकरूपतया तस्मै प्रादुर्बभूवेत्यर्थः । **तं...ऊचुः** । **तं** श्वेतं श्वानं क्षुल्लकाः श्वानः उपसमेत्य उक्तवन्तः । उक्तिमेवाह—**अन्नं...वा इति** । वैशब्दोऽवधारणे । 'वयं **अशनायाम** बुभुक्षिताः स्मः । अस्माकं गानेनान्नं भगवान् संपादयतु' इत्यूचुरित्यर्थः ।

**तान्....समीयातेति** । श्वः प्रातःकाले अस्मिन्नेव देशे **मा** मामुपगच्छतेति **तान्** क्षुल्लकान् शुनः श्वेतः श्वा उवाचेत्यर्थः । **तद्ध...चकार** । बकग्लावनामा ऋषिः तत्संवादं श्रुत्वा श्वेतश्वाद्यागमनं प्रतीक्ष्य स्थितवानित्यर्थः ।

**ते....आससृपुः** ते श्वेतश्वादयः तत्रैव प्रातरागत्य, बहिष्पव

---

मिति प्रागुक्तम्, न तु दल्भसुत इति । सत्यम् । स चिकितायनसुतः। अयं तु साक्षात् दल्भसुतः, पित्रन्तरानिर्देशात् । अस्तु वा दल्भस्य गोत्रापत्यं पौत्रादिरूप एवायम् ; किं तेनेत्यलमलब्धप्रमाणानामर्थ-विशेषाग्रहेण । श्वान इति । इमेऽपि ऋषय इति मन्तव्यम् ; अन्यथा व्यवहारहिंकरणाद्ययोगात् । उपसमीयतेति पाठोऽशुद्धः ; उपसमीयातेति निर्विवादपाठात् । इणो विधिलिङि समियातेति, आशीर्लिङि, 'एतेर्लिङि' इति सूत्रात् समियास्तेति च रूपमिति "ई' इति दैर्घ्यं परं छान्दसम् । ईधातुर्वाऽस्त्विह प्रश्लेषलब्धः ।

त्येवमाससृपुः। ते ह समुपविश्य हिंचक्रुः ॥ ४ ॥

ओ३ मदा३मों३पिबा३ मों३ देवो वरुणः प्रजापतिः सविता३ ऽन्नमिहा२ हरदन्नपते२ऽन्नमिहाहरा२ हरो३मिति ॥ ५ ॥

इति प्रथमाध्याये द्वादशः खण्डः

---

मानेन स्तोत्रेण स्तोष्यमाणा उद्गातृपुरुषाः अन्योन्यस्पृष्टा गच्छन्तीत्येतद् यथा, तथैव(एवं) अन्योन्यस्य पुच्छं मुखेन गृहीत्वा **आससृपुः** उपसर्पणं कृतवन्तः। **ते ह समुपविश्य हिंचक्रुः**। अथ ते उपविश्य **हिंचक्रुः** हिङ्कारं कृतवन्त इत्यर्थः।

हिङ्कारमेव ह-- **ओमदामों....आहरत्** । **ओ**मिति मानोपक्रमे। **अदाम** भक्षयेम, **पिबाम** [पानेनहृष्टाभवेम] च। द्योतमानत्वात् **देवः**। व्रियमाणत्वात् (वरणात्) **वरुणः**। प्रजानां पालनात् **प्रजापतिः**। एवम्भूतः सविता अन्नमाहरतु इत्यर्थः। **अन्नपते...ओमिति**। **अन्नपते** इति आदित्यस्य संबोधनम्। **आहराहरेति** द्विरुक्तिः प्रार्थनायाम्। इति गीतवन्त इत्यर्थः। [**'अन्नपत'** इतिमन्त्रकरणकादित्याध्यास-

---

उद्गातृपुरुषाः=उद्गाता प्रस्तोता प्रतिहर्ता च। यद्यपि बहिष्पवमानस्तोत्रार्थं हविर्धानात् बहिष्पवमानदेशं प्रति प्रसर्पणे एतावतामन्वारम्भः श्रुतः, 'अध्वर्युं प्रस्तोता संतनुयात्, प्रस्तोतारमुद्गाता, उद्गातारं प्रतिहर्ता, प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशास्ता' इति, अथापि स्तोष्यमाणा इति पदेन एषामेव ग्रहणमिति एवमुक्तम्। अत एव एषामपच्छेद एव प्रायश्चित्ताम्नानम्। तत् अपच्छेदाधिकरणे (पू. मी. ६-५) द्रष्टव्यम्। रलयोरभेदात् संरम्भः=संलम्भः(आलम्भः) स्पर्शविशेषः।

अन्नपत इति मन्त्रकरणकेत्यादि वाक्यं केषुचित् कोशेषु नास्ति।

## प्रथमे त्रयोदशः खण्डः

अयं वाव लोको हाउ(बु)कारो वायुर्हाइ(यि)कारश्चन्द्रमाअथकार आत्मेहकारोऽग्निरीकारः ॥ १ ॥ आदित्य ऊकारो निहव एकारो विश्वे देवा औहोइ(यि)कारः प्रजापतिर्हिङ्कारः प्राणःस्वरोऽन्नं या (याया)

---

विशिष्टोद्गीथोपासनमन्नफलकर्मिति भावः] ॥ १-१२

सामावयवान्तर्गत(न्तर)स्तोभाक्षरविषयाणि उपासनान्तराणि उपदिश्यन्ते—**अयं....हाउकारः** । हाउ इत्येवंलक्षणो यः सामसु स्तोभः, सः **अयं लोकः** एतल्लोकत्वेनोपास्य इत्यर्थः । एवमुत्तरत्रापि स्तोभशब्दोऽध्याहर्तव्यः। अयं स्तोभो (स)रथन्तरसाम्नि प्रसिद्धः। **वायुर्हाइकारः** । हाइ इति स्तोभो वामदेव्यसाम्नि प्रसिद्धः । एवमग्रेऽपि । शिष्टं स्पष्टम् । **निहवः** आह्वानमित्यर्थः । 'ह्वः संप्रसारणञ्च न्यभ्युपविषु' इति भावे ह्वेङः अप्संप्रसारणयोः निहव इति रूपम् । **प्राणः स्वरः** ।

---

अत्र श्रुतिस्वारस्यात् आनन्दगिरीयाच्च ओमदामेत्यारभ्य कृत्स्नमिदं हिङ्काररूपं प्रतीयते । शाङ्करे, 'एवं हिं कृत्वा पुनरप्यूचुः' इति अन्नपत इत्यादिभागस्यावतारणात् भागोऽयं न हिङ्कार इति लक्ष्यत इव । सर्वथा पूर्वमसंबोधनेन उक्तम् । इह संबोधनपूर्वमिति वैलक्षण्यं किञ्चिदस्ति । तदयं पृथक् मन्त्र इति स्यादाशयः । एवमत्र प्रकरणे पूर्वं सामभक्तिषूद्गीथादिषु अन्यदृष्टिविधेरेवोपदिष्टत्वात्, पश्चादपि सामभक्त्यन्तर्गतस्तोभाक्षरेषु, ततः समस्ते च साम्नि नानादृष्टीनामेवोपदेशात् अयमपि खण्डः कर्माङ्गभूतसामांशे दृष्टिविधितत्परो युक्तः, न तु स्वतन्त्रशौवनोद्गानपरः । तत्र च शौव उद्गीथ इत्युपक्रमात् उद्गीथे शौवनदृष्टिः । तत्रापि निकृष्टे उत्कृष्टदृष्टेरेव युक्तत्वात् प्रकृतगीतिमन्त्रप्रकाशितादित्यरूपदेवतादृष्टिः कर्माङ्गभूतोद्गीथे विवक्षितुमुचितेत्याशयः पाठसत्त्वपक्षे उन्नीयते ।

**वाग्विराट् ॥२॥ अनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुङ्कारः(हुप्कारः)॥**

**दुग्धेऽस्मै वाग् दोहं यो वाचो दोहः ; अन्नवानन्नादो भवति, य एतामेवँ साम्नामुपनिषदं वेद उपनिषदं वेदेति ॥ ४ ॥**

**इति प्रथमाध्याये त्रयोदशः खण्डः**

## इति छान्दोग्योपनिषदि प्रथमोऽध्यायः

---

स्वर इति स्तोभः प्राण इत्यर्थः । **अन्नं या (याया)** । या (याया) इति स्तोभोऽन्नमित्यर्थः । **वाग् विराट** । वागिति स्तोभो **विराट्** अन्नमित्यर्थः। विराट्पुरुषो वा । **अनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुङ्कारः।** हाउकारादिभ्यो द्वादशभ्यः पूर्वोक्तेभ्योऽधिकः हुमिति त्रयो दशो यः स्तोभः, स इदमितिनिर्वक्तुमशक्यतया [अनिरुक्तत्वात् **सञ्चरः** डोलायितः=संदेहरूप इत्यर्थः। ततश्च तत्र सञ्चरत्वदृष्टिः कार्येत्यर्थः। ततश्च हाउकारादिषु त्रयोदशसु उक्तपृथिवीलोकादिदृष्टिः कर्तव्येति स्थितम् ।

तस्य फलमाह— **दुग्धे...भवति** । उक्तोऽर्थः । **यः...वेद।** सामावयवस्तोभाक्षरोपासनां यो वेदेत्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था ॥

**इति प्रथमोऽध्यायः** (प्रथमः प्रपाठकः)

---

स्तोभ इति। स्तोभो नाम निरर्थकः ऋगनन्तर्गतः तत्तत्सामगानकाले तत्रतत्र निर्दिष्टः शब्दः। अनिरुक्त इति। अव्यक्ताक्षरगानमनिरुक्तगानमित्युच्यते। तथा गानात् हुमः अनिरुक्तत्वम्। शाखाभेदेन हुम् हुप् इत्यव्यवस्थादर्शनाच्चास्माभिः किञ्चिद्रूपेणानध्यवसितत्वात् सञ्चरत्वम्। द्विरुक्तिरध्यायसमाप्त्यर्थेत्येव सर्वत्र। अन्तः प्रपाठकस्याध्यायत्वेनैव शाङ्कर इवात्रापि उपर्यपि व्यवहारः। प्रपाठकव्यवहारोऽपिप्राचीनः अधिकरणरचनासंदर्भेऽधस्तादकारि ॥

अथ द्वितीयोऽध्यायः ॥ प्रथमः खण्डः ॥

ओम् । समस्तस्य खलु साम्न उपासनम्, साधु । यत् खलु साधु, तत् सामेत्याचक्षते । यदसाधु, तदसामेति ॥ १ ॥

तदुताप्याहुः, 'साम्नैनमुपागादिति, साधुनैनमुपागादित्येव तदाहुः । असाम्नैनमुपागादित्येव तदाहुः' ॥ २ ॥

अथोताप्याहुः, साम नो बतेति, यत् साधु भवति । साधु

---

## अथ द्वितीयोऽध्यायः

सामावयवोपासनं प्राङ् निर्दिश्य समस्तस्य साम्न उपासनं प्रस्तौति **समस्तस्य....साधु** । समस्तस्य पाञ्चविध्ययुक्तस्य साप्तविध्ययुक्तस्य वा समस्तस्य साम्नः साधुत्वेनोपासनं कार्यमित्यर्थः । तत्रोपपत्तिमाह—**यत्....असामेति** । साध्वसाधुकर्मणी सामासामत्वेन व्यवहरन्तीत्यर्थः । **तदुताप्याहुः** । **तत्** तस्मिन् विषये अन्यदप्याहुः । किं तदित्यत्राह **साम्ना...तदाहुः** । सामासामोपायाभ्यामागतं प्रत्यर्थिनं साध्वसाधुभ्यामागतं व्यवहरन्तीत्यर्थः । **अथो**-

---

समस्तस्य । न पूर्ववत् उद्गीथादेः सामैकदेशस्य, नापि उत्तरवत् कृत्स्नसाम्नोऽपि अवान्तरसर्वविधारूपेण गृहीतस्य; किन्तु सामान्यतः सामपदेन गृहीतस्येत्यर्थः । समस्तस्य साम्न उपासनं यत् उपदिश्यमानम्, तस्याऽऽकारमाह साध्विति । इदं, 'साधु सामेत्युपास्ते' इति निगमने स्पष्टम् । साधुत्वमुपासनविशेषणं चेत्, अव्यावर्तकं व्यर्थं स्यात् । सान्त्ववचनादिगतसाधुत्वस्य गीतिरूपसाम्न्यारोपेणोपासनमिदम् । तदुतेत्यादिवाक्ये, साम्नैनमुपागादिति यत्, तत् साधुनैनमुपागादिति वाक्येनाहुरित्युक्त्या यत् साम तत् साधु इति ज्ञापितम् । अथ यत् साधु तत् सामेति प्रथमवाक्योदितमपि संप्रतिपन्नमिति दर्शयितुम् अथोतेति वाक्यम् । यत् साधु भवति तत्

बतेत्येव तदाहुः। असाम नो बतेति, यदसाधु भवति। असाधु बतेत्येव तदाहुः॥ ३॥

स य एतदेवं विद्वान् साधु सामेत्युपास्ते, अभ्याशो ह यदेनं

---

**ताप्याहुः**। [अस्मिन्नेवार्थे जना अन्यदप्याहुरित्यर्थः।] **साम नो बतेति यत् साधु भवति**। यत् कर्म साधु भवति, तत् नः अस्माकं साम बतेति सानुमोदाः प्रवदन्ति लोकाः। **साधु....तदाहुः**। साम नो बतेत्युक्त एव विषये, साधु बतेति लोकाः प्रवदन्ति। ततः **सामसाधुशब्दौ** एकत्र प्रयुज्यमानौ दृश्येते इत्यर्थः। एवमुत्तरत्रापि। अतः **सामसाधुशब्दयोरेकार्थे** (र्थ)प्रयोगात् समस्तस्य साम्नः साधुत्वेनोपासनं कर्तव्यमित्यर्थः।

**स य....नमेयुः**। एवं साधुत्वेन समस्त(तं)सामोपासकं(पासीनस्य) ह प्रसिद्धं **अभ्याशः** क्षिप्रं साधुधर्माः सर्वे आगच्छेयुश्च, भोग्यत्वेनोपनताश्च भवेयुरित्यर्थः। 'रमणीयचरणा अभ्याशो ह' इत्यत्र **अभ्याशः** अभ्यागन्तार इति **व्याचार्यैर्व्याख्यातत्वात् इहापि अभ्याशः** आग-

---

**खलु, 'साम नो बत' इति वाक्येनाहुः तेन, 'साधु नो बत' इत्येवोक्तं भवति। 'साम नो बत' इत्युक्तमेव, 'साधु नो बत' इति कदाचित् विवृण्वते च। तस्मात् साधुसाम्नोरैक्यमिति भावः। समभित्यर्थे सामेति व्यवहार आदित्यदृष्टौ दर्शयिष्यते। शीक्षाध्याये च, 'साम संतान' इत्यत्र सामेत्यस्य समेत्यर्थं वर्णयन्ति। यत् समं कर्म स्वात्मनः परेषाञ्च, तत् साध्वेव भवति। अतः साधुसामैक्यम्। बतेति पूर्वत्रानुमोदे; परत्र खेदे। अभ्यागन्तार इति। प्रथमतृतीयखण्डे, 'अभ्याशो ह यदस्मै स काम' इत्यत्र एतद्बहुवचनान्तव्याख्यानरीत्यसंभवात् तत्रेदं न दर्शितम्।**

साधवो धर्मा आगच्छेयुः, उप च नमेयुः ॥ ४ ॥

इति द्वितीयाध्याये प्रथमः खण्डः

द्वितीये द्वितीयः खण्डः

लोकेषु पञ्चविधँ सामोपासीत ।

---

-न्तारः साधवो धर्माः=अभ्यागमनयोग्याः साधवो धर्माः अभ्यागच्छेयु-रिति वाऽर्थः । **उपनमेयुश्च** । भोग्यतां भजेयुरित्यर्थः । २-१

**लोकेषु पञ्चविधं सामोपासीत** । हिङ्कारप्रस्तावोद्गीथप्रतिहार-निधनलक्षणपाञ्चविध्य(पञ्चविधा)युक्तं कृत्वङ्गभूतं साम **उपासीत** । पञ्च-विधसामकर्मकमुपासनं **लोकेषु** लोकविषयं कुर्यादित्यर्थः । 'आदित्यादि-

---

इतःपरं सामान्यत एव साम्नि पञ्चविधाग्रहणेन षड् दृष्टि-प्रकाराः, सप्तविधाग्रहणेन च त्रयो दृष्टिप्रकाराः । ततः गायत्रादि-सामविशेषेषु पञ्चविधाग्रहणेन एकादश दृष्टिप्रकाराश्चोपदिश्यन्ते । अथ गानस्वरे हेयोपादेयविवेकः। अथ ओमित्येतदक्षरमित्युपक्रान्तस्य प्रणवस्य ब्रह्मोपासने विनियोगरूपः प्रधानार्थः । अथ यजमान-विशेषस्य कर्मणि प्रतिसवनं गेयसामभेदोपदेशश्चेह द्वितीयप्रपाठके।

उक्तस्य साधुत्वोपासनस्य लोकादिवक्ष्यमाणसर्वोपासनैः समुच्चय इष्टः शाङ्करे । अत्र तु पृथक्फलश्रवणादिवशात् स नादृत इति प्रतीयते । ननु लोकेष्विति सप्तमीबलात् उपासनस्य लोक-विशेष्यकत्वं तत्र सामदृष्टिश्च प्रतीयते । तत् कथमन्यथा व्याख्यायते । तत्राऽऽह आदित्यादीति । तर्हि कथं सप्तमी? अत्र शाङ्करम्— सप्तम्याः प्रथमात्वेन विपरिणामः । इतिशब्दश्चाध्याहार्यः । 'लोकाः पञ्चविधं साम इत्युपासीत' इति । व्यत्यासो वा, सप्तम्याः सामपदे, तत्रत्यद्वितीयायाश्च लोकपदे इति । श्रुतिहृदयं तु, 'नात्र सामान्यतः साम्नो लोकत्वेनोपासनं किञ्चिदस्ति । किन्तु लोकेष्वेकैकलोकदृष्ट्या

**पृथिवी हिङ्कारोऽग्निःप्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥ अथाऽऽवृत्तेषु—द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥**

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च, य एतदेवं विद्वान्**

---

मतयश्चाङ्गे उपपत्तेः' इत्यधिकरणे अङ्गानङ्गसमभिव्याहारयुक्तेषू(क्तो)पासनेषु अनङ्गदृष्टिरूपत्वस्य समर्थितत्वात् अङ्गभूते साम्नि अनङ्ग[भूत]लोकदृष्टिः कर्तव्येत्यर्थः । तत्प्रकारमेव दर्शयति **पृथिवी...इत्यूर्ध्वेषु** । हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनेषु क्रमेण पृथिव्यग्न्यन्तरिक्षादित्यद्युलोकदृष्टिः ऊर्ध्वक्रमेण कर्तव्येत्यर्थः । तथा, **अथावृत्तेषु....निधनम्** । आवृत्तक्रमेण तेष्वेव द्युलोकादित्यान्तरिक्षाग्निपृथिवीदृष्टिः कर्तव्येत्यर्थः ।

तत्फलमाह **कल्पन्ते...उपास्ते** । अस्मै अस्य **लोकाः**

---

पञ्चविधसामान्तर्गतैकैकविधां परमुपासीतेति । एतत्सूचनार्थैव सप्तमी । एवमुपरि सर्वत्र, 'वाचि सप्तविधं साम' इति वाक्यं यावत् । यत्र तु विशेषे विशेषदृष्टिवत् सामान्ये सामान्यदृष्टिरपि विधित्सिता, तत्र सप्तमीं त्यजति श्रुतिः । यथा तदनन्तरमेव, 'अथ खल्वमुमादित्यं सप्तविधं सामोपासीत' इति । तत्र प्रथमोदितादिविशेषदृष्टिवत् आदित्यत्वाकारेण तद्दृष्टेः सामत्वेन साम्नि विवक्षेति। एवं लोकादिषु कतिपयलोकादिमात्रदृष्टिरेवोच्यत इति ज्ञापनार्थश्च सप्तमी । अस्तु वा सप्तम्याः पञ्चविधमित्यत्रान्वयः पञ्चविधं साम लोकगतपञ्चविधायुक्ततयोपासीत । एतद्विधासु तद्विधात्वारोपे तद्विधायुक्तत्वमेतस्य साम्नो भवतीति ।

ऊर्ध्वेषु, आवृत्तेषु इत्युभयत्र लोकेषु पञ्चविधं सामोपासीतेत्यनुकृष्यते । आवृत्तत्वं = यथागतमागतत्वम् ।

लोकेषु पञ्चविधँ सामोपास्ते ॥ ३ ॥

इति द्वितीयाध्याये द्वितीयः खण्डः

द्वितीये तृतीयः खण्डः

वृष्टौ पञ्चविधँ सामोपासीत—पुरोवातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति

---

**कल्पन्ते** । उपासकभोगनिष्पादनसमर्था भवन्तीत्यर्थः । २-२

**वृष्टौ....उपासीत** । पूर्ववदेव अत्र पञ्चविधे साम्नि वृष्टिदृष्टिः कर्तव्येत्यर्थः । **पुरोवातः....उद्गृह्णाति तन्निधनम्** । **उद्ग्रहणं** जलस्योद्ग्रहणं वर्षसमाप्तिः । शिष्टं स्पष्टम् । **वर्षति हास्मै** । **इच्छत**

---

पुरोवातादीनां क्रमभावित्वात् हिङ्कारादिषु क्रमेण तद्दृष्टिः । एवं पूर्वोत्तरपर्यायेष्वपि यथार्हं भाव्यम् । अधिकक्लेशेन तत्रतत्र तत्तद्दृष्टौ नियामकस्य लौकिकस्यान्वेषणमनावश्यकम् । अव्यवस्थितत्वाच्च । विद्योतत इति । घनीभूतात् मेघात् वर्षे भूरिनिवृत्ते वायुना वेगेन मिथःसंघर्षं प्रापितयोर्मेघयोर्विद्युत्स्तयित्नुसमुद्भव इति वर्षानन्तरं तत्कथनम् । एवं प्रतिहरणमभिमुख्येन हरणम्—एको मेघो मेघान्तराभिमुख्येन ह्रियते । स प्रतिहन्यते, तदा विद्युदादि । अतः प्रतिहारो विद्युदादिरिति । इच्छत इति शेष इति । ननु सर्वत्र फलं तत्कामनयाऽनुष्ठान एवेति किमर्थमिहैवं शेषपूरणम् । न च, उपासनात् पूर्वं फलकामनापूर्वकसंकल्पाभावेऽपि एतदुपासको यदा कदापीच्छति चेत्—तदापि वर्षतीत्यत्र किञ्चिन्मानमस्ति । अत एव वर्षोत्पादनशक्तिसंपत्तिरेव एतद्विद्याफलमित्यत्र मानाभावात् शेषपूरणमयुक्तमिति चेत्—उच्यते । 'वर्षति हास्मै, य एतदेवम्' इत्येतावति अनुपरम्य, 'वर्षयति ह' इत्यधिकवचनात्, पश्चात् इच्छन्नपि जनयतीति स्वीकार्यम् । तत्र 'वर्षयति च' इति चकाराश्रवणात् वर्षति

तन्निधनम् ॥ १ ॥ वर्षति हास्मै, वर्षयति ह, य एतदेवं विद्वान् वृष्टौ पञ्चविधँ सामोपास्ते । इति द्वितीयाध्याये तृतीयः खण्डः ॥

द्वितीये चतुर्थः खण्डः

सर्वास्वप्सु पञ्चविधँ सामोपासीत—मेघो यत् संप्लवते स हिङ्कारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥१॥ न हाप्सु प्रैति। अप्सुमान्

---

इति शेषः । अस्येच्छायां सत्यां वर्षतीति यावत् । **वर्षयति... उपास्ते** । अद्यापि य एवमुपास्ते, स इच्छायां सत्यां [यजमानाय] **वर्षयति** वर्षं कारयतीत्यर्थः । २-३

**सर्वासु...उपासीत** । पूर्ववदर्थः । **मेघो....हिङ्कारः** । **संप्लवनं** संचारः । **याः प्राच्यः** [**स्यन्दन्ते स उद्गीथः**। स्यन्दन्ते] । आप इति शेषः । [**याः प्रतीच्यः स प्रतिहारः** । प्रतीच्यः स्यन्दन्ते । आप इति शेषः । शिष्टं स्पष्टम् । **न हाप्सु प्रैति** ।

---

हास्मै इत्यस्य विवरणरूपमेव वर्षयति हेति । यथा उपरि, 'एकविंशत्या आदित्यम्' इत्यस्यैव विवरणम् 'आप्नोति हादित्यस्य' इति शाङ्करोक्तम्; तद्वदित्याशयः । शाङ्करे अत्र, 'इच्छात' इति पूरितम् । अत्र इच्छत इत्येव पाठात् चतुर्थ्यन्तमिदम् ।

सर्वास्विति । पूर्वोक्तवृष्टितदन्योभयरूपास्वित्यर्थः । प्रतीच्यो नद्यो नर्मदाद्याः प्रतिहारः प्रतिशब्दवत्पदबोध्यत्वसामान्यात् । एवञ्च प्राच्यो गङ्गाद्याः उद्गीथः । आसामुद्गीथवत् प्रकृष्टत्वाच्च । एवं वर्षर्तुपर्यन्तं प्रतीचीतो वर्षवातप्रसरात् प्राच्यो नद्यः पूर्वं स्यन्दन्ते । अथ शीतकाले प्राचीतो वातागम इति तदातनवर्षात् प्रतीच्यः इति क्रमोऽप्यस्ति ।

भवति, य एतदेवं विद्वान् सर्वास्वप्सु पञ्चविधँ सामोपास्ते ॥ २ ॥

इति द्वितीयाध्याये चतुर्थः खण्डः

द्वितीये पञ्चमः खण्डः

ऋतुषु पञ्चविधँ सामोपासीत—वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् ॥ १ ॥

कल्पन्ते हास्मा ऋतवः; ऋतुमान् भवति, य एतदेवं विद्वान् ऋतुषु पञ्चविधँ सामोपास्ते ॥२॥ इति द्वितीयाध्याये पञ्चमः खण्डः॥

द्वितीये षष्ठः खण्डः

पशुषु पञ्चविधँ सामोपासीत—अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम् ॥ १ ॥ भवन्ति हास्य

---

**न प्रैति**=न म्रियत इत्यर्थः । **अप्सुमान् भवति** । [प्रभूतोदकसंपन्नो भवतीत्यर्थः] 'अपोयोनियन्मतु(मये)षु' इति अलुक् । शिष्टं स्पष्टम् । २-४

**ऋतुषु....** । स्पष्टम् । **कल्पन्ते...** । उपासकस्य भोग्यनिष्पादनसमर्था भवन्तीत्यर्थः। **ऋतुमान् भवति** । वसन्तादि-ऋतुफलभोगशाली भवतीत्यर्थः । शिष्टं स्पष्टम् । २-५.

**पशुषु...**। स्पष्टम् । [**भवन्ति हास्य पशवः** । अस्योपासकस्य भागसंपादनक्षमा भवन्तीत्यर्थः।] **पशुमान् भवति** । प्रभूतपशुमान्

---

हेमन्त इति हेमन्तशिशिरयोरेकीकरणम् । अस्तु वा हेमन्तमात्रम् । ऋतुमान् भवति । अतिशायने मतुप् । एतदुपासकविषये ऋतुफलस्य प्रतिबन्धो न्यूनता वा न भवति; किन्तु अतिशय इति ।

अव्यादिपशूनामुपर्युपरि कथनं तेषामुपर्युपरि स्थितत्वात् उत्कृष्टत्वात् । अजापेक्षया अवीनामुत्कर्षः कम्बलाद्युपयोग्यूर्णाशालितयाऽतिशयात् । 'अपशवो वा अन्ये गो अश्वेभ्यः' इति तदपेक्षयोत्तरत्र प्राशस्त्यम् । तत्राश्वस्य बलवेगादिकृतोऽधिक उपयोगः ।

द्वितीये अष्टमः खण्डः अथ सप्तविधस्य—

वाचि सप्तविधँ सामोपासीत—यत् किञ्च वाचो हि(हु)मिति स हिङ्कारो यत् प्रेति स प्रस्तावो यदेति स आदिः ॥ १ ॥ यदुदिति स उद्गीथो यत् प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम् ॥ २ ॥

---

**अथ सप्तविधस्य** । सप्तविधस्य उपासनं प्रस्तूयत इत्यर्थः ।

**वाचि**— हिङ्कारप्रस्तावोङ्कारोद्गीथप्रतिहारोपद्रवनिधनाख्यसप्त-विधायुक्ते साम्नि वक्ष्यमाणप्रकारेण **वाक्छ**ब्दितशब्ददृष्टिः कर्तव्येत्यर्थः । **यत्किञ्च....हिङ्कारः** । [लोके] **वाचः** शब्दस्य अवयवभूतो हिमिति यः शब्दः, स हिङ्कारः । हिङ्कारस्य **हिं**शब्दवत्त्वसादृश्यात् । ततश्च हिङ्कारे, लोके **हिं**शब्दा यावन्तः तद्बुद्धिः कर्तव्येत्यर्थः । एवमुत्तरत्रापि । **यत् प्रेति स प्रस्तावः** । प्रस्तावे सर्वप्रशब्दत्वबुद्धिः कर्तव्या । **यदेति स आदिः** । उद्गीथस्य(थेऽपि) आद्यवयवभूते ओङ्कारे '**आ**' (अ) इति शब्दबुद्धिः कर्तव्येत्यर्थः। **यदुदिति...निधनम्** । स्पष्टम् ।

---

(१-२ ; १-१३.) वाग्दोहाद्यर्थमुपासनद्वयं प्रागुक्तम् । पुनरत्रा-प्युपासनान्तरं तदर्थमुच्यते । 'युवा स्यात् साधु युवाध्यायकः, आशिष्ठो दृढिष्ठो बलिष्ठः' इतीदमेव हि मुख्यं युक्तमपेक्षितुम् ।

पूर्वं पञ्चधा विभक्ते साम्नि उद्गीथभक्तौ निधनभक्तौ च अवान्तरांशद्वयकरणेन सप्तविधत्वम् ।

> हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनतः साम ।
> पञ्चविधं सप्तविधे तृतीय आदिर्ह्युपद्रव उपान्त्यः ॥

उद्गीथस्य नियमेन ओङ्कारादित्वात् आदिरिति ओङ्कार उच्यते । तस्य सर्वादित्वाच्च शाङ्करोक्तात् । हिङ्कारादिपदवाच्याः याः

**दुग्धेऽस्मै वाग् दोहं यो वाचो दोहः, अन्नवानन्नादो भवति, य एतदेवं विद्वान् वाचि सप्तविधँ सामोपास्ते ॥ ३ ॥**

**इति द्वितीयाध्याये अष्टमः खण्डः**

**द्वितीये नवमः खण्डः**

**अथ खल्वमुमादित्यँ सप्तविधँ सामोपासीत—सर्वदा समः, तेन साम ; मां प्रति मां प्रतीति सर्वेण समः, तेन साम ॥ १ ॥**

---

[उपासनाफलमाह] **दुग्धे....भवति** । वाक्संबन्धी यो दोहोऽस्ति, वाक्साध्यं यत् फलम् (इत्यर्थः) तत् फलमुपास्यमाना वाक् **अस्मै** उपासकाय **दुग्धे** प्रयच्छति (इत्यर्थः) । २-८.

**अथ खलु...**। सप्तविधे साम्नि आदित्यबुद्धिः कर्तव्येत्यर्थः । सामादित्ययोरैक्याध्यासहेतुमाह **सर्वदा समः, तेन साम** । आदित्यस्य सर्वदा समपरिमाणत्वेन समत्वात् सामत्वमित्यर्थः । **मां...साम** । लोके हि, 'आदित्यो मां प्रति **समः** अभिमुखः, मां प्रति सम' इति

---

सामभक्तयः तत्र तद्वाचकशब्दाद्यभागजातीयसकलहिमाद्यक्षरदृष्टिर्विधीयते । शाङ्करे तु 'हिमिति' इत्यत्र 'हुमिति' पाठ आदृतः हकारसामान्यात् हिङ्कारे तद्दृष्टिरिति ।

पूर्वमुद्गीथे आदित्यदृष्टाविवात्र सामसामान्ये आदित्यदृष्टौ प्रयोजकमैक्यं दर्शयति सर्वदेति । सामशब्दो गीताविव समत्वेऽपि प्रसिद्धः । समत्वञ्चाऽऽदित्ये द्वेधाऽस्ति, सर्वदा समपरिमाणत्वात् सर्वं प्रति वक्ष्यमाणरीत्या समत्वाच्च । अतः सोऽपि सामेति । ननु हिङ्कारादिषु तत्तद्दृष्टौ ऐक्याध्यासहेतुर्न दर्शितः । अत्र परं कुतः? अत्र शाङ्करम्, 'सुगमत्वात् तत्र नोक्तम्; दुर्गमत्वादत्रोच्यत' इति । एवमेतत् । परन्तु यत्र श्रुतिरैक्याध्यासहेतुमप्युपासनोपयोगितया चिन्तनीयं मन्यते, तत्रावश्यमाह ; अन्यत्र पुनर्नाहेत्यपि भाव्यम् ।

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् ।**
**तस्य यत् पुरोदयात्, स हिङ्कारः । तदस्य पशवोऽन्वायत्ताः ।**
**तस्मात्ते हिङ्कुर्वन्ति ; हिङ्कारभाजिनो ह्येतस्य साम्नः ॥ २ ॥**
**अथ यत् प्रथमोदिते स प्रस्तावः। तदस्य मनुष्या अन्वायत्ताः। तस्मात् ते प्रस्तुतिकामाः प्रशँसाकामाः ; प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३**

---

प्रतीयते । पुरुषविशेषं प्रति आभिमुख्यस्य पुरुषविशेषं प्रति अनाभिमुख्यस्य चा(वाऽ)भावात् । अतः सर्वं प्रति समत्वादपि सामत्वमित्यर्थः।

**तस्मिन्...विद्यात्** । **तस्मिन्** आदित्ये । सर्वभूतोपजीव्यतया आदित्यमुपासीतेत्यर्थः । भूतानामुपजीवनप्रकारं कालभेदेन दर्शयति **तस्य....साम्नः** ।

**तस्य** आदित्यस्य उदयात् **पुरा** पूर्वं यद् रूपम्, स हिङ्कारः। हिङ्कारे तद्रूपदृष्टिः कर्तव्येत्यर्थः । एवमग्रेऽपि । अस्याऽऽदित्यस्य हिङ्काराख्यं तत् रूपं पशव **अन्वायत्ताः** उपजीवन्ति । **हि** यत एव ते **एतस्य साम्नः** सामरूपस्याऽऽदित्यस्य संबन्धिहिङ्कारलक्षणरूपोपजीविनः, **[तस्मात्ते हिङ्कुर्वन्ति]** अत एव पशवो **हिमि**ति शब्दं कुर्वन्तीत्यर्थः ।

**अथ यत् प्रथमोदिते....साम्नः** । **प्रथमोदिते** प्रथमोदय काले । प्रथमोदयकालावच्छिन्न आदित्यः प्रस्तावः । अस्य तथाविधं रूपं मनुष्या उपजीवन्ति । यतस्ते प्रस्तावाख्यप्रथमोदितादित्यरूपोप-

---

**सर्वदेति। न हि चन्द्रवदस्य वृद्धिह्रासाविति। मां प्रतीति। विषयोऽयम्, 'आदित्यवत् यौगपद्यम्' इति सूत्रे शाबरे च गृहीतः। प्रतिशब्द आभिमुख्यार्थः। मां प्रति = मदभिमुख। सर्वेण सम इति। गृह्यते इति शेषः। समः = अभिमुख्यात्मकैकरूपवान् सन् इत्यर्थः।**

अथ यत् सङ्गववेलायाँ स आदिः । तदस्य वयाँस्यन्वायत्तानि । तस्मात् तान्यन्तरिक्षेऽनारम्बणान्यादायात्मानं परिपतन्ति ; आदिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥

अथ यत् सम्प्रतिमध्यन्दिने स उद्गीथः । तदस्य देवा अन्वायत्ताः । तस्मात् ते सत्तमाः प्राजापत्यानाम् । उद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥

---

जीविनः, अत एव मनुष्याः प्रस्तुतिकामाः भवन्ति । **प्रस्तुतिकामा** इत्यस्य विवरणं **प्रशंसाकामा** इति ।

**अथ यत् संगव...साम्नः** । तानि वयांसि पक्षिणः **अनारम्बणानि** आलम्बना[अन्तर]शून्यान्येव आत्मानमेव आलम्बनत्वेनाऽऽदाय आकाशे परिपतन्ति । संगवकाल[आवच्छिन्न]ऽऽदित्यसंबन्ध्या**दि**शब्दितोङ्काररूपोपजीवित्वादेव आदाय परिपतनं पक्षिणामित्यर्थः । आदिशब्दादायशब्दयोराकारदकारवत्त्वसाम्यमिहाभिप्रेतम् ।

**अथ यत् संप्रति....साम्नः** । **संप्रति मध्यन्दिने** ऋजुमध्यन्दिने इत्यर्थः । **प्राजापत्यानां** देवासुराणां मध्ये ते सत्तमा इत्यर्थः । **उद्गीथसत्तम**शब्दयोः संयुक्ततकारश्रुतिमत्त्व(तित्व)साम्यात् उपजीव्योपजीवकभावोक्तिर्द्रष्टव्या ।

---

ऋजुमध्यन्दिन इति । प्रतिशब्दस्याभिमुख्यार्थकत्वात् संप्रतिशब्दस्य सम्यगभिमुखमित्यर्थे सति, आभिमुख्यावस्थाने आर्जवावस्थानव्यवहारात् संप्रति साक्षादभिमुखम्, न तु वक्रम्, किंतु ऋजु इति सिद्ध्यति । ऋजुमध्यन्दिनत्वं नाम भूरिप्रयोगानुसारेण मध्यन्दिनशब्दस्य ऋज्वर्थभूतसङ्गवापराह्णमध्यवर्तिकालविशेषत्वम् । तेनात्यन्तोच्चस्थसूर्यावच्छिन्नस्वल्पकालमात्ररूपमध्यन्दिनव्यावृत्तिः ।

अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात्, स प्रतिहारः। तदस्य गर्भा अन्वायत्ताः। तस्मात् ते प्रतिहृता नावपद्यन्ते ; प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥

अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात्, स उपद्रवः। तदस्याऽऽरण्या अन्वायत्ताः। तस्मात् ते पुरुषं दृष्ट्वा कक्षँ श्वभ्रमित्युपद्रवन्ति ; उपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥

अथ यत् प्रथमास्तमिते, तन्निधनम्। तदस्य पितरोऽन्वायत्ताः। तस्मात् तान् निदधति ; निधनभाजिनो ह्येतस्य साम्नः।

एवं खल्वमुमादित्यं सप्तविधँ सामोपास्ते ॥ ८ ॥

इति द्वितीयाध्याये नवमः खण्डः।

---

**अथ यदूर्ध्वं....साम्नः।** सवितुः प्रतिहार[ात्मक]भक्तिरूपोपजीवित्वादेव ऊर्ध्वं प्रतिहृताःसन्तो गर्भा **नावपद्यन्ते** द्वारे सत्यपि नाधःपतन्तीत्यर्थः।

**अथ यदूर्ध्वमपराह्णात्....साम्नः।** आदित्यसंबन्ध्युपद्रवभक्त्युपजीवित्वादेव पुरुषदर्शनभीतानां कक्ष[श्वभ्र]ादिषु उपद्रवणमित्यर्थः।

**अथ यत् प्रथमास्तमिते....साम्नः। तस्मात् तान् निदधति।** श्राद्धकर्तारो हि दर्भेषु पितॄन् निक्षि(व)पन्ति, तदर्थान् पिण्डान् वेत्यर्थः। **निधनभाजिनो हि....।** निधनोपजीवित्वात् पितॄणां दर्भेषु निधनं प्राप्तवन्तः। उक्तमुपासनमुपसंहरति **एवं....उपास्ते** ॥२-९

---

प्रतिहृता इति। हरणम्=अन्यत्र नयनम्। तत्प्रतिकूलक्रिया प्रतिहरणम् ; मोचनं प्रतिमोचनमितिवत्। कक्षम्=अरण्यम्। श्वभ्रं=गर्त गुहादि। एवं खल्विति। अत्र फलानिर्देशेऽपि औचित्यादस्याऽऽदित्योपासनस्य तदापत्तिः फलमिति शाङ्करे। सर्वभूतोपजीव्यादित्यदृष्टेर्विहितत्वात् सर्वभूतोपजीव्यत्वाद्यपि यथार्हं फलं स्यात्। अथवा उपरि आदित्योपासनांशे आदित्यप्राप्तिरूपफलकीर्तनादत्रापि तत्

द्वितीये दशमः खण्डः

अथ खल्वात्मसंमितमतिमृत्यु सप्तविधँ सामोपासीत—हिङ्कार

---

**अथ....उपासीत।** अथ अध्वस्तादित्यभावसप्तविधसामोपासनोपदेशानन्तरम्। अतिक्रान्तादित्यसप्तविधसामोपासनमुपदिश्यत इत्यर्थः। [अत्र] **मृत्युशब्देन** आदित्योऽभिधीयते। आदित्यस्य अहोरात्रकालावर्तनेन जगन्नाशहेतुत्वात् मृत्युत्वम्। आत्मनां(ना) त्वेषा[मेषा]मेव परस्परसंमितत्वकथनादात्मसंमितत्वम्। द्वाविंशत्यक्षरात्मकस्य सप्तविधसामभक्तिविशेषस्य एकविंशतिलक्षणादित्यसंख्यातिरेकित्वात् **अतिमृत्युत्वम्।**

---

लप्स्यत इति श्रुतिर्मन्यते। फलानुक्तौ कर्मवीर्यवत्तरत्वं फलमस्त्येवेति चाऽऽरम्भ एवाभ्यधायि।

अथातिशयितमुपासनमाह अथ खल्वात्मेति। अस्योपासनस्य आदित्यप्राप्तिपूर्वकविशोकनाकजयरूपस्य फलस्य वक्ष्यमाणत्वात् तस्य परमात्मोपासनलभ्यस्य प्रकृतसामोपासनलभ्यतया प्रकृते साम्नि तेनाऽऽकारेण अतिमृत्युत्वाकारेण च परमात्मसाम्यमात्मसंमितपदविवक्षितमिति सुवचम्। उक्तश्चायमप्यर्थः शाङ्करे, 'परमात्मतुल्यतया वा' इति। अथापि विस्पष्टमुपर्युपपाद्यमानसाम्यपरत्वसंभवे किमित्यर्थान्तरमिति एकमेवार्थमाह आत्मनामिति। आत्मानः स्वरूपभूताः पञ्चविधाः संमिताः समसंख्याकनामाक्षरवत्त्वकल्पनया समतया मिताः यस्य—तत् आत्मसंमितम्। नन्वतिमृत्युत्वोपासनमादित्यात् परस्य नाकस्य प्राप्तये उपयुज्यते। आत्मसंमितत्वोपासनं तु किमर्थमिति चेत्—आदित्यप्राप्तेरपि फलत्वात् तदर्थं तत्। तथाहि—एकविंशस्यादित्यस्य तदधिकसंख्यावत्सामचिन्तनाज्जयो भवतीति विमृश्य, साम्नि तत्संख्योपपादने प्रवृत्य, तत्र सप्तविधे साम्नि तत्संख्यायाः स्वरूपे उपपादनासंभवात् वाचकवर्णद्वारा तत्संपत्तिः प्रदिदर्शयिषिता। एवमतिमृत्युत्वं सिद्धम्। एवमपि आदित्यप्राप्तिरूपफलांशस्य सिद्ध्युपायं विमृशन्ती श्रुतिः

इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत् समम् ॥ १ ॥ आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत् समम् ॥ २ ॥ उद्गीथ इति त्र्यक्षरम् उपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवति, अक्षरमतिशिष्यते । त्र्यक्षरं तत् समम् ॥ ३ ॥

निधनमिति त्र्यक्षरं तत् सममेव भवति ।

---

आत्मसमितत्वातिमृत्युत्वप्रकारमेव दर्शयति **हिङ्कार इति.... समम्** । अतश्च [एतयोरुभयोः] समत्वादेव आवापोद्वापौ न कर्तव्यावित्यर्थः । **आदिरिति....तत इहैकं तत् समम्** । [ततः] चतुरक्षरात् एकमक्षरं गृहीत्वा द्व्यक्षरे निवेशिते समं भवतीत्यर्थः । **उद्गीथ इति...समम्** । उपद्रव इति चतुरक्षरे एकस्मिन् अक्षरे पृथक्कृते सति अवशिष्टं त्र्यक्षरं सममेव भवतीत्यर्थः । **निधनमिति त्र्यक्षरम्, तत् सममेव भवति** । [उपसंहरति] **तानि ह....अक्षराणि** । स्पष्टोऽर्थः ।

---

एकविंशतिसंख्यावत्त्वे साम्नः सिद्धे स भवतीति तुल्ययुक्त्या निर्धार्य, तस्यापि वाचकवर्णद्वारं विना संपादनायोगात् तद्द्वारैव तत्संपादनमारभ्य, सामविधानां सप्तत्वात् सप्तसु संभूय, एकविंशतिमत्त्वमपेक्षितमित्याकलय्य, तत्र प्रत्येकं त्र्यक्षरनामवत्त्वे तत् सुलभमिति मत्वा, तत्र सप्तसु चतुर्णां स्वत एव त्र्यक्षरनामकत्वात् भूयोऽनुसारादन्येषां त्रयाणामपि तथात्वलम्भनेन सर्वसमीकरणाय आवापोद्वापौ तत्र व्यदधात् । एवञ्च चतुष्कानुरोधेन त्रयस्यापि त्र्यक्षरसंपादनेनात्मनां संमितत्वात् एकविंशतिसंख्यावत्त्वस्यापेक्षितस्य सिद्धिरिति ।

तत् सममिति । तदुभयं सममित्यर्थः । अत्र सामनामाक्षराणां विकल्पिकरूपेण समतया सामत्वकल्पनम्, नामाक्षरेषु आदित्यदृष्ट्योपासनकथनञ्च शाङ्करारूढमनपेक्षितमित्युपेक्षितम् ।

**तानि ह वा एतानि द्वाविंशतिरक्षराणि ॥ ४ ॥ एकविंशँत्याऽऽदित्यमाप्नोति । एकविँशो वा इतोऽसावादित्यः । द्वाविँशेन परमादित्याज्जयति । तन्नाकं तद्विशोकम् ॥ ५ ॥ आप्नोतिहा(तीहा)-दित्यस्य जयम् ; परो हास्यादित्यजयाज्जयो भवति । य एतदेवं विद्वान्**

---

**एकविंशत्या....आदित्यः** । 'द्वादश मासाः पञ्चर्तवः त्रय इमे लोकाः असावादित्य एकविंशः' इति श्रुतेः यत आदित्यस्य एकविंशत्वम् , अतः सप्तविधभक्तिनामाक्षरगतैकविंशतिसंख्यया एकविंशति संख्याकमादित्यं प्राप्नोति । आदित्यसालोक्यं प्राप्नोतीत्यर्थः । **द्वाविंशेन...आदित्यस्य जयम्** । अवशिष्टेन द्वाविंशेनाक्षरेण आदित्यात् परं दुःखासंभिन्नं लोकं आदित्यजयञ्च प्राप्नोतीत्यर्थः । **परो ह....**। अस्य आदित्यजयात् सर्वोत्कर्षो भवतीत्यर्थः । २-१०

---

फलश्रुतौ एकविंशत्येत्यादिनोक्तमेव आप्नोति हेति पुनर्निष्कृष्योच्यत इति शाङ्करे । अत्र तु द्वाविंशेनेत्यस्यैव आप्नोति हेत्यत्राप्यन्वयोऽभिमतः । अयमाशयः—कथन्नु परमात्मोपासनलभ्या नाकप्राप्तिरनया दृष्ट्युपासनया भवतीति शङ्कापरिहारार्थम् आप्नोति हेत्यादि । यस्मादादित्यं प्राप्तो द्वाविंशबलेनादित्यं जेतुं=स्ववशे कर्तुमलमासीत् , अतस्तद्बलात् तत्रैव स्थाने सर्वविधोऽप्युत्कर्षो विशोकनाकप्राप्त्युपायानुष्ठानलक्षणोऽस्य निष्पद्यत इति न दोष इति ।

नाकम् । न विद्यते अकं=दुःखं यत्रेति नाकं नपुंसकम् । तत् पदं प्राप्तस्य, 'अहो बत बहलः कालो मुधैव मया प्रकृतिमण्डले व्ययितः' इति प्राचीनानुबन्धी शोकोऽपि नास्ति, गतस्याप्यंशस्य वर्तमानस्येव भगवदनुकूलतया स्वानुकूलतयैव भानादिति दर्शयितुं तद्विशोकमिति । आप्नोति हेत्यत्र आप्नोतीहेति पाठः तदनुसारेण इह लोक इत्यादिभाष्यपाठश्च काचित्को विमृश्यः । पूर्वपर्यायेषु

आत्मसंमितमतिमृत्यु सप्तविधँ सामोपास्ते सामोपास्ते ।

इति द्वितीयाध्याये दशमः खण्डः ।

द्वितीये एकादशः खण्डः

**मनो हिङ्कारो वाक् प्रस्तावः चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनम् । एतत् गायत्रं प्राणेषु प्रोतम् ॥ १ ॥**

**स, य एवमेतत् गायत्रं प्राणेषु प्रोतं वेद, प्राणी भवति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । महामनाः स्यात ; तत् व्रतम् ॥२॥ इति द्वितीयाध्याये एकादशः खण्डः।**

---

अथ गायत्ररथन्तरादिसामोपासनं प्रस्तूयते **मनो....निधनम् ।** गायत्राख्यस्य साम्नो हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्यपञ्चविधभक्तिषु मनोवाक्चक्षुश्श्रोत्रप्राणदृष्टिः कर्तव्येत्यर्थः । **एतद् गायत्रं प्राणेषु प्रोतम् ।** अनेनाऽऽकारेण गायत्राख्यस्य साम्नो मनआदिप्राणानाञ्चाध्यासाधिष्ठानभावलक्षणसंबन्धेन परस्परसंबन्ध(द्ध) इत्यर्थः ।

तत्फलमाह **स य....कीर्त्या । प्राणी भवति** अविकलेन्द्रियो भवतीत्यर्थः । **ज्योक्** उज्ज्वलः । व्याध्यादिभिरनुपहत इत्यर्थः ।

**महामनाः स्यात् ।** वदान्यमनस्को भवेदित्यर्थः । **तद् व्रतम् ।** महामनस्कत्वमेतदुपासनाङ्गमित्यर्थः । एवमग्रेऽपि नेयम् । शिष्टं स्पष्टम् ॥

---

सर्वत्र हशब्दघटितमेव फलश्रवणम् । सामोपास्त इति द्विरुक्तिः व्रतविशेषानङ्कसामसामान्योपासनसमाप्तिसूचनार्था । 'द्विरभ्यासः साप्तविध्यसमाप्त्यर्थः' इति तु शाङ्करे ।

अथ कतिपयसामविशेषपाञ्चविध्यविषयकदृष्ट्युपासनानि प्रतिनियतव्रतविशेषविशिष्टानि चोद्यन्ते मन इत्यादिना । अत्रापि सामसामान्यपाञ्चविध्य इव प्राणपञ्चकं तदेवोक्तं द्रष्टव्यम । शाङ्करे अत्र परं, प्राणो मुख्यप्राण इत्युक्तम् । मन इव प्राणोऽपि अयमेव सः । प्राणमनसोः स्थानविनिमयस्तु विवक्षाभेदात् । प्रोतमित्यस्य

द्वितीये द्वादशः खण्डः

अभिमन्थति स हिङ्कारः, धूमो जायते स प्रस्तावः, ज्वलति स उद्गीथः, अङ्गारा भवन्ति स प्रतिहारः, उपशाम्यति तन्निधनँ सँशाम्यति तन्निधनम् । एतत् रथन्तरमग्नौ प्रोतम् ॥ १ ॥

स, य एतदेवं रथन्तरमग्नौ प्रोतं वेद, ब्रह्मवर्चस्य(स्व्य)न्नादो भवति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या ।

न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्; तत् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये द्वादशः खण्डः ।

द्वितीये त्रयोदशः खण्डः

उपमन्त्रयते स हिङ्कारः, ज्ञपयते स प्रस्तावः, स्त्रिया सह शेते स उद्गीथः, प्रतिस्त्रीं(स्त्रि) सह शेते स प्रतिहारः, कालं गच्छति तन्निधनम्, पारं गच्छति तन्निधनम् । एतद्वामदेव्यं मिथुने प्रोतम् ॥१

---

**अभिमन्थति....** । **उपशमः** सावशेषः शमः। निःशेषोपशमः **संशमः** । **एतद्रथन्तरं...व्रतम्** । अग्नेरभिमुखो **नाचामेत्** न भक्षयेत् । **न निष्ठीवेत्** श्लेष्मादिनिरसनञ्च न कुर्यादित्यर्थः ॥ २-१२.

**उपमन्त्रयते....** । **उपमन्त्रणं** संकेतकरणम् । **ज्ञपयते....** । **ज्ञपनं** तोषणम् । मारणतोषणनिशामनेषु मित्त्वात् ज्ञाधातोर्ह्रस्वः(त्वम्)। **स्त्रिया सह शेते....** । एकपर्यङ्कोपवेशनं सहशयनम् । **प्रतिस्त्रि सह....**। स्त्रिया आभिमुख्येन शयनमित्यर्थः। **कालं....पारं....तत्....**।

---

'मयि सर्वमिदं प्रोतम्' इत्यादाविव आश्रितमित्यर्थायोगादाह अनेनेति । तथाच प्रोतं निविष्टं, अन्तर्गतं, गुणीभूतम् । अध्यासस्थले अधिष्ठानापेक्षया अध्यासस्यैव कार्यक्षमतया प्राधान्यात् ।

स्त्रीं प्रति । अत्र प्रतिशब्दार्थ आभिमुख्यम् । कालं =क्रिया-कालम् । पारं =क्रियासमाप्तिम् ।

स, य एवमेतद् वामदेव्यं मिथुने प्रोतं वेद, मिथुनीभवति, मिथुनान्मिथुनात् प्रजायते, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या ।
न काञ्चन परिहरेत्, तत् व्रतम्॥२॥इति द्वितीयाध्याये त्रयोदशः खण्डः।

द्वितीये चतुर्दशः खण्डः

उद्यन् हिङ्कारः, उदितः प्रस्तावः, मध्यन्दिन उद्गीथः, अपराह्णः प्रतिहारः, अस्तं यन् निधनम् । एतद् बृहदादित्ये प्रोतम् ॥ १ ॥

स, य एवमेतद् बृहदादित्ये प्रोतं वेद; तेजस्व्यन्नादो भवति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या ।

तपन्तं न निन्देत्; तद् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये चतुर्दशः खण्डः ।

---

मैथुननिर्वृत्तिरित्यर्थः । **एतत् वामदेव्यम्...** । **मिथुनीभवति** सर्वदा स्त्रिया अवियुक्तो भवतीत्यर्थः । **मिथुनान्मिथुनात्प्रजायते** । अमोघरेता भवतीत्यर्थः । **न काञ्चन....**। **काञ्चन** । स्त्रियं प्रार्थयमानामिति शेषः । प्रार्थयमानसर्वयोषिद्गमनस्य वामदेव्योपासनाङ्गत्वेन विधानात् परदारगमनप्रतिषेध[क]वचनानि तदतिरिक्तविषयाणि द्रष्टव्यानि ॥

**उद्यन्...** । आदित्य इति शेषः । **मध्यन्दिन उद्गीथः** । मध्यन्दिनकालवच्छिन्न आदित्य उद्गीथ इत्यर्थः । **अपराह्णः प्रतिहारः** । अपराह्णकालावच्छिन्न आदित्यः प्रतिहार इत्यर्थः । **अस्तं यन्निधनम्** । **यन्** गच्छन्नित्यर्थः। **तपन्तं न निन्देत्** । तपन्तमादित्यं न निन्देदित्यर्थः ॥ २-१४

---

न परिहरेदिति पदस्वारस्यात् प्रार्थयमानामिति लभ्यते ।

द्वितीये पञ्चदशः खण्डः

अभ्राणि संप्लवन्ते स हिङ्कारः, मेघो जायते स प्रस्तावः, वर्षति स उद्गीथः, विद्योतते स्तनयति स प्रतिहारः, उद्गृह्णाति तन्निधनम् । एतत् वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥

स, य एवमेतत् वैरूपं पर्जन्ये प्रोतं वेद, विरूपाँश्च सुरूपाँश्च पशूनवरुन्धे, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या ॥ वर्षन्तं न निन्देत्; तत् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये पञ्चदशः खण्डः ।

द्वितीये षोडशः खण्डः

वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् । एतत् वैराजमृतुषु प्रोतम् ॥ १ ॥

स, य एवमेतत् वैराजमृतुषु प्रोतं वेद, विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । ऋतून् न निन्देत्; तत् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये षोडशः खण्डः ।

---

**अभ्राणि संप्लवन्ते** । **अभ्राणि** जलधारकत्वमात्रावस्थापन्नानि । **संप्लवः** सञ्चारः । **मेघो जायते** । **मेघः** सेचकत्वावस्थापन्नः । **उद्गृह्णाति** । **उद्ग्रहणं** वर्षसमाप्तिः । **एतत् वैरूपं....** । **वैरूपं** वैरूपाख्यं सामेत्यर्थः । **स य....रुन्धे** । **विरूपान्** विरुद्धनानारूपान् **सुरूपान्** शोभनरूपान् । **अवरुन्धे** प्राप्नोतीत्यर्थः ।

**वर्षन्तम्....** । वर्षन्तं पर्जन्यमित्यर्थः ॥ २-१५

**वसन्तः....** । **वैराजं** वैराजाख्यं सामेत्यर्थः ॥ २-१६

---

अभ्राणि । अब्भ्राणि, अपां भरणात् । यद्वा, 'न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः' (वि. पु. २-९.) इति दर्शिता व्युत्पत्तिः । मेघः । मिह सेचने ।

द्वितीये सप्तदशः खण्डः

पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनम्। एताः शक्कर्यो लोकेषु प्रोताः ॥ १ ॥

स, य एवमेताः शक्कर्यो लोकेषु प्रोता वेद, लोकी भवति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या ॥ लोकान् न निन्देत्; तत् व्रतम्।

इति द्वितीयाध्याये सप्तदशः खण्डः।

द्वितीये अष्टादशः खण्डः

अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम्। एता रेवत्यः पशुषु प्रोताः ॥ १ ॥

स, य एवमेता रेवत्यः पशुषु प्रोता वेद, पशुमान् भवति, सर्वमायुरेति ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या ॥ पशून् न निन्देत्; तत् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये अष्टादशः खण्डः।

द्वितीये एकोनविंशः खण्डः

लोम हिङ्कारः त्वक् प्रस्तावो माँसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनम्; एतत् यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥

स, य एवमेतत् यज्ञायज्ञीयमङ्गेषु प्रोतं वेद, अङ्गी भवति, नाङ्गेन विहूर्च्छति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति,

---

**पृथिवी....।** शक्कर्यः शक्कर्योरुयं सामेत्यर्थः। नित्यबहुवचनम्। [**लोकीभवति** उत्तमलोकप्राप्तो भवतीत्यर्थः। शिष्टं स्पष्टम्।]॥

**अजा....।** रेवत्य इत्यपि **शक्कर्य** इतिवत् नित्यबहुवचन सामविशेषनाम॥

**लोम....।** स्पष्टम्। **स य....।** **अङ्गीभवति** समग्राङ्गयुक्तो भवतीत्यर्थः। **नाङ्गेन विहूर्च्छति।** अङ्गेन हस्तपादादिना न विहू-

---

शक्कर्य इति द्वितीयपदे प्रथमा द्वितीयार्थे। एवं रेवत्य इत्यत्र।

महान् कीर्त्या ॥ संवत्सरं मज्ज्ञो [1]नाश्नीयात्; तत् व्रतम्; मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥ इति द्वितीयाध्याये एकोनविंशः खण्डः ।

द्वितीये विंशः खण्डः

अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनम्, एतत् राजनं देवतासु प्रोतम् ॥ १ ॥

स, य एवमेतत् राजनं देवतासु प्रोतं वेद, एतासामेव देवतानाँ सलोकताँ सार्ष्टिताँ सायुज्यं गच्छति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या ॥ ब्राह्मणान् न निन्देत्, तत् व्रतम् ॥ २ ॥ इति द्वितीयाध्याये विंशः खण्डः ।

द्वितीये एकविंशः खण्डः

त्रयी विद्या हिङ्कारस्त्रय इमे लोकास्स प्रस्तावोऽग्निर्वायुरादित्यस्स उद्गीथो नक्षत्राणि वयाँसि मरीचयस्स प्रतिहारः सर्पा

---

र्छति । कुटिलो न भवतीत्यर्थः । 'हुर्च्छा कौटिल्ये' इति हि धातुः । **संवत्सरं मज्ज्ञो नाश्नीयात् तद्व्रतम्....** । **मज्ज्ञः** मज्जाख्यमांसविशेषानित्यर्थः । **मज्ज्ञो नाश्नीयादिति वा** व्रतम् । सर्वदेति शेषः ॥

**अग्निः....** । स्पष्टम् । **राजनं** राजनाख्यं सामेत्यर्थः । **स य...** । **सार्ष्टिता** समानर्द्धित्वम् । **सायुज्यं** समानभोग्यत्वम् । **ब्राह्मणान्न निन्देत् तत् व्रतम्** । 'एते वै देवाः प्रत्यक्षं यत् ब्राह्मणाः' इति श्रुतेः ब्राह्मणनिन्दैव देवतानिन्देति भावः ॥ २-२०

**त्रयी....** । स्पष्टम् । अत्र सामनामविशेषानिर्देशात् **साम-**

---

एवं सामविशेषविषया दृष्टीर्विधाय पुनः सामसामान्यविषयकमेकमुत्कृष्टमन्यत्रप्रशंसितं व्रतविशेषाङ्कं दृष्ट्युपासनमन्ते विदधाति त्रयीति । अग्न्यादीनामिव, ऋगादिवेदानामपि अग्न्यादि-

1 मज्ञः = मत्तः, मज्ञु = मदकारि इति माध्वे ।

गन्धर्वाः पितरस्तन्निधनम् । एतत् साम सर्वस्मिन् प्रोतम् ॥ १ ॥

स य एवमेतत् साम सर्वस्मिन् प्रोतं वेद, सर्वं ह भवति ॥२॥

तदेष श्लोकः—यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति।

यस्तत् वेद स वेद सर्वं सर्वा दिशो बलिमस्मै हरन्ति ॥ ३ ॥

सर्वमस्मीत्युपासीत, तत् व्रतम् तत् व्रतम् ॥ ४ ॥

इति द्वितीयाध्याये एकविंशः खण्डः

---

शब्दः सामसामान्यपरः । **स....सर्वं ह भवति** । काम्यमान सर्वमाप्नोतीत्यर्थः । भूः प्राप्त्यर्थः । (व्याप्त्यर्थः)

**तदेष श्लोकः** । **तत्** उक्ते सर्वात्मकसामोपासने **एषः** वक्ष्यमाणो मन्त्रोऽप्यस्तीत्यर्थः । तमेवाह **यानि....त्रीणि** । 'त्रयी विद्या हिङ्कारः, त्रय इमे लोकाः' इत्यादिनोक्तानि' [त्रयी विद्या, लोकत्रयम् , अग्निवाय्वादित्याः, नक्षत्रवयोमरीचयः, सर्पगन्धर्वपितरश्चेत्येतानि] यानि त्रीणि त्रीणि हिङ्कारादिरूपेण पञ्चधा भवन्तीत्यर्थः । **तेभ्यो...स्ति** । अतः **परमुत्कृष्टमन्यच्छ्रेयः** किमपि नास्तीत्यर्थः। **यस्तत् वेद स वेद सर्वम्।** [ए]तदुपासकः सर्वज्ञो भवतीत्यर्थः । **सर्वा....हरन्ति** । सर्वदिग्वर्तिनोऽपि वशीकृता अस्मै उपासकायोपहारान् समर्पयन्तीत्यर्थः ।

**सर्वमस्मीत्युपासीत** । सामसामान्ये उक्तरीत्या सर्वत्वा(त्रा)(सर्वा)-

---

देवताऽऽविर्भावितत्तया पृथिव्यादिलोकैः संबन्धो बहुश्रुतिसिद्ध इति अत्र तद्घटनमुपपन्नम् । आप्नोतीति । 'सर्वं ह भवति' इत्यस्य सर्वाभेदपरत्वं बाधितम् । अतः, 'प्राणेषु प्रोतं वेद, प्राणी भवति' इत्यादाविव, 'सर्वी भवति' इत्यत्र तात्पर्यमित्याशयः। श्लोके, 'स वेद सर्वम्' इत्युक्तमपि उक्तकाम्यमानसर्वान्तर्गतमेव । पूर्वं निषेधव्रतान्युक्तानि ; अत्र विधिव्रतमुच्यते सर्वमस्मीति । सामसामान्ये

द्वितीये द्वाविंशः खण्डः

**विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्त-**

---

श्रयत्वेन स्वाभिन्नत्वेन चोपासना कर्तव्येत्यर्थः। **तत् व्रतम्** । तस्य तदेव व्रतम्; नान्यत् व्रतमस्तीत्यर्थः। द्विरुक्तिः सामोपासनसमाप्त्यर्था ॥२-२१

एवं सामोपासनं समाप्य गानविशेषान् उद्गातुरुपदिशति **विनर्दि....।** विशिष्टो **नर्दः** स्वरविशेषः ऋषभकूजितसमः । सोऽस्यास्तीति **विनर्दि । गानमिति** वाक्यशेषः । **साम्नः** सामसंबन्धि । **पशव्यं** पशुहितम् । "उगवादिभ्यो यत्" इति यत् । सामसंबन्धिविनर्दिगानं **वृणे** प्रार्थयेत । पुरुषव्यत्ययः छान्दसः । **अग्नेरुद्गीथोऽनिरुक्तः** । अग्निदेवत्यमुद्गानमस्पष्टं भवति । अस्पष्टो गानविशेषोऽग्निप्रीतिहेतुर्भवतीत्यर्थः । **प्रजापतेर्निरुक्तः** । निरुक्तः स्पष्टो गान-

---

इत्यादि । नन्वयमर्थ उदक्षरः स्वस्य सर्वाभिन्नत्वेनोपासनस्यैव विधानावगमात्—उच्यते—पूर्वं साम्नि सर्वमेदद्दृष्टेर्विहिततया एवमुपासकः सर्वमिति सर्वाभिन्नतया स्वोपास्यं सामैव गृह्णीयात् । तथाच तदभिन्नत्वेन 'अस्मि' इति स्वानुसंधाने कृते साम्नः सर्वाभिन्नत्वस्वाभिन्नत्वाभ्यामनुसंधानं कृतं भवतीति ।

एतावता सामोपासनविशेषाः प्रपञ्चिताः । अथास्मिन् द्वाविंशे खण्डे सामगानस्वरविशेषप्रीयमाणदेवताविशेषोपदेशेन तत्र हेयोपादेयविवेकम्, गानकाले प्रमादं विना ध्यातव्यान् अर्थान्, गेयवर्णविशेषसंबन्धिदेवताविशेषप्रदर्शनेन तत्तदनुकूलं तत्प्रयोगरीतिञ्च प्रतिपादयति । पशव्यम् । ऋषभस्य पशुत्वात् ऋषभकूजितसमस्य पशव्यता । अनिरुक्तः । किञ्चित्समत्वेनागृहीत इति शाङ्करे । 'उपहव्योऽनिरुक्तः' इत्यत्र (पू. मी. १०-३-१८) अस्पष्टमन्त्रगानयुक्तत्वात् उपहव्यस्यानिरुक्तत्वमुक्तम् । नन्वेकस्यानिरुक्तत्वे अन्यः सर्वो निरुक्तो

**स्सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य । तान् सर्वानेवोपसेवेत, वारुणं त्वेव वर्जयेत् ॥५॥**

---

विशेषः प्रजापतिदेवत्यः; प्रजापतिप्रीतिहेतुरित्यर्थः । **सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णम्** । स्पष्टम् । **बलवदिन्द्रस्य** । **बलवत्** बलवत्प्रयत्नोपेतमित्यर्थः । **क्रौञ्चं बृहस्पतेः** । क्रौञ्चपक्षिनादसमं बार्हस्पत्यं गानमित्यर्थः । **अपध्वान्तं वरुणस्य** । भिन्नकांस्यसमं वारुणगानमित्यर्थः । **तान्...**। अपध्वान्तगानव्यतिरिक्तान् सर्वान् उद्गीथान् उपसेवेतेत्यर्थः ।

---

भवेत् । एकस्य निरुक्तत्वे वा अन्यः सर्वोऽप्यनिरुक्तः । तत् कथं निरुक्तानिरुक्ततदन्यानेकगणनम् ॥ उच्यते । कश्चित् कात्स्न्येन निरुक्तः; कश्चिच्च कात्स्न्येनानिरुक्तः; अन्ये चांशतो निरुक्ता अनिरुक्ताश्चेति स्यादिति । अग्निदेवत्यमुद्गानमस्पष्टमिति अग्न्युद्गीथस्यानिरुक्तत्वं विशेषणमेवेष्टम् । शाङ्करे तु, 'प्रजापतेरनिरुक्तत्वात् अनिरुक्तो गानविशेषः प्रजापतेः' इत्युक्तम् । श्रुतिशैलीपर्यालोचनेऽपि श्लक्ष्णं बलवदिन्द्रस्येत्यारभ्य पूर्वं गानवाचिपदस्य, पश्चात् देवताशब्दस्य च प्रयोगात् पूर्वमपि तथैव युक्तम्; यथा अमृतत्वमित्याद्युत्तरवाक्येऽपि । तत्र श्लक्ष्णे बलवत्त्वविशेषणदानात्, श्लक्ष्णान्तरे मृदुत्वविशेषणदानञ्च समुचितम् । एवञ्च वायोः मृदुश्लक्ष्णः, सोमस्य निरुक्तः, प्रजापतेरनिरुक्त इति संपद्यते । तर्हि अग्नेः क इति चेत्—विनर्दि साम्न इत्युक्तो देवतासाकाङ्क्षो यः, स एव । एवञ्चाग्निपदात् पूर्वप्रयुक्तपदगम्य एव तदीय इत्यैकरूप्यम् । तत्र, 'विनर्दि गानं सामसंबन्धि पशव्यमग्निदेवत्यमुद्गानं अहं वृणे इति कश्चिन्मन्यत' इत्यध्याहारादिपूर्वकशाङ्करयोजनायाः क्लिष्टत्वेऽपि, 'विनर्दि साम्नो वृणे पशव्यम्' इत्याद्रियमाण उद्गीथः उच्चगानमग्नेरिति भवितुमर्हति ।

अमृतत्वं देवेभ्य आगायानीत्यागायेत्; स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः, स्वर्गं लोकं यजमानाय, अन्नमात्मन आगायानीति। एतानि मनसा ध्यायन् अप्रमत्तः स्तुवीत ॥ २ ॥

सर्वे स्वरा इन्द्रस्यात्मानः, सर्वे ऊष्माणः प्रजापतेरात्मानः, सर्वे स्पर्शा मृत्योरात्मानः। तं यदि स्वरेषूपालभेत, 'इन्द्रँ शरणं

---

**अमृतत्वं....आगायेत्**। अमृतत्वप्राप्तिम् **आगायानि** गानेन साधयानीति **आगायेत्** गानं कुर्यादित्यर्थः। यथाप्रार्थितं फलं भवतीति भावः। **स्वधां पितृभ्यः**। **आगायानीति** सर्वत्र संबन्धः। **आशां.... अन्नमात्मने**। आगायानीत्यागायेदित्यर्थः। **एतानि...स्तुवीत**। **एतानि** देवामृतत्वादीनि फलानि मनसा ध्यायन् स्वरादिष्वप्रमत्तः सन् स्तोत्रं कुर्यादित्यर्थः।

**सर्वे....आत्मानः**। अचः **स्वराः**। **आत्मानः** अवयवसदृशा इत्यर्थः। शषसहा **ऊष्माणः**। कादयो मावसानाः **स्पर्शाः**। **तं यदि स्वरेषूपालभेत**। [स्वरेषु=अज्लक्षणस्वरेषु] एवंविध(द)मुद्गातारं यदि कश्चिदागत्य, 'त्वया दुष्टः स्वरः प्रयुक्तः' इत्युपालम्भं कुर्यादित्यर्थः।

---

तदत्राऽऽदृता योजना विमृश्या—'उत्तरेषु उद्गीथेषु अग्न्यादिहितत्वस्यैवात्र विनर्दिनः पशुहितत्वस्योक्तत्वात् विनर्दिगानमग्नेर्न भवति। उद्गीथ इति च सर्वोद्गातृगानसाधारणम्। अतः अनिरुक्त एवाग्नेरित्याशयेन वा, अन्यथा वेति। सर्वानिति पुल्लिङ्गनिर्वाहाय उद्गीथानिति पूर्वोक्तपदेन पूरणम्।

आशाम्=आशाविषयम्। आगायानीति सर्वत्रेति। आगायानीति इति वक्ष्यमाणस्य सर्वत्रेत्यर्थः। एवं पूर्वोक्तस्य आगायेदित्यस्यापि संबन्धं दर्शयति आगायेदित्यर्थ इति।

प्रपन्नोऽभूवम्; स त्वा प्रतिवक्ष्यति' इत्येनं ब्रूयात् ॥ ३ ॥

अथ यद्येनमूष्मसूपालमेत, 'प्रजापतिँ शरणं प्रपन्नोऽभूवँ स त्वा प्रतिपेक्ष्यति' इत्येनं ब्रूयात्। अथ यद्येनँ स्पर्शेषूपालमेत, 'मृत्युँ प्रपन्नोऽभूवँ शरणं स त्वा प्रतिधक्ष्यति' इत्येनं ब्रूयात् ॥ ४ ॥

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः, 'इन्द्रे बलं दधानि' इति। सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृता(त्ताः) वक्तव्याः, 'प्रजापतेमात्मानं परिददानीति। सर्वे स्पर्शा लेशेनानभिनिहि-(भिह)ताः वक्तव्याः, 'मृत्योरात्मानं परिहराणि' इति ॥ ५ ॥

इति द्वितीयाध्याये द्वाविंशः खण्डः

---

**इन्द्रं...ब्रूयात्** । 'इन्द्रमहं शरण गतः । तस्मादिन्द्र एव तव प्रत्युत्तरं दास्यति' इति तदा तमाक्षेप्तारं प्रति ब्रूयादित्यर्थः । **अथ यदि....** । **स त्वा प्रतिपेक्ष्यति....** । **त्वा प्रति** त्वां प्रति **पेक्ष्यति** चूर्णयिष्यतीत्यर्थः । 'पिष्लृ संचूर्णने' इति हि धातुः । **धक्ष्यति** भस्मीकरिष्यतीत्यर्थः । 'दह भस्मीकरण' इति हि धातुः ।

**सर्वे...दधानीति** । घोषवत्तया बलवत्तयोच्चारणमिन्द्रस्य बलाधायकमित्यर्थः। **सर्वे ऊष्माणः अग्रस्ता अनिरस्ता विवृताः(त्ता)....**। **अग्रस्ताः** अन्तरप्रवेशिताः । **अनिरस्ताः** बहिरक्षिप्ताः । 'लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम्' इत्यमरः । **विवृताः** विवृतप्रयत्नोपेताः । **प्रजापतेरात्मानं परिददानीति** । ऊष्मणां प्रजापत्यात्मकत्वात्

---

स्वरा इति। स्वरोष्मादिशब्दाः ईदृशश्रुतिमूलमेव व्याकरणे गृह्यन्ते।

प्रतिपेक्ष्यति प्रतिधक्ष्यतीति प्रतिशब्दः प्रतिकारार्थः। उपालम्भप्रतिकारभूतं पेषणं दाहञ्च करिष्यतीति। प्रतिवक्ष्यतीत्यत्राप्येतदर्थ उचितः। वक्ष्यतीति च वहनं प्रापणं वा वचनमेव वाऽस्तु।

अनभिनिहिताः। अनभिनिक्षिप्ता इति शाङ्करम्। तेनानति-

द्वितीये त्रयोविंशः खण्डः

**त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसा-**

---

अग्रस्तत्वादियुक्तोष्मोच्चारणे प्रजापतेरात्मलाभो भवतीत्यर्थः । **सर्वे स्पर्शाः...** । **लेशेन** अल्पशः । **अनभिनिहिताः** अनभिक्षिप्ताः । अद्रुतोच्चारिता इति यावत् । **मृत्योरात्मानं परिहराणीति** । सर्वेषां स्पर्शानां मृत्य्वात्मकत्वात् । स्पर्शानां तेषां दोषेभ्यः परिहृत्योच्चारणे मृत्योरात्मैव दोषेभ्यः परिहृतो भवतीति भावः ॥ २-२२.

ओङ्कारेण ब्रह्मोपासनं विधातुं प्रस्तौति....**त्रयो धर्मस्कन्धाः** । **धर्मस्कन्धाः** धर्मसाधकमार्गाः । आश्रमरूपमार्गाः त्रय इत्यर्थः । **यज्ञो...प्रथमः।** **यज्ञाध्ययनदान**शब्दैः गृहस्थाश्रमः [प्रथम] उच्यते। **अध्ययन**शब्दो वेदाभ्यासपरः । **तप एव द्वितीयः** । **तपश्शब्देन** वैखानसपारिव्राज्ययोर्ग्रहणम् । उभयोस्तपःप्रधानत्वात् । **तपश्शब्दो** हि कायक्लेशे रूढः । स च द्वयोरपि समानः । ब्रह्मचारी आचार्यकुलवासी, **तृतीयोऽत्यन्त....सादयन्** अत्यन्तमाचार्यकुले नियमैः

---

**द्रुतोच्चारणं विवक्षितमित्यानन्दगिर्युक्तत्वात् तल्लाभौचित्याय नीत्युपसर्गं परित्यज्य अनभिक्षिप्ता इति व्याख्यातम् । लेशो=लाघवम् इति न्यायभाष्यम् । लेशेन वक्तव्या इत्यस्य विवरणम् अनभिनिक्षिप्ता इतीत्यङ्गीकारे ऊष्मोच्चारणकाले तत्स्थानोपमर्दं विना अनायासेन लाघवेन प्रयोगोऽभिमतः स्यात् ।**

**वेदाभ्यासः । अध्ययनं, धारणाध्ययनम् । ग्रहणाध्ययनस्य प्रागेव निर्वृत्तत्वादिति अभ्यासपदेनाऽऽवृत्तिपरेण तद्विवरणम् । ब्रह्मचारीत्यादि । यावज्जीवाचार्यकुलवासादिविशिष्टब्रह्मचर्यमिति**

**दयन्। सर्व एते पुण्यलोका भवन्ति; ब्रह्मसँस्थोऽमृतत्वमेति ॥ १ ॥**

---

देहं क्षपयन् तृतीय आश्रम इत्यर्थः। **सर्व एत...एति**। एवं त्रित्वेन संगृहीतानां चतुर्णामाश्रमाणां मध्ये यो **ब्रह्मसंस्थः** ब्रह्मनिष्ठः, स मुक्तिभाग् भवति; ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजो भवन्तीत्यर्थः। एवमेव हि, "अनुष्ठेयं बादरायणः साम्यश्रुतेः" इत्यत्र **भावितम्**। न चात्र **ब्रह्मसंस्थ**शब्दात् संन्यासाश्रमप्रतिपत्तिरिति शक्यं वक्तुम्; **ब्रह्मसंस्थ**शब्दस्य प्रोक्षणीन्यायेन योगेनैव वृत्त्युपपत्तौ संन्यासे रूढेरनभ्युपगन्तव्यत्वात्। योगमात्रस्य चाश्रमान्तरसाधारण्यात् न **ब्रह्मसंस्थ**शब्देन संन्यासाश्रमग्रहणे प्रमाणं पश्यामः। न च संपूर्वस्य तिष्ठतेः समाप्तिवाचकत्वात् अनन्यव्यापारत्वलक्षणाया ब्रह्मणि समाप्तेः

---

यावत्। उपक्रमस्थस्कन्धादिपदानां पुरुषपर्यन्तपरत्वस्यास्वरसत्वात्। कुलं गृहम्। वासीति ताच्छील्ये णिनिः। कारणान्तरप्रयुक्तवास-परिहाराय, आचार्याभावेऽपि तत्संततिपरिचर्याज्ञप्तये च तद्विवरण-मत्यन्तमित्यादि। अत्र प्रथमो द्वितीयस्तृतीय इति उक्तिक्रममनुरुध्य। न त्वाश्रमक्रमम्। पूर्वं गृहस्थकर्तव्ययज्ञान्तर्गतसामाश्रितोपासनाना-मेव प्रस्तुतत्वात् प्रथमं तदाश्रमकथनम्। ततस्तेनापि लभ्यस्य तदुत्तरस्य वानप्रस्थादेः; अथ शिष्टस्य। ननु उपकुर्वाणब्रह्मचर्यं कुतो नोक्तम्? यावज्जीवसंभाविताश्रममात्रकथनस्याभिमतत्वात्। अत्रेदं श्रुतिविवक्षितम्। उक्तनानोपासननिष्ठगृहस्थो वा तदुत्तरा-श्रमी वा नैष्ठिको वा यावज्जीवमेवं सन् पुण्यलोकमेव कमपि प्राप्नुयात्; नामृतत्वम्, यदि ब्रह्मसंस्थो न भवेदिति।

भावितमिति। तदिदं प्राचीनवृत्तिकारवर्णितमेव। शाङ्करे तु यत् एतद्दूषणेनार्थान्तरवर्णनम्। तत्र मुख्यांशं दूषयति न चेत्यादिना।

प्रजापतिर्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत् । तामभ्यतपत् । तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त, भूर्भुवस्सुवरिति । तान्यभ्यतपत् । तेभ्योऽभितप्तेभ्य ओङ्कारः संप्रास्रवत् । तत् यथा शङ्कुना सर्वाणि पर्णानि संतृण्णानि, एवमोङ्कारेण

---

संन्यासिष्ववाग्निहोत्रादिकर्मान्तरव्यग्राश्रमान्तरेष्वसंभवात् ब्रह्मसंस्थशब्देन परिव्राडेवोच्यत इति वाच्यम्; स्वाश्रमोचितधर्मव्यग्रतायाः संन्यासिष्वप्यविशिष्टत्वात् । तदतिरिक्तव्यापारराहित्यस्य सर्वाश्रमेष्वपि संभवात् । न (च) ब्रह्मसंस्थशब्देन चतुर्थाश्रमपरामर्शे(र्श) हेतुं पश्यामः ।

एवं ब्रह्मसंस्थोऽमृतत्वमेतीत्यमृतत्वसाधनं ब्रह्मोपासनमुक्त्वा तत् प्रणवाङ्गकमिति वक्तुं प्रणवं (प्र)स्तौति **प्रजापतिर्लोकानभ्यतपत् । अभ्यतपत्** सारनिष्कर्षाय लोकान् पर्यालोचयदित्यर्थः । [तप आलोचने ।] **तेभ्यो....प्रास्रवत्** । त्रयी विद्या **संप्रास्रवत्** सारत्वेन निष्पन्नाऽभवदित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । **तां** त्रयीविद्यामित्यर्थः । **तद्यथा....सर्वम्** । यथा सर्वाणि पत्रजातानि शङ्कुना पर्णनालेन **संतृण्णानि** व्याप्तानि भवन्ति, एवम्, 'ओङ्कारो वै सर्वा वाक्' इति श्रुतेः ओङ्कारेण सर्वा वाक् व्याप्ता । अत ओङ्कार एव

---

ननु तर्हि ब्रह्मसंस्थित्यै किमुपादेयम् । उच्यते, न किञ्चिदन्वेषणीयमस्ति । उक्तोपासनाश्रयतया प्रथमप्रस्तुतं ओमित्येतदक्षरमेवोपादेयं सर्वमित्याह प्रजापतिरिति । तेभ्योऽभितप्तेभ्यस्त्रयीति । एतल्लोकाधिष्ठानदेवताभ्योऽग्निवाय्वादित्येभ्य एतदाविर्भावः, 'अग्नेः ऋग्वेद' इत्यादौ, ४-१७. च श्रूयते । एवमत एव ऋगादेः पृथिव्यादिप्रापकत्वमपि । वाङ्मयमिति । ओङ्कारस्य परम्परया लोकसंप्रस्रुतत्वात् लोका अप्योङ्कार एव ।

सर्वा वाक् संतृण्णा। ओङ्कार एवेदँ सर्वम् ओङ्कार एवेदँ सर्वम्॥३॥

इति द्वितीयाध्याये त्रयोविंशः खण्डः

द्वितीये चतुर्विंशः खण्डः

ब्रह्मवादिनो वदन्ति— 'यत् वसूनां प्रातस्सवनँ रुद्राणां माध्यन्दिनँ सवनमादित्यानाञ्च विश्वेषाञ्च देवानां तृतीयसवनम्॥१॥ क्व तर्हि यजमानस्य लोक' इति।

स, यस्तन्न विद्यात्, कथं कुर्यात्? अथ विद्वान् कुर्यात्॥२॥

---

सर्वं वाङ्मयम्। अत ओङ्कारेण ब्रह्मोपासनं कर्तव्यमिति पर्यवसितोऽर्थः। द्विरुक्तिर्विद्यासमाप्त्यर्था॥ २-२३.

प्रसङ्गात् कर्माङ्गानि कानिचित् विधातुं प्रस्तौति **ब्रह्मवादिनो....लोक इति।** प्रातस्सवनमाध्यन्दिनसवनतृतीयसवनेश्वरैः वसुरुद्रादित्यविश्व(श्वे)देवैः पृथिव्यन्तरिक्षस्वर्लोकानां वशीकृततया अवशिष्टस्य लोकस्याभावात् यजमानस्य लोकः क्वास्तीति वेदितव्यमित्यर्थः।

**स यस्तन्न विद्यात् कथं कुर्यात्।** यस्य यजमानप्राप्यलोकस्थानज्ञानं नास्ति, सोऽज्ञः कथं कर्म कुर्यात्। **अथ विद्वान् कुर्यात्।** तस्मात् लोकस्वीकरणोपायभूतं वक्ष्यमाणं सामगान-होम-मन्त्रोत्थानलक्षणं ज्ञात्वैव कुर्यादित्यर्थः।

---

प्रसङ्गादिति। पुण्यलोकप्रसङ्गात् लोकत्रयाविर्भूतप्रणवप्रसङ्गाच्च लोकत्रयरूपयजमानफलोपस्थितेरिति भावः। तन्नविद्यादित्यत्र तमिति विभज्य लोकस्वीकारोपायमिति व्याख्यातं शाङ्करे। क्वेति जिज्ञासितस्थानपरत्वं युक्तमिति अत्राभिमतम्। तथाच तदिति च्छेदः। अथ विद्वानिति। सामगानं होमः मन्त्रपूर्वकमुत्थानमिति त्रयं वक्ष्यमाणं विदुषः स्थानवेदनमपि सम्यक् सिद्ध्यतीति भावः। वक्ष्यते च

पुरा प्रातरनुवाकस्योपाकरणात्, जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवँ सामाभिगायति (३)—[1] 'लोकद्वारमपावार्णू २ ३ ३ पश्येम त्वा वयँ रा ३ ३ ३ ३ ऽ ३ हुं ३ आ २ ३ ३ जा ३ यो ३ आ १ २ ४ ५' इति ॥४॥ अथ जुहोति, 'नमोऽग्नये पृथिवीक्षिते लोकक्षिते। लोकं मे यजमानाय विन्द। एष वै यजमानस्य लोकः। एतास्मि ॥ ५ ॥ अत्र यजमानः परस्तादायुषः। स्वाहा'। 'अपजहि

---

तदेवाह **पुरा प्रातः...।** **प्रातरनुवाकस्योपाकरणात्** **पुरा** प्रातरनुवाकारम्भात् प्राक् गार्हपत्यस्य **जघनेन** पश्चात् उदङ्मुख उपविश्य **वासवं** वसुदेवत्यं साम **सः** विद्वान् गायेदित्यर्थः। तदेव सामाह **लोकद्वारमपावृणु पश्येम त्वा वयं राज्यायेति।** हे अग्ने! पृथिवीलोकप्राप्तये द्वारमपावृणु। तेनापावृतेन द्वारेण त्वां **राज्याय** पृथिवी लोकप्राप्तिफलाय पश्येमेत्यर्थः। **अथ जुहोति।** **अथ** अनन्तरं अनेन [वक्ष्यमाणेन] मन्त्रेण जुहोतीत्यर्थः होममन्त्रमेवाह **नमोऽग्नये....।** **पृथिवीक्षिते** पृथिवीनिवासाय, **लोकक्षिते** लोकनिवासाय अग्नये नमः। **मे** मह्यं यजमानाय लोकं **विन्द** लम्भय(स्व)। एष **वै** मम यजमानस्य लोकः। **यजमानोऽहमत्र** अस्मिन् लोके **आयुषः परस्तात्** मरणादूर्ध्वम् **एतास्मि** आगन्तास्मि। **स्वाहेति** जुहोतीत्यर्थः। **अपजहि....उत्तिष्ठति।** एवं हुत्वा अनन्तरं **परिघं** लोकद्वारार्गलम् **अपजहि** अपनय **इति** एवं मन्त्रम् उक्त्वोत्तिष्ठतीत्यर्थः। **तस्मै...**

---

सवनं संप्रयच्छन्तीति स्थानमपि। प्रातरनुवाकः=तन्नामकं शस्त्रम्। अप्रतीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्। सामगाने मन्त्रानुपूर्व्यास्तिरोहितत्वात् आनुपूर्वी दर्शयति लोक...वृण...राज्यायेति।

1 एषां साम्नां स्वरनिवेशरीतिः प्रतिकोशं भिन्ना दृश्यते।

परिघम्' इत्युक्त्वोत्तिष्ठति । तस्मै वसवः प्रातस्सवनँ संप्रयच्छन्ति ॥

पुरा माध्यन्दिनस्य सवनस्योपाकरणात्, जघनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रं सामाभिगायति (७)— 'लोकद्वारमपावार्णू २ ३ ३ पश्येम त्वा वयं विरा ३ ३ ३ ३ हुं आ ३ ३ जा (ज्या) यो आ ३ ३ ३ ४ ५' इति ॥ ८ ॥ अथ जुहोति, 'नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते । लोकं मे यजमानाय विन्द । एष वै यजमानस्य लोकः । एतास्मि ॥ ९ ॥ अत्र यजमानः परस्तादायुषः । स्वाहा' । 'अपजहि परिघम्' इत्युक्त्वोत्तिष्ठति । तस्मै रुद्रा माध्यन्दिनँ सवनँ संप्रयच्छन्ति ॥ १० ॥

पुरा तृतीयसवनस्योपाकरणात्, जघनेनाऽऽहवनीयस्योदङ्मुख उपविश्य स आदित्यँ स वैश्वदेवँ सामाभिगायति (११)— 'लोकद्वारमपावार्णू २ ३ ३ पश्येम त्वा वयँ स्वरा ३ ३ ३ ३ हुं आ २ ३ ३

---

यच्छन्ति । एवं सामगान–होम–मन्त्रोत्थानकृते यजमानाय वसवः प्रातःसवनसंबन्धिलोकं पृथिवीलोकं प्रयच्छन्तीत्यर्थः। एवमग्रेऽपि द्रष्टव्यम्।

आग्नीध्रीयस्य अग्नेरित्यर्थः। रौद्रं रुद्रदेवताकमित्यर्थः। वैराज्याय अन्तरिक्षलोकफलप्राप्तय इत्यर्थः । अथ... । अथ 'नमो वायवे...' इति मन्त्रेण जुहोतीत्यर्थः । अन्तरिक्षक्षिते अन्तरिक्षनिवासायेत्यादि पूर्ववदुन्नेयम् । माध्यन्दिनं सवनं माध्यन्दिनसवनसंबन्धिलोकम् ।

आहवनीयस्य अग्नेरित्यर्थः । आदित्यमादित्यदेवत्यम् । वैश्वदेवं विश्वदेवदेवत्यमित्यर्थः । तत्रादित्यं सामाह लोकद्वार.... ।

---

उत्तरसाममन्त्रत्रये वैराज्याय, स्वाराज्याय, साम्राज्यायेति भेदः । एतास्मीत्यारभ्य आयुष इत्यन्तमेकं वाक्यम् । अत्रेति आयुष इत्यनेनान्वेति । यद्वा अत्र यजमानः अत्र यागं कुर्वन्नहमित्यर्थः । आग्नीध्रीयोऽग्निः= दक्षिणाग्निः ।

जा ३ यो ३ आ ३ ४ ५' इत्यादित्यम् ॥ १२ ॥ अथ वैश्वदेवम्— 'लोकद्वारमपावार्णू २ ३ ३ पश्येम त्वा वयँ साम्रा ३ ३ ३ ३ हु ३ म् आ २ ३ ३ जा (ज्या) यो ३ आ ३ १ १ १' इति ॥ १३ ॥ अथ जुहोति, 'नम आदित्येभ्यश्च विश्वेभ्यो देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यः। लोकं मे यजमानाय विन्दत ॥ १४ ॥ एष वै यजमानस्य लोकः। एतास्म्यत्र यजमानः परस्तादायुषः। स्वाहा'। 'अपहत परिघम्' इत्युक्त्वोत्तिष्ठति ॥ १५ ॥ तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनँ संप्रयच्छन्ति ॥

एष ह वै यज्ञस्य मात्रां वेद, य एवं वेद य एवं वेद ॥ १६ ॥

इति द्वितीयाध्याये चतुर्विंशः खण्डः

इति छान्दोग्योपनिषदि द्वितीयोऽध्यायः (द्वितीयः प्रपाठकः)

---

**स्वाराज्याय** स्वर्गलोकायेत्यर्थः। **इत्यादित्यम्**। साम उक्तमिति शेषः। **अथ वैश्वदेवम्**। सामोच्यत इति शेषः। **साम्राज्याय** उत्तमस्वर्गफलायेत्यर्थः। **अथ जुहोति....**। सर्वं पूर्ववत् द्रष्टव्यम्। आदित्यानां विश्वदेवानाञ्च बहुत्वात् **विन्दत अपहत** इति बहुवचनम्। **तृतीयसवनं** तत्फलं स्वर्गमित्यर्थः।

**एष ह वै यज्ञस्य मात्रां वेद**। मात्रां परिमाणं याथात्म्यमित्यर्थः। **य एवं वेद**। य एवं कर्तुं वेदेत्यर्थः। द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ २-२४.

इति छान्दोग्योपनिषत्प्रकाशिकायां **द्वितीयोऽध्यायः** (द्वितीयः प्रपाठकः)

---

एव वेदेति नोपासनविशेषविधिरिति ज्ञापयितुं कर्तुं वेदेति व्याख्यानम् ॥

तृतीयोऽध्यायः

वसुरुद्रादित्यानुग्रहलभ्यलोकत्रयवर्णनं प्रस्तुत्य वसुरुद्रादित्यादिरूपतापत्तिपूर्वकानुभाव्यफलार्था मुक्तिविद्या समनन्तरमुपदि-

अथ तृतीयोऽध्यायः ॥ प्रथमः खण्डः ।

असौ वा आदित्यो देवमधु । तस्य द्यौरेव तिरश्चीनवँशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥

तस्य ये प्राञ्चो रश्मयः, ता एवास्य प्राच्यो मधुनाड्यः, ऋच

---

अथ तृतीयोऽध्यायः ॥

मधुविद्या प्रस्तूयते **असौ वा आदित्यो देवमधु** । असावादित्यो वस्वादीनां देवानामामोद(नां मोद)हेतुत्वात् मधु । अत्र मधुत्वदृष्टिः कर्तव्येत्यर्थः । मधुत्वोपयोगीनि संपादयति **तस्य द्यौरेव तिरश्चीनवंशः** । **तस्य** आदित्याख्यमधुनो द्युलोक एव आधारभूतः तिर्यक्प्रस्तारितो (प्रसारितोमलो)वंश इत्यर्थः । **अन्तरिक्षमपूपः** अन्तरिक्षं मध्वपूपः। मध्वाश्रयोऽपूपो हि तिरश्चीनवंशलग्नस्सन् लम्बते । एवमन्तरिक्षमपि द्युलोकलग्नं लम्बते इव भातीत्यतो मध्वपूपत्वम् । **मरीचयः पुत्राः**। मरीचिशब्देन मरीचिस्थाः सवित्राकृष्टाः भौम्य आप उच्यन्ते । ताः पुत्रा इव पुत्राः भ्रमरबीजभूताः मध्वपूपच्छिद्रस्थाः सूक्ष्म(ाः)कीटा इत्यर्थः ।

**तस्य**....। **तस्य** आदित्यस्य ये प्राञ्चो रश्मयः, ता एव प्राग्दिगवच्छिन्ना **मधुनाड्यः** मधुच्छिद्राणि । **ऋच एव मधुकृतः** ।

---

श्यते । आदित्यस्य मधुत्वं रसाश्रयत्वात् । मधुरसाश्च पुष्पेभ्यो भ्रमरैः समाह्रियन्ते । तथेह समाहारो वक्ष्यते । तत्र, 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते' इत्युक्तरीत्या अनुष्ठाने सत्येव आदित्ये रसप्राप्तिः, रसवद्भ्यः कर्मभ्य एव रसानामादेयत्वात्, न तु रसप्रतिपादकत्वेऽपि रससंबन्धरहितात् वेदमात्रादिति ऋग्वेदा-

एव मधुकृतः; ऋग्वेद एव पुष्पम्; ता अमृता आपः ॥ २ ॥

ऋङ्मन्त्रा एव भ्रमराः। **ऋग्वेद एव पुष्पम्** ऋग्वेदविहितं कर्म पुष्पस्थानीयम्। [अस्मिन् पुष्पस्थानीये ऋग्वेदविहिते कर्मणि मधुकरस्थानीयैः ऋङ्मन्त्रैराकृष्य मधुत्वेन निर्वर्त्यमानो रसः क इत्यत्राह] **ता अमृता आपः**। **ताः** कर्मणि प्रयुक्तसोमाज्यपयोरूपा आपः

---

दीनां पुष्पत्वोक्तिः तत्तद्वेदविहितकर्मणां पुष्पत्वाभिप्राया। व्यक्तमिदं श्रीभाष्ये, 'मधुविद्यायामृग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्य' इति। ऋगादिमन्त्रान् विहाय कर्मानुष्ठाने च न रसस्यादित्यप्राप्तिः। अत एव, 'प्रास्ताहुतिः सम्यक्' इति सम्यक्पदप्रयोगः। अतो मन्त्रा भ्रमराः। तत्र ऋग्यजुस्साममन्त्रभ्रमरचूष्यमाणानि पुष्पाणि ऋग्यजुस्सामवेदाः। अथर्वाङ्गिरोदृष्टमन्त्ररूपभ्रमरविषये तु इतिहासपुराणं पुष्पमुक्तम्। तच्च प्रसिद्धेतिहासपुराणवत् इतिहासादिप्रधानकाथर्ववेदब्राह्मणमपीति ग्राह्यम्। पञ्चमास्तु गुह्यादेशाः। तत्रोक्तं ब्रह्माख्यं पुष्पञ्च किमिति विचारे ब्रह्म प्रणव इति शाङ्करम्। तत्र प्रणवपूर्वककर्मनिष्पाद्याः पूर्वोक्तरसा अपीति विशेषाभावात् ब्रह्मशब्देन, परेण ब्रह्मणा व्यूहविभवाद्यवतारेषु स्वप्राद्यवस्थायाञ्च विशेषेणोपदिष्टपाञ्चरात्रादि-तन्मूलभूतैकायनाद्यनन्तवेदात्मकशब्दब्रह्मग्रहणं युक्तमिति तदुपदिष्टानि तदाराधनकर्माणि पुष्पाणि। तत्रोपयुज्यमाना विशेषमन्त्रा वैदिकाः तान्त्रिकाश्च गुह्यादेशा इति युक्तम्। अस्तु वा ऋग्वेदाद्यन्तर्गतब्रह्मपरोपनिषद्भागानामपि ब्रह्मपदविवक्षितत्वम्। एवम्भूतपञ्चविधामृतरसाश्रयमधु असावादित्य इति भावयित्वा तत्रैकैकामृतं वस्वादितत्तदेकैकदेवगणभुज्यमानं भावयेत्। तत्रैकैकामृतविषयेऽपि, 'य एवमेतदमृतं वेद' इति पृथक् पृथक् विदिविधिश्रवणात् वस्वाद्येकैकदेवगणभुज्यमानैकैकामृतमात्रोपासनमेकैकफलो-

ता वा एता ऋच एतमृग्वेदमभ्यतपन् ; तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ ३ ॥

तत् व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतत् , यदेतदा-

अग्नौ प्रक्षिप्ताः पाकाभिनिर्वृत्ता अमृता अत्यन्तरसवत्यो भवन्तीत्यर्थः ।

**ता वा एता ऋच एतमृग्वेदमभ्यतपन्** । ता वा एता ऋचः ऋङ्मन्त्राः भ्रमरस्थानीयाः, पुष्पेभ्यो रसमाददाना भ्रमरा इव, एतदृग्वेदविहितं कर्म पुष्पस्थानीयम**भ्यतपन्** अभितापं कृतवत्य(न्त) इव। **तस्य....अजायत** । यशस्तेज इन्द्रियवीर्यान्नाद्यलक्षणो रसोऽजायतेत्यर्थः। ऋग्भिर्मन्त्रैः स्तोत्रशस्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म मधुनिर्वर्तकं सोमाज्यादिरसं मुञ्चति, पुष्पमिव भ्रमरैराचू चो)(चरि)ष्यमाणम् । तेन च यशस्तेजइन्द्रियपाटववीर्यादिलक्षणं फलमुत्पन्नं भवतीत्यर्थः ।

**तद् व्यक्षरत्** । तत् यश आदिलक्षणं फल **व्यक्षरत्** विशेषेणागमत् । **तदादित्यमभितोऽश्रयत्** । गत्वा चादित्यमभितः आश्रित-

---

द्देशेन पृथक् पृथक् कर्तुं शक्यमिति वा मन्यताम् ; सर्वोपासनसमाहारमेव स्वीकृत्य प्रत्येकविदिश्रवणं तत्क्रतुन्यायेन तस्य तस्य तत्तत् फलमिति ज्ञापनार्थमिति वा निरुह्यताम् । अवशिष्टमुपरिष्टात् ।

मरीचयः । जलाकर्षणकारित्वावस्थाभाजः किरणाः मरीचिपदव्यपदेश्याः । अमृताः । यज्ञोपयुक्तं हविरप्यमृतपदार्थः ।

अभ्यतपन् । भ्रमरैराचूषणतापेन हि पुष्पं पारिपाच्य रसो निष्कास्यते । अत्राप्यग्नौ करणादितस्तापः । पुष्पगतद्रवांशस्य रसस्यापत्तिरिव कर्मोपयुक्तहविर्भागानां यशआदिरूपेण विवर्तः। क्षरणं = स्यन्दनम् । अभित इति । अस्य सर्वत इत्यर्थे सत्यपि प्राग्रश्मिरूपमधुनाडीनिष्पन्नस्य मधुनः प्राग्भागवर्तित्वं युक्तम् , एवं मध्वन्तरस्य

दित्यस्य रोहितँ रूपम् ॥ ४ ॥ इति तृतीयाध्याये प्रथमः खण्डः ।

तृतीये द्वितीयः खण्डः

अथ येऽस्य दक्षिणा रश्मयः, ता एवास्य दक्षिणा मधुनाड्यः; यजूँष्येव मधुकृतः; यजुर्वेद एव पुष्पम्; ता अमृता आपः ॥ १ ॥

तानि वा एतानि यजूँषि एतं यजुर्वेदमभ्यतपन्; तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥

तत् व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतत्, यदेतदादित्यस्य शुक्लँ रूपम् ॥ ३ ॥ इति तृतीयाध्याये द्वितीयः खण्डः ।

तृतीये तृतीयः खण्डः

अथ येऽस्य प्रत्यञ्चो रश्मयः, ता एवास्य प्रतीच्यो मधुनाड्यः; सामान्येव मधुकृतः; सामवेद एव पुष्पम्; ता अमृता आपः ॥ १ ॥

तानि वा एतानि सामानि एतँ सामवेदमभ्यतपन्; तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥

तत् व्यक्षरत्; तदादित्यमभितोऽश्रयत्; तद्वा एतत्, यदेतदादित्यस्य कृष्णँ रूपम् ॥ ३ ॥ इति तृतीयाध्याये तृतीयः खण्डः ।

तृतीये चतुर्थः खण्डः

अथ येऽस्योदञ्चो रश्मयः, ता एवास्योदीच्यो मधुनाड्यः; अथर्वाङ्गिरस एव मधुकृतः; इतिहासपुराणं पुष्पम्; ता अमृता आपः॥१॥

---

वदित्यर्थः । **तद्...रूपम्** । आदित्ये प्रत्यक्षतः परिदृश्यमानं यत् रोहितरूपम्, तत् कर्मनिर्वर्त्ययशस्तेजआदिलक्षणफलरूपमित्यर्थः । रोहितरूपे तद्बुद्धिः कर्तव्येति यावत्॥ ३-१. '**अथ येऽस्य दक्षिणा-रश्मय** इत्यादि सर्वं पूर्ववज्ज्ञेयम् । **अथ येऽस्य प्रत्यञ्चो रश्मय** इत्यादि । पूर्ववदेव-**अथ येऽस्य....अथर्वाङ्गिरस एव मधुकृतः** । अथर्वणा अङ्गिरसा च दृष्टा मन्त्राः **अथर्वाङ्गिरसः** । **इतिहासपुराणं**

---

पार्श्वान्तरे इत्याकलय्येव शाङ्करे अभितः-पार्श्वतः, पूर्वभागं सवितुरिति व्याख्यातम् ।

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपन् ; तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥

तत् व्यक्षरत् ; तदादित्यमभितोऽश्रयत् ; तत् वा एतत् , यदेतदादित्यस्य परःकृष्णँ रूपम् ॥३॥ इति तृतीयाध्याये चतुर्थः खण्डः ।

तृतीये पञ्चमः खण्डः

अथ येऽस्योर्ध्वा रश्मयः, ता एवास्योर्ध्वा मधुनाड्यः, गुह्या एवादेशा मधुकृतः, ब्रह्मैव पुष्पम् ; ता अमृता आपः ॥ १ ॥

ते वा एते गुह्या आदेशा एतत् ब्रह्माभ्यतपन् ; तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥

तत् व्यक्षरत् ; तदादित्यमभितोऽश्रयत् ; तद्वा एतत् , यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥

ते वा एते रसानाँ रसाः ; वेदा हि रसाः ; तेषामेते रसाः ; तानि वा एतान्यमृतानाममृतानि ; वेदा ह्यमृताः ; तेषामेतान्यमृतानि ॥ ४ ॥ इति तृतीयाध्याये पञ्चमः खण्डः ।

---

**पुष्पम्** । इतिहासपुराणविहितकर्मसु अथर्वाङ्गिरसां मन्त्राणां विनियोगात् ऋग्वेदादिवत् पुष्पत्वोक्तिः [तेषां] इति द्रष्टव्यम् । **तद्वा...परःकृष्णं रूपम्** । **परःकृष्णं रूपम्** अतिशयित(तं) कृष्णरूपमित्यर्थः [अन्यत् सर्वं पूर्ववज्ज्ञेयम्] । ३-४.

**अथ ....गुह्या एवादेशाः...**। ब्रह्मविषयकोपनिषद्रहस्योपदेशा इत्यर्थः । **...आदित्यस्य मध्ये क्षोभत इव** । समाहितदृष्टिभिर्वीक्ष्यमाणमादित्यमण्डलमध्ये चलतीव स्फुरतीत्यर्थः ॥

**ते वा...अमृतानि** । लोकसारभूतर्ग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यत्वात् रोहितादिरूपाणामनिरसत्वम् । तथा [वेदेभ्योपि] इष्टतत्साधनप्रतिपादकतया अमृतेभ्योऽपि रोहितादिरूपाणां तत्प्रतिपाद्यकर्मनिष्पाद्या-

तृतीये षष्ठः खण्डः

तत् यत् प्रथमममृतम्, तत् वसव उपजीवन्त्यग्निना मुखेन ; न वै देवा अश्नन्ति, न पिबन्ति ; एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

---

नामतिभोग्यत्वात् अमृतादप्यमृतत्वमित्यर्थः ।

**अयमत्र निर्गलितार्थः**-प्रागाद्यूर्ध्वदेशान्त[र]स्थितरश्मिनाडीतः तत्तद्वेदोक्तकर्मकुसुमेभ्यः तत्तद्वैदिकमन्त्रमधुकरैरादित्यमण्डलमानीतानि सोमाज्यपयःप्रभृतिद्रव्यनिष्पन्नानि यशस्तेजोवीर्यमिन्द्रियमित्येवमात्मकानि रोहितं शुक्लं कृष्णं परःकृष्णं मध्येक्षोभत इवेत्युक्तानि रोहितादीनि पञ्चामृतानि आदित्यमध्वा(मध्या)श्रितानीति ॥ ३-५.

एषां पञ्चानाममृतानां वसुरुद्रादित्यमरुत्साध्यगणभोग्यत्वम्, [उक्तेन प्रकारेण] तदुपासीनानां वसुत्वादिप्राप्तिपूर्वकब्रह्मप्राप्तिञ्च प्रतिपादयति-**तत् यत् प्रथमममृतम्** । **तत् वसव उपजीवन्त्यग्निना मुखेन** । अग्निमुखा (अग्निं पुरस्कृत्य) वसवो रोहितरूपलक्षणं प्रथमममृतमुपजीवन्तीत्यर्थः । **उपजीवनं** भक्षणमिति शङ्कां प्रतिषेधति **न वै देवा अश्नन्ति, न पिबन्ति** । चन्द्रमिवेति भावः । पुनः कथमुपजीवनमित्यत्राह **एतदेवामृतं दृष्ट्वा तृप्यन्ति** । यशस्तेजआदिलक्षणं रोहितं रूपं सर्वैः करणैरुपलभ्य तृप्यन्तीत्यर्थः ।

---

चन्द्रमिवेति । एष सोमोराजा (५-१०) इत्युक्तरीत्या चन्द्रभावं प्राप्तं जीवमिवेत्यर्थः । यद्वा देवानां चन्द्रकलापातृत्वमप्यौपचारिकमित्याशयेन एवमुक्तम् ।

सर्वैः करणैरुपलभ्येति । गुणवत्ताप्रथारूपशब्दादिनानारूपयशआदिफलानां चतुर्मात्रदृश्यत्वायोगात् यथायथं करणग्रहणाय दृष्ट्वेत्यस्यैवं व्याख्यानम् । दृष्ट्वा तृप्त्यनन्तरमभिसंवेशऔदासीन्यं पुनरनुभवोपयोगिसात्मीकरणाय । वक्ष्यमाणो वाऽत्र हेतुः ।

त एतदेव रूपमभिसंविशन्ति ; एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद, वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति ; स एतदेव रूपमभिसंविशति; एतस्माद्रूपादुदेति ॥३

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता, वसूनामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥४॥ इति तृतीयाध्याये षष्ठः खण्डः ।

तृतीये सप्तमः खण्डः

अथ यत् द्वितीयममृतम्, तत् रुद्रा उपजीवन्तीन्द्रेण मुखेन । न वै देवा अश्नन्ति, न पिबन्ति ; एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्ति ; एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद, रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं

---

**त...विशन्ति** । एतदेव रूपमभिलक्ष्य अनुभूयेति यावत् **संविशन्ति** भोगानन्तरमुदासीना (तृप्ता आसीनां) भवन्तीत्यर्थः । **एतस्मात् रूपादुद्यन्ति**। प्राप्ते भोगकाले इति शेषः । **एतस्माद्रूपादिति** ल्यब्लोपे पञ्चमी । एतद्रूपानुभवमुद्दिश्य **उद्यन्ति** सोत्साहा भवन्तीत्यर्थः।

**स य एतदेवममृतं वेद** । **एवम्** अनेन प्रकारेण=वसु-तृप्त्याधायकदर्शनगोचरत्वलक्षणवसूपजीव्यत्वादिना रोहितामृतं यो वेदे-त्यर्थः । **वसूनामेव....रूपादुदेति** । तत्क्रतुन्यायेन **सः** तदुपासीनोऽपि वसुत्वं प्राप्य तथैव भवतीत्यर्थः । कियन्तं कालमित्यत्राह **स याव....** ....**पर्येता** । आदित्यस्य प्राच्यां दिश्युदयः प्रतीच्यामस्तमयश्च यावन्तं कालमनुवर्तते, तावन्तं कालं वसूनां यत् आधिपत्यं यत् अप्रतिहत-संकल्पत्वलक्षणं स्वाराज्यञ्च, तत् **पर्येता** परितो गन्तेत्यर्थः । ३-६.

**अथ यत् द्वितीय**....इत्यादि । सर्वं पूर्ववत् द्रष्टव्यम् ।

**स यावदादित्यः पुरस्तात्....द्विस्तावत्....**। पुरस्तादुदय-

दृष्ट्वा तृप्यति ; स एतदेव रूपमभिसंविशति; एतस्माद्रूपादुदेति ॥३

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता, द्विस्तावत्, दक्षिणत उदेतोत्तरतोऽस्तमेता, रुद्राणामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥ इति तृतीयाध्याये सप्तमः खण्डः।

---

पश्चादस्तमयापेक्षया द्विगुणकालं दक्षिणत उदयमुत्तरतोऽस्तमयञ्च कल्पयित्वा श्रुतिर्ब्रवीतीति नात्र कथन्ता कार्या। [शिष्टं स्पष्टम्]। ३-७.

---

नात्र कथन्तेति। अनेन, अत्र विमर्शनीयं विस्तरभियोपेक्ष्यत इति सूच्यते। अत्र हि—आदित्यस्य पुरस्तादुदयः पश्चादस्तमयश्चैव प्रसिद्धः, न तु दक्षिणत उदयादिः। एवं पश्चादुदयादिकमपि वक्ष्यमाणमनुपपन्नम्। एवमादित्योदयास्तमयकालो यावान्, तावतोऽपि वसुभोगकालतया तदतिरिक्तादित्यकालस्यैवाभावेन द्विस्तावदिति रुद्रभोगकालस्य वसुभोगकालात् द्वैगुण्यवर्णनमप्यनुपपन्नम्। एवमुपर्युपरि द्वैगुण्यं वक्ष्यमाणमपि। किञ्च मेरुं परितः इन्द्रयमवरुणसोमपुरीः प्रकाश्य भ्रमतः आदित्यस्य सर्वत्र तुल्यरूपा गतिरिति दक्षिणोदयोत्तरास्तमयकाले प्रागुदयादिकालतो द्वैगुण्यमपि दुरुपपादमिति शङ्काः प्रादुर्भवन्ति। अत्र शाङ्करे, 'अत्रोक्तः परिहार आचार्यैः' इत्यारभ्य, 'अमरावत्यादीनां पुरीणां द्विगुणोत्तरेण कालेनोद्वास स्यात्' इत्यादिना प्रागुदयादिकालाद्यपेक्षया दक्षिणोदयादिकालेषु द्वैगुण्यमुपपादितम्। अत्र निर्दिष्टाश्चाचार्याः द्रमिडाचार्या इति आनन्दगिरीयादवगम्यते। तैरनेकत्रोपेक्षितानामप्यस्माभिर्गौरवितानामेषामाचार्याणां ग्रन्थस्य अद्यानुपलम्भात्, अस्फुटत्वाच्च पङ्क्तेः पूर्वापरसंदर्भस्य च, तेषां सिद्धान्त इह किंरूप इति दुर्गमम्। अमरावतीस्थितिकालात् द्विगुणकालं यमपुरीस्थितिरित्येवमुपरि द्वैगुण्याङ्गीकारात् प्रागादिस्थितवस्वाद्यपेक्षया दक्षिणादिस्थितरुद्रादिभोगो द्विगुण इत्येतावत् ततः प्रतीयताम्। कथञ्चामरावत्यादेः

शीघ्रमुद्वासनियमः। अतस्तत्तद्दूरूहांशकल्पनापेक्षया वरं दक्षिणो-दयोत्तरास्तमयादिकं तद्द्वैगुण्यञ्च श्रुतौ कल्पितमितीति भाष्ये अपाततः प्रतीयते। अमरावत्याद्युद्वासापेक्षया अमरावत्यादितो वस्वादि-पदप्राप्तोद्वासो युक्त इत्यपि भाष्याशय इव।

अथ किञ्चिदिह विचार्यते—वसुरुद्रादित्यादयस्तावत् प्रकृतवैव-स्वतमन्वन्तरे वर्तमाना देवगणाः। तत्र वसुपदं प्राप्तस्य एकमन्वन्तर-स्थायिनः आकल्पं प्रागुदयप्रत्यगस्तमयप्रवर्तकस्यादित्यस्य स्थितिकालं यावत् फलभोगः कथम्? एवं तद्भोग एव क्षीणायुषः, कल्पस्याव-सितत्वात् रुद्रादिभोगश्च कदेति। तत्रैव समादध्युः—उपायान्तरेण वसुभूतस्य मन्वन्तरमात्रस्थायित्वेऽपि मधुविद्यया वसुर्भवन् आक-ल्पस्थायी स्यात्। एकैकामृतमात्रोपासनपक्षे वसुभूतस्य रुद्रादि-पदप्रसक्तिरेवं न। रुद्रादिरूपेण भवन्नपि अनेकैः कल्पैरेव भोगान् अनुभवतु। तावद्विलम्बसहिष्णोरेव मधुविद्याधिकारादिति॥

वस्तुतः यावदादित्यस्थिति आधिपत्यं पर्येतेत्यनिर्दिश्य, यावत् उदेताऽस्तमेतेति निर्देशे श्रुतिहृदयं किञ्चिदूह्यम्। तदेवमूह्यते—पूर्वं दृष्ट्वा तृप्यन्ति, अभिसंविशन्ति, उद्यन्तीति भोगमध्ये अभोगो ह्युक्तः। तेन मध्ये औदासीन्यं रोहितादिरूपदर्शनाभावादिति ग्राह्यम्। दर्शनञ्चादित्यस्य उदयात् प्रभृति अस्तमयं यावदेव भवति, न पश्चा-दिति सर्वविदितम्। एवञ्च पूर्वरश्मिनाडीनिष्पन्नरसाश्रयं मधु द्रष्टुं पूर्वदिक्प्रान्ते स्थितो वसुः पूर्वदिगवच्छिन्नोदयप्रभृति अस्तमयपर्यन्त-मेव पश्येत्। तत्तद्देशस्थितानां जनानां तत्तद्देशीयदर्शनादर्शनग्रहणे-नैवोदयास्तमयव्यवहारस्यानुभविकत्वात्। अत एवोक्तम्, 'यावत् पुरस्तादुदेता पश्चादस्तमेत' इति। एवं दक्षिणरश्मिसमार्जितं मधु पश्यन् रुद्रः तद्दिगवच्छिन्नोदयाद्यस्तमयान्तमेव पश्येदिति यावद्द-क्षिणत उदेतेत्यादि। अत्र प्राग्दक्षिणादिव्यवहारः अस्मद्दृष्ट्या। उदयास्तमयव्यवहारः वस्वादिपदप्राप्तपुरुषदृष्ट्या। एवं तत्तद्दिगव-च्छिन्नरश्मिसंपादितमधुदर्शनं तत्रतत्र स्थितेन स्वदेशप्राप्तसूर्योदय-

कालमारभ्य त्रिंशन्नाडीपर्यन्तं क्रियते, तदनन्तरञ्च तत्तद्दिक्प्रतिदिशि तदस्तमयात् अदर्शनम्। पुनः राज्यपाये स्वदेशे उदयप्राप्त्या पुनर्दर्शनात् एतस्मात् रूपादुदेतीत्युच्यते। मेरुप्रादक्षिण्येनामरावत्यादिसर्वदिङ्नगरीषु समवेगं परिभ्रमतश्चादित्यस्य पुरस्तादुदयात् त्रिंशन्नाड्यः पश्चाद्देशसंगमे सतीति स एवास्तमयः। दक्षिणदेशोदयात् त्रिंशन्नाड्य उत्तरदिक्संगमकाल इति तदा सोऽस्तमय इत्येवं ग्राह्यम्। एवं तत्तद्दिशिस्थितैरादित्यानुभवश्च श्रुतप्रकाशिकायां संगृहीतः, 'वसुरुद्रादित्यमरुत्साध्यगणा एकैकं प्रतिदिशमुपरि च स्थित्वा आदित्यं प्रधानमनुभवन्ति' इति। एवञ्च 'यावत् पुरस्तादुदेत'इत्यादिवाक्यं न सूर्यस्थितिकालपर्यन्ततदनुभवप्रतिपादकम्। किन्तु तस्य तस्याहि तदनुभवः, न रात्रावित्यर्थदर्शकम्। नन्वादित्यदर्शनस्य रात्रावसंभवेपि वसुनिष्ठाधिपत्यस्वाराज्ययोः रात्रौ संभवेन, 'यावत् अस्तमेता, तावत् पर्येत' इति रात्रौ तन्निषेधः कथमिति चेत्— वसुभुज्यमानरसाश्रयमधूपासकस्य मध्वनुभवातिरिक्तविलक्षणाधिपत्यस्वाराज्यसंबन्धे प्रमाणाभावेन तदुपयोग्याधिपत्यादिरेव तदर्थ इति। कियत्सु अहस्सु एवं तदनुभव इत्येतत्तु गमकान्तरनिर्णेयम्। संवेशपूर्वकपुनरुद्यमश्रवणादनेकस्मिन् दिन इति सिद्धम्। पुरस्तादुदयपश्चादस्तमयमध्यं यावत् वसुभोगकालात्मकम्, द्विस्तात् रुद्रस्य। परन्तु तत् उक्तविधदक्षिणोदयोत्तरास्तमयमध्यकालात्मकमिति श्रुतिवाक्यार्थः। एवमत्र द्वैगुण्यस्य, तथोपरितनभोगकालेष्वपि उत्तरोत्तरद्वैगुण्यस्य श्रुत्या दर्शितत्वात् वसुरुद्रादीनाञ्चैकमन्वन्तरस्थायित्वात् तं मन्वन्तरकालमेकत्रिंशदंशात्मना विभज्य एकोंशो वसुभोगकालः, अंशद्वयं रुद्रस्य, अंशचतुष्कमादित्यस्य, अंशाष्टकमरुतः, अंशषोडशकं साध्यस्येति विनियोगो भाव्यः। तत्र यावन्त्यहानि यस्य संभवन्ति, तावत्सु तस्याऽऽदित्यानुभवो मधुविद्याफलम्। एवञ्चोपासको वसुपदमात्रकामनयोपासने आंशिकेऽनुमन्यताम्; आंशिकपक्षे वसूनां रुद्राद्युपासनसंभवेन सामान्यतो मध्वादिष्वसंभवादि-

तृतीये अष्टमः खण्डः

अथ यत् तृतीयममृतम्, तदादित्या उपजीवन्ति वरुणेन मुखेन । न वै देवा अश्नन्ति, न पिबन्ति ; एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥

त एतदेव रूपमभिसंविशन्ति ; एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद, आदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति ; स एतदेव रूपमभिसंविशति ; एतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यो दक्षिणत उदेता उत्तरतोऽस्तमेता, द्विस्तावत्, पश्चादुदेता पुरस्तादस्तमेता, आदित्यानामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥ इति तृतीयाध्याये अष्टमः खण्डः ।

---

त्युक्तेरस्वरसत्वादिना तत्पक्षायोगे कृत्स्नकामनया कृत्स्न एव वा । फलं तु एवं परिमितमिति न काचिदनुपपत्तिः ।

एवञ्चास्य भाष्यस्यायमर्थः—पुरस्तादुदयपश्चादस्तमयौ वसुभोगोपयोगितया यावन्तौ इष्टौ, तावदपेक्षया द्विगुणतया रुद्रभोगार्थदक्षिणोदयादी यथावत् परिकल्प्यैव श्रुतिः फलं ब्रवीतीति नात्र काचिदनुपपत्तिरिति । नन्वयमुपासको वस्वादिरेव वा वस्वादिसमानभोगो वेति चेत्—स विचार उपरि भाष्य एव भविष्यति । साक्षात् वसुत्वे तत्फलमनुभूय रुद्रपदं प्रति प्रस्थितौ मध्य एवान्यो वसुत्वेन कल्प्यते । वसुसमानभोगत्वे तु न किञ्चित् । सर्वमपि सर्ववेदिनो भगवतः सुकरम् । वस्तुतः प्रधानभूतानां वस्वादीनामष्टत्वादिना संख्यतत्वेऽपि तद्गुणान्विताः अन्येऽपि वस्वादिव्यपदेशभाजः स्युरेव । यथा, 'एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः । शतं त्वेकं समाम्नातं रुद्राणाममितौजसाम्' (वि. पु. १-१५.) इति । माध्वास्तु, 'यः पुरस्तादुदयपश्चादस्तमयात्मको वसुभोगकालः स दक्षिणोदयादिकालापेक्षया द्विरावृत्तः, एवं पूर्वपूर्व-उत्तरोत्तरस्मात् द्विगुण' इति व्युत्क्रमेण योजयन्ति ; अखिलमपि फलकालमेकस्मिन्नेवाहोरात्रे घटयन्तीत्यलं बहुना ।

तृतीये नवमः खण्डः

अथ यच्चतुर्थममृतम्, तन्मरुत उपजीवन्ति सोमेन मुखेन; न वै देवा अश्नन्ति, न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्ति; एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद, मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति; स एतदेव रूपमभिसंविशति; एतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता, द्विस्तावत्, उत्तरत उदेता दक्षिणतोऽस्तमेता, मरुतामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥ इति तृतीयाध्याये नवमः खण्डः ।

तृतीये दशमः खण्डः

अथ यत् पञ्चमममृतम्, तत् साध्या उपजीवन्ति ब्रह्मणा मुखेन, न वै देवा अश्नन्ति, न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति॥

त एतदेव रूपमभिसंविशन्ति; एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद, साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति; स एतदेव रूपमभिसंविशति; एतस्माद् रूपादुदेति ॥ ३ ॥

स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता, द्विस्तावत्, ऊर्ध्वं उदेताऽर्वागस्तमेता, साध्यानामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥ इति तृतीयाध्याये दशमः खण्डः ।

**'अथ यच्चतुर्थम्....'** इत्यादि । पूर्ववत् । **'अथ यत् पञ्चमम्....'** इत्यादि । सर्वं समानम् इति ।

---

ऊर्ध्वं उदेताऽर्वागस्तमेतेति। वस्वादीनां प्रागादिदिक्षु स्थितानां स्वस्वदिशि समीपे यदा सूर्यप्राथमिकदर्शनम् तदा तदुदयप्रतीतिवत्, उपरिस्थितानां साध्यानामूर्ध्वस्वदेशसमीपाऽऽगमनात् प्राक् केनापि कारणेन नियमेन सूर्यस्यादर्शने सति समीपदेश एव चेत् प्रथमं तद्दर्शनम्, तदा ऊर्ध्वमेव तदुदयो भवति, अथ तदूर्ध्वदेशात् दूरतो

तृतीये एकादशः खण्डः

अथ तत ऊर्ध्वं उदेत्य नैवोदेता नास्तमेता, एकल एव मध्ये स्थाता ।

एवं वसुरुद्रादित्यमरुत्साध्यगणभोग्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रय देवमधुत्वरूपित-ज्योतिर्मण्डलाख्यरूपयुक्तस्य उदयास्तमयादिकृत्यविशिष्टस्य आदित्यनामकस्य आदित्यशरीरककार्यावस्थब्रह्मण उपासनमुपदिश्य, नामरूपकृत्यादिरहिताकार्यावस्थादित्यजीवशरीरकब्रह्मोपासनं दर्शयति **अथ तत ऊर्ध्वं**....। अथ ब्रह्मदिवसरूपस्य कल्पस्य समाप्त्यनन्तरं **तत ऊर्ध्वं उदेत्य** उदयास्तमयाभ्यां प्राण्यनुग्रहादूर्ध्वं उदेत्य–उदयास्तमयकृत्य[प्रयुक्त]प्राण्यनुग्रहरहित इत्यर्थः । **नैवोदेता.... स्थाता** । उदयास्तमयशून्यः एकस्वभाव एव उदासीनतया वर्तत इत्यर्थः।

अत्र हि **भाष्ये,** [भाष्ये, 'अत्र हि ?] 'कार्यकारणा(भया)वस्थब्रह्मोपासनं विधीयते । **असौ वा आदित्यो देवमधु** इत्यारभ्य, **अथ तत ऊर्ध्वं उदेत्य** इत्यतः प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यमुपदिश्यते । **अथ तत ऊर्ध्वं उदेत्ये**त्यादिना आदित्या-

---

गते अर्वागस्तमयप्रतीतिः । तथाच पूर्वं मरुद्भोगकालः उत्तरोदयदक्षिणास्तमयान्तरालात्मको यावानध्यवसितः, तावानेव द्विगुणीकृतः ऊर्ध्वोदयावागस्तमयान्तरालेषु यावत्सु आवर्तितेषु सिद्ध्यति, तावान् साद्ध्यानां भोगकाल इति ।

अथ तत ऊर्ध्वं इति । ननु किमिति कार्यावस्थादित्यपरतयैवेदं वाक्यमपि न योज्यते । अत्र मध्ये स्थातेति गतिनिवृत्तिवाचिस्थाधातुप्रयोगेण, 'आदित्यस्य वस्तुतो भ्रमणमेव नास्ति । उदयास्तमयवर्णनं प्रातीतिकमात्रम्' इति पक्षस्यात्र वर्णनप्रतीतेः । यद्वा तद्भ्रमणपक्षस्यैव प्रामाणिकत्वेऽप्येवमर्थः सुवचः। यौ खलूदयास्तमयौ नाना

प्रागुक्तौ, तौ परिभ्रमतः कार्यावस्थस्यादित्यस्यैव वस्तुतो न स्तः इति। तदुक्तं विष्णुपुराणे, 'दिवसस्य रविर्मध्ये सर्वकालं व्यवस्थितः', 'नैवास्तमय(न)मर्कस्य नोदयः सर्वदा सतः। उदयास्तमयाख्यं हि दर्शनादर्शनं रवेः' (२-८.) इति। तदयं श्रुत्यर्थः-तत ऊर्ध्वः= तत्तद्दिगूर्ध्वप्रदेशावच्छिन्नः उदेत्य= उपर्यागत्य एकल एव मध्ये दिवसस्य मध्ये स्थाता (सर्वदा यत्र क्वापि देशे मध्याह्न इव दीप्यमानतया विरश्मित्वानुष्णत्वादि विना सदा तिग्मसहस्ररश्मित्वरूपैकस्वभाव एवेति यावत्)। नोदेति, नास्तमेति च वस्तुत इति। अत्रोच्यते— एवं तर्हि तदुपबृंहणानुसारादेवमेव कस्मान्न श्रुत्यर्थ इष्यते, यथा तत्रैव (२-११), 'नोदेता नास्तमेता च कदाचिच्छक्तिरूपधृत्। विष्णुर्विष्णोः पृथक् तस्य गणः सप्तविधोऽप्ययम्' इति। अत्र हि नोदेता नास्तमेतेति सम्यगियं श्रुतिः प्रत्यभिज्ञाप्यते। तदयं श्रुत्यर्थः— य एतावदुदयास्तमयशाली आदित्यो वर्णितः, तत ऊर्ध्वं परमपदे स्थितः परवासुदेवो विष्णुरादित्यादुत्कृष्टः तत इहाविर्भूतः आदित्यमण्डलगतादित्यतत्परिकरवत् प्रतिमासमागमापायौ न प्राप्नोति, किन्त्वेकरूप एव सर्वदा आदित्यमण्डलेऽवतिष्ठत इति। आदर्तुमर्हश्चायमर्थः; मधुविद्यायाः संप्रति साक्षात् भगवद्विषयकतया ब्रह्मविद्यात्वस्याऽऽअस्येन संपत्तेः। न च श्रीभाष्यविरोधोऽपि। तत्र, 'आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्म' इत्येतावत एव सत्त्वात्। आदित्यमण्डलान्तर्वर्ती हिरण्मयः पुरुषः कारणावस्थः; तदधिष्ठितः तच्छक्त्याप्यायितसर्वआदित्यस्तं प्रति कार्य एवेति प्राक् कार्यावस्थादित्य उक्त इति सुनिर्वहत्वादिति॥ अस्तु तर्ह्येवमेव श्रुत्यर्थः, किमिति सृष्टिप्रागवस्थादित्यजीवपरतया मुक्त्यवस्थजीवपरतया वा व्याख्यानमिति चेत्-पूर्वं यद्रूपौ उदयास्तमयौ प्रस्तुतौ, तद्रूपयोरेव तयोरिह नोदेता नास्तमेतेति निषेधप्रतियोगित्वं सति संभवे स्वीकर्तुं युक्तम्; न त्वनुपस्थितयोरन्यादृशयोः। प्रस्तुतौ च

न्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्मो(पास्यमु?)पदिश्यते' इत्युक्तम्। तत्र **अथततऊर्ध्वउदेत्ये**त्यस्य मुक्तावस्थादित्यान्तर्यामिब्रह्मोपासनपरत्वे अथशब्दादिस्वारस्यात् **कारणावस्थमिति भाष्यस्य** अकार्यावस्थं, मुक्त्यवस्थमित्यर्थ एवोचितः। न तु आदित्यभावप्राप्तिपूर्वावस्था। **व्यासार्यैस्तु,** 'भाष्यस्वारस्यमवलम्ब्य आदित्यनामरूपभावत्वावस्था पूर्वभाव्यवस्थैव **अथतत ऊर्ध्वउदेत्ये**त्यादिसंदर्भेण प्रतिपाद्यत इति वर्णितम्। तेषामयमाशयः— **अथशब्दो** न निर्दिष्टानन्तर्यार्थः। अपितु अर्थान्तरप्रस्तावार्थः। 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता एकल एव मध्ये स्थाता' इत्यस्यापि उदयास्तमयतत्कार्यशून्यत्वमर्थः। तथाऽऽदित्यभावपूर्वावस्थायां कल्पादौ संभवतीति।

---

दर्शनविशेषरूप उदयः, दर्शनध्वंसरूपोऽस्तमयश्च। तन्निषेधश्च तादृशादित्यजीवपरतायामेवेत्याशयादित्यलमधिकेन।

अथशब्दादिस्वारस्यादिति। अथशब्दस्य पूर्वोक्तानन्तर्यं मुख्यार्थः। पूर्वसंदर्भे च आदित्योदयास्तमयमध्ये देवगणानां तदनुभव उक्तः। एवञ्च स्वकर्तव्यदेवादिप्राणिजातानुग्रहानन्तरमित्यर्थस्यैव लाभात् आदित्यावस्थाप्राग्भाव्यवस्थाग्रहणे तदानन्तर्यं दुर्घटम्। एवं ऊर्ध्वं उदेत्येति पदस्वारस्यमपि प्राणिजातानुग्रहोत्तरकालग्रहणे। ऊर्ध्वं प्रागिति पदयोर्मध्ये ऊर्ध्वपदस्योत्तरकालरूपार्थे प्रागित्यस्य पूर्वकाल-रूपार्थे च प्रयोगस्य व्यवस्थितत्वात्। श्रुतप्रकाशिकारीतौ तु कारणा-वस्थमिति भाष्यपदस्वारस्येऽपि नैतच्छ्रुतिस्वारस्यम्। स्वपक्षे च नातीव भाष्यस्वारस्यहानिः। मुक्तेरात्यन्तिकलयरूपत्वात्, लयस्य च स्वकारणे एव वक्तव्यत्वात् मुक्त्यवस्थं ब्रह्म कथञ्चित् कारणावस्थ-तया सुवचमिति। अन्यथा मुक्त्यतिरिक्तावस्थाग्रहणे तस्या अनित्य-

तदेष श्लोकः—न वै तत्र स(न) निम्लोच(चो) नोदियाय कदाचन।
देवास्तेनाहँ सत्येन मा विराधिषि ब्रह्मणा॥ इति।
न ह वा अस्मा उदेति, न निम्लोचति। सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद॥ ३॥

---

**तदेष श्लोकः।** **तत्** तस्मिन् विषये देवान् प्रति केनचित् योगिना गीतः श्लोकः। उच्यत इति शेषः। **न वै...ब्रह्मणेति।** हे देवाः! **तत्र** तस्मिन् आदित्यभावमुक्तिकाले **सः** मुक्तादित्यान्तर्यामी परमात्मा **न निम्लोच** नास्तमितः; **नोदियाय** नोदितश्च। तेन **सत्येन** वचनेन, ब्रह्मणाऽहं **मा विराधिषि** विरोधं न गच्छामि, अप्राप्तिं न गच्छामीति यावत्। **निम्लोचे**ति छान्दसो द्विर्वचनाभावः।

**न ह....वेद।** य एतां मधुविद्यारूपां **ब्रह्मोपनिषदं** ब्रह्मविद्यां **वेद** अनुतिष्ठति, **अस्मै** ब्रह्मविदे आदित्यो नोदेति, नास्तमेति।

---

त्वेन एकलत्वाद्यसारस्याच्च। अत एवासद्भाष्यानुसारिणि श्रीकण्ठभाष्ये कारणावस्थपदसद्भावेऽपि मुक्तविषयतयैवाप्पय्यदीक्षितयोजना। शून्यत्वमिति। उदयास्तमयध्वंसरूपार्थो न ग्राह्यः; किन्तु सामान्यतः तदभावः। स च प्राक्कालेऽपि सुवच इति भावः। देवान् प्रति इति। अस्य योगिवचनस्य देवातिरिक्तं कञ्चित् पुरुषं प्रति प्रवृत्तत्वे देवा इति संबोधनं क्लिष्टं नेयं स्यादिति तादृशशाङ्करमार्ग उपेक्षितः। शाङ्करे, 'न निम्लोच' इति पाठः। न वै तत्रेति पृथग्वाक्यम्। तद्विवरणं न निम्लोचेत्यादि। निम्लोच=निमुम्लोच। ननु सूर्यस्य सर्वथैवाभावादन्धकार एव स्यात्; कथमहरेव सर्वदेत्यत्र सकृद्दिवाशब्दतात्पर्यार्थमाह संततमित्यादिना। उदयास्तमयपदयोर्दर्शनादर्शनपरत्ववत् दिवापदमपि दर्शनपरमेव। तत्र सूर्योदयादिशब्दः सूर्यदर्शनादिपरः। दिवाशब्दश्च पदान्तरासमभिव्याहारादविशेषात् सर्व-

**तद्धैतत् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः। तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच॥**

**इदं वाव तज्ज्येष्ठाय पुत्राय पिता प्रब्रूयात्, प्रणाय्याय वाऽन्तेवासिने ॥५॥ नान्यस्मै कस्मै चन; यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात्, एतदेव ततो भूय इति एतदेव ततो भूय इति।**

**इति तृतीयाध्याये एकादशः खण्डः**

---

आदित्योदयाप्रकाशाभ्यां न किञ्चित् तस्य प्रयोजनमित्यर्थः। कुत इत्यत आह **सकृत्....अस्मै** ब्रह्मविदे सकृद् दिवैव भवति। सकृदुदितमहरेव भवति। सदैवाहर्भवतीत्यर्थः। संततं सर्वविषयकसाक्षात्कारोऽस्य भवतीत्यर्थः।

मधुविद्यासंप्रदायमाह **तद्धैतत्...प्रजाभ्यः**। **तद् ह एतत्** मधुविज्ञानमित्यर्थः। **तद्धैतत्...ब्रह्म प्रोवाच**। तद्धैतत् ब्रह्म उद्दालकाय पिता प्रोक्तवान्। **इदं....वासिने**। तस्माद्धेतो इदं ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय वा प्रब्रूयात्; **प्रणाय्याय** योग्याय शिष्याय वा प्रब्रूयादित्यर्थः। 'प्रणाय्योऽसंमतौ' इति निष्कामार्थे **प्रणाय्य**शब्दस्य निपातितत्वात्। **नान्यस्मै कस्मैचन**। उक्तपुत्रशिष्यव्यतिरिक्ताय कस्मैचिदपि न ब्रूयादित्यन्वयः। **यद्यपि....इति**। **अद्भिः परिगृहीतां** समुद्रावृतां भोगोपकरणैः पूर्णामिमां पृथिवीं यद्यपि अस्मै=आचार्याय दद्यात्, तदपेक्षयाऽप्येतद्विज्ञानमेवाधिकम्। नैतस्यानुरूपो निष्क्रयोऽस्तीत्यर्थः। **एतदेव...**। द्विरुक्तिर्विद्यासमाप्त्यर्था॥

---

**दर्शनादिपर इति भावः। तद्धैतत् ब्रह्म=मधुविज्ञानविषयं प्रजाभिरधिगतं ब्रह्म। पिता=अरुणः।**

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते **समन्वयाध्याये,**

**(१)-मधुविद्यायाः** वस्वादिगणभोग्यरोहितरूपादिपञ्चामृताश्रयादित्योपासनारूपतया अस्यां विद्यायां वस्वादीनां नाधिकारः संभवति ; उपास्योपासकभावस्यैकस्मिन्नसंभवात् । न हि एकस्यैव

---

आदित्योपासनारूपतयेति। तावन्मात्रोपासनारूपतयेत्यर्थः। ब्रह्मविद्यात्वाभावादिति यावत्। वस्वादिभिरादित्यांशस्य भुज्यमानत्वेऽपि तदवस्थब्रह्मणो भुज्यमानत्वाभावात, 'आदित्यो वा देवमधु' इत्यत्रादित्यपदं न ब्रह्मपरम्। एवं, 'तद्रसव उपजीवन्ति' इत्याद्युक्तोपजीवनकर्तृत्वस्य ब्रह्मण्यसंभवेन वस्वादिपदमपि शुद्धवस्वादिपरमेवेति भावः। ब्रह्मणोऽनुपास्यत्वे, 'सकृद्दिवा हैवास्मै भवति' इति मुक्तिफलश्रवणं कथमिति चेत्—वस्वादिपदप्राप्त्यनन्तरं तत्रोपायस्यानुष्ठास्यमानस्य तत् फलमिति क्रममुक्तिपरं तत्। यद्वा आदित्योपासनात् आदित्यसायुज्यं प्राप्तस्य तन्मण्डलमध्य एव च स्थितस्य तद्दर्शनाभावात् सर्वदा दिवैवेत्यर्थसंभवान्न मोक्षरूपक्लिष्टार्थपरत्वं तस्येति पूर्वपक्ष्याशयः स्यात्। ननु वस्वादिमात्रोपासने वस्वादिपदमपि दुर्लभम्—फलकाले भाविनि मन्वन्तरे उपासितवस्वादेर्दातुरभावात् इति चेन्न—वस्वादिभोगसाम्यस्यैव फलत्वेनास्मिन्नेव मन्वन्तरे तैस्तत्प्रदानसंभवात्। वस्वादित्व(त्य)स्यैव फलत्वेऽपि, 'इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं निरवपन्महाव्रीहीणाम्; ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत्' इत्येवमिन्द्राद्युद्देश्यकयागात् इन्द्रादिपदप्राप्तेः श्रुततया तद्वत् वचनबलात् सर्वोपपत्तेः। फलस्य भगवदधीनत्वेऽपि तदाज्ञयैव तदर्थं वस्वाद्याराधनमिति। अतो वस्वादिप्रीतिरिहोद्देश्यम्। न च उपसंहारे ब्रह्मोपनिषदं वेदेति ब्रह्मविद्यात्वं श्रूयत इति वाच्यम्; प्रथमप्रतीतवस्वादिमात्रोपासनतया मनुष्यादिविषये विद्याया लब्धावकाशत्वेन तत्र ब्रह्मपदस्य वेदपरत्वादिति पूर्वपक्ष्याशयः।

प्रीणनीयत्वं प्रीणयितृत्वञ्च संभवति । 'वसूनामेवैको भूत्वा' इत्यादिना वसुत्वादिप्राप्तेरेव मधुविद्याफलत्वेन वस्वादीनामेव सतां वस्वादित्व(त्य)-प्राप्तिकामनाया असंभवाच्च(वेन)ार्थित्वाद्यसंभवात् (वाच्च) । 'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति परब्रह्मव्यतिरिक्तस्य देवोपास्यत्वनिषेधेन ज्योतिश्शब्दिते ब्रह्मण्येवोपासन(ना)सद्भाव (संभव)ावगमाच्च मधुविद्यादिषु नाधिकार इति, "मध्वादिष्वसंभवादनधिकारं जैमिनिः", "ज्योतिषि भावाच्च" इति सूत्राभ्यां पूर्वपक्षं कृत्वा, "भावं तु बादरायणोऽस्ति हि" इति सूत्रेण सिद्धान्तः कृतः ।

अस्यायमर्थः-अधिकारस्य सद्भावं बादरायण आचार्यो मन्यते । अस्ति हि तेषामप्यर्थित्वादिसंभव इति । अयमाशयः—न हीयं विद्या वस्वादित्यादिमात्रपर्यवसिता ; अपितु तच्छरीरकपरमात्मपर्यन्ता । वस्वादीनामेव सतां स्वान्तर्यामिपरमात्मोपासनं [सं]भवत्येव । न चोपास्य-प्रतिपादकवस्वादिशब्दानां ब्रह्मपर्यन्तत्वे प्रमाणाभावः ; उपसंहारे, "ब्रह्मोपनिषदं वेद" इति श्रवणात् । वस्वादीनामेव सतां कल्पान्तरे वसुत्वा(वस्वा)दिप्राप्तिपूर्वकब्रह्मप्राप्तेरुद्देश्यत्वसंभवाच्च । लोके पुत्रिणामेव सतां जन्मान्तरेऽपि पुत्रित्वेप्साया दर्शनात् ।

---

सिद्धान्त्याशयस्तु ब्रह्मोपनिषदमित्यत्र ब्रह्मपदस्य वेदपरत्वे तद्वैयर्थ्यात् 'मा विराधिषि ब्रह्मणा', 'ब्रह्म प्रोवाच' इत्यभ्यस्तस्य ब्रह्मपदस्य मुख्यार्थग्रहणौचित्यात् उपासनस्य ब्रह्मविषयकत्वे अवगते, वस्तुतः सर्वस्यापि फलस्य साक्षात् परम्परया वा परब्रह्मप्रीत्यधीनतया तस्यैतदुपासनाराध्यत्वावगमेन आदित्यवस्वादिपदमविशेषात् विशिष्टवाचि ; देवमधुत्वोपजीवितृत्वादिकं तु विशेष्ये बाधात् विशेषणविश्रान्तं प्रतर्दनविद्यादिष्विवेति ।

नन्ु वस्वादिपञ्चगणोपजीव्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रयादित्यमधूपासनत्वान्मधुविद्यायाः, तस्याश्च विद्यायामादित्यस्यैवोपास्यतया आदित्यस्य तद्विद्याधिकारासंभवेऽपि वस्वादीनां कथमनधिकारशङ्का। न ह्यस्यां विद्यायां वस्वादीनामुपास्यत्वम्; अपितु तद्भोग्यादित्यस्यैव। **भाष्यकृता,** "मधुविद्यायामृग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वम्" इति पूर्वपक्षे. "वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते" इति सिद्धान्ते चोक्तत्वात्। न हि स्वोपासनवत् स्वोपजीव्यत्वेनान्यस्योपासनं विरुद्धम्; तथासति उपासनमात्रोच्छेदप्रसङ्गात्। सर्वेष्वप्युपासनेषु उपास्यगतस्वोपजीव्यत्वस्वसेव्यत्वस्वाधारत्वस्वान्तर्यामित्वादीनामनुसंधेयत्वात्। ततश्च वसूनामेव सतां स्वोपजीव्यपञ्चामृताश्रयादित्यविषयमधुविद्यानुष्ठानसंभवात् कुतोऽनधिकारशङ्केति चेत्—

उच्यते। 'वसूनामेवैको भूत्वा' इत्यादिना वसुत्वादिप्राप्तेः फलत्वेन (त्वादि) कीर्तनेन (कीर्तितत्वेन) मधुविद्यायां तत्क्रतुन्यायेन वस्वादीनामुपास्यत्वस्याप्यभ्युपगन्तव्यत्वात्। "**अथ तत ऊर्ध्वं उदेत्ये**त्यत प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यमुपदिश्यते। **अथ तत ऊर्ध्वं उदेत्ये**त्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थं ब्रह्म

---

प्राप्तस्यापि फलस्य पुनःप्रेप्साया आनुभविकत्वात् स्वस्य वस्वादेः रुद्रादिभावानुभाव्यफलान्तरसत्त्वाच्च स्वानाराध्यत्वमेव पूर्वपक्षे मुख्ययुक्तिः, न फलस्य प्राप्तत्वमित्याशयेन शङ्कते नन्विति।

उपास्यमुपदिश्यते'' इति कार्यावस्थोपासनदशायामादित्यवत् वस्वादीनामप्यविशेषेणोपास्यत्वस्य भाषितत्वात्, "अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सासंभवः'' इति आदित्यस्य वस्वादीनाञ्च तुल्यत्वस्य भाषितत्वाच्च मधुविद्याया आदित्योपासनत्व-पञ्चामृतोपासनत्व-वस्वाद्युपासनत्वरूपाकारत्रयवत्त्वात् न पूर्वपक्षोत्थित्यनुपपत्तिरिति द्रष्टव्यम्। ननु वस्ववस्थस्य ब्रह्मण उपास्यत्वसंभवेऽपि **तद्वसव उपजीवन्ती**ति निर्दिष्टमुपजीवितृत्वलक्षणं भोक्तृत्वं न ब्रह्मणः संभवतीति चेत्-उपजीवितृत्वस्यापि सद्वारकतया तत्र संभवात्। नन्वेवं, 'तद्वसव उपजीवन्ति' इत्यत्र वसुशब्दस्य तदन्तर्यामिपरत्वे **वसूनामेवैको भूत्वे**त्यत्रापि वसुशब्दस्य [वस्ववस्थ]ब्रह्मपरत्वं स्यात्। न च तद् युक्तम्; न ह्युपासकस्य [अपि] जीवस्य कल्पान्तरे वसुत्वप्राप्तिलक्षणसंसारदशायां वस्वाद्यवस्थब्रह्मभावोक्तिः संगच्छत इति चेन्न--- 'वसूनामेवैको भूत्वा' इत्यत्र यथाश्रुते बाधकाभावेन, ब्रह्मपरत्वे बाधकसद्भावेन च (संभावन) यथाश्रुतार्थस्यैवोपपन्नत्वादित्यलमतिचर्चया।

ननु, 'वसूनामेवैको भूत्वा', 'सकृद्दिवा हैवास्मै भवति' इति वाक्यद्वयानुसारेणानया विद्यया कल्पान्तरे कञ्चित् कालं वसुभावं प्राप्य पश्चात् ब्रह्म प्राप्नोतीत्यभ्युपगमो न युक्तः। तथासति इदानीं मधुविद्योपासकानां प्रायणानन्तरं फलप्राप्तिर्न स्यात्। कल्पान्तरभावि

---

यथाश्रुते बाधकाभावेनेति। तस्य वाक्यस्य फलपरत्वेनोपासनाकारसमर्पकवाक्यबृन्दे निवेशाभावादिति भावः। ब्रह्मपरत्वे बाधकं षष्ठीबहुवचनोक्तं बहुत्वं निर्धारणञ्च भा. प्र।

न्यायरक्षामणि-शिवार्कमणिदीपिकोक्तमालोच्य तत्रास्माकं हेयोपादेयविवेकाय विस्तरं करोति ननु वसूनामित्यादिना।

त्वात् वसुत्वस्य। न च स विलम्बः सोढव्य एवेति वाच्यम्—कल्पान्तरेऽपि वस्वादिभावप्रापकमधुविद्यानिष्ठानां तत्प्रापककर्मान्तरनिष्ठानाञ्चानन्तानां संभवेन सर्वेषां [च] युगपद्वस्वादिभावे वसुगताष्टत्वसंख्याविरोधप्रसङ्गेन, 'वसुत्वप्रापककर्मनिष्ठानामनन्तानां मध्ये विपाकानुसारेण केषाञ्चित् त्रिचतुरकल्पमध्ये वसुत्वादिप्राप्तिर्भवति ; केषाञ्चित् अनुष्ठितमधुविद्यानामपि सहस्रकल्पप्रतीक्षणमप्यस्ति' इत्यभ्युपगन्तव्यम्। न हीदृशः कश्चित् मुमुक्षुर्भवति। सहस्रकल्पपर्यन्तविलम्बमभ्युपगच्छतः कथं मुमुक्षुता ? हैरण्यगर्भान्तसकलभोगविरक्तिपूर्वकब्रह्मानन्दप्रेप्सालक्षणमुमुक्षाशाली हि ब्रह्मविद्यायामधिकरोति ; [ततश्च] वस्वादिपदाभिलाषिणः कथं मुमुक्षुता ; कथं [वा] ब्रह्मविद्याधिकार इति चेत्—

सत्यम्। ब्रह्मानन्दैकप्रेप्सुरेव मुमुक्षुः। अथापि यथा देहावसानकाले ब्रह्मानन्दैकप्रेप्सा मुमुक्षा, एवम्, 'वसुत्वावसाने ब्रह्मैव प्राप्नवानि' इति प्रेप्साऽपि ब्रह्मानन्दैकप्रेप्सा भवत्येव। शास्त्रबलाच्चेदृशविलम्बसहिष्णवोऽप्यधिकारिणः सन्तीत्यभ्युपगन्तव्यम्। तत्र च प्रारब्धवैचित्र्यमेव नियामकम्। अत एव—"याथातथ्यं स्वपरनियतं यच्च दिव्यं पदं तत् काराकल्पं वपुरपि विदन् कस्तितिक्षेत बन्धम्।" इत्युक्तरीत्या विवेकिनः कथं विलम्बसहिष्णुता—इत्यप्यपास्तम्। प्रारब्धमहिम्ना सर्वस्याप्युपपत्तेः।

वस्तुतस्तु, 'भ्रातॄणां मध्ये त्वमेकः' इति लौकिकोक्तेः भ्रातृभोगसाम्याभिप्रायत्ववत्, 'वसूनामेवैको भूत्वा' इत्यस्य [च वाक्यस्य] 'किञ्चित् कालमानुषङ्गिकवस्वादिभोगसाम्यमनुभूय तेन पथा परं ज्योतिरुपसंपद्यत'

---

कर्मनिष्ठानामिति। कर्म=मधुविद्याऽपि, अन्यदपि।

प्रारब्धमहिम्नेति। उक्तं हीदमप्याचार्यैः, "नियत्या वैयात्यं

इत्यभिप्रायत्वात् तादृशभोगसाम्यस्य च देहवियोगानन्तरमेव संभवान्ना-नुपपत्तिरित्यप्याहुः ॥

(२) ननु वस्वादिदेवताना विग्रहाभावेनोपासनसामर्थ्या संभवात् कथमुपासनाधिकारः । न हि देवादीनां शरीरवत्त्वे प्रमाण-मुपलभ्यते । न तावत् प्रत्यक्षानुमाने ; तस्य तदगोचरत्वात् । नापि, 'वज्रहस्तः पुरन्दरः', 'तेनेन्द्रो वज्रमुदयच्छत् ' इत्यादीनां प्रामाण्यम्; मन्त्रार्थवादानामनुष्ठेयार्थस्मृति–स्तुतिप्रयोजनकतया विग्रहादौ तात्पर्या-

---

नियमयितुमेवं प्रभवति" इति। इत्यप्याहुरिति । शिवार्कमणिदीपिका-याम् , 'वस्वादिभोगसाम्यं पूर्वपक्ष्यभिमतम् ; वस्वादित्वमेव सिद्धा-न्त्यभिमतम्' इति व्यवस्थाकरणममूलमनपेक्षितञ्चेतीह दर्शितं भवति। वस्वादित्वफलपक्षेऽपि पूर्वपक्षसंभवस्य प्राक् दर्शितत्वात्। मधुविद्याया अंशतोऽनुष्ठाने मानाभावेन एतद्विद्यानिष्ठस्य वसुरुद्रादित्यभाव-प्राप्तेरुत्तरोत्तरद्विगुणकालानुभाव्यायाः फलत्वस्यासदुपपादितत्वेन तावल्लाभस्य वस्वादिभोगसाम्यपक्ष एवैकस्मिन् कल्पे स्वरसत्वात् । 'ब्रह्मैव भवति' इतिवत् 'वसूनामेक एव भवति' इत्यस्य निर्वाहाच्च । अत्र किञ्चित्कालमात्रमित्युक्तेन एतन्मन्वन्तरात् प्राक् मधुविद्या-निष्ठो मन्वन्तरेऽस्मिन् पूर्णकालं फलमनुभवति यथा, तथा एतन्मन्व-न्तरमध्ये एतन्निष्ठः अत्र मन्वन्तरे यावान् कालोऽवशिष्टः,तावति काले पूर्ववदेकत्रिंशदंशात्मना विभक्ते सर्वमवान्तरं फलमनुभूय मुच्यते । तदिदमपूर्णत्वं न तदनिष्टम् , तथा ज्ञात्वैव तेन तदनुष्ठानात् । अस्या-प्रधानफलत्वादिति सूचितम् । आहुरित्यनेन, 'इदानीं वसूनामेव सतां कल्पान्तरे वस्वादित्वप्राप्तिश्च' इति भाष्यादिकमस्मिन् पक्षे क्लिष्टमक्लिष्टं वेति विमृश्यमिति सूच्यते। अत्र भाष्ये एकत्र आदिपद-प्रयोगात् एकस्यैककल्पे वस्वाद्यनेकतापत्तिप्रदर्शनात् भोगसाम्यमभि-मतं स्यादिति ।

भावेन तात्पर्यविषये शब्दस्याप्रामाण्यम् । अन्यथा श्वेतवर्णरजककर्तृकवस्त्रशोधनतात्पर्येण प्रयुक्तस्य, 'श्वेतो धावति' इत्यस्य शुनकसमीपगमनप्रतीत्युत्पादकत्वसंभवमात्रेण तत्रापि प्रामाण्यप्रसङ्गात् ।

ननु रेवत्याधारवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टक्रतुविधायके, 'रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति वाक्ये, 'रेवतीषु वारवन्तीयम्' इत्यंशस्य, 'रेवतीर्नः सधमाद' इति ऋक्त्रयाधारवारवन्तीयसामरूपे अग्निष्टोमस्तोत्रविशेषणे, तात्पर्याभावेऽपि, प्रामाण्यं दृष्टम् । न हि तत् विशेषणम्, 'सोमेन यजेत' इत्यादिविशिष्टविधिषु सोमलतादिविशेषणवत्, लोकसिद्धम्; नापि विधिसिद्धम्; 'कवतीषु रथन्तरं गायेत्' इति विधिवत्, 'रेवतीषु वारवन्तीयं गायेत्' इति विध्यदर्शनात् । न चास्यैव विशिष्टगोचरस्य विधेर्विशेषणविधावपि तात्पर्यं वक्तुं शक्यम् — विध्यावृत्तिप्रसङ्गात् । न चाऽऽक्षेपात् विशेषणप्रसिद्धिः—अन्योन्याश्रयात्=विशेषणप्रसिद्धौ सत्यां विशिष्टविधिः, विशिष्टविधिनैव विशेषणस्याक्षेप इति परस्पराश्रयापत्तेः । तस्मात् विशिष्टविधेर्विशेषणस्वरूपे तात्पर्याभावेऽपि, 'रेवतीषु वारवन्तीयम्' इति पदद्वयसमभिव्याहारस्यैव प्रामाण्यमभ्युपगन्तव्यमिति चेत्—

मैवम् । 'रेवतीषु वारवन्तीयम्' इति पदद्वयसमभिव्याहारलभ्यां रेवत्याधारवारवन्तीयप्रतीतिमुपजीव्य प्रवृत्तेन विशिष्टविधिना आक्षिप्तस्य,

---

**आक्षेपादिति । तद्विशेषणविशिष्टकिञ्चिद्विशेष्यविधानं तस्य विशेषणस्याप्रसिद्धौ नोपपद्यत इत्यन्यथानुपपत्त्येत्यर्थः ।**

**मैवमिति । अयं भावः—विशेषणस्य प्रतीत्यभावे विशिष्टविधाना-**

'रेवतीषु वारवन्तीयं कुर्यात्' इति विशेषणविधेरेव तत्र प्रमाणत्वेन, 'रेवतीषु वारवन्तीयम्' इति पदद्वयसमभिव्याहारस्याप्रमाणत्वात्। इयांस्तु विशेषः—'सोमलतादि विशेषणं मानान्तरसिद्धं सोमपदात् प्रतीयते। इह तु मानान्तरासिद्धमेव पदसमभिव्याहारात् प्रतीयते' इति। प्रतीयमानेऽपि विशेषणे विशिष्टविधेः प्रामाण्याभावः उभयत्राप्यविशिष्टः। ततश्च यथा[च] सोमप्रत्यायकं सोमपदं न सोमस्वरूपे प्रमाणम्, एवं 'रेवतीषु वारवन्तीयम्' इति पदद्वयसमभिव्याहारो रेवतीवारवन्तीयरूपविशेषणरूपार्थप्रत्यायकोऽपि न तत्र प्रमाणम्। अयञ्चापरो विशेषः- सोमलताद्रव्यस्य लोकसिद्धत्वात् तत्र यागसंबन्धित्वेनैव विधिः कल्प्यः; इह तु [रेवतीवारवन्तीयरूप]विशेषणस्वरूपस्यापि मानान्तरासिद्धत्वात् प्रतीयमानेऽपि तस्मिन् विशिष्टविधेः प्रामाण्याभावाच्च तत्सिद्ध्यर्थं स्वरूपे, स्तोत्रविशेषसंबन्धित्वे च विधिद्वयं कल्प्यमिति।

---

**संभवेऽपि समभिव्याहारस्य विशेषणप्रतीतिजनकत्वेऽपि न तत्प्रमाजनकत्वरूपं प्रामाण्यम्, तस्य विशेषणसत्ताधीनत्वात्। रेवत्याधारकवारवन्तीयरूपविशेषणस्य च विशेषणविधिकल्पनाधीनतदनुष्ठानायत्तत्वात् विशेषणविधिरेव तत्र प्रमाणमिति। प्रत्यायकोऽपीति। रेवतीष्विति सप्तम्याः कारकविभक्तित्वेन क्रियान्वयेऽपि सर्वत्र सप्तम्यर्थाधिकरणत्वस्य क्रियायां कर्तृकर्मान्यतरद्वारकत्वात् रेवत्याधारकवारवन्तीयप्रतीतिरिति भावः।**

**स्वरूपे इत्यन्तेनाधिकं विधिं प्रदर्श्य, 'सोमेन यजेत' इत्यत्रत्यविशेषणविधितुल्यं विधिं दर्शयति स्तोत्रविशेषसंबन्धित्वे चेति। अत्र परमसिद्धान्त्याशयस्तु विशेषणं द्विविधं विध्यधीनकर्तव्यत्वावगमसिद्धानुष्ठानायत्तात्मलाभम्, 'अग्नये पावकाय' इतिवत् स्वतःसिद्धञ्चेति।**

तस्मात् मन्त्रार्थवादानां स्वार्थे तात्पर्याभावात् न तेभ्यो देवताविग्रहसिद्धिः ।

ननु मन्त्रार्थवादानां विध्येकवाक्यतापन्नानां स्वार्थेऽप्यवान्तरतात्पर्यं संभवत्येव; दर्शपूर्णमासादिप्रधानविध्येक[वाक्य]तापन्नप्रयाजादिविधिवत इति चेत्—

सत्यम् । मानान्तराविरोधे प्रतीयमानार्थे तात्पर्यं संभवति; न तु तद्विरुद्धे । अन्यथा, 'यजमानः प्रस्तरः' इत्यत्रापि प्रतीयमानाभेदे तात्पर्यप्रसङ्गात् । अस्ति च मन्त्रार्थवादवशेन देवताविग्रहाभ्युपगमे मानान्तरविरोधः । देवताविग्रहाभ्युपगमे हि न्यायतौल्येन नानायागदेशे युगपदाहूतानामागमनस्य, अग्निप्रक्षिप्तभस्मीभूतहविःस्वीकारादेरप्यभ्युपगमात् प्रत्यक्षोपपत्तिविरोधः । अतो न देवताविग्रहे तात्पर्यं संभवति । अतो विग्रहाभावादुपासनास्वनधिकार इति पूर्वपक्षे प्राप्ते—उच्यते—

"तदुपर्यपि बादरायणः संभवात्" । **तत् ब्रह्मोपासनम् उपरि** मनुष्याणामुपरि देवादिष्वपि संभवतीति भगवान् **बादरायणो** मन्यते । तेषामप्यर्थित्वसामर्थ्ययोः संभवात् । अर्थित्वं तावत् आध्यात्मिकादिदुर्विषहदुःखाभितापात्, परस्मिन् ब्रह्मणि च निरस्तनिखिलदोषगन्धे अनवधिकातिशयासंख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादिज्ञानाच्च संभवति । सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया संभवति । पटुतरदेहेन्द्रि

---

प्रथमेऽपि स्वतःप्रामाण्यवादिनां समभिव्याहारजन्यज्ञानस्य प्रमात्वसिद्ध्या प्रामाण्यं तस्याक्षतम्। विशेषणविधिस्तु कर्तव्यतामात्रबोधक इति । तदिदं प्राप्तिविरोधयोरसतोरित्युपसंहारेऽनुसंधेयम् । तस्मादिति। यस्मिन्नर्थे यस्य तात्पर्यं नास्ति, तस्मिन्नर्थे तस्याप्रमाणत्वादित्यर्थः।

यादिमत्त्वञ्च सर्वेषु सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विध-सृष्ट्याम्नानात् सिद्धः। देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्रभृति-चतुर्दशलोकस्थभोगयोग्यदेहेन्द्रियादियोगायत्तः। ~था, 'देवत्वं गच्छन्ति, य एता उपयन्ति' इति देवत्वप्राप्त्यर्थक्रतुविध्यन्यथानुपपत्त्याऽपि देवताविग्रहवत्त्वसिद्धिः। ज्योतिष्टोमादिविध्यन्यथानुपपत्त्या देशान्तर-देहान्तरभोग्य-ऐहिकसुखविलक्षणस्वर्गशब्दोक्तसुखरू~तत्फलभोक्तृकर्मदेव (भोक्तृदेह)सिद्धेरभ्युगतत्वात्। देवतासायुज्यसालोक्यादिफलकर्मविध्य न्यथानुपपत्त्या देवताविग्रहाणां तद्भोग्यभोगोपकरणानामभ्युपगन्तव्यत्वाच्च।

"विरोधः कर्मणीति चेत्-न; अनेकप्रतिपत्तेर्दर्शनात्"। नन्वेवं मन्त्रार्थ-वादादिभिर्देवताया विग्रहाभ्युपगमे कर्मणि विरोधः प्रसज्यते। बहुषु यागेषु युगपदेकस्येन्द्रस्य विग्रहवतः, 'अग्निमग्न आवह' इत्यादिना आहूतस्य संनिधानानुपपत्तेर्विरोधः प्रसज्यते इति॥ तन्न; अनेकप्रतिपत्तेर्दर्शनात्। दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः।

"शब्द इति चेन्न; अतः प्रभवात् प्रत्यक्षानुमानाभ्याम्"। मा भूत् कर्मणि विरोधः। वैदिके तु शब्दे विरोधः प्रसज्यते। देवता-विग्रहाभ्युपगमे हि विग्रहस्य सावयवत्वेनानित्यत्वात्, इन्द्रादेरर्थस्य विनाशादूर्ध्वं, प्राक् उत्पत्तेश्च-तदर्थवाचिवैदिकशब्दानां सत्त्वे, शब्द-स्यार्थेन औत्पत्तिकः संबन्धो न स्यात्; शब्दस्वरूपस्यापि नाशे,

---

एता उपयन्तीति। पञ्चदश रात्रीरुपयन्ति पञ्चदशरात्रं सत्रमनुतिष्ठ-न्तीति यावत्। अयञ्च पञ्चदशरात्रः, 'चत्वारः पञ्चदशरात्राः' इत्युक्तेषु प्रथमः (ताम.ब्रा. २३.६.)। एतस्य फलम्, 'देवत्वं गच्छन्ति' इति।

अनित्यत्वं स्यात् । ततश्च, "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" इति सूत्रप्रतिपादितं शब्दार्थसंबन्धानां नित्यत्वं विरुद्ध्येत इति चेत्— न ; 'वेदेन नामरूपे व्याकरोत् सतासती प्रजापतिः', 'नामरूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः' इति प्रत्यक्षानुमानशब्दिताभ्यां श्रुतिस्मृतिभ्यामिन्द्राद्यर्थानां वेद-प्रभवत्वावेदनात् । यथा शिल्पिना शिल्पशास्त्रोदित[नाम]रूपाद्यनु-संधानपूर्वकं निर्मितं देवताप्रतिमादिकं पूर्वपूर्वसमानरूपम्, एवमिन्द्रा-द्यर्थोऽपि वेदोक्तनामरूपानुसंधानशालिना प्रजापतिना निर्मीयमाणः पूर्वपूर्वसमाननामरूप एव भवति। ततः समानरूपाभिव्यङ्ग्याकृतिवाचित्वात् इन्द्रादिशब्दानाम्, व्यक्तीनामनित्यत्वेऽपि जातिवाचिगवादिशब्दवत् इन्द्रादिशब्दानामपि जातिवाचितया नानित्यार्थसंयोगकृतो विरोध इत्यर्थः।

ननु, 'मन्त्रकृतो वृणीते', 'संहिताकारपदकारसूत्रकारब्राह्मणकारा-णाम्' (शि.म.दी), 'विश्वामित्रस्य सूक्तं भवति' इति मन्त्रादीनां कार्यत्व-

---

**औत्पत्तिकः सहजः, सांसिद्धिकः नित्य इति यावत् ।**

**रूपाभिव्यङ्ग्याकृतीति । रूपं=संस्थानम्। अस्मन्मते तदति-रिक्ताकृतेरभावेऽपि मीमांसकादिभिस्तदतिरिक्तनित्यजातिरूपाकृति-कथनात् तान् प्रति तथैवोक्तिः। न वेदनित्यत्वमिति। ननु पूर्वपक्षिणो मीमांसकस्यापि वेदनित्यत्वमिष्टमिति कथं तेन वेदनित्यत्वाक्षेपः, कथञ्च सूत्रे तान् प्रति वेदनित्यत्वस्थापनमिति न शङ्क्यम्। अर्थवादानां वाच्यार्थे तात्पर्यमिच्छतस्ते मन्त्रकृत्त्वसंहिताकारत्वाद्यर्थवादार्थेऽपि तात्पर्यस्यावश्यकतया वेदनित्यत्वं न सिद्ध्येदिति शङ्काभिप्रायात्। एवमुत्तरसूत्रेऽपि अर्थवादस्य वाच्यार्थतात्पर्ये प्राकृतप्रलयस्यापि स्वीकार्यतया वेदनित्यत्वं न स्यादिति शङ्कातात्पर्यं ग्राह्यम् ।**

श्रवणात् न वेदनित्यत्वमित्यत्राह—, "अत एव च नित्यत्वम्"। 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः' इति मन्त्रकृत्त्वेन प्रसिद्धानामपि वसिष्ठविश्वामित्रादीनां वेदजन्यत्वाम्नानात् मन्त्रकृत्त्वं मन्त्रद्रष्टृत्वमेव, न तु मन्त्रकर्तृत्वमित्यवसीयते। अतो वेदनित्यत्वस्य नानुपपत्तिः।

नन्वेवमपि प्राकृतप्रलये शब्दस्य तदुपादानभूताहङ्कारादेश्च नष्टत्वात् कथं वेदनित्यत्वम्? कथं वा सर्वेषां वेदशब्दप्रभवत्वम्? तत्राऽऽह "समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात् स्मृतेश्च"। कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तसमाननामरूपत्वस्य तदवस्थत्वादेव न शब्दानित्यत्वम्। 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्', 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु' इति श्रुतिस्मृतिभ्यां तथैव प्रतिपादनादेतस्य नित्यत्वमपौरुषेयत्वञ्च। इदमेव हि वेदस्यापौरुषेयत्वम्, यत् पूर्वपूर्वोच्चारणकर्मानुसंधानसापेक्षोच्चारणक्रमवत्त्वम्। तदिदानीन्तनवेदे सर्गाऽऽद्यवेदेऽपि समानम्। इयांस्तु विशेषः—भगवद्व्यतिरिक्ताः सर्वेऽपि पूर्वपूर्ववेदानुपूर्व्यनुभवजनितसंस्कारवशेन पूर्वानुपूर्वीं स्मृत्वा तथैवानुपूर्व्या वेदमुच्चारयन्ति भगवांस्तु संस्कारनिरपेक्षमेव पूर्वानुपूर्वीमनुसंधाय तथैवानुपूर्व्या वेदमुच्चारयतीति। इदमेव हि पौरुषेयप्रबन्धापेक्षया वेदस्य वैलक्षण्यं नित्यत्वञ्च।

ननु चतुर्मुखकर्तृकावान्तरकल्पसृष्टिविषयतयाऽपि, 'धाता यथापूर्वमकल्पयत्' इत्यादिप्रमाणानामुपपत्तौ स्वतन्त्रपरमात्मकर्तृकब्रह्मकल्पाद्य-

---

**ब्रह्मकल्पः। चतुर्मुखस्याहः सर्वं कल्पः। तत्र, यत्र तदुत्पत्तिः, स ब्रह्मकल्पः।**

समयप्रवृत्तवेदचतुर्मुखादिसृष्टेः समानानुपूर्वीकत्वसमाननामरूपकृत्यत्वादौ किं प्रमाणमिति चेत्— उच्यते । चतुर्मुखादेर्नामरूपकृत्यादीनि इतिहासपुराणादिभ्योऽवगत्य, 'एतादृशनामरूपकृत्यविशिष्टश्चतुर्मुखो भवानि' इत्येवंसंकल्पपूर्वकं भगवन्तमाराध्य तत्तत्पदं प्राप्नुवन्तीति हि शास्त्र प्रसिद्धिः । यदि हि कल्पान्तरे उत्पद्यमानश्चतुर्मुखो विलक्षणनामरूपकृत्यः स्यात्, तदा तस्य भगवदाराधकस्य वच्छितार्थसिद्ध्यभावात् तदिष्टसाधनत्वावेदकशास्त्रस्याप्रामाण्यमेव स्यात् । तत्तत्पदाभिलाषिणः प्रवृत्तिश्च कस्यापि न स्यात् । अतः प्राकृतसृष्ट्यावृत्तावपि यथापूर्वमेव सृष्टिरिति देवताधिकरणे स्थितमिति ॥

ननु अग्निलोकादूर्ध्वलोकवर्तिनामर्चिराद्यनतिवाह्यानां ब्रह्मोपासकदेवानामर्चिराद्यातिवाहिकचिन्तनरूपाङ्गासंभवात्, तदङ्गत्वस्य, "तच्छेषगत्यनुस्मृतियोगाच्च", "योगिनः प्रति स्मर्येते स्मार्ते चैते" इत्यादिष्वाविष्कृतत्वात्, तदङ्गहीनानां देवानां कथमङ्गिभूतब्रह्मविद्यायामधिकार इति चेन्न; आतिवाहिकचिन्तनस्य दृष्टार्थतया तत्तल्लोकवर्तिनां तत्तदूर्ध्वलोकवर्त्यातिवाहिकचिन्तनेनैव साद्गुण्योपपत्तेः । मृतयजमानकेष्टिकर्मणि सूक्तवाके यजमानस्यायुराशासनाद्यभावात्, अनपेक्षितम्, 'आयुराशास्ते' इत्यादिकमंशं विहाय अपेक्षितांशपाठस्याङ्गीकृतत्वात् तद्वदिहाप्यनपेक्षितातिवाहिकांशत्यागेन अपेक्षितस्वस्वलोकोर्ध्ववर्त्यातिवाहिकानामेव चिन्तनीयत्वोपपत्तेः ॥

---

इत्येवमित्यनेन रुद्रो भवानि, इन्द्रो भवानि, वसिष्ठो भवानीत्यादिसंकल्पग्रहणम् ।

ननु, 'तदुपर्यपि बादरायणः संभवात्,' 'मध्वादिष्वसंभवात्' इत्यधिकरणद्वयेन किं प्रयोजनम्; देवतानां देवताविशेषाणाञ्चार्थित्व-सामर्थ्यनिर्णयस्य मनुष्याणां प्रवृत्तिविशेषानौपयिकत्वात्। न च देवानामनेनाधिकरणद्वयेन किञ्चिदस्ति प्रयोजनम्। तेषां स्वकीयपटुतरदेहादिमत्त्वे अर्थित्वसद्भावनिर्णये च अधिकरणन्यायानपेक्षणादिति चेत्-उच्यते—'परं ब्रह्म देवानां वस्वादिदेवताविशेषाणाञ्चोपास्यं फलप्रदञ्चेति ईदृशमहिमविशिष्टतया उपासनकालेऽनुसंधेयत्वसिद्धिलक्षण-प्रयोजनसद्भावात्। देवताविग्रहासिद्धौ मधुविद्याया देवतापदप्राप्तिः फलमित्यपि न भवेत्। गत्यनुस्मृतौ अचेतनानामर्चिरादीनामेव मार्गपर्वत्वेन चिन्तनीयता स्यात्; नातिवाहिकदेवतानाम्। तथा, "भाक्तं वाऽनात्मवित्त्वात्" इति सूत्रोक्तन्यायेन ज्योतिष्टोमादिकर्मफलं भुञ्जानानाम्, 'तं देवा भक्षयन्ति' इति निरन्तराजानदेवकर्मकरभावावगत्या वैराग्यं न सिद्ध्येत। [मानान्तर]प्राप्तिविरोधयोरसतोर्मन्त्रार्थवादानां प्रतीयमानार्थे प्रामाण्यमस्तीति न्यायव्युत्पादनेन, 'प्लवा ह्येते अदृढा यज्ञरूपाः', 'एतत् तृतीयं स्थानम्' इत्यादिमन्त्रार्थवादैर्वैराग्यसंसिद्धिः' इत्यादीनि प्रयोजनानि द्रष्टव्यानि॥ प्रकृतमनुसरामः। ३-११

३-१२.

चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणो गायत्रीसादृश्यानुसंधानरूपा

श्रुतप्रकाशिकोक्तं प्रयोजनं प्रदर्श्य न्यायरक्षामण्याद्युक्तमप्याह देवताविग्रहेति। अवगत्या वैराग्यमिति। अवगत्यधीन वैराग्य-मित्यर्थः। प्राप्तिविरोधयोरिति। प्राप्तिः प्रमाणान्तरप्राप्तता। अप्राप्ते हि शास्त्रमर्थवत्।

तृतीये द्वादशः खण्डः

गायत्री वा इदँ सर्वं भूतं यदिदं किञ्च। वाग्वै गायत्री। वाग्वा इदँ सर्वं भूतं गायति च त्रायते च ॥ १ ॥

---

विद्या प्रस्तूयते—

'इन्द्रः शचीपतिः, वलेन पीडितः। दुश्च्यवनो वृषा, समित्सु सासहिः॥' इति गायत्री चतुष्पदा; एकैकस्य पादस्य षडक्षरात्मकतया षडक्षरपादवत्त्वेन षड्विधा च। एवं ब्रह्मणोऽपि सर्वभूतशब्दितात्मवर्ग एकः पादः; कर्मार्जितभोगस्थानरूपः पृथिवीलोक एकः पादः; भोगोपकरणं शरीरमेकः पादः; आत्मस्थित्यनुगुणप्रदेशविशेषरूपं हृदयमेकः पाद इति भूतपृथिवीशरीरहृदयानि चत्वारः पादाः। तत्र सर्वभूतलक्षणपादस्य ब्रह्मात्मकवाक्कर्तृकगानकर्मत्वत्राणकर्मत्वलक्षणं विधाद्वयम्; पृथिवीलक्षणस्य पादस्य सर्वभूतप्रतिष्ठात्वसर्वभूतानतिवर्त्यत्वलक्षणं विधाद्वयम्; शरीरहृदयलक्षणयोः पादयोः प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वलक्षणं विधाद्वयमेव, द्वयोरपि विधाद्वययोः भेदाभावात्। ततश्च [पर]ब्रह्मरूपा गायत्री भूतपृथिवीशरीरहृदयरूपपादचतुष्टयवत्तया चतुष्पदा, गानकर्मत्वत्राणकर्मत्व–सर्वभूतप्रतिष्ठात्व-सर्वभूतानतिवर्त्यत्व – सर्व[प्राणि]प्राणप्रतिष्ठात्वसर्वप्राणानतिवर्त्यत्वलक्षणविधाषट्कयुक्ततया षड्विधा च। अतः चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणि गायत्रीसादृश्यानुसंधानं कर्तव्यमिति प्रतिपादयति **गायत्री वा इदं सर्वं भूतं यदिदं किञ्च।** अत्र **गायत्री**शब्देन न प्रसिद्धा गायत्री

---

उक्ता प्रागादिदिग्वर्तिवस्वाद्यनुभाव्यादित्यमधुविद्या। प्रागादिसुषिगतादित्यादिद्वारपोपासनाङ्गकब्रह्मविद्या प्रस्तूयते गायत्रीति।

**अभिधीयते** । तस्याः भूतादिपादचतुष्टयसंबन्धाभावात् । 'तावानस्य महिमा' इति वक्ष्यमाणपुंसूक्तमन्त्रप्रतिपाद्यत्वाभावाच्च । अपितु परमात्मा । यथा **कुण्डपायिनामयने**, 'मासमग्निहोत्रं जुहो(हु?)ति' इति **अग्नि होत्र**शब्दः प्रयुज्यमानः तत्सादृश्यविशिष्टानुष्ठानार्थः, तथा **गायत्री-शब्दो** ब्रह्मणि प्रयुज्यमानः तत्सादृश्यानुसंधानार्थः । ततश्च **गायत्री-**शब्देन **ब्रह्मै**वाभिधीयते । **वै**शब्दोऽवधारणार्थः । ब्रह्मैव परिदृश्यमान-सर्वभूतात्मकमित्यर्थः । ततश्च ब्रह्मणो भूतलक्षणपादवत्त्वमुक्तम् । अथ **गायत्री**शब्दप्रवृत्तिनिमित्तमपि ब्रह्मण्युपपादयन् विधाद्वयमाह **वाग्वै....त्रायते च** । **वाग्वै गायत्री** । **गायत्री**शब्दितं गायत्रीसदृशं ब्रह्मैव वाग्रूपविशिष्टं भवतीत्यर्थः । 'शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः' इति पराशरस्मृत्याद्यनुरोधेन ब्रह्मण एव शब्दरूपत्वमिति भावः । ततश्च किमित्यत्राह **वाग्वा इदं...च** । वाग्रूपमेव ब्रह्म सर्वाणि भूतान्यभिधत्ते; हिताहितविधिनिषेधमुखेन त्रायते च । अतश्च ब्रह्मणो वाग्रूपस्य सर्वभूत-

---

तत्सादृश्यविशिष्टेति । इदमग्निहोत्रपदं नित्याग्निहोत्रसदृशार्थकम् । तेनास्य कर्मणः नित्याग्निहोत्रात् धर्मातिदेशसिद्धौ तदीयसर्वाङ्ग-विशिष्टापूर्वकर्मानुष्ठानसिद्धिरिति प्रकरणान्तरादिह कर्मभेद इति स्थितं पूर्वतन्त्रे (७-३-१; २-३-११.) ।

ब्रह्मण्युपपादयन्निति । अत्र विद्यायां श्रुतिव्याख्याप्रकारः सर्वोऽपि (ज्योतिरधिकरणे) टीकायां यादवप्रकाशमतनिराकरणा-वसरे कृतस्यानुवादरूप एवेतीदमग्रे वक्ष्यत एव । ननु गायत्रीपदेन सर्वभूतात्मकत्वानुपपत्त्या ब्रह्म मा ग्राहीत्येतदर्थमेव 'वाग्वै गायत्री' इति वाक्यप्रवृत्तिरस्तु । अतः सर्वभूतगानादिकर्तृत्वात् भूतात्मकत्व-मौपचारिकं गायत्र्यामिष्टमिति चेन्न—वक्ष्यमाणपुंसूक्तगानन्वयात् ।

**या वै सा गायत्री इयं वाव सा येयं पृथिवी ।**

---

गानत्राणकर्तृत्वाभ्यां गायत्रीशब्दवाच्यत्वम्, भूतात्मकपादवतो ब्रह्मणो (वाक्कर्तृक)वाग्रूपब्रह्मकर्तृकगानत्राणकर्मत्वाभ्यां द्वैविध्यञ्चोक्तं भवति ।

उक्तार्थानुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाऽऽह—**या...पृथिवी** । उक्तरूपविशिष्टप्रकृतधर्मिपरो यच्छब्दः । **या** सर्वभूतरूपैकपादयुता **गायत्री** गायत्र्याख्यं ब्रह्म, तदेव प्रसिद्धा पृथिवी-

---

ननु छन्दोभिधानादिति सूत्रे टीकान्ते शङ्कितरीत्या सर्वभूतात्मकत्वस्य गायत्रीछन्दसि बाधात् आकाशाधिकरणनयेन गानत्राणरूपयोगार्थमात्रविवक्षया गायत्रीपदं ब्रह्मपरं भवेत् । तत् मा भूत् । गायत्रीपदेन वाच्यं छन्द एव गृहीत्वा तत्सादृश्यरूपं प्रवृत्तिनिमित्तं ग्राह्यमित्युपपादयितुम्, 'वाग्वै गायत्री' इत्युक्तमिति किं न स्यात् । अतः, 'ब्रह्मैव वाग्रूपविशिष्टं भवति' इत्यर्थवर्णनं शब्दमूर्तिधरस्येत्यादिप्रमाणोदाहरणञ्च कुत इति चेन्न; गायत्रीसादृश्यरूपार्थविवक्षायाः सैषा चतुष्पदेत्यादित एव स्पष्टं सिद्धेः अत्र छन्दसो वाचः सर्वभूतगानत्राणकरत्वमपि तद्गतब्रह्मात्मकत्वाधीनमिति तत्त्वज्ञापनस्य युक्तत्वात् । अत्रेदं बोध्यम्—सर्वभूतात्मकपादे वाक्कर्तृकगानत्राणकर्मत्वरूपविधाद्वयमेव प्रकृते वक्तव्यम्, पादान्तरे विधान्तरवत् । एवं सति, उपरि पादत्रयगतरीत्या, 'इदं हि सर्वं भूतं गायत्र्या गीयते च त्रायते च' इति निर्देशे कार्ये, 'वाग्वै गायत्री वाग्वा' इति रीत्यन्तरादरणम्, छन्दसो गायत्र्याः सामान्यतो वाग्रूपत्वेनैव सर्वभूतगानकर्तृत्वमाञ्जस्येनेति ज्ञप्तये, ब्रह्मणो वक्ष्यमाणचतुष्पात्त्वषाड्विध्याभ्यामिव गानत्राणकर्तृत्वतोऽपि गायत्रीत्वमिति ज्ञप्तये च । तत्र वाक्पदस्य ब्रह्मपर्यन्तता च पूर्वं पश्चाच्चैवात्रापि गायत्रीपदस्य ब्रह्मपरत्वादित्यलमधिकेन ।

अस्याँ हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥
या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरम् ।

---

त्यर्थः । कथं पृथिव्या ब्रह्मात्मकत्वमित्यत्राह **अस्यां हीदं सर्वं भूतं प्रतिष्ठितम्** । ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम् । न हि केवल पृथिव्याः सर्वभूतधारणशक्तिरस्तीत्यर्थः । प्रतिष्ठात्वञ्च नियतमित्याह **एतामेव नातिशीयते** । पृथिवीं भूतानि नातिवर्तन्ते । कर्मवश्यात्मनां हि प्रतिष्ठात्वादेव पृथिवी नियमेनाशक्यातिक्रमणेत्यर्थः । पृथिवीमय-ब्रह्माण्डोदरे हि भोक्तृवर्गः परिवर्तते, न ततोऽन्यत्रेति भावः । एवं द्वितीयः पादः, भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूप विधाद्वयञ्चोक्तम् ।

अथ तृतीय पादमाह **या वै सा पृथिवी...शरीरम्** । अत्र पुरुषशब्दः शरीरविशिष्टजीवपरः । **पृथिवी** पृथिवीरूपपादविशिष्टा **या** गायत्री=गायत्र्याख्य ब्रह्म, सा **शरीरं** शरीराख्यपादविशिष्टेत्यर्थः । भूतपृथिव्योर्गायत्रीसामानाधिकरण्येन निर्दिष्टतया भूतपृथिवीशब्दयोः ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वात् अग्रन्थप्रायन्यायेन अत्र शरीरलक्षण-पादान्तरनिर्देशकस्य शरीरशब्दस्य निष्कर्षकशब्दत्वेऽपि सामानाधि-करण्येन निर्देशो युक्तः । शरीरस्य ब्रह्मात्मकत्व प्राणप्रतिष्ठात्वतदनति-वर्त्यत्वाभ्यामुपपादयति **अस्मिन्....शीयन्ते** । **नातिशीयन्ते** नाति-

---

तृतीयं पादमिति । तृतीये तुरीये च वाक्ये गायत्रीपदानिर्देशेऽपि शरीरहृदययोस्तत्पादत्वं सैषा चतुष्पदेत्यादितोऽवसीयते ।

अग्रन्थप्रायन्यायेनेति । शाबरभाष्ये, 'प्राये वचनाच्च' (२-२ ११) इति सूत्रे, 'प्रधानकर्मप्राये वचनं प्रधानकर्मतामुपोद्बलयति, यथा अग्रन्थप्राये लिखितं दृष्ट्वा भवेत् अयमग्रन्थ इति मतिः' इत्युक्तम् । तन्मूलकोऽयं सर्वत्र ग्रन्थप्रायन्यायव्यवहारः । एवं पूर्वं वाक्यदेऽपि द्रष्टव्यम् । युक्त इति । 'रसोऽहमप्सु (गी. ता. चं)' इतिवदिति ।

अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते ॥ ३ ॥

यद्वै तत् पुरुषे शरीरमिदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे हृदयम् । अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते ॥ ४ ॥

सैषा चतुष्पदा षड्विधा गायत्री । तदेतदृचाऽभ्यनूक्तम् ॥ ५ ॥

---

वर्तन्त इत्यर्थः ।

चतुर्थं पादमाह **यद्वै....हृदयम्** । [**पुरुषे शरीर** पुरुषशब्दितशरीरविशिष्टजीवनिष्ठ]शरीराख्यपादविशिष्ट **यत्** गायत्र्याख्य ब्रह्म, तदेव **हृदयं** हृदयशरीरकम् हृदयलक्षणपादकमित्यर्थः । हृदयस्य ब्रह्मात्मकत्वमुपपादयति **अस्मिन्...शीयन्ते**। प्राणशब्देन प्राणापानादयः इन्द्रियाणि वा (च) कथ्यन्ते । तेषां हृदयसंबन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वम् । एवं तृतीयचतुर्थपादौ, प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयञ्चोक्तम् ।

एवमुक्तं चतुष्पात्त्वं षाड्विध्यञ्च निगमयति **सैषा चतुष्पदा षड्विधा गायत्री** ॥ नन्वेवं चतुष्पात्त्वे ब्रह्मणः परिच्छिन्नत्वं स्यादिति शंकायाम् उक्तस्य महिम्न एतावत्त्वप्रतिषेधिकामृचमुदाहरति **तदेतदृचाभ्यनूक्तम्** । **तदेतत्** गायत्र्याख्यं ब्रह्म, अभिमुखीकृत्य, ऋचा-

---

प्राणापानादय इन्द्रियाणि वेति । त्रयोदशखण्डे हृदयसुषिषु प्राणापानादिनिर्देशात् चक्षुरादिकतिपयेन्द्रियकथनाच्च तत्समानाभिप्रायकत्वस्यात्र युक्तत्वादिति भावः । इदं सूचयितुमेव प्राणपदव्याख्यानं पूर्वमकृत्वाऽत्र कृतम् ।

उक्तस्य महिम्न इति । पुरुषसूक्ते, 'स भूमिं विश्वतो वृत्वा' इत्यारभ्य, 'एतावानस्य महिमा' इत्युक्तम् । पृथिव्यां भूतशरीरहृदयाभ्यन्तर्गतानि । अतः, 'तावानस्य महिमा' इति पृथिवीतदन्तर्गतपदार्थकृतचतुष्पात्त्वरूपमहिमानुवाद इति व्यक्तं श्रुतप्रकाशिकायाम् । गायत्र्याख्यं ब्रह्मेति । ब्रह्माभिप्रायेण तदेतदिति नपुंसकत्वमिति

**तावानस्य महिमा ततो ज्यायाँश्च पूरुषः ।**
**पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ इति ॥ ६ ॥**

---

प्युक्तमित्यर्थः । तां (एव) ऋचं पठति **तावानस्य महिमा** । पूर्वोक्तः सर्वोऽपि एतस्य **महिमा** नियाम्यवर्गः । **ततो ज्यायांश्च पुरुषः** । पूर्वोक्तमहिमापेक्षया **पुरुषो ज्यायान्** [परमात्मा ज्यायान् ।] ततोऽधिकमहिमशालीत्यर्थः। **पादोऽस्य सर्वा भूतानि** । अत्र **सर्वा भूतानीति** कार्यजगदन्तर्गता अचित्संसृष्टाश्चेतना उच्यन्ते । ते सर्वे **पादः** अंशमात्रमित्यर्थः । सर्वशब्दात् परस्य शेः, 'सुपां सु लुक्' इति लुकि नलोपे [च] रूपम् । **त्रिपादस्यामृतं दिवि** । अत्र द्युशब्दः समष्टिव्यष्टितत्त्वबहिर्भूताप्राकृतस्थानविशेषपरः । अप्राकृते स्थानविशेषे **अस्य** परमात्मनः अमृतं पादत्रयमित्यर्थः । त्रिपात्त्वञ्चाप्राकृतैर्भोग्यभोगस्थानभोगोपकरणविशेषैर्वा, भूषणा(स्त्रा)स्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैः भगवदनुभवमात्रपरैर्नित्यसिद्धैश्च मुक्तैश्च आत्मभिर्वा संभवति ।

अथ चतुर्थपादत्वेनोक्तस्य उपास्यतया वक्ष्यमाणस्य हृदयस्य स्तुत्यर्थं हृदयाकाशस्य बाह्याकाशाभेदेन महत्त्वं वक्तुं बाह्याकाशस्य

---

व्यक्तं तत्रैव । उपरि, यद्वै तद् ब्रह्मेति इति स्थितस्य तदेतदिति पूर्वेण सहैकवाक्यताऽप्यस्तु इत्याशयः स्यात् । अत्र तदेतत् पादवत्त्वम्= पादपरिच्छिन्नत्वं अनूक्तम् अपरिच्छिन्नत्वानुबन्धेन ऋचोक्तमित्यर्थवर्णनमपि संभवति । मुक्तैश्चेति । मुक्तानां सर्वभूतानीति पूर्वदशया गृहीतत्वे तु दिव्यनगरादिपालनाधिकृतनित्यगणग्रहणम् ।

चतुर्षु पादेषु हृदयस्य किमिति विशिष्य स्तुतिरित्यत्राह उपास्यतया वक्ष्यमाणस्येति । यद्यपि तदेतत् पूर्णमिति गायत्रीब्रह्मोपा-

यद्वै तत् ब्रह्मेति इदं वाव तत् योऽयं बहिर्धा पुरुषादाकाशः। यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥ अयं वाव स योऽयमन्तः पुरुषे आकाशः। यो वै सोऽन्तः पुरुष आकाशः ॥ ८ ॥ अयं वाव स योऽयमन्तर्हृदय आकाशः। [यो ह वै (यो वै) सोऽन्तर्हृदय आकाशः]

---

ब्रह्मतुल्यत्वं सामानाधिकरण्येनाऽऽह **यद्वै तद् ब्रह्मेति....अन्तःपुरुष आकाशः**। स्वकार्यव्यापकत्वामूर्तत्वाचलत्वादिभिः ब्रह्मतुल्यबाह्याकाशाभिन्नः पुरुषशब्दितशरीरेऽन्तर्वर्तमान आकाश इत्यर्थः। बाह्यान्तराकाशयोर्भेदसत्त्वेऽपि धर्म्यैक्याभिप्रायेणाभेदनिर्देशः। **यो वै सोऽन्तः पुरुष आकाशः**। एवं ब्रह्मतुल्यबाह्याकाशाभिन्नः शरीरान्तराकाशो य इत्यर्थः। **अयं वाव स योऽयमन्तर्हृदय आकाशः**। तादृशशरीरान्तःस्थाकाशाभिन्नो हृदयावच्छिन्नाकाश इत्यर्थः। पूर्ववत् धर्म्यैक्यादिति भावः। [एवं ब्रह्मतुल्यबाह्याकाशभिन्नपुरुषान्तर्गताकाशाभेदं हृदयाकाशस्योक्त्वा एतादृशमहिमशाली हृदयाकाश इति स्तौति **यो वै सोऽन्तर्हृदय आकाशः**। अन्तर्हृदये वर्तमानो य आकाशः, अयं सः तादृशमहिमशालीत्यर्थः] अनया च हृदयाकाशस्तुत्या चतुर्थपादत्वेनोक्तं हृदयं स्तुतं भवति।

---

सनमुच्यते। अथ च द्वारपोपासनमेवोपरि (१३) वक्ष्यते—अथापि हृदयच्छिद्रदेवतारूपद्वारपोपासनविधानात् एवमुक्तिः। अत्रार्थात्, 'यथा अपरिच्छिन्नस्याप्याकाशस्य शरीरहृदयादिकृतपरिच्छेदः तथा ब्रह्मणोऽपि चतुष्पात्त्वकल्पनमिति नापरिच्छिन्नत्वक्षतिरिति ब्रह्मणि व्योमवद्भावो दर्शितो भवतीत्यपि ध्येयम्। अत्र मूले, 'अयं वाव स योऽयमन्तर्हृदय आकाशः, तदेतत् पूर्णमप्रवर्ति' इत्यानुपूर्व्येव शाङ्करे, टीकायां, भावप्रकाशिकायाञ्च लक्ष्यते। न तु, 'यो वै सोऽन्तर्हृदय

**तदेतत् पूर्णमप्रवर्ति(प्रवृत्ति)। पूर्णामप्रवर्तिनीं श्रियं लभते, य एवं वेद**

**इति तृतीयाध्याये द्वादशः खण्डः**

**तृतीये त्रयोदशः खण्डः**

**तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः। स योऽस्य प्राङ्**

---

एवं चतुष्पदः षड्विधस्य ब्रह्मणः प्रपञ्चान्तर्भावेन परिच्छिन्नत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवर्तित्वगुणकतयोपासनं मोक्षफलं विदधाति **तदेतत् पूर्णमप्रवर्ति**। पूर्णत्वमपरिच्छिन्नत्वम् **अप्रवर्तित्व**मचलत्वम्, **पूर्णामप्रवर्तिनीं श्रियं लभते, य एवं वेद**। अनन्तस्थिरा श्रीः मुक्तैश्वर्यमेव। तदुपासीनो मुक्तिं भजतीत्यर्थः। ३-१२.

अथोक्तब्रह्मोपासनाङ्गत्वेन द्वारपोपासनं विधीयते **तस्य.... देवसुषयः। तस्यैतस्य** चतुर्थपादत्वेन निर्दिष्टस्य प्रकृतस्य हृदयस्य देवताधिष्ठानभूतानि पञ्च द्वारच्छिद्राणीत्यर्थः। **स योऽस्य...वेद**। प्राणवृत्तिविशेषाप्यायितचक्षुरनुग्राहकादित्यस्य हृदयप्राक्सुषिरद्वारपालस्य

---

आकाशः' इति वाक्यं तन्मध्ये लक्ष्यते। उपनिषद्भाष्यपाठस्तु द्वेधा लक्ष्यते। तादृशमूलपाठसत्त्वे तस्य तदेतत् पूर्णमित्युत्तरवाक्येनैकवाक्यताकल्पनया, 'यः सोऽन्तर्हृदय आकाशः तत् तदभिन्नं एतत् गायत्रीब्रह्म-बाह्याकाशाद्यभिन्नहार्दाकाशाभिन्नम् अपरिच्छिन्नत्वेऽप्याकाशवत् हृदयादिना परिच्छिद्यमानं ब्रह्म वस्तुतः पूर्णमप्रवर्ति' इति व्याख्यानमपि संभवति। अथापि तस्य पाठस्य टीकादौ अदर्शनात्, तदेतत् पूर्णमित्यस्य चतुष्पात् षड्विधं ब्रह्मेत्येव टीकायां व्याख्यानात्, माध्वरीत्या तादृशमूलपाठादरणेऽपि, 'यो वै सोऽन्तर्हृदय आकाशः' इत्यत्रैवावान्तरवाक्यद्वयकल्पनया, योऽयमन्तर्हृदय आकाशः, अयं सः उक्तमहिमशालीति टीकाऽविरोधेन योजना कृता अधिकपाठे इति ध्येयम्।

सुषिः, स प्राणः, तच्चक्षुः, स आदित्यः। तदेतत् तेजोऽन्नाद्यमित्युपासीत। तेजस्व्यन्नादो भवति, य एवं वेद ॥ १ ॥

अथ योऽस्य दक्षिणः सुषिः, स व्यानः, तच्छ्रोत्रम्, स चन्द्रमाः। तदेतत् श्रीश्च यशश्चेत्युपासीत। श्रीमान् यशस्वी भवति, य एवं वेद॥

अथ योऽस्य प्रत्यङ् सुषिः, सोऽपानः, सा वाक्, सोऽग्निः। तदेतत् ब्रह्मवर्चसमन्नाद्यमित्युपासीत। ब्रह्मवर्चस्यन्नादो भवति, य एवं वेद॥

अथ योऽस्योदङ् सुषिः, स समानः, तन्मनः, स पर्जन्यः। तदेतत् कीर्तिश्च व्युष्टिश्चेत्युपासीत। कीर्तिमान् व्युष्टिमान् भवति, य एवं वेद ॥ ४ ॥

अथ योऽस्योर्ध्वः सुषिः स उदानः, स वायुः, स आकाशः। तदेतदोजश्च महश्चेत्युपासीत। ओजस्वी महस्वान् भवति, य एवं वेद ॥

---

तेजोन्नाद्यतयोपासने उपासकः स्वयमपि तेजस्वी अन्नादो भवतीत्यर्थः। तदेतदिति आदित्यस्य तेजोन्नाद्यापेक्षया नपुंसकलिङ्गनिर्देशः। [तेजस्वित्वं लावण्यम्] एवमुत्तरत्रापि।

अथ योऽस्य...वेद। श्रीमान् संपत्तिमान्। ब्रह्मवर्चसं वृत्ताध्ययनजं तेजः। पर्जन्यः देवताविशेषः। व्युष्टिः देहकान्तिः। ओजः बलम्। महत्त्वं महः। आकाशश्च देवताविशेषः।

---

स प्राणः, तच्चक्षुः, स आदित्य इति। सुषिः प्राणः, प्राणश्चक्षुः, चक्षुरादित्य इत्यर्थः। अभेदोऽयं यथायथमौपचारिक इति व्यक्तम्। नपुंसकेति। नन्वेवं निर्वाहः तदेतत् कीर्तिश्च व्युष्टिश्चेत्युपरितनवाक्ये न घटते। अतः तदेतदिति प्राणचक्षुरादिसमाहारतया तावद्भिन्नहृदयपरतया वा निर्वाह्यमिति चेन्न – उपरि, 'ते वा एते पञ्च ब्रह्मपुरुषाः' इति द्वारपानां विशिष्य ग्रहणात् देवताभूतानाञ्च तेषामुपासने प्राधान्यस्य युक्तत्वात् आदित्याद्युपासनपरत्वं स्वीकृत्य

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः । स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद, अस्य कुले वीरो जायते । प्रतिपद्यते स्वर्गं लोकम्, य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ॥ ६ ॥

अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्त-

---

**ते....द्वारपाः** । **त एते** उक्तगुणविशिष्टाः आदित्यचन्द्राग्नि पर्जन्याकाशाख्याः **ब्रह्मपुरुषाः** ब्रह्मसंबन्धिनः पुरुषाः **स्वर्गस्य लोकस्य** भगवल्लोकस्य हृदयाकाशाख्यस्य द्वारपालकाः । यद्वा भगवल्लोकस्य **द्वारपाः** आतिवाहिकाः । **स य....**। **अस्य कुले वीरो जायते** । वीरः पुत्रो जायते । विद्यावीर्यसंपन्नो जायत इत्यर्थः । आनुषङ्गिकं फलमुक्त्वा प्रधानफलमाह **प्रतिपद्यते...**। भगवल्लोकद्वारपालकोपासनया अनिवारितः सन् भगवल्लोकं प्रतिपद्यत इत्यर्थः ॥

एवं गायत्रीविद्याप्रकृतस्य द्युसंबन्धिनः सकलफलप्रदस्य परस्य ब्रह्मणः आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतीरूपत्वेनोपासनाविधानायाऽऽह **अथ यदतः....लोकेषु** । 'तथाऽक्षरात् संभव-

---

नपुंसकत्वं कथमपि नेयमिति टीकाशयात् । स उदानः स वायुरिति । पूर्वं चक्षुरादीन्द्रियकथनादत्र वायुपदं वाय्वाप्यायितत्वगिन्द्रियपरं स्याच्चेत्, 'चक्षुः श्रोत्रं मनो वाक् त्वक्' इति तैत्तिरीयपाठोक्तमत्रोक्तं स्यात् । ननु गायत्र्युपासनफलं खलु भगवल्लोकप्राप्तिः । तत् कथं द्वारपरूपाब्रह्मोपासनफलमित्यत्राह अनिवारितः सन् इति । तत्फलस्यैतत्फलत्वेन कीर्तनेन तदङ्गमेतदिति ज्ञाप्यत इति भावः । एवञ्च वीरजन्म आनुषङ्गिकं फलम् ।

गायत्रीविद्याप्रकृतस्येति । मध्ये य एवं वेदेति सकृत्सकृदुक्त्या

**मेषूत्तमेषु लोकेषु, इदं वाव तत् यदिदमस्मिन् अन्तःपुरुषे ज्योतिः ।**
**तस्यैषा दृष्टिः ॥ ७ ॥ यत्रैतदस्मिन् शरीरे सँस्पर्शेनोष्णिमानं**

---

तीह 'विश्वन्' इत्यत्र जगदन्तर्वर्तिव्यष्टिजाते विश्वशब्दप्रयोगात् **विश्व-शब्दो** व्यष्टिपरः । **सर्वशब्दः** परिशेषात् समष्टितत्त्वपरः । ततश्च **अतः परो दिवः** अप्राकृतस्थानविशेषस्योपरिष्टात् समष्टिव्यष्टिबहिर्भूतेषु **अनुत्तमेषु** स्वावधिकोत्तमरहितेषु उत्तमस्थानविशेषेषु, 'तस्य भासा सर्वमिदं विभाति' इत्यवभासकतया ज्योतिश्शब्दितः परमात्मा यो दीप्यत इत्यर्थः । **अत्र यच्छब्दस्य** सर्वनामत्वेन प्रकृतपरामर्शितया प्रकृतं त्रिपाद् ब्रह्म परामृश्यते । **इदं....ज्योतिः।** **तत्** दिवः परस्तात् दीप्यमानं त्रिपाद्ब्रह्म, यदिद**मस्मिन्नन्तःपुरुषे** शरीरस्यान्तः ज्योतिः, **इदं वाव**=कौक्षेयज्योतिरेव। कौक्षेयज्योतिश्शरीरकमेवेत्यर्थः। 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥' इति स्मरणात् । ततश्च तदात्मकत्वानुसंधानं कर्तव्यमित्यर्थः ।

**तस्यैषा दृष्टिः । तस्य** परमात्मनः शरीरभूतस्य जाठराग्नेः **एषा दृष्टिः** इदं दर्शनमित्यर्थः । **यत्र....उष्णिमाणं विजानाति ।** [यत्र यदा अस्मिन् शरीरे हस्तस्पर्शेन उष्णिमानं विजानाति । इति

---

**कौक्षेयज्योतिःकथनानन्तरम्, 'य एवं वेद य एवं वेद' इति द्विरुक्त्या, 'ततो भूय इति ततो भूय इति' इति प्रागुक्तानन्तरं तावत्पर्यन्तमेकविषयकमित्यवधार्यते ॥ अथ यदत इति दिवः अत इति विशेषणं, 'त्रिपादस्यामृतं दिवि', 'स्वर्गं लोकम्' इति प्रागुक्त-परामर्शात् । तेन यत्पदमिवेदमपि उक्तब्रह्मैक्यं ज्योतिषः साधयतीति ध्येयम् । मूले परः=परतः ।**

विजानाति। तस्यैषा श्रुतिः, यत्रैतत् कर्णावपिगृह्य, निनदमिव, नद्थुरिव, अग्नेरिव [प्र]ज्वलत उपशृणोति।

तदेतत् दृष्टञ्च श्रुतञ्चेत्युपासीत। चक्षुष्यः श्रुतो भवति, य एवं

---

यत्] यत् औष्ण्योपलम्भनमित्यर्थः। [उपलभ्यमानस्योष्णस्पर्शस्य जाठराग्निसंबन्धित्वात् तत्स्पर्शसाक्षात्कार एव तत्साक्षात्कार इत्यर्थः।]

तस्यैषा श्रुतिः...उपशृणोति। यत्र यदा पुरुषः स्वकर्णौ अङ्गुलीभ्यामपिधाय निनदमिव रथघोषमिव, नद्थुरिव नदथुमिव ऋषभकूजितमिव, बहिर्ज्वलतोऽग्नेः शब्दमिव च शृणोति। इति यत्, तदे(तत्)व जाठराग्निश्रवणम्। आन्तरस्य शब्दस्य जाठराग्निसंबन्धित्वात् तच्छ्रवणमित्यर्थः।

तदेतद् दृष्टं च श्रुतं चेत्युपासीत। तदेतत् परमात्मशरीरभूतं कौक्षेयज्योतिः उक्तरीत्या दृष्टत्वश्रुतत्वाभ्यां गुणाभ्यामुपासीतेत्यर्थः। तस्य फलमाह चक्षुष्यः श्रुतो भवति, य एवं वेद।

---

चक्षुष्य इति। ननु संस्पर्शेनेति त्वगिन्द्रियदृष्टत्वमुष्णिम्न उक्तम्। ततः त्वगिन्द्रियदृष्टत्वोपासनफलं कथं चक्षुष्यत्वमिति चेन्न; उष्णिम्नस्तथात्वेऽपि उपासनस्य सामान्यतो दृष्टत्वमात्रविषयकत्वात् स्वस्य दर्शनीयरूपत्वात्मकचक्षुष्यत्वसंपत्तेः। न च दृष्टमित्यस्य प्रत्यक्षसामान्यविषय इत्यर्थस्वीकारे श्रुतमिति व्यर्थमिति वाच्यम्—स्पर्शस्य द्रव्येण सहेन्द्रियग्राह्यत्वात् कौक्षेयज्योतिषोऽप्यंशतः प्रत्यक्षस्य सिद्धान्ते वायोरिव स्वीकार्यत्वात्, शब्दस्य च द्रव्यं विनैव श्रोत्रग्राह्यत्वात् दृष्टमित्यनेन साक्षात् प्रत्यक्षविषय(द्रव्य)त्वोपासनं श्रुतमिति प्रत्यक्षविषयशब्दवत्त्वोपासनञ्चोच्यत इति वैलक्षण्यात्। एवञ्च तत्स्पर्शसाक्षात्कार एव तत्साक्षात्कार इति भाष्यपाठे स्पर्श-

वेद य एवं वेद ॥ ८ ॥ इति तृतीयाध्याये त्रयोदशः खण्डः ।

---

चक्षुष्यत्वमाभिरूप्यम् । चक्षुषे हित इत्यर्थे, 'शरीरावयवाच्च' इति यत् । श्रुतत्वं कीर्तिमत्त्वम् । द्विरुक्तिर्विद्यासमाप्त्यर्था ।

उक्तश्रुत्यर्थः सर्वोऽपि ज्योतिरधिकरणे श्रुतप्रकाशिकायां स्पष्टः ॥

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते—

'अथ यदतः परो दिवो ज्योतिः' इति वाक्ये ज्योतिश्शब्दितं प्रसिद्धमग्न्यादिज्योतिरेव, कौक्षेयज्योतिषैक्याध्यासस्य भौतिकज्योतिष्येवोपपत्तेः । दीप्तेः रूपवद्विषयत्वेन नीरूपे परमात्मनि दीप्तेरसंभवात् । 'दिवः परः' इति द्युमर्यादत्वस्यापि निर्मर्यादे परमात्मन्यसंभ(न्यभा)वात् । 'लोकेषु' इत्याधारबहुत्वस्यापि निराधारे असंभवात् । चक्षुष्यत्वश्रुतत्वरूपाल्पफलश्रवणाच्च । रूपवद्विषयदीप्ति–द्युमर्यादत्व–आधारबहुत्व-कौक्षेयज्योतिरध्यास – चक्षुष्यत्वश्रुतत्वरूपाल्पफलोपासनोपास्यत्वरूप – वाक्यशेषश्रुतलिङ्गानुगृहीतज्योतिश्श्रुत्या प्रसिद्धमग्न्यादिज्योतिरेवेहोपदिश्यत इति पूर्वपक्षे प्राप्ते उच्यते—

'ज्योतिश्चरणाभिधानात्' । द्युसंबन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव । 'पादोऽस्य सर्वा भूतानि' इति मन्त्रे द्युसंबन्धिनः सर्वभूतचरणत्वाभिधानात् । तस्यैव द्युसंबन्धिनः इहापि द्युसंबन्धित्वेन प्रत्यभिज्ञानात् । यच्छब्दस्य सर्वनामत्वेन प्रकृत-

---

साक्षात्काररूप एव तत्साक्षात्कारः, न तु रूपसाक्षात्काररूपः इत्यर्थः । कौक्षेयज्योतिष स्पर्शेन सहैवोपलम्भात्; रूपेण सहानुपलम्भात् । तच्छब्दश्रवणमेव तच्छ्रवणमित्यस्य तु द्रव्यस्य श्रोत्राग्राह्यत्वात् तच्छ्रवणत्वं तदीयशब्दश्रवणे औपचारिकमित्यर्थ इति ।

परामर्शित्वस्यैव युक्ततया द्युसंबन्धित्वेन प्रकृतत्रिपाद्ब्रह्मपरामर्शस्यैव युक्तत्वात् । फलार्थितया परमात्मन्येव कौक्षेयज्योतिश्शरीरकत्वानुसंधानस्योपपत्तेः, रूपवद्विषयदीप्तिद्युनयदित्वलोकाधारत्वादीनां अन्तरादित्यविद्यान्यायेन विग्रहविशिष्ट एवोपपत्तेः, भासकत्वप्रवृत्तिनिमित्तकज्योतिश्शब्दस्यापि तत्र वृत्तिसंभवात् ज्योतिश्शब्दितः परमपुरुष एव ।

**'छन्दोभिधानान्नेति चेन्न तथाचेतोर्पणनिगमात्; तथा हि दर्शनम् ।'** पूर्वत्र, 'गायत्री वा इदं सर्वम्' इति गायत्र्याख्यच्छन्दस एव प्रकृतत्वात् तस्यैव, 'पादोऽस्य सर्वा भूतानि' इति सर्वभूतचरणत्वाभिधानात् न परब्रह्मणः प्रकृतत्वम् , येन यच्छब्दश्रुत्या तत्परामर्शः स्यात् इति चेत् , न— तत्र गायत्रीशब्देन न छन्दः परामृश्यते । अपितु ब्रह्मण एव गायत्रीचेतोर्पणमिह निगम्यते । ब्रह्मणि गायत्री सादृश्यानुसंधानं फलायोपदिश्यत इत्यर्थः । चतुष्पदश्च ब्रह्मणः चतुष्पदया गायत्र्या सादृश्यसंभवात् । तथा अन्यत्रापि सादृश्यात् छन्दोभिधायी शब्दः अर्थान्तरे प्रयुज्यमानो दृश्यते । यथा संवर्गविद्यायाम् अग्निसूर्यजलचन्द्रवायु--वाक्चक्षुःश्श्रोत्रमनःप्राणरूपेषु दशसु दशत्वसंख्यासाम्यात् , 'सैषा विराडन्नादी' इति छन्दोवाचिनो विराट्छब्दस्य प्रयोगो (तद्वत् ) दृष्टः । **'भूतादिपादव्यपदेशोपपत्तेश्चैवम्'** । भूतपृथिवीशरीरहृदयलक्षणपादचतुष्टयस्य, 'सैषा चतुष्पदा' इति प्रतिपादितस्य छन्दोरूपायां गायत्र्यामसंभवात् गायत्रीशब्देन ब्रह्मैवाभिधीयते । अतो गायत्रीशब्दि(ब्दाभिहि)तं त्रिपात् ब्रह्मैव ज्योतिर्वाक्येऽपि यच्छब्दश्रुत्या पूर्वप्रत्यभिज्ञापकद्युसंबन्धित्वलिङ्गानु-

तृतीये चतुर्दशः खण्डः

**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ।**

---

गृहीततया प्रतिपाद्यते । **उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ।**' पूर्ववाक्ये. 'त्रिपादस्यामृतं दिवि' इति दिवोऽधिकरणत्वेन निर्देशात् ज्योतिर्वाक्ये, 'दिवः परः' इति अवधित्वेन निर्देशात् न प्रत्यभिज्ञा संभवति इति चेन्न—वृक्षाग्रे वर्तमाने श्येने, वृक्षाग्राच्छ्येनः, वृक्षाग्रे श्येनः इति पञ्चमीसप्तम्योः प्रयोगदर्शनवत् इहाप्युपपत्तेरिति भाव इति स्थितम् ॥ ३-१३. प्रकृतमनुसरामः ।

**शाण्डिल्यविद्या** प्रस्तूयते— **सर्वं खल्विदं...उपासीत** । जायत इति **जम्** । लीयत इति **लम्** । **जलशब्दौ** डप्रत्ययान्तौ । अनितीति **अन्** । अनिति=जीवतीत्यर्थः । क्विबन्तो विजन्तो वाऽयं शब्दः । तस्य जलान् **तज्जलान्** । **इति**र्हेत्वर्थः । **सर्व**शब्दः सर्वशरीरकपरः । **इद**मित्येतत् ब्रह्मणः, सर्वस्य वा विशेषणम् । अतश्च तज्जत्वात्, तल्लत्वात्, तदनत्वात् सर्वात्मकं ब्रह्मेति शान्तः सन् उपासीतेत्यर्थः । अत्र तज्जत्वतल्लत्वे स्थूलचिदचिच्छरीरकब्रह्मगते । तदनत्वरूपं (तदनुरूपे) तन्नियाम्यत्वं तु न ब्रह्मगतम् । ब्रह्मणस्तदसंभवात् । अपितु चिदचिन्मात्रगतमिति द्रष्टव्यम् ।

---

**तज्जत्वात्...सर्वात्मकं ब्रह्मेति । सर्वस्येत्यादिः । 'ब्रह्मणो जातत्वात् ब्रह्मणि लीनत्वात् ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगत्' इति भाष्यरीतिरिह भाव्या, न ब्रह्मगतमिति । तदिदमत्र भाष्यादौ, 'कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च' इति टीकायाञ्च स्पष्टम् । अत्र वाक्येऽयमंशो विधीयते, अयं नेति**

**भगवता भाष्यकृता,** "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति सर्वोत्पत्तिस्थिति(?)प्रलयकारणत्वेन सर्वस्याऽऽत्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीतेति उपासनं विधाय" इति भाषितम्। **व्यासार्यैश्च,** "ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य, 'सर्वभूतात्मके तात जगन्नाथे जगन्मये। परमात्मनि गोविन्दे मित्रामित्रकथा कुतः' इत्युक्तरीत्या रागद्वेषादिरहितस्सन् वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थः" इत्युक्तम्।

वक्ष्यमाणगुणकं ब्रह्मेति वदतां **व्यासार्याणा**मयमाशयः—सर्वं खल्विति वाक्योक्तं सार्वात्म्यं तु नोपास्यगुणः। उत्पत्तिशिष्टसार्वात्म्यगुणावरुद्धे मनोमयत्वादिवक्ष्यमाणगुणविधानानुपपत्तिप्रसङ्गात्।

---

**विवेकाय भाष्यादिकं प्रमाणयति भगवतेति। उत्पत्तिशिष्टेति। उत्पत्तिवाक्योपदिष्टेत्यर्थः। यत्र कर्मस्वरूपं विधीयते, तत् उत्पत्तिवाक्यम्। धर्मिमात्रस्येति। यदि धर्मिणो ब्रह्मणोऽप्युत्पत्तिवाक्येऽत्र अश्रुतत्वेनानन्वयः, तर्हि रूपाश्रवणात्, संभवति रूपवति वाक्ये कर्मविधाने नीरूपे तद्विधानं न युक्तमिति उपासनविधिरप्यत्र न स्यात्। उपासेर्नियमेन कर्माकाङ्क्षत्वात्तु अन्यत्रान्वितमपि ब्रह्म आकाङ्क्षाबलात् कर्मतयेष्यते; न तथा सर्वात्मकत्वमप्याकांक्ष्यमिति। ननु अग्निरहस्योपक्रमे, 'सर्वं खलु' इत्यादिस्थाने 'सत्यं ब्रह्मेत्युपासीत' इति श्रवणात् सत्यत्वविशिष्टब्रह्मविधानं स्वीकार्यम्। सत्यत्वञ्च प्रकृतानुरोधात् सत् ति यम् इति श्रुत्यन्तरकृतविभागानुसारेण च चिदचित्सर्वान्तर्यामित्वरूपमेवेति अत्रापि सर्वात्मकत्वं विवक्षितमिति चेन्न—स्वरसाकाङ्क्षाविरहेणात्र तदविवक्षया मनोमयत्वादिगुणविधानाविरोधात्। श्रुत्यन्तरबलेनैव तस्याप्युपास्यगुणतया स्वीकारेऽपि प्रकृतवाक्ये तस्याविवक्षणीयत्वात्।**

न चोपासनोत्पत्तिवाक्यश्रुतस्य सार्वात्म्यस्य अविवक्षा कथमभ्युपगन्तव्येति वाच्यम्— 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्यन्तस्य वाक्यस्य खलुशब्दकृतेन प्रसिद्धवन्निर्देशेन एकवाक्यत्वस्य निवारितत्वात् । न हि, 'उपासीत खलु' इति वचनव्यक्तिर्घटते । अतः सार्वात्म्यस्योपासनोत्पत्तिवाक्यश्रुतत्वाभावेन, 'शान्त उपासीत' इति वाक्ये उपास्याकाङ्क्षायां पूर्ववाक्यप्रतिपन्नस्य ब्रह्मरूपधर्मिमात्रस्यैवोपास्यतयाऽन्वयः, न तु सार्वात्म्यविशिष्टस्य । ततश्चोत्पत्तिशिष्टसार्वात्म्यानवरोधात् न वक्ष्यमाणमनोमयत्वादिगुणानन्वयशङ्का । "सर्वात्मकं ब्रह्मोपासीत" इति तदर्थनिर्देशकभाष्येऽपि सर्वात्मकत्वं नोपास्यगुणतया निर्दिष्टम्। अपितु उपास्यब्रह्मणः स्वरूपकथनमात्रपरमिति । एतच्च सर्वमपि तैः कण्ठत एव वर्णितञ्च ।

ननु, 'ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितस्सन् वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थः' इति व्यासार्यैरेवोक्तत्वात्, तदेकवाक्यत्वसंभवे, 'तज्जलानिति' इत्यन्तस्य पृथग्वाक्यत्वकल्पनाऽयोगात्, सार्वात्म्यस्योत्पत्तिवाक्यविहितत्वेऽपि मनोमयत्वादीनामुत्पत्तिशिष्टगुणाविरोधिनामन्वये दोषाभावाच्च वाक्यभेदकल्पनं वा, शाण्डिल्यविद्यायां सार्वात्म्यस्यानुपास्यत्वकल्पनं वा व्यर्थमिति चेन्न— उपासीतेत्यनेन वाक्यैकवाक्यत्वाभ्युपगमेऽपि पदैक(प्रकारान्तरेणैक)वाक्यत्वनिराकरणे दोषाभावात् । शान्तिहेतुतयाऽन्वितस्य सार्वात्म्यस्योपास्यत्वे प्रमाणाभावादिति व्यासार्याभिप्रायात् । ननु ब्रह्मणः सर्वात्मकत्वात् यत्र क्वचित् क्रियमाणस्यापि द्वेषादेरात्मद्वेषपर्यवसन्नत्वेनायुक्तत्वात् शान्तः सन्नुपासीतेत्युक्ते, ब्रह्मोपासीतेति कथमवगम्यते, सर्वं खल्विदं ब्रह्मेत्यस्य शमविध्यर्थ-

**अथ खलु क्रतुमयः पुरुषः। यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेत प्रेत्य भवति।**

---

वादभूतस्योपास्यसमर्पकत्वाभावादिति चेत्—सत्यम्—शमविध्यर्थतया निर्दिष्टस्यापि ब्रह्मण उपास्याकाङ्क्षापूरकत्वस्यापि संभवात्। अन्यार्थतयापि स्ववाक्यनिर्दिष्टं ब्रह्म विहायोपास्यान्तरकल्पनस्यानुचितत्वात्। 'मूलतः शाखां परिवास्योपवेषं करोति' इत्यत्र 'मूलत' इत्यस्य शाखा परिवासनेऽपादानतयाऽन्वितस्यापि आकाङ्क्षावशेन, 'उपवेषं करोति' इत्यनेनाप्यन्वयाभ्युपगमादिति द्रष्टव्यम्।

विहितमुपासनं स्तौति—**अथ खलु.... भवति**। "तं यथा यथोपासते, तथैव भवति" इति श्रुत्यन्तरादिह लोके पुरुषः **यथाक्रतुः**

---

मूलत इति। अयमर्थो मी ४-२-३. द्रष्टव्यः। दर्शे शाखामाहृत्य तत्र मूलांशात् अग्रांशं पृथक्कृत्य मूलमुपवेषं करोति। अग्रभागरूपां शाखां वत्सापाकरणे, मूलांशरूपमुपवेषञ्च कपालोपधाने उपयुङ्क्ते।

स्तौतीति। भाष्ये, अथ खल्वित्यादिवाक्यं गृहीत्वा, 'यथोपासनं प्राप्यसिद्धिमभिधाय' इति व्याख्यातत्वात्, 'स्तुतयेऽनुमतिर्वा' इति सूत्रे विद्यायाः 'न कर्म लिप्यते नरे' इत्यलेपकत्वरूपवास्तवार्थमादाय स्तुतिकथनवत् अत्रोपासनस्य स्वविषयप्रकारप्रापकत्वरूपवास्तवार्थेन स्तुतिकथनमिति ध्येयम्। एवञ्च उपासनम्, यथोपासितफलप्राप्तिश्च क्रमेण कथयित्वोपास्याकारस्तदनुरूपः, स क्रतुमित्यादिनोपदेक्ष्यते। अस्य तत्क्रतुवाक्यस्यार्थवैशद्याय श्रुत्यन्तरं गृह्णाति तं यथा यथेति। तत्र उपासत इति प्रयोगादिह क्रतुशब्द उपासनपर इति विशदम्। अत्रैव आदौ शान्त उपासीतेत्युपासिप्रयोगात्, 'इति यस्य स्यादद्धा' इति अन्ते निश्चयात्मकज्ञानकथनाच्च मध्येऽयं क्रतुशब्द उपासनज्ञानपर इत्यवसीयत एव। 'उपासते, भवति' इति क्रमेण

स क्रतुं कुर्वीत ॥ १ ॥ मनोमयः प्राणशरीरो भारूपः सत्य-

यथोपासनः, तथैवेतः प्रेत्य अमुष्मिन् लोके भवति । ततो हेतोः पुरुषः **क्रतुमयः** क्रतुप्रधानः, उपासनप्रधान इत्यर्थः । तदुश्चोपासनस्यैव हिततमत्वात् सर्वथाऽनुष्ठेयमित्यर्थः ।

एवं विहितं ब्रह्मोपासनं मनोमयत्वादिगुणान्तरविधानाय अनुवदति **स क्रतु कुर्वीत** । **सः** उपासकः **क्रतु** ब्रह्मण उपासनं कुर्वीतेत्यर्थः । गुणानेवाऽऽह—**मनोमयः** परिशुद्धमनोमात्रग्राह्यः। विवेकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतमनोमात्रग्राह्य इत्यर्थः । **प्राणशरीरः** जगति सर्वेषां प्राणानां धारकः । प्राणो यस्य शरीरम्=आधेयं विधेयं शेषभूतश्च स **प्राणशरीरः** ; आधेयत्वविधेयत्व-

बहुवचनैकवचनप्रयोगात्, 'उपासकाः पूर्वत्र कर्तारः, उपास्यः उत्तरत्र कर्ता' इति स्पष्टम् । तथाचोपासका उपास्यं येन प्रकारेणोपासते, तत्तत्प्रकारः स फलकाले तेषां भवतीति तद्वाक्यार्थः । तदनुसारेण प्रकृतवाक्येऽप्यर्थस्य वर्ण्यत्वे स्थिते, प्रेत्येति ल्यबन्तसमानकर्तृकत्वस्य अत्र भवतीति पदे आवश्यकत्वेन उपास्यस्य परमात्मनो भवतिकर्तृत्वायोगेन, भवतीत्यत्र 'अनु' इत्युपसर्गद्योत्यार्थान्तर्भावकल्पनया तथा भवति, तादृशमनुभवति, तादृशमभिसंभवतीत्यर्थो ग्राह्यः । एतमितः प्रेत्याभिसंभवितास्मीति वक्ष्यमाणत्वात् । यदि तु—यथाक्रतुः=यादृशप्राप्तिप्रकारकोपासनवान्, तथा=तादृशप्राप्तिमानेव भवतीत्यर्थ इष्यते, तदापि तात्पर्यमेकमेव। शाङ्करसूत्रभाष्यादौ, 'तं यथायथोपासते, तदेव भवति' इत्येव श्रुत्यानुपूर्वी तत्रतत्र। तथैव च माध्यन्दिनशतपथेऽपि (१०-५-२) । तत्र प्रकरणे चोपास्यस्यैव भवतिक्रियाकर्तृत्वं विस्पष्टम् । एवमप्यत्र, श्रीभाष्ये च तदेवेत्यत्र तथैवेति पाठस्यैवेष्टौ मुद्गलोपनिषद्गतवाक्याभिप्रायेणेति ध्येयम् ।

संकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्व-
मिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥

शेषत्वानामेव शरीरशब्दप्रवृत्तिनिमित्तत्वात् । **भारूपः** भास्वररूपः । 'आदित्यवर्णं तमसः परस्तात्', 'पश्यते रुक्मवर्णम्' इत्यादिवाक्य-प्रतिपन्नाप्राकृतस्वासाधारणनिरतिशयकल्याणगुणगणनिरतिशयदीप्तियुक्त-विग्रहशालीत्यर्थ. । **सत्यसंकल्पः** अप्रतिहतसंकल्पः । **आकाशात्मा** आकाशवत् सूक्ष्मस्वच्छस्वरूपः । सकलेतरकारणभूतस्याव्याकृताकाशस्याऽऽत्मभूत इति वा **आकाशात्मा** । स्वयञ्च प्रकाशते, अन्यांश्च प्रकाशयतीति वा **आकाशात्मा** । **सर्वकर्मा** । क्रियत इति कर्म । सर्वं जगत् यस्य कर्म, असौ **सर्वकर्मा** । सर्वा वा क्रिया यस्याराधनमसौ **सर्वकर्मा** । **सर्वकामः** । काम्यन्त इति कामाः भोग्यभोगोपकरणादयः । ते परिशुद्धास्तस्य सन्तीत्यर्थः (परिशुद्धा यस्य स **सर्वकामः**) । **सर्वगन्धः सर्वरसः** । 'अशब्दमस्पर्शम्' इत्यादिना प्राकृतगन्धरसादिनिषेधात् अप्राकृताः स्वासाधारणाः निरवद्याः निरतिशयाः कल्याणाः स्वभोग्य-भूताः सर्वविधाः गन्धरसास्तस्य सन्तीत्यर्थः । **सर्वमिदमभ्यात्तः** । उक्तं सर्वमिदं कल्याणगुणजातम् **अभ्यात्तः** स्वीकृतवान् । 'भुक्ताः ब्राह्मणाः' इतिवत् कर्तरि क्तप्रत्ययः, अर्शआद्यजन्तो वा । **अवाकी** । **वाकः** उक्तिः। सोऽस्य नास्ति इत्यवाकी । कुत इत्यत्राह **अनादरः** । अवाप्तसमस्त-कामत्वेनाऽऽदर्तव्याभावात् आदररहितः, अत एवावाकी । परिपूर्णैश्वर्य-

---

अर्शआद्यजन्तो वेति । एतत्पक्षे अभ्यात्त इति भावे क्तप्रत्ययः । अग्निरहस्ये सर्वदिगनुप्रभूतत्वरूपगुणान्तरस्यापि कथनात् सर्वमिदमभ्यात्त इतीदं न सर्वव्यापित्वरूपम्, किन्तु सर्वांशाभ्यात्तित्वस्वरूप-

एष म आत्मा अन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा । एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः ॥

सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदय एतत् ब्रह्म ।

एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचि-

---

त्वात् ब्रह्मादिस्तम्बपर्यन्तं निखिल जगत् तृणीकृत्य जोषमासीन इत्यर्थः। **एष म आत्मा...तण्डुलाद्वा** । मदीये हृदये व्रीह्याद्यपेक्षया अणुत्वेन अल्पत्वेन एष परमात्मा उपासनार्थमवस्थित इत्यर्थः। तथानुसंधानं कर्तव्यमिति भावः । अन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारमनुसंधेयं निर्दिशति **एष म आत्माऽन्तर्हृदये ज्यायान्....लोकेभ्यः**। अन्तर्हृदये विद्यमानोऽपि स्वरूपतो निरतिशयपरिमाण इत्यर्थः । **सर्वकर्मा... अनादरः** । उक्तोऽर्थः । एवम्भूतं परं ब्रह्म परकारुण्येनास्मदुज्जिजीवयिषयाऽस्मद्धृदये संनिहितमित्यनुसंधातव्यमित्याह **एष म आत्माऽन्तर्हृदये एतत् ब्रह्म** ।

यथोपासनमीदृशं परमात्मानम्, 'अस्माच्छरीरात् समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तरीत्या देशविशेषविशिष्टं प्राप्तास्मीति निश्चयरूपमनुसंधानं कर्तव्यमित्याह **एतमितः**

---

मिति ध्येयम्। 'तण्डुलाद्वा' इत्येतदनन्तरेण 'एतद् ब्रह्म' इत्यन्तेन तत्प्राप्याकारप्रतिसंधापनेन तस्य परत्वमनुभाव्य तादृशस्य तस्य केवलाश्रितबृहत्तापादकानवधिककारुण्यमात्रकृतोऽस्मदन्तर्हृदये प्रवेश इति ज्ञाप्यते ।

अत्र वाक्येऽनुसंधानस्य कर्तव्यतालाभप्रकारं दर्शयति

**प्रेत्याभिसंभवितास्मीति** । अत्र **इति** इत्यस्य **स क्रतुं कुर्वीते**त्यनेनान्वयः । **मनोमयः प्राणशरीर** इत्यारभ्य, **एतमितः प्रेत्याभिसंभवितास्मी**त्येतत्पर्यन्तोऽनुसंधानप्रकारः ।

अत्र च **इति**शब्दनिर्दिष्टो मनोमयत्वादिगुणगतः क्रमविशेष एक एव विधीयते । मनोमयत्वाद्युपास्यगुणानां तु आक्षेपतो विधानम् , पृष्ठगतसर्वताविधानादिव पृष्ठानाम् । ततश्च, 'प्राप्तानुवादेन मनोमय-

---

अत्र इतीत्यस्येति। अयं भावः भाष्ये, 'स क्रतुं कुर्वीतेति गुणविधानार्थमुपासनमनूद्य' इत्युक्तत्वात् कुर्वीतेति विधिर्नोपासनांशे इति बुद्धम् । अथ, 'स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य', 'हृदये संनिहितमितीदमनुसंधानं विधाय', 'प्राप्तिनिश्चयानुसंधानञ्च विधाय' इति विधेयांशानां विशिष्य निर्देशात्, अभिसंभवितास्मीति इत्यत्र इतिशब्दस्य कुर्वीतेत्यत्रान्वयो व्यज्यते। उपरि च, 'इति यस्य स्यात्' इति वाक्यमुपसंहारात्मकमिति भाष्य एव दर्शितम् । तेन इतिशब्दस्य तत्राप्यन्वय इष्टः। ननु 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः'। न चाऽऽरुणयैकहायन्येत्यत्र समानाधिकरणनिर्देशबलात् आरुण्यैकहायनीत्वविशिष्टैकद्रव्यविधिवदिहोपपत्तिः । अत्र ब्रह्मरूपविशेष्यांशस्यापि उपासीतेत्यत्रैव विहिततया मनोमयत्वादिधर्माणामेव विधेयत्वेन वैषम्यादित्यत्र दीक्षितोक्तं द्विविधं समाधिमादौ दर्शयति अत्र चेति । गुणगतः क्रमविशेष इति । गुणानुसंधानक्रम इति यावत् । पृष्ठानामिति । 'विश्वजिता यजेत' इति वाक्येन 'विश्वजिद्यागस्य विहितत्वात् तदुद्देशेन पृष्ठस्तोत्राणां पृष्ठाख्यसामविशेषाणां वा, तद्गतसर्वतायाश्च, 'विश्वजित्सर्वपृष्ठः' इति वाक्येन विश्वजिदुद्देशेन विधाने वाक्यभेद इति विमृश्य पृष्ठगतसर्वतामात्रविधानम् , पृष्ठानां पार्ष्ठिको विधिरित्युक्तं सप्तमे(७.३ ३.), तद्वदिति भावः। एवं विशेषणविधिकल्पनया विधानमुक्तम्। अथ श्रूयमाणविधिनैव सर्वविधिम्

वाद्यनेकगुणविधाने वाक्यभेदः' इति शङ्का प्रत्युक्ता। यद्वा विधेयानां बहुत्वेऽपि क्रमरूपविधेयतावच्छेदकैक्यान्न वाक्यभेदः। 'यदग्नये च प्रजापतये च' इति वाक्ये देवतात्वरूपविधेयतावच्छेदकैक्येन वाक्यभेदस्य तान्त्रिकैः परिहृतत्वात्। केचित्तु—प्राप्तोपासनानुवादेन अभ्युदयेष्टिवाक्यवत् प्रयोगविधित्वसंभवान्न वाक्यभेद इति वदन्ति।

---

अदोषश्च दर्शयति यद्वेति। क्रमरूपेत्यविवक्षितम्। क्रमो वा भवतु, अन्यो वा भवतु; कश्चिदयमितिशब्दप्रतिपाद्यधर्म इति। यदग्नये चेति। एतदर्थः न्यायप्रकाशे, तद्व्याख्याने अस्मदीये मीमांसासुधास्वादे च द्रष्टव्यः। एतद्दृष्टान्तस्य यथातथाभावेऽपि अत्र विवक्षितांशो नानुपपन्नः। इतिशब्दस्य प्रकारवाचित्वात् 'मनोमय' इत्यारभ्य 'अभिसंभवितास्मि' इत्येतावत्पर्यन्तकथितप्रकारस्य सर्वस्य एकेन इतिशब्देनोक्तस्य कुर्वीतेति विधावन्वयेमानेकार्थविधानाभावात्। नन्वस्तु तावदिहैवं परिहारः। समानप्रकरणे अग्निरहस्ये कथम्? तत्र, 'सत्यं ब्रह्मेत्युपासीत' इति पूर्वमुपासनस्य ब्रह्मणश्च विहितत्वात्, उपरि, 'स आत्मानमुपासीत मनोमयं प्राणशरीरं...सर्वा अनु दिशः प्रभूतं सर्वमिदमभ्याप्तमवाक्कमनादरम्' इति प्राप्तानुवादेनानेकविधानात्। न च तत्र इतिशब्दादिरस्ति इत्याशङ्क्य तदुचितं प्रकारं दर्शयति केचित्तु इति। षष्ठे (६.५.१), 'यस्य हविर्निरुप्तं चन्द्रमा अभ्युदियात्' इत्यादिवाक्यमादाय, नात्र दर्शयागातिरिक्तयागविधिः दर्शादिसंबन्धिहविर्द्रव्यप्रत्यभिज्ञानात्, किं तु उक्तदेवतापनयेन देवतान्तरोद्देश्यको विलक्षणाकारः दर्शप्रयोगभेद इत्युक्त्वा द्रव्यदेवताद्यनेकविधानप्रयुक्तो वाक्यभेदः प्रयोगभेदात् अनेकगुणविशिष्टविलक्षणप्रयोगरूपैकार्थविधानान्न भवतीत्युक्तम्; तद्वदिति भावः। अयं भावः—प्रधानकर्मविधिस्तावत् त्रिविधः—उत्पत्तिविधिः, अधिकारविधिः, प्रयोगविधिश्चेति। कर्मस्वरूपस्याज्ञातस्य ज्ञापनम्

उत्पत्तिविधिः। तस्य फलसंबन्धबोधनम् अधिकारविधिः। तस्य सर्वाङ्गविशिष्टस्य कर्तव्यताविधानं प्रयोगविधिः। न च कालकर्तृदेशक्रमादीनां प्रयोगान्वयिगुणानामेव प्रयोगभेदकत्वमिति द्रव्यदेवतावैलक्षण्यमादायाभ्युदयेष्टौ कथं प्रयोगभेद इति वाच्यम्–कालदेशादीनां प्रयोगैकान्वयिगुणत्वमित्येव विशेषात्। सर्वाङ्गविशिष्टप्रधानविषयकप्रयोगेऽनन्वयिगुणस्य कस्याप्यभावेन यत्किञ्चिद्भेदेऽपि प्रयोगभेदसंभवात्। वस्तुतश्चन्द्रमोभ्युदयकालस्य दर्शे प्रागप्राप्ततया तद्विशिष्टकर्तृकत्वविधानात् तादृशगुणभेदप्रयुक्तप्रयोगभेदविधाने, तत्रापूर्वदेवताद्यन्वयादित्याशयात्। प्रकृते च पूर्वमुपासनमात्रविधानात् तत्क्रतुवाक्येन यथोपासनफलोक्त्या अधिकारविधावपि प्रयोगस्याविहिततया, 'स आत्मानमुपासीत' इति वाक्ये तद्विधानस्वीकारात् तत्र मनोमयत्वादीनां प्रयोगान्वयकल्पनया वाक्यभेदपरिहारादिति। एवञ्चोक्ताग्निरहस्यरीत्या प्रकृतवाक्येऽपि मनोमय इत्यादौ अनादर इत्यन्ते षष्ठीविपरिणामेन मनोमयस्य=अनादरस्य ब्रह्मणः क्रतुं कुर्वीतेति कल्पनेऽपि प्रयोगविधानान्न वाक्यभेदः। 'एष म आत्मा' इत्यादेस्तु मे इत्युल्लेखबलात् अभिसंभवितास्मीति इतिशब्देन ग्रहणेन, 'यस्य स्यादद्धा' इत्युपरितनवाक्यान्वयस्तदा वाच्यः। अस्तु वा पूर्वोक्तरीत्या इतिशब्दोक्तक्रम एव मनोमयत्वाद्यन्वयोऽपि। क्रमस्य प्रयोगान्वयिगुणतया च सर्वक्रमविशिष्टप्रयोगविधिरिति। नन्वेवं विधिनैव मनोमयत्वादिलाभे, सर्वत्रप्रसिद्धाधिकरणोपक्रमे टीकायाम्, 'अत्र रात्रिसत्रन्यायेन मनोमय उपास्यतया संबद्ध्यते, आर्थवादिकस्यापि विध्यपेक्षितस्य स्वीकार्यत्वात्' इति कथमुक्तमिति चेन्न–मनोमय इत्यादेः क्रतुकर्तृपरत्वे वैयर्थ्यात् उपास्यपरतया साक्षादनन्वयाच्च क्रतुं कुर्वीतेत्येतदर्थवादत्वमेव। परन्तु एतद्ब्रह्मेत्यन्तोऽर्थवादः। 'एतमितः प्रेत्याभिसंभवितास्मीति' इत्यत्र एतमिति पदं मनोमयत्वाद्यार्थवादिकापेक्षितसर्वविशेषणविशिष्टपरमिति ततस्तल्लाभ इत्याशयादिति।

**कित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥**

**इति तृतीयाध्याये चतुर्दशः खण्डः ।**

---

एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहरति **यस्य स्यादद्धा न विचिकित्साऽस्ति ।** अत्र **इति**शब्दोऽध्याहर्तव्यः । **अभिसंभवितास्मीति** इतीतिशब्दस्य काकाक्षिन्यायेन वाऽन्वयः । **इति** उक्तप्रकारेण **यस्य** उपासकस्य **अद्धा** निश्चयोऽस्ति, तस्य प्राप्तौ **विचिकित्सा**=संशयः नास्तीत्यर्थः ।

उक्त(स्य)ार्थस्य श्रद्धेयत्वसिद्ध्यै वक्तुराप्तिं दर्शयति **इति ह स्माह शाण्डिल्यश्शाण्डिल्यः**। द्विरुक्तिर्विद्यासमाप्त्यर्था । अयमर्थः सर्वोऽपि भाष्यश्रुतप्रकाशिकयोः स्पष्टः ॥

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते—इयञ्च विद्या समन्वयाध्याये द्वितीयपादे चिन्तिता । तत्र हि—'सर्वं खल्विदं ब्रह्म' इत्यत्र ब्रह्मशब्देन प्रत्यगात्मैव निर्दिश्यते। तस्यैव सर्वपदसामानाधिकरण्य(ण्येन)निर्देशोपपत्तेः। सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिस्तम्बपर्यन्तभावश्च प्रत्यगात्मन एवानाद्यविद्यामूलकर्मविशेषोपाधिक उपपद्यते । परमात्मनः निरस्तसमस्ताव(वि)द्यस्य समस्तहेयाकरसर्वभावो नोपपद्यते । प्रत्यगात्मन्यपि ब्रह्मशब्दः क्वचित् क्वचित्

---

तस्यैवेति। न तु परब्रह्मणः। सर्वशब्देन इदन्त्वतज्जत्वतल्लत्वतदनत्वान्वयार्हस्य जगन्मात्रस्य वाच्यत्वात् तत्र ब्रह्माभेदबाधादिति पूर्वपक्षियुक्तिः। हेयाकरसर्वभावेति । हेयान्तर्वर्तित्वस्वीकारस्यापि संभोगप्राप्त्याऽनुपपन्नत्वे स्थिते हेयभाव एव कथमित्याशयः। इदं ब्रह्माऽऽयाति इति। 'इदं ब्रह्मागच्छति' इति श्रुत्यन्तरमिति दीक्षि-

प्रयुज्यते, 'इदं ब्रह्माऽऽयाति' (बृ. 6-3.37) इत्यादौ। अत एव 'परमात्मा, परं ब्रह्म' इति परमेश्वरस्य क्वचित् सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेः ब्रह्मत्वञ्च विद्यते, 'स चाऽऽनन्त्याय कल्पते' इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमित्तत्वात् जगज्जन्मस्थितिलयानाम्, 'तज्जलान्' इति हेतुनिर्देशोऽप्युपपद्यते। अतः जीव एवात्र संदर्भे प्रतिपाद्यत इति पूर्वपक्षे प्राप्ते—उच्यते।

**'सर्वत्र प्रसिद्धोपदेशात्'**। **सर्वत्र** सर्वस्मिन्, जगति, 'सर्वं खल्विदं ब्रह्म' इति तदात्मतया वि(अभि)धीयमानं परं ब्रह्मैव। कुतः? **प्रसिद्धोपदेशात्**। तज्जत्वतल्लत्वादिना, 'सर्वं खल्विदम्' इति प्रसिद्धवदुपदेशात्, यस्मात् जगज्जन्मस्थितिलयाः वेदान्तेषु प्रसिद्धाः, तदेवात्र ब्रह्मेति प्रतीयते। वेदान्तप्रसिद्धत्वञ्च परब्रह्मण एव। तस्यैव, 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवेदान्तेषु प्रसिद्धेः; न प्रत्यगात्मनः। तस्य ब्रह्मादिस्तम्बभावेऽपि प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्य(सं)स्पर्शात् निरस्तसमस्तावद्यत्वस्य नानुपपत्तिः। जीवानाञ्च प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासंभवेन सार्वात्म्यस्यासंभावितत्वात्। अतः सर्वजगत्कारणत्वप्रयुक्तसर्वात्मकत्वस्य परब्रह्मण्येव संभवात् परमेव ब्रह्मेह वाक्ये प्रतिपाद्यते।

**'विवक्षितगुणोपपत्तेश्च'**। विवक्षितानां विशुद्धमनोग्राह्यत्वरूपमनोमयत्वसत्यसंकल्पत्वादीनां गुणानां परमात्मन्येवोपपत्तेश्च। **विवक्षितत्वं** तात्पर्यविषयत्वम्। मनोमयत्वादीनाञ्च, 'यथाक्रतुरस्मिन्

---

तोक्तम्। ब्रह्मत्वञ्च विद्यत इति। अत्र, 'ब्रह्मभूयाय कल्पते। ब्रह्मभूतः प्रसन्नात्मा' (१८.५३.५४) इति गीताऽप्यनुसंधेया॥

लोके पुरुषो भवति' इति वाक्येन मनोमयत्वादिगुणकोपासनेन तद्गुणक-ब्रह्मप्राप्तेः फलत्वाऽऽवेदनेन फलरूपतात्पर्यलिङ्गसद्भावात् (संभवात्) मनोमयत्वादीनां तात्पर्यविषयत्वलक्षणं विवक्षितत्वमवसीयते ।

**'अनुपपत्तेस्तु न शारीरः'** । विवक्षितानां गुणानां शारीरेऽनुपपन्नत्वात् न शारीरपरिग्रहशङ्का कार्येत्यर्थः ।

**'कर्मकर्तृव्यपदेशाच्च'** । 'एतमितः प्रेत्याभिसंभवितास्मि इति' प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः । अतः प्राप्ता जीव उपासकः ; प्राप्यं परं ब्रह्मोपास्यमिति । **'शब्दविशेषात्'** । 'एष म आत्माऽन्तर्हृदये' इति शारीरः षष्ठ्या निर्दिष्टः ; उपास्यस्तु प्रथमया । अतो नोपासकस्य जीवस्योपास्यत्वम् ।

**'स्मृतेश्च'** । 'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनश्च' इति स्मृतिश्चोपास्यं हृदयगतमुपासकाद्भिन्नं परमात्मानं दर्शयति ।

**'अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च'** । अल्पायतनत्वमर्भकौकस्त्वम् । **तद्व्यपदेशः** अल्पत्वव्यपदेशः । 'एष म आत्माऽन्तर्हृदये' इति अणीयसि हृदयायतने स्थितत्वात्, 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यादिना स्वरूपेणाणीयस्त्वव्यपदेशाच्च नायं परमात्मा ; अपितु जीव एव । परमात्मनोऽल्पायतनत्वाल्पत्वयोरसंभवादिति चेन्न—**एवं निचाय्यत्वात्** अल्पायतनत्वाल्पत्वाभ्यां तस्यैवोपास्यत्वसंभवात् । व्योमवच्चेदं ब्रह्म व्यपदिश्यते, 'ज्यायान् पृथिव्याः' इत्यादिना । अतश्च ज्यायस्त्वे उपाध्यश्रवणात् ज्यायस्त्वं स्वाभाविकम्, अणीयस्त्वे उपाधिश्रवणात् अणीयस्त्वमौपाधिकमित्यवसीयते ।

तृतीये पञ्चदशः खण्डः। अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति।
दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलम्॥
स एष कोशो वसुधानस्तस्मिन् विश्व(सर्वे)मिदँ श्रितम्॥ १॥
तस्य प्राची जुहूर्नाम, सहमाना नाम दक्षिणा, राज्ञी नाम

---

'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्।' परब्रह्मण. शरीरान्तर्वर्तित्वे तन्निमित्तसुखदुःखोपभोगप्रसक्तिः जीववत् स्यात् इति चेन्न — तयोरपहतपाप्मत्वानपहतपाप्मत्वकृतविशेषसंभवात्। अतो न जीववत् भोगप्रसक्तिरिति स्थितम्। प्रकृतमनुसरामः॥ ३-१४.

पुत्रदीर्घायुष्यफलकं त्रैलोक्यात्मककोशविज्ञानमारभ्यते। **अन्तरिक्षोदरः...जीर्यति**। अन्तरिक्षमुदरं यस्य स तथोक्तः। मध्यवर्तित्वादन्तरिक्षस्य उदरत्वम्। कोश इव **कोशः**। कोशसादृश्यात् **कोशः**। भूमिः बुध्नः मूलं यस्य सः **भूमिबुध्नः**। **न जीर्यति** न विनश्यति। चि(स्थि)रकाल(व)स्थायित्वादिति भावः। **दिशो ह्यस्य स्रक्तयः**। **स्रक्तयः** कोणा इत्यर्थः। **द्यौरस्योत्तरं बिलम्**। **उत्तरं बिलं** ऊर्ध्वं मुखमित्यर्थः। **स एष कोशो वसुधानः**। कर्मफलाख्यं वसु धीयतेऽस्मिन् इति **वसुधानः**। **तस्मिन् विश्वमिदं श्रितम्**। कर्मकर्तृफलात्मक**मिदं** परिदृश्यमानं कृत्स्नं **तस्मिन्** (अस्मिन्) कोशे श्रितमित्यर्थः।

**तस्य प्राची....नामोदीची**। स्पष्टोऽर्थः। **तासां वायुर्वत्सः**।

---

इतः परमस्मिन् प्रपाठके ऐहिकफलानि चत्वार्युपासनानि। तत्र प्रथमं पुत्रदीर्घायुष्ट्वफलकम्। त्रैलोक्यरूपवसुधानकोशस्य अजीर्यत्वेन अरिष्टत्वेन स्वदिग्वत्सवायुकत्वेन च विज्ञानात् सपुत्रक एव सदा भवतीति। कोशसादृश्यादिति। उदरबुध्नस्रक्तिमुखवत्त्वेन विश्वाख्यवसुमत्त्वेन च सादृश्यम्। प्राचीदिगादिपदं प्राग्भागादिपरम्।

प्रतीची, सुभूता नामोदीची। तासां वायुर्वत्सः। स य एतमेवं वायुं दिशां वत्सं वेद, न पुत्ररोदँ रोदिति। सोऽहमेतमेवं वायुं दिशां वत्सं वेद; मा पुत्ररोदँ रुदम् ॥ २ ॥

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना; प्राणं प्रपद्येऽमुनाऽमुनाऽमुना; भूः प्रपद्येऽमुनाऽमुनाऽमुना; भुवः प्रपद्येऽमुनाऽमुनाऽमुना; स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥

स(अथ) यदवोचम्—प्राणं प्रपद्य इति, प्राणो वा इदँ सर्वं

---

वायोः दिक्प्रसूतत्वात् वत्सत्वम्। स य....रोदिति। दिग्वत्सत्वेन वायूपासकः पुत्रनाश(न)निमित्तं (रोदं) रोदनं न करोति। 'फलं पचति' इतिवदयं निर्देशः। रोदमिति णमुलन्तो वा। सोऽह...रुदम्। सः एतदुपदेष्टा अहम् एवमेतदुपासनमनुष्ठाय पुत्ररोदनाभावं फलं प्राप्तवानस्मीत्यर्थः।

अथ कोशविज्ञानाङ्गभूतान् प्रपदनमन्त्रानाह अरिष्टं....ऽमुना। अरिष्टम् अविनाशं कोशं प्रपद्ये। अमुनाऽमुनाऽमुनेति त्रिः पुत्रस्य नाम गृह्णाति। अमुना पुत्रेण हेतुना अरिष्टं कोशं प्रपद्य इत्यर्थः। एवमुत्तरत्रापि।

प्राणं प्रपद्य इत्यादिस्वोक्तमन्त्रान् [चतुरः] स्वयमेव व्याचष्टे। स यदवोचं....प्रापत्स्य। सोऽहं प्राणं प्रपद्ये इति यत् वचन-

---

मा...रुदमिति। रोदनं मे माभूदिति शाङ्करोक्तार्थे उपासितुरनुसंधानरूपमिदं वाक्यम्। अथोक्तार्थे उपदेष्टुरनुभवकथनरूपमिदम्। अरिष्टमिति प्रथममन्त्रस्य अन्तरिक्षोदरः कोश इत्यादिनैव व्याख्यायाः वृत्तत्वात् प्राणमित्यादिरेव पश्चात् व्याख्यातः। प्रापत्सीति शब्दप्रयोगस्वारस्यात् व्याख्यानरीत्याऽनुसंधानमपि मन्त्रप्रयोगानन्तरमुपासकेन कार्यमिति प्रतीयते।

भूतम्, यदिदं किञ्च, तमेव तत् प्रापत्सि (प्राप्स्यथ) ॥ ४ ॥

अथ यदवोचम्—भूः प्रपद्य इति, पृथिवीं प्रपद्ये, अन्तरिक्षं प्रपद्ये, दिवं प्रपद्ये इत्येव तदवोचम् ॥ ५ ॥

अथ यदवोचम्—भुवः प्रपद्य इति, अग्निं प्रपद्ये, वायुं प्रपद्ये, आदित्यं प्रपद्ये इत्येव तदवोचम् ॥ ६ ॥

अथ यदवोचम्—स्वः प्रपद्य इति, ऋग्वेदं प्रपद्ये, यजुर्वेदं प्रपद्ये, सामवेदं प्रपद्ये इत्येव तदवोचम्, तदवोचम् ॥ ७ ॥

इति तृतीयाध्याये पञ्चदशः खण्डः ।

तृतीये षोडशः खण्डः

पुरुषो वाव यज्ञः । तस्य यानि चतुर्विंशतिवर्षाणि, तत् प्रातस्सवनम्। चतुर्विंशत्यक्षरा गायत्री; गायत्रं [हि] प्रातस्सवनम्। तदस्य

---

मवोचम्, तेन वचनेन प्राणात्मकं सर्वं जगत् **प्रापत्सि** प्रपन्नोऽभवम् इत्यर्थः। **अथ यदवोचं भूः....तदवोचम्**। भूः प्रपद्य इत्यस्य (मन्त्रस्य) त्रीन् लोकान् प्रपद्ये इत्यर्थः । **अथ....तदवोचं तदवोचम्** । स्पष्टम् । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ३-१५.

दीर्घायुष्ट्वफलकपुरुषविद्या प्रस्तूयते—**पुरुषो वाव यज्ञः** । (पुरुषः स्वस्मिन् यज्ञदृष्टिं कुर्यादित्यर्थः) । पुरुषस्य यज्ञसादृश्यमेवाह—

**तस्य....प्रातस्सवनम्** । षोडशोत्तरवर्षशतमिते पुरुषायुषे आद्यानि चतुर्विंशतिवर्षाणि प्रातस्सवनमित्यर्थः । तत्र तद्दृष्टिः कर्तव्येति

---

स्वायुर्मध्ये पुत्रामरणार्था कोशविद्योपदिष्टा । अथ स्वदीर्घायुःफला पुरुषविद्योपदिश्यते । एतद्विद्यायाः षोडशाधिकवर्षशतजीवनफलकत्वम् अस्याः यज्ञभावनारूपत्वात् यज्ञे च सामे सवनत्रयसंबन्धिच्छन्दस्त्रयगताक्षराणां संहत्य तावत्संख्यकत्वादादृतम् । तत्संख्यानुरोधेनैव सवनत्रयविभागोऽपि कृतः । सोमे च यज्ञदिनस्य

वसवो ऽन्वायत्ताः प्राणा वाव वसवः। एते हीदँ सर्वं वासयन्ति ॥१॥
तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात्, 'प्राणा वसवः! इदं मे प्रातस्सवनम्। माध्यन्दिनँ सवनमनु संतनुत' इति।

---

यावत्। तत्र हेतुमाह चतुर्विंश....सवनम्। प्रातस्सवनस्य गायत्रीछन्दस्कत्वात्, गायत्रीछन्दसश्चतुर्विंशत्यक्षरात्मकत्वात् चतुर्विंशतिवर्षे प्रातस्सवनत्वाध्यासो युज्यत इति भावः। तदस्य वसवोऽन्वायत्ताः। अस्योपासकस्य तत् प्रातस्सवनं वसवः स्वामित्वेनानुगताः। प्रसिद्धयज्ञे प्रातस्सवनस्य वसुस्वामिकत्वादिति भावः। प्रसिद्धान् वसून् व्यावर्तयति प्राणा वाव वसवः। वावशब्दोऽवधारणे। प्राणानां वसुत्वे युक्तिमाह एते हीदं सर्वं वासयन्ति। शरीराणामशैथिल्यलक्षणवासस्य प्राणाधीनत्वादिति भावः। तं चेत्....तपेत्। तं पुरुषविद्यानिष्ठम्, एतस्मिन् वयसि चतुर्विंशतिवर्षात्मके वयसि किञ्चित् रोगादिकम् उपतपेत् बाधेत चेदित्यर्थः। स ब्रूयात्....विलोप्स्यसीयेति। तदा इमं मन्त्रं स उपासको ब्रूयात् जपेत्। हे प्राणा वसवः! यज्ञरूपस्य ममाधुना प्रातस्सवनं प्रवर्तते। इदं प्रवर्तमानं प्रातस्सवनं माध्यन्दिन-

---

सवनत्रयात्मकत्वात् तत्र क्रियमाणस्य यज्ञस्य प्रधानत्वात् दीक्षादीनाञ्चाङ्गत्वात् तद्रीत्या इहापि पुरुषे यज्ञभावना तदायुर्भागेषु सवनत्रयभावनोपस्कृता प्रधानम्। तत्फलं तावद्वर्षजीवनम्। तदङ्गजातञ्च पुरुषसंबन्ध्यशिशिषादिषु दीक्षादित्वचिन्तनाः। ताश्चाङ्गत्वात् पृथगुत्तरखण्डेन कथ्यन्ते।

वासयन्तीति शब्दप्रयोगः वसुशब्दार्थस्य प्रकृते समन्वयाय। वास इह स्थितिः सत्ता। यज्ञो विलोप्सीयेति। षोडशवर्षशतात्मक-

'माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीय' इति। उद्धैव तत एति, अगदो ह भवति ॥ २ ॥

अथ यानि चतुश्चत्वारिँशद्वर्षाणि, तन्माध्यन्दिनँ सवनम्। चतुश्चत्वारिँशदक्षरा त्रिष्टुप्; त्रैष्टुभं माध्यन्दिनँ सवनम्। तदस्य रुद्रा अन्वायत्ताः। प्राणा वाव रुद्राः। एते हीदँ सर्वँ रोदयन्ति ॥३

तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात्, 'प्राणा रुद्राः! इदं मे माध्यन्दिनँ सवनं तृतीयसवनमनु संतनुत' इति। 'माऽहं प्राणानाँ रुद्राणां मध्ये यज्ञो विलोप्सीय' इति। उद्धैव तत एति; अगदो ह भवति ॥ ४ ॥

अथ यान्यष्टाचत्वारिंशद्वर्षाणि, तत् तृतीयसवनम्। अष्टाचत्वारिँशदक्षरा जगती। जागतं तृतीयसवनम। तदस्याऽऽदित्या

---

सवनेनाविच्छिन्नं कुरुत। प्रातस्सवनेशानां प्राणानां वसूनां मध्ये=तेषु पश्यत्सु, यज्ञरूपोऽहं **मा विलोप्सीय** लुप्तो मा भूवम्। छान्दसो माङि लुङभावः। माशब्दो वा। **उद्धैव....भवति। ततः** उपतापात् **उदेति** उद्गच्छति। **अगदो भवति** अरोगो भवति(तीत्यर्थः); एवमुत्तरत्रापि।

**अथ यानि...रोदयन्ति**। यौवने इन्द्रियाणामत्यन्तं विषयप्रावण्यजनकतया पुरुषान् रोदयन्तीति रुद्रत्वमुपपन्नमित्यर्थः। **तं चेत्....। एतस्मिन् वयसि** चतुर्विंशतिवर्षादूर्ध्वम् अष्टषष्टिवर्षमध्ये इत्यर्थः। **प्राणानां रुद्राणां मध्ये** माध्यन्दिनसवनेशानां भवतां मध्ये इत्यर्थः। **अथ यान्यष्टाचत्वारिंशद्वर्षा....प्राणा वा आदित्याः एते हीदं सर्वमाददते**। सर्वस्य विषयजातस्याऽऽदानात् प्राणानामादि-

---

सवनत्रयसंततो हि पुरुषयज्ञः मध्ये व्याध्यादिना पुरुषलोपे लुप्तः स्यात्। अतो वस्वादित्वेन भावितेषु प्राणेषु प्रसक्तयज्ञविलोपनिवर्तकत्वमपि भावनीयम्।

अन्वायत्ताः । प्राणा वाव आदित्याः । एते हीदं सर्वमाददते ॥ ५ ॥

तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात्, 'प्राणा आदित्याः इदं मे तृतीयसवनम् आयुरनु संतनुत' इति । 'माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीय' इति । उद्धैव तत एति; अगदो हैव भवति ॥ ६ ॥

एतद्ध स्म वै तत् विद्वानाह महिदास ऐतरेयः, 'स किं म एतदुपत-

---

त्यर्वामित्यर्थं । तं चेत्....एतस्मिन् वयसि अष्टचत्वर्षादूर्ध्वं षोड-शोत्तरशतवर्षमध्य इत्यर्थः । तृतीयसवनमायुरनु संतनुतेति । तृतीय-सवनात्मकमायुः आसमाप्ति अविच्छिन्नं कुरुतेत्यर्थं । प्राणानामादि-त्यानां मध्ये तृतीयसवनस्वामिनां भवतां मध्ये इत्यर्थः ।

एतद्ध....न प्रेष्यामीति । हे रोग ! स त्वं मे मां किं कस्मात् एतत् एवम्प्रकारेण उपतपसि, योऽहं पुरुषविद्यानिष्ठः त्वत्कृतेनानेनाप-तापेन न प्रेष्यामि न मरिष्यामि । अतस्तव श्रमो वृथेवेति. एतत् पुरुषविज्ञानस्वरूपं विद्वान् इतरपुत्रो महिदासनामा, आह स्मेत्यर्थः । ऐतरेयः । शुभ्रादित्वात् इतरशब्दात् अपत्यर्थे ठक । स....शतम-जीवत्....सः महिदासः षोडश षोडशाधिकं वर्षशतमजीवदित्यर्थः ।

---

इतरपुत्र इति । एवमेव सर्वत्र पाठः । शुभ्रादिगणेऽपि इतर-शब्दः ह्रस्वान्त एव पठितोऽस्ति । शाङ्करभाष्ये. 'इतराया पुत्रः' इत्युक्तम् । तत ऐतरेयब्राह्मणभाष्यभूमिकायामपि कस्यचिन्महर्षेर्बह्वीषु भार्यासु इतरा नामधेया काचिदिति संप्रदायविद इति सायणेनोक्तम् । एवंसति, 'स्त्रीभ्यो ढक्' अत्र न प्राप्नोति किन्तु तदपवादः, 'अवृद्धाभ्य...' इति अणेव । शुभ्रादिगतेतरपदेन स्त्रीप्रत्ययान्तस्यापि विवक्षासंभवे तु ढक् स्यात् । एवंसति इहापि गणपाठगतेतरशब्दार्थो यो जनः, तत्पुत्र इत्यर्थो विवक्षणीयः स्यात् । स्वरसतस्तु गणपाठगत-

पसि, योऽहमनेन न प्रै( प्रे)ष्यामि' इति। स ह षोडशं वर्षशतमजीवत्।
प्र(स) ह षोडशं वर्षशतं जीवति, य एवं वेद ॥ ७ ॥

इति तृतीयाध्याये षोडशः खण्डः

तृतीये सप्तदशः खण्डः

स यदशिशिषति, यत् पिपासति, यन्न रमते, ता अस्य दीक्षा(क्षः)॥१
अथ यदश्नाति, यत् पिबति, यत् रमते, तदुपसद्भैरेति ॥ २ ॥
अथ यद्धसति, यज्जक्षति, यन्मैथुनं चरति, स्तुतशस्त्रैरेव तदेति ॥३॥
अथ यत् तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः॥[1]

---

'तदस्मिन्नधिकमिति दशान्ताड्डः' इति षोडशशब्दात् डप्रत्ययः ॥
[अतो विद्यायां फलप्रापकत्वनिश्चयवतोऽवश्यं फलप्राप्तिर्भवतीति भावः ।]
अन्योऽप्येवंवित् षोडशं वर्षशतं जीवतीत्याह **प्र ह...वेद** । [स्पष्टोऽर्थः]

[तथा पुरुषस्य यज्ञसादृश्यमेव निरूपयति] **स यत्...दीक्षा** । अशनायापिपासारत्यभावानां दुःखात्मकत्वेन दीक्षात्वम् [कल्प्यमित्यर्थः] । **अथ यत्....एति** । अशनपानरतीनां पयोव्रतादियुक्तोपसद्वत् सुखरूपत्वात् उपसद्रूपत्वम् । **उपसद्भैरेति** उपसद्भिः साम्यमेति । उपसद्दृष्टिस्तासु [अशनपानरतिषु] कर्तव्येत्यर्थः । **अथ यद्धसति....तदेति** । हास(भक्षणमैथुन)ादीनां शब्दवत्त्वसाम्यात् स्तुतशस्त्रैः साम्यमेतीत्यर्थः । **अथ यत् तपः....दक्षिणाः** । दक्षिणा-

---

पुंलिङ्गेतरशब्दबलात् ऐतरेयपितुरेव इतरेति नाम, न मातुरिति पाणिन्याशये स्थिते तद्विरुद्धौ व्याख्यानसंप्रदायौ न विश्वसनीयाविति भाष्याशय उन्नीयते ।

प्र हेति । प्रजीवति । प्रकर्षो रोगाद्युपतापराहित्यम् ।

---

1 एतदनन्तरं, 'ददात्यात्मदक्षिणं वैतत् सत्रमिति' इत्यादिकं भाष्यमूले ; न तु व्याख्याने ।

**तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः॥**

दृष्टिस्तेषु कर्तव्येत्यर्थः। धर्मपु(तु)ष्टिकरत्वसाम्यादिति भावः।

**तस्मादाहुः, 'सोष्यति, असोष्ट' इति पुनरुत्पादनमेवास्य** [तत् ?]। यतो हेतोः पुरुषस्यैव यज्ञरूपत्वम्, अत एव, यथा यज्ञं करिष्यमाणे पुरुषे, 'देवदत्तः सोमं सोष्यति' इति प्रयुञ्जते, तथा— यदा माता तं पुरुषं जनयिष्यति, तदा पुरुषस्योत्पादनं प्रतीक्ष्य— 'पुरुषं सोष्यति' इति प्रयुञ्जते लोकाः। यागा(द्य)नन्तरम्, 'असोष्ट सोमं यज्ञदत्त' इतिवत्, 'असोष्ट माता पुरुषम्' इति उत्पत्तेः पश्चात् प्रयुञ्जते। अतश्च पुरुषस्योत्पादनमेव 'सोष्यति', 'असोष्ट' इति शब्दसंबन्धित्व-सामान्यात् यज्ञानुष्ठानलक्षणमुत्पादनमित्यर्थः। यज्ञपक्षे, 'षुञ् अभिषवे' इति धातुः; उत्पत्तिपक्षे, 'षूङ् प्राणिप्रसवे' इति धातुः। **तन्मर (मर ?) मरणमेवावभृथः**। समाप्तित्वसाम्यात् मरणे अवभृथत्वं पश्येदिति भावः।

---

नन्वशिशिषादौ दीक्षादित्वकल्पनायां दुःखात्मकत्वादिसाम्यं प्रयोजकमुन्नीयते। चेतने पुरुषे द्रव्ये अचेतनयज्ञक्रियात्वकल्पनायां किं साम्यमित्यत्र साम्यं किञ्चित् श्रुतिर्दर्शयति तस्मादाहुरिति। ननु सोमं सोष्यतीत्यत्र सवने अभिषवे सोमो लता कर्म; न तु यज्ञः। तेन पुरुषे द्रव्यसाम्यं स्यात्; न यज्ञसाम्यम्। तत्राह पुनरुत्पादन-मेवास्य तत्। यज्ञस्योत्पादनमेव तु तत्=सोमद्रव्यसवनम्। पुन-श्शब्दः त्वर्थे। वस्तुतोऽभिषवयागयोर्भेदेऽपि अदूरविप्रकर्षात्, 'चरुं निर्वपति, पशुमालभते, सोमं सौति' इति इष्टिपशुसोमयागोत्पादनेषु परिभाषणं प्रसिद्धमिति भावः। भवति च सोमद्रव्याभिषवस्य यज्ञोत्पत्त्यनुकूलव्यापारतया स यज्ञोत्पादनमेवेति, पुरुषोत्पादनं यज्ञो-त्पादनमिति। अस्य वाक्यस्य विधेयोद्देश्यवाचिपदद्वयसापेक्षत्वात्

तद्धैतत् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच,

---

तद्धैतत्....उवाच । घोरनामा आङ्गिरस इति कश्चिद्दृषिः तदेतत् पुरुषयज्ञदर्शनं देवकीपुत्राय कृष्णाय—इति शब्दोऽध्याहर्तव्यः—कृष्णशिष्यभूताय तत्प्रीत्यर्थमित्युक्त्वा इत्यनुसंधाय उवाच अनुष्ठितवान्

---

तदित्यस्य अत्रैव घटनं युक्तम् । उत्तरवाक्ये तत् अनपेक्षितञ्च । एवमेव भाष्याकूतं स्यात् । पुरुषोत्पादनमेव यज्ञोत्पादनमिति मूलार्थेऽपि तात्पर्यं पूर्वोक्तं ग्राह्यम् । पुनरित्येतत् पूर्ववाक्येऽप्यन्वियात् । तदा चार्थकम् ।

कृष्णायेति । ननु श्रीदेवकीपुत्रश्रीकृष्णवत् भक्तिधारितन्नामदेवक्यन्तरपुत्रकृष्णान्तरस्यापि संभावितत्वात् कस्यचित् शिष्यभूतस्य कृष्णस्य ग्रहणेन समञ्जसे वाक्यार्थे किमिति भाष्ये परमात्मग्रहणम्, इतिशब्दाध्याहारः, उवाचेत्यस्यानुष्ठाने लक्षणा, अपिपास इत्यस्य मुक्ते लक्षणा चेति चेत्—सत्यम् । अस्तु तावत् सान्दीपनेरिव घोरस्यापि शिष्यः श्रीकृष्ण इति ; अस्तु वा तन्नामाऽन्यः कृष्ण एवेह । तथापि कोऽसौ समञ्जसो वाक्यार्थः ? पुरुषविद्यारूपविज्ञानं कृष्णाय शिष्यायोक्त्वोवाचेत्यत्र उवाचेत्यस्य किं कर्म ? अपिपास इत्यादेः न तत्कर्मत्वं संभवति । सोऽन्तवेलायामित्यादेः कर्मत्वे व्याहतान्वयापत्तिः । अपिपास इत्यादेश्च कस्तर्ह्यर्थः । कृष्णो विद्यान्तराधिजिगमिषारूपपिपासारहितो बभूवेत्यर्थ इति चेत्—न इत्यस्याप्रधानपरामर्शित्वापत्तिः ; पिपासापदलक्षणा च । ननु ५-२-३. स्थल इव अपिपास इत्यादिकं रूपमेव उवाचेत्यस्य कर्म । सः=पुरुषविद्यानिष्ठः अपिपासः=रोगादिरहितः सुखजीवी बभूव=भवेत् । 'छन्दसि लुङ्लङ्लिटः' इति लिङर्थे लिट् । 'प्रवाच तां तत्त्वतो ब्रह्मविद्याम्' इतिवत् इति चेत्—अशनाया पिपासा च यथाकालं यस्य, स खलु सुखजीवी । न ह्यपिपासा मन्दाग्निः । तत् कथं तदर्थ-

अपिपास एव स बभूव, सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येत,

---

इत्यर्थः । वचेर्लक्षणयाऽनुष्ठानार्थत्वम् । सः घोरनामा भगवच्छेषत्वानुसंधानपूर्वकपुरुषयज्ञोपासनानुष्ठानेन ब्रह्मविद्यां प्राप्य अपिपासः.... [अपहतपाप्मत्वादिगुणाष्टकयुक्तो]-मुक्तो बभूवेत्यर्थः । ततश्च षोडशाधिकवर्षशतजीवनफलकस्यापि पुरुषयज्ञदर्शनस्य भगवच्छेषत्वानुसंधानपूर्वकमनुष्ठितस्य ब्रह्मविद्योपयोगित्वमप्यस्तीति भावः । यद्वा स बभूवेत्यस्य

---

योगः? पिपासाशान्त्यर्थं जलस्वलाभप्रयुक्तपिपासापीडारहित इति तदर्थ इति चेत्-लक्षणा न दोषः । एतादृशार्थवर्णने च, 'अपिपास एव स बभूव' इत्यस्य 'सोन्तवेलायाम्' इत्यादेश्च न कश्चित् संबन्धोऽस्ति। षोडशाधिकवर्षशतजीवनरूपफलस्य प्रागेतदकरणेऽपि लब्धतया अन्तवेलायां विहितस्य एतत्त्रयजपस्य पुरुषविद्याङ्गत्वानुपपत्तिश्च । अतः अधस्तात्, 'महिदास आह; स ह षोडशं वर्षशतमजीवत्' इतिवत् 'घोर उवाच, अपिपास एव स बभूव' इति प्राचीनपुरुषव्यापारस्य साफल्यप्रदर्शनेन प्ररोचकमिदं वाक्यं युक्तम् । तदा च बभूवेत्येतन्न लाक्षणिकम् । एवञ्च तद्धैतदिति वाक्यस्यैवमवतरणम् । ननु किमनेन षोडशवर्षशतजीवनेन पश्चात्तनपुरुषार्थानुपयोगिना? तत्राह तद्धैतदिति। पुरुषविद्यानिष्ठ एव घोर आङ्गिरसः अपिपासोऽपि बभूव। यत्तत् प्रेतीभूतस्य पिपासा कापि भवतीति वदन्ति, तद्रहितो बभूव। 'यदु चैवास्मै शव्यं कुर्वन्ति, यदु च न' इत्युक्तरीत्या प्रेतभावाद्यभावात् अपिपासो मुक्तो बभूवेति । ननु पुरुषविद्यारूपदृष्टिविधिप्रवृत्तस्य परब्रह्मचिन्तारहितस्य कथं मुक्तिरिति शङ्कानुन्मेषाय अपिपासभावप्रयोजकाकारप्रदर्शकं कृष्णाय देवकीपुत्रायोक्त्वोवाचेति वाक्यम् । अतस्तदर्थं एवमेव वर्णनीय इति । एवञ्च उवाचेत्यस्यानुष्ठानलक्षणायां न 'सोऽन्तवेलायाम्' इत्यादिना व्यवहितेनान्वय इति दोषोऽपि । ननु श्रीकृष्णप्रीत्यर्थं पुरुषविद्यानुष्ठाने

'अक्षितमसि,' 'अच्युतमसि,' 'प्राणसँशितमसि' इति ।

तत्रैते द्वे ऋचौ भवतः—आदित् प्रत्नस्य रेतसः—॥

---

स भवतीत्यर्थः। **सोऽन्तवेलायाम्** इत्यत्र स इत्यस्य य इत्यर्थः। ततश्च योऽन्तवेलायामेतत्त्रयं प्रतिपद्येत, सोऽपिपासो भवतीत्युत्तरत्रान्वयः। [पुरुषविद्यानिष्ठस्यान्त्यकाले जप्यान् मन्त्रानाह] **सोऽन्त....प्रतिपद्येत। सः** भगवच्छेषत्वानुसंधानपूर्वक-पुरुषविद्यासाधितचिरायुष्ट्वानुगृहीत-ब्रह्मविद्यानिष्ठः पुरुषः **अक्षितमसि, अच्युतमसि, प्राणसंशितमसि** इत्येतन्मन्त्रत्रयं मरणकाले जपेदित्यर्थः। **अक्षितमसि** क्षयशून्यमसि। **अच्युतमसि** स्वरूपस्वभावप्रच्युतिशून्यमसि। **प्राणसंशितमसि** जगत्प्राणयितृत्वे सति **संशितं** सूक्ष्मतत्त्वमसीति ब्रह्मसंबोधनम्। 'शो तनूकरणे' इति हि धातुः।

**तत्रैते द्वे ऋचौ भवतः। तत्र** परब्रह्मविषये एतौ ऋचौ(ऋङ्मन्त्रौ)मन्त्रौ भवत इत्यर्थः। **आदित् प्रत्नस्य रेतसः**। तयोः ऋचोरयमाद्यो

---

तस्य निष्कामकर्मणः चिरायुष्ट्वरूपं फलं कथमिति चेन्न—पुरुषविद्यासंपादितस्यायुषः श्रीकृष्णार्थतयैव तदनुष्ठानात्। नन्वेवं पुरुषविद्यानिष्ठेनानुष्ठीयमाना का सा ब्रह्मविद्या, यतो मोक्षो भवेदित्यत्राह सोऽन्तेत्यादि। अन्तिमप्रत्ययोपयोगितया अन्तवेलायामस्यैतन्मन्त्रत्रयार्थानुसंधानतदर्थजपादिकं श्रीकृष्णानुग्रहबल द्भवेदित्युक्त्या पुरुषविद्यानिष्ठः स्वायुषि एतन्मन्त्रत्रयजपपरः स्यादिति सूच्यते। अत्रेदं बोध्यम्—'नात्र कृष्णादेन शिष्यो ग्राह्यः। नाप्युवाचेत्यस्य मुख्यार्थ आदर्तव्यः। नापि बभूवेत्यस्य भवेदित्यर्थो ग्राह्यः' इत्यत्र न भाष्यकृतां निर्भरः। किंतु पुरुषविद्यानिष्ठेनापि परं ब्रह्म प्राप्यते तदायुर्द्वारेत्यर्थ इह विवक्षणीयः, उपरि ऋग्द्वयोदाहरणाद्यनुरोधा-

मन्त्रः प्रतीकेन गृहीतः । 'आदित् प्रत्नस्य रेतसः ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दिवि' इति । प्रत्नस्य पुरातनस्य रेतसः जगद्बीजभूतस्याव्यक्तस्य आदित् आदिभूतम्, संसारसंतमसनिवारकतया ज्योतिश्शब्दितं परं ब्रह्म, 'सदा पश्यन्ति सूरयः' इत्युक्तरीत्या नित्यसूरयः वासरं नित्यप्रकाशरूपं सर्वकालं पश्यन्तीत्यर्थः । यत् ज्योतिः, 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्युक्तरीत्या दिवि

---

दिव्यत्वैव । तथाच घोर आङ्गिरसः स्वशिष्यं कञ्चित् प्रति पुरुषविद्यामुपदिश्योपर्येवमुवाच । किमिति? 'सोऽयं पुरुषविद्यानिष्ठो मुक्त एव भवति । कथमिति चेत्—अन्तवेलायामेतन्मन्त्रत्रयार्थानुसंधानात्' इति वाक्यार्थवर्णनेऽपि न नो विद्वेषः ; समानतात्पर्यादिति । इदमेव यद्वेत्यादियोजनान्तरेण दर्शितमपि स्यात् । एवं तत्र तच्छब्दस्य यच्छब्दार्थवर्णनेऽप्यनिर्भरो द्रष्टव्यः ।

प्रतीकेन गृहीतः इति । नन्वत्र षण्णां पादानां श्रवणात् गायत्रीच्छन्दस्कर्गृद्वयमिदमित्येव कस्मान्न भवतीति चेन्न; तादृगृक्पाठस्य कुत्राप्यदर्शनात् । अत्र प्रथममन्त्रे अन्ते, 'दिवा' इति ऋग्वेदपाठः शाङ्कराद्दतः । अस्य सामवेदोपनिषत्त्वात् 'दिव' इति सामवेदीयपाठ एवात्र सामगैरादृत इति विशेषः । ननूपरि कथं पञ्चपादैका ऋक् इति चेन्न । तत्र, 'ज्योतिः पश्यन्त उत्तरम्' इति ऋग्वेदादृतद्वितीयपादस्थाने शुक्लयजुर्वेदादृतो द्वितीयः पादः, 'स्वः पश्यन्त उत्तरम्' इति । तद्घटितस्यापि प्रकृते उदाजिहीर्षयाऽधिकोक्तेः । तथाच चतुष्पदैव सा ऋगिति । एवं, 'रोहन्तो नाकमुत्तमम्' इत्यथर्ववेदादृतद्वितीयपादोऽपि भाव्यः । एवमृग्द्वयोदाहरणेन पुरुषविद्यानिष्ठोऽन्तत एवं मुक्तिमाप्नोतीति श्रुत्या विशदीक्रियते । 'मन्त्रद्वयमिदं न जप्यम् । किन्तु उक्तार्थसाक्षिभूतम्' इति शाङ्करे । ऐतरेये तु मुमूर्षोरिमौ मन्त्रौ जप्यावेवोक्तौ ।

उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम् स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ इति ज्योतिरुत्तममिति।
इति तृतीयाध्याये सप्तदशः खण्डः

---

भगवल्लोके परत्वेन इष्यते निरतिशयदीप्तियुक्तविग्रहयुक्तमित्यर्थः ।

**उद्वयं....ज्योतिरुत्तममिति** । **तमसः** प्रकृतेः परस्तात् **उत्तरं ज्योतिः** परब्रह्म परिपश्यन्तः, **उत्तरं** सर्वलोकोर्ध्वं **स्वः** भगवल्लोकं परिपश्यन्तः–अत्र **परिपश्यन्त** इत्युभयत्र हेत्वर्थे शतृप्रत्ययः। भगवल्लोकस्य तद्गतपरमात्मनश्च दर्शनायेति यावत्–**देवत्रा** देवेषु। 'देवमनुष्य' इत्यादिना सप्तम्याः त्राप्रत्ययः । **देवं** द्योतमानम् **उत्तमम्** अर्चिरादिपर्वभूतसूर्यरूपं ज्योतिः वयमुद् **गन्म** उद्गत्य प्राप्ताः स्म इत्यर्थः। द्विरभ्यासो यज्ञकल्पनासमाप्त्यर्थः ॥ एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते

**गुणोपसंहारपादे**—**तैत्तिरीयके,** 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी....' इति श्रुतायाः पुरुषविद्यायाः, 'पुरुषो वाव यज्ञः' इति छान्दोग्याम्नाता पुरुषविद्या न भिन्ना । पुरुषविद्येति समाख्यैक्यात् । पुरुषसंबन्धिषु यज्ञावयवत्वकल्पनासाम्यात् । मरणावभृथत्वसाम्याच्च इति पूर्वपक्षे प्राप्ते उच्यते—

**'पुरुषविद्यायामपि चेतरेषामनाम्नानात्'**। उभयत्राम्नातयोः पुरुषविद्यात्वेऽपि विद्याभेदोऽस्त्येव । कुतः ? **इतरेषामनाम्नानात्** । 'यत् सायं प्रातर्मध्यन्दिनञ्च तानि सवनानि' इत्यादीनां तैत्तिरीयकाम्नातानां

---

अधिकरणं लिख्यत इति । विदुषो यज्ञस्येत्यस्य अत्र कृतादधिकोऽर्थविवेकः तैत्तिरीयभाष्ये कृतो द्रष्टव्यः । अन्योऽपि विशेषस्तत्र तत्परिष्कारे च ॥

छान्दोग्येऽनाम्नानात् । त्रेधाविभक्तपुरुषायुषस्यैव छान्दोग्ये सवनत्वाम्नानात् । छान्दोग्यश्रुताशिशिषादिदीक्षादित्वपरिकल्पनस्य तैत्तिरीयके अदर्शनात् । यजमानपत्न्यादिपरिकल्पनानाञ्च भिन्नभिन्नत्वात् ।

छान्दोग्ये, 'पुरुषो वाव यज्ञः' इति श्रुतस्य पुरुषे यज्ञत्वकल्पनस्य तैत्तिरीयके अदर्शनाच्च विद्याभेद एव । न च 'तस्यैवं विदुषो यज्ञस्य' इत्यत्र षष्ठ्यन्तयोः सामानाधिकरण्याश्रयणेन पुरुषे यज्ञत्वकल्पनं तैत्तिरीयकेऽप्यस्तीति वाच्यम् – पुरुषस्यैव, यज्ञत्वे तस्यैव यजमानत्वं विरुद्धम् । यज्ञत्वयजमानत्वयोरेकस्मिन् विरोधात् । किञ्च पुरुषे यज्ञत्वकल्पने हि, 'विद्वान् यज्ञः, आत्मा यजमानः' इत्येव वक्तव्यं स्यात् ; न तु एकवाक्यतया, 'विदुषो यज्ञस्यात्मा यजमानः' इति । अतो 'विदुषो यज्ञस्य' इति व्यधिकरणे षष्ठ्यौ । विद्वत्सबन्धियज्ञस्येत्यर्थः । अतश्च, 'प्रणव एव विस्तरः' इति न्यायेन पुरुषस्य यज्ञत्वकल्पनैकरूप्याभावात् विद्याभेद एव ।

किञ्च छान्दोग्याम्नातायाः पुरुषविद्यायाः, 'प्र ह षोडशं वर्षशतं जीवति' इति षोडशाधिकवर्षशतजीवनं फलत्वेनाम्नातम् । तैत्तिरीयके तु श्रुतायाः पुरुषविद्यायाः, 'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति पूर्वानुवाकविहितायाः ब्रह्मविद्यायाः, 'ब्रह्मणो महिमानमाप्नोति' इति ब्रह्मप्राप्तिफलिकायाः संनिधौ पठितत्वात् 'फलवत्सन्निधौ अफलं तदङ्गम्' इति न्यायेन ब्रह्मविद्याङ्गतया ब्रह्मप्राप्तिफलकत्वमेव । अतः फलसंयोगभेदाच्च पुरुषविद्ययोर्भेद इति सिद्धान्तितम् ॥ प्रकृतमनुसरामः ॥ ३-१७

अध्यात्मं मनसि, अधिदैवतमाकाशे च ब्रह्मदृष्टिरुपदिश्यते —

तृतीये अष्टादशः खण्डः

मनो ब्रह्मेत्युपासीतेत्यध्यात्मम् । अथाधिदैवतम् । आकाशो ब्रह्मेति । उभयमादिष्टं भवति अध्यात्मञ्चाधिदैवतञ्च ॥ १ ॥

तदेतच्चतुष्पात् ब्रह्म ।

वाक् पादः, प्राणः पादः, चक्षुः पादः, श्रोत्रं पाद इत्यध्यात्मम्; अथाधिदैवतम्–अग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इति । उभयमेवादिष्टं भवति अध्यात्मञ्चैवाधिदैवतञ्च ॥ २ ॥

वागेव ब्रह्मणश्चतुर्थः पादः । सोऽग्निना ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ॥

---

**मनो ब्रह्म... आदिष्टं भवति** । उपदिष्टं भवतीत्यर्थः । शिष्टं स्पष्टम् । **तदेतच्चतुष्पाद् ब्रह्म** । **तदेतत्** मनआख्यं ब्रह्म चतुष्पात् । कथं मनोरूपस्य ब्रह्मणश्चतुष्पात्त्वमित्यत्राह **वाक् पादः...श्रोत्रं पादः** । वागादीनां चतुर्णां मनोनियाम्यत्वात् मनःपादत्वाध्यासो युक्त इति भावः। **इत्यध्यात्मम्** । उक्तमिति शेषः। **अथाधिदैवतम्** । उच्यत इति शेषः। **अग्निः...पादः** । अग्न्यादयश्चत्वारः ब्रह्मरूपाकाशस्योदरलग्नाः पादा इव भान्ती(भवन्ती)त्यर्थः । **इत्युभयमेव...च** । स्पष्टोऽर्थः ।

**वागेव....तपति च** । अध्यात्मं ब्रह्मरूपस्य मनसः वागेव चतुर्थः पादः । सोऽधिदैवतं ब्रह्मरूपाकाशपादतया तत्संबन्धिनाऽग्निना **ज्योतिषा** प्रकाशकेन **भाति** प्रकाश(श्य)ते । **तपति** स्वकार्योत्साही भवतीत्यर्थः । 'अग्निर्वाग् भूत्वा मुखं प्राविशत्' इति अग्निदेवताया एव वागधिष्ठातृत्वेन तदधीनप्रकाशप्रवृत्ति(प्रवृत्तिप्रकाश)कत्वादिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् । **भाति च...वेद** । वितरणविक्रमरूपहेतु-

---

वितरणविक्रमेति । इदं टीकातत्त्वटीकयोरुक्तम् । भाति च तपति

प्राण एव ब्रह्मणश्चतुर्थः पादः। स वायुना ज्योतिषा भाति च तपति च। भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ॥ चक्षुरेव ब्रह्मणश्चतुर्थः पादः। स आदित्येन ज्योतिषा भाति च तपति च। भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन, य एवं वेद ॥५॥ श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः। स दिग्भिर्ज्योतिषा भाति च तपति च। भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥

इति तृतीयाध्याये अष्टादशः खण्डः

तृतीये एकोनविंशः खण्डः

आदित्यो ब्रह्मेत्यादेशः। तस्योपव्याख्यानम्—

---

भेदात् कीर्तियशसोर्भेदः। ब्रह्मवर्चसं वृत्ताध्ययनसमृद्धिः। शिष्टं स्पष्टम्। प्राण एव....वायुना ज्योतिषा भाति....। वायुप्राणयोरेकतत्त्व(वृत्ति)त्वादिति भावः। चक्षुरेव...आदित्येन....। आदित्यस्य चक्षुरधिष्ठातृत्वादिति भावः। श्रोत्रमेव...दिग्भिः....। 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' इति दिग्देवतानां श्रोत्राधिष्ठातृत्वादिति भावः। अवशिष्टस्पोक्तोऽर्थः। द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ३-१८

पूर्वत्रादित्यो ब्रह्मणः पाद उक्तः। अथ तस्मिन् सकलब्रह्मदृष्ट्यर्थमिदमारभ्यते....आदित्यो ब्रह्मेत्यादेशः। 'आदित्यो ब्रह्म'

---

चेति। अत्र, 'कीर्त्या यशसा भाति, ब्रह्मवर्चसेन तपति' इति योज्यमिति तत्त्वटीका। वायुना ज्योतिषेति। वायोर्ज्योतिष्ट्वं प्राणभानकरत्वात्। वागादेरग्न्यादिरिव न प्राणस्य वायुर्देवता। अथापि तस्य तादधीन्योक्तिः तद्विकारत्वादित्याशयेनाऽऽह एकतत्त्वत्वादिति। इदञ्च प्राणोऽयं मुख्यप्राण इत्याशयेन। प्राणो घ्राणमिति तु शाङ्करे। तदाऽपि न वायुर्देवता। किन्तु, 'वायुर्गन्धानिवाशयात्' इति न्याये नोपकारी॥

आदित्यो ब्रह्मेति। अस्या आदित्यदृष्टेर्निर्दुष्टकल्याणघोषप्राप्त्य-

असदेवेदमग्र आसीत्। तत् सदासीत्। तत् समभवत्। तदाण्डं निरवर्तत। तत् संवत्सरस्य मात्रामशयत। तन्निरभिद्यत। ते आण्डकपाले रजतञ्च सुवर्णञ्चाभवताम ॥ १ ॥

तत यद्रजतं सेयं पृथिवी। यत सुवर्णं सा द्यौः। यज्जरायु ते

---

इत्युपदेशः क्रियत इत्यर्थः। तस्योपव्याख्यानम्। क्रियत इति शेषः। असदेवेदमग्र आसीत्। इदं जगत् अग्रे असत् अव्याकृत-नामरूपमासीत्। तत् सदासीत्। तत् अव्याकृतनामरूपं जगत् सदासीत् ईषन्नामरूपकार्याभिमुखमासीत्। तत् समभवत्। अल्पतरनामरूपव्याकरणेन, अङ्कुरीभूतमिव बीजं क्रमेण स्थूलमभवदि-त्यर्थः। तदाण्डं समवर्तत। अण्डं संवृत्तमित्यर्थः। आण्डमिति च्छान्दसो दीर्घः। तत् संवत्सरस्य मात्रामशयत। संवत्सरस्य कालस्य मात्रां परिमाणम् एकरूपतया अशयत स्थितं बभूवेत्यर्थः। तन्निरभिद्यत। संवत्सरकालादूर्ध्वं तदण्डं निर्भिन्नमभवत्। ते... चाभवताम्। ते आण्डकपाले अण्डकपाले रजतञ्च सुवर्णञ्चैकैकम-भवतामित्यर्थः। तत....पृथिवी। यत् रजतमयं कपालम्, तत् पृथिव्याद्युप-लक्षितमधोण्डकपालमित्यर्थः। यत् सुवर्णं सा द्यौः। सुवर्णमयं कपालं

---

धीनसुखलाभः फलम्। यथा लोके अण्डोत्पत्तिरण्डजजन्तूत्पत्त्यर्था, तथेहेति ब्रह्माण्डान्तः आदित्यस्यैव प्राधान्यं गमयितुमेवमुपव्या-ख्यानम्। अत एव पृथिवीपर्वतादिषु निर्भिन्नकपालत्वादिकल्पनया सर्वेषां गुणभूतत्वोक्तिः। मात्रामिति अत्यन्तसंयोगे द्वितीया। यथा पक्ष्यादिजमण्डं कञ्चित् कालं तथैव स्थितं कालविपाकात् निर्भिद्यते, तथेति। रजतमयमिति। ऊर्ध्वाधोलोकानां सुवर्णत्वरजतत्वे अति-शयितभोगसाधनत्वतारतम्यादारोपिते। नात्र मयट् विकारार्थे। वस्तुतो रजतविकारत्वाभावात्। अतः, 'प्राणिरजतादिभ्योऽञ्' इति

**पर्वताः। यदुल्बँ स मेघो नीहारः। या धमनयस्ता नद्यः। यत् वास्ते-यमुदकँ स समुद्रः ॥ २॥**

**अथ यत्तदजायत, सोऽसावादित्यः। तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्; सर्वाणि [च] भूतानि; सर्वे च कामाः। तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति, सर्वाणि च भूतानि; सर्वे चैव (च) कामाः ॥ ३ ॥**

---

द्युलोकोपलक्षितमूर्ध्वकपालम्। **यज्जरायु ते पर्वताः।** जरायु गर्भपरिवेष्टनम्। अण्डस्य शकलीभावदशायां याः स्थूलगर्भपरिवेष्टनसिराः, ते पर्वता बभूवुरित्यर्थः। **यदुल्बम्, स मेघो नीहारः।** यत् उल्बं सूक्ष्मं गर्भपरिवेष्टनम्, तत् मेघसहितं हिमम्। **या धमनयः, ता नद्यः।** धमनयः सिरा इत्यर्थः। **यत् वास्तेयमुदकम्, स समुद्रः।** वस्तौ भवं **वास्तेयम्।**

**अथ यत्तदजायत, सोऽसावादित्यः।** तत् तस्मिन्नण्डे गर्भरूपं यदजायत, सः असावादित्य इत्यर्थः। **तं...कामाः।** तमादित्यं जायमानमनु **उलूलवः** उरूरवः=उरुरवाः विस्तीर्णरवाः महाध्वनियुक्ताः। **उलूरव** इति छान्दसं रूपम्। **घोषाः** शब्दाः, स्थावरजङ्गमानि **भूतानि** च, तेषां **कामाः** काम्यमानाः स्त्रीवस्त्रादयश्च

---

राजतमित्येत्र स्यादिति न शङ्क्यम्। किंतु, 'तत्प्रकृतवचने मयट्' इति भावे मयट्। प्रचुररजतरूपमित्यर्थः। वस्तिः=मूत्रस्थानम्। वास्तेयमिति, 'यस्य वास्तेयमब्धिः' इतिवत्। उलूलव इति उत्सवकालीनाः शब्दविशेषाः देशविशेषे प्रसिद्धा इत्यानन्दगिरिः। अन्ये बहुवचनत्वोपपत्तये उलूलुशब्दमुकारान्तं देशविशेषप्रसिद्धं कल्पयन्ति केचित्। सर्वथा रु शब्दे इति धातुनिष्पाद्यैतच्छान्दसरूपमूलको देशविशेषे ईदृशव्यवहारः, न तु अपभ्रंशलौकिकपदमिति ज्ञापनाय

**स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते, अभ्याशो ह यदेनँ साधवो घोषा आ च गच्छेयुः, उप च निम्रेडेरन्, निम्रेडेरन् ॥ ४ ॥**

इति तृतीयाध्याये एकोनविंशः खण्डः ।

**इति छान्दोग्योपनिषदि तृतीयोऽध्यायः (तृतीयः प्रपाठकः) ।**

---

**उदतिष्ठन्** उत्थितवन्त इत्यर्थः । सर्वस्यादित्योदयानन्तरभावित्वादिति भावः । **तस्मात्....कामाः** । तस्मादद्यत्वेऽपि आदित्यस्योदयं प्रति, **प्रत्यायनम्**-अस्तमयञ्च प्रति, उरुरवाः शब्दाश्च भूतानि च कामाश्च उत्पद्यन्त इत्यर्थः । उदयास्तमयवेलायां पक्षिघोषादीनां दर्शनादिति भावः।

**स य...निम्रेडेरन्** । हशब्दः प्रसिद्धौ । **एनम्** आदित्यब्रह्मोपासकम् । **अभ्याशः** क्षिप्रम् । **यत्** ये इत्यर्थः । ये **साधवः** शोभनाः घोषाः, ते **उप** समीपे आगच्छेयुश्च । **निम्रेडेरन्** सुखं च कुर्युरित्यर्थः । '**मृड सुखे च**' इति हि धातुः ; अन्तर्भावितण्यर्थः । **निम्रेडेरन् निम्रेडेरन्** इति द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥

**इति छान्दोग्योपनिषत्प्रकाशिकायां तृतीयोऽध्यायः**

---

**उरुरवा इति, छान्दसमिति चोक्तम् । अस्तमयञ्चेति । यद्यपि प्राक् जायमानमित्युक्तस्यात्रोदयमात्रे घोषाद्युत्थितिकथनमुपष्टम्भकम्— अथापि तत्साहित्येनास्तमयेऽप्येतद्दर्शन देवमुक्तम् । प्रत्यायनपदस्य प्रत्यागमन एव प्रसिद्धत्वात् सोऽप्यर्थः शाङ्करोक्तः उदयपदेनैव तस्योक्तत्वादिहोपेक्षितः । अस्तु वा सोऽप्यर्थ इहोपलक्ष्यः; उदयं प्रति इत्यस्यैव जायमानत्वरूपार्थव्युदासाय प्रत्यायनं प्रति इति विवरणम्; अन्यथाऽस्तमयपरत्वे चकारापत्तेरिति । निम्रेडेरन्निति । 'मृड क्षोदे सुखे च (सुखने)' इति धातुग्रहणे मृड्णाति इति रूपं भवति । 'म्रेडृ उन्मादे' इति धातौ च म्रेडतीति । प्रयोगोऽयं विमृश्यः॥**

## अथ चतुर्थोऽध्यायः । ४—१

ओं । जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस । स ह सर्वत आवसथान् मापयाञ्चक्रे, 'सर्वत एव मेऽन्नमत्स्यन्ति' इति ॥ १ ॥

---

संवर्गविद्या प्रस्तूयते–विद्यास्तुत्यर्था आख्यायिका । **जानश्रुतिर्ह... आस** । जनश्रुतस्यापत्यं **जानश्रुतिः** । हशब्दः प्रसिद्धौ । पुत्रसंज्ञस्य पुत्रः पौत्रः ; तस्यापत्यं **पौत्रायणः** । श्रद्धापुरःसरं देयं यस्य(देयमस्य), सः **श्रद्धादेयः**। अर्थिभ्यो बहु दातुं शीलमस्य; स **बहुदायी** । बह्वस्य गेहेऽन्नं पक्तव्यं यस्य, स **बहुपाक्यः** । एवङ्गुणसंपन्नो जानश्रुतिः कस्मिंश्चिद्देशे आस । **स... अत्स्यन्तीति** । स ह जानश्रुतिः, 'सर्वत एत्य अतिथयो ममान्नं भोक्ष्यन्त' इत्यभिप्रायेण सर्वासु दिक्षु ग्रामनगरमार्गारण्यादिषु पान्थानामनाथानां शीतवातवर्षातपवारण(निवारक)-आन्नोदकशयनाच्छादनादिपूर्णाः शालाः कारितवानित्यर्थः ।

---

तृतीयेऽध्याये प्रथममैश्वर्यमिश्रमुक्तिफलां आदित्यमधुविद्यामादिश्य अथ शुद्धमुक्तिफलिका गायत्रीविद्या, तदनुबन्धिक्षुद्रफलकौक्षेयज्योतिर्विद्या, अथ तद्वदेव भारूपज्योतिर्विषयिणी मुक्त्यर्था शाण्डिल्यविद्या, ततः प्रसक्तप्राणतरमभूतवायुविषयिणी वायुवत्सककोशविद्या, प्राणात्मकपुरुषायुर्विषयकपुरुषविद्या, वायुप्राणरूपपादविशिष्टमनोब्रह्मदृष्टिः, अथ तद्दृष्ट्यन्तर्गतप्रथमोपक्रान्तादित्यविषयकब्रह्मदृष्टिश्च क्रमेणोक्ताः । तत्राप्रधानतया दर्शितयोर्वायुप्राणयोः प्राधान्येन ग्रहणं यत्र, सा वायुप्राणरूपसंवर्गविषयिणी परविद्या रैक्केण ब्राह्मणेन जानश्रुतये क्षत्रियायोपदिष्टा चतुर्थप्रपाठकारम्भे प्रस्तूयते । श्रद्धादेय इति । तथाच तैत्तिरीयम्, 'श्रद्धया देयम्' इति ।

अथ ह हँसा निशायामतिपेतुः। तद्धैवँ हँसो हँसमभ्युवाद, 'भोभो (होहो)ऽयि भल्लाक्ष! भल्लाक्ष! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततम्। तन्मा प्रसाङ्क्षीः(क्षीत्)। तत् त्वा मा प्रधाक्षीत् (क्षीः)' इति ॥ २ ॥

---

अथ...पेतुः। एवंसति कस्यांचित् रात्रौ केचन महात्मानोऽन्नदानादिगुणैस्तोषिता भूत्वा हंसरूपास्सन्तो राज्ञो दर्शनगोचरे आगताः। तद्ध....अभ्युवाद। तद् तस्मिन् काले तेषां हंसानां मध्ये एकः पृष्ठतो गच्छन् हंसः अग्रेगामिनं कञ्चन हंसमुवाच। भो....प्रधाक्षीदिति। भो भो अयि इति संबोध्य, भल्लाक्षभल्लाक्षेत्यनेन विपरीतलक्षणया मन्दलोचनेति संभ्रमेण द्विवारं संबोधनम्। समं दिवा स्वर्गेण समम्, दिवा (स्वर्गेण) दिवसेन समं वा अस्य राज्ञः तेज प्रसृतम्। तत् तस्मिन् तेजसि मा प्रसाङ्क्षीः मा

---

आतिपेतुरिति। स्ववेलान्नादिप्रदानार्थिवसथादिनिर्मातुरस्य जानश्रुतेर्धार्मिकाग्रेसरस्य स्वदेशवर्तिमहात्मरैक्वसंराधन-सर्वदर्शित्वसर्वैश्वर्यपरमान्नभोक्तृत्वार्थपरविज्ञानलम्भनकाम्ययेति शेषः। अभ्युवादेति। अभिमुखीकरणेन संबोधनेन उवादेत्यर्थः। एवमुपर्यपि। भोभो इति संबोधनं तस्य दूरं गतत्वात्। तदाशयेनाऽऽह इति संबोध्येति। इति संबोध्य भल्लाक्षेति द्विवारं संबोधनं तेन विपरीतार्थे लक्षणाकरणेन मन्दलोचनेत्यर्थे संभ्रमकृतमिति योजना। भोभो इत्यस्यैव पर्याप्तत्वात् भल्लाक्षेति संबोधनं व्यर्थमिति न; दिवासमस्य जानश्रुतिज्योतिषोऽपि दर्शनं ते वत नेति, सावधानं तेजोदर्शनेन दूरान्निवृत्त्यर्थं, मन्दलोचनेत्यर्थविवक्षया तत्करणात्। तत्रापि द्विरुक्तिस्तु भोभो इतिवत् संभ्रमकृतेति भावः। भद्राक्षेति पदं भल्लाक्षेति विकृतमित्यानन्दगिरिः। (भद्र॰ भद्ल. भल्लेति?)

तमुह परः प्रत्युवाच, 'कम्बर एनमेतत्सन्तँ सयुग्वानमिव रैक्वमात्थ' इति । 'यो नु कथँ सयुग्वा रैक्व' इति ॥ ३ ॥

---

प्रसक्तो भू. । 'प्रसक्तौ को दोषः' इत्यत्राऽऽह तत् त्वा मा प्रधाक्षी-दि(रि)ति । तत् तेजः त्वां मा दहेदित्यर्थः । इत्यभ्युवादेत्यन्वयः ।

**तमुह परः प्रत्युवाच** । एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्य तदसहमान इवापरो हंसः प्रत्युवाचेत्यर्थः । [प्रत्युक्तिमेवाह] **कं...रैक्वमात्थेति** । उ इत्यनर्थको निपातः । अरे **कं सन्तं** केन माहात्म्येन युक्तं सन्तम् **एनं** जानश्रुतिं प्रति **सयुग्वानं** सशकटं **रैक्व-मिव** रैक्वं प्रतीव **एतत्** प्रशंसा(परं)वचनं ब्रवीषि(प्रब्रूष)। रैक्व एव ब्रह्मज्ञो महाप्रभावः । अब्रह्मज्ञस्यास्य किं तेजः ; किं वा मां दहेदिति भावः ।

एवमुक्तः पश्चात् पतन् हंसः पृच्छति **यो नु कथं सयुग्वा रैक्व इति** । य उक्तः, स किंप्रकार इत्यर्थः ।

---

भल्लतुल्यनेत्रेति क्वचित् कोशे व्याख्यानम् । दिवसेनेति । इयं निशाप्यत्र दिवसप्राया । तत् कथं न पश्यसीति भावः । उ इति । कम्बर इत्यत्र, 'कं वरः' इति छित्वा वरो वराको जानश्रुतिरिति क्लिष्ट-स्यातिनिन्दारूपस्यानन्वितस्य परानुयायिभामत्यादिकथितस्यार्थस्या-संमत्या इदमेव शाङ्करेऽपि दृष्टमादृतम् । न च, 'निपात एकाजनाङ्' इति प्रगृह्यापत्तिः । 'मय उञो वो वा' इति संध्युपपत्तेः । अतः उकार एवेहेति एतदित्यस्य एवमित्यर्थोऽपि स्यात् । सन्तमिति रैक्वविशेषणमिति माध्वयोजना । तदा, 'सन्तमेनं ततो विदुः' इत्युक्तस्य ब्रह्मविरस्य रैक्वे कण्ठोक्तिः । सयुग्वानम् । युग्ययुक्ता शकटी युग्वा । (मत्वर्थीयो वनिप्प्रत्ययः ।) तत्सहितम् । यो न्विति । एतदनन्तरं स इत्यध्याहारः । योऽसौ, स सयुग्वा रैक्वः कथम्भूत इति । इतिशब्दः प्रश्नसमाप्तौ ।

'यथा कृताय विजितायाधरेऽयाः संयन्ति, एवमेनं सर्वं तदभिस-

इतर आह—**यथा कृताय....स मयैतदुक्त** इति । यथा लोके—कृतनामा अयः द्यूतसमयप्रसिद्धः चतुरङ्कायः, तत्र **विजितं** जयो यस्य सः कृतायविजितः पुरुषः ; अथवा **विजितं** विजयः । तस्मै इत्यर्थः—तदर्थमितरे त्रिद्व्येकाङ्काः **अधरे** न्यूनाः अयाः **संयन्ति** संगच्छन्ते, अन्तर्भवन्ति—चतुरङ्के कृताये एकाङ्कद्व्यङ्कत्र्यङ्कानां 'शतं सहस्रे संभवति' इति न्यायेन विद्यमानत्वात् तत्रान्तर्भवन्तीत्यतः कृताङ्कविजयिनः एकाङ्कादिविजयोऽप्यस्तीति भावः—, एवमेव लोके

---

चतुरङ्काय इति । यथा चतुरादिपाद्धर्मकाः चतुरादिसहस्रसंवत्सरसंख्याकाः युगभेदाः, तथा चतुरङ्कत्र्यङ्कद्व्यङ्कैकाङ्काः अयाः क्रमेण कृतत्रेताद्वापरकलिनामानः । एतद्द्यूतप्रकारः ज्योतिरधिकरणकल्पतरुपरिमले विशदं द्रष्टव्यः । अत्र किञ्चिदुच्यते । अयो नाम अक्ष इति केचित् । अक्षस्य भागः पार्श्वम् अय इत्यन्ये । 'अयः शुभावहे दैवे, गतौ, द्यूताक्षपातने' इति निघण्टुमनुसृत्य अयोऽक्षपातनमिति परे । तत् द्यूतम् । तत् द्विविधम् एकाक्षपातनं बह्वक्षपातनञ्च । तत्र एकाक्षपातनमङ्किताक्षपातनम् । अङ्को नाम बिन्दुरूपं चिह्नमक्षपार्श्वेषु । एकत्र चत्वारोऽङ्काः, अन्यत्र त्रयः, अपरत्र द्वौ, इतरत्र एकश्च । एवम्भूतेनाक्षेण दीव्यत्सु पुरुषेषु येन पातितस्याक्षस्य चतुरङ्को भागः उत्तानः उपरि दृश्यमानो भवति, स कृतायभाक् विजयी । यैस्तु पातितेऽक्षे त्र्यङ्कादिपार्श्वानामुत्तानता, ते पराजयिनः । चतुर्षु त्र्यादीनामन्तर्भावात् । अनङ्किताक्षपातनं तु बह्वक्षपातनम् । अनियतसंख्यान् राशिभूतान् अक्षान् विकीर्य चतुष्कशो गणने क्रियमाणे यस्य पुंसोऽन्तिममपि गणनं पूर्ववत्समं चतुरक्षात्मकम्, स कृतायेन विजयी । येषां तु त्र्यादिरूपतया तत् न्यूनम्, ते परा-

मेति, यत् किञ्च प्रजाः साधु कुर्वन्ति, यस्तत् वेद, यत् स वेद, स मयैतदुक्तः' इति ॥ ४ ॥

---

प्रजाः यत् साधु कुर्वन्ति यद्यत् शोभन कर्मानुतिष्ठन्ति, तत् सर्वम् एनं कृतायस्थानीयं रैक्वमभिसमेति संगच्छते । तत्कर्मणि सकलं शोभन कर्म अन्तर्गतमिति यावत् । किञ्च यस्तत् वेद यत् स वेद स मयैतदुक्त इति । सः रैक्व यत् वेद, तदेवान्योऽपि यः कश्चित्

---

जयिनः। अत्र, 'कृतायवि जताय' इति मूलमुभयसाधारणमिति भाष्ये अपि 'चतुरङ्काय' इत्यादि उदाहरणमात्रत्वात् प्रकारान्तरोपलक्षणम् । अस्त्यन्यदपि द्यूतं नियतसंख्यपञ्चाक्षपातनादिरूपम्, यत्राक्षाणां सर्वेषामुत्तानतया पातने विजयः, अन्यदा पराजय इत्यादिव्यवस्था । तादृशं तु द्यूतं न कृतादिशब्दैः प्रसिद्धम् ।

अत्र कृतायस्य दृष्टान्ततया कथनम्, राज्ञां द्यूतपरिचयशालितया परिचितस्य दृष्टान्ततया कथनस्य युक्तत्वात्, रैक्वविद्यायां कृतत्वभावनासद्भावाच्च तस्योपस्थितत्वात् । एतच्छ्रवणाच्च राजा कितव इवाक्षपराजितो व्याकुलहृदयो भवेदिति ।

पुरुष इति । एनमिति रैक्वस्य पुरुषस्य दार्ष्टान्तिकत्वेन ग्रहणात् इदं दृष्टान्तपदं पुरुषपरं स्वीकृतम् । आहिताग्न्यादिगणान्तर्भावकल्पनया वा, 'विजितकृतायाय' इत्यर्थे इदं रूपम् । दार्ष्टान्तिके, 'सर्वं तत्' इति क्रियाग्रहणात् क्रियायाः क्रियायामन्तर्भावस्य स्वरसत्वात् एनमिति रैक्वोक्तावपि रैक्वक्रियायां पर्यवसानमित्यालोच्यात्रापि विजयक्रियापरत्वेन व्याख्याति अथवेति । एवं कृतायेति चतुर्थ्यन्तं पृथक्पदमेव स्यात् । 'विजिताय' इति 'रामो विजयत' इतिवदकर्मकात् कर्तरि क्तः । अस्तु वा कर्मणि क्त एव; 'कृतं यजमानो विजिनाति' (आ. श्रौ. ५-२९) इति प्रयोगात् । तदर्थस्तु कृतेन यजमानो विजयत इत्येव । सहस्र संभवतीति । संभवः = मेलनम् । अन्तर्भावः

वेद । तज्ज्ञातमेवान्ये जानन्ति । तज्ज्ञाने सर्वज्ञानमन्तर्गतमित्यर्थः । सः तादृशो रैक्व मया एतत् इदानीं (एतद्भावयेन), 'सयुग्वानमिव रैक्वमात्थ' इति(त्यनेन) उक्त इत्यर्थः। श्रीवेदान्ताचार्यैः तत्त्वटीकाया-मस्यार्थस्य प्रतिपादितत्वात् । उक्तञ्च भगवता भाष्यकृता, "लोके यत् किञ्चित साध्वनुष्ठितं कर्म, यच्च सर्वचेतनगतं विज्ञानम्, तदुभयं यदीयज्ञानकर्मान्तर्गतम्, स रैक्व इत्याह" इति ।

---

तत्त्वटीकायामिति । अत्र तत्त्वटीकाभावप्रकाशिकानुसारात्, 'तदेवान्योपि यः कश्चित् वेद' इत्यस्य, 'अन्योऽपि कश्चित् यो वेद' इति योजना ग्राह्या । यच्छब्दस्य प्रतिसंबन्धि च एतमिति पूर्वपदम् । अतः, 'एवकारे कश्चिदिति पदे च श्रूयमाणे कथमयमर्थः । एवकारा-भावे हि अधिकज्ञत्वं न सिद्ध्यति' इति न शङ्क्यम् । अत्र रैक्वकर्मणि सकलकर्मान्तर्भाववत् रैक्वज्ञाने सर्वज्ञानान्तर्भावोऽपि सिद्ध्यतीति विशदीकरणार्थम्, 'तद्ज्ञातमेवान्ये जानन्ति । तद्ज्ञाने सर्वज्ञान-मन्तर्गतम्' इति स्वयं विश्चिदुक्तम् । 'यस्तत् वेद' इत्यस्यान्वयस्तु, 'एतं सर्वं कर्म तदभिसमेति' इत्यत्रैवेदः, तत्त्वटीकानुसारस्य दर्शितत्वात् । अत्र तज्ज्ञातमित्यत्र यत्पदं रैक्वविदितवे पुरुषपरम् । तथाच, 'एतं सर्वं कर्म तदभिसमेति' इत्यत्र । एव दर्शितो भवति । शाङ्करेऽपि इत्थमेवोपनिषद्योजना । यत्— इत्यादेः प्रथमोऽर्थः रैक्वं सर्वे-ऽभिसमेतीति ; अथ यस्तत् वेदेत्यादिना, 'न केवलं रैक्वमेव, किंतु रैक्वविदितं यो वेद एतमपि' इति उच्यते इत्यर्थद्वयं स्पष्टं तत्र । तमित्यनुक्त्वा एतमिति कथनं सन्निहितं जानश्रुतिं लक्ष्यीकृत्येति च स्वरसम् । यत् रैक्वो वेद, तत् जानश्रुतिरपि विद्याच्चेत्, रैक्वमिव एनमपि प्रजाकर्म सर्वमभिसमियात् । ततोऽयमपि स इव समातत-ज्योतिः स्यात् । न तु तज्ज्ञाने । एवं बहुदायित्वादिमात्रेणेति इतोऽवगमात् रैक्वशिष्येण मया भाव्यमिति जानश्रुतिः प्ररोचितो

यद्यपि व्यासार्यैः लघुसिद्धान्ते, "आवृत्तिरसकृदुपदेशात्" इत्यत्र, 'यस्तत् वेद=यो वेदिता, यत् स वेद=यत् वेद्यम्, स मयैतदुक्तः(स) स वेदिता रैक्वः, एतत् तद्वेद्यं ब्रह्म इत्येतदुभयं

---

भवति। अत्र तत्त्वटीकादर्शितयोजनायां रैक्वविदितवेदिनि वै-प्रजासाधुकर्मसंगम एव श्रुत्या साक्षादुक्तः। एवं सति भाष्योक्तज्ञानकर्मोभयसंगमलाभः कथमिति चेत्—एकत्र कर्ममात्रस्य अन्यत्र ज्ञानमात्रस्य चोक्तावपि उभयमुभयत्र विवक्षितम्। कर्मज्ञानयोर्मिथः साध्यसाधनभावात्। तदैवोपपादनौचित्यात्। अत्र पूर्वत्र कर्मणा ज्ञानमुपलक्षितमिति ज्ञापनाय सर्वचेतनगतविज्ञानस्य भाष्ये पश्चान्निर्देशः; वेदेति कर्मोपलक्षणमिति ज्ञापनायोत्तरत्र ज्ञानकर्मेति क्रमादरणमिति च भाव्यम्। माध्वे तु, 'तत् यत्' इति पदयोर्विनिमयेन, 'लोके यो यत् वेद, तत् स रैक्वो वेद' इत्युक्तम्।

एवं तु समीक्षणे अन्यान्योऽप्यर्थः संभाव्यते। यथा—सः रैक्वो यत् वेद, तत् यो वेद, स रैक्वो मयोक्त इत्यर्थः। अनेन रैक्वविदितवेदी रैक्व इति कथनात् तद्विदितं स एव वेद, नान्य इति सर्वज्ञानस्य तदीयज्ञानान्तर्गतत्वं भाष्योक्तं स्पष्टम्। यथा च—यो रैक्वः तत् प्रकृष्टं दुर्ग्रहं (ब्रह्म) वेद, एनं सर्वं कर्माभिसमेति। यत्=यस्मात् कारणात् स वेद, एतत्=एतस्मात् कारणात् स रैक्वो मया उक्तः=प्रशंसित इत्यर्थः। तेनाब्रह्मविदो जानश्रुतेः बहुदायित्वादिसर्वविहितकर्मपरत्वेऽपि, 'अन्तवदेवास्य तत् भवति' इत्युक्तरीत्या न महत्त्वम्—यावत् रैक्वस्य, 'पामानं कषमाणम्' इत्युक्तरीत्या विहितमहनीयकर्मानुष्ठानविरहिणोऽन्यथा चेष्टमानस्यापि ब्रह्मवित्त्वात् महत्त्वमित्युक्तं भवति। सर्वापेक्षया तु तत्त्वटीकादर्शितोऽर्थः शांकरानुसारी सर्वयच्छब्दतत्प्रतिसंबन्धिशब्दैकान्वयेनैकवाक्यतासंपादकोऽक्लिष्टो जानश्रुतिप्ररोचकश्चेति।

लघुसिद्धान्ते...इत्यत्रेति। लघुसिद्धान्तगतवृत्तिसूत्रव्याख्या-

मयोक्तम्, तव मयोपदिष्टमित्यर्थः' इत्युक्तम्—तदप्येतत्परं द्रष्टव्यम्; न तु प्रतीयमानार्थपरम्। **यस्तत् वेद यत् स वेदे**ति वाक्यात् प्राचीने, 'यथा कृतायविजितायाधरेऽयाः संयन्ति, एवमेवं सर्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ति' इति वाक्ये ब्रह्मप्रसक्तेरेवाभावेन वेदिता वेद्यश्च तवोपदिष्टमित्यस्यार्थस्यासंभवेन **यस्तत् वेद यत् स वेदे**ति वाक्येन प्रतिपादनासंभवात्; भाष्यविरोधाच्चेति द्रष्टव्यम्।

[केचित्तु—**भगवता भाष्यकृता लघुसिद्धान्तभाष्ये,** 'यस्तत् वेद यत् स वेद स मयैतदुक्तमित्यत्र' इति एतद्वाक्यप्रतीकस्य धृतत्वात् तदनुरोधेन **व्यासार्यैः**, 'स मयैतदुक्तम्' इति नपुंसकान्तपाठस्य गृहीततया तत्र नपुंसकस्य **उक्त**शब्दस्य **स** इति पुल्लिङ्गतच्छब्दविशेषणत्वायोगात्, 'यस्तत् वेद यत् स वेद' इति पुंनपुंसकान्तयच्छब्दद्वयनिर्दिष्टयोः वेत्तृ-(वेदितृ?)वेद्ययोः 'स मयैतदुक्तम्' इत्यत्र क्रमेण प्रतिनिर्देशकयोः स एतदिति पुंनपुंसकसर्वनामशब्दयोः श्रवणेन, **सः** वेदिता **एतत्** वेद्यं परं ब्रह्मेत्येतदुभयं मयोक्तमित्यर्थस्यैव वाक्स्वारस्यलभ्यत्वाच्च स एवार्थो युक्त इति **व्यासार्या**भिप्रायः। न चात्रोदाहृतभाष्यविरोधः; **'प्रकाशश्च कर्मण्यभ्यासात्'** इति सूत्रे,

'वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः॥'

इति **मनुस्मृतौ** च मनोव्यापारात्मके वेदने **कर्म**शब्दप्रयोगदर्शनेन

---

**नावसरे इत्यर्थः। आवृत्त्यधिकरणेऽपीदमुक्तमेव। भाष्यविरोधादिति। ऐक्यमात्रोपदेशस्यैव भाष्ये उक्तेरिति भावः। 'केचित्तु' इत्यादिः 'आहुः'**

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव । स ह सञ्जिहान एव

---

'यत् किञ्च प्रजाः साधु कुर्वन्ति' इत्यनेनैव सर्वप्रजानुष्ठितसाधुकर्मण इव सर्वचेतनगतज्ञानस्यापि ग्रहणं संभवतीत्यभिप्रायेणैव तत्र भाष्ये, 'यत किञ्चित् साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं विज्ञानम्' इति कर्मापेक्षया ज्ञानस्य पृथङ्निर्देशात् । अत एव पूर्ववाक्ये ब्रह्मप्रसक्तिरेव नास्तीत्यपि प्रत्युक्तम् । सर्वप्रजानुष्ठितसाधुकर्मणः सर्वचेतनगतज्ञानस्य च रैकज्ञान-कर्मणोः स्वरूपेणान्तर्भावस्य दुरुपपादतया कृतायाधरायदृष्टान्तस्वारस्येन च रैकवेदनविषये तत्कर्मोद्देश्यभूते च सविभूतिकब्रह्मणि सर्वप्रजानुष्ठित-कर्मोद्देश्यसर्वचेतनगतज्ञानविषययोरन्तर्भावस्यैव वक्तव्यत्वेन पूर्ववाक्ये ब्रह्मप्रसक्तेरावश्यकत्वात् । **तत्त्वटीकाग्रन्थस्तु**, 'स मयैतदुक्तः' इति पुल्लिङ्गान्तपाठे च सति तन्निर्वाहमात्राभिप्रायः । अतो व्यासार्यप्रति-पादितार्थ एव भगवद्भाष्यकृदभिमत इति न काप्यनुपपत्तिरित्याहुः ।]

**तदु...शुश्राव ।** तत् ब्रह्मज्ञानविधुरतया आत्मनिन्दागर्भं तद्वत्तया च रैकप्रशंसारूपं वाक्यं स राजा शुश्राव । **स ह...उवाच ।** स कथमपि निशामतिवाह्य **संजिहान एव** तल्पं त्यजन्नेव **क्षत्तारमुवाच** वक्ष्यमाणमुक्तवान् । **क्षत्ता** नाम,

"वैश्यात् ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते ।
जीविकावृत्तिरेतस्य राजन्त पुररक्षणम् ॥"

---

इत्यन्तः पाठः काचित्कः । आहुरित्यस्वरसः सूच्यते, लघुसिद्धान्त-भाष्ये उक्तमिति नपुंसकोपनिषत्प्रतीकधारणादर्शनात् । आवृत्त्यधि-करणटीकायाम्, 'पुल्लिङ्गनिर्देशो रैकाभिप्रायेण' इत्युक्तत्वाच्च । भावप्रकाशिकायामपि पूर्वोक्तनिर्वाह एवास्ति ; टीकापर्यवसानञ्च ।

क्षत्तारमुवाच, 'अङ्गारे! ह, 'सयुग्वानमिव रैक्कमात्थ' इति; 'यो नु कथं सयुग्वा रैक्कः' इति ॥ ५ ॥ 'यथा कृतायविजितायाधरेऽयाः संयन्ति एवमेनं सर्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ति यस्तत् वेद, यत् स वेद स मयैतदुक्त' इति ॥ ६ ॥

स ह क्षत्ताऽन्विष्य, 'नाविदम्' इति प्रत्येयाय। तँ होवाच, 'यत्रारे ब्राह्मणस्यान्वेषणा, तदेनमर्च्छ(मृच्छ)' इति ॥ ७ ॥

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश। तँ हाभ्युवाद, 'त्वं नु भगवः! सयुग्वा रैक्कः' इति। 'अहँ ह्यरा३' इति [ह]

---

इत्युक्तरीत्या राजान्तःपुररक्षकः प्रतिलोमजातिविशेषः। **अङ्ग अरे ह सयुग्वानमिव....तदुक्त इति।** ह(?) **अरे अङ्ग** वत्सेति तं क्षत्तारं राजा संबोध्य, 'रात्रावेवं हंसयोः सल्लापः समजनि' इति, **सयुग्वानमिव रैक्कमात्थे** यादिहंसोक्तिप्रत्युक्तिवाक्यानुवादपूर्वकं रैक्कस्य चिह्नमुक्तवानित्यर्थः।

**स ह क्षत्ता....प्रत्येयाय।** स च क्षत्ता शकटलक्षणरैक्कचिह्नमनुसरन् ग्रामनगरादिकमन्विष्य, **नाविदं** नाज्ञासिषमिति प्रत्यातवान्। **तं....तदेनमर्च्छेति।** अरे [क्षत्तः] **ब्राह्मणस्य** ब्रह्मविदः **यत्र** विजनेषु (विविक्तेषु) नदीपुलिनारण्यादिषु मार्गणं युक्तम्, **तत्** तत्र गत्वा **एनमर्च्छ** रैक्कं प्राप्नुहि=मार्गणं कुर्विति तं राजोवाचेत्यर्थः।

**सोऽधस्तात्....विवेश।** अथ पुनः सः क्षत्ता गत्वा विजने कस्मिंश्चिद्देशे शकटस्याधस्तात् पामानं **कषमाणं** कण्डूयमानं रैक्कमेत्य

---

अङ्गेत्यादि। अत्र सयुग्वानमित्यादि सर्वं हंसोक्तिप्रत्युक्त्यनुरूपम्। न तु, 'हे क्षत्तः किमिति मां रैक्कमिव स्तौषि' इति जानश्रुतिराहेत्येवंरूपशाङ्करव्याख्यानं रुचिरम्। तथाच, 'इति हंसव्याहारः श्रुतः। तत् तमन्विष्याऽऽगच्छ' इति पूरणीयम्।

प्रतिजज्ञे । स ह क्षत्ता [अन्विष्य], 'अविदम्' इति प्रत्येयाय ॥ ८ ॥

इति चतुर्थाध्याये प्रथमः खण्डः ।

चतुर्थे द्वितीयः खण्डः

तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदाऽऽदाय प्रतिचक्रमे । तं हाभ्युवाद ॥ १ ॥ 'रैक्वेमानि षट् शतानि गवाम, अयं निष्कोऽयमश्वतरीरथः । अनु म एतां भगवो ! देवताँ शाधि, यां देवतामुपास्से' इति ॥ २ ॥

---

दृष्ट्वा उपोपविवेश समीपे गत्वा विनयेनोपविष्टवान् । तं ह.... प्रत्येयाय । 'हे भगवन् ! त्वं वा रैक्वः' इति क्षत्त्रा पृष्टः ऋषिः, 'अरे ! क्षत्तः ! रैक्वोऽहमेव' इति प्रत्युवाच । तत् श्रुत्वा स क्षत्ता अविदम् अज्ञासिषमिति प्रत्यागत इत्यर्थः । ४-१.

तदुह जानश्रुतिः....प्रतिचक्रमे । [उहेत्यनर्थको निपातः । तत्] तत्र जानश्रुतिः गवां षट् शतानि, निष्कं कण्ठाभरणम्, अश्वतरीयुक्तरथं तदा गृहीत्वा रैक्वं प्रतिचक्रमे गतवान् । तं हाभ्युवाद । गत्वा च राजा तं रैक्वम् इत्युवाचेत्यर्थः । रैक्वेमानि.... रथः । हे रैक्व ! एतत् सर्वमानीतम् । तत् गृहाण त्वमित्यर्थः । अनु....उपास्स इति । एतत् गृहीत्वा, यां देवतां त्वमुपास्से, तां

---

रैक्वेमानीति । ननु तूष्णीं गवादिकमुपहृत्य विद्योपदेशमात्र-प्रार्थनं युक्तम् । न तु गुरोस्तन्नाम्ना समाह्वानं स्वदीयमानार्थगण-नञ्चेति चेत्—अयमेव रैक्व इति पुनः स्वयं निर्णेतुं नामनिर्देशः । पुनरागमनकाले नामनिर्देशोऽपि पुना रैक्वत्वनिश्चयार्थमेव स्यात् । तावत रैक्वेण तपोबलेन कन्यास्वीकारानुगुणं स्वरूपमन्यथाकृतं स्यादिति । अस्तु वा शूद्रेति संबोधनानुगुणं तस्योपसर्पणपद्धति-ज्ञानवैकल्यम् । दीयमानद्रव्यवर्णनञ्च, 'नाहं चिरकालसेवने शक्तः ।

तमुह परः प्रत्युवाच—अह हारेत्वा शूद्र ! तवैव सह गोभिरस्त्विति।

देवतां मे अनुशाधि विरुच्य ज्ञापयति प्रार्थयामास ।

**तमुह परः प्रत्युवाच** । परः रैक्वः तं राजानं प्रत्युवाच । तदेवाह —अह....अस्तु । अहेति निपात आश्चर्ये । योगमहिमविदित-लोकत्रयः ऋषिर्जानश्रुतेः ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्य-श्रवणेन शोकाविष्टतां तदनन्तरमेव ब्रह्मजिज्ञासयोद्योगञ्च विदित्वा अस्य ब्रह्मविद्यायोग्यतामभिज्ञाय, 'सत्यामपि योग्यतायां चिरकालसेवां विना अर्थप्रदानेन शुश्रूषमाणस्यास्य यावच्छक्तिप्रदानेन [विना] ब्रह्मविद्या प्रतिष्ठिता [न] भवति' इति मत्वा तमनुगृह्णन्, अस्य शोकाविष्टतामुप-देशयोग्यताख्यापि(यि)काम्, ब्रह्मजिज्ञासादार्ढ्यसिद्ध्यर्थं स्वयोग-महिमसाक्षात्कृतसकलवृत्तान्तत्वलक्षणस्वमहिमानञ्च शोचितृत्वप्रवृत्ति-निमित्तकशूद्रशब्दामन्त्रणेन ख्यापयन्, '**हारेत्वा** हारसहितः इत्वा=रथः

---

अतो द्रव्यग्रहणेनानुग्राह्यः' इति निवेदनाभिप्रायेण । परिजनरहितेन रैक्केण स्वाभीष्टाहरणजिज्ञासया किमाहृतमिति प्रश्नमुल्लिख्य पृष्ट्वा-देवं सर्वं न्यवेदयदिति वा भाव्यम् ।

योगमहिमेत्यादिकं 'परः' इति पदेन सूच्यते । हारेत्वेति । ननु हारः प्राङ् नोक्तो जानश्रुतिना । उच्यते । अनुक्तत्वेऽपि इत एव तस्यापि नीतत्वं कल्प्यम् । अत एव भामत्यां हारश्चेत्युक्तम् । निष्क-स्यैव वा हारत्वेनानुवादः कण्ठाभरणत्वात् (भा. प्र.)। अस्तु वा इत्वेत्यनेन समस्तत्वात् हारपदं शकटहारि नेतृयुग्मपरम्। अश्व-तरीरथ इत्युक्तेः। 'न मे किञ्चिदपेक्षितम्' 'नाहमुपदेक्ष्यामि' इती-वानुक्त्वा, तदुक्तद्रव्याणि स्वयं सकृदनुवाच्य, "तवैवास्तु" इत्युक्त्वा, 'एतद्रक्षणौपयिकपरिजनपरिच्छदविरहादिदं माऽस्तु' इति रैक्वाशयो

तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदाऽऽदाय प्रतिचक्रमे ॥ ३ ॥ तं हाभ्युवाद-रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्से । अन्वेव मा भगवः शाधीति ॥ ४ ॥

तस्याह मुखमुपोद्गृह्णन्नुवाच—

---

अश्वतरीरथः तवैव गोभिः सहाऽस्तु । कलत्रहीनस्य ग्रामगृहादिशून्यस्य मम गोरथादिरक्षणे का शक्तिः । मत्प्रयोजनापर्यवसाय्यल्पधनदानेन च कथं तव ब्रह्मविद्या प्रतिष्ठिता भवेत्' इत्युवाचेत्यर्थः । 'स्फायितञ्चि' इत्यादिना रक्प्रकरण(णे)पठितेन, 'शुचेर्दश्च' इति सूत्रेण रक्प्रत्यये, शुचेश्चकारस्य दकारे, 'अमितम्योर्दीर्घश्च' इति पूर्वसूत्रानुवृत्तेः (सूत्रेण) धातोरुकारस्य दीर्घादेशे च शूद्रशब्दो निष्पन्नो भवति ।

**तदुह पुनरेव...प्रतिचक्रमे** । तदभिप्रायं जानन् अधिकं गवां सहस्रम्, रैक्वस्य परिणयार्थं स्वकन्याम्, आवासार्थं तत्रत्यं ग्रामञ्चोपा(प ?)जहारेत्यर्थः । **तं ह....शाधीति** । स्वोपहृतं सर्वं समर्प्य, 'मा मां अनुशाध्येव । न प्रत्याख्याहि' इति प्रार्थयामासेत्यर्थः। 'यस्मिन् ग्रामे **त्वमास्से** निवसिष्यसि, सोऽयं तव वासार्थो ग्रामः' इत्यन्वयः ।

**तस्याह...उवाच** । **मुखम्** उपायनरूपोपायं तस्य जानश्रुति-

---

आयत इति विवृणोति कलत्रेत्यादिना ।

निष्पन्नो भवतीति । तथाच, 'शुगस्य' इति सूत्रोक्तादधिकं यत् शाङ्करोक्तम्, 'शूद्रवद्वा धनेन विद्याग्रहणायाजगाम' इति, 'एवैनं शूद्रेत्युक्तवान्' इति च—तदमूलम्, द्वितीयावृत्तौ शूद्रेत्यामन्त्रणाननुगतश्चेति ध्येयम् ।

तस्याहेति । अत्र तस्याः=राजदुहितुरिति शाङ्करम् । तत्रापि

आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति ।

---

संबोधनमुपगृह्णन् अङ्गीकुर्वन् उक्तवानित्यर्थः । उक्तमेवाह— आजहार....आलापयिष्यथा इति । इमाः दक्षिणाः आजहर्थ । आजहारेति व्यत्ययः छान्दसः । अनेनैव मुखेन उपायेन मां ब्रह्मोपदेशरूपं वाक्यं आलापयिष्यसे । ब्रह्मविद्योपदेष्टारं करिष्यसीत्यर्थः । 'थाऽऽलप्से' इत्येतद्दीर्घत्वाभावः छान्दसः । पुनरपि शूद्रेति संबोधनस्य पूर्ववदेव प्रयोजनम् । अत्र शूद्रशब्दस्य न रूढ्या वर्णविशेषोऽर्थः, चतुर्थवर्णस्य ब्रह्मविद्यायामनधिकारादिति द्रष्टव्यम् ।

---

मुखशब्दो न वदनपरः । 'मुखं द्वारं विद्यादानतीर्थं (द्वारतां) इति तदुक्तेः । भाष्ये तु अहेत्यव्ययं कृत्वा तस्य मुखमिति समुचितार्थः स्वीकृतः । मुखमित्यस्य वदनपरत्वेऽपि, 'दुहितुः स्वयरिणयौत्सुक्यं मुखे विजानन्' इति वा, 'जानश्रुतेः प्रणयस्योत्कटभक्तिश्रद्धापूर्णं मुखमुद्गृह्णन्' इति वाऽर्थो नासंभवी द्वितीयं तु मुखेनेति पदमुपायार्थकमेव । अथवा येन मुखेन त्वं प्राङ्निवर्तितः, तेनैव मन्मुखेनेत्यर्थोऽपि स्यात् । 'आजहारेमा इति स्वगतम्; शूद्रेत्यादि बाह्यवचनम्' इति स्वीकारे आजहारेति प्रथमपुरुषस्योपपन्नत्वेऽपि अपरोक्षे लिट्प्रयोगस्येव प्रथमपुरुषस्यापि छान्दसत्वं युक्तमित्याशयः । 'आजहार= अर्हं प्रतिगृहीतवानसि' इति व्याख्यासंभवेऽपि दाने एतद्धातोः श्रौतप्रसिद्ध्यतिशयात् आजहर्थे-युक्तमिति टीका । आलापयिष्यथा इति लृङ्प्रयोगात्, 'यदि पूर्वमेवाऽऽहृतवान् स्याः, तर्हि तदैवानेन मुखेनाऽऽलापितवान् स्याः' इत्यर्थोऽप्यभिसंहितो ज्ञायते; 'छन्दसि लुङ्लङ्लिटः' इति यथेच्छं लिट्प्रयोगसंभवात् । पूर्वं, 'तवैवास्तु' इत्युक्तत्वात्, इदानीं, 'समिधं सोम्याहर' इतिवत् आहर= आनयेथा इति अनुमतिर्दर्श्यत इत्यपि स्यात् । निष्करथादिषु स्त्रीभिन्नेषु वर्तमानेषु इमा इति स्त्रीत्वेन निर्देशो जायाप्राधान्यात् । बहुत्वञ्च जायायां गोषु

ते हैते रैक्वपर्णा नाम महवृषेषु यत्रास्मा उवास; तस्मै होवाच ॥ ५ ॥ इति चतुर्थाध्याये द्वितीयः खण्डः।

चतुर्थे तृतीयः खण्डः

वायुर्वाव संवर्गः। यदा वा अग्निरुद्वायति, वायुमेवाप्येति।

---

ते....उवास। यत्र ग्रामेषु रैक उवास, ते महावृषाख्यदेशेषु रैकपर्णा इति प्रसिद्धाः। तान् ग्रामांश्च स्मै ददावित्यर्थः। स (?) तस्मै होवाच। तत् सर्वं दत्तवते जानश्रुतये रैक्वः स्वोपास्यां देवतामुपदिदेशेत्यर्थः।

उपदेशमाह वायुर्वाव संवर्गः। संवर्जनाख्य(संवर्जननाम)-

---

अश्वतर्याश्च स्त्रीष्वेव निर्बाधम्। उपलक्षणमिदं निष्कादेरपि।

ते हैते इति। नन्वेको ग्रामस्तद्दत्तः। तत् कथमत्र बहुत्वम्॥ उच्यते। दानकाले ग्राम एक एव। पश्चात् बहुधा विभक्त इति। महावृषपदवत् अवान्तरदेशनामत्वाद्वा रैकपर्णपदे बहुत्वमिति तदनुरोधादेवम्। यद्वा, 'यस्मिन् ग्रामे त्वमास्से' इत्यत्र उद्देश्यविशेषणमेकत्वमविवक्षितम्। यत्र यत्र वासः क्रियते स स भवत इत्यर्थः। अत एव आस्से इत्यस्य निवसिष्यसीति भाष्ये विवरणम्। महावृषेति काश्मीरपर्याय इत्याहुः। यत्रास्मा उवासेति। असौ इत्यश्रवणात् अस्मै इति श्रवणात् यत्र देशे जानश्रुत्यर्थमेवायं चिरमुवासेत्यर्थः संभवति—अथापि तस्मै इति पदेन ग्राह्यस्यात्र अस्मै इति पदेन ग्रहणेऽनौचित्यादिवान्यथैव सर्वैर्व्याख्यातम्। यत्र रैकोऽस्मै= गार्हस्थ्यापेक्षया जानश्रुतितः प्रतिग्रहविशेषार्थं उपदेशार्थं वा उवासेत्यपि सुवचम्। यत्रास्मै उवास, उवाच च तस्मै, ते रैकपर्णा इति योजना संभवतीति।

जानश्रुतये रैकोपदिष्टमर्थं श्रुतिरुपदिशति वायुरिति। शोषणदाहनप्लावनोपयुक्ततया वस्तुविलयकत्वेन प्रसिद्धानि वायुतेजो-

यदा सूर्योऽस्तमेति, वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति, वायुमेवाप्येति ॥ १ ॥ यदाऽऽप उच्छुष्यन्ति, वायुमेवापियन्ति । वायुर्ह्येवैतान् सर्वान् संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥

अथाध्यात्मम्–प्राणो वाव संवर्गः । स यदा स्वपिति, प्राणमेव वागप्येति ; प्राणं चक्षुः ; प्राणं श्रोत्रम् ; प्राणं मनः ; प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति ॥ ३ ॥

---

गुणयोगात् वायुः [एव] संवर्गः । संवर्जनं सङ्ग्रहणम् । एकीकृत्य ग्रहणमित्यर्थः । संवर्गत्वगुणको वायुर्ध्येय इति यावत् । संवर्गत्वमेवोपपादयति—**यदा...संवृङ्क्ते** । **उद्वायति** उद्वासनं (उद्वानं ?) प्राप्नोति ; विनश्यतीत्यर्थः । शिष्टं स्पष्टम् । अग्निसूर्यचन्द्राणां तेजोरूपाणां जलस्य च लये वायावेकीभावात् वायुः संवर्ग इत्यर्थः । प्रक्रमे हि, 'एनं सर्वं तदभिसमेति' इत्यादिब्रह्मविद्याप्रशंसावगमात् वक्ष्यमाणलिङ्गानुपपत्तेश्च **वायुशब्देन** वायुशरीरकपरमात्मा उच्यते । **संवृङ्क्ते** एकीकृत्य गृह्णातीत्यर्थः । **इत्यधिदैवतम्** । एवं देवेषु संवर्गोऽयमित्यर्थः ।

तथा प्राणः संवर्ग इत्याह **अथाध्यात्मम्, प्राणो वाव संवर्गः** । तदुपपादयति—**स यदा स्वपिति** । **सः** पुरुषः **यदा** यस्मिन् काले स्वपितीत्यर्थः । तस्मिन् काले **प्राणमेव....संवृङ्क्ते** । प्राणे वाक्चक्षुश्श्रोत्रमनसामेकीभावात् प्राणं संवर्गमुपासीतेत्यर्थः । अत्रापि **प्राण**शब्दस्तच्छरीरकपरमात्मपरो द्रष्टव्यः ।

---

जलानि । तत्र वायुः संवर्गः ; तेजोजलयोरपि मूलहेतुतया लयस्थानत्वात् । एवंभूतवाय्वभिन्नः प्राणोऽध्यात्मं यानि प्रति संवर्गः, तानि वक्ष्यन्ते स यदा स्वपितीति । वक्ष्यमाणलिङ्गेति । इति वै वयमुपास्महे इति वक्ष्यमाणोपास्याकारदर्शनेत्यर्थः ।

तौ वा एतौ द्वौ संवर्गौ, वायुरेव देवेषु, प्राणः प्राणेषु ॥ ४ ॥
अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे। तस्मा उह न ददतुः ॥५॥ स होवाच—

---

उक्तमर्थमुपसंहरति— **तौ वा एतौ....प्राणेषु** । स्पष्टोऽर्थः ।

संवर्गविद्यास्तुत्यर्थमाख्यायिकेयमारभ्यते- **अथ ह....बिभिक्षे** । कपिगोत्रं शुनकपुत्रं(सुतं) च, कक्षसेनसुतमभिप्रतारिनामानञ्च तौ द्वौ सूपकारैः परिविष्यमाणौ भोजनायोपविष्टौ कश्चित् संवर्गोपासको ब्रह्मचारी भिक्षितवान् । **तस्मा उह न ददतुः** । अयं ब्रह्मचारी संवर्गविद्यानिष्ठो दुरभिमानी यत् वक्ष्यति, तत् श्रोष्याव इति बुद्ध्या तस्मै तौ भिक्षां न दत्तवन्तौ ।

---

अथ ह शौनकमिति । आख्यायिकेयं जैमिनीयोपनिषद्ब्राह्मणेऽप्यस्ति । तत्र तृतीयेऽध्याये वायोः स्तुतिमारभ्य, तत्र आदित्यचन्द्रमोनक्षत्राग्न्यहोरात्रदिक्पर्जन्यावोषधिवनस्पतीनामप्ययं प्रतिपाद्य, अध्यात्मं प्राणात्मनि वायावेव वागादिलयमुक्त्वा, "तद्ध शौनकञ्च कापेयमभिप्रतारिणञ्च" इत्यारभ्य, "तौ ह बिभिक्षे । तं ह नाददाते को वा को वा" इति मन्यमानौ तौ होपजगौ,

'महात्मनश्चतुरो देव एकः क स जगार भुवनस्य गोपाः ।
तं कापेय न विजानन्त्येकेऽभिप्रतारिन् बहुधा निविष्टम्' इति ।

स होवाचाभिप्रतारी, 'इमं वाव प्रपद्य प्रतिब्रूहीति; त्वया वाऽयं प्रत्युच्य' इति । तं ह शौनकः प्रत्युवाच—

आत्मा देवानामुत मर्त्यानां हिरण्यदन्तो रपसो न सूनुः ।
महान्तमस्य महिमानमाहुरनद्यमानो यददन्तमत्ति' इति ।"

इति श्रुतम् । विवृतञ्च मन्त्रद्वयं तत्रैव किञ्चित् । तत्र महात्मशब्देन वाङ्मनश्चक्षुःश्रोत्रमित्येषां देवताः अग्निचन्द्रादित्यदिशो गृहीताः ।

'महात्मनश्चतुरो देव एकः कः स (स्वो)जगार भुवनस्य गोपाः।
तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तम्॥
यस्मै वा एतदन्नम्, तस्मा एतन्न दत्तम्' इति ॥ ६ ॥

---

स होवाच । ब्रह्मचारी उवाच—महात्मनः....वसन्तम् । अधिदैवतं महात्मनः अग्न्यादित्यचन्द्रजलरूपान् अध्यात्मं वाक्चक्षुःश्रोत्रमनोरूपान् चतुरः चतुस्संख्याकान् देवान् सर्वलोकस्य गोपाः गोप्ता स एक एव देवो वायुप्राणरूपी कः प्रजापतिः जगार संहृतवान् । हे कापेयाभिप्रतारिणौ ! एवंभूतं प्रजापतिं बहुधा बहुरूपतया वसन्तं मर्त्याः मरणधर्माणोऽविद्यामोहितास्सन्तो न जानन्तीत्यर्थः । गोपाः । गुपू रक्षणे । असुप्रत्ययान्तं पदम् । यस्मै....न दत्तम् ।

---

कः=प्रजापतिः । स एव जगारेति गिरणकर्ता प्राण उक्तः । 'रपसो न सूनुः' इत्यस्य विवरणञ्च, 'न ह्येष सूनुः । सूनुरूपो(सूनुरपो) ह्येष सन् न सूनुः' इति कृतम् ।

नन्वस्मिन् संदर्भे परिशील्यमाने भोजने प्रवृत्तयोः कापेयाभिप्रतारिणोः कश्चित् बिभिक्षे । तदा तयोर्भोजने प्रवृत्तत्वाद्वा, स यः कश्चिदिति मत्वा, 'रक्षणीयमभक्तेभ्यस्तदन्नं विष्णुयाजकैः। प्रायश्चित्ती भवेत् दाता अपात्रे प्रतिपादनात्' इत्यादिरीत्या विमर्शेन वा केनापि कारणेन भिक्षाविषयेऽनादरे प्राप्ते ब्रह्मणे भिक्षामपेक्षितां तयोः संबोधनपूर्वकं प्रकटीचकार । अथाभिप्रतारिणा उचितसमाधानाय प्रेरितः कापेयः, 'तं कापेय न विजानन्त्येके' इत्युक्तरीत्या न वयं न जानीम इति स्वस्य तद्देवतास्वरूपतदीयदेवमर्त्यसर्वात्मत्वाद्यभिज्ञत्वं भिक्षमाणाय प्रकाशयामासेति प्रतीयते । एवं स्वरसप्रतीतानुसारेण शौनको ब्रह्मचारिणं स्वोपास्यदेवतोपासकत्वेन प्रशस्यैव भिक्षादानमनुमन्यते स्म; न तु तस्यानभिज्ञत्वाविष्करणेनेति सुवचम्, तथाच

जगत् सर्वं यस्मै यस्य संवर्गस्य प्रजापतेरन्नम्, तस्मै भिक्षमाणाय मह्यमन्नं न दत्तम्; अतः केऽपि न जानन्ति इति उपासनदर्शनचो-

---

शाङ्करे, 'ब्रह्मचारिणो ब्रह्मविन्मानितां बुद्ध्वा तं जिज्ञासमानौ' इति; अत्र च भाष्ये तदनुसारेण, 'अयं ब्रह्मचारी संवर्गविद्यानिष्ठो दुरभिमानी यत् वक्ष्यति तत् श्रोष्यावः' इति चोक्तं न घटते। यत्तु, 'ब्रह्मचारिन्निदमुपास्महे' इति, तस्य शाङ्करे, 'न इदम्' इति पदविभाग-मादृत्य, 'न वयमिदमुपास्महे; किं तर्हि परं ब्रह्म' इति काचित् व्याख्या दर्शिता। पूर्वं ब्रह्मविन्मानितां शाङ्करोक्तामनुरुध्य सैवात्रापि स्वीकृता। यदि दुरभिमानित्वे विशेषगमकं नास्ति, तर्हि शाङ्करोक्त एव, 'ब्रह्मचारिन्! आ इदमुपास्महे' इति पदविभागमादृत्य, यथोक्त-लक्षणं ब्रह्म वयमा उपास्मह' इत्यर्थ इहापि ग्राह्योऽस्तु। माध्वास्तु ब्रह्मचारिन्निदम् इत्येव पठन्ति। मन्त्रयोश्च समानविषय-कत्वमेव शाङ्करोक्तम्। परमात्मपरत्वञ्चोभयोः प्रतीयते। प्रथम-मन्त्रेऽपि हि, 'देव एकः, भुवनस्य गोपाः, बहुधा वसन्तम्' इति, 'दिव्यो देव एको नारायणः' इत्याद्युक्तो जगद्रक्षको व्यूहविभवादि-रूपेणावतीर्णो व्यापी विष्णुरुक्त एव। क इति च, 'न वः कः किम्', 'कस्मै देवाय हविषा विधेम', 'संवत्सरः कः' इति तद्वाचि। तत् कथं ब्रह्मचारिणो दुरभिमानित्वकल्पनमिति चेत्—

उच्यते। प्रथममन्त्रे, 'महात्मनश्चतुरः' इति चतुर्णामेवाद्यमान-त्वमुक्तम्; द्वितीयमन्त्रे, 'पञ्चान्ये' इति वक्ष्यमाणरीत्या, 'अनद्यमानो यदन्नमत्ति' इति अदनः प्राणस्याप्यदनमनद्यमानत्वञ्चोक्तमिति वैषम्यात् उत्तरत्रैव परमात्मप्रतीतिर्यथावदित्याशयः। अस्तु नामायं ब्रह्मचारी अभिज्ञोऽनभिज्ञो वा। अभिज्ञत्वे मन्त्रद्वयादपि संवर्गविद्या-वेद्यः परमात्मेति सिद्ध्येत्। अनभिज्ञत्वे उत्तरमन्त्रादिति सर्वथा विवक्षितसिद्धिः।

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयाय—

'आत्मा देवानां जनिता प्रजानाँ हिरण्यदँष्ट्रो बभसोऽनसूरिः।
महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्ति ॥

---

पास्यैक्यबुद्ध्या भिक्षमाणाय तस्मै अप्रदानमेव स्वोपास्यदेवतायै अप्रदानं मत्वा, 'तस्मा एतन्न दत्तम्' इति तौ निन्दितवानित्यर्थः।

**तदु ह...प्रत्येयाय।** कापेयः शौनकः तत् ब्रह्मचारिणोक्तं **प्रतिमन्वानः** मनसा आलोचयन् तत्समीपं **प्रत्येयाय**। प्रत्यागत्योवाच—**आत्मा....अत्ति।** देवानामात्मा नियन्ता, प्रजानामुत्पादकः **हिरण्यदंष्ट्रः** कमनीयदंष्ट्रायुक्तः, हिरण्यविदारकदंष्ट्रायुक्त इति वा, **बभसः** भक्षणशीलः असुरसंहारक इति यावत्। असूरिर्न भवतीत्य**नसूरिः**। विपश्चिदिति यावत्। अस्य च श्रीनृसिंहस्य परमात्मनो महिमानं महान्तमाहुः, यत्—स्वयमन्यै**रनद्यमानः** अनाद्यमानः

---

तस्मै तद्रूपायेत्यर्थसूचकं उपास्यैक्यबुद्ध्येति। ननु किमर्थमैक्यबुद्धिः; ब्रह्मचारिणा भिक्षां गृहीत्वा स्वदेवतायै निवेदनस्य कार्यतया तदर्थतयैव तेन भिक्षणात्, 'तस्मै न दत्तम्' इत्युक्तिसंभवात्। न। परस्वत्वापादनरूपदानसंप्रदानत्वं हि भिक्षुकस्य, नोपास्यस्य प्राणादेः। अतस्तदुपासकायेति वक्तव्ये तस्मै इत्युक्तरेवंबुद्ध्येति। यदि कदाचित् दाताऽप्येतद्देवतोपासकः स्यात्, तर्हि तदन्नं तस्मै देवाय निवेदितमेव स्यात्। अथापि बहुधास्थितत्वाद्देवस्य स्वसंबन्धिरूपेण स्थिताय तस्मै न दत्तमिति दोषोऽस्त्येवेति ब्रह्मचारी ज्ञापयतीति भावः। अनसूरिरिति। न सूनुरिति पूर्वदर्शितजैमिनीयपाठे अनुत्पाद्यत्वं परमात्मन उक्तं भवेत्। अत्र तु असूरिभिन्नत्वरूपं विपश्चित्त्वम्। अनश्चासौ सूरिश्चेत्यपि केचित् व्याख्यान्ति। तदा अन इति प्राणान्तर्यामित्वमुक्तम्। प्रयुज्यते हि, 'यत् किञ्चिदिदमा-

इति वै वयं ब्रह्मचारिन्ने(न्नि)दमुपास्महे ।'
'दत्तास्मै भिक्षाम्' इति ॥ ७ ॥ तस्मा उह ददुः ।
ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः तत् कृतम् । तस्मात्

---

**अनन्न** वागादिकम् **अत्ति** नाशयति । एवम्भूतः परमात्मैव संवर्गः, न त्वदुक्तः प्रजापतिरित्यर्थः । अतो हे ब्रह्मचारिन् ! वयं न त्वदुक्त-प्रजापतिरूपं संवर्गमुपास्महे ; अपितु **इति वै** इत्येव=परमात्मानमेव । अतः त्वं संवर्गं न यथावत् जानासि—इत्युक्त्वा, 'अस्मै भिक्षां **दत्त**= प्रयच्छत' इति परिचारकान् आहतुरित्यर्थः । अनेन संवर्गविद्यायाः वायुप्राणशरीरकपरमात्मपरत्वमाविष्कृतं भवति ।

**तस्मा उह ददुः । तस्मै** ब्रह्मचारिणे परिचारकाः भिक्षां ददुरित्यर्थः ।

संवर्गविद्यास्तुतये तत्संबन्धिपदार्थान् कृतायत्वेन विराट्त्वेन अन्नत्वेन अन्नादित्वेन च स्तौति— **ते वा एते....तत कृतम ।**

---

श्वभ्य आ शकुनिभ्यः, तद्वा एतदनस्यान्नम्' (५-२) इति । अनन्नं वागादिकमिति । अनन्नम्=अद्यमानभिन्नम् अत्तारमित्यर्थवर्णने, 'यददन्तमत्ति' इति पाठेन समानार्थता । वायुप्राणशरीरकपरमात्म-परत्वमिति । संवर्गविद्यास्तुत्यर्थमाख्यायिकेति प्रागुक्तम् ; रैक्वप्रशं-साबलेन प्रागेव परमात्मपरत्वावसायात् तदर्थमाख्यायिकानपेक्ष-णात् । स्तुत्यर्थयैव त्वनया तदपि विशदीकृतमिति भावः । एवम्, 'यस्मै वा एतदन्नम्', 'अनद्यमानो यदनन्नमत्ति' इति कथनात् भिक्षादानोपाख्यानबलाच्च प्रकृतविद्यायां परमात्मन्युपास्यतया वक्ष्य-माणान्नादित्वादिधर्मप्रस्तावार्थमपीदमुपाख्यानमिति द्रष्टव्यम् ।

कृतायत्वेनेति । ननु पूर्वं, कृतायविजितायेति हंसवाक्ये दृष्टान्ते अयशब्दसमभिव्याहारबलात् कृताख्यस्य अयस्य ग्रहणेऽपि

अधिदैवतमग्न्यादित्यचन्द्रजलरूपाः पदार्थाः अपियन्तश्चत्वारः अपीयमानो वायुरेक इति पञ्च, अध्यात्मं वागाद्या अपियन्तश्चत्वारः अपीयमानः प्राण एक इति पञ्च आहृत्य दशत्वसंख्यां प्राप्नुवन्तः कृतायतां भजन्ते । कृतसंज्ञे तस्मिन् अये चतुरङ्कायत्र्यङ्कद्व्यङ्कैकाङ्कायानामनुप्रविष्टतया दशाङ्कत्वम् । एकस्य द्वयोस्त्रयाणां चतुर्णाञ्च समावेशात(शे) दशत्वसंख्यासंभवादिति भावः । **तस्मात्...दशकृतम्** । तस्य हेतोः संवर्गविद्योपास्यं दशत्वसङ्ख्यायुक्त(रूप)तया कृतायरूपं सत् दशसु दिक्षु विद्यमानमन्नमेव भवति । "दशाक्षरा विराट् अन्नं विराट्" इति श्रुतेः ।

---

अत्र कृतपदेन तद्ग्रहणे किं मानमिति चेन्न; कृतशब्दस्य प्रसिद्धार्थस्यात्रासघटमानत्वात् कस्यचिदर्थस्य वक्तव्यत्वे उपस्थितस्य अयरूपार्थस्यैव युक्तत्वात् । प्रसिद्धश्च सामान्यतः कृतशब्दप्रयोगे अयग्रहणं श्रुतौ, 'ये वै चत्वारः स्तोमाः, कृतं तत्' इत्येवम् । अत्र तत्कृतमिति तच्छब्दश्रवणाच्च पूर्वोक्तकृतग्रहणम् । 'पूर्वोक्तं कृतम्' इति आनन्दगिरिव्याख्या च । न च हंसोक्त्यनभिज्ञेन रैक्केण कथं तदिति पूर्वोक्तपरामर्श इति वाच्यम्—रैक्कस्य तदनभिज्ञत्वेऽपि अत्र वायुर्वावेत्यादेः रैक्कोक्तसारांशरूपेण श्रुत्यैवोच्यमानतया तदिति पूर्वोक्तपरामर्शोपपत्तेः। उपरि जानश्रुतिसंबोधनतत्प्रशंसनेतिकरणाद्यभावेन रैक्कवाक्यत्वाप्रतीतेः। तदित्यस्योक्तदशकपरामर्शित्वे दश सन्त इत्यत्र वाक्यसमाप्त्यभावेनानन्वयाच्च तच्छब्दः पूर्वपरामर्शी ।

ते वा एते इत्यादिश्रुतेरेवमन्वयार्थः—ते एते आधिदैविका आध्यात्मिकाश्च मिथो भिन्नाः पञ्च पञ्च संहृत्य दश भवन्तः पूर्वोक्तकृतायरूपा भवन्ति। कृतस्य चतुरङ्कत्वेऽपि कृतेन विजयमानेन पुंसा विजेतुकामानां पराजयविधानेन तेषामत्रानुप्रवेशात् त्रेतादीनामपि कृतांशत्वात् कृतस्य दशत्वसंख्यावत्त्वोपपत्तिः । तस्मादेव दशत्व-

सर्वासु दिक्ष्वन्नमेव दशकृतम् । सैषा विराडन्नादी । तयेदँ सर्वं

सैषा विराडन्नादी । दशत्वसंख्याश्रयत्वात्, 'दशाक्षरा विराट्' इति विराट्छन्दो भवति । अन्नमत्तीत्यन्नादी । कृतसंज्ञके अये दशसंख्यायाः भक्ष्यवदन्तर्भूतत्वात् दश[त्व]संख्यायाश्च विराट्त्वात् विराजश्चान्नत्वात् दशत्वसंख्यागर्भककृताद्यस्थानीयस्य संवर्गविद्योपास्यस्य पञ्चान्ये पञ्चान्ये इति निर्दिष्टस्यास्य अन्नादित्वमप्यस्तीति ।

संख्यावत्त्वाद्धेतोः दशरूपकृतमिदम्, यस्मै वा एतदन्नमित्युक्तदशादिग्वर्त्यन्नरूपञ्च । अन्नस्यापि दशदिग्वर्तितया दशत्वात् । एवं दशत्वादन्नत्वाच्च वाय्वादिदशकं विराडपि । तथा अन्नादि च । कथमन्नस्य सतोऽस्यान्नादित्वमिति चेत्–अत्रोक्तं भाष्ये कृतसंज्ञके अये इत्यादि । विराजो दशत्वसंख्यात्मकत्वादन्नत्वाच्च दशत्वसंख्याऽप्यन्नम् । तद्वत्त्वात् दशकमिदमन्नादि । एवं कृतमप्यन्नादि ; तत्कुक्षावपि दशत्वसंख्यारूपान्नान्तर्भावादिति । आनन्दगिरिणा तु अस्य दशकस्य विराट्त्वेनान्नत्वं कृतत्वेन च अत्तृत्वमित्युक्तम्, कृतं हि द्यूतं सर्वहरत्वात् सर्वान्निभक्षकमिति । एवमेषां दशानां किञ्चित्किञ्चित् संवर्जनकरत्वेनाप्यत्तृत्वं स्यात् । विराटछरीरकपरमात्मग्रहणे तु उपाख्यानोक्तरीत्या अन्नादित्वं सम्यगेव भवति । तदा चायमर्थः—अन्नादी प्रागुक्तः परमात्मा सैषा विराट । सा इत्यस्य दशकृतरूपेत्यर्थः । एषेत्यस्य अन्नरूपेत्यर्थः । विराडिति वाय्वादिपञ्चकप्राणादिपञ्चकद्वयमुच्यते विराटमादशात् । विराट्छन्दसि हि प्रतिपादमक्षराणि दश ; इमे च दशेति । अत्र तस्य साक्षादन्नादित्वानन्वयज्ञापनाय मन्त्रोक्तस्यात्मनो विशेष्यतया ग्रहणमाशय्य अन्नादीति पुल्लिङ्गनिर्देशः । तथाच मन्त्राद्युक्तो योऽन्नादी स कृतान्नरूपविराडन्तर्यामीत्यर्थः ॥ तयोपास्यभूतया विराजा करणेन सर्वमिदं जगत् उपासकेन दृष्टं भवति ।

**दृष्टम्। सर्वमस्येदं दृष्टं भवत्यन्नादो भवति, य एवं वेद य एवं वेद॥**

**इति चतुर्थाध्याये तृतीयः खण्डः**

---

त्यर्थः। **तयेदं सर्वं दृष्टम्**। तया विराजा उपासितया इदं सर्वं दशदिग्वर्ति-पदार्थजातं दशत्वसंख्यासाम्यात् **दृष्टं भवति** उपासितं भवतीत्यर्थः। तदुपासनस्य फलमाह **सर्वमस्य...वेद**। एतदुपासकस्य सार्वज्ञ्यं ब्रह्म-लक्षणान्नानुभवश्च भवतीत्यर्थः। विद्यासमाप्तिद्योतकं द्विर्वचनम्।

व्यासार्यैस्तु, 'छन्दोभिधानात्' इति सूत्रे **अन्नात्** इति पाठमाश्रित्य अन्नं च तत् अत्तीत्यन्नादिति भोक्तृत्वभोग्यत्वाश्रयपर-मात्मपरतया व्याख्यातम्।

अस्याः संवर्गविद्यायाः परमात्मपरत्वमेव; न प्रसिद्धवायुप्राण-विषयत्वम्। 'यथा कृताय विजितायाधरेऽयाः संयन्ति' इत्यादिना संवर्गविद्यानिष्ठैरैकप्रभावे सर्वेषामन्तर्भाववर्णनात्। 'आत्मा देवानां जनिता प्रजानां हिरण्यदंष्ट्रो बभसोऽनसूरिः। महान्तमस्य महिमान-माहुरनद्यमानो यदनन्नमत्ति' इति इतराविनाश्यत्वे सति सकलविनाश-कत्व – सर्वसंप्रतिपन्नमहामहिमशालित्व–सर्वदेवनियन्तृत्व–ब्रह्मादिसकल-प्रजोत्पादकत्व–हिरण्यदंष्ट्राद्युपलक्षितनरसिंहविग्रहवत्त्वादिप्रतिपादनात्, 'इति वै वयं ब्रह्मचारिन्नेदमुपास्महे' इति कशब्दितप्रजापत्यात्मकसंवर्ग-प्रत्याख्यानाच्च परमात्मविषयैवेयं विद्येति द्रष्टव्यम्॥

---

तदेव विव्रियते सर्वमस्येत्यादिनेत्यपि तयेत्यादेरर्थः स्यात्। यद्वा तयेति वाक्ये विराडन्तर्यामिणः सर्वदर्शित्वरूपोपास्याकारोक्तिः, एवं सर्वज्ञत्वान्नादित्वविशिष्टविषयकसंवर्गविद्यां विधाय उपरि यथोपासनफलोक्तिरिति।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते—

**समन्वयाध्याये**-जानश्रुतिं शूद्रेत्यामन्त्र्य रक्वो ब्रह्मविद्यामुपदिदेशेति संवर्गविद्यायां श्रवणात्, विदुरादीनां ब्रह्मविद्यानिष्ठानामपि दर्शनात्, अग्निविद्य साध्ययज्ञादिषु अग्निविद्याशून्यानां शूद्राणां कर्मकाण्डापशूद्राधिकरणन्यायेनाधिकाराभावेऽपि ब्रह्मोपासने अधिकारः संभवत्येव। न च शूद्रस्य ब्रह्मोपासनोपयुक्तज्ञानासंभवः शङ्कनीयः—इतिहासपुराणादिना तज्ज्ञानसंभवात्। न चैवं यज्ञादिष्वपि तथा प्रसङ्गः, अन्यभावात्। 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति यज्ञानुष्ठानस्य निषिद्धतया च तस्य तदसंभवेऽपि संवर्गविद्या[वा]गतशूद्रशब्दामन्त्रणलिङ्गानुग्रहात् ब्रह्मोपासनाधिकारोऽङ्गीकर्तव्य एवेति पूर्वपक्षे प्राप्ते—

उच्यते। **'शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि।'** शोचितृत्वप्रवृत्तिनिमित्तकेन शूद्रशब्देन जानश्रुतेः, 'कम्वर एनमेतत् सन्तं सयुग्वानमिव रैक्वमात्थ' इति हंसोक्तानादरगर्भवाक्य**श्रवणात् तदाद्रवण**हेतुभूतात् उत्पन्ना शुक् सूच्यते ; न चतुर्थवर्णत्वम्। यौगिकार्थस्य प्रकृतस्य मानान्तराविरुद्धस्य ग्रहणसंभवे मानान्तरविरुद्धस्य रूढ्यर्थस्याग्राह्यत्वात्। शूद्रस्य ब्रह्मोपासनौपयिकवैदुष्यलक्षणसामर्थ्यासंभवाच्च न ब्रह्मविद्यायामधिकारः। 'वैदिकविधीनामध्ययनविधिसिद्धवेदजन्यज्ञानवतः त्रैवर्णिकाधिकारिण आसाद्य निवृत्तानां शूद्राधिकारानाक्षेपकत्वात्' इति न्यायस्य यज्ञोपासनयोरविशेषात्। 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः'

---

**निवृत्तानामित्यादि।** 'न ह्यविद्वानधिकृतोऽस्ति' इति विदुषामेव कर्माधिकारसंभवात् विधिगता विद्वदधिकार्याकाङ्क्षा अध्ययन-

इत्यस्य न्यायसिद्धैकदेशानुवादित्वेन तस्य विनिगमकत्वासंभवात् ।

**'क्षत्रियत्वगतेश्च'** । पक्वान्नप्रदत्व [राजन्तःपुरगक्षक]क्षत्तृप्रेषण-रैक्वकन्याप्रदान-अनेकग्रामप्रदानादिना जानश्रुतेः क्षत्रियत्वावगतेश्च । एतेषां क्षत्रियधर्मत्वस्यैव शास्त्रीयत्वात्। **'उत्तरत्र चैत्ररथेन लिङ्गात्।'** संवर्गविद्या संबन्धिनोऽभिप्रतारिनाम्नः चित्ररथवंश्यस्य क्षत्रियस्य तादृशेन [संवर्गविद्यानिष्ठेन ब्राह्मणेन] शौनकेन कापेयेन साहचर्यदर्शनात् इहापि संवर्गविद्यासंबन्धी रैक्वेन ब्राह्मणेन सहचरितजानश्रुतिरपि क्षत्रिय एवेत्यवगीयते । नन्वभिप्रतारिणः क्षत्रियत्वं कुतोऽवसीयते इति चेत्—चित्ररथवंश्यत्वात् । न च तदपि कुतोऽवसितमिति वाच्यम्—कापेययाज्यत्वात् लिङ्गात् । न च कापेययाज्यत्वेऽपि चित्ररथवंश्यत्वं कुत इति वाच्यम्—'एतेन वै चित्ररथं कापेया अयाजयन्' इति **छन्दोगब्राह्मणे** चित्ररथस्य कापेययाज्यत्वश्रवणात् ।

नन्वभिप्रतारिणः कापेययाज्यत्वं वा कुतोऽवमीयते । 'शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी विभिक्षे' इति एकपङ्क्त्युपवेशमात्रस्य श्रवणात् । नानादेशागतानां [परस्पर]-संबन्धशून्यानामप्येकपङ्क्त्युपवेशसंभवात् । अस्तु वा कथञ्चित् याज्य-याजकभावः । तावता छन्दोगब्राह्मणे चित्ररथस्य कापेययाज्यत्वश्रवणेन

---

विधिकृतप्रवर्तनलब्धवैदुष्याणाम्, 'अनेन वैदुष्येण किं कर्तव्यम्' इति साकाङ्क्षाणां त्रैवर्णिकपुरुषाणां लाभेन शान्तेति न कर्मविधयः स्ववैयर्थ्याय विद्याक्षेपं क्वचिदपि जने करिष्यन्तीति कुतः शूद्रे विद्याकल्पनं वैदिकविधिबलादिति भावः ।

चित्ररथत्वमेव सिद्ध्येत्, न तु तद्वंश्यत्वमिति चेत्-उच्यते। कापेयाभिप्रतारिणोः क्लृप्तसंबन्धयोरेकत्र युपवेशस्योचि(दि)तत्वात् कापेयानां चित्ररथवंश्यानाञ्च याज्ययाजकसंबन्धस्यान्यत्र प्रसिद्धत्वात् अभिप्रतारी अपि कापेययाज्यचित्ररथवंश्य इत्यवसीयते। न च कापेययाज्यतया चित्ररथत्वमेवास्त्विति शङ्क्यम् — अभिप्रतारिसंज्ञाविरुद्धे चित्ररथसंज्ञानिवेशासंभवात्। नायं चित्ररथः अपितु तद्वंश्यः, समानान्वयानां याज्ययाजकभावस्य लोकवेदप्रसिद्धत्वात्। न च कापेययाज्यस्य चित्ररथस्य क्षत्रियत्वे किं प्रमाणमिति वाच्यम् — 'एतेन वै चित्ररथं कापेया अयाजयन्। तस्मै चैत्ररथो नामैकः (चैत्ररथीनामेकः ?) क्षत्रपतिर्जायत' (ता. म. ब्रा 20-12-5) इति चित्ररथोत्पन्नस्य क्षत्रियत्वाऽऽवेदनात्।

ततश्चोत्तरत्र ब्राह्मणक्षत्रिययोः शौनकाभिप्रतारिणोः संवर्गविद्यासंबन्धश्रवणात् इहापि तद्विद्यासंबन्धिनोः रैक्वजानश्रुत्योः ब्राह्मणक्षत्रियत्वमवसीयते।

**'संस्कारपरामर्शात् तदभावाभिलापाच्च'**। ब्रह्मविद्योपदेशप्रदेशेषु, 'उप त्वा नेष्ये; न सत्यादगा इति', 'तं होपनिन्ये', 'अधीहि भगव इति होपससाद सनत्कुमारं नारदः', 'समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' इति संस्कारः परामृश्यते। शूद्रस्य संस्काराभावोऽभिलप्यते, 'शूद्रश्चतुर्थो वर्ण एकजातिः', 'न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति' इति।

**'तदभावनिर्धारणे च प्रवृत्तेः'**। शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेशाय प्रवृत्तिर्दृश्यते, 'नैतदब्राह्मणो विवक्तुमर्हति। समिधं

सोम्याहर । उप त्वा नेष्ये । न सत्यादगाः' इति ।

**'श्रवणाध्ययनार्थप्रतिषेधात्'** । 'पद्यु ह वा एतत् श्मशानं, यच्छूद्रः । तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति शूद्रस्य **वे**दश्रवणप्रतिषेधेन तदध्ययनतदर्थानुष्ठानयोः सुतरां प्रतिषेधात् ।

**'स्मृतेश्च'** । 'अथ हास्य वेदमुपशृण्वतः **त्र**पुजतुभ्यां श्रोत्रप्रतिपूरणम्, उदाहरणे जिह्वाच्छेदः, धारणे शरीरभेदः' इति **स्मृत्या** च श्रवणादिकं शूद्रस्य प्रतिषिद्धम् ।

अतो न ब्रह्मविद्यायां शूद्रस्याधिकारः । विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोषात् ज्ञानवन्तः; प्रारब्धकर्मवशाच्चेदृशजन्मयोग इति तेषां ब्रह्मनिष्ठत्वम् । ननु शूद्राणां ब्रह्मोपासनानधिकारे पञ्चरात्राद्यागमोक्तताान्त्रिकमन्त्रानुसंधानपूर्वकब्रह्मोपासनेऽप्यधिकारो न स्यात् । नारदस्य शूद्रजन्मनि महर्षिवचनादनुष्ठितमच्युतोपासनमप्यप्रामाणिकं स्यादिति चेत्—न हि ब्रह्मोपासनमात्रे शूद्रस्यानधिकारं ब्रूमः; अपितु संवर्गविद्यादिषु वैदिकेषूपासनेषु । अतो नात्र तद्दोषशङ्कावकाशः ॥

ननु, **'संबन्धदेवमन्यत्रापि,** इत्यधिकरणे व्याहृतिविद्यायाः अध्यात्माधिदैवतस्थानभेदेन भेदस्य प्रतिपादितत्वात् संवर्गविद्याया अपि अध्यात्माधिदैवतस्थानभेदेन भेदः स्यात । न चेष्टापत्तिः, 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' इति ब्रह्मविद्यामात्रार्थिने जानश्रुतये विद्याद्वयोपदेशस्यायुक्तत्वादिति चेत्—मैवम्...**व्याहृति विद्यायाम्** 'य एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' इत्यत्रैव

---

**नारदस्येति।** अस्य दासीपुत्रत्वादिपूर्वजन्मवृत्तं श्रीभागवते (१-५)।

चतुर्थे चतुर्थः खण्डः

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे, 'ब्रह्मचर्यं भवति । विवत्स्यामि । किंगोत्रो ऽहमस्मि' इति ॥ १ ॥

---

'वायौ', 'प्राणे' इत्यवं वायुप्राणयोः स्थानत्वेन निर्देशाभावात् स्थानभेदप्रयुक्तविद्याभेदाप्रसक्तेः । 'यां देवतामुपास्से' इति रैक्कोपास्यदेवताप्रश्नस्य उपासनप्रकारपर्यन्तत्वात् तत्प्रकारे पृष्टे, रैक्कोपास्यसंवर्गस्य देवतात्मलक्षणस्थानभेदेन उपासनाद्वय[संबन्ध]संभवमभिप्रेत्य उपासनाद्वयोपदेशे दोषाभावाच्च । न च, 'विकल्पोऽविशिष्टफलत्वात्' इति न्यायेन रैक्कस्य विद्याद्वयानुष्ठानाभावात् स्वानुष्ठीयमानविद्यामात्रोपदेश एव युक्तः; नाधिक इति इति वाच्यम्; अप्रयोजकत्वात्। परोपदेशे स्वावगतेरेव प्रयोजकत्वेन स्वानुष्ठानस्याप्रयोजकत्वात् इति स्थितम्॥ प्रकृतमनुसरामः॥ ४–३.

षोडशकलब्रह्मविद्यां प्रस्तौति—सत्यकामो .... चक्रे । इति ऐतिह्यार्थः । जबालासुतः सत्यकामनामा जबालां मातरमामन्त्रितवान् ।

---

दोषाभावाच्चेति । इयमन्वारुह्योक्तिः । अत्र आधिदैविकाध्यात्मिकसमाहारेण दशत्वकृतत्वविराट्त्वाद्यनुसंधानस्योक्ततया विध्यैक्यप्रतीतेः । न च वायुप्राणयोः शरीरत्वमात्रेण स्थानभेदः; तथात्वे सार्वात्म्योपासनस्यायोगात् । मधुविद्यादौ वस्वादित्याद्यनेकात्मत्वोपासनायोगाच्च । न च शरीरमात्मानं प्रति स्थानम्; किंतु आधेयम्। युक्तं तु शुभाश्रयस्य स्थानं यत्, तद्भेदे विद्याभेद इति॥ अप्रयोजकत्वादिति । रैक्कस्य घोराङ्गिरस्तो विद्यान्तरग्रहणमुक्तं सुबालोपनिषदि । यां देवतामुपास्से इति च उपास्यमानदेवतैव पृष्टा; न तदादृतमुपासनम् । ४–३.

पुष्कलेन धनेन जानश्रुतेर्विद्याप्राप्तिरुक्ता। अथ गुर्व्या शुश्रूषया

सा हैनमुवाच—नाहमेतत् वेद तात! यद्गोत्रस्त्वमसि। बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साऽहमेतन्न वेद, यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि। सत्यकामो नाम त्वमसि। स सत्यकाम एव जाबालो ब्र(ब्रु)वीथा इति ॥ २ ॥

स ह हारिद्रुमतं गौतममेत्योवाच—ब्रह्मचर्यं भगवति वत्स्यामि। उपेयां भगवन्तमिति।

---

किमित्यत्राह ब्रह्मचर्यं...वसामि इति। हे भवति! स्वाध्यायग्रहणाय आचार्यकुले ब्रह्मचर्यं विवत्स्यामि; मे गोत्रं (गोत्रं मे?) किमिति पृष्टवान्।

सा...ब्रवीथा इति। "अहं भर्तृगृहे अतिथ्यभ्यागतादिभ्यो बहु परिचर्याजातं चरन्ती परिचारिणी गुर्वादिपरिचरणशीला च सती तद्व्यासङ्गेन गोत्रानभिज्ञैव यौवनकाले त्वां लब्धवती। अतो गोत्रं न जाने। अतः, 'जबालायाः पुत्रः सत्यकामनामाऽहमस्मि। नाहं गोत्रं वेद' इति गुरुसमीपे ब्रूहि" इत्युक्तवतीत्यर्थः।

स....उवाच। अथ सः सत्यकामः हरिद्रुमत्पुत्रं गोत्रतो गौतममेत्योक्तवान् उक्तिमेवाह ब्रह्म....भगवन्तमिति। भगवति पूजा-

---

विद्याप्राप्तिरन्यस्योच्यते। संवर्गविद्या दशान्तादिब्रह्मविषयिणी; इयं षोडशकलब्रह्मविषयिणी। पूर्वा प्राणाद्याध्यात्मिकाग्न्याद्याधिदैविककतिपयविषया; इयमपि। एवं सा दशदिगन्त्यान्नगोचरा; इयं प्राच्यादिकतिपयदिग्विषयिणीत्यादिसंगत्या एतदारम्भः। भवतीति संबुद्धिः। पूज्ये! इत्यर्थः। विवत्स्यामीति। विवासः = देशान्तरवासः। बहु चरन्तीत्यनेनैव सर्वपरिचरणेऽपि सुग्रहे परिचारिणीत्युक्तिः ताच्छील्यात् तदेकपरतया गोत्राद्यवगमोत्कण्ठाविरहज्ञापनाय। कति कति वृद्धत्वेऽपि कुलगोत्रादिकमजानानाः कुलस्त्रियः। यौवन

तं होवाच—किंगोत्रो नु सोम्यासीति । स होवाच, नाहमेतद्वेद भो! यद्गोत्रोऽहमस्मि । अपृच्छं मातरम् । सा मा प्रत्यब्रवीत्—बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे । साऽहमेतन्न वेद, यद्गोत्रस्त्वमसि । जबाला तु नाम हमस्मि । सत्यकामो नाम त्वमसीति। सोऽहँ सत्यकामो जाबालोऽस्मि भो' इति ॥ ४ ॥

तँ होवाच—नैतदब्राह्मणो विवक्तुमर्हति । समिधँ सोम्य हर।

---

वति त्वयि ब्रह्मचर्यं वत्स्यामि । शिष्यत्वेन भगवन्तमुपगच्छानीत्युक्तवान् ।

**तं....असीति** । हे सोम्य! किंगोत्रस्त्वम्? ज्ञातकुलगोत्रः उपनेतव्यः। अन्ततः शूद्रत्वाभावो वा (हि) निश्चेतव्य इत्यभिप्रायः । **स होवाच** । सः सत्यकामः प्रत्युवाचेत्यर्थः । तदेवाह—**न...भो इति** । स्पष्टोऽर्थः । **तं होवाच** । तं गौतमः प्रत्युवाच । किमिति । **नैतत्... इति** । **एतत्** एतादृशम् आर्जवयुक्तं वचः नाब्राह्मणो विशेषेण वक्तुमर्हति । अत्र ब्राह्मणशब्दः त्रैवर्णिकमात्रपरः । अब्राह्मणः अत्रैवर्णिकः

---

इति लज्जा, अनुपयुक्तमल्लापार्थधाष्टर्यवैकल्यम्, भर्तृपराधीनता, भर्तुः शीघ्रोपरतिश्च व्यज्यन्ते ।

अब्राह्मणपदस्य शूद्र इत्यर्थवर्णनं ब्राह्मणवत् क्षत्रियवैश्ययोरपि विद्याधिकारित्वात् । ब्राह्मणत्वनिर्धारणमेवेतो भवतीत्यपि सुवचम्—ब्राह्मणत्वाभावेऽयं स्वमातरं नूनं गोत्रादि न पृच्छेत् । किन्तु को नः पुरोहितो गुरुरिति । साऽपि ईदृशमुत्तरं न वक्ष्यति । यतो राजन्यविशां पुरोहितगोत्रादन्यत् प्रातिस्विकं गोत्रं न वर्तते । न च शूद्रस्य गोत्रमिति । मातापुत्रवचनसरण्या ह्यत्र, 'अस्ति किञ्चिदसाधारणं तस्य गोत्रम् । तत्तु न बुध्यत' इत्येव ज्ञायते । तदयं ब्राह्मण इति । न चैवं, 'तदभावनिर्धारणे च प्रवृत्तेः' इति सूत्रभाष्यादौ कथं शूद्रपरतया व्याख्यानमिति शङ्क्यम्, अन्तत इह अब्राह्मणपदस्य अगोत्रः

उप त्वा नेष्ये । न सत्यादगा इति ।

तमुपनीय कृशानामबलानां चतुःशता (तं) गा निराकृत्योवाच—इमाः सोम्यानुसंव्रजेति ।

ता अभिप्रस्थापयन्नुवाच—नासहस्रेणावर्तयेति । स ह वर्षगणं प्रोवास । ता यदा सहस्रं संपेदुः ॥ ५ ॥

इति चतुर्थाध्याये चतुर्थः खण्डः

---

शूद्र इति यावत्। शूद्रो न विवक्तुमर्हति ; शूद्राणां कुटिलस्वभावत्वादिति भावः । हे सोम्य! उपनयनसंस्कारार्थं समिधमाहर । सत्यं नातिक्रान्तवानसि । सत्यमेवोक्तवानसि । अतस्त्वामुपनेष्ये इत्यर्थः । सूत्रितञ्च, 'तदभावनिर्धारणे च प्रवृत्तेः' इति ; शूद्रत्वाभावनिश्चये सत्येव, 'उप त्वा नेष्ये' इत्युपनयनप्रवृत्तेर्दर्शनादित्यर्थः। अतोऽब्राह्मणशब्दः शूद्रपरः।

**तमुपनीय....उवाच** । तमेवमाचार्यः उपनीय कृशानामबलानां गवां मध्ये अतिदुर्बलानि कृशानि गवां चत्वारि शतानि **निराकृत्य** पृथक्कृत्य इदं वक्ष्यमाणमुवाचेत्यर्थः । **इमाः....व्रजेति** । **हे सोम्य** सोमार्ह! इमाः गाः अनुगच्छेति । **ताः....आवर्तयति** । स सत्यकामः, 'सहस्रसङ्ख्यापूरणात् प्राक् न प्रतिनिवृत्तो भवानि' इति, गाः अरण्यमभिप्रस्थापयन्, उवाचेत्यर्थः । **स ह वर्षगणं**

---

विद्यानधिकृतः इत्यर्थे पर्यवसानं मनसिकृत्य तथोक्तिरित्यलमत्र । न विवक्तुमिति । शूद्रश्चेत्, स्वस्य गुरुणा अपरिग्रहशङ्कया किमप्येकं गोत्राद्यारोप्य वदेदिति भावः । विवक्तुं विशेषेण वक्तुम् । विशेषो वैलक्षण्यम्। विलक्षणैषा वचनसरणिर्गोत्ररहितस्य अध्ययनानधिकृतस्य तदर्थिनो न भवतीति । शूद्राणामिति शास्त्रातिलङ्घिनामिति शेषः ।

निराकृत्य। निरिति पृथक्कारवाचि । यथा निर्वपतीति, निष्कर्षतीति च । आकृत्य=आकृतिं बृन्दरूपसंनिवेशं परिकल्प्य । सर्वगवी-

चतुर्थे पञ्चमः खण्डः

**अथ हैनमृषभोऽभ्युवाद—'सत्यकामा३' इति। 'भगव' इति ह प्रतिशुश्राव। 'प्राप्ताः सोम्य सहस्रं स्मः। प्रापय न आचार्यकुलम् ॥१॥ ब्रह्मणश्च ते पादं ब्रवाणि' इति। ब्रवीतु मे भगवानिति। तस्मै होवाच—**

---

**प्रोवास** : चिरकाल तृणोदकपूर्णे वने गाः प्रवेश्योषितवान्। **ताः.... संपेदुः**। यस्मिन् काले ताः सहस्रं संपन्ना बभूवुः, तावन्तं वने उषितवानित्यर्थः ॥ ४-४.

**अथ....इति**। एनं (एवं) गवां संरक्षणेन प्रीतदेवताविशेषाधिष्ठितः ऋषभः सत्यकामा३ इति **अभ्युवाद** आमन्त्रितवान्। **सत्यकामा३** इति, 'दूराद्धूते च' इति प्लुतिः(त)। **भगव इति ह प्रतिशुश्राव**। **प्रतिशुश्राव** प्रत्युत्तरं ददौ। सत्यकाम इति शेषः। ऋषभ आह **प्राप्ताः....ब्रवाणीति**। **सहस्रं** सहस्रसंख्यां वयं प्राप्ताः स्मः। तव प्रतिज्ञा च निर्व्यूढा। अस्मान् आचार्यकुलं प्रापय। प्रीतश्च तेऽहं ब्रह्मणः पादं ब्रवाणीति। इतर आह—**ब्रवीतु मे भगवानिति**। **तस्मै होवाच**। ऋषभ इति शेषः। किमिति—

---

संवर्धनमनाज्ञाप्य चतुश्शतमात्रविभजनं कृपाकृतम्। तदपेत्य ततः सहस्रपर्यन्तसंवर्धनप्रतिज्ञा शिष्यस्य भक्तिकृता। यदा—यस्मिन् वर्षगणे। यद्वा उत्तरखण्डेष्विव खण्डभेदस्य वाक्यभेदानापादकत्वे, 'यदा सहस्रम्' इति वाक्यं, 'अथ हैनम्' इत्युत्तरवाक्येन एकवाक्यं भवितुमर्हति। संपेदुरिति परस्मैपदं छान्दसम्।

गुरुवत् गुरुवस्तुषु वर्तितव्यमिति बुद्ध्या, व्यक्तवचनश्रवणजनितविस्मयेन च गौरवेण भगव इति संबोधनम्। प्रतिश्रवणं = श्रवणप्रत्यनीकम्; व्याहरणम्। प्रतिमोचनं धारणमितिवत्। ब्रह्मणश्चेति चकारः, प्राप्ताः सोम्येति वचनेन प्रकृतपादवचनसमुच्चये।

'प्राची दिक् कला ; प्रतीची दिक् कला ; दक्षिणा दिक् कला; उदीची दिक् कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणः, प्रकाशवान् नाम ॥ २ ॥ स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते, प्रकाशवानस्मिन् लोके भवति । प्रकाशवतो ह लोकान् जयति, य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥ इति चतुर्थाध्याये पञ्चमः खण्डः ।

चतुर्थे षष्ठः खण्डः

'अग्निष्टे पादं वक्ता' इति ॥ स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार । ता यत्राभिसायं बभूवुः ; तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

**प्राची....नाम** । कलाः अवयवाः, एकैकस्य हि गोः पादस्य चत्वारोऽवयवाः—पुरतः खुरद्वयम्, पृष्ठतः पार्ष्णिद्वयञ्च । अतः पादश्चतुष्कलो भवति । अतः प्रागादिदिक्चतुष्टयं ब्रह्मणः पादत्वेन प्रकाशवन्नामकत्वेन चोपास्यमित्यर्थः । **स य....भवति** । एतं पादम् उक्तप्रकारेण य उपास्ते, इहलोके प्रकाशवान् भवतीत्यर्थः । नैतावन्मात्रं फलमित्याह—**प्रकाशवतो....जयति** । कस्येदं फलमित्यत्र, उक्तमधिकारिणमुपसंहरति **य...उपास्ते** । उक्तोऽर्थः ॥ ४–५.

**अग्निष्टे पादं वक्तेति** । एवं स्वयं पादमुक्त्वा पादान्तरमग्निरुपदेक्ष्यतीत्युक्त्वा ऋषभः तूष्णीं बभूवेत्यर्थः ।

**स...विवेश** । स ह सत्यकामोऽपरेद्युः नित्यनैमित्तिकं कर्म कृत्वा आचार्यकुलाभिमुख्येन गाः प्रस्थाप्य—ताः सर्वा गावो यत्र देशे सायंकाले अभिनयन्तु [अभिसायं बभूवुः] एकत्र स्थिता भवन्ति (?). तत्र—

श्वोभूते—श्वस्तनदिने उषसि । पश्चात्—प्रतीच्याम् । उप—समीपे ।

तमग्निरभ्युवाद—सत्यकामा३, इति। भगव इति ह प्रतिशुश्राव। ब्रह्मणः सोम्य ते पादं ब्रवाणीति। ब्रवीतु मे भगवानिति। तस्मै होवाच—'पृथिवी कला; अन्तरिक्षं कला; द्यौः कला; समुद्रः कला। एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान् नाम ॥ ३ ॥ स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते, अनन्तवानस्मिन् लोके भवति। अनन्तवतो लोकान् जयति, य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥

इति चतुर्थाध्याये षष्ठः खण्डः।

चतुर्थे सप्तमः खण्डः

'हँसस्ते पादं वक्ता' इति ॥ स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार। ता यत्राभिसायं बभूवुः, तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तँ हँस उपनिपत्याभ्युवाद, सत्यकामा३ इति। भगव इति ह प्रतिशुश्राव ॥ २ ॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति। ब्रवीतु मे

---

अग्निमाहृत्य गाश्चोपरुध्य सन्ध्यामुपास्य समिदाधानं (समिधमाधाय) कृत्वा ऋषभवचो ध्यायन् अग्नेः पश्चात् प्राङ्मुख उपविष्टवानित्यर्थः।

[तमग्निरभ्युवाद। तम् एवमुपविष्टं सत्यकाममग्निरामन्त्रयाञ्चकारेत्यर्थः। शिष्टं स्पष्टम्। ब्रह्मणः....पादं द्वितीयमित्यर्थः। अनन्तवान् नाम अनन्तवत्त्वेनोपास्य इत्यर्थः। फलमाह—स...भवति। अनन्तवान् कस्यचिदपि पारं गन्तुमशक्य इत्यर्थः। अजेय इति यावत्। अनन्तवतो ह लोकान् जयति। अनन्तवतः अविनाशिन इत्यर्थः। शिष्टं स्पष्टम् ॥] ४–६.

---

अनन्तवानिति। पूर्वं पश्चाच्चैव अत्रापि अनन्तशब्दान्मतुबिति तदनुगुणोऽर्थो भाव्यः।

भगवानिति। तस्मै होवाच—

'अग्निः कला; सूर्यः कला; चन्द्रः कला; विद्युत् कला। एष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान् नाम ॥ ३ ॥ स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते, ज्योतिष्मानस्मिन् लोके भवति। ज्योतिष्मतो ह लोकान् जयति, य एवमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥

इति चतुर्थाध्याये सप्तमः खण्डः।

चतुर्थे अष्टमः खण्डः

'मद्गुष्टे पादं वक्ता' इति ॥

स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार। ता यत्राभिसायं बभूवुः, तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥ तं मद्गुरुपनिपत्याभ्युवाद, सत्यकामा३ इति। भगव इति ह प्रतिशुश्राव ॥ २ ॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति। ब्रवीतु मे भगवानिति। तस्मै होवाच—

'प्राणः कला; चक्षुः कला; श्रोत्रं कला; मनः कला। एष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान् नाम ॥ ३ ॥ स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते, आयतनवानस्मिन् लोके भवति। आयतनवतो ह लोकान् जयति, य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥

इति चतुर्थाध्याये अष्टमः खण्डः।

---

हंसः....। सर्वं स्पष्टम्। ज्योतिष्मानस्मिन् लोके भवति। तेजस्वी भवतीत्यर्थः। ज्योतिष्मतो ह लोकान्। अग्निसूर्यादिलोकानित्यर्थः ॥

मद्गुष्टे...मद्गुः जलपक्षिविशेषः। [हंसमद्गू अपि वृषभवदेव देवताविष्टौ द्रष्टव्यौ। आयतनवान् अ श्रयवान् भवतीत्यर्थः। आयतनवतः सावकाशानित्यर्थः। शिष्टं पूर्ववत्।] ४-८.

चतुर्थे नवमः खण्डः

प्राप हाऽऽचार्यकुलम् । तमाचार्योऽभ्युवाद सत्यकामा३ इति । भगव इति ह प्रतिशुश्राव ॥ १ ॥ ब्रह्मविदिव वै सोम्य भासि ; को नु त्वाऽनुशशासेति । अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे । भगवांस्त्वेव मे कामे ब्रूयात् ॥ २ ॥ श्रुतँ ह्येव मे भगवद्दृशेभ्यः, 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् (ति) (प्रापयति)' इति । तस्मै हैतदेवोवाच अत्र ह न किञ्चन वीयायेति वीयायेति ॥ ३ ॥

इति चतुर्थाध्याये नवमः खण्डः ।

---

**प्राप हाऽऽचार्यकुलम्** गोभिः सह सत्यकाम इति शेषः। शिष्टं स्पष्टम्।

**को नु त्वाऽनुशशास** । को वा ते ब्रह्मोपदिष्टवानित्यर्थः। शिष्टं स्पष्टम्।

**अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे** । मनुष्या मां नानुशिष्टवन्तः । न हि भगवतः शिष्यं मां कश्चिन्मनुष्योऽनुशासितुमुत्सहते । अपितु देवा एवानुशिष्टवन्त इति प्रतिज्ञातवान् । **भगवांस्त्वेव मे कामे ब्रूयात्** । **कामे** इच्छायां सत्यां मे भगवानेव वक्ष्यति । [अतो] मम किमर्थमितरप्रार्थनमित्यर्थः । किञ्च— **श्रुतं ह्येव मे....प्रापदिति** । आचार्यादेव विद्याऽधिगता **साधिष्ठं** (साधिष्ठत्वं) साधुतमत्वं **प्रापदिति** प्राप्नोतीति **भगवद्दृशेभ्यः** भवादृशेभ्यो **मे** मया श्रुतम् । अतो नाहं भगवतोऽन्यस्मादनुशासनं वाञ्छामीति भावः ।

**तस्मै हतैदेवोवाच** । एवमुक्त आचार्यः तस्मै सत्यकामाय एतदेव षोडशकलब्रह्मविज्ञानमेवोवाच । तदेवान्यूनानतिरिक्तमुवा-

---

मे कामे इत्यस्य ममेच्छायामिति नार्थः । किंतु यदा भवत इच्छा, तदा मह्यमिति । इदमभिप्रेत्योक्तं भगवानेव वक्ष्यतीति । प्रापदिति, 'छन्दसि लुङ्लङ्लिटः' इति लडर्थे लुङ् ।

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्य-

---

चेत्यर्थः। तत्र हेतुमाह अत्र....वीयायेति। अत्र षोडशकलविद्यायां किञ्चिदपि न वीयाय वैविध्यं न प्राप्तम्। अतो हेतोर्विद्याप्रकारे भेदाभावात् अन्यूनानतिरिक्तं तदेवोवाचेत्यर्थः। द्विरुक्तिर्विद्यासमाप्त्यर्था॥

उपकोसलविद्यां वक्तुमाह उपकोसलो...उवास। कमलसुतः

---

वैविध्यमिति। न वीयायेति व्ययं = लोपं न प्राप्तम्, न किञ्चित् न्यूनमित्यर्थे स्वरसम्। वीयाय = विगतमिति च शाङ्करम्। ऋषभाद्युक्तगुरूक्तयोर्मध्ये एकतरस्य न्यूनत्वे तयोर्वैविध्यसंभवात्तु एवमिदं विवृतम्। अत्र = आचार्योक्ते किमपि अधिकं नासीदित्यपि वक्तव्यमिति च एवमुक्तम्। वीयायेति इतिशब्दो हेतौ। तैः सर्वमेवोक्तमिति हेतोस्तदेवोवाचेत्यर्थः। एतदेवेत्यस्य, 'अत्र न किञ्चिद्वीयाय' इति वाक्यमवेति नार्थः। तदा एतदेवेत्यस्य वैयर्थ्यात्। आचार्यमुखात् सर्वमेकमुखं जिज्ञासोस्तदनुपदेशायोगाच्च॥

सत्यकामस्य विद्या प्रागुक्ता। तच्छिष्यस्य ततो विद्याधिगमप्रकारः कश्चिदथोच्यते। अत्राप्यतिशयि शुश्रूषालब्धत्वमुपवर्ण्यते। तत्र सत्यकामः स्वयमेव गोसहस्रवृद्धिपर्यन्तं कालमवधिं कृत्वा वर्षगणं प्रोष्य तावच्छुश्रूषां विधाय त्वरारहितोऽत्यर्थमाचार्यपरतन्त्रः, तस्य कामो यदा, तदा विद्यां प्रेप्सितवानासीत्। अतः कृपया ऋषभादिभिः पूर्णमेवोपदिष्टम्। अयं पुनरुपकोसलः अप्रोष्य गुरुकुल एव वर्धमानोऽपि असोढविलम्बः, 'आचार्यः क्षिप्रं कृपां न करोति' इति दूयमानमना एव शुश्रूषां यथावन्निर्वर्तयन् आसेति अग्नयो दयमाना अप्यपूर्णमेवोपदिश्य आचार्यदयापारवश्यमेवास्य परिकल्पयामासुरिति वैषम्यं वीक्ष्यम्। पूर्वत्रदस्या अपि अग्निप्राणादित्यादिविषयकत्वादपि तदुत्तरमेतदुक्तिः संगतेति ध्येयम्।

मुवास। तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार। स ह स्मान्यान् अन्तेवासिनः समावर्तयँस्तँ ह स्मैव न समावर्तयति ॥ १ ॥ तं जायोवाच, 'तप्तो ब्रह्मचारी कुशलमग्नीन् पर्यं(रिच)चारीत्। मा त्वाऽग्नयः परिप्र(प्रा)वोचन् : प्रब्रूह्यस्मा' इति। तस्मै हाप्रोच्यैव प्रवासांचक्रे ॥२

---

उपकोसलनामा [अत्र] पूर्वोक्ते जाबाले सत्यकामे विद्यार्थं ब्रह्मचर्यमवाप्सीत्। तस्य....परिचचार। तदग्निशुश्रूषां द्वादशवर्षं कृतवान्। स ह...समावर्तयति। स्वाध्यायार्थिन इतरान् ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयन् तं ब्रह्मविद्यार्थिनं ज्ञात्वा, चिरसेवामन्तरेण ब्रह्मविद्या नोपदेष्टव्येति मत्वा, तमेव न समावर्तयति स।

तं....इति। तपसा तप्तो ब्रह्मचारी कुशलं सम्यक् अग्निशुश्रूषां कृतवान्। एतस्य विद्यानुपदेशो त्वत्परिचरणप्रीता अग्नय एव तव गर्हां कुर्युः। अतो यथा त्वां मा परिप्रवोचन् अग्नयः, तथा अस्मै उपकोसलाय विद्यामुपदिशेति तस्य भार्योक्तवतीत्यर्थः। तस्मै....चक्रे। एवं जाययोक्तोऽप्याचार्यः तस्य विद्यामनुपदिश्यैव देशान्तरं प्रोषितः।

---

स्मेति प्रथममपि भूतकालद्योतकम्; समावर्तयन्नित्युक्तक्रियान्वयि। अस्तु वाऽन्यपरम्। न समावर्तयति स्मेति। अन्येषामिव स्वाध्यायग्रहणमासीदेव। समावर्तनं तु न कृतम्, ब्रह्मविद्यार्थीति ज्ञात्वेति। एवं क्षिप्रं विद्यामधिगम्य गन्तव्यमिति शुश्रूषायां विशेषभोग्यतावैकल्यमस्य शङ्कित्वेत्यपि स्यात्। तप्त इति तपोवैशिष्ट्यमिव विद्यानधिगमप्रयुक्तमनस्तापोऽपि कथ्यते।

गर्हामिति। परिप्रवोचन्निति परिवादो विवक्षित इति भावः। परिर्लक्षणार्थकोऽपि स्यात्। त्वां लक्षयित्वा अग्नयः स्वयं प्रब्रूयुः=प्रवचनं कुर्युरित्यर्थ इति। इदानीं त्वं नोपदिशसि चेत्, विलम्बम-

स ह व्याधिनाऽनशितुं दध्रे । तमाचार्यजायोवाच—ब्रह्मचारिन्! अशान; किं नु नाश्नासीति । स होवाच—बहव इमे अस्मिन् पुरुषे कामाः नानात्ययाः । व्याधिभिः प्रतिपूर्णोऽस्मि। नाशिष्यामीति ॥ ३ ॥ अथ हाग्नयः समूदिरे–तप्तो ब्रह्मचारी कुशलं नः पर्य(रिच)चारीत्। हन्तास्मै प्रब्रवामेति ।

---

**स ह...दध्रे । स** उपकोसलो **व्याधिना** मानसेन दुःखेन पीडितस्सन् अनशनायावतस्थे(अवस्थितः)। 'धृङ् अवस्थाने' इति हि धातुः। **तं...इति । अशान** भुङ्क्ष्वेत्यर्थः । शिष्टस्य स्पष्टोऽर्थः । **स...इति । सः** ब्रह्मचारी, 'अस्मिन् जीवे ब्रह्मप्राप्तिव्यतिरिक्ताः काम्यमाना विषयाः **नानात्ययाः** नानाविधगर्भजन्मजरामरणादिलक्षणफलजनकाः मनसि विपरिवर्तमानाः सन्ति । अतः तद्विषयभयरूपव्याधिभिः पूर्णोऽस्मि । अतो न भुञ्जे' इति प्रत्युवाचेत्यर्थः ।

**अथ...समूदिरे ।** एतद्वाक्यं श्रुत्वा परिचरणप्रीताः गार्हपत्यादयोऽग्नयो दयमानमानसाः संभूयोक्तवन्तः। किमिति । **तप्तो...प्रब्रवामेति । हन्ते**त्यनुकम्पायाम् । **प्रब्रवाम** । ब्रह्मेति शेषः । शिष्टस्य स्पष्टोऽर्थः ।

---

सहमानाः तव च प्रवृत्तिमाधित्सवोऽग्नयः 'आचार्यस्तु ते गतिं वक्ता' इति त्वां लक्षयन्तः स्वयमुपदेशे प्रवर्तेरन् इति अभिज्ञायाः प्रतिव्रताया अभ्यूहः। बहव इमे अस्मिन् पुरुषे कामा नानात्यया इति। विद्याधिकारसंपत्त्यनुगुणं सम्यगेव प्राचामत्र व्याख्यानम् । परन्तु वाक्यसरणिरियं अस्य विद्याकर्मसमृद्धगृहस्थाश्रमशीघ्रप्रवेशचिन्तावैयाकुलीमप्याविष्कुर्यात् । प्रतिपूर्णत्वम् एकैकव्याधिनाऽपि पूर्णत्वम् । नाशिष्यामीति । अनेनानशनं शीघ्रफलसिद्धक्रदिति ज्ञायते । समूदिरे इत्यात्मनेपदम्, "व्यक्तवाचां समुच्चारणे" इत्यनुशासनात् संभूयवचनविशेषे । अग्नयो व्यक्तवाग्गा भूत्वा संभूय ह्युपदिदिशुरिति ।

तस्मै होचुः—॥ ४ ॥ प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ।
स होवाच, 'विजानाम्यहं यत् प्राणो ब्रह्म ; कं च तु खं च न विजानामि इति ।

---

तस्मै होचुः । तस्मै उपकोसलायाग्नयो वक्ष्यमाणमूचुरित्यर्थः । तदेवाह **प्राणो...ब्रह्मेति** ।

**स होवाच** । एवमुक्तः स उपकोसल उवाच । **विजानामि....न विजानामीति** । अस्यायमभिप्रायः—"न तावत् प्राणादिप्रतीकोपासनमग्निभिरभिधीयते, जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्मोक्षोपदेशाय प्रवृत्तत्वात् । अतो ब्रह्मैवोपास्यमुपदिष्टम् । तत्र प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टम् । तत्र सकलजगत्प्राणयितृत्वयोगेन **प्राण**शब्दितत्वस्य ब्रह्मण उपपन्नत्वात्, यत् **प्राणो ब्रह्मे**त्युक्तम्, तत् जानामि । **कं ब्रह्म खं ब्रह्मे**त्युक्तं तु न विजानामि । यद्यपि **कं**शब्दस्य सुखमर्थः, **ख**मित्यस्य चाऽऽकाशोऽर्थः । ततश्च वैषयिकसुखशरीरकमाकाशशरीरकञ्च ब्रह्मेत्य-

---

प्राणयितृत्वयोगेनेति । श्रीभाष्ये प्राणशरीरकत्वरूपार्थस्याप्युक्तत्वेऽपि सकृत्प्रयुक्तशब्दस्यार्थद्वयपरत्वायोगादेकतरार्थस्य ग्राह्यत्वे प्राणवायुग्राहकानन्यथासिद्धलिङ्गाभावात्, सर्वप्राणयितृत्वरूपार्थसंभवे प्राणप्राणयितृत्वरूपसंकुचितार्थग्रहणायोगाच्च एतन्मात्रमादृतम् । भाष्ये तु पूर्वविद्यासु सर्वत्र मुख्यप्राणप्रस्तावात् उपस्थिततदर्थभिङ्गाय सोऽप्यर्थो दर्शितः। इहाप्यग्निविद्यायाम्, 'प्राण आकाशः' इति मुख्यप्राणप्रस्तावात्, 'प्राणो ब्रह्म' इत्यत्र योगार्थग्रहणेऽपि न मुख्यप्राणानुगमभङ्ग इति उपनिषद्भाष्याशयः ।

यद्यपीत्यस्य प्रतिसंबन्धि तथापीति पदं खमित्यस्येत्यतः प्राक् पूरणीयम् । अर्थो लभ्यत इति। 'यः, सः' इति शेषः तत्र उतेत्येतदन्वेति । ननु खं कं ब्रह्मेत्यनुक्त्वा, कं ब्रह्म खं ब्रह्मेति ब्रह्मपदावृत्तिकरणात्

ते होचुः, 'यद्वाव कम, तदेव खम; यदेव खम्, तदेव कम्' इति।

---

भिप्रायः? उत कमित्यनेन सुखमभिधीयते, खमित्यनेनाकाशवाचिना अपरिच्छिन्नत्वमभिधीयते। तयोरन्योन्यविशेषणविशेष्यभावे अपरिच्छिन्नसुखं ब्रह्मेत्यपि अर्थो(ति अस्यार्थो) लभ्यते। ततश्चानयोर्मध्ये कस्मिन्नर्थे (कार्थे) तात्पर्यमिति न जाने"—इति।

**ते...कमिति**। तदभिप्रायज्ञा अग्नयः, **'कं खमित्यनयोर्विशेषण-विशेष्यभावोऽभिप्रेतः'** इति स्वाभिप्रायमुक्तवन्त इत्यर्थः। ननु **यद्वाव कं तदेव** खमित्यनेन विशेष्यविशेषणभावप्रतिपादनेन अपरिच्छिन्नसुखं ब्रह्मेत्यस्यार्थस्य लाभात्, **यदेव खं तदेव** कमिति पुनः उक्तिर्व्यर्थेति चेन्न—दार्ढ्यार्थं वा, अपरिच्छिन्नसुखत्वेन सुखरूपापरिच्छिन्नत्वेन चोपासनासिद्ध्यर्थं वा परस्परविशेषणविशेष्यभावोपदेशसार्थक्यात्।

---

**पृथग्भूतार्थविवक्षाप्रतीतेः अपरिच्छिन्नसुखरूपं ब्रह्मेति एकीकृतार्थ-लाभः ततः कथमिति चेत्—उच्यते। प्राणशब्दे योगव्युत्पत्तेः स्पष्टप्रतीतेः जगत्प्राणयितृत्वग्रहणमुपपन्नम्। कशब्दस्य सुखसामान्य-वाचित्वात् सर्वस्यापि सुखस्य ब्रह्मपदसामानाधिकरण्यसंभवात् वैषयिकसुखात्मत्वं किं ध्येयम्, उत निरतिशयानन्दसारतया तद्वत्त्वम्। खशब्दस्य चाकाशवाचितया आकाशान्तर्यामित्वं किमुच्यते, उत व्योमवदपरिच्छिन्नत्वमित्येवोपकोसलजिज्ञासा। एवं कखशब्दयोः जलेन्द्रियाद्यनेकार्थरूढत्वादपि अनिर्धारणाज्जिज्ञासा। एवं जिज्ञासायां यद्वा वेत्यादिकमग्निभिरुक्तम्। तत्र तदेव खमित्यनेन खशब्दस्येह नाकाशादिरर्थः; नापि ब्रह्मगतापरिच्छिन्नत्वम्, ब्रह्मशब्दादेव तल्लाभात्। किन्तु कशब्दार्थसुखगतापरिच्छिन्नत्वमिति ज्ञापितम्। तदेव कमित्यनेन च कशब्दस्य न वैषयिकसुखादिरर्थः। किन्तु यद-परिच्छिन्नं तदेव तद्गतं सुखमिति ज्ञापितम्। एवं तदुपपादनवशात्**

प्राणं च हास्मै तदाकाशं चोचुः। इति चतुर्थाध्याये दशमः खण्डः।

चतुर्थे एकादशः खण्डः

अथ हैनं गार्हपत्योऽनुशशास—'पृथिव्यग्निरन्नमादित्यः' इति।

---

प्राणश्च ....चोचुः । [अतः] जगत्प्राणयितृत्वेन प्राणत्वविशिष्टं यद् ब्रह्म, तदेवापरिच्छिन्नसुखरूपञ्चेत्यग्नय उक्तवन्त इत्यर्थः। ४-१०.

एवं ब्रह्मोपदिश्य अग्निभिरेतद्विद्याङ्गभूता अग्निविद्याऽप्युपदिष्टेत्याह— अथ ....शशास । 'जगत्प्राणयितृ अपरिच्छिन्नसुखरूपञ्च ब्रह्म' इत्युपदिश्य, एवमुपदिष्टब्रह्मविद्यमेनमुपकोसलं गार्हपत्योऽग्निः स्वविद्यां वक्ष्यमाणामुपदिदेशेत्यर्थः । अथशब्दश्च प्रकृतविषयत्वद्योतनार्थः। अत्र

---

विशेषणविशेष्यभावोऽनेन गृहीत इत्युक्तौ नानुपपत्तिः । एवं अपरिच्छिन्नाऽऽनन्दविशिष्टब्रह्मप्रतिपादनपरैरग्निभिः कं ब्रह्मेति स्वोक्तैकवाक्यताद्योतकस्वरविशेषेण खं ब्रह्मेति प्रयुक्तं स्यात् । तत्स्वरश्रवणबलात् विशेषणविशेष्यभावः किं विवक्षित इति जिज्ञासितवान् इत्युक्तिरपि घटते । नन्वेवं विशेष्यविशेषणभावे विवक्षिते किमिति खं कं ब्रह्मेत्येवाग्निभिर्नोपदिष्टमिति चेत्—'बहव इमेऽस्मिन् पुरुषे कामाः' इति वैषयिकसुखविरक्तस्योपकोसलस्य ब्रह्मप्रकारतयाऽपि वैषयिकसुखध्याने भीतिरस्तीति तद्वैराग्यविशेषावधारणार्थम्, उभयविद्योपासनलाभार्थञ्च । सुखरूपेति । अयं भावः—कत्वमुक्तं सुखविशिष्टत्वरूपम् । अत एव, 'सुखविशिष्टाभिधानादेव च' इति सूत्रेऽपि विशिष्टपदम् । तत्र विशिष्टान्वयिविधेयस्य विशेषणेऽप्यन्वयस्यौत्सर्गिकत्वात् सुखेऽप्यपरिच्छेदलाभः प्रथमोक्तौ । तथा, नास्य परमात्मनः, विभुजीववादिमते देहमात्रावच्छेदेनेव अव्याप्यवृत्तिसुखवैशिष्ट्यम्, किन्त्वपरिच्छिन्नस्वस्वरूपकात्स्न्र्येनेति सूचनं अपरिच्छिन्ने सुखविशिष्टत्वोक्तिरूपपुनरुक्तिफलमिति ॥

य एष आदित्ये पुरुषो दृश्यते, सोऽहमस्मि: स एवाहमस्मीति ॥१॥

---

च (अतश्च ?) अथैनमिति शब्दाभ्यां वक्ष्यमाणाग्निविद्यायाः प्रकृतब्रह्मविद्याङ्गत्वमुच्यते । अनुशासनप्रकारमेवाह **पृथिवी....इति** । मे गार्हपत्याग्नेः एताः चतस्रः तनव इत्यर्थः। **य...इति**। पृथिव्यग्न्यन्नादित्यलक्षणानां चतुर्णां रूपाणां मध्ये अग्न्यादित्यरूपयोः पक्तृत्वप्रकाशत्वरूपधर्मसंबन्धादैक्यम् । अग्नेरादित्येन यादृशमैक्यम् , न तादृशमैक्यम् , पृथिव्यन्नाभ्याम् । तस्मादादित्य एवाहमस्मि इत्यग्निरुवाचेत्यर्थः ।

---

**चतस्रस्तनव इति । पृथिव्यादीनां गार्हपत्यतनुत्वमप्रत्यक्षम् । अथापि आदित्यवर्तिपुरुषाभेदस्य गार्हपत्ये उक्त्या आदित्यस्य तनुत्वे सिद्धे तत्प्रायपाठात् पृथिव्यादीनामपि तनुत्वसिद्धिरिति भावः । एवमग्रेऽपि ।**

**सोऽहमस्मीत्युक्तार्थस्य स एवाहमस्मीति पुनर्वचनं किमर्थमित्यत्र शाङ्करोक्तं विशेषं किञ्चिद्रूपेण दर्शयति पृथिव्यग्नीत्यादिना । पुनः कथनम् आदित्यैक्यवत् पृथिव्याद्यैक्यं स्वस्मिन् न भवतीत्यर्थस्य एवकारेण ज्ञापनायेति भावः । अत्र पृथिव्यग्निरित्यत्र अग्निपदं न गार्हपत्यमात्रपरम्, अविशेषेण सर्वग्रहणस्यैवोचितत्वात् । स्वस्यैव स्वतनुत्वापेक्षया स्वभिन्नाग्नीनां स्वतनुत्वस्योचितत्वाच्च । उपरि अन्वाहार्यपचनाहवनीययोः तत्तद्रूपचतुष्टये त्रयत्यागेन एकान्तिमरूपवर्तिपुरुषाभेदवत् अत्रापि त्रयत्यागेन अन्तिमादित्यान्तर्वर्तिपुरुषाभेदः कथ्यते सोहमस्मीति । तस्य कथितस्य स एवाहमस्मीति पुनःकथनं चतुष्टये चतुर्थैक्यवत् अन्यत्रयैक्यं न भवतीति ज्ञापनार्थमिति वाच्यम् । तदत्र न युज्यते ; गार्हपत्ये अत्तृत्वपक्तृत्वाभ्यामग्न्यैक्यस्यापि स्थितत्वात् । तस्मात् पृथिव्यग्नैक्याभावमात्रपरमिदं वाक्यमित्याशयेन अग्न्यादित्यरूपयोरित्यादिकमुक्तमिति ध्येयम् ।**

स य एतमेवं विद्वानुपास्ते, अपहते पापकृत्याम्; लोकी भवति; सर्वमायुरेति; ज्योक् जीवति; नास्यावरपुरुषाः क्षीयन्ते। उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च, य एतमेवं विद्वानुपास्ते ॥

इति चतुर्थाध्याये एकादशः खण्डः।

---

**स....क्षीयन्ते** । एतदुपासकः ब्रह्मप्राप्तिविरोधि पापं कर्मापहन्ति । **लोकी भवति** । तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोतीत्यर्थः । यद्यपि ब्रह्मप्राप्तिविरोधिपापनिवृत्तेः ब्रह्मप्राप्तेश्च प्रधानभूतब्रह्मविद्याफलत्वमेव, तथापि अङ्गिफलेन अङ्गं स्तूयत इति द्रष्टव्यम् । यद्वा **पाप**शब्दो ब्रह्मविद्योत्पत्तिप्रतिबन्धकपापपरः । **लोक**शब्दो ब्रह्मलोकप्राप्तिमार्गभूताग्निलोकपरो द्रष्टव्यः । **सर्वमायुरेति** । ब्रह्मोपासनसमाप्तेः यावत् आयुरपेक्षितम्, तत् सर्वमेति । **ज्योक् जीवति** । व्याध्यादिभिरनुपहतो यावद्ब्रह्मप्राप्ति उज्ज्वलो जीवति । **नास्यावरपुरुषाः क्षीयन्ते** । अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोऽपि न क्षीयन्ते । ब्रह्मविद एव भवन्तीत्यर्थः । संततौ ब्रह्मविद्यानुवृत्तेः, 'नास्याब्रह्मवित् कुले भवति' इति श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रवणात् । **उप.... उपास्ते** । य एवमुपास्ते, तमस्मिंश्च लोके अमुष्मिंश्च लोके वयं अग्नयः **उपभुञ्जामः** यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । ४-११.

---

अङ्गिफलेनाङ्गस्तुतिरित्युक्तं शाङ्करानुसारेण। साक्षात् स्वफलविवक्षयाऽपि व्याख्याति यद्वेति। इदं श्रीभाष्यानारूढमपि न तदननुमतम्; अङ्गिफलाविरुद्धं फलमत्रोक्तमित्यत्रैव श्रीभाष्यनैर्भर्यादस्यापि ग्राह्यत्वात्। अग्निलोकपर इति। नन्वग्निलोकः

चतुर्थे द्वादशः खण्डः । अथ हैनमन्वाहार्यपचनोऽनुशशास—आपो दिशो नक्षत्राणि चन्द्रमा इति । य एष चन्द्रमसि पुरुषो दृश्यते, सोऽहमस्मि; स एवाहमस्मीति ॥१॥ स य एतमेवं विद्वानुपास्ते, अपहते पापकृत्याम् ; लोकी भवति; सर्वमायुरेति; ज्योक् जीवति; नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च, य एतमेवं विद्वानुपास्ते ॥ इति चतुर्थाध्यायेे द्वादशः खण्डः ।

चतुर्थे त्रयोदशः खण्डः

अथ हैनमाहवनीयोऽनुशशास—प्राण आकाशो द्यौर्विद्युदिति ।

---

**अथ....शशास** । अन्वाहार्यपचनः दक्षिणाग्निः । **आपो... इति** । आपो दिशो नक्षत्राणि चन्द्रमा इति मे रूपाणीत्यर्थः । **य.... अस्मीति** । चन्द्रमसश्च मेश्च प्रकाशकत्वसाम्यादिति भावः । ४-१२.

**अथ हैनमाहवनीयः....उपास्ते** । विद्युत्पुरुषस्यापि प्रकाशकत्वादाहवनीयैक्यम् । ४-१३.

---

अर्चिरादिमार्गे प्रथमः । स च ब्रह्मविद्ययैव लभ्यत इति किमनया अग्निविद्ययेति चेन्न ; 'उप वयं तं भुञ्ज मोऽस्मिंश्च लोकेऽमुष्मिंश्च' इति फलवर्णनात्, यस्यैतज्जन्मनि ब्रह्मविद्या न निष्पन्ना, तमग्निविद्यानुष्ठाने सति अग्नयः तत्प्रतिबन्धकपापनिवर्तनेन स्वलोकं प्रापय्य तत्र ब्रह्मविद्यानिष्पत्त्युपयोगि तद्रक्षणं विदधतीत्याशयात् । एवं लोकीभवतीत्यस्य विद्यापेक्षितपरिकरसंपन्नो भवतीत्यप्यर्थः संभवति। लोक्यत इति लोकः (परिकरः परिजनश्च)। अत एव, 'लोकान् वाव किल ते सोम्यावोचन्' इति अग्रे वक्ष्यमाणमपि संगतम् । लोकादिफलप्राप्तिप्रतिबन्धककतिपयपापनिवर्तनमात्रेण तत्प्राप्तिमात्रं हि तैरुक्तम् । अहं तु, यथा सर्वपापापहतिः स्यात्—न केवलं सर्वपूर्वपापापहतिः, उत्तरपापाश्लेषोऽपि यथा स्यात्, तं प्रकारं वक्ष्यामीति वक्ष्यमाणवाक्यार्थः ।

य एष विद्युति पुरुषो दृश्यते, सोऽहमस्मि; स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्ते, अपहते पापकृत्याम्; लोकी भवति; सर्वमायुरेति; ज्योक् जीवति; नास्यावरपुरुषाः क्षीयन्ते। उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च, य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति चतुर्थाध्याये त्रयोदशः खण्डः

चतुर्थे चतुर्दशः खण्डः

ते होचुः—उपकोसल! एषा सोम्य तेऽस्मद्विद्या चात्मविद्या च। आचार्यस्तु ते गतिं वक्तेति।

---

**ते होचुः....वक्तेति**। प्रत्येकमनुशासनानन्तरं मिलित्वा तेऽग्नयोऽब्रुवन्। **अस्मद्विद्या** अग्निविद्या। **आत्मविद्या** परमात्मविद्येत्यर्थः। चशब्दोऽङ्गाङ्गिभूतविद्ययोरुपदेशक्रियायां समुच्चयद्योतनार्थः। अग्निविद्या चात्मविद्या चोपदिष्टेत्यर्थः। **आचार्यस्तु ते गतिं वक्तेति**। एवं वदतामग्नीनामयमभिप्रायः—हे उपकोसल! ब्रह्मविद्यामनुपदिश्य प्रोषुषि (प्रोषिते) गुरौ तदलाभादनाश्वांसं त्वामुज्जीवयितुं ब्रह्मस्वरूपमात्रं तदङ्गभूतामग्निविद्याञ्चोपादिक्षाम। आचार्यादे(द्धै)व विदिताया विद्यायाः साधिष्ठत्वात् आचार्य एव संयद्वामत्वादिगुणकं ब्रह्म, अक्षिरूपं च तदुपासनस्थानम्, अर्चिरादिकाञ्च गतिमुपदिशतु—इति।

---

अनाश्वांसमिति। भावप्रकाशिकायां, 'उपेयिवाननाश्वान्...' इति नञ्पूर्वादश्नातेः अनाश्वानिति रूपम्। अभुक्तवन्तमित्यर्थ इति श्रीभाष्यस्थमिदं पदं व्याख्यातम्। 'स ह व्याधिनाऽनशितुं दध्रे', 'व्याधिभिः प्रतिपूर्णोऽस्मि, नाशिष्यामि' इत्यस्यार्थग्रहणमिदम्। ब्रह्मस्वरूपमात्रमिति। मात्रपदेन आचार्यव्यतिरिक्तात् ब्रह्मग्रहणेऽपि ब्रह्मविद्याग्रहणमाचार्यादेव कार्यमिति गम्यते।

आजगाम हास्याचार्यः। तमाचार्योऽभ्युवाद, उपकोसला३ इति। भगव इति ह प्रतिशुश्राव। ब्रह्मविद इव सोम्य ते मुखं भाति। को नु त्वाऽनुशशासेति। को नु माऽनुशिष्यात् भो इती(?)-हापेव निह्नुते, इमे नूनमीदृशा अन्यादृशा इति(ती) हाग्नीन् अभ्यूदे। किं नु सोम्य किल तेऽवोचन् इति। इदमिति ह प्रतिजज्ञे।

---

ततश्च **गतिं वक्ते**त्यस्यानशिष्ट वक्तेत्यर्थः। न तु गतिमात्रमिति द्रष्टव्यम्।

**आजगाम...इति**। स्पष्टोऽर्थः। **ब्रह्मविद इव....अनुशशा-सेति** गुरुणैवमुक्तः शिष्य आह— **कोनु माऽनु....निह्नुते**। हे भगवन्! त्वयि प्रोषिते इव मां कोऽनुशिष्यादित्यर्थः। **अपेव निह्नुते**। (**हापेव निह्नुते**। हेति भेदे)। अपनिह्नुत इवेत्यर्थः। नापनिह्नुते; न यथावत्, 'अग्निभिक्तम्' इत्यपि ब्रवीतीत्यभिप्रायः। कश्चित् कालमपह्नुत्य, अथाग्नीन् निर्दिश्य, इम एव नूनमुपदिष्टवन्त इ[त्युक्त-वानि]त्याह **इमे....अभ्यूदे**। ये इदानीमीदृशाः ज्वलनाकारतया परिदृश्यमानाः, एत एवाग्नयः पूर्वमन्याकारास्सन्तो ममोपदिष्टवन्त इत्युक्तवानित्यर्थः। आचार्य आह - **किं नु....अवोचन्** इति। इतर आह **इदमिति ह प्रतिजज्ञे**। एतावदुपदिष्टमिति प्रतिज्ञातवात्।

---

अपेव निह्नुते। इवकारः निह्नवानपुरुषवाक्यतुल्यमिदं वाक्यं न निह्नवाभिप्रायकम्; किन्तु अनुशासनमिदं न मनुष्यान्तरमूलकम् यद्यप्यवगतम्, तदपि न पर्याप्तमित्याशयादिति ज्ञापनार्थः।

अभ्यूदे = अभिमुखीकरणेन उवाच; प्रदर्श्योवाचेत्यर्थः। 'भास-नोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः' इतीहात्मनेपदम्।

लोकान् वाव किल सोम्य तेऽवोचन्। अहं तु ते तत् वक्ष्यामि, यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यत इति। ब्रवीतु मे भगवानिति। तस्मै होवाच ॥ ३ ॥

इति चतुर्थाध्याये चतुर्दशः खण्डः

चतुर्थे पञ्चदशः खण्डः

य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच, एतदमृतमभयम्, एतत् ब्रह्मेति। तत् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति, वर्त्मनी एव गच्छति ॥ १ ॥

---

इतर आह लोकान्....इति। हे सोम्य! ते अग्नयः पृथिव्यादीन् लोकानेव [कार्त्स्न्येन] तवोक्तवन्तः। [अङ्गभूतामग्निविद्यां कार्त्स्न्येनोक्तवन्त इत्यर्थः।] न तु ज्ञातव्यं ब्रह्म कार्त्स्न्येन। अहं तु ते पद्मपत्रजलाश्लेषतुल्यसर्वपापाश्लेषापादकविद्याविषयभूतं ब्रह्म वक्ष्यामि, यदि शुश्रूषसे इत्यर्थः। पापाश्लेषो नाम पापहेतुभूतकर्माचरणेऽपि पापोत्पत्तिप्रतिबन्धकशक्तिमत्त्वम्। इदञ्च प्रामादिकपापविषयम् पापशब्दश्च सुकृतदुष्कृतसाधारणः। एतच्च तत्रतत्रोक्तं तत्रैवानुसंधेयम्। इतर आह ब्रवीतु मे भगवानिति। तस्मै होवाच। तस्मै एवमुपसन्नायोपकोसलाय आचार्यो वक्ष्यमाणमाहेत्यर्थः ॥ ४-१४.

य एषोऽक्षिणि...ब्रह्मेति। योगिभिर्योऽक्ष्यन्तर्वर्ती पुरुषो दृश्यते, अयमेव आत्मा नियन्तेत्यर्थः। अमृतत्वं निरतिशयभोग्यत्वम्। अभयत्वं दुःखासंभिन्नत्वम्। ब्रह्मत्वं निरतिशयबृहत्त्वम्। तत्... गच्छति। तत् तस्मात् निर्लेपस्थानिप्रभावात्, अस्मिन् अक्षिणि यद्यपि

---

पुष्करेति। मद्वक्ष्यमाणदेवतास्थानमपि हि श्लेषासहमिति भावः।
एतत् ब्रह्मेति। अग्निभिरुपदिष्टं यत् ब्रह्म तत् एवंभूतम्।

एतँ संयद्वाम इत्याचक्षते । एतँ हि सर्वाणि वामान्यभिसंयन्ति । सर्वाण्येनं वामान्यभिसंयन्ति, य एवं वेद ॥ २ ॥

एष उ एव वामनीः(निः) । एष हि सर्वाणि वामानि नयति । सर्वाणि वामानि नयति, य एवं वेद ॥ ३ ॥

एष उ एव भामनीः(निः) । एष हि सर्वेषु लोकेषु भाति । सर्वेषु लोकेषु भाति, य एवं वेद ॥ ४ ॥

---

सर्पिर्वा उदकं वा कश्चित् सिञ्चेत्, तत् वर्त्मनी तत्पार्श्वद्वयमेव [हि] गच्छति । न तत्र लिप्यते ।

एतं....आचक्षते । संयन्ति संगतानि वामानि वननीयानि प्रार्थनीयानि यस्मिन् स संयद्वामः । सर्वकल्याणगुणाश्रयत्वं सत्यसंकल्पत्वं वा संयद्वामत्वम् । सर्वाण्येनं....वेद । तदुपासकस्यापि तत्क्रतुन्यायात् तत् भवतीत्यर्थः । एष...वेद । वामनीत्वं स्वाश्रितेषु शोभन[धी]प्रापकत्वम् । तत्क्रतुन्यायेन तद्गुणोपासकस्यापि तत् भवतीत्यर्थः । एष...वेद । भामनीत्वं सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तत्वम् । उपासकस्यापि तत् भवति अपेक्षायामित्यर्थः। अत्र, 'संयद्वामत्ववामनीत्वभामनीत्वेषु फलकथनं फलरूपतात्पर्यलिङ्गोपन्यासेन तेषु गुणेषु तात्पर्यप्रदर्शनार्थम्, न तु सर्पिर्वोदकं वा सिञ्चति इत्यत्रेवार्थवादमात्रतया स्तुतिरूपत्वम्' इति प्रदर्शनार्थं सर्पिर्वेति वाक्यस्य स्तुतित्वं व्यासार्यैरुक्तम (१-२-१३) ।

---

इदमक्षिस्थानमात्मत्वादि च तस्येति भाव्यमिति यावत् । ब्रह्मण्यमृतत्वाभयत्वाद्युपवर्ण्य उपासितुरपहतपाप्मत्वादिलाभ उक्तः । अथ तस्य सत्यकामत्वादिगुणातिशयलाभ उच्यते एतमित्यादिना ।

अथ यदु चैवास्मिन् शव्यं कुर्वन्ति, यदु(दि) च न, अर्चिषमेवाभिसंभवन्ति; अर्चिषोऽहः; अह्न आपूर्यमाणपक्षम्; आपूर्य-

---

**अथ....गमयति** । अथशब्दः प्रकृतविषयत्वद्योतनार्थः । **अस्मिन्** ब्रह्मविदि । सामान्याभिप्रायत्वादस्यैकवचनस्य, उत्तरत्र **अभिसंभवन्ती**ति बहुवचनेन न विरोधः । **यत्** यदि **शव्यं** शवदहनादिकर्म पुत्रादयः कुर्वन्ति, यदि वा न कुर्वन्ति, सर्वथाऽपि ते **अर्चिषमेवाभिसंभवन्ति** । **अर्चिरादिशब्दाश्च**, 'आतिवाहिकास्तल्लिङ्गात्' इति न्यायेन तदभिमानिदेवतापरा इति अन्यत्र स्थितम् ।

अत्र केचित्—'उपकोसलविद्यावैभवेन, शवदहनादिवैगुण्येऽपि, उपकोसलविद्यानिष्ठस्य न क्षतिः । विद्यान्तरनिष्ठस्य दहनादिवैगुण्ये किञ्चित् वैगुण्यमस्ति' इति वदन्ति । तन्न—'न कर्मणा लिप्यते' इति श्रुतिसिद्धार्थानुवादित्वादस्य वाक्यस्यैतादृशार्थप्रत्यायकत्वाभावात् । अतः **अथ यदु चैव स्मिन्** इत्येतत् सर्वब्रह्मवित्साधारणमेव ।

---

न कर्मणा लिप्यत इति । अयं भावः—देहवियोगकाल एव सर्वसुकृतदुष्कृतविधूननं सांपरायाधिकरणसिद्धम् । अतो न निष्पन्नविद्यस्य प्रेतभावस्य तत्परिहारककर्मप्रतीक्षणस्य च प्रसक्तिः । कार्यान्तरशून्यं सूक्ष्मदेहं विद्याबलादर्चिरादिगतये उपादाय मूर्धन्यनाड्या निष्क्रम्यार्चिरादिप्रवेश एव हि सर्वस्य विदुषस्तत्राधिकरणे उक्तः । सद्विद्यायाञ्च, 'यावन्न विमोक्ष्ये, अथ संपत्स्य' इति एतच्छरीरपातमात्रविलम्बो वेदितः । दहरविद्यायामपि, 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य' इति ल्यपा स्वारस्यादविलम्बो दर्शितः । तत्रैव, 'नोपजनं स्मरन्निदं शरीरम्' इति बन्धुजनपरिवृत्ते सत्येव स्वत्यक्तशरीरे, तदस्मरणसहचरितं परमपदे नक्षणादि वर्णितम् । तत्रैव (८. ५), 'तमभित आसीना आहुः जानासि मां जानासि मामिति

माणपक्षात् यान् षडुदङ्ङेति मासाँस्तान्; मासेभ्यः संवत्सरम्; संवत्सरादादित्यम्; आदित्याच्चन्द्रमसम्; चन्द्रमसो विद्युतम्; तत्पुरुषोऽमानवः ॥ ५ ॥ स एनान् ब्रह्म गमयति । एष देवपथो ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥

इति चतुर्थाध्याये पञ्चदशः खण्डः

---

**यान् षडुदङ्ङेति मासांस्तान्** । यान् षट् मासान् **उदक्** उत्तरदिशायां आदित्य एति, तान् मासानित्यर्थः । शिष्टं स्पष्टम् । **एष—नावर्तन्ते** । देवैरातिवाहिकैर्नीयमानः पन्था: **देवपथः** । ब्रह्मप्रापकः पन्थाः **ब्रह्मपथः** । एतेन मार्गेण प्रतिपद्यमाना **इमं घोरं मानवमावर्तं** घटीयन्त्रवत् जननमरणाद्यावर्तकं (णप्रापकं) मनुष्यादि-शरीरोपलक्षित संसारं **नाऽऽवर्तन्ते** पुनर्न प्रतिपद्यन्ते । द्विरुक्तिर्विद्या समाप्त्यर्था । अत्र च यत् किञ्चित् वक्तव्यमुत्तरत्र वक्ष्यते ।

(1) अत्र पञ्चाग्निविद्यायामुपकोसलविद्यायाञ्च अर्चिरादिगतेः पाठात, यस्यां विद्यायामर्चिरादिगतिः श्रूयते, तन्निष्ठानामेवार्चिरादि-गत्या ब्रह्मप्राप्तिः; नान्येषाम् । न च, 'तत् य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते', 'श्रद्धां सत्यमुपासते' इति सर्व-ब्रह्मविद्यासाधारण्यं श्रुतमिति वाच्यते—तथासति उपकोसलविद्याया-मर्चिरादिगतिश्रुतिवैयर्थ्यप्रसङ्गात् इति पूर्वपक्षे प्राप्ते—उच्यते—

---

स यावदस्माच्छरीरादनुत्क्रान्तो भवति, तावज्जानाति । अथ यत्रै-तदस्माच्छरीरादुत्क्रामति, अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते । स ओमिति वाह । उद्वा मीयते । स यावत् क्षिप्येन्मनः, तावदादित्यं गच्छति' इति उत्क्रान्तिसमनन्तरमतिवेगादादित्यमण्डलप्राप्तिरुक्ता । एवं बहु द्रष्टव्यम् । अतः शब्दानपेक्षा सर्वविद्वत्साधारणीति ।

'**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्**'। सर्वेषां सर्वोपासननिष्ठानामर्चिरादिमार्गेणैव गन्तव्यत्वात् एतद्विद्यानिष्ठानामेवेति नियमो नास्ति। तथा हि (तदा ह्यविरोधः शब्दानुमानाभ्यम्। ?) नियमे सति,

'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते', 'श्रद्धां सत्यमुपासते',

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।

तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥'

इति श्रुतिस्मृतिभ्यां विरोधप्रसङ्गः। उपकोसलविद्यायां पुनराम्नानं तु, 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति पञ्चाग्निविद्याप्राप्तसर्वब्रह्मविद्यासाधारणार्चिरादिगतेरपुनरावृत्तिविधानार्थमनुवाद इति स्थितम् ।

(२) उपकोसलविद्यायाः परमात्मविद्यात्वञ्च, '**अन्तर उपपत्तेः**' इत्यत्र स्थितम् । तथा हि—, 'य एषोऽक्षिणि पुरुषो दृश्यते' इति निर्दिश्यमानः प्रतिबिम्बात्मा; प्रसिद्धवन्निर्देशात् । दृश्यत इति अपरोक्षाभिधानाच्च । जीवो वा स्यात् । चक्षुषि तस्य विशेषेण संनिधानात् प्रसिद्धिरुपपद्यते । उन्मीलितचक्षुरुद्वीक्षणेन जीवस्य स्थितिगतिनिश्चयात् 'दृश्यत' इत्युक्तिरुपपद्यते । [चक्षुःप्रतिष्ठितत्वेन श्रुतिप्रसिद्धो देवताविशेषो वा ।?] न तु परमात्मा । तस्यानाधारत्वात्, अदृश्यत्वाच्च । 'न च आत्मत्वामृतत्वाभयत्वब्रह्मत्वादिविरोधः । 'एष आत्मेति होवाच' इति इतिकरणेन, 'मनो ब्रह्मेत्युपासीत' इतिवत् अर्था(पदार्था)विवक्षायाः दर्शितत्वात् इत्येवं प्राप्ते—

अभिधीयते—'**अन्तर उपपत्तेः**' । अक्ष्यन्तरः परमात्मा । तस्यैवात्मत्वामृतत्वसंयद्वामत्ववामनीत्वभामनीत्वादिधर्माणामुपपत्तेः। न च

इतिकरणेन तेषामविवक्षा शङ्क्या — यत्र उच्यमानस्यार्थस्याप्त(त्म)वचन-संबन्धः प्रतिपाद्यः, तत्र इतिशब्दो नार्थविवक्षां वारयति, यथा — 'इति ह स्मोपाध्यायः कथयति' इति । तस्मादिहामृतत्वादीनामाचार्यवचन-संबन्धस्य प्रतिपाद्यत्वात् इतिशब्दः, 'मनो ब्रह्मेति' इत्यादाविव नार्थविवक्षावारकः । ततश्च स्वाभाविकामृतत्वादीनां जीवे असंभवात्, तथा प्रतिबिम्बे, 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' इति चक्षुःप्रतिष्ठितत्वेन श्रुतिप्रसिद्धादित्यरूपदेवताविशेषे चासंभवात् परमात्मैव अक्ष्यन्तर्वर्ती ।

**'सुखविशिष्टाभिधानादेव च'** । 'कं ब्रह्म खं ब्रह्म' इत्यपरिच्छिन्नत्वविशिष्टसुखरूपस्य अग्निभिरुपदिष्टस्य ब्रह्मण एव, 'य एषोऽक्षिणि पुरुषो दृश्यते' इति वाक्ये प्रकृतपरामर्शिना 'य एष' इति सर्वनाम्नाऽभिधीयमानत्वाच्च । न च तत् ब्रह्म अग्निविद्यया व्यवहितमिति वाच्यम् — अग्निविद्याया अपि ब्रह्मविद्याङ्गत्वेन, 'न हि स्वाङ्गम्' इति न्यायेनाव्यवधायकत्वात् । तदङ्गत्वञ्च तत्प्रकरणमध्यपातात्; 'अथ हैनं गार्हपत्योऽनुशशास' इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेश इति प्रतिपादनात्; ब्रह्मविद्योपयुक्तफलव्यतिरिक्तफलान्तराश्रवणाच्च ।

ननु, 'कं ब्रह्म खं ब्रह्म' इति वाक्येन अपरिच्छिन्नसुखरूपं ब्रह्मेति नोपदिश्यते; अपितु, 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति त्रिभिर्वाक्यैः मुख्यप्राणे लौकिक(वैषयिक)सुखे, आकाशे च ब्रह्मदृष्टिर्विधीयते । तत्राह — **'अत एव च स ब्रह्म'** । अत एव अपरिच्छिन्नसुखस्य

---

न हीति । 'न हि स्वाङ्गं स्वव्यवधायकम्' इति न्यायः । अत एव प्रयाजानुयाजादीनां क्रमेण विहितानामपि प्रकरणावि[illegible] । अन्यथा [illegible] स्यादिति ।

चतुर्थे षोडशः खण्डः

**एष ह वै यज्ञो योऽयं पवते। एष [ह] यन् इदं सर्वं पुनाति।**

---

ब्रह्मत्वाभिधानादेव अपरिच्छिन्नसुखरूपं ब्रह्मैवात्र प्रतिपाद्यते ; नाब्रह्मणि ब्रह्मदृष्टिः। अब्रह्मभूतेषु मुख्यमाणलौकिकसुखाकाशेषु ब्रह्मदृष्टिविधिरूपत्वे तत्रानुपपत्तेरेवाभावेन, 'विजानाम्यहं यत् प्राणो ब्रह्म कञ्च तु खञ्च न विजानामि' इति प्रश्नस्य, 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति प्रतिवचनस्य चासंगतत्वापत्तेः। तदसंगतिप्रकारश्च प्रागेव वर्णितः।

इतश्च परं ब्रह्म **'श्रुतोपनिषत्कगत्यभिधानाच्च'**। **श्रुतोपनिषत्कस्य** अधिगतपरमपुरुषयाथात्म्यस्य अनुसंधेयतया श्रुत्यन्तरप्रतिपाद्य(प्रतीय)-माना अर्चिरादिका गतिर्या, तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीम् उपकोसलायाक्षिपुरुषं श्रुतवते, 'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति' इत्यादिना आचार्य उपदिशति। अतोऽप्ययमक्षिपुरुषः परमात्मा।

**'अनवस्थितेरसंभवाच्च नेतरः'** प्रतिबिम्बादीनामक्षिणि नियमेनान-वस्थानात् अमृतत्वादीनाञ्च निरुपाधिकानां तेष्वसंभवात् न परमात्मेतरः छायादिरक्षिपुरुषो भवितुमर्हतीति स्थितम् ॥ प्रकृतमनुसरामः। ४-१५.

रहस्यप्रकरणे प्रसङ्गादारण्यकत्वसाम्याच्च यज्ञे क्षते उत्पन्ने

---

ननु ब्रह्मोपदेशरूपायामुपनिषदि यज्ञलोपपरिहारकप्रायश्चित्त-विशेषाणां परब्रह्मगन्धविधुराणां कुतो निरूपणमित्यत्र सङ्गतिमाह रहस्येति। उपनिषद्धि रहस्यार्थोपदेशिका। वक्ष्यमाणप्रायश्चित्तादे-रपि रहस्यत्वात् प्रसक्तिरासीदिति भावः। संगत्यन्तरं ब्रह्मप्रति-पादकभागानामिव अस्य श्रुतिभागस्याप्यारण्यकत्वम्। अस्य पञ्चम्य-न्तद्वयस्य आरभ्यत इत्यत्रान्वयः। किमत्रोच्यमानमित्यत्र विवृणोति

यदेष [ह] यन्निदं सर्वं पुनाति, तस्मादेष एव यज्ञः ।

---

व्याहृतयः प्रायश्चित्तार्थहोममन्त्रतया विधातव्याः । 'तदभिज्ञस्यैव ब्रह्मत्व-लक्षणमार्त्विज्यम् । तस्य च ब्रह्मणो मौनमावश्यकम्' इत्येवमादि-विध्यर्थमिदमारभ्यते—**एष....पवते** । योऽयं पवते वायुः, स एव यज्ञ इत्यर्थः । कथं वायोर्यज्ञत्वमित्यत्राऽऽह **एष ह यन्....पुनाति** । वायुर्हि गच्छन् सर्वं पुनाति । वर्षवातातपैर्वस्तुशुद्धिः स्मृतिप्रसिद्धा । **यन् पुनाती**ति पदद्वयगतयोः यकारनकारयोः यज्ञशब्दे प्रत्यभि-ज्ञानात्, ञकारस्य नकारविकारत्वात् **यज्ञ**शब्दस्य यन् पुनातीति निर्वचनं वायौ इति भावः । उक्तमेवोपसंहरति **यदेष...यज्ञः** ।

---

यज्ञे क्षत इत्यादिना । एवमाशयमेव तु शाङ्करावतरणवाक्यं स्वयं सङ्गतिचतुष्टयपरतया व्याचख्यावानन्दगिरिः । तदुक्तार्थस्तु—रहस्य-मुपासनम् । तत्प्रकरणे तत्फलप्राप्त्यर्थार्चिरादिमार्गप्रसङ्गात् अनोक्त-यज्ञसम्बन्धिकार्यविशेषस्य यज्ञसमाप्तिमार्गस्य चोपस्थितिरित्येका । आरण्यकत्वं द्वितीया । अग्निविद्या पूर्वमुक्ता ; इह अग्निसंबन्धि-यज्ञप्रायश्चित्ताहुत्युक्तिरिति तृतीया । ब्रह्मोपासनं मौनसाध्यम् ; ब्रह्मर्त्विजोऽपि मौनं तत उपस्थितमिति चतुर्थीति । तस्य व्याख्यानस्य समञ्जसत्वे अनेकसंगतिलाभात् अस्यापि ग्रन्थस्य तथैव व्याख्यानं भाव्यम् । प्रसङ्गादिति पदेनान्योऽपि प्रसङ्गः सुवचः । एतावत्पर्यन्तं वायुप्राणसंबन्धिविद्यानामेव निरूपणं कृतम् । उपकोसलविद्या-यामपि, 'प्राणो ब्रह्म कं ब्रह्म', 'प्राण आकाशो द्योर्विद्युत्' इति प्राणवायुप्रस्तावात् । अतः सर्वत्र वायोरनुकर्षात् वायुविषययज्ञ-भावनारूपदृष्टिविध्यन्तरं प्रसक्तमिति ।

वायुः स एव यज्ञ इति । अत्र वायोर्यज्ञत्वे बहुश्रुत्युदाहरणं कृतं शाङ्करे । 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते' इति

**तस्य मनश्च वाक् च वर्तनी । ॥ १ ॥**

**तयोरन्यतरां मनसा सँस्करोति ब्रह्मा ; वाचा होताऽध्वर्युरुद्गाताऽन्यतराम् । स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्य[प]वदति ॥२॥ अन्यतरामेव वर्तनीँ सँस्करोति ; हीयतेऽन्यतरा ।**

---

एवं यज्ञस्य वायोश्चाभेदप्रतिपादनेन यज्ञस्य गन्तृत्वं संपाद्य गन्तुर्यज्ञस्य मार्गमाह **तस्य....वर्तनी ।** प्रवृत्तिसाधनभूतो वाङ्मनसमयो मार्ग इति यावत्। **तयोः...अन्यतराम्।** यज्ञस्य मनोलक्षणमार्गं मनसा प्रणिहितेन ब्रह्मा संस्करोति । होत्राद्याः त्रयोऽपि वाचैव सम्यक् प्रयुक्तया वाचं संस्कुर्वन्तीत्यर्थः । **स यत्र...अन्यतरा ।** व्यवदतीत्यत्र क्षेपार्थो नञ् । 'नञो नलोपस्तिङि क्षेपे' इति नलोपः। **यत्र** यज्ञे प्रातरनुवाकशस्त्रे **उपाकृते** आरब्धे सति परिधानीयायाः ऋचः प्राक् ब्रह्मा **व्यवदति**— विशब्दो विविधार्थः । नञश्च निन्दितत्वमर्थः । विविधं निन्दितञ्च वदति । मौनं त्यजति चेदित्यर्थः । तदा मनःप्रणिधानस्य नाशेन (अंशे) मनोलक्षणयज्ञवर्तनीसंस्कारकस्य ब्रह्ममनसोऽभावात् एषा वर्तनी नश्यति । होत्रादिवाक्संस्कार्या वाग्रूपा यज्ञवर्तनी परम् आस्ते इत्यर्थः ।

---

आदित्यसमीपगमने वायुरपि सहकारीत्यपि ध्येयम् ।

वाङ्मनसमयो मार्ग इति । अत्र वर्तनीशब्दस्य ईकारान्ततया प्रथमैकवचनान्तरूपत्वे उपरि तयोरित्यस्य मनोवाचोरित्यर्थसंभवेऽपि वर्तन्योरित्यर्थायोगात् अन्यतरामिति स्त्रीलिङ्गपदद्वयनिर्देशो नातीव युक्त इति वर्तनी इति द्विवचनान्तमुचितम् । उपरि उभे एव वर्तनी इति प्रयोगात् । अन्यतरामेव वर्तनीमिति अत्रैव प्रयोगात् शब्दोऽयमीकारान्त एव, न तु इकारान्त इति यदि चिन्त्यते, तर्हि, 'छान्दसो द्विवचनस्य लुक्' इति वक्ष्यमाणरीतिरत्रापि स्यात् । माध्वास्तु

स यथा एकपात् व्रजन्, रथो वैकेन चक्रेण वर्तमानो रिष्यति—एवमस्य यज्ञो रिष्यति; यज्ञं रिष्यन्तं यजमानोऽनु रिष्यति; स इष्ट्वा पापीयान् भवति ॥ ३ ॥ अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्य[प],[व] वदति, उभे एव वर्तनी सँस्कुर्वन्ति; न हीयतेऽन्यतरा ॥

स यथोभयपात् व्रजन्, रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठति—एवमस्य यज्ञः प्रतितिष्ठति; यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रतितिष्ठति; स इष्ट्वा श्रेयान् भवति ॥ ५ ॥

इति चतुर्थाध्याये षोडशः खण्डः

---

तर्हि को दोष इत्यत्राऽऽह—**स यथा.... भवति**। गच्छन् एकपात् पुरुषो वा एकेन चक्रेण प्रवर्तमानो रथो वा यथा **रिष्यति** नश्यति, **एवमस्य** यजमानस्य यज्ञो नश्यति। विगुणो भवतीति यावत्। तस्मिन् नष्टे यजमानोऽपि नष्टफलः पापी च भवतीत्यर्थः। **अथ यत्र.... अन्यतरा**। **न व्यवदतीति** संबन्धः। **उभे एव वर्तनी** इत्यत्र वर्तन्याविति वक्तव्ये, 'सुपां सु लुक्' इति छान्दसो लुक्। शिष्टं स्पष्टम्। **स यथा.... श्रेयान् भवति**। **यज्ञः प्रतितिष्ठति**। सादृगुण्यवान् भवतीत्यर्थः। **यजमानः प्रतितिष्ठति**। लब्धफलो भवतीत्यर्थः। शिष्टं स्पष्टम् ॥ ४-१६.

---

सर्वत्र वर्तनिशब्दमेव इकारान्तं पठन्ति।

यज्ञस्य गन्तृत्वं नाम सर्वाङ्गोपसंहारपर्यन्तं विततत्वम्। संपूर्यमाणत्वमिति यावत्। मनसो वाचश्च वर्तन्योर्मध्ये ब्रह्ममनसः संस्कारो मौनमुक्तम्। ~~अध्ययनलक्षणः~~ होत्रादीनामृग्वेदादिपराणां वाचः संस्कारः कर्मलोपप्रसक्तिवारकं यथावदध्ययनम्। तल्लोपेन तत्तच्छेदसंबन्धिलोपप्रसङ्गे च प्रायश्चित्ताहुतय उच्यन्ते।

चतुर्थे सप्तदशः खण्डः

प्रजापतिर्लोकानभ्यतपत् । तेषां तप्यमानानाँ रसान् प्राबृहत्—अग्निं पृथिव्याः ; वायुमन्तरिक्षात् ; आदित्यं दिवः । ॥ १ ॥

स एतास्तिस्रो देवता अभ्यतपत् । तासां तप्यमानानाँ रसान् प्राबृहत्—अग्नेः ऋचः ; वायोर्यजूँषि ; सामान्यादित्यात् । ॥ २ ॥

स एतां त्रयीं विद्यामभ्यतपत् । तस्यास्तप्यमानाया रसान् प्राबृहत्–भूरिति ऋग्भ्यः, भुवरिति यजुर्भ्यः ; सुव(स्व)रिति सामभ्यः॥

तत् यदृक्तो रिष्येत्, भूः स्वाहेति गार्हपत्ये जुहुयात् । ऋचामेव तद्रसेन ऋचां यज्ञस्य विरिष्टँ(ष्टिं) संदधाति । ॥ ४ ॥

अथ यदि यजुष्टो रिष्येत्, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्, यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टँ(ष्टिं) संदधाति ॥५॥

---

तत्र यज्ञभ्रेषे(भ्रंशे) व्याहृतिहोमः प्रायश्चित्तमिति वक्तुं प्रस्तौति—

**प्रजापतिर्लोकानभ्यतपत् ।** लोकसारजिघृक्षया लोकान् उद्दिश्यातपत् । तप आलोचने । आलोचनरूपं ज्ञानं कृतवानित्यर्थः। **तेषां...। प्राबृहत्** उद्धृतवान्। जग्राहेत्यर्थः। **अग्निं...दिवः।** लोकान् आलोच्य त्रिलोक्याः अग्निवाय्वादित्याः सारभूता इति निश्चिकायेत्यर्थः । एवमुत्तरत्रापि ।

**स....आदित्यात्।** अग्निवाय्वादित्यसारतया त्रयीं निश्चि[त]वानित्यर्थः। **स एतां...सामभ्यः ।** त्रयीसारतया व्याहृतित्रयं निरचिनोदित्यर्थः । शिष्टं स्पष्टम् । **तत्....जुहुयात्। तत्** तस्माद्धेतोः **ऋक्तः** ऋचो निमित्ताद् यदि यज्ञो **रिष्येत्** क्षतं प्राप्नुयादित्यर्थः। तर्हि तत्प्रायश्चित्तार्थं **भूस्स्वाहेति** मन्त्रेण गार्हपत्येऽग्नौ जुहुयादित्यर्थः । **ऋचामेव....संदधाति ।** यत् **ऋचां** ऋक्संबन्धि, **तद् विरिष्टं** तत् यज्ञस्य क्षतं **ऋचां वीर्येणौजसा** ऋचां रसेन [सारभूतेन च] भूरितिव्याहृत्या **संदधाति** समाधत्ते इत्यर्थः ।

अथ यदि सामतो रिष्येत्, सुवः (स्वः) स्वाहेत्याहवनीये जुहुयात्। साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टँ(ष्टं) संदधाति ॥६

तत् यथा लवणेन सुवर्णँ संदध्यात् सुवर्णेन रजतँ रजतेन त्रपु त्रपुणा सीसँ सीसेन लोहं लोहेन दारु दारुचर्मणा ॥ ७ ॥

---

**अथ....संदधाति । अथ....संदधाति ।** पूर्ववदर्थः । ५-६.

**तद् यथा...दारुचर्मणा ।** सुवर्णस्य संधानं नाम कठिनस्य (खरस्य) मृदुतापादनम् । [क्षारद्रव्य] क्षाररसस्य संपर्कपूर्वकतापेन हि सुवर्णस्य परस्परसंधानयोग्यमृदुता भवतीत्यर्थः । शिष्टं स्पष्टम् । **एवं... संदधाति ।** व्याहृतीनां पृथिव्यादिलोकसारभूताग्न्यादिदेवतासार-

---

तत् यथा लवणेनेत्यादि । नन्वत्र लवणेन सुवर्णं संदध्यात् । रजतं सुवर्णेन संदध्यात् । त्रपु रजतेन संदध्यादित्येवं तृतीयान्तानां क्रमेणोपर्यन्वयः शाङ्करादीष्टः । लवणवत् सुवर्णादीनां संधानकरण-द्रव्यत्वनियमाभावात् रजतादेरपि क्षारद्रव्यसंपर्कपूर्वकतापेनैव मृदुत्वस्य संपाद्यत्वात् सुवर्णं सुवर्णेन संदध्याल्लवणेन, एवं रजतं रजतेनेति रीत्याऽर्थवर्णनं संभवति । लोहवत् चर्मापि दारुद्वय-संधायकं चेत्, लोहेन चर्मणा वा दारु इति सकृत् दारुशब्दः प्रयुज्येत । अतः दारुचर्मणेति एकं पदं सत्, दारुणोः वर्षातपादि-कृतजरापरिहाराय वा अन्यार्थं वा तत्र संधेयं यत् द्रव्यम्, तत्परं स्यात् । दारुत्वक् च पाट्यमाना रज्जुतया रज्जुप्रकृतिद्रव्यतया चोपयुज्यत इति ततो दारुबन्धनमिति वाऽस्तु । एवञ्च प्राचीन-योजनास्वारस्यं किम् । भाष्ये संधानं मृदुत्वापादनमित्युक्तम्, लवणस्य तावन्मात्रकरत्वेऽपि सुवर्णेनेत्यादिषु संधानं हि संयोजन-मेव । तेषां मृदुत्वकरत्वाभावात् । अतो भाष्याभिमतोऽर्थश्च क इति चेत्-मूले वीर्येणेति तृतीयया संधानकरणस्य, विरिष्टमित्येकेन पदेन विच्छिन्नस्य चोक्त्या तद्वदत्र तृतीयान्तं करणपरम् । सुवर्णमित्येवमेकं

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टँ(ष्टिं) संदधाति ।

भेषजकृतो ह वा एष यज्ञः, यत्रैवंवित् ब्रह्मा भवति ॥ ८ ॥

एष ह वा उदक्प्रवणो यज्ञः, यत्रैवंवित् ब्रह्मा भवति । एवंविदँ ह वा एषा ब्रह्माणमनु गाथा—

यतो यत आवर्तते तत्तत् गच्छति मानवः ।

---

भूतत्रयीसारत्वात् तद्वीर्यत्वाच्च एषां उक्तानां वीर्येण एवं सुवर्णादिसंधानवदेव यज्ञक्षतं समाहितं भवतीत्यर्थः । भेषज...भवति । यस्मिन् यज्ञे एवंवित् ब्रह्मानामा ऋत्विक् भवति, स यज्ञः कृतभेषजः कृतौषधः, समीचीनेन चिकित्सकेन यथा रोगार्तः पुमान् कृतभेषजो भवति, तथेत्यर्थः।

एष....भवति । उदक्प्रवणः [अर्चिरादिमास] उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थः। एवंविदं...गाथा । एवंविदं ब्रह्मनामानमृत्विजमनुगता एषा वक्ष्यमाणा गाथा भवतीत्यर्थः ।

यतो यतः....मानवः । यत्रयत्र यज्ञस्य क्षतमावर्तते आ

---

पदमेव संधेयपरम् । रजतादिनिकृष्टलोहसंधानाय सुवर्णाद्युत्कृष्टलोहप्रक्षेपे केनचित् कृते यावत् दार्ढ्यम्, तावदत्रेदृशवीर्यकृतसंधाने इति स्तुतये एवमुक्तिः। तथाच लवणेन सुवर्णादि द्रवीकृत्य तेन द्रवीभूतेन रजतादेः संधानवदिति विवक्षितम् । लोहेन दारु दारुचर्मणेत्यस्य च लोहपट्टरज्जुबन्धनयोः समुच्चयेनान्यतरेण वा दारुद्वयसंधानवदित्यर्थो भवितुमर्हति । दारुचर्मेत्येकमेव पदमिति स्यादिति।

उदक्प्रवणः । उदङ्निम्नः दक्षिणोच्छ्रायः । उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थ इति शाङ्करम् । उदक् = ऊर्ध्वलोकः । तत्प्रवणत्वं तद्धेतुत्वमिति माध्वव्याख्या ।

ब्रह्मैवैक ऋत्विक् कुरूनश्वाऽभिरक्षति ॥ ९ ॥
एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति ।

---

समन्तात् व्याप्य वर्तते, आ ईषद्वा वर्तते,—तत् सर्वं **मानवः** मननशीलो ब्रह्मा **गच्छति** समाधत्त इत्यर्थः । **ब्रह्मैवैक.... रक्षति ।** **अश्वा** बडवा आरूढान् योधा(द्धृ)न् यथा रक्षति, एवमेक एव **ब्रह्मा** ऋत्विक् **कुरून्** कर्तॄन् ऋत्विजो रक्षति ।

**एवंविद्ध...रक्षति ।** अत्र ब्रह्मणो वेदनेन यजमाना[दी]नामृत्विजाञ्च रक्षणप्रतिपादनेन उद्गातृप्रभृतीनां वेदनानियमः सूच्यते इति, 'अङ्गेषु यथाश्रयभावः' इत्यधिकरणे [दर्शनाच्चेति] सूत्रितम् ।

---

गाथेत्युक्तत्वात् यत इत्यारभ्य रक्षतीत्यन्तं गाथानुवादः । तत्र मानव इत्यन्तं पूर्वार्धम् । एवञ्च गच्छतीत्यत्र मानवः कर्ता स्वरसलब्धः । मानवपदं मनुष्यपरतयैव प्रसिद्धमपि, ब्रह्माणमनु गाथा इति ब्रह्मविषयकत्वज्ञापनात् तदुचितं व्याख्येयम् । अतो मननशील इति व्याख्याय मानवपदमात्रस्य गच्छतीत्यत्र, ब्रह्मेत्यादेश्चोत्तरार्धगतत्वात् रक्षतीत्यत्रान्वयं कृत्वा व्याख्याति यत्रयत्रेत्यादिना । गाथायां तृतीयपादे प्रतिपदमक्षरद्वयमिति अष्टाक्षरता ।

वेदनानियमः सूच्यत इति । ननु उद्गातृप्रभृतीनां वेदनं तावत्, 'यदेव विद्यया करोति' इत्यादिवशात् वीर्यवत्तरत्वादिहेतुः । ब्रह्मवेदनञ्च प्रायश्चित्ताहुतिमन्त्रविषयकत्वात् प्रायश्चित्तानुष्ठापनेन अङ्गवैकल्यपरिहारद्वारा यज्ञसादृगुण्यमात्रहेतुः । अतश्च ब्रह्मवेदनं क्रतोर्यथावन्निष्पत्तिहेतुभूतं उद्गात्रादिवेदनस्य निष्पन्नक्रत्वाश्रितगुणफलरूपवीर्यवत्तरत्वादिहेतोरनियमापादकं कथमिति चेत्—उक्तम्, 'दर्शनाच्च' (३. ३. ६४) इति सूत्रे व्यासार्यैः, "यजमानसंरक्षणं क्रतुफलाप्रतिबन्धकरणादिभिरिति मन्तव्यम्" इति । अत्र नयमयूखमालि-

तस्मादेवंविदमेव ब्रह्माणं कुर्वीत, नानेवंविदम्, नानेवंविदम् ॥

इति चतुर्थाध्याये सप्तदशः खण्डः

## इति छान्दोग्योपनिषदि चतुर्थोऽध्यायः (चतुर्थः प्रपाठकः)

---

उक्तब्रह्मवेदनस्तुतिं प्रयोजनेनोपसंहरति **तस्मात्...नानेवंविदम्** ।
द्विरुक्तिरध्याय(विद्या)समाप्त्यर्था ॥ ४-१७.

## इति छान्दोग्योपनिषत्प्रकाशिकायां चतुर्थोऽध्यायः

---

कादिकमपि द्रष्टव्यम्। इदं तु बोध्यम्—अस्य, 'एष ह वै' इत्यादिखण्डद्वयस्य केवलब्रह्मकर्तव्यकर्मविशेषमात्रपरत्वे उपनिषदि नातीव संगतिः। द्वितीयाध्यायान्तिमखण्डे केवलकर्मोक्तिश्च तृतीयाध्यायवक्ष्यमाणमधुविद्योपास्यवसुरुद्रादित्यविषयत्वात् कथञ्चित् सङ्गता। 'एष ह वै यज्ञो योऽयं पवते' इत्युपक्रमवाक्यस्य च केवलस्तुतिपरत्वापेक्षया वायुत्वभावनापरत्वं युक्तम्। एवं यज्ञशब्दस्य, 'यन् जगत् पुनाति' इति निर्वचनमपि भावनार्थमिति युक्तम्। पूर्वमुपकोसलविद्यायां, 'इमं मानवमावर्तं नावर्तन्ते इत्युक्तस्य, इह, 'यतो यत आवर्तते तत्तत् गच्छति मानवः' इत्यस्य च कश्चित् संबन्धः प्रतीयते। यतोयत इति पञ्चमी, स्वरसात्। आवृत्तिपदार्थोऽपि मुख्यो ग्राह्यः। 'उदक्प्रवणशब्दश्चार्चिरादिरूपोत्तरदिग्वर्तिदेवयानविषयको लक्ष्यते। तस्मात् एवं वक्तव्यम्–मनोवाग्रूपवर्तनीद्वयं तद्वैकल्यप्रयुक्तगमनवैकल्यं व्याहृतीनां लोकत्रयरसभूतदेवत्रयरसात्मकवेदत्रयरसरूपत्वं तत्करणकहोमानां यज्ञविरिष्टसंधानात्मत्वञ्चोपवर्ण्य अपेक्षितफलहेतुत्वं यज्ञस्येदृशस्येति सूचयित्वा, 'एष ह वा उदक्प्रवणो यज्ञः' इत्यादिना कश्चिद्विशेष उच्यते—यत्र हि ब्रह्मा यथावत् यज्ञसमापनमात्रेऽनुपरम्य यज्ञस्य पवनत्वं यज्ञशब्दनिर्वचनमुपर्युक्तप्रकारांश्च विदन् उद्गात्रादिकार्यवेदनान्तरतुल्येदृशवेदनविशेषशाली भवति, स यज्ञो न धूमादिमार्गमात्रप्रतिपत्तिहेतुः, किन्तु उदक्प्रवणः

## अथ पञ्चमाऽध्यायः । प्रथमः खण्डः ।

यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद, ज्येष्ठश्च ह वै श्रेष्ठश्च भवति । प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥

---

प्राणविद्या प्रस्तूयते यो ह.... भवति । ज्येष्ठत्वश्रेष्ठत्वगुणकं प्राणं यो वेद, स तत्क्रतुन्यायेन स्वयमपि ज्येष्ठश्च श्रेष्ठश्च भवतीत्यर्थः । ज्येष्ठत्वं(त्वञ्च) वृद्धत्वम्, 'वृद्धस्य च' इति वृद्धशब्दस्य ज्यादेशविधानात्। श्रेष्ठत्वं प्रशस्ततमत्वम्; 'प्रशस्यस्य श्रः' इति प्रशस्यशब्दस्य श्रादेश-

---

उत्तरगतिरूप[illegible]वयानप्रापकविद्यापेक्षितक्रतुवी[illegible]पावनत्वादि-हेतुः । तदुक्तं गाथायाम्—लोके मानवः ऐश्वर्यं [illegible]नालोकात्मकं यज्ञफलमनु[illegible]य मानव एव भविष्यन् ततस्तत आवर्तमानोऽस्ति । एकस्तु ऋत्विक् ब्रह्मा उद्गात्रादिनिरपेक्ष एव स्ववेदनविशेषेण तं कर्तारं मानवमन्यांश्च कर्तॄन् ऋत्विजो यज्ञञ्च रक्षति । अनावृत्तिकामि-यजमानय[illegible]पेक्षितसर्ववेदनविशेषप्रतिनिधिभूतेदृशवेदनवत्त्वादिति। तस्मात् सर्वर्त्विक्संपाद्यताव[illegible] ब्रह्मवेदनत एव संभवात् एवंविदमेव ब्रह्माणं कुर्वीत अमुमुक्षुरिव मुमुक्षुरपि यज-मानः। तत्र यज्ञरक्षणम् अङ्गवैकल्यपरिहरण[illegible] । यजमानरक्षणं तदपेक्षित-क्रतुवीर्यवत्तरत्वाद्यधिकफलसंपादनम् । ऋत्विग्रक्षणम् विद्यावैकल्य-प्रयुक्तर्त्विग्वरणभङ्गवारणम् । अविद्वांसोऽपि हि ऋत्विजो वरीतुं पार्यन्ते, ब्रह्मकर्तृकवेदनत एवार्थसिद्धेरिति । एवं प्रघट्टकार्थवर्णने, 'दर्शनाच्च' इतिसूत्रश्रीभाष्यमपि उद्गात्रादिवेदनानियमवेदकं सूपपन्नं लक्ष्यत इति ।

एतावत् यथाकथञ्चित् वायु-तद्विशेषप्राणसंबन्धिन्यो विद्या उक्ताः । अथ साक्षात् प्राणविद्यैवोच्यते । इयं किञ्चिद्विस्तरेण बृहदारण्यके (८-१.) । वृद्धेति । ज्येष्ठशब्दः प्रशस्यशब्दस्य वृद्धशब्दस्य च ज्यादेशात् भवति । श्रेष्ठशब्दस्तु प्रशस्यशब्दस्यैव । अतः श्रेष्ठपदा-

योह वै वसिष्ठं वेद, वसिष्ठो ह स्वानां भवति। वाग् वाव वसिष्ठः॥२

विधानात् । एवं फलप्रदर्शनेन पुरुषमभिमुखीकृत्याऽऽह **प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च** । वावशब्दोऽवधारणार्थः । गर्भस्थपुरुषे प्राणव्यापार-प्रवृत्त्यनन्तरभावित्वादिन्द्रियप्रवृत्तेः, प्राणस्येन्द्रियापेक्षया ज्यैष्ठ्यम् । इन्द्रियव्यापाराणां सर्वथैतदधीनत्वात् श्रैष्ठ्यञ्च ।

**यो....भवति । स्वानां** ज्ञातीनां मध्ये वसिष्ठो भवतीत्यर्थः । को वसिष्ठ इत्यत्राऽऽह **वाग्वाव वसिष्ठः** । अतिशयेन वसुमान् वसिष्ठः । वाग्मी हि लोकेऽतिशयेन वसुमान् भवति । अतश्च वसुमत्ता-संपादकसद्व्यवहारजनकत्वं वाचो वसिष्ठत्वमिति भावः ।

पौनरुक्त्याय ज्येष्ठशब्दस्य वृद्धतमत्वमर्थ इति भावः। ननु प्राणो वायुरूपमहाभूतविकारः पश्चाद्भवः; वागादीनि इन्द्रियाणि तु आहङ्कारिकत्वात् प्राचीनानि । तत् कथं प्राणो ज्येष्ठ इत्यत्राह गर्भेति । अनन्तरेति । आदित एव प्राणनव्यापारात् गर्भो वर्धते । चक्षुरादिव्यापारस्तु चक्षुर्गोलकादिनिष्पत्त्यनन्तरमिति व्यापार-विशिष्टेन्द्रियापेक्षया ज्यैष्ठ्यमिति । वसिष्ठमिति पुंस्त्वमविवक्षितम्। 'वसिष्ठां वेद' इति बृहदारण्यके। वसुशब्दात् 'विन्मतोर्लुक्' इति लुकि रूपम्। वसुमत्तमत्वं वसिष्ठत्वम्। स्वानामिति । 'अपि च येषां बुभूषति' इत्यधिकं फलमन्यत्र। स्वपदं, 'स्वमज्ञातिधनाख्यायाम्' इति ज्ञातिवाचित्वादसर्वनाम। इत्यन्वय इत्यन्तेन समित्युपसर्गान्वयो दर्शितः। आयतनमिति मनआयत्तत्वात् सर्वेन्द्रियकार्य-स्मृति-स्वप्नोहाद्यशेषात्मगुणानाम्। प्राणनव्यापारस्तु न मनोधीनः, सुषुप्ता-वपि भावात्। तदत्र, 'वागादयो वसिष्ठत्वादिविशिष्टाः ; तद्गतवसिष्ठ-त्वादिहेतुताप्रयुक्तश्रैष्ठ्यवान् उक्तविधया ज्येष्ठश्च प्राण इत्युपा-सीतेति पिण्डितार्थः।

यो ह वै प्रतिष्ठां वेद, प्रति ह तिष्ठत्यस्मिँश्च लोकेऽमुष्मिँश्च।
चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥

यो ह वै संपदं वेद, सँ हास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च।
श्रोत्रं वाव संपत् ॥ ४ ॥

यो ह वा आयतनं वेद, आयतनँ ह स्वानां भवति। मनो ह वा
आयतनम् ॥ ५ ॥

अथ ह प्राणा अहँश्रेयसि व्यूदिरे, 'अहँ श्रेयानस्मि' इति। ते
ह प्राणाः प्रजापतिं पितरमेत्योचुः, 'भगवन्! को नः श्रेष्ठः' इति ॥६॥

---

**यो...अमुष्मिंश्च**। हशब्दः प्रसिद्धौ। अत्र चामुत्र च **प्रतितिष्ठति** भवतीत्यर्थः। का तर्हि प्रतिष्ठेत्यत्राह **चक्षुर्वाव प्रतिष्ठा**। 'चक्षुषा हि समे दुर्गे च प्रतितिष्ठति' इति **बृहदारण्यके** समानप्रकरणे श्रवणात् प्रतिष्ठासंपादक-समविषयभूतल-प्रदर्शकत्वमेव चक्षुषः प्रतिष्ठात्वम्।

**यो...मानुषाश्च**। **अस्मै** उपासकाय कामाः संपद्यन्त इत्य[र्था]न्वयः। का तर्हि संपदित्यत्राह **श्रोत्रं वाव संपत्**। 'श्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः' इति **बृहदारण्यके** समानप्रकरणे श्रवणात् संपद्धेतुभूतवेदशास्त्रतदर्थश्रवणादिसंपादकत्वमेव श्रोत्रस्य संपत्त्वम्।

**यो....आयतनम्**। स्रक्चन्दनादिविषयज्ञानरूपभोगायतनत्वमेव मनस आयतनत्वम् ॥

मुख्यप्राणस्य श्रैष्ठ्यसंपादनायाऽऽख्यायिकामाह **अथ ह.... अस्मीति**। अथशब्द आख्यायिकोपक्रमे(मार्थो)। **अहंश्रेयसि** स्वश्रेयसि

---

अहंश्रेयसि। अहमित्यव्ययं प्रत्यगात्मवाचि। श्रेयः=उत्कर्षः। स्वस्योत्कर्षे इत्यर्थः। 'अहंश्रेयसे' इति बृहदारण्यकानुसारात् निमित्ते इति। स्वारस्यानुरोधात् विषये इति। 'अत्र विवादः—पितृसमीप-

**तान् होवाच, 'यस्मिन् व उत्क्रान्ते [इदं] शरीरं पापिष्ठतरमिव दृश्येत, स वः श्रेष्ठः' इति ॥ ७ ॥ सा ह वागुच्चक्राम । सा संवत्सरं प्रोष्य पर्येत्योवाच, 'कथमशकत ऋते मज्जीवितुम्' इति । यथा[ऽ]-कला अवदन्तः, प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसा—एवम् इति । प्रविवेश ह वाक् ॥ ८ ॥**

---

निमित्ते विषये वा व्यूदिरे अहं श्रेयानस्मि, अहं श्रेयानस्मीति विवादं चक्रुरित्यर्थः । **ते....श्रेष्ठ इति** । स्पष्टोऽर्थः । **तान्...वः श्रेष्ठ इति** । युष्माकं मध्ये यस्मिन् उत्क्रान्ते शरीरं अतिशयेन पापिष्ठं अतिहेयमिव दृश्येत, स वः श्रेष्ठ इत्युवाचेत्यर्थः ।

**सा ह वागुच्चक्राम** । **सा** प्रसिद्धा वाक् स्वश्रेष्ठ्यपरीक्षणाय शरीरादुत्क्रान्तवतीत्यर्थः । **सा संवत्सरं...जीवितुमिति** । **सा** वाक् एकं संवत्सरं **प्रोष्य** प्रवासं कृत्वा पुनरागत्य **मदृते** मां विना जीवितुं यूयं **कथमशकत** कथं शक्ता इति इतरान् प्राणान् उक्तवती । इतरे प्राणाः प्रत्यूचुः **यथा कलाः....एवमिति** । यथा **कलाः** मूकाः वागिन्द्रियव्यापाररहिता अपि इतरैः प्राणैः तत्कार्यं कुर्वन्तो जीवन्ति, एवं वयमप्यजीविष्मेति प्रत्यूचुरित्यर्थः । **प्रविवेश ह वाक्** ! एवमुक्त्वा वाक् स्वस्य श्रैष्ठ्यं नास्तीति निश्चित्य देहं प्रविष्टवतीत्यर्थः ।

---

**गमनोत्क्रमण प्रवास प्रतिवचनादि सर्वं वागाद्यधिष्ठातृदेवताकर्तृक-मिति वक्ष्यते । सेति । मुख्यप्राणव्यापारः पूर्वम् । ततो मनसः, ततो ज्ञानेन्द्रियाणाम्, तत एव कर्मेन्द्रियस्य । एवं सति वाक् स्त्री धाष्ट्र्यात् सर्वप्रथममुच्चक्रामेति विशेषद्योतनाय अत्र परं सेत्य-धिकमुक्तम् । वाचो वरं चक्षुः ज्ञानेन्द्रियत्वात् । संनिकृष्टवर्तमान-मात्रग्राहिणस्ततो वरं श्रोत्रमतीतानागतव्यवहितादिपरवेदादिग्रन्थ-**

चक्षुर्होच्चक्राम । तत् संवत्सरं प्रोष्य पर्यैत्योवाच, 'कथमशकत ऋते मज्जीवितुम्' इति । यथा अन्धा अपश्यन्तः, प्राणन्तः प्राणेन, वदन्तो वाचा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसा—एवमिति । प्रविवेश ह चक्षुः ॥ ९ ॥

श्रोत्रँ होच्चक्राम । तत् संवत्सरं प्रोष्य पर्यैत्योवाच, 'कथमशकत ऋते मज्जीवितुम्' इति । यथा बधिरा अशृण्वन्तः, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तः चक्षुषा, ध्यायन्तो मनसा—एवमिति । प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम । तत् संवत्सरं प्रोष्य पर्यैत्योवाच, 'कथमशकत ऋते मज्जीवितुम्' इति । यथा बाला अमनसः, प्राणन्तः प्राणेन, वदन्तो वाचा, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण—एवम् इति । प्रविवेश ह मनः ॥ ११ ॥

---

चक्षुर्होच्चक्राम । चक्षुरुत्क्रान्तम् । एवमुत्तरत्रापि द्रष्टव्यम् ।
अमनसः अप्रौढमनसः ।

---

ग्राहि । ततो वरं मनः सर्वग्राहि । सर्वकरणप्रवर्तकत्वात् प्राणो वरिष्ठः । प्राणादिपञ्चकमात्रकथनं प्राय उपनिषत्सु प्राधान्यादिति केनादौ दर्शितमेव । बृहदारण्यके तु प्रजननेन्द्रियमपि विवदमानतया गृहीतम् । परीक्षार्थमेकस्मिन् मनुष्यशरीरे वाग्देवता वागिन्द्रियमनधिष्ठायापगतेत्यर्थः । ध्यायन्त इति । कलाः = अव्यक्तवाचः । ध्यानं व्यवहितविप्रकृष्टस्मरणं दूरभाविष्यदादिचिन्तनं यथा-बृहदारण्यकं वैदुष्यरूपम् । अमनसः =अप्रौढमनसः । बालानामपि सामान्यतः समनस्कत्वात् । सर्वत्र चोत्क्रमणं न सर्वथा संबन्धविरहरूपमुच्यते ; किन्तु विशेषकार्यकरणे औदासीन्यमेव । तत्र मनसो विशेषकार्यं पशुबालादिव्यावृत्तमननविशेषरूपम् । प्राणस्य विशेषकार्यञ्च पतनप्रतिबन्धकधारणपूरणादि । यथोक्तं प्रश्ने,

अथ ह प्राण उच्चिक्रमिष(ष्य)न्, स यथा सुहयः पड्वीशशङ्कून् संखिदेत्, एवमितरान् प्राणान् समखिदत्। तँ हाभिसमेत्योचुः, 'भगवन् एधि। त्वं नः श्रेष्ठोऽसि, मोत्क्रमीः' इति ॥ १२ ॥

अथ हैनं वागुवाच, 'यदहं वसिष्ठा(ष्ठो)ऽस्मि, त्वं तत् वसिष्ठोऽसि'

---

**अथ ह प्राण....समखिदन्।** सः मुख्यः प्राण **उच्चिक्रमिषन्** उत्क्रमितुमिच्छन्, यथा शोभनोऽश्वः परीक्षार्थमश्वारूढेन ताडितः **पड्वीशशङ्कून्** पादबन्धनकीलकान् **संखिदेत्** उत्पाटयेत्, एवमितरान् प्राणान् स्वस्वस्थानेभ्य उत्पाटितवानित्यर्थः। **तं ह....मोत्क्रमीरिति।** हे **भगवन्** पूजार्ह! **त्वमेधि।** अस्तेर्लोटि मध्यमपुरुषैकवचनम्। भवेत्यर्थः। स्वामीति शेषः। **नः** अस्माकं मध्ये त्वमेव श्रेष्ठोऽसि। त्वमुत्क्रमणं मा कार्षीरिति इतरे प्राणाः तमागत्योचुरित्यर्थः।

अथेतरे प्राणाः, विशः करानिव राज्ञे, मुख्यप्राणाय स्वस्वगुणान् अर्पितवन्त इत्याह **अथ हैनं...। यत्** येन वाग्मिनो वसुमत्तासंपादकत्व-

---

'अहमेवैतत् पञ्चधाऽऽत्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामि' इति। एवं विशेषकार्यमात्रविषयौदासीन्यमात्रस्योत्क्रमणरूपत्वादेव कौषीतक्यां प्राणादिसर्वोत्क्रमणेऽपि वागादेः पृथक्पृथक् प्रविष्टस्य किञ्चित्कार्यकरत्वप्रदर्शनम्, 'शिश्य एव' इति शरीरसञ्चरणाद्यक्षमत्ववर्णनञ्चोपपद्यते। पड्वीशेति। पड्विः = पादसंहतिः। तस्या ईशाः = नियामका इत्यानन्दगिरिः। पड्वीशपदं नपुंसकमृग्वेदे १-१६२-१४. (पादबन्धनसाधनं वा बन्धनक्रिया वा तदर्थं इति)। 'पश्चाच्चरणशङ्कौ तु पड्वीशो घुटिकोऽपि च' इति गजप्रकरणे वैजयन्ती (भू. क्ष.)। अनेन दृष्टान्तेन शङ्कवो हयमिव, प्राणमुत्क्रामन्तमाक्रष्टुं वागादयः प्रायतन्त स्वनियम्यत्वं तस्येत्यभिमानेन। स तु सैन्धवसुहयसमानत्वात् तानपि स्वेन सह निनायेति ज्ञाप्यते।

छान्दोग्यवाजसनेयकयोः, कौषीतकिनामुपनिषदि च दशमे(?) अध्याये, 'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद, ज्येष्ठश्च ह वै श्रेष्ठश्च स्वानां भवति' इत्यारभ्य प्राणविद्या पठ्यते। तत्र सर्वत्र प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यगुणकत्वं वाक्चक्षुश्श्रोत्रमनसां वसुमत्तासंपादकत्व-समविषमभूतलादिप्रदर्शकत्व - संपद्धेतुभूतवेदशास्त्रतदर्थश्रवणादिसंपादकत्व-स्रक्चन्दनादिविषयज्ञानरूपभोगायतनत्वलक्षणवसिष्ठत्वप्रतिष्ठात्वसंपत्त्वायतनत्वरूपगुणवत्त्वम् वागादीनाञ्च श्रैष्ठ्यविषयपरस्परविवादेन ब्रह्मसमीपसर्पणम्, 'यस्मिन् व उत्क्रान्ते शरीरमनवस्थितिः स वः श्रेष्ठः' इति ब्रह्मवचनम्, तत्परीचिक्षिषया वागादीनामेकैकस्य शरीरादुत्क्रम्य पर्यटनम्, तस्मिन् काले शरीरस्येन्द्रियाणाञ्च यथापूर्वमवस्थानम्, प्राणस्योत्क्रमणप्रवृत्तौ तेषां विशरणम्, ततो भीतानां वागादीनां, 'मोत्क्रमी, त्वं नः श्रेष्ठः' इति मुख्यप्राणं प्रति प्रार्थनमित्येतत् सर्वं क्रमेण वर्णितम्।

कौषीतकिशाखायां तु छान्दोग्यवाजसनेयकवत्, 'यदहं वसिष्ठाऽस्मि त्वं तत् वसिष्ठोऽसि' इत्यनेन प्रकारेण प्राणे वागादिगतवसिष्ठत्वादिसमर्पणं नोक्तम्। अतो वागादिगतवसिष्ठत्वादेः प्राणाधीनत्वाप्रतीत्या वागादीनां स्वातन्त्र्यप्रतीतेः छान्दोग्यवाजसनेयकाम्नातप्राणविद्यातः कौषीतक्याम्नातप्राणविद्यायाः भेदप्रतिभोद्गमः। तथा तस्यामेवोपनिषदि चतुर्थे(?)ऽध्याये, 'अथातो निःश्रेयसादानम्, सर्वा ह वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुः। तत् दारुभूतं शिश्ये। अथैनत्(न)वाक् प्रविवेश, तद्वाचा वदत् शिश्य एव। अथैनच्चक्षुः प्रविवेश, तत् वाचा(ऽ)वदत् चक्षुषा पश्यत् शिश्य एव।

अथैनच्छ्रोत्रं प्रविवेश । तद्वाचा वदत् चक्षुषा पश्यत् श्रोत्रेण शृण्वत् शिश्य एव । अथैनत्(नं)मनः प्रविवेश । तत् वाचा वदत् चक्षुषा पश्यत् श्रोत्रेण शृण्वत् मनसा ध्यायत् शिश्य एव । अथैनत् प्राणः प्रविवेश । तत् तत एव समुत्तस्थौ । तत् देवाः प्राणे निःश्रेयसं विदित्वा (विजित्य) प्राणमेव प्रज्ञात्मानमभिसंभूय(संभवन् )' इति प्राणराहित्यदशायामपि वागादीनां स्वकार्यकरत्वप्रदर्शनेन छान्दोग्यैक्याप्रतीतेः इति पूर्वपक्षं कृत्वा, बहुसारूप्यप्रतीतौ किञ्चिद्वैरूप्यस्य प्रत्यभिज्ञाविरोधित्वाभावात् विद्यैक्यमिति, 'सर्वाभेदादन्यत्रेमे' इति सूत्रेण सिद्धान्तितम् । **सर्वाभेदात्** । प्रतिज्ञातप्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य तिसृष्वपि शाखास्वभेदात् शाखान्तरविद्यायां शाखान्तरविद्यागतगुणोपसंहारः कर्तव्य इति सूत्रार्थः ॥ प्रकृतमनुसरामः । ५-१

---

**किञ्चिद्वैरूप्यस्येत्यादि** । एकैकोत्क्रमणमुक्तमन्यत्र ; कौषीतक्यां तु युगपत् सर्वोत्क्रमणम् । अन्यत्रैकैकमात्रापक्रमणमुखेन प्राणश्रैष्ठ्यमुपपादितम् ; कौषीतक्यां तु एकैकप्रवेशेन तत् इति उपपादनभेदेऽपि उपास्यं श्रैष्ठ्यमविशिष्टम् । न च—प्राणोत्क्रमणानन्तरमपि वागादीनां स्वकार्यकरत्वस्य तत्र प्रदर्शनात् प्राणानधीनव्यापारानुसंधानं वागादिषु कर्तव्यं प्रतीयते ; अत एव वागादिगतवसिष्ठत्वादेः प्राणेऽनर्पणं तत्र । अन्यत्र तु वागादौ प्राणाधीनव्यापारानुसंधानमिति भेद इति वाच्यम्—'शिश्य एव' इति प्राणावष्टम्भवैकल्येन वागादेरपि देहस्येव संपूर्णकार्याक्षमत्वज्ञापनात् । 'तद् देवाः प्राणे निःश्रेयसम्' इति स्वव्यापारे प्राणापेक्षामूलकस्य प्राणश्रैष्ठ्यस्य प्रतिपादनाच्च सर्वोऽपि वागादिव्यापारः यथार्हं प्राणापेक्ष एव । कौषीतक्यामेव चाध्यायान्तरे प्राणाय वागादिभिर्बलिहरणं भणितमेवेति ।

पञ्चमे द्वितीयः खण्डः

स होवाच, 'किं मेऽन्नं भविष्यति' इति। 'यत् किञ्चिदिदमा श्वभ्य आ शकुनिभ्यः' इति होचुः।

---

स...भविष्यतीति। वागादीन् [प्रति], 'किं मे अन्नं भविष्यति' इति मुख्यप्राणः पप्रच्छेत्यर्थः। यत्....होचुः। श्वशकुनिपर्यन्तसर्व-प्राणिनां यदन्नजातम्, तत् तवान्नजातमिति वागादयः प्रत्यूचुः।

---

किं मेऽन्नम् इति। किमिति मुख्यः प्राणो वागादीन्, किं मेऽन्नम् पप्रच्छेति चेत्—अत्र शाङ्करम्—'सर्वस्मिन्नन्ने प्राणान्नत्वचिन्तनं आचमनीयास्वप्सु प्राणवासस्त्वानुसंधानञ्च कार्यमिति वक्तव्यम्। तदेतत् प्रश्नप्रतिवचनमुखेन भङ्ग्या वदति' इति। इदमपि बोध्यम्—यदा, 'मोत्क्रमीः' इत्यर्थितं सर्वैः, तदा प्राण आह, 'बलिं हरत मे' इति। तदुक्तं बृहदारण्यके, 'अथ ते स्वगतं वसिष्ठत्वादिकमर्पितवन्तः'। अत एव, 'मद्गतं वसिष्ठत्वं त्वदधीनम्' इत्यनुक्त्वा, 'मदीयं वसिष्ठत्वं तवैव' इत्युक्तम्। तावता प्राणो न ततर्प। अशनाच्छादने हि मुख्य-मुपहरणीये प्रभवे भृत्यैः। अत ईदृशं बलिमपेक्षत इति। अन्यच्च—व्यवहारादि कार्यं तावत् वागादिकरणकमेव, परन्तु प्राणाधीनम्। इतरानधीनप्राणव्यापारस्तावदस्ति अशनपानादिः। तदत्र प्राणोऽजि-ज्ञासत। 'किं किञ्चिदशनपानविषयेऽपि स्वकार्यत्वं वागादयो मन्यन्ते' इति। तत्र आ श्वकीटादिभ्यः सर्वमन्नं तवैवेति तैः प्रत्युक्त-मिति। अत्र प्राणः स्वयमशनपाने निर्वर्त्य बहिर्वायुसखाग्नितुल्येन स्वसखेनोदर्येण अन्तः सर्वं परिपाच्य तद्रसपरिणामं नाडीद्वारा तत्तदिन्द्रियस्थानं नीत्वा तत्तत् परिपोष्य वागादेर्वसिष्ठत्वादि निर्वहतीति चेह ज्ञाप्यते। किञ्च वागादिव्यापाराणां विशेषतोऽ-भिव्यक्तिः व्यक्तवाङ्मनुष्यादिमात्रे। प्राणकार्यमशनादि तु पशु-पक्ष्यादिव्याप्तम्। अतोऽस्मान् विनाऽप्यन्नं त्वं बहु भुङ्क्ष्व इति चेह वागादिभिर्विवक्षितम्।

तद् वा एतदनस्यान्नम् । अनो ह वै नाम प्रत्यक्षम् ।

---

श्रुतिः स्वेन रूपेणाह **तद्वा एतदनस्यान्नम्** । यत् किञ्च-लोके प्राणिभिरद्यते, तदेतत् **अनस्य** प्राणस्यान्नम् । प्राणेनैव तदद्यत इत्यर्थः । **अनो ह वै नाम प्रत्यक्षम्** । अदनादिविविधचेष्टायुक्तत्वात् प्राणस्य अन इति प्रत्यक्षं नाम । देवानां परोक्षप्रियत्वात् प्रत्यक्षं अन इति नाम परित्यज्य प्राण इति परोक्षेण नाम्ना व्यवहारः। ततश्च अदन-चेष्टाया अपि तदीयत्वात् सर्वप्राणिजातेनाद्यमानमन्नं सर्वं तेनैवाद्यत इति प्राणस्य सर्वमन्नमित्यर्थः । यद्वा अन इत्यस्य नकारान्तरयुक्तस्यान्न-त्वेन अन्नस्यानसंबन्धित्वात् अन इत्यस्य प्राणनामत्वस्य प्रत्यक्षत्वादन्नं तत्संबन्धीत्यर्थः । अत्र, प्राणविद्यानिष्ठेन सर्वप्राण्यन्नादनस्य कर्तुमशक्य-त्वात् नास्य सर्वप्राण्यन्नादनकर्तव्यत्वमर्थः । अपितु सर्वप्राणिजातान्ने प्राणान्नत्वचिन्तनं कर्तव्यमित्यर्थः ।

---

**स्वेन रूपेणेति । तदित्यादिकं न वागाद्युक्तानुवादरूपम् ; किंतु श्रुतेः स्ववाक्यमिति भावः । सर्वप्राण्यन्नादनस्येति । अत्र सर्वप्राण्यन्न-प्रस्तावात् तदधिकृत्य किञ्चित् विधेयमिति सिद्धम् । तत् तावत् न अदनम् ; मनुष्येणेतरसर्वान्नादनासंभवात् । संभवदन्नादनविधाने च सर्वप्राण्यन्नस्य गृहीतस्य त्यागादसंगतिः । अतस्तददनस्य कर्तुम-शक्यतया प्रवृत्त्यप्रसक्त्या तत्र विधेरनुज्ञाया वा अयोगात् सर्वप्राण्यन्न-विषयकश्चिन्तनविशेष एव विधेय इति । अत्र शङ्कितुरभिमतार्थ रीतिस्तु-प्राणविद्यानिष्ठस्य सर्वान्नादनविधानार्थमिदं वाक्यं प्रवृत्तम् । तत्र स होवाचेत्यर्थवादपूर्वकं तद्वा एतदनस्यान्नमिति वाक्येनादन-कर्तव्यत्वं विधीयते । अनस्य = प्रकृतप्राणविद्यासंबन्धिप्राणविशेषस्य एतत् सर्वमन्नमिति । इयं न युज्यते ; उक्तयुक्त्या कर्तुमशक्यत्वात् ।**

न ह वा एवंविदि किञ्चनानन्नं भवतीति ॥ १ ॥

स हावाच, 'किं मे वासो भविष्यति' इति। 'आप' इति होचुः। तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति। लम्भुको ह वासो भवति, अनग्नो भवति ॥ २ ॥

---

सर्वप्राणिजातान्ने प्राणान्नत्वचिन्तनं स्तौति न....भवतीति। प्राणविद्यानिष्ठस्याभक्ष्यभक्षणदोषो नास्तीत्यर्थः।

स...होचुः। किं मे वस्त्रं भविष्यतीति मुख्यप्राणेन पृष्टा इतरे प्राणाः, 'आपस्ते वस्त्रं भविष्यन्ति' इत्यूचुः। 'आपो वासस्त्वेन चिन्तनीयाः' इति [1]होचुः (?) इत्यर्थः। तस्मात्...भवति। तस्मात् अपां वासस्त्वादेव एतत् एतस्मिन्नपि काले भोक्ष्यमाणाः भोजनात् प्राक् पश्चाच्च आचमनीयाभिरद्भिर्वासोभिः परिहितं प्राणमनग्नं (परिहितत्वादनग्नत्वचिन्तनं) कुर्वन्ति आचमनीयास्वप्सु वासस्त्वचिन्तनेन, वासोभूताभिरद्भिः प्राणस्य परिहितत्वादनग्नत्वचिन्तनेन च स्वयमपि वासो लम्भुको भवति वासो

---

अन्नशब्दस्य तत्तत्प्राणिप्राणपरस्य प्राणवित्प्राणमात्रसंकोचे प्रमाणाभावात्। एवंविदीत्युपरितनानुवादबलेन चिन्तनविधिरवगमाच्चेति। दोषो नास्तीत्यर्थ इति। 'न ह वा अस्यानन्नं जग्धं भवति, य एवमेतदनस्यान्नं वेद' इति वाजसनेयकानुसारादेवमर्थ इति भावः। अन्यथा अस्य वाक्यस्य, 'श्वशकुनिपर्यन्तसर्वप्राण्यन्नविदि अस्मिन् अनन्नं न किञ्चित्। एतद्वेदनविषयभूतान्नव्यतिरिक्तमन्नं न किञ्चिल्लोके, इत्यर्थवर्णनसंभवात् श्वशकुनिपदतः सर्वप्राण्युपलक्षणं कार्यमित्येतदर्थतया वाक्यसार्थक्यादिति ॥ तर्हि दोषाभावे यथेष्टं भक्षयेदिति न। एतत्तात्पर्यस्योपरि विवेचयिष्यमाणत्वात्।

अद्भिः परिदधतीत्येतत् आचामन्तीति विवृतं वाजसनेयके।

भाष्ये,[1] 'चिन्तनीया इति यावत्' इति पाठः स्यात्। पुरस्तादुपरिष्टाच्च

तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच, 'यद्यप्येनच्छुष्काय स्थाणवे ब्रूयात्, जायेरन्नेवास्मिन् शाखाः प्ररोहेयुः पलाशानि' इति ॥ ३ ॥

अथ यदि महज्जिगमिषेत् अमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य, 'ज्येष्ठाय श्रेष्ठाय

---

लब्धा भवति, अनग्नश्च भवति तत्क्रतुन्यायेनेति भावः ।

**तद्ध....उवाच** । व्याघ्रप(ा)त्पुत्राय नाम्ना गोश्रुतये जबालापुत्रः सत्यकामनामा इदं प्राणदर्शनमुक्त्वाऽन्यदप्युवाचेत्यर्थः । किं तदित्यत्राह **यदि...पलाशानीति** । **एनत्** प्राणदर्शनं [प्राणविद्यारूपं] शुष्काय वृक्षायापि यदि ब्रूयात । अस्य [वृक्षस्य] शाखा अप्यु(भ्यु)त्पद्येरन् पत्राणि च प्ररोहेयुरित्यर्थः ।

मन्थाख्यं कर्मारभ्यते **अथ....जिगमिषेत्** । महत्त्वं ज्यैष्ठ्यादि-लक्षणं यदि प्राप्तुमिच्छेदित्यर्थः । **अमावास्यायां...अवनयेत्** । उक्तकाले **सर्वौषधस्य** ग्राम्यारण्यौषधा(धि)नां **मन्थं** पिष्टमौदुम्बरे कंसाकारे चमसाकारे वा पात्रे दधिमधुनोः प्रक्षिप्योपमथ्य अग्रतः

---

धारणमन्तरीयोत्तरीयद्वयधारणरूपम् । तदुच्यते लम्भुक इति वाक्यद्वयेन । तत्क्रतुन्यायेनेति । मूले औचित्यात्, 'य एवं वेद' इति पूरणीयमिति भावः । अयमर्थः शाङ्करानुसारात् । अन्यथा हि, 'अधस्तादुक्तः अनः = प्राणः अद्भिः परिधानात् वासो लब्ध्वा अनग्नो भवति' इत्येवार्थः स्यात् । 'एतमेव तदनमनग्नं कुरुते' इति श्रुत्यन्तरात् । व्याघ्रपदिति । वैयाघ्रपद्यायेति ह्रस्वश्रवणात् अयं पच्छब्दः, न तु पाद-शब्दः । यद्यप्येनदित्यत्र अपिशब्दः पृथक्कृत्य स्थाणवे इत्यत्र संगमनीयः ।

उपदिष्टा प्राणविद्या । अथ प्रसङ्गात् महत्त्वफलकं उक्तप्राणादि-पञ्चकविषयहोमादिकर्मोच्यते अथ यदीति । इदं वाजसनेयके

स्वाहा' इत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥ ४ ॥
वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ।
प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ।
संपदे स्वाहेत्याग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ।
आयतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥५॥
अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपति, 'अमोनामास्यमा हि

---

स्थापयित्वा, 'ज्येष्ठाय स्वाहा' इति अग्नौ आज्येन हुत्वा मन्थे संपातं हुतशेषं निनयेदित्यर्थः । [वसिष्ठायेत्यादि सर्वं स्पष्टम् ।]

**अथ प्रतिसृप्य...जपति । प्रतिसृप्य** अभिगम्य। प्रदक्षिणं कृत्वेति वाऽर्थः । अञ्जलौ मन्थं निधाय वक्ष्यमाणं मन्त्रं जपेदित्यर्थः । मन्त्रमेवाऽऽह ....**अमोनामासि ।** अमा(म) इति नाम यस्य सः अमोनामा । सोऽसीत्यर्थः । ननु अमा(म) इति हि प्राणनाम । कथमप्राणस्य मन्थस्य अमोनामत्वमित्यत्राह **अमा हीति** । त्वमिति शेषः ।

---

माध्यन्दिनशाखायां प्राणविद्यानन्तरमेव स्थितमपि काण्वशाखायामेतदुत्तरपञ्चाग्निविद्यानन्तरमाम्नातम् । [illegible]षधदशकं पात्रौदुम्बरत्वादि च बृहदारण्यकतो(८-१३)ऽवसेयम् । कंसचमसाकारत्वमुत्तरवाक्यादेव ज्ञायते । दधिमधुनोरिति सप्तमी । अग्नौ होम आज्येन । मन्थद्रव्यस्योपर्याचमने विनियोगः । 'अमोनामासि अमा हि ते सर्वमिदम्' इत्येतत्स्थाने माध्यन्दिनपाठः, 'अमोऽसि आमं ते मयि' इति। काण्वपाठः, 'आमंस्यामंहितेमहि' इति । तदर्थः आनन्दगिरीये, 'आमंसि सर्वमिदं जानासि । ते महि = महिमानं रूपं आमंहि मन्यामहे' इति। अत्र तु शाङ्करे, 'अमा = सह, ते = तव इदं सर्वं जगत्' इत्युक्तम् । अत्र तु भाष्ये अमाहीत्यादेरन्यथा व्याख्या । इत्थमपि स्यात्—निरुक्ते अमत्रेमिरिति पदं गृहीत्वा, 'अमत्रं =

ते सर्वमिदँ स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः। स मा ज्यैष्ठ्यँ श्रैष्ठ्यँ राज्यमाधिपत्यं गमयत्वहमेवेदं सर्वमसानि' इति ॥ ६ ॥

अथ खल्वेतयर्चा पच्छ आचामति—'तत् सवितुर्वृणीमह' इत्याचामति, 'वयं देवस्य भोजनम्' इत्याचामति ; 'श्रेष्ठँ सर्वधातमम्'

---

त्वं प्राणोऽसि हीत्यर्थः। मन्थस्य प्राणत्वमुपपादयति ते सर्वमिदम् । इदं जगत् सर्वं ते त्वदधीनम् । मन्थलक्षणान्नाधीनत्वाज्जगत इति भावः। स हि....सर्वमसानीति । स हि मन्थभूतः प्राण इत्यर्थः । राजा दीप्तिमान् । अधिपतिः शेषीत्यर्थः । मा मां गमयतु प्रापयतु । इदं सर्वमहमेव असानि भवानि । सर्वनियन्तृतया भवानीत्यर्थः। शिष्टं स्पष्टम्।

**अथ खल्वेतया ऋचा पच्छ आचामति** । **एतया** वक्ष्यमाणया ऋचा **पच्छः** पादशः मन्थं भक्षयतीत्यर्थः । मन्त्रस्यैकैकपादेन एकैकग्रासं भक्षयेदित्यर्थः । 'तत् सवितुर्वृणीमहे वयं देवस्य भोजनम्। श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि' । अस्याश्च ऋचोऽयमर्थः । वयं श्रेष्ठं सर्वधातमं सर्वधारकं तत् तथाप्रसिद्धं श्रोष्ठं(?) भोजनं सवितुर्देवस्य सवितुर्देवात वृणीमहे प्रार्थयामहे । अत्र प्राणस्य सवितुश्चाभेदेन सवितुरित्युक्तिः । अथ तद्दत्तेन भोजनेन संतुष्टास्सन्तः तुरं तूर्णं

---

पात्रम्, अमा अस्मिन् अदन्तीति' इत्युक्तम् । अमा पुनः अनिर्मितं= अपरिमितमिति दुर्गाचार्यः। माङ् माने इत्यतः अमा अमितमित्यर्थः सुलभः। ततश्च अमोऽसि हे प्राणभूतमन्थ! कथममत्वम्? तदाह 'अमा हि ते सर्वमिदम्'। आक्रिमिकीटादिभ्यः स्थितं सर्वमिदमपरिमितमन्नं किलेति। ते इति। प्राणभूतस्य ते इत्यर्थः। यद्वा ते सर्वमिदं त्वद्घटकं सर्वमिदमौषधादिद्रव्यमित्यर्थः इति।

पच्छ आचामतीत्युक्तस्यैव विवरणं तत्सवितुरित्यादिना ।

इत्याचामति। 'तुरं भगस्य धीमहि' इति सर्वं पिबति ॥ ७ ॥

निर्णिज्य कँसं चमसं वा पश्चादग्नेः संविशति चर्मणि स्थण्डिले वा वाचंयमोऽप्रसाहः। स यदि स्त्रियं पश्येत्, समृद्धं कर्मेति विद्यात्। तदेष श्लोकः— "यदा कर्मसु काम्येषु स्त्रियँ स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने॥" तस्मिन् स्वप्ननिदर्शने।

इति पञ्चमाध्याये द्वितीयः खण्डः।

---

शीघ्रं **भगस्य** सूर्यस्य देवस्य **धीमहि** ध्यायेमेत्यर्थः। स्वरूपमित्यध्याहारः। अथवा संबन्धसामान्ये षष्ठी। सवितारं ध्यायेमेत्यर्थः।

**तत् सवितुः....पिबति**। स्पष्टोऽर्थः।

**निर्णिज्य...स्थण्डिले वा**। कंसाकारं चमसाकारं वा औदुम्बरपात्रं प्रक्षाल्य, अग्नेः पश्चात् अजिने वा केवलभूम्यां वा प्राक्छिराः शयीतेत्यर्थः। शयाने नियममाह **वाचंयमोऽप्रसाहः**। **वाचंयमः** वाग्यतस्सन्। **अप्रसाहः** न प्रसह्यत इत्यप्रसाहः। अनिष्टस्वप्नदर्शनेन यथा नाभिप्लुतो भवति, तथा संयतचित्तस्सन्नित्यर्थः। **स यदि.... विद्यात्**। स्पष्टोऽर्थः। **तदेष श्लोकः**। **तत्** तस्मिन् स्वप्नविषये एष श्लोको भवतीत्यर्थः। श्लोकमेवाह **यदा कर्मसु...**। **तस्मिन् स्वप्ननिदर्शने**। [अत्र] सतीति शेषः। **समृद्धिं** कर्मनिष्पत्तिमित्यर्थः। **तस्मिन् स्वप्ननिदर्शन** इति द्विरुक्तिर्विद्यासमाप्त्यर्था॥

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते—

(१) 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' इत्यत्र—

---

अप्रसाहः इति। प्रसहनं बलात्कारः। चित्तस्य तीव्रा व्यापृतिरित्यपि सुवचम्।

'न ह वा एवंविदि किञ्चनानन्नं भवति' इति **छान्दोग्ये,** 'नास्यानन्नं जग्धं भवति' इति **वाजसनेयके** च श्रवणात्, वामदेव्योपासनानिष्ठस्य प्रार्थ्यमानसर्वयोषिदपरिहारानुमतिवत् सर्वान्नानुमतिः प्राणविद्यानिष्ठस्य सर्वदा क्रियत इति पूर्वपक्षे प्राप्ते—उच्यते। **'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्'**। प्राणात्यय एव प्राणविदः सर्वान्नानुज्ञानम्; न सर्वदा। ब्रह्मविदोऽप्युषस्तेः प्राणात्यय एव इभ्योच्छिष्टाशनस्य दर्शनेन प्राणविदः सर्वान्नानुमतेरापद्विषयत्वस्य किंपुनर्न्यायसिद्धत्वात्। **'अबाधाच्च'**। 'आहारशुद्धौ सत्त्वशुद्धिः' इति शास्त्राबाधार्थमप्येवमेव न्याय्यम्। इतरथा तस्य बाधः स्यात्। **'अपि स्मर्यते'**।' प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥' इति स्मरणाच्च सर्वान्नीनत्वमापद्विषयम्। **'शब्दश्चातोऽकामकारे'**। 'तस्मात् ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा' इति **संहितायां** कामकारप्रतिषेधकशब्ददर्शनात्। पाप्मना संसृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबति इति हि तस्याः श्रुतेरर्थः।

ननु ब्रह्मविद उषस्तेः प्राणात्यये सर्वान्नीनत्वदर्शनात् प्राणविदः सर्वान्नीनत्वस्यापद्विषयत्वं कैमुत्यन्यायेन सिद्ध्यतीत्यनुपपन्नम्। वामदेव्योपासननिष्ठस्य सर्वयोषिदपरिहारवत् प्राणविद्यानिष्ठस्य वचनबलात् सर्वान्नीनत्वमिति वदन्तं प्रति एतस्यानुत्तरत्वादिति चेन्न—वामदेव्योपासनस्य, 'न काञ्चन परिहरेत् तद् व्रतम्' इति सर्वयोषिदपरिहारे-

---

शब्दश्चातोकामकारे। अतः सर्वान्नीनत्वस्यापद्विषयत्वादेव अकामकारे शब्दः यथेच्छाचरणप्रतिषेधविषयकः शब्दोऽप्यस्ति इति सूत्रार्थः।

अपि स्पष्टविधिश्रवणात् । प्रकृते च, 'न ह वा एवंविदि किञ्चनानन्नं भवति' इत्यत्र सर्वान्नभक्षणविधेः कल्प्यत्वात्, प्रत्यक्षनिषेधविरोधे च विधिकल्पनानुदयेनार्थवादत्वस्यैव युक्तत्वात् सर्वप्राण्यन्ने, 'यत्

---

कल्प्यत्वादिति । तथाच वचनबलात् प्राणविदः सर्वान्नीनत्व-पूर्वपक्षे वचनबलमत्र नास्तीत्येव समाधिरिति भावः। अत्र प्राणविद एव सर्वान्नीनत्वे ब्रह्मविदि तत् कैमुत्यसिद्धमिति पूर्वपक्षः। तत्र ब्रह्मविदां तद्दर्शनादिहेतुभिः सर्वान्नीनत्वं निरस्य कैमुत्यनयेनैव प्राणविदोऽपि तन्निरास इहाभिप्रेत इति श्रुतप्रकाशिकासरणिः। एतावन्मात्रस्य सूत्राभिमतत्वे, 'वामदेव्योपासकविषय इव विशेष-वचनबलात् प्राणविन्मात्रस्य सर्वान्नीनत्वमस्तु। न हि वामदेव्योपास-कस्येव सर्वस्य ब्रह्मविदोऽपि सर्वयोषिदपरिहारः कैमुत्यादशङ्क्येत' इत्युपरितनाशङ्कायां कर्तव्यः परिहार सूत्रानुक्त इति न्यूनता स्यादिति, शाङ्करसरणिमपि श्रीभाष्यानुमतामभिप्रेत्यैवमुक्तमिति ध्येयम् ।

तर्हि सूत्रकारेण वचनबलाभावरूपसमाधिमनुक्त्वा तद्दर्शना-दिति उषस्तिवृत्तान्तप्रदर्शनमनुपपन्नमिति चेत्—उच्यते । अत्र किं सर्वान्नभक्षणस्य विधिः, अनुमतिर्वा । नाद्यः । वामदेव्योपा-सनस्थले, 'न परिहरेत्' इति विधिश्रवणात्, 'तद् व्रतम्' इति व्रतशब्दप्रयोगाच्च प्रार्थयमानयोषिदपरिहरणमवश्यकर्तव्यं प्रतीयते । तद्वदत्र श्वपर्यन्तप्राण्यन्नभक्षणमवश्यकर्तव्यं न प्रतीयते। न च प्रत्याय-यितुं शक्यते। यावदुदरपूर्त्यैव च भोजने शक्तेः स्वभोज्यसर्ववस्तु-भोजनमेव न सुकरम्, नतरां श्वभोज्यप्रभृतिभोजनम्। विधिपक्षे च तदपि भोज्यं स्यात्। अतोऽत्र न सर्वान्नविधिः, किंतु सर्वान्ना-नुमतिरेवेति सिद्धं वामदेव्यवैषम्यम्। अथानुमतिरेव सार्वकालिकी अस्तु, न तु प्राणसंशयकाल एवेति चेत्—अनुमतिस्तावत् स्वतः प्रवृत्ते पुरुषे दोषाभावमात्रं ज्ञापयेत्, न प्रवृत्तिमुत्पादयेत्। विदुषश्च

किञ्चिदिदमा श्वभ्य आ शकुनिभ्यः' इति विहितस्य प्राणान्नत्वचिन्तनस्य स्तुतिमात्रं क्रियते, 'न ह वा एवंविदि किञ्चनानन्नं भवति' इति।

न चैवं सति निषेधशास्त्रविरोधात्, 'एवंविदि पापं कर्म न श्लिष्यते' इत्यादेरपि स्तुतिमात्रत्वप्रसङ्ग इति वाच्यम्—पाप्मनामश्लेषाभावे अनिर्मोक्षप्रसङ्गेन सकलपापाश्लेषस्य मोक्षविधिशास्त्रापेक्षितत्वेन फलविधित्वस्य वक्तव्यत्वात्। प्राणविद्यायाश्च ज्येष्ठत्वश्रेष्ठत्वादिफलकत्वेन फलाकाङ्क्षाया अभावादिति स्थितम्।

(२) तथा **गुणोपसंहारपादे**—'लम्भुको ह वासो भवति' इत्यर्थवादोपबृंहितात्, 'किं मे वासो भविष्यतीति। आप इति होचुः तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' इति **छान्दोग्ये** श्रवणात् वासस्त्वचिन्तनमिति प्रतीयते। **बृहदारण्यके काण्वशाखायाम्**, 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्ति अशित्वा चाचामन्ति एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' इति वाक्ये, 'अनग्नं कुर्वन्त' इति वचनात् वासस्त्वचिन्तनमपि प्रतीयते; आचामन्ति

---

स्वतः प्रवृत्तिर्निषिद्धा स्ते इन्द्रियचापलशङ्का तदभावे प्राणधारणासंभवाद्वा। आद्ये इन्द्रियलोलस्य साधीयो वैदुष्यम्। अतः सतो विदुषस्तदसंभवि। परिशेषात् प्राणात्ययापत्तावेव तत्र प्रवृत्तिरिति। तदिदं सूत्रकारः, 'सर्वान्नानुमतिश्च प्राणात्यये' इत्येतावतैव दर्शयित्वा, इदं प्राणवित्तदितरपरमैकान्तिपर्यन्तसाधारणमिति गमयितुम् उषस्तिवृत्तमुपष्टम्भकं दर्शयति तद्दर्शनादिति। ननु प्राचीनकर्मवशात् यदि कदाचित् क्वचित् रागो भवेत्, तदा प्राणवित् निषेधशास्त्रात् अभीतस्तद्भक्षयेदिति विधिः कल्प्यत इति चेत्, आह अबाधश्चेति। कल्प्येन विधिना क्लृप्तशास्त्रं न बाध्यते। अतो

इति आचमनविधिरपि प्रतीयते । माध्यन्दिनशाखायाम्, 'तस्मादेवंवित् अशिष्यन् आचामेत् अशित्वा चाचामेत् एतमेव तदनमनग्नं कुरुते' इति अनग्नत्वचिन्तनात् वासस्त्वचिन्तनविधिरपि प्रतीयते ; आचामेदिति आचमने विधिप्रत्ययश्रवणात् आचमनविधिः स्पष्टं प्रतीयते । तत्र द्वयोरपि विधेयत्वे गौरवादेकस्यैव विधेयत्वे वक्तव्ये आचामेदिति आचमने स्पष्टविधिप्रत्ययश्रवणात् स्मृत्याचारप्राप्ताचमनातिरिक्तमाचमनान्तरं प्रतीयते । वासस्त्वादिश्रवणं तु कथञ्चित् स्तुतिरूपतया नेतव्यमिति पूर्वपक्षे प्राप्ते — अभिधीयते— **'कार्याख्यानादपूर्वम्'** । **कार्याख्यानात्** विधेरप्राप्तविधानस्वाभाव्यात् आचमनस्य [च] स्मृत्याचाराभ्यामेव प्राप्तत्वात् आचमनान्तरविधाने विनिगमकानुपलम्भात् [अपूर्वं] अप्राप्तं आचमनीयास्वप्सु वासस्त्वानुचिन्तनं विधीयते । छान्दोग्ये आचमनस्यैवाप्रतीतेः शाखान्तरेऽपि वासस्त्वानुसंधानस्यानुगतत्वात् तदेव विधीयत इति स्थितम् ।

ननु कथं वागादीनामचेतनानामुक्तिप्रत्युक्तिपरम्परेति चेन्न— वागादिशब्दानाम्, **'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'** इति सूत्रोक्तन्यायेन तदभिमानिदेवतापरत्वात् । तत्र हि—

(३) **'न विलक्षणत्वादस्य तथात्वञ्च शब्दात्'** । ब्रह्मणो

---

विध्यश्रवणान्न सामान्यशास्त्रबाध इति । उपरि सूत्रद्वयेन च सर्वान्नमिति किं सर्वेस्यान्नम् उत सर्वमन्नम्? उभयमपि न शक्यं स्वीकर्तुम्। विरोधादिति क्रमेण दर्श्यते इत्यलमधिकेन ।

पूर्वपक्षयुक्तमपि सिद्धान्त्यप्रतिषिद्धत्वात् ग्राह्यमिति दर्शयितुं तदधिकरणं कृत्स्नं दर्शयति तत्र हीति ।

जगद्विलक्षणत्वेनोपादानत्वं न संभवति । घटरुचकादिषु हि सलक्षणा-नामेव मृत्सुवर्णादीनामुपादानत्वं दृष्टम् । प्रकृते च ब्रह्मजगतोर्विलक्षणत्वं 'विज्ञानञ्चाविज्ञानञ्च' इति ब्रह्मजगतोर्विज्ञानत्वाविज्ञानत्वप्रतिपादक-शब्दादेवावगम्यते ।

ननु जगतोऽचेतनत्वे, 'मृदब्रवीत्' इति अचेतनाया मृदो वक्तृत्वं नोपपद्यते । तत्राऽऽह—अभिमानिव्यपदेशस्तु विशेषानुगति-भ्याम्' । मृदादिशब्दैस्तत्तदभिमानिदेवताः व्यपदिश्यन्ते । 'हन्ताह-मिमास्तिस्रो देवताः' इति तेजोबन्नानां देवताशब्देन विशेषणात् अचेतनानाञ्च देवतात्वासंभवात् तदभिमानिनी देवता तेजोबन्नादि-शब्दैर्व्यपदिश्यत इत्यध्यवस्यामः । 'अग्निर्वाग् भूत्वा मुखं प्राविशत्' इति अग्नेर्वाचि अनुप्रवेशरूपानुगतिश्रवणात् वागादिशब्दैस्तदनुविष्ट-तदभिमान्यग्न्याद्यभिधानात् नानुपपत्तिः । अतः चेतनस्य ब्रह्मणोऽ-चेतनजगदुपादानत्वं न संभवति—

'दृश्यते तु' । तुशब्दः चोद्यव्यावृत्त्यर्थः । विलक्षणेभ्योऽपि गोमयादिभ्यो वृश्चिकादेरुत्पत्तिदर्शनात् विलक्षणात् ब्रह्मणो विलक्षण-जगदुत्पत्तिरुपपद्यते । 'असदिति चेन्न प्रतिषेधमात्रत्वात्' । विलक्षणादुपादानात् विलक्षणोत्पत्त्यङ्गीकारे उपादेयस्य उत्पत्तेः प्राक् विलक्षणोपादानात्मनि अवस्थानस्य वक्तुमशक्यत्वेन असत्कार्यवादप्रसङ्ग इति चेन्न—उपादानोपादेययोः सालक्षण्यानयमप्रतिषेधमात्र एवास्माकं

---

विज्ञानञ्चाविज्ञानञ्चेति जीवस्य किल विज्ञानत्वमुच्यते । तत् कथं ब्रह्मजगतोरिति । सत्यम् । ब्रह्मणस्तदभेदात्, भेदेऽपि कैमुत्यन्यायात् विज्ञानत्वं प्रतिपादितमेवेति भावः ।

संरम्भः । सूक्ष्मचिदचिद्विशिष्टं ब्रह्म स्वस्मात् विलक्षणजगदाकारेण परिणमत इत्येतत्तु न त्यक्तम् ।

अत्र चोदयति—**'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्'** । ब्रह्मण एव जगद्रूपेण परिणामे तयोरैक्यात् अप्ययादिषु सर्वदशासु अचेतनगता दोषाः ब्रह्मणि(णः) स्युः । ततश्च ब्रह्मणो निरनिष्टत्वनिरवद्यत्वप्रतिपादकश्रुत्यसामञ्जस्यं भवति ।

तत्र सिद्धान्तमाह—**'न तु दृष्टान्तभावात्'** । न त्वेवं संभवति । यथा बालस्य युवानं प्रति उपादानत्वेऽपि बाल्युवादिशब्दैरात्मनोऽभिधानेऽपि बालत्वयुवत्वादिभिर्नात्मा दूष्यते, एवमेव चेतनाचेतनगतैर्दोषैरात्मा न दूष्यते ।

**'स्वपक्षदोषाच्च'** । 'निर्विकारस्य चिन्मात्रैकरसस्य पुरुषस्य प्रकृतिसंनिधाने[न] प्रकृतिधर्माध्यासनिबन्धना जगत्प्रवृत्तिः' इति साङ्ख्यपक्षो[ऽपि] दुष्ट एव । **'तर्काप्रतिष्ठानादपि'** । तर्काणामन्योन्यव्याघातेनाप्रतिष्ठितत्वादपि तन्मूलप्रधानकारणवादः त्याज्य एव ।

**'अन्यथाऽनुमेयमिति चेत्, एवमप्यनिर्मोक्षप्रसङ्गः'**। यथा प्रतिकूलतर्कपराहतिर्न भवति, तथा सत्तर्कैः प्रधानकारणत्वमनुमीयत इति चेत्—

---

न त्यक्तमिति । उपादानोपादेययोर्वैलक्षण्यमपीष्यते, ऐक्यमपीति नासत्कार्यवादादिदोषः । उपादानत्ववत् उपादेयत्वमपि विशिष्टब्रह्मण इति ऐक्यं सुस्थम् । स्थूलभूताचेतनांशस्यापि ब्रह्म प्रति उपादेयत्वात् वैलक्षण्यमपीति गूढाशयः । इममविद्वान् शङ्किष्यते अपीतादिति । आशयमाविष्करिष्यति न तु दृष्टान्तभावादिति इति भावः । शेषं सद्विद्यायाम् (६-८) ।

[२] वेत्थ यथा पुनरावर्तन्ता३ इ(यि)ति । न भगव इति ।
[३] वेत्थ पथोर्देवयानस्य पितृयाण(न)स्य च व्यावर्तना३ इति । न भगव इति ॥ २ ॥
[४] वेत्थ यथाऽसौ लोको न संपूर्यता३ इति । न भगव इति ।
[५] वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति ।

---

इति शेषः । राजा पुनः पृच्छति— **वेत्थ.... आवर्तन्त इति** । कर्मिणां पुनरावृत्तिप्रकारः क इत्यर्थः । इतर आह— **न भगव इति** । पुनः पृच्छति **वेत्थ.... व्यावर्तना३ इति** । देवयानपितृयाणयोर्व्यावर्तने भेदके रूपे किं वेत्थेत्यर्थः । केन प्रकारेण तयोर्भेद इत्यर्थः । इतर आह **न भगव** इति पुन पृच्छति **वेत्थ... संपूर्यता३ इति** । असाल्लोकादनवरतं गच्छद्भिः पुरुषैः कस्माद्धेतो द्युलोको न संपूर्यत इत्यर्थः । **वाजसनेयके** समानप्रकरणे, 'वेत्थ यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यत ३ इति' इति श्रवणात् । अमुष्य लोकस्याप्राप्ता क इति प्रश्नस्य फलितार्थः । इतर आह **न भगव** इति । पुनः पृच्छति **वेत्थ... भवन्तीति** । आप इति भूतान्तराणा-

---

प्रश्नवाक्यात् अशिषत पितेत्यनुषज्यते । वेत्थेत्यस्य सर्वत्र कर्मवाचकं तदिति पदमध्याहार्यम् । तच्च यत् यथेत्युक्तयच्छब्दप्रतिसंबन्धि । वेत्थ किमिति प्रश्नपर्यवसानं तत्तद्वाक्यावसानगतप्लुतिबलात् । वाक्यान्ते स्वरविशेषेण प्रश्नव्यञ्जनमानुभविकम् । तत् प्रथमवाक्येऽपि ग्राह्यम् । नेत्येतदनन्तरं सर्वत्र वेद्मीति विपरिणम्यानुषङ्गः। व्यावर्तने इति द्वितीयाद्विवचनम । यथा= येन प्रकारेण न संपूर्यते, तं प्रकारं वेत्थेति प्रश्ने संपूरणाभावहेतुरेवान्ततः प्रकारत्वेन विवक्षित इति कस्माद्धेतोरित्युक्तम् । अनवरतं गच्छद्भिरित्यादिपूरणे प्रमाणमाह वाजसनेयक इति। पञ्चम्यामिति । वाजसनेयके, 'यतिथ्या-

**नैव भगव इति ॥ ३ ॥**

---

मप्युपलक्षणम् । भूतसूक्ष्माणि पञ्चम्यामाहुतौ **यथा** येन प्रकारेण **पुरुषवचसः** । पुरुष इति वचो यासां ताः **पुरुषवचसः** । पुरुष-शब्दाभिलप्या इत्यर्थः । कस्य पञ्चम्यामाहुताविव्यपेक्षायां पुरुषवच-स्त्वभवनकर्तृतया निर्दिष्टा आप एव हूयमानतया संबध्यन्ते । असंनि-हितार्थान्तरकल्पने गौरवात् । ततश्चापां पञ्चम्यामाहुतौ आपः पुरुष-वचसो भवन्तीत्यर्थः । ततश्चापामेव पञ्चस्वप्याहुतिषु हूयमानत्वमिति सिध्यतीति द्रष्टव्यम् । इतर आह **नैव भगव इति** । [अत्र] रंहत्यधि-

---

माहुत्यां हुतायामापः पुरुषवाचः' इति आहुतिसंख्याप्रश्नः प्रतीयते । अत्र तु पञ्चम्यामिति निर्देशात् स नास्तीति वैषम्यमिति चेन्न—तत्रापि संख्याप्रश्ने तात्पर्यविरहात् । कतमस्यामाहुत्यां पुरुषाकारपरिणाम इति प्रश्ने, सा आहुतिः का, ततः पूर्वमाहुतयः काः, तत्र कस्कः परिणाम इत्येव पृष्टं भवति । अत्रापि का पञ्चमी, काः पूर्वाहुतय इत्यादिप्रश्न एवेति । अभिलप्या भवन्तीति । अभिलप्यशरीररूपेण कुक्षौ परिणमन्तीत्यर्थः । ननु पुरुषा भवन्तीत्यलम् । किमिति पुरुष-वचस इतीति चेत्—किमाक्षेपः क्रियते, अन्य एवार्थो वक्तव्य इति, किं वा अधिकप्रयोगफलजिज्ञासामात्रम्? वाजसनेयके, 'पुरुषवाचो भूत्वा समुत्थाय वदन्ति' इति वचनात् वदनोपयोगि वागिन्द्रियं व्यक्तवाचां पुरुषाणां यत्, तद्वत्त्वं पुरुषवाच इत्युच्यते । तत्पर्यायि-त्वादिह पुरुषवचस इत्यपि तथेत्यर्थान्तरविवक्षैवेति चेन्न—तत्रापि वदन्तीत्यनेनैव वागिन्द्रियाक्षेपात् पुरुषवाचो भूत्वेत्यस्य वैयर्थ्यात् । वाङ्मात्रं पुरुषाणामिव, अन्यत्तु अपुरुषाणामिवेति अनभिमतार्था-पत्तेश्च । अतः पुरुषशब्दवाच्या इत्येवार्थस्तत्रापि । अधिकप्रयोगस्य तु, 'न पुरुषपदस्य शरीरं मुख्योऽर्थः, आत्मसंबन्धादमुख्यः' इति ज्ञापनं

अथ नु किमनुशिष्टोऽवोचथाः । यो हीमानि न विद्यात्, कथं सोऽनुशिष्टो ब्रुवीतेति ।

---

करणे भगवता भाष्यकृता, 'कर्मिणां गन्तव्यदेशम्, पुनरावृत्ति-प्रकारम्, देवयानपितृयाणपथव्यावर्तने, अमुष्य लोकस्यापासारञ्च वेत्थेति पृष्ट्वा, 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति पप्रच्छ' इति भाषितम् ।

एवमुक्तवन्तं श्वेतकेतुं राजा प्रत्याह, 'अथनु....ब्रुवीतेति । किं कस्मात अनुशिष्टोऽस्मीत्युक्तवानसि । यो हि इमान्यर्थजातानि

---

फलम् । 'समुत्थाय वदन्ति' इति वाजसनेयके अधिकोक्तिरपि आत्मकार्योत्थानवचनरूपविशेषदर्शनात् आत्मवाचिपुरुषपदं तत्र प्रयुज्यते. न तु पूर्वाहुतिस्थलेषु, नापि तिर्यगादिष्विति प्रयोगौचित्य-सूचनायेति । नैव भगव इति । अत्र परं पत्रकारः इङ्गितादिना अयमन्तिमः प्रश्न इति ज्ञात्वा प्रयुक्तः, 'नाहमत एकञ्चन वेद' इति वासजनेयकवत् ।

प्रायणे देशमेतव्यम्, पुनरावृत्तिपद्धतिम् ।
देवपित्रध्वनोर्भेदम्, अदोलोकानवापकम् ॥ १ ॥
पञ्चाहुतिपरीणाममम्भ्यपां पृष्टवान् नृपः ।
वैश्वानरात्मविद्यार्थिन्यायात् किञ्चिद्ज्ञताऽस्ति किम् ॥ २ ॥
इति जिज्ञासया पञ्च प्रश्नांश्चक्रे प्रवाहणः ।
अनुबन्धिपरिज्ञानविरहेऽप्येष किं वदेत् ॥ ३ ॥
पञ्चाग्निविद्यामुख्यांशमिति मुख्यः कृतोऽन्तिमः ।
बृहदारण्यके त्वत्र तृतीयः पञ्चमः कृतः ॥ ४ ॥
विद्योपदेशनैर्भर्यात् प्रत्युक्तावन्यथा क्रमः ।
अर्थात् प्रश्नस्य सर्वस्य समाधानं भवेदिति ॥ ५ ॥

स हाऽऽयस्तः पितुरर्धमेयाय ; तँ होवाच, "अननुशिष्य वाव

न जानीयात्, स कथं अनुशिष्टोऽस्मीति वदेदित्यर्थः। यद्वा **किमनुशिष्टः** किमर्थं(कमर्थं ?)मनुशिष्ट इत्यर्थः।

**स....एयाय।** स श्वेतकेतुः राज्ञा जैबलिना **आयस्तः**

किमर्थं=कमर्थम्। इमानि न विद्यात् कथं सोऽनुशिष्ट इति। नन्विदं कथम्? एतत्पञ्चाग्निविद्यावेदनविरहेऽपि विद्यान्तरेणानुशिष्टत्वसंभवात्। उपरि सद्विद्यासंदर्भाच्च श्वेतकेतुरनुशिष्टसद्विद्य इति विज्ञायत इति चेत्—उच्यते। प्रसिद्धं किल द्वादशवर्षो गुरुसविधमित्वा मेधाबलात् साङ्गं सर्वं वेदं शीघ्रमधीत्य चतुर्विंशतिवर्ष एव प्रत्यायातो महामना अनूचानमानी स्तब्धः श्वेतकेतुरिति। स च पञ्चालानां परिषदं प्राप्तो राज्ञा पृष्ट इत्युपक्रमे श्रावितम्। तत्र यशःप्रथनाय परिषदं प्राप्य तां जित्वा राजानमपि जेष्यामीति गर्वेणाऽऽजगामेति शाङ्करोक्त्या तस्य गर्वभङ्गायैतावदुक्तमिति। इयमेका समाधानसरणिः। अन्या तु—पञ्चाग्निविद्याप्रयोगाविज्ञानेऽप्येतद्विषयज्ञानमावश्यकम्, सर्वेषामपि विदुषां ब्रह्मणि जगत्कारणत्वविज्ञानवत्। न च तत् स्थितमेव श्वेतकेतोः; अर्चिरादिगतेः सर्वविद्यानिष्ठानुचिन्तनीयत्वात् वैराग्यसिद्धये प्रयत्नजागन्तव्यदेशादिज्ञानस्य सर्वसाधारणत्वाच्च-इति वाच्यम्—अवश्यज्ञातव्योऽप्ययमंशः तत्पित्राऽपि न विशिष्य ज्ञात इत्येव संदर्भपर्यालोचनया वक्तव्यत्वात्। मुख्यस्य विद्याभागस्यैव सद्विद्यायामुपदिष्टत्वात्। पञ्चाग्निविदां तु स्वगम्यमार्गे पितृयाणवैलक्षण्यानुसंधानस्यावश्यकतया सर्वस्यास्य विद्याकुक्षिनिवेशादवर्जनीयं वेदनम्। अत एवापूर्वां पञ्चाग्निविद्यामेवाधिगन्तुं गौतमः प्रववृते, अनुषङ्गात् सर्वं ज्ञातं भविष्यतीति। तदर्थमेव विशिष्टविद्योपदेशपरेण राज्ञा तस्य चिरवसत्याज्ञापनम्, आरम्भ एव पञ्चमप्रश्नसमाधानञ्चेति। अस्तु वा

किल मा भगवानब्रवीत्", 'अनु त्वाऽशिषम्' इति ॥ ४ ॥

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत्। तेषां नैकं चनाशकं विवक्तुम्" इति।

स होवाच, "यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकञ्चन वेद, यद्यहमिमानवेदिष्यम्, कथं ते नावक्ष्यम्" इति ॥ ५ ॥

---

आयासितस्सन् पितुः अर्धं स्थानमाजगाम। तं....त्वाऽशिषमिति। गत्वा च तं पितरमित्थमुवाच, मामननुशिष्य समावर्तनकाले अनुशासनीयानि सर्वाणि अननुशिष्यैव 'त्वामन्वशिषम्' इति भगवान् मां प्रति अब्रवीदित्यर्थः। तत् कथमित्यत्राह पञ्च....विवक्तुमिति। राजन्यबन्धुः राजापशदः मां पञ्च प्रश्नान् अप्राक्षीत्। तेषां मध्ये एकञ्चन एकमपि प्रश्नं विवक्तुं विशिष्य वक्तुं नाशकम् न शक्तोऽभूवम् इति पितरमुवाचेत्यर्थः। त्वया सम्यगनुशिष्टस्य कथमियमशक्तिः स्यादिति भावः। राजन्याः बन्धवो यस्य स राजन्यबन्धुः। राजन्यानां बन्धुरिति वा। स्वयमराजन्य इत्यर्थः। राजन्याभास इति यावत्।

स....नावक्ष्यमिति। [सः पिता पुत्रं वक्ष्यमाणमुवाच।]

---

श्वेतकेतोर्बुद्धिश्रद्धे विदुषः पाञ्चालसभापतेः तन्मुखेन राजन्यमात्रलीनायाः पञ्चाग्निविद्याया भुवि प्रचिचारयिषया तस्यात्रोत्कटत्वरासंपत्तये समाहत इत्थं व्याहार इति।

आयासित इति। एवमुपर्युपरि अज्ञातप्रश्नकरणेनेति शेषः। न तु उपचाराकरणेन। 'अथैनं वसत्योपमन्त्रयाञ्चक्रे। अनादृत्य वसतिं कुमारः प्रदुद्राव' इत्यन्यत्र श्रवणात्। अत एव आयस्तः स्वयमायासवान् इत्यपि सुवचम्। तत्=अननुशिष्टत्वमित्यर्थः। राजन्यबन्धुरिति। 'जनको जनक इति वै जना धावन्ति' यत्र, तद्वदप्रसिद्धस्यापि प्रश्नो मया न समाहित इति निर्वेदो व्यज्यते इह।

**स ह गौतमो राज्ञोऽर्धमेयाय। तस्मै ह प्राप्तायार्हां चकार। स ह प्रातः सभाग उदेयाय।**

**तँ होवाच, 'मानुषस्य भगवन् गौतम! वित्तस्य वरं वृणीथाः'**

---

त्वं मां प्रति **तदा** आगमनकाले **एतान्** प्रश्नान् **यथाऽवदः**, 'तेषां नैकञ्चनाशकं विवक्तुम्' इति यथोक्तवानसि, तथाऽहमपि तेषां प्रश्नानां मध्ये **एकञ्चन** एकमपि **यथा** यथावत् सत्यमित्यर्थः **न वेद** नाज्ञासिषम्। यदि अज्ञासिषम्, तर्हि ते प्रियाय पुत्राय समावर्तनकाले कुतो नावक्ष्यमित्युवाचेत्यर्थः॥ **स....राज्ञोऽर्धमेयाय**। एवमुक्त्वा स गोत्रतो गौतमः आरुणिः राज्ञः स्थानमाजगाम। **तस्मै...चकार**। प्राप्ताय **तस्मै** गौतमाय राजा **अर्हां** पूजां चकारेत्यर्थः। **स....उदेयाय**। तदा सः प्रातःकाले राज्ञि **सभागे** सभागते सति **उदेयाय**। गौतमः आजगामेत्यर्थः। यद्वा **सभागः** भ(भा)जनं **भागः** पूजा। तेन युक्तः अर्घ्यादिभिः **स** गौतमः समागत इत्यर्थः।

**तं....वृणीथा इति**। हे भगवन् गौतम! मनुष्यसंबन्धिवित्तसंबन्धि वरं वृणीष्वेत्युवाचेत्यर्थः। **स होवाच**। **सः** गौतमः

---

**स ह गौतम इति। न तु श्वेतकेतुरपि। पितुः सकाशादेव पश्चादधिजिगमिषया स आहूतोऽपि न सह जगामेति भाव्यम्; न तु विद्यायामनास्थया न जगामेति। सभाग इत्यादि। अर्हां कृत्वा, 'वरं भगवते गौतमाय दद्म' इत्युक्तं प्रवाहणेन। गौतमेन च, 'प्रतिज्ञातो म एष वरः' इत्युक्त्वा विद्यैव सा प्रार्थिता। अथोक्तं राज्ञा, 'दैवेषु वै गौतम तद् वरेषु। मानुषाणां ब्रूहि' इति। तदुपेक्ष्य पुनरपि विद्यैव पृष्टेति क्रम इहानुसंधेयः। तथाच दत्तवरत्वात् भागधेयशाली**

इति । स होवाच, 'तवैव राजन्! मानुषं वित्तम् । यामेव कुमारस्यान्ते वाचमभाषथाः, तामेव ब्रूहीति ॥ ६ ॥

स ह कृच्छ्री बभूव । तँ ह चिरं वसेत्याज्ञापयाञ्चकार । तँ होवाच, 'यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति, तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूत्' इति ।

प्रत्युवाचेत्यर्थः । तदेवाह-**तवैव....ब्रूहीति** । हे राजन्! मानुषं वित्तं तवैव तिष्ठतु [तेन मम न किञ्चित् प्रयोजनम् । किन्तु] मत्पुत्रस्य समीपे पञ्चप्रश्नलक्षणां यां वाचं उक्तवानसि, तामेव मे ब्रूहीति ।

**स...चकार** । एवमुक्तो राजा गौतमस्याप्रत्याख्येयतां ज्ञात्वा **कृच्छ्री** दुःखितो बभूव । तञ्च गौतमं विद्यार्थं, 'चिरं वस' इत्याज्ञप्तवान् । **तं होवाच** एवमाज्ञाप्य राजा तं गौतमं पुनरुवाच । किमिति । **यथा...अभूदिति** । हे गौतम ! त्वं मां **यथा अवदः** । तथा करिष्यामीति शेषः । इयं वक्ष्यमाणा विद्या पुरा विद्यमानाऽपि(?) **यथा** येन प्रकारेण—यस्माद्धेतोरिति यावत—त्वत्तः प्राक् ब्राह्मणान् **न गच्छति** न प्राप्तवती, तस्मात् सर्वेषु लोकेषु **क्षत्रस्यैव प्रशासनमभूत्** क्षत्रियजातेरेवैतद्विद्योपदेष्टृत्वम् । अतो ब्राह्मणेषु एतद्विद्याया अभावात् ब्राह्मणानामेव समीपं गमिष्यामीति बुद्धिर्न (बुद्धिर्मा) कार्या ।

---

विद्यामर्थयामासेत्यपि सभाग उदेयायेत्यत्र विवक्षितम् । तामेव ब्रूहीति । तत्प्रश्नजिज्ञासितार्थमुपदिशेत्यर्थः । कृच्छ्री बभूव । कथमयं भगवान् शिष्यः कार्य इति ; कथञ्च दत्तो वरो न पूरणीय इति । यथेयमिति द्वितीययथाशब्दः पूर्वं यथाहमिति द्वितीययथाशब्दवत् यथावदित्यर्थेऽपि स्यात् । पुरेति । इदं गच्छतीत्यत्रान्वेति । 'यावत् पुरानिपातयोर्लट्' इति लडिति । विद्या=पञ्चाग्निविद्या । त्वत्तः

**तस्मै होवाच ॥ ७ ॥— इति पञ्चमाध्याये तृतीयः खण्डः**

**पञ्चमे चतुर्थः खण्डः**

**असौ वाव लोको गौतमाग्निः ; तस्यादित्य एव समित् रश्मयो धूमोऽहरर्चिः चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ॥ १ ॥**

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति । तस्या आहुतेः सोमो**

---

चिरवासाज्ञापनमपि सोढव्यमिति भावः । **तस्मै होवाच** । अथ चिरकालमुषितवते तस्मै गौतमाय राजा विद्यामुपदिदेशेत्यर्थः ॥ ५-३.

तत्र, 'वेत्थ यथा पञ्चम्यामाहुतावापः' इति पञ्चमप्रश्नप्रतिवचनस्य इतरप्रतिवचनानुकूलत्वात् प्रथमतस्तदेवाह—**असौ... गौतमाग्निः** । हे गौतम! **असौ लोकः** स्वर्गलोक एवाग्निः । **तस्यादित्य एव समित्** । आदित्येन हि द्युलोको दीप्यते । **रश्मयो धूमः** । धूमस्य समित्प्रभवत्वादादित्यरश्मीनां धूमत्वम् । **अहरर्चिः** । प्रकाशकत्वात् । **चन्द्रमा अङ्गाराः** । अर्चिःप्रशमकालप्रभावत्वाच्च चन्द्रमसोऽङ्गारत्वम् । **नक्षत्राणि विस्फुलिङ्गाः** । चन्द्रावयवात् उपलभ्यमानत्वात् विस्फुलिङ्गत्वम् । **तस्मिन्....जुह्वति** । आदित्यादिलक्षणसमिदाद्युपेते द्युलोकलक्षणाग्नौ **देवाः** इन्द्रियाणि **श्रद्धां**

---

पूर्वं ब्राह्मणगतत्वाभावात् अन्यतस्ते तदधिगमस्य दुर्वचत्वात् त्वत्प्रार्थनामनुसृत्य प्रवक्ष्यामि । अतश्चिरं वसेति भावः ।

अग्नीन् पञ्च वदन् तदनुगुणं समिद्धूमादिकमपि कल्पयति असावित्यादिना । वाजसनेयके एतदपेक्षया कल्पनावैषम्यं किञ्चिदस्तीति अनुष्ठाने विकल्पः कल्प्यः । देवाः इन्द्रियाणीति । ननु वाजसनेयपञ्चाग्निविद्यायाम्, 'मृतं पुरुषं दाहाग्नये हर्तुं देवा अग्नौ जुह्वति' इत्युक्तम् । न हि तत्र देवा इन्द्रियाणि । इन्द्रियाणां मरणकाल एव जीवेन सह निष्क्रान्तत्वादिति चेत्—यत्र येषां होमकर्तृत्वं

राजा संभवति ॥ २ ॥ इति पञ्चमाध्याये चतुर्थः खण्डः ।

'श्रद्धा वा आपः' इति श्रुतेः श्रद्धाशब्दिता अपो जुह्वति । आत्मधर्मभूत-बुद्धिविशेषलक्षणश्रद्धाया होतव्यत्वासंभवात् श्रद्धाशब्देन आप एवो-च्यन्त इति द्रष्टव्यम् । न चेन्द्रियाणां द्युलोकाग्नौ भूतसूक्ष्मरूपाहुति-प्रक्षेपकर्तृत्वं कथमिति वाच्यम्—इन्द्रियाणामभावे भूतसूक्ष्माणां जीवं परिष्वज्य द्युलोकगमनासंभवादिन्द्रियाणां होतृत्वमुपपद्य इति द्रष्टव्यम् । द्युलोकादिप्रापककर्मणामिन्द्रियाधीनत्वाद्वा तथोक्ति(क्तं) इति द्रष्टव्यम् । **तस्या आहुतेः सोमो राजा संभवति** । एवं स्वकर्मभिर्द्युलोकं गतो जीवः स्वर्गभोगयोग्यदिव्यदेहयुक्तो भवतीत्यर्थः । न च अप्छब्दितानां भूतसूक्ष्माणां सोमराजभावे कथिते कथं जीवस्य सोमराजभाव उच्यत इति वाच्यम्—उत्तरत्र पितृयाणे, 'एष सोमो राजा' इति चन्द्रमसं प्राप्तस्य जीवस्य सोमराजभावश्रवणात् अत्र निर्दिश्यमानसोमराजभाव-स्यापि भूतसूक्ष्मपरिष्वक्तजीवविषयत्वात् । ५-४

---

संभवति, तत्र तेषामौचित्यात् देवशब्देन ग्रहणमस्तु । यद्वा तत्रापि मृतेन्द्रियाग्रहणेऽपि संस्कर्त्रिन्द्रियग्रहणसंभवात् देवशब्दस्यैकार्थ्यं न भज्यते । वस्तुतो मृतभोगसाधनप्रवृत्ततदिन्द्रियाद्यधिष्ठातृदेवता-पर्यन्तार्थकत्वात् देवपदस्य दाहादिशव्यकर्मापि तदधीनमेवेति। श्रद्धा वा आप इति । अत्र, 'मनसा सृष्टा आपश्च वरुणश्च । आपो ह्यस्मै श्रद्धां संनमन्ते पुण्याय कर्मणे (२-१-७.)' इति ऐतरेयोपनिषदप्य-नुसंधेया । श्रद्धा = आस्तिक्यम् । अस्ति परलोक इति बुद्धिमत एव हि भूतसूक्ष्मं परलोकं गच्छेदिति श्रद्धापदेन तादृश्य आप उच्यन्ते । होम्यतादशायामपि जीवः सश्रद्धः । उपपादितश्च शाङ्करे, अर्चिरा-दिना धूमादिना च गच्छतां वासनाज्ञानेन सविज्ञानत्वम्, न त्वव-

## पञ्चमे पञ्चमः खण्डः

पर्जन्यो वाव गौतमाग्निः; तस्य वायुरेव समित् अभ्रं धूमो विद्युदर्चिः अशनिरङ्गाराः ह्रादुनयो विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवाः सोमँ राजानं जुह्वति। तस्या आहुतेर्वर्षँ संभवति।

इति पञ्चमाध्याये पञ्चमः खण्डः।

## पञ्चमे षष्ठः खण्डः

पृथिवी वाव गौतमाग्निः; तस्याः संवत्सर एव समित् आकाशो

---

**पर्जन्यो...विस्फुलिङ्गाः।** **पर्जन्यो** वृष्टिप्रवर्तको देवः। **ह्रादुनयः** मेघगर्जितानि। शिष्टं स्पष्टम्। अत्र वाय्वादीनां समिदादिकल्पनानिमित्तं यथायोग्यमन्वेषणीयम्। **तस्मिन्...वर्षं संभवति।** द्युलोकभोगनिमित्तकर्मावसाने सोमराजशब्दितः स देहो द्रवीभूय सह जीवेन मेघमण्डले पततीत्यर्थः। ५-५.

**पृथिवी...विस्फुलिङ्गाः।** **तस्याः संवत्सर एव समित्।** संवत्सरेण कालेन समिद्धा हि पृथिवी सस्यादिनिष्पत्तये भवति रात्रि-

---

रोहकाल इव मूर्च्छितत्वमिति अवरोहप्रकरणान्ते। श्रद्धाफलञ्च सोमराजभावादि, 'यो यच्छ्रद्धः स एव सः' इति। एवं संपरिष्वक्तस्य द्युलोकरंहणमेवात्र तस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति दर्शितम्। श्रद्धानुष्ठितकर्माणं जीवं श्रद्धापदेन कथयदिदं वाक्यं भूतसूक्ष्मादिविशिष्टतया गतं कथयतीति ॥ सोमस्य चन्द्रस्य एतत्कर्मगमनात् प्राक् आगमनादूर्ध्वञ्च स्थितत्वात् तदा सोमराजोत्पत्त्ययोगादाह स्वर्भोगेति। चन्द्रमसं प्राप्तः चन्द्रतुल्यं भोग्यो भवतीति एवमुच्यत इति भावः। अन्यथा चन्द्रत्वस्यैव स्वीकारे उपरि सोमं राजानं जुह्वतीत्यत्रापि तथा स्वीकार्यतया चन्द्रलोप-नानाचन्द्रस्वीकारापत्तेश्च।

धूमो रात्रिरर्चिः दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ॥ १ ॥
तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति। तस्या आहुतेरन्नं संभवति ॥

इति पञ्चमाध्याये षष्ठः खण्डः।

पञ्चमे सप्तमः खण्डः

पुरुषो वाव गौतमाग्निः; तस्य वागेव समित् प्राणो धूमो जिह्वाऽर्चिः चक्षुरङ्गारा श्रोत्रं विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति। तस्या आहुते रेतः संभवति ॥ २ ॥

इति पञ्चमाध्याये सप्तमः खण्डः।

पञ्चमे अष्टमः खण्डः

योषा वाव गौतमाग्निः; तस्या उपस्थ एव समित् उपमन्त्रयते स धूमो योनिरर्चिः, यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥ १ ॥ तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति। तस्या आहुतेर्गर्भः

---

**र्चिः**। नीलरूपाश्रयपृथिव्यग्नेरनुरूपत्वात् रात्रेरर्चिष्ट्वम्। **तस्मिन्... संभवति**। श्रद्धाशब्दवाच्यानि भूतसूक्ष्माणि इन्द्रियसंयुक्तानि स्वर्गभोगयोग्यदेहाकारेण परिणतानि सुकृतक्षये द्रवीभूतानि सन्ति पर्जन्यमवाप्य (पर्जन्यरूपाग्निं प्राप्य) (पृथिवीरूपाग्निं) वर्षरूपाणि भूत्वा पृथिवीं प्राप्य व्रीहियवाद्यन्नानि भवन्तीत्यर्थः। ५-६

**पुरुषो....विस्फुलिङ्गाः। तस्य वागेव समित्**। वाचा हि समिध्यते पुरुषः; नावाग्मी। अतो वाक् समित्। एवमन्यत् द्रष्टव्यम्। **तस्मिन्....संभवति**। एवं व्रीह्याद्यन्नरूपाणि भूतसूक्ष्माणि जीवसंश्लिष्टानि पुरुषेणाद्यमानानि पुरुषे रेतोरूपेण परिणमन्त इत्यर्थः॥ ५-७

**योषा....विस्फुलिङ्गाः**। उपमन्त्रणं संकेतकरणम्। लोहितत्वात् योनेरर्चिष्ट्वम्। **अन्तः करणं** मिथुनीकरणम्। **अभिनन्दाः**

**एव हरन्ति यत एवेतो यतः संभूतो भवति ॥ २ ॥**

इति पञ्चमाध्याये नवमः खण्डः

---

सृत्य — यतः द्युलोकपर्जन्याद्यग्नेः इतः इहाऽऽगतः, यतश्च योषिद्रूपाग्नेः संभूतः उत्पन्नः—तस्मा अग्नय एव देवा हरन्ति । ततश्च द्युपर्जन्यपृथिवीपुरुषयोषित्सु पुनरपि संभ्रमतीत्यर्थः ।

---

समशीलवाक्येनाग्निदाहस्यैवोक्तत्वात् । तत् कथं द्युपजन्येत्यादिना अन्यथा व्याख्यानमिति चेत्—

उच्यते । वाजसनेयके, 'यत एवेतो यतः संभूतः' इतीदृशं वाक्यं तावन्न श्रूयते । तस्मात् तत्र स एव स्वरसार्थः । इह तु अत्र वाक्ये यच्छब्दद्वये पञ्चाग्निग्रहणात् यच्छब्दार्थवाचिना अग्नय इति पदेनापि पञ्चाग्निग्रहणमेव कार्यम् । न च प्रेतशब्दो मृतशरीरमात्रवाची । तादृशजीवस्यैव योगतस्तन्मुख्यार्थत्वात् । एवञ्च क्रियासमभिहारेण जीवस्य गतागतप्राप्तिरुच्यत इति विशेषार्थलाभादेवं व्याख्यातम् । शाङ्करे तु पञ्चानामग्नीनां मृतदाहाग्नेश्चाग्नित्वेनाभेदकल्पनया, 'यत एवेत' इतिवाक्यनिर्वाहः कृतः । तदपेक्षयाऽयं स्वरसोऽर्थः । वाजसनेयके, 'एनमग्नये हरन्ति' इत्येव श्रवणात् इतश्शब्दाभावात् । अत्र इतोऽग्नय एव हरन्तीति तच्छ्रवणात् । न हि इतश्शब्दस्य गृहादित्यर्थः ; किंतु भूलोकादिति । अतोऽग्नय इति द्युलोकाग्निपरम् । 'यतोऽग्नेरागतः, तस्मै अग्नये हरन्ति ; यतः यस्मादेवं हरणात् पुनः संभूतो भवति' इत्यर्थोऽपि स्यात् । तदाऽपि द्युलोकाग्निपरत्वमेव ; न तु दाहकाग्निपरत्वम् । 'यतः संभूतः—यतो देशादयं जातः, तं देशं यत एवेतो भवति यादृशाग्नितः प्राप्तो भवति, तस्मै दाहकाग्नये हरन्तीत्येवंरीत्या कश्चिदर्थोऽस्त्विति चेत्—एवमपि इतोऽग्नय इत्यत्र इतःपदं न समर्थितमिति कृतं क्लेशेन । ननु भवन्तीति इतिशब्दान्तेन वेदपञ्चाग्न्युपदेशस्य समापितत्वात् स

**तद्य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते—तेऽर्चिष-**

अयञ्चोपन्यासो वैराग्यहेतोः। कष्टं हि मातुः कुक्षौ मूत्रपुरीषवात-पित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्य(शीर्षस्य) [1]उल्बाशुचिपटा(पूया)-वृतस्य शुक्लशोणितबीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्धमानस्य निरुद्धवीर्यबलशक्तितेज.प्रज्ञाचेष्टस्य बहुकालं शयनम्, ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिः, कर्मणोपात्तं यावत् आयुः तावदेव जीवनम्, पुनरपि घटीयन्त्रकुण्डिकान्यायेन आरोहणावरोहणलक्षणं भ्रमणं हि श्रूयमाणं वैराग्यमापादयति। अत एतदुपन्यस्तमिति द्रष्टव्यम्।

अथ, 'वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तने' इति तृतीयं प्रश्नं प्रतिवक्ति **तद्य....अभिसंभवन्ति**। प्राक्प्रस्तुतस्य संसरतो

---

उल्बेत्यादि किमर्थमित्यत्राह अयञ्चेति।

प्राक् प्रस्तुतस्येति। ननु कुत्र पूर्वं जीवः प्रस्तुतः। श्रद्धां जुह्वतीति आपः किल प्रस्तुताः। तासां तत्रतत्र परिणामभेदः पुरुषात्मकपरिणामपर्यन्त उक्तः। किञ्चास्याः पञ्चाग्निविद्यात्वात् अग्निपञ्चकवेदनमेव वक्तुं युक्तम्। वक्ष्यते च, 'य एतानेवं पञ्चाग्नीन् वेद' इति। अतः तदिति अग्निपञ्चकं समाहृत्योच्यते। इत्थमिति च तत्तदग्निभेदभिन्नादित्यादिसमिदादिप्रकारः। यद्वा तच्छब्दो नातीवाऽऽदृत्यः। अर्थविशेषाभावेऽपि पूर्वेण सहैकमहावाक्यत्वमात्रतात्पर्येण बहुलमिह तत्पदप्रयोगात्। यथा, 'तदुह जानश्रुतिः पौत्रा-

---

1 अत्र शांकरं द्रष्टव्यम्, विशकलित-तत्तत्संग्रहरूपत्वादस्य ग्रन्थस्य। न्यायसिद्धाञ्जनमपि।

यणः षट्छतानि', 'तद्य इह रमणीयचरणाः' इत्येवम्। अस्तु वाऽर्थः; तथाऽपि तत् तत्र=एवं संसरत्सु पुरुषेषु मध्ये ये एवं केचिद्विदुरित्यर्थः स्यात्। अतो न जीवस्वरूपं तच्छब्दार्थ इति—अत्रोच्यते। इह तावत् विदुरिति कर्मसाकाङ्क्षम्। इत्थंशब्दश्च एतत्प्रकारकमिति विशेषणभूतार्थस्वरसं न विशेष्यवाचि। तत्पदञ्च न निरर्थकम्; नापि स्वरसतः सप्तम्यन्तमिति द्वितीयान्तं तत् विशेष्यवाचि। तत्र वेदनफलस्येह कीर्तनात् प्राप्यस्योपास्यत्वौचित्यात् प्राप्यं तच्छब्देन ग्रहीतुमुचितम्। जीवश्च मुक्तौ प्राप्यः। न च स न पूर्वोक्तः, येन तद्वृत्तं तं न परामृशेत्। 'श्रद्धां जुह्वति', 'आपः पुरुषवचसः' इत्यादौ श्रद्धादिपदं हि भूतसूक्ष्मविशिष्टजीवपरम्। 'य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते—एष सोमो राजा' इति सोमराजत्वेनेष्टादिकारिणामुक्तत्वात् अत्रापि श्रद्धायाः सोमराजभावकथनेन श्रद्धापदादिष्टादिकारिणां प्रतीतेः। तदिदम्, 'अश्रुतत्वादिति चेन्न; इष्टादिकारिणां प्रतीतेः' इति सूत्रितमेव। शरीरवाचिनां शरीरपर्यन्तत्वनयाच्च श्रद्धादिपदं विशिष्टजीवपरम्। तत्र इत्थमिति पदेन भूतसूक्ष्मशरीरकत्वरूपप्रकारस्यापि सुवचतया तु प्राप्यस्वरूपमात्रपरं तदितीष्यते। ब्रह्मवित्तमं गौतमं प्रति प्रवाहणोपदेशाच्च तदिति गौतमेनापि विदितं श्रुतिप्रसिद्धं जीवस्वरूपं सुग्रहम्। ननु, 'स एनान् ब्रह्म गमयति' इति ब्रह्मणः प्राप्यत्वश्रवणात् गौतमविदितप्रसिद्धतमब्रह्मपरमेव तत्पदमस्तु। न च तन्न पूर्वोक्तम्। अपर्यवसानवृत्त्या श्रद्धादिपदस्यापि ब्रह्मपर्यन्तत्वात्। विशिष्टस्यैव कार्यत्वादिति चेन्न—तथासति, 'ये चेमेऽरण्ये' इति विशिष्य ब्रह्मविशेष्यकोपासनोक्तेर्वैयर्थ्यप्रसङ्गात्। तेन ब्रह्मेतरविशेष्यकमिदमुपासनमिति लाभात्।

नन्वेवं तत् जीवस्वरूपं इत्थं पञ्चाग्निहोम्यसूक्ष्मशरीरकत्वेन ये विदुरित्यर्थस्वीकारे ब्रह्मणोऽनुशासनान्न ब्रह्मप्राप्तिसंभवः। न चेत्थ-

जीवस्य स्वरूपं तदित्यनेन परामृश्यते । तत् प्रत्यगात्मस्वरूपं ये इत्थम्
उक्तप्रकारेण--द्युपर्जन्यपृथ्वीपुरुषयोषित्सु श्रद्धासोमवृष्ट्यन्नरेतश्शरीर-
कतया देहादिलक्षणप्रकृतिविविक्ततया च ये, विदुरित्यर्थः । अत्र
ब्रह्मात्मकतया चेत्यपि योजनीयम् । भाष्यकृता, 'अप्रतीकालम्बनान्...'
इति सूत्रे, "पञ्चाग्निविदोऽर्चिरादिना गतिश्रवणात्, अर्चिरादिना
गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च । अत एव तत्क्रतुन्यायेन प्रकृति-
विनिर्मुक्तब्रह्मात्मकात्मानुसंधानं सिद्धम्" इति हि भाषितम् ।

---

मिति ब्रह्मात्मकत्वप्रकारपरम् । तदंशस्य प्रकरणादप्रतीतेः ; अत
एव ब्रह्मात्मकतया चेत्यपि योजनीयमित्युक्तमिति चेन्न ; तच्छब्देन
यथावस्थितात्मस्वरूपस्य विवक्षितत्वात् आत्मयाथात्म्यस्य च ज्ञाना-
नन्दत्वादिरूपत्ववत् परमात्मशेषत्व-तदपृथक्सिद्धत्वादिरूपताया अपि
सत्त्वेन आत्मयाथात्म्यानुसंधाने ब्रह्मणो विशेषणतया प्रविष्टत्वात् ।
अत एव ब्रह्मात्मकस्वात्मानुसंधानं पञ्चाग्निविद्यायामिति संप्रदायः ।
अन्यत्र त्वन्तरात्मशब्दवाच्यब्रह्मविशेष्यकत्वकण्ठोक्त्या ब्रह्मणो विशेष्य-
तयाऽनुसंधानमावश्यकम् । अत्र भाष्ये, "प्रकृतिविविक्ततयेति,
ब्रह्मात्मकतया च" इति च विवरणम्, 'विविक्ते चिदचिद्वस्तुनी'
इति गीताभाष्य(८-२३) अप्रतीकालम्बनसूत्रभाष्यादि मनसिकृत्य ।
न तु इत्थंशब्दस्यैव तत्तदर्थकतया । पञ्चाग्निहोम्यभूतसूक्ष्मशरीरकत्व-
रूपेत्थंशब्दार्थेन एव तद्विविक्तत्वस्य, तच्छब्दार्थशोधनत एव
ब्रह्मात्मकत्वस्य च लब्धत्वादिति । न तु तत्पदं पञ्चाग्निपरम् ; तेषां
होमाधारतयोपसर्जनत्वात् । जीवोपासनस्य सर्वविद्यासाधारण्यात्तु
इतरविद्याव्यावृत्तिस्फुटप्रतिपत्तये तु विशेषणभूताग्निग्रहणेन पञ्चा-
ग्नीन् वेदेत्येतदनुसृत्य पञ्चाग्निविद्येति नाम ।

यद्यपि स्यात्--तत्पदं श्रद्धासोमवर्षान्नरेतःपदानुस्यूतप्रा-

**ये च....उपासते।** अरण्ये स्थित्वा श्रद्धां पुरस्कृत्य **तप**श्शब्दितं ब्रह्मोपासत इत्यर्थः। **वाजसनेयके समानप्रकरणे,** 'श्रद्धां सत्यमुपासते' इति श्रवणात्, **सत्यशब्दस्य** ब्रह्मपरत्वात् **तपश्शब्दो**ऽपि ब्रह्मपरः। **"आनयमः सर्वेषाम्...."** इत्यधिकरणे **भगवता भाष्यकृता,** 'तद्य इत्थं विदुः' 'य एवमेतद्विदुः' इति **पञ्चाग्निविद्या**निष्ठान्, 'ये चेमे' इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्चोद्दिश्यार्चिरादिका गतिरुपदिश्यते। 'सत्यं ज्ञानमनन्तं ब्रह्म', 'सत्यं त्वेव विजिज्ञासितव्यम्' इति **सत्यशब्दस्य** ब्रह्मणि प्रसिद्धेः तपश्शब्दस्यापि तेनैकार्थ्यात् **सत्यतपश्शब्दाभ्यां** ब्रह्माभिधीयते। श्रद्धापूर्वकं

---

मुक्तभूतसूक्ष्मपरम्; इत्थमिति च पञ्चाग्निहोम्यत्वपरम्। तत्र, 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इत्युक्तत्वात् श्रद्धामयकर्मिशरीरस्य तद्भोगसाधनप्रवृत्तेन्द्रियहोम्यत्वावगमात् जीवानुसंधानं सिद्धमेव। यद्वा तदिति समाहारवशात् जीवभूतसूक्ष्मोभयपरम्; इत्थमिति च तयोर्विविक्तत्वपरं यथागीताभाष्यम्। अथवा तदिति अग्निपञ्चकपरम्; इत्थमिति समिदादिप्रकारवत् जीवसंश्लिष्टभूतसूक्ष्महोमाधारत्वरूपप्रकारस्यापि बोधकम्। अपि वा, 'एवंवित्', 'इत्थंवित्' इत्यादाविव इत्थपदमेव विशेष्यान्तरनिरपेक्षं उक्तप्रकारविशिष्टोक्तविशेष्यपर्यन्तपरं सत् विदुरित्यस्य कर्म। तत्र च सर्वत्र जीवस्य प्राप्याकारेणानुसंधाने ब्रह्मात्मकत्वमप्यनुप्रविष्टमिति—तथापि अनियमाधिकरणश्रुतप्रकाशिकाधृतस्मृतिवचने उक्तच्छान्दोग्यवाजसनेयकवाक्यविवरणरूपे, 'य एवमेतं जानन्ति' इति निर्देशस्वरसात् तदर्थं स्वात्मानमित्यध्याहारे गौरवाच्च तदिति जीवपरं वर्णितमिति। तत्रैव श्रद्धादिपदार्थतदन्वयप्रकारोऽपि द्रष्टव्यः। अन्यथा श्रद्धापदं लक्ष्मीपरत्वे स्वरसान्वयमिति।

भभिसंभवन्ति, अर्चिषोऽहः, अह्न आपूर्यमाणपक्षम्, आपूर्यमाणपक्षात् यान् षडुदङ्ङेति मासाँस्तान्॥१॥ मासेभ्यः संवत्सरँ, संवत्सरादादित्यम्, आदित्याच्चन्द्रमसम्, चन्द्रमसो विद्युतम्। तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति। एष देवयानः पन्था इति ॥ २ ॥

ब्रह्मोपासनञ्चान्यत्र श्रुतम्; 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्युपक्रम्य, 'श्रद्धा त्वेव विजिज्ञासितव्या' इति श्रुतेः" इति हि **भाषितम्।** उक्तं च **व्यासार्यैः,** "परमं यो महत् तप इत्यादिषु **तपश्शब्दस्य** ब्रह्मपरत्वम्" इति। अत्र **वाजसनेयके,** 'श्रद्धां सत्यम्' इति **श्रद्धाशब्दस्य** द्वितीयान्तत्वश्रवणात् इहापि **श्रद्धाशब्दो** द्वितीयान्तः। छान्दसत्वात्, 'सुपां सुलुक्' इति सुपो लुक्। ततश्च पुरस्कृत्येऽध्याहारः। श्रद्धां पुरस्कृत्य ब्रह्मोपासत इत्यर्थः। **इतिस्त्वविवक्षितः।** अथवा एवकारोऽत्राध्याहर्तव्यः। ब्रह्मेत्येव य उपासत इत्यर्थः। ततश्च अब्रह्मोपासनव्यावृत्तिफलकोऽयमिति शब्दो द्रष्टव्यः। यद्वा **श्रद्धातपश्शब्दयोः** प्रसिद्ध एवार्थः। श्रद्धातपःपरायणानाञ्च ब्रह्मविद्यानिष्ठत्वमर्थसिद्धम्। ततश्च ब्रह्मविद्यानिष्ठा इत्यर्थः फलति। अयमप्यर्थः, "तदप्यविरुद्धम्। आर्थत्वादपि शाब्दत्वं संभवत् युक्ततमम् (भवतीति उक्तम्)" इति वदतां **व्यासार्याणा**मनुमत एव।

**तेऽर्चिषमभिसंभवन्ति।** अर्चिर्देवतामातिवाहिकतया प्राप्नुवन्ती(प्राप्नोती)त्यर्थः। अत्र **अर्चिरादिशब्दाः** तत(अन्यत्र त)दभिमानिदेवतापराः। **तत्पुरुषो...गमयति।** **तत्पुरुषः** वैद्युतः पुरुषः, [स **एव]** **अमानवः** असंसारी ब्रह्मलोकादागत्य **एनान्** पूर्वोक्तद्विविधोपा-

**अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति, धूमाद्रात्रिम्, रात्रेरपरपक्षम्, अपरपक्षात् यान् षड् दक्षिणैति मासाँस्तान्—नैते संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥**

**मासेभ्यः पितृलोकम्, पितृलोकादाकाशम्, आकाशाच्चन्द्रमसम्। एष सोमो राजा; तद् देवानामन्नम्; तं देवा भक्षयन्ति ॥४॥**

---

सकाान् ब्रह्मलोकं प्रापयतीत्यर्थः। 'अमानवस्स एत्य ब्रह्मलोकान् गमयति' इति श्रुत्यन्तरे श्रवणात्। **एष देवयानः पन्था इति**। स्पष्टोऽर्थः॥

**अथ....प्राप्नुवन्ति**। ये पुरुषाः ग्राम एव स्थिताः (स्थित्वा)। **इष्टं** यागादि; **पूर्तं** खातादि। **दत्तं** दानम्। **इति**शब्दः तज्जातीयोपवासादिकर्मान्तरपरः। यागदानहोमादीनि कर्माणि येऽनुतिष्ठन्तीत्यर्थः। 'उक्तप्रकारेणानुतिष्ठन्तीत्यर्थः' इति व्यासार्यवचनस्याप्ययमेवार्थः। श्रुतौ पूर्वमनुष्ठानप्रकारानननुवृत्तेः। यद्वा श्रद्धापूर्वकत्वरूपोक्तप्रकारवाची **इति** शब्दः। **ते धूममभिसंभवन्ति** धूमदेवतां प्रतिपद्यन्ते आतिवाहिकत्वेनेत्यर्थः। अत्रापि **धूमादि**शब्दाः तत्तदभिमानिदेवतापराः। **दक्षिणैति** दक्षिणां दिशमादित्य एति। "दक्षिणादाच्" इति आजन्तोऽयं शब्दः। दक्षिणायनमासाभिमानिदेवताः प्रतिपद्यन्त इत्यर्थः। **नैते संवत्सरमभिप्राप्नुवन्ति**। **एते** इष्टादिकेवलकर्मकारिणः दक्षिणायनमासान् प्राप्यापि विद्वांस इव न संवत्सरदेवतां प्राप्नुवन्तीत्यर्थः। पुनः किं प्राप्नुवन्तीत्यत्राह **मासेभ्यः....चन्द्रमसम्**। स्पष्टोऽर्थः। एतेन, 'वेत्थ यदितोऽधि प्रजाः प्रयन्ति' इति प्रथमः[च] प्रश्नः प्रत्युक्तो भवति। **एष सोमो राजा**। अत्र **एष** इत्यनेन नं अभिसंभाव्यश्चन्द्रमाः परामृश्यते। चन्द्रमसः सोमराज-

तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते

भावोपदेशस्य व्यर्थत्वात् । अपि तु इष्टादिकारी अभिसं-न्विता परो-दृश्यते । 'तस्या आहुतेः सोमो राजा संभवति' इति न्यायेन स्वर्भोग(स्वर्गभोग)योग्यदिव्यदेहयुक्तो भवतीत्यर्थः । तद् देवानामन्नम् । अन्नवत् स देवानामुपकरणभूतो भवतीत्यर्थः । तं देवा भक्षयन्ति । तं इष्टादिकारिणं देवभाव(ग)मुपगतं आजानसिद्धा देवा भक्षयन्ति स्वकैङ्कर्येषु पशूनिव [वि]नियुञ्जत इत्यर्थः । सूत्रितश्च, 'भाक्तं वाऽनात्मवित्त्वात्' इति ।

**तस्मिन् यावत्संपातमुषित्वा ।** संपतत्यनेनेति संपातः कर्म[वि?]-शेषः । यावत्कर्म[मवि?]शेषमुषित्वेत्यर्थः । यावच्छब्दः साकल्यार्थः ।

---

अभिसंभवितेति । एष इत्येकवचनमपि सोमो राजेत्येतदनु-सारादिति भावः । एष इत्यस्य एवं चन्द्रमसं प्राप्त इत्यर्थात् सोम-राजत्वं तस्य गौणम् । यावत्संपातमित्यस्य पतनपर्यन्तमित्यर्थे तत्पदं व्यर्थम् । पतनार्हद्रव्यं क्वचिदुच्यते, यथा, 'मन्थे संपातमवनयेत्' इति प्राक् । तदत्रानन्वितम् । अतोऽन्यथा व्याख्याति संपतन्तीति । अत्र शाङ्करे संपतन्ति येनेति संपातः कर्मक्षय इत्युक्तम् । एवञ्च कर्मक्षयं यावदित्युक्तौ, 'प्राप्यान्तं कर्मणः' इति वाक्यसमानार्थकत्वं भवत्येव । श्रीभाष्ये तु, 'संपतन्त्यनेन स्वर्गं लोकमिति संपातः कर्मोच्यते' इति पूर्वमुक्त्वा पश्चात्, 'यावत्संपातमिति फलदानप्रवृत्त-कर्मविशेषविषयम्' इत्युक्तम् । संपातः कर्मशेष इति व्याख्या तु न कुत्रापि । यदि तु संपतन्त्यनेन भुवमिति संपातः पुनरावृत्तिहेतुः कर्मेति, पूर्वं संपातो हुतशेष इतिवत्, कर्मशेष उच्यते, तदा तस्य निवर्तन्त इत्यत्रान्वयः स्यात्, न तु उषित्वेत्यत्र । अतः संपातः

यथेतमाकाशम् , आकाशाद्वायुम् ।

साकल्यश्च फलदानप्रवृत्तकर्मविशेषविषयम् ; न तु सर्वकर्मविषयम् [द्रष्टव्यम्] । 'वेत्थ यथा पुनरावर्तन्त' इति द्वितीयप्रश्नं प्रतिवक्ति **अथैत.... यथेतम्** । **अथ** अनन्तरं **एतमेवाध्वानं** धूमादिमार्गं **यथेतं** यथागतं पुनर्निवर्तन्ते । धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशक्रमेणाऽऽरोहणात् तेनैव विपरीतक्रमेणावरोहणे प्राप्ते, अत्र विशेषमाह **आकाशमाकाशाद्वायुम्** । यथा आरोहणे आकाशाच्चन्द्रमसमभिसंभवन्ति, एवमवरोहणे चन्द्रमस आकाशमभिसंभवन्ति । आरोहणावरोहणयोराकाशाभिसंभवस्त्वविशिष्ट इति भावः । **आकाशाद्वायुम्** अभिसंभवन्तीति शेषः । अत्र, 'वायुर्भूत्वा धूमो भवति' इत्युत्तरश्रवणात् अत्राप्यवरोहन्त आकाशो भवन्ति । वायुर्भवन्तीत्येवार्थः

---

कर्मविशेषः । यावत्कर्मविशेषमुषित्वेति पाठः स्यात् , भाष्यानुरोधात् यद्वा पूर्वं देवभक्ष्यमाणत्ववचनेन कर्मफलं दर्शितमेव । तत्कर्मणि यः शेषः तत्पर्यन्तमुषित्वेत्यर्थ इति । साकल्यार्थक इति । संपातयावदिति यावच्छब्दस्यावध्यर्थकत्वेऽपि कर्मविशेषसत्तापर्यन्तमुषित्वेति समन्वितमेव । साकल्यपक्षेऽपि सर्वकर्मविषयकता भवतीत्यस्य व्यक्तये त्वेवं व्याख्यातम् ; 'यत् किञ्चेह करोत्यय' इति साकल्यदर्शिबृहदारण्यकानुरोधात् । साकल्यकण्ठोक्तिपक्षे च यावन्तः संपाताः कर्मविशेषाः तावतः प्रति उषित्वेत्यर्थः । अत्र पूर्ववत् पाठतत्त्वं परीक्ष्यं वा । यथेतम् । इतं = गतम् । गमनमनतिक्रम्य

उत्तरत्रेति । पूर्वमपि सोमो राजा भवतीति सादृश्यमू भवनमुक्तमिति ध्येयम् ।

वायुर्भूत्वा धूमो भवति; धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥
अभ्रं भूत्वा मेघो भवति; मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओष-

---

अवरोहताश्च आकाशादिभवनं न तच्छरीरकत्वम् । सर्गाद्यकालमारभ्य आप्रलयमाकाशाद्यभिमानिदेवतानामन्यासां क्लृप्तानां सत्त्वेन प्रतिक्षण-मवरोहतामाकाशाद्यभिमानिदेवतात्वानुपपत्तेः । अतः तत्सादृश्यमेवार्थः । या आपः चन्द्रमण्डले दिव्यशरीरमारब्धवत्यः, तासां कर्मक्षये द्रवीभूतानामाकाशगतानां भेदकाकारप्रहाणेनाकाशसादृश्ये तदुपश्लिष्टा जीवा अपि आकाशसमा [इति] उच्यन्ते । ताश्चाऽऽप इतश्चामुतश्च वायुना नीयमाना वायुसमा भवन्ति । ततश्च तत्संश्लिष्टो जीवोऽपि वायुर्भवतीत्युच्यते । एवमुत्तरत्रापि द्रष्टव्यम् ।

**वायु....भवति ।** अपो बिभर्तीत्यभ्रम् । मूलविभुजादित्वात् कः । ततश्चाभ्रशब्देन जलधारणावस्थोच्यते । 'मिह सेचने' इति धातोः पचाद्यच्प्रत्यये न्यङ्क्वादित्वात् कुत्वे **मेघ** इति रूपम् । ततश्च **मेघशब्देन** वर्षोन्मुखावस्थोच्यते । एवमेवाभ्रमेघयोर्भेदो **व्यासार्यै**रुक्तः । **मेघो भूत्वा प्रवर्षति ।** मेघसंश्लिष्टो भूत्वा वर्षधारारूपेण भूमौ पततीति फलितार्थः । **त इह....जायन्ते ।** ते वर्षसंश्लिष्टभूतसूक्ष्मपरिष्वक्ता

---

बहुवचनोपक्रमेऽपि धूमो भवतीत्येकवचनम्, 'स पुनरावृत्तः सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवतः', 'तिस्रो देवतास्त्रि-वृत्त्रिवृदेकैका भवति' इतिवत् विधेयानुसारात् । पुनरपि ते इति बहुवचनं प्रयोक्ष्यन एव । वाय्वादिः कदाचिदनेकोऽपि संश्लेष-वशादेकीभवितुमर्हति; न तथा व्रीह्यादय इति अत्र परमेकवचनम् । फलितार्थ इति । मेघभावात् मेघगतं वर्षणकर्तृत्वमस्योक्तमिति भावः।

धिवनस्पतयस्तिलमाषा इति जायन्ते । अतो वै खलु दुर्निष्प्रपतरम्,

जीवाः इह भूमौ, [पतित्वा], व्रीहियवादिरूपेण जायन्त इत्यर्थः । अत्र तेन रूपेण जननं नाम न स्थावरभावप्रतिपत्तिः, स्थावरत्वप्राप्तिहेतुभूतकर्मणामिहाकीर्तनात्, किंतु जीवान्तराधिष्ठितेषु व्रीह्यादिषु संश्लेषमात्रम् । सूत्रितश्च, 'अन्याधिष्ठिते पूर्ववदभिलापात्' इति ।

**अतो वै खलु दुर्निष्प्रपतरम्** । अतः स्थावरादिभावात् अतिचिरेण निर्गमनं भवतीत्यर्थः

अत्र खलन्तात् दुर्निष्प्रपतशब्दात् आतिशायनिके तरप्प्रत्यये, छान्दसे तशब्दलोपे दुर्निष्प्रपतरमिति रूपम् । ततश्चातिशयस्य प्रतियोग्याकाङ्क्षायां प्रागनुक्रान्ताकाशादीनां बुद्धौ संनिधानात् तेषामेव प्रतियोगित्वेनान्वयः स्यात् । ततश्च व्रीह्यादिष्वाकाशाद्यपेक्षया चिरावस्थानोक्त्या आकाशादिष्ववस्थानस्य तदपेक्षयाऽल्पकालत्वं पर्यवस्यति । उक्तश्च भगवता भाष्यकृता, 'छान्दसः तशब्दलोपः। दुर्निष्प्रपतरमिति

---

ननु भूमौ पतनार्थं प्रस्थितस्य मध्ये आकाशादिभावः संश्लेषरूपो युक्तः; न तु पतनानन्तरव्रीह्यादिभावोऽपि तथा; जायन्त इति जन्मस्वरसपदश्रवणाच्च । तत्राह अत्र तेनेति । अत इति । व्रीह्यादिभ्य इत्यर्थः । दुर्निष्प्रपतरमित्येकवचनं दुर्निष्प्रपतरं सत् तद्भूय एव भवतीत्युत्तरेणैकवाक्यत्वसिद्धये स्यात् । तत्रैकवचनं तु, 'यो रेतः सिञ्चति' इत्येतदनुसारात् । व्रीह्यादिभूतेषु सहस्राधिकेषु एकमेव दुःखेन निष्क्रम्य रेतस्सिग्भावं भजतीति तद्दौर्लभ्यसूचनार्थमप्येकवचनम् । एतावन्मूर्च्छितमचेतनप्रायमस्तीति ज्ञप्तये क्लीबनिर्देशः ।

अतिशयवाचितरब्ग्रहणेन एकतकारलोपे उक्ते भाष्यं प्रमाणयति उक्तश्चेति । शिष्येतरामिति भावे लिट् । प्रकर्षसंभवादिति । भावो

दुःखनिष्क्रमणतर'मित्यर्थः' इति । न च, 'तयोरेव कृत्यक्तखलर्थाः' इति खलो भावकर्ममात्रविषयत्वात् एतेश्चाकर्मकत्वेन भावार्थस्यैव परिशिष्टत्वात् तत्र च भावार्थस्य प्रकर्षाभावात् तरपो दौर्लभ्यमिति शङ्क्यम्— शिष्येतरामित्यादिप्रयोगात् भावार्थेऽपि प्रकर्षसंभवात् कर्त्रर्थपचाद्यजन्तात् तरपः संभवाच्च भाष्यस्य नानुपपत्तिः । यद्वा, 'आतो युच्', 'छन्दसि गत्यर्थेभ्यः' इति छन्दसि विशेषविहितखलर्थयुजन्त एवायं शब्दः । रेफरूपवर्णविकारः छान्दसः । नन्वस्य तरप्प्रत्ययत्वाभावे पूर्वनिर्दिष्टाकाशादिभ्योऽतिशय , तेष्वचिरावस्थानं वा कथं सिध्येदिति वाच्यम्— वैशब्दस्यावधारणार्थतया अतरशब्दितात् व्रीह्यादिभावादेव चिरं निष्क्रमणे कथिते ततः पूर्वनिर्दिष्टेभ्य आकाशादिभ्योऽचिरान्निष्क्रमणं सिध्यति । 'तशब्दलोपश्छान्दसः' इति भाष्यस्यापि वर्णलोपेन वा वर्णविकारेण वा यथाकथञ्चित् साधुत्वं समर्थनीयमित्यत्र तात्पर्यम् ।

व्रीह्यादयो हि गिरितटात् उदकस्रोतसा उह्यमानाः नदीं प्राप्नुवन्ति । ततः समुद्रम् । ततो मकरादिभिर्भक्ष्यन्ते । तेऽप्यन्यैः ।

---

धात्वर्थोऽतिशयार्हानर्हभेदेन द्विविधः । जातिरूपे भाव एव प्रकर्षवत्ता नास्तीति भावः । वस्तुत इहातिशयस्य दुःशब्दार्थे कृच्छ्रेऽन्वयान्नानुपपत्तिः । शाङ्करेऽप्येवमर्थ एवादृतः । प्रकारान्तरेण भाष्यं निर्वहति कर्त्रर्थेति । अत्र भावप्रकाशिकाऽपि द्रष्टव्या । तत्र लोपविकारौ विनैव साधुत्वमपि चिन्तितम् । खल् न भवतीति विमृश्य स्वयमन्यं पक्षमाह यद्वेति । खलोऽपवादभूते, 'आतो युच्' इति सूत्रे वार्तिकं, 'छन्दसि गत्यर्थेभ्यः' इति । तेन अकारान्तादपि खलर्थके युजेव भवति । तथाच दुर्निष्प्रपतनमिति प्रयोक्तव्ये तकारस्थाने रेफो वर्णविकार इति ।

**यो यो ह्यन्नमत्ति यो रेतः सिञ्चति, तद्भूय एव भवति ॥ ६ ॥**

---

तत्रैव च मकरेण सह समुद्रे विलीनाः समुद्राम्भोभिः सह जलधरैराकृष्टाः पुनर्वर्षधाराभिः मरुदेशे शिलातले वा(ऽगम्ये) हर्म्ये वा पतितास्तिष्ठन्ति। कदाचित् व्यालमृगादिपीताः, ते भक्षिताश्चान्यैः, तेऽप्यन्यैरित्येवंप्रकाराः परिवर्तेरन् । कदाचिदभक्ष्येषु स्थावरेषु जाताः तत्रैव शुष्येरन् । भक्ष्येष्वपि स्थावरेषु जातानां रेतस्सिग्देहसंबन्धो दुर्लभ एव बहुत्वात् स्थावराणामित्यतो दुर्निष्क्रमणत्वम् ।

**यो यो....भवति ।** अत्र स इत्यध्याहारः । यो व्रीह्यादिसंश्लिष्टोऽवरोहति(हन्) जीवः सः, यो[यो]ऽन्नमत्ति रेतः सिञ्चति भूयः

---

श्रुत्यर्थवैशद्याय शाङ्करग्रन्थमनुवदति व्रीह्यादयो हीत्यादिना। पीता इत्यस्य वर्षधारारूपा इति विशेष्यम् । ते व्यालमृगादयः । नन्वेतावता अन्यान्यसंक्रमस्यैव कथनात् व्रीह्याद्योषधिभ्यो दुर्निष्क्रमणत्वं कथमिति चेत्—दुर्निष्क्रमणत्वमिति शीघ्रं शरीरालाभमात्रविवक्षेति। यद्वा अन्नरूपपरिणाममन्तरा रेतोद्वारा शरीरप्राप्तिर्न भवतीति तदर्थो व्रीह्यादिभावः । तदेषां शरीरग्रहणार्थमवरुह्य व्रीह्यादिभूतानां यदि रेतस्सिग्योगमन्तरा प्रकारान्तरेण भूमौ विशीर्णता, तदा, तथा भुक्तत्वेऽपि कदाचित् मलादिरूपेण भूमिपतत्वे च, पुनरप्यन्नभावाय व्रीह्यादिसंश्लेष एवेति यावज्जन्म व्रीह्यादिभावाऽऽवृत्त्या दुर्निष्क्रमणत्वमिति । यो रेत इत्यत्र पदे यच्छन्दवीप्सानादरः, 'बालब्रह्मचारितपस्विस्थविरादीनामप्यन्तत्वात् अन्नसंबन्धमात्रेणापि नेष्टसिद्धिः, किन्तु अन्नान्तर्गतकतिपयसंबन्ध एव' इति ज्ञापनेन यो योऽन्नमत्ति, तत्र कोऽपि यो रेतः सिञ्चति तद्भाव एवेति योजनादर्शनाय। अथापि तत्रेत्यप्रयोगः भवतीतिपदेन

तद्य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनि-
मापद्येरन्, ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ

---

पश्चात् तत्....भवति। रेतस्सिग्भाव प्राप्नोति। आकाशादिभाववत्
रेतस्सिग्भावोऽप्यौपचारिकः। रेतस्सिग्योगी भवतीत्यर्थः। [एवमेव
व्यासार्यैरुक्तम्।]

तद्य....योनिं वा। तत् तेषु ये अभ्याशः अभ्यागन्तारः।
अभ्याङ्पूर्वात् अशेर्धातोः क्विबन्तात् बहुवचनान्तोऽयं शब्दः। पर-
लोकादिहलोकं प्रति अवतरन्त इत्यर्थः। हेति प्रसिद्धौ। यत् यदा।

---

सर्वैयच्छब्दान्वयस्यापि विवक्षया—'यो योऽन्नमत्ति तद्भवति, यो
रेतः सिञ्चति तद्भवति, इति। अत एव, 'तद्भूय एव भवति' इत्यस्य,
'रेतस्सिक्समानाकृतिरेव जायते। नरान्नरो वानराद्वानर इति रीत्या'
इति शाङ्करार्थो न स्वीकृतः। 'रेतस्सिग्योगोऽथ' इति सूत्रसंमतार्थ-
त्यागायोगाच्च। एवमेव व्यासार्यैरिति। अयं भावः—यच्छब्दप्रति-
संबन्धितच्छब्दस्य क्लीबता कथमित्याशङ्काप्रसङ्गाभावाय तद्भूय
इति एकमेव पदं सुस्वीकरम्। 'भुवो भावे' इति सूत्रात् क्यपि तस्य
भावस्तद्भूयम्। तद्भूयपदात् इह सप्तमी। तद्भूये=रेतस्सिग्भावे
सत्येव भवति=जायते। अन्यदा तु दुर्निष्क्रमणमेवेत्युक्तं भवति।
सूत्रे रेतस्सिग्योगपदञ्च तद्भूयशब्दविवरणरूपमिति—अथापि,
'बहुवचनान्तक्रियामध्ये भवतीत्येकवचनान्तप्रयोगोपपत्तये तदिति
पृथक् प्रथमान्तं युक्तम्। एवञ्च भूयश्शब्देन पूर्वं, 'इतोऽन्य एव
हरन्ति,—यतः संभूतो भवति' इत्यत्रेव पुनःपुनर्जननवचनात् वैराग्यं
वर्धितं भवति। भूयः=पश्चात्=पुनः इत्यर्थात् इति विमृश्य
व्यासार्यैरेवमुक्तम्। तदिति क्लीबं तु दुर्निष्प्रपतरमित्येतदनुसारात्।
अव्ययं वा तदिति।

यत् यदेति। ये यदा रमणीयचरणाः, ते तदा रमणीयजन्म-

य इह कपूयचरणा अभ्याशो ह यत् ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ॥ ७ ॥

अथैतयोः पथोर्न कतरेण चन, तानीमानि क्षुद्राण्यसकृदा-

---

**रमणीयचरणाः** । चर्यत इति चरणं कर्म । रमणीयकर्माणः=भुक्त-शिष्टपरिपक्वसुकृतकर्मयुक्ता भवन्तीत्यर्थः । अत्र यदाशब्दानुरोध तु(धेन) तदेत्यप्यध्याहर्तव्यम् । तदा ते रमणीयां ब्राह्मणादियोनिमाप्नुवन्तीत्यर्थः। **कपूयचरणाः** कुत्सितकर्माण इत्यर्थः । भुक्तशिष्टकर्मानुसारि जन्म प्राप्नुवन्तीत्यर्थः । [ शिष्टं स्पष्टम् । ]

'वेत्थ यथाऽसौ लोको न संपूर्यत' इति चतुर्थप्रश्नं प्रतिवक्ति **अथैतयोः....न संपूर्यते** । अथशब्दः प्रतिवचनान्तरोपक्रमे । यानि भूतानि उक्तयोरेतयोर्देवयानपितृयाणयोः पथोर्मध्ये **कतरेण चन** केनापि मार्गेण न गच्छन्ति,—मार्गद्वयप्राप्तिहेतुभूतविद्याकर्मरहिताः (रहितानि ?) इत्यर्थः—, **तानीमानि भूतानि क्षुद्राणि** दंशमशक-कीटादीनि असकृदावर्तीनि सन्ति, जायस्वम्रियस्वेति भवन्ति । पुनःपुनर्जायन्ते म्रियन्त इत्यर्थः । 'सक्तून् पिब धानाः खादेत्ययमभ्य-वहरति' इत्यस्य, पुनःपुनः पिबति पुनःपुनः खादतीति ह्यर्थः ; तद्वत् ।

---

भाजः इति यदातदाशब्दप्रयोगात् एकैकस्यापि कदाचित् गमनात् प्राक् रमणीयचरणत्वं कदाचित् तदा कपूयचरणत्वञ्च भवतीति ज्ञाप्यते । यत् इत्यस्य यदीत्यर्थे च, 'पदव्यत्यासेनान्वयः कल्प्यः' इति व्यासार्यदर्शितरीतिः ग्राह्या । चर्यत इतीति । चरणपदं रूढं वा भावे व्युत्पन्नं वा आचारपरम् । कर्मरूपार्थे कर्मकारके व्युत्पन्नम् ।

तानीमानीति उपरितच्छब्दघटितवाक्यारम्भात्, पूर्वं यानी-

पतंगा भूतानि भवन्ति जायस्व म्रियस्वेति—
एतत् तृतीयँ स्थानम्। तेनासौ लोको न संपूर्यते।

---

"क्रियासमभिहारे लोट्; लोटो हिस्वौ वा च तध्वमोः" इति पौनःपुन्ये[न्यलक्षण] क्रियासमभिहारे लोट; ट्) तध्वमोः हिस्वादेश-विधानात् जायस्वम्रियस्वेति रूपम्। 'यथाविध्यनुप्रयोगः पूर्वस्मिन्', 'समुच्चये सामान्यवचनस्य' इति भवन्तीति सामान्यशब्दस्यानुप्रयोगः। उक्तञ्च व्याचार्यैः, 'पुरीमवस्कन्द लुनीहि नन्दनमितिवत्' इति। एतत् तृतीयं स्थानम्। अत्र एतच्छब्देन, 'जायस्वम्रियस्वेति भूतानि भवन्ति' इति प्रथमान्तशब्देन प्रधानतया निर्दिष्टाः पापकर्माणः परामृश्यन्ते, सर्वनाम्नां पूर्वनिर्दिष्टप्रधानपरामर्शित्वात्। स्थानशब्दाभिप्रायेणैकवचनम्। पूर्वनिर्दिष्टद्युलोकब्रह्मलोकापेक्षया क्षुद्रजन्तुभवनादिलक्षणस्थानस्य तृतीयत्वात् तत्स्थानसंबन्धात् पापकर्माणः तृतीयं स्थानमित्युच्यन्ते। तेनासौ लोको न संपूर्यते। तेन तृतीयस्थानशब्दितैः पापकर्मभिः असौ द्युलोको न संपूर्यते न प्राप्यत इत्यर्थः।

---

त्यध्याहारः। लोटस्तध्वमोरिति। क्रियासमभिहारे द्योत्ये सर्वलकारापवादेन लोट् भवति। तत्र परस्मैपदात्मनेपदभेदेन सर्वतत्तदादेशप्रसक्तौ क्रमात् हिस्वौ परं त, ध्वं इत्येतद्व्यतिरिक्तलोडादेशस्थले नियमेन, तध्वंविषये च विकल्पेन भवतः। इह च भूतानां बहुत्वात् जायध्वं म्रियध्वमितिवत्, जायस्व म्रियस्वेत्यपि भवतीति।

सामान्यशब्दस्यानुप्रयोग इति। नन्वत्र, 'क्रियासमभिहारे' इति सूत्रेण वा लोट्. 'समुच्चयेऽन्यतरस्याम्' इति सूत्रेण वा। नाद्यः; तत्र, 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' इति प्रकृतलोट्प्रकृतिभूतधात्वनु-

अत्र, '**एतत् तृतीयं स्थान**मित्येतच्छब्देन पूर्वनिर्दिष्टः पौनःपुन्येन जननमरणादिभवनलक्षणो धात्वर्थ एव परामृश्यते। तस्यैव तृतीयस्थानत्वम्। ततश्च एतस्य तृतीयस्थानस्य सद्भावात् अत्रैव स्थाने जीवानां प्रायेण प्रचारात् द्युलोकगन्तृणामल्पत्वात् द्युलोको न संपूर्यते' इत्युक्तावपि **भाष्यस्य** न विरोधः। अत एव, 'द्युलोकारोहावरोहाभावेन द्युलोकासंपूर्तिवचनात्' इति **भाषित**मिति द्रष्टव्यम्।

---

प्रयोगस्यैव विहिततया भवन्तीत्यनुप्रयोगायोगात्। नान्त्यः; द्वितीयसूत्रे समुच्चयरूपद्योत्यार्थस्योक्ततया पूर्वसूत्रात् क्रियासमभिहारपदव्यतिरिक्तसर्वपदानुवृत्तेरेवेष्टत्वेन क्रियासमभिहाररूपद्योत्यार्थाभावेन पुनःपुनर्जायन्त इति व्याख्यानायोगात्। न च महाभाष्ये क्रियासमभिहारपदानुवृत्तिरुक्ता। तदनुवृत्तौ च, 'क्रियासमभिहारे द्वे वाच्ये' इति वार्तिकबलात् जायस्वेत्यादौ द्विरुक्त्यापत्तिश्च। किञ्चात्र भवन्तीत्यपि नानुप्रयोगः। अनुप्रयोगसूत्रयोर्भाष्ये प्रत्याख्याततत्वेन तस्यानपेक्षितत्वात्। अतः भूतानि असकृदावर्तीनि भवन्ति, जायन्ते म्रियन्ते चेत्यर्थ इति चेत्—

उच्यते। यथा 'पचतिपचति, पापच्यते' इति प्रयोगाभ्यां विकल्पेन पचपचेति पचतीति प्रयोगः क्रियासमभिहारसूत्रेणेष्टः, तथा 'सक्तून् पिबति धानाः खादति, सक्तून् पिबति च धानाः खादति च' इति प्रयोगाभ्यां विकल्पेनैव सक्तून् पिब धानाः खादेत्यभ्यवहरतीति प्रयोगः सिध्यतीति उत्तरसूत्रे परम्, 'अन्यतरस्याम्' इति कुत इति विवेचनीयम्। अतः एकक्रियास्थले क्रियासमभिहारे पचपचेति पचतीति यथा, तथा क्रियासमुच्चयस्थलेऽपि क्रियासमभिहारे नियमेन लोटः प्रसक्तौ, 'समुच्चयेऽन्यतरस्याम्' इति लोटं विनाऽपि तादृशप्रयोगोऽनुमन्यत इति सक्तून्

पिबति धानाः खादतीत्यभ्यवहरतीति प्रयोग एव अन्यतरस्यामिति दिदर्शयिषितः। अत्र क्रियासमभिहारः कस्मात् पदात् प्रतीयत इति चेत्–सक्तून् पिबति धानाः खादतीति भवदभिमतसमुच्चयोदाहरणे समुच्चयप्रतीतिः कस्मात् पदात्? सहप्रयोगबलादेव तल्लाभ इति चेत्—वरमिह, 'इत्यभ्यवहरति' इति प्रयोगादिति। प्रकारवाचिन इतिशब्दस्येह क्रियासमभिहारपर्यन्ततात्पर्यात्। एवं, 'पचपचेति पचति' इति पूर्वसूत्रोदाहरणेऽपि इतिशब्दादितस्तल्लाभः। अत एव भाष्ये इतिशब्दघटनेनोदाहरणदानम्। 'पुरीमवस्कन्द' इति श्लोके च इतिशब्दपर्याय इत्थंशब्दः। एवम् इत्यभ्यवहरतीत्येकेन पदेन सर्वक्रियाक्रोडीकारात् समुच्चयलाभश्च। अतो लट् समुच्चयस्येव क्रियासमभिहारस्यापि नावश्यं द्योतकः। समुच्चये इत्यस्य समुच्चीयमानक्रियावचनाद्धातोरित्यर्थो भावप्रकाशिकायाम्।

एवं क्रियासमभिहारे गम्यमाने एकक्रियास्थले नियमेन, नानाक्रियास्थले च विकल्पेन लोडिह सूत्राभ्यां क्रमेण विधीयते। लौकिकभाषायामप्येवं प्रयोग आनुभविकः। एतत्सूत्रद्वयाभावे च, 'पचतिपचति', 'पिबति खादतीत्यभ्यवहरति' इति प्रयोगावेव स्याताम्। 'सक्तून् पिबति धानाः खादति' इति तु न समुच्चयस्य मुख्यमुदाहरणम्। तत्र समुच्चयप्रतीत्यनियमात्। यथासंख्यं विभिन्नकर्त्रन्वयपरतयाऽपि तथा प्रयोगसंभवात्। न च लोट्स्थले कालसंख्याकर्त्रादिप्रतिपत्तयेऽनुप्रयोगस्यावश्यकत्वेऽपि पिबतिखादतीत्यभ्यवहरतीत्यनुप्रयोगो न युक्तः; पूर्वतिङन्ताभ्यामेव कालादिसिद्धेरिति वाच्यम्—क्रियासमभिहारज्ञापनाय इतिशब्दे प्रयुक्ते तदन्वयाय, समुच्चयस्पष्टीकाराय च सामान्यशब्दप्रयोगात्। एकक्रियास्थले तु पचतिपचतीत्युक्तौ तत एव, 'नित्यवीप्सयोः' इति पौनःपुन्यग्रहात् इतीत्यादिकमनपेक्षितम्। न चैवं समुच्चयस्थलेऽपि क्रियासमभिहारस्वीकारे वार्तिकबलात् द्विर्वचनापत्तिरिति वाच्यम्–तस्य वार्तिकस्य

पूर्वसूत्रविहितलोण्मात्रविषयकताया भाष्येष्टत्वात् । युक्तञ्चैतत् । पचतिपचतीत्यादाविव द्विर्वचनस्यैव क्रियासमभिहारद्योतकत्वाभावात् प्रकारान्तरेण क्रियासमभिहारज्ञप्तेः, केवलं इतिशब्दोक्तप्रकारस्य नानापदार्थमुखेन ज्ञाप्यतया एकवारं पचेति प्रयोगे नानापदार्थलाभमाकलय्य क्रियासमभिहारे द्विर्वचनमनुशिष्टं वार्तिककृता । समुच्चयस्थले तु पिबति खादतीति नानापदार्थलाभोऽस्त्येवेति न तदर्थं द्विरुक्तिप्रसक्तिरिति । [भृशार्थे द्विर्वचनञ्च कैयटासंमतमिति क्रियासमभिहारोऽत्र पौनःपुन्यमात्रमित्यन्यदेतत् ।] उक्तरीत्या इतिशब्दघटितसमुच्चयोदाहरणं काशिकायां द्रष्टव्यम् । कामं समुच्चयस्थले लोटं विना प्रयोगः केवलसमुच्चयेऽपि स्यात् । लोटि तु क्रियासमभिहारो नियत इति । तत्रात्र इतिशब्दार्थे किञ्चिद् वैलक्षण्यं भाव्यम् ।

यत्तु अनुप्रयोगोऽनपेक्षित इति–तन्न ; 'असकृदावर्तीनि जायस्वम्रियस्वेति भवन्ति' इत्येकवाक्यत्वसंभवे वाक्यभेदकल्पनायोगेन जायस्वेत्यादौ कालसंख्याद्यप्रतीत्या च स्थितस्यानुप्रयोगस्योपेक्षणायोगात् । अप्पय्यदीक्षितेष्टश्चास्यानुप्रयोगत्वम् । अत एव, 'जायस्वम्रियस्वेति विपरिवर्तमानम्' इति भामतीवाक्येऽपि विपरिवर्तमानपदमेव सामान्यवचनं भवितुमर्हति । तिङन्तमेव सामान्यवाचीत्यत्र मानाभावात् । तर्हि अत्रापि आवर्तीनीति पदं सामान्यवचनमस्तु । अस्तु कामम् । प्रधानक्रियापदमेव तादृशमस्तीति तत् उपेक्षितम् । इदमत्र बोध्यम्—मुक्तकप्रयोगे लोडन्तमात्रसत्त्वे अनुप्रयोगाभावे संख्याकालाद्यग्रहणात् वाक्यासमाप्तिः स्पष्टा । प्रकरणगतवाक्ये तु यथाकथञ्चित्तदवगमोऽस्तु । एवं लोडन्तबोध्यक्रियायाः प्रथमान्तपदार्थगतत्वे वाक्यस्य ख्यातप्रधानकतया च वाक्यसमाप्त्यर्थं प्रधानतिङन्तानुप्रयोगस्यावश्यकत्वेऽपि अप्रथमान्तपदार्थगतत्वे अनुप्रयोग उपेक्ष्यतेऽपि । अत एव बृहदारण्यके, 'देवा यथा सोमं

तस्माज्जुगुप्सेत । तदेष श्लोकः ॥ ८ ॥—

---

तस्माज्जुगुप्सेत । यस्मात् संसारिणां गतिरुक्तरीत्या कष्टतरा, तस्मात् संसारात् जुगुप्सेत । 'मा भून्मे एवंविधसंसारमहोदधौ घोरे पातः' इति निर्विद्येत् इत्यर्थः । मुक्तिफलकपञ्चाग्निविद्यास्तुत्यर्थं तस्य फलान्तरं वक्तुमाह । मध्याह । तदेष श्लोकः । तच्छब्दः प्रसिद्ध(द्धि)परः।

---

राजानमाप्यायस्वापक्षीयस्वेति—भक्षयन्ति' इति वाक्यं अनुप्रयोगापेक्षा । अत्र, 'भक्षयन्तम्' इति सोमराजविशेषणमनुप्रयोक्तव्यम्; इतिशब्दार्थस्य साक्षाद्वा सोमराजविशेषणत्वम्; आप्यायापक्षययोः तद्गतत्वात् । इतिशब्दस्तु नापेक्ष्यते । तस्यैव क्रियासमभिहारज्ञापनधुरन्धरत्वात् । एवं प्रथमान्तस्थले तत्रैव इतिशब्दान्वयेऽपि वाक्यसमाप्तये क्रिया अपेक्षितैव । एवं प्रकारेणेह वैयाकरणमूर्धन्यानामेषामाशय उन्नेय इति सिद्धोऽत्र क्रियासमभिहारः ।

ननु महाभाष्ये क्रियासमभिहारपदस्य समुच्चयसूत्रेऽनुवृत्तिर्नोक्ता । तत् किं अन्यांशानुवृत्तिः परं तत्रोक्ताऽस्ति । समुच्चयसूत्रस्यैवाव्याकृतत्वात् तत्र । तस्मात् अविरोध एवालम् । तदत्र कौमुदीशेखरादिग्रंथविरोधेऽपि न दोषः ।

भाष्येऽनुक्तं भवतु किमतः सूत्रमव्याकृतं यत्
ग्रन्थं प्राज्ञैर्बहुभिरितरैरेककण्ठं यदुक्तम् ।
तस्मादेवं स्मरणिरुचिता चिन्तिता; शाब्दिका ये
त्वन्तश्शून्यं विहतवचसः तत्रामादर्तुमर्हम् ॥
किं शब्दशास्त्रसंबन्धिग्रन्थकर्तैव शाब्दिकः ।
न किं शास्त्रान्तरे शब्दसूत्रव्याख्याकृतस्तथा ॥

महापातकिगणनपरस्य श्लोकस्योक्तार्थविषयकत्वाभावेन तद्दित्यस्य, 'तस्मिन् उक्तेऽर्थे' इत्यर्थवर्णनायोगादन्यथा व्याचष्टे इति तच्छब्दः प्रसिद्धपर इति । अस्तु स प्रसिद्धः । किं प्रकृते । तत्र ह

'स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन् ब्रह्महा च ।
एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैः ॥' इति ॥ ९ ॥

अथ ह य एतानेवं पञ्चाग्नीन् वेद, न सह तैरप्याचरन् पाप्मना लिप्यते । शुद्धः पूतः पुण्यलोको भवति, य एवं वेद य एवं वेद ॥ १० ॥

इति पञ्चमाध्याये दशमः खण्डः ।

---

एषः वक्ष्यमाणः श्लोकः प्रसिद्ध इत्यर्थः  स्तेनो...तैरिति । तैराचरन् स्तेनादिभिः चतुर्भिर्विद्यायोनिसंबन्धमाचरन्नित्यर्थः । शिष्टं स्पष्टम् ।

अथ....वेद । स्तेनादिभिरुक्तमहापातकिभिरपि सह संसर्ग(संबन्ध)-माचरन् पाप्मना न लिप्यते पूतः अघशून्यो(न्यश्च) भवतीत्यर्थः । य

---

अथ हेत्यादि । अत्र क्षुद्राणीत्यस्य बृहदारण्यकानुसारेण दंशमशकादिपरतया व्याख्यानेऽपि तत्तुल्यतया अनिष्टादिकारिणः सर्वेऽपि, 'अथैतयोः पथोर्न कतरेण' इत्यादिवाक्ये विवक्षिता एव स्युः; मार्गद्वयास्पर्शित्वस्य अदोलोकासंपूरकत्वस्य चोपक्रमोपसंहारोक्तयोः सर्वसाधारणत्वात् । ते च अनिष्टादिकारिणः विहितत्यागिनः निषिद्धकारिणश्चेति द्विविधाः । निषिद्धकारिषु महापातकिनो मुख्यगण्याः निकृष्टतमाः । अतः तावत्पर्यन्तसर्वानिष्टादिकारि-तदनुभाव्यफल-तन्मार्गादिकमपत्र भाव्यमिति ज्ञप्तये तदेष श्लोक इति वाक्यप्रवृत्तिरित्यपि सुवचम् । पतन्तीति । सत्कर्माधिकारात् च्यवन्ते, घोरे च नरके पतन्ति । तत एव ते पतिताः । तथाच नरकपर्यन्तानुभव इह श्रुत्यभिमतः । प्रकृतसंदर्भस्यार्थश्च न्यायसिद्धाञ्जने, 'अपुण्यकृताम' इत्यारभ्य, 'तेषामतिघोरा निरयसरणिः निरयदुःखानुभूतिश्च पुराणादिषु प्रपञ्चिता स्मर्यमाणाऽपि कलेबरं कदम्बगोळायते' इति समग्राहि ॥ सह तैरप्याचरन्निति । आचरन्नपीत्यन्वयोऽपि स्यात् । संसर्गमात्रे न दोषः । हिरण्यस्तेयादिकं तु पञ्चाग्निविदपि न कुर्यात् । पूर्वोक्तरेति । ईदृशसंसर्गस्य विद्याविरोधित्वाभावात्

**एवं वेद** । द्विरुक्तिः समस्तप्रश्नप्रतिवचनसमाप्तिद्योतिका । [शिष्टं स्पष्टम्] ।

एतत्खण्डान्तर्गतवाक्यविषयकाणि अधिकरणानि उपन्यस्यन्ते—

(१) अर्चिरादिपादे—**"कार्यं बादरिरस्य गत्युपपत्तेः"** । **कार्यं** हिरण्यगर्भमुपासीनानेव अर्चिरादिर्गणो नयतीति **बादरिराचार्यो** मन्यते । परिच्छिन्नप्राप्त्यर्थं हि गतिरुपपद्यते, नापरिच्छिन्नपरब्रह्म-प्राप्तये । न ह्याकाशं प्रेप्सता देशविशेषो गन्तव्यो भवतीति । **"विशेषितत्वाच्च"** । 'पुरुषो मानस एत्य ब्रह्मलोकान् गमयति । ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' इति गन्तव्यस्य बहु-वचनान्त**लोक**शब्देन विशेषितत्वात् परब्रह्मण एकत्वेन बहुत्वासंभवात्, **लोक**शब्दस्य देशविशेष एव मुख्यत्वाच्च न परब्रह्मणोऽर्चिरादिप्राप्यत्वम् ।

ननु, 'स एनान् ब्रह्म गमयति' इति नपुंसकलिङ्गब्रह्मशब्देन चतुर्मुखस्य कथं निर्देश इत्यत्राह, **"सामीप्यात्तु तद्व्यपदेशः"** । 'यो ब्रह्माणं विदधाति पूर्वम्' इति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात् ब्रह्मशब्देन अमुख्यया वृत्त्या चतुर्मुखस्य निर्देश उपपद्यत इति भावः ।

ननु हिरण्यगर्भस्य द्विपरार्धावसाने नाशात् तं प्राप्तस्य पुनरा-वृत्तेरवर्जनीयत्वात्, 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इत्यनावृत्तिप्रतिपादकश्रुतिविरोधः । तत्राह, **"कार्यात्यये तदध्यक्षेण**

---

तद्विष्णवत्त्वा स्वर्गापहतिरिति भावः । इदं शुद्धः पूत इत्येतदर्थान्तरं वा । यद्वा पुण्यलोक इति, य एवं वेदेति चाधिकश्रवणात् प्रवाहणो-पदेशादिकं सवृत्तज्ञानफलं पूत इत्यादि । सोऽयं प्रवाहणो जैबलिः (१-८-, ९) पूर्वमपि प्रस्तुतः ।

**सहातः परमभिधानात्''**। 'ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इत्यभिधानात् **कार्यस्य** ब्रह्मलोकस्यात्यये **तदध्यक्षेण** ब्रह्मणा सह **अतः** ब्रह्मलोकात् **परं** ब्रह्म प्राप्नोति । अतश्चानावृत्तिश्रुतिरुपपद्यत इति भावः । **''स्मृतेश्च''** । 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इति **स्मृतेश्चायमर्थोऽवसीयते** ।

**''परं जैमिनिर्मुख्यत्वात्''**। नपुंसकलिङ्गब्रह्मशब्दस्य परस्मिन् ब्रह्मण्येव मुख्यत्वात् परमेव ब्रह्म अर्चिरादिः प्रापयतीति जैमिनिराचार्यो मन्यते । तस्य परिपूर्णत्वेऽपि, 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति **श्रुत्यनुसारेण** निःशेषाविद्यानिवृत्तेर्देशविशेषविशिष्टब्रह्मप्राप्तिसापेक्षत्वात् देशविशेषविशिष्टब्रह्मप्राप्तये गतिरुपपद्यते । लोक्यत इति व्युत्पत्त्या **लोकशब्दो**ऽपि ब्रह्मण्युपपन्नः । बहुवचनमपि एकस्मिन् उपचारात् प्रयुज्यते ।

**''दर्शनाच्च''**। दर्शयति च श्रुतिर्ब्रह्मप्राप्तेर्गतिसापेक्षत्वम् , 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति । ननु, 'प्रजापतेः सभां वेश्म प्रपद्ये' इत्यर्चिरादिना गतस्य कार्यप्रजापतिविषयाभिसंधिर्दृश्यते । तत्राऽऽह, **''न च कार्ये प्रत्यभिसंधिः''** । नायं प्रत्यभिसंधिः । कार्यहिरण्यगर्भविषयः, अपितु परब्रह्मविषयः । तस्यैव **प्रजापतिशब्द**मुख्यवाच्यत्वात् । उत्तरत्र, 'यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशाम्' इति सर्वविद्याविमोकपूर्वकसर्वात्मभावाभिसंधानात्, 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोक-

मभिसंभवामि' इति ब्रह्मलोकस्याकृतत्वेन विशेषितत्वाच्च परमेव ब्रह्म अर्चिरादिर्नयतीति **जैमिनिराचार्यो** मन्यते।

**"अप्रतीकालम्बनान् नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च"**। अब्रह्मभूतं नामादिकं ये ब्रह्मत्वेनोपासते, ते प्रतीकालम्बनाः। तद्भिन्नान् = प्रकृतिवियुक्तं प्रत्यगात्मानं ब्रह्मात्मकत्वेन ये पञ्चाग्निविद उपासते, ये च केवलं परं ब्रह्मोपासते, तान् उभयविधानपि नयतीति **बादरायण** आचार्यो मन्यते। केवलं परमेवोपासीनान् नयतीति पक्षे, कार्यमुपासीनान् नयतीति पक्षे च, 'तद्य इत्थं विदुः ये चेमेऽरण्ये' इति श्रुतिविरोधप्रसङ्गात्। ननु पञ्चाग्निविद्यायाः ब्रह्मात्मकप्रत्यगात्मविद्यात्वे किं प्रमाणम्? तत्राह **"तत्क्रतुश्च"**। पञ्चाग्निविद्यायाः ब्रह्मविद्यात्वाभावे अर्चिरादिगतिर्वा तया गत्या ब्रह्मप्राप्तिर्वा न स्यात्। तत्क्रतुन्यायविरोधप्रसङ्गात्। ब्रह्मविद्यात्वे तु तत्क्रतुन्यायोऽप्यनुगृहीतो भवति। इयांस्तु विशेषः—**पञ्चाग्निविद्या** ब्रह्मात्मकस्वात्मविद्या। **दहर**(ादि)**विद्या**दिकास्तु प्रत्यगात्मशरीरकपरमात्मविद्याः। विशेष्यविशेषणभावे परं व्यत्यासः। अयं तु भगवतो **बादरायण**स्य सिद्धान्त इति स्थितम्।

(२) तथा—लोके ग्रामादिगन्तॄणाम् इमं वृक्षं गत्वा इमां नदीं गत्वा स (अयं) ग्रामो गन्तव्य इति तत्तद्देशिकोपदेशस(स्व)रूपत्वादस्यापि वाक्यस्य अर्चिरादयो मार्गचिह्नभूताः। अथवा, 'अग्निलोकमागच्छति स वायुलोकम्' इति **लोक**शब्दश्रवणादर्चिराद्या भोगभूमयः इत्येवं पूर्वपक्षे प्राप्ते—उच्यते—**'आतिवाहिकास्तल्लिङ्गात्'**।

विदुषामतिवाहे परमपुरुषेण नियुक्ता देवताविशेषा आतिवाहिकाः । गन्तॄणां गमयितार इति यावत् । **तल्लिङ्गात्** । 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति वैद्युतपुरुषस्य गमयितृत्वसिद्धवत्कारेण ब्रह्मगमयितृत्वमात्रविशेषप्रतिपादनपरेण वाक्येन इतरेऽपि गमयितार इति प्रतीतेः । अर्चिरादिशब्दानाञ्च, **'अभिमानिव्यपदेशस्तु विशेषानुग्रहाभ्याम्'** इति **सूत्रेण** तदभिमानिदेवतापरत्वसंभवात् । ननु वैद्युतपुरुषस्यैव ब्रह्मगमयितृत्वे विद्युत ऊर्ध्वं **कौषीतकी**वाक्यानुसारेण निवेशितानां वरुणेन्द्रप्रजापतीनां कथं संबन्धः ? तत्र ह, **'वैद्युतेनैव ततस्तच्छ्रुतेः'** । **ततः** विद्युतः उपरि वैद्युतेनैव ब्रह्मप्राप्त्यतिवहनम् ; 'स एनान् ब्रह्म गमयति' इति **श्रुतेः** । वरुणादयोऽपि तदनुग्राहका भवन्तीति द्रष्टव्यमिति स्थितम् ।

(३) तथा **वैराग्यपादे**—लोकान्तरं गच्छतो जीवस्य देहारम्भकभूतसूक्ष्माणां तत्रैव सुलभतया न भूतसूक्ष्मपरिष्वक्ततया गमनमिति पूर्वपक्षे प्राप्ते — उच्यते, **'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्'** । पूर्वत्र, **'संज्ञामूर्तिक्लृप्तिः'** इति **सूत्रे मूर्ति**शब्देन निर्दिष्टो देहः **तच्छब्देन** परामृश्यते । तदन्तरप्रतिपत्तौ= देहान्तरप्रतिपत्त्यर्थं जीवो भूतसूक्ष्मैः परिष्वक्त एव **रंहति** गच्छतीत्यर्थः। **पञ्चाग्निविद्यायाम्**, 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति पञ्चस्वप्याहुतिषु अप्छब्दितानां भूतसूक्ष्माणां हूयमानतया संबन्धं सिद्धवत्कृत्यैव, अपां पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्तीति कथं वेत्थेति प्रश्नात्, द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपेषु अग्निषु

आपः श्रद्धासोमवृष्ट्यन्नरेतोरूपेण हूयमानास्सत्यः पञ्चम्यां रेनआहुतौ पुरुषाकारेण परिणमन्तीति प्रतिवचनदर्शनाच्च अप्छब्दितभूतसूक्ष्म परिष्वक्त एव आरोहावरोहयोः संचरतीति भावः । ननु, 'आपः पुरुषवचसो भवन्ति' इति अपामेव पुरुषवचस्त्वं प्रतिपाद्यते । न भूतान्तराणामिति । तत्राऽऽह, **'त्र्यात्मकत्वात्तु भूयस्त्वात्'** । **तु**-शब्दः चोद्यव्यावृत्त्यर्थः । केवलानामपां देहारम्भकत्वासंभवेन त्र्यात्म-कत्वात् अप्छब्दो भूतान्तरस्याप्युपलक्षकः । तर्हि कुतोऽप्छब्देन निर्देश इत्यत्राह **भूयस्त्वात्** । तेजोऽबन्नलक्षणभूतत्रयमध्ये देहस्य लोहितप्रचुरतया अपां भूयस्त्वात् अप्छब्देन निर्देश इति भावः ।

**'प्राणगतेश्च'** । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति । प्राणमनू-त्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति इन्द्रियाणामपि सहगतिश्रवणात् भूतसूक्ष्मपरिष्वक्ततया जीवगमनाभावे निराश्रयाणामिन्द्रियाणां गमना-संभवात् भूतसूक्ष्मपरिष्वक्तस्यैव गमनमभ्युपगन्तव्यम् ।

**'स्मर्यते च'** । 'गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' इति इन्द्रियाणाञ्च नयनस्य स्मरणात् तेषाञ्चाश्रयतया भूतसूक्ष्माणां गतिरभ्युपगन्तव्या ॥ **'अग्न्यादिषु तच्छ्रुतेरिति चेन्न; भाक्तत्वात्'** । 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्' इत्या-दिना प्राणानाम्, मरणकाले अग्न्यादिष्वप्ययश्रवणात् न प्राणानां जीवेन सह गतिः संभवतीति चेन्न; अग्न्यादिष्वप्ययश्रवणस्य भाक्त-त्वात् । 'ओषधीर्लोमानि वनस्पतीन् केशाः' इति लोमकेशानाम-प्योषधिवनस्पतिष्वप्ययश्रवणात् तस्य च प्रत्यक्षबाधितत्वेन ओषधि-

वनस्पतिषु लोमकेशाप्ययस्य भाक्तत्वस्याभ्युपगन्तव्यत्वात् तत्सहपठितानामग्न्यादिषु वागाद्यप्ययानामपि भाक्तत्वमेव। ततश्च, 'अग्निं वागप्येति' इत्यस्यायमर्थः—'अग्निर्वाग् भूत्वा मुखं प्राविशत्' इत्यग्नेः वागधिष्ठातृतया मुखप्रवेशप्रतिपादनात् मरणकालेऽग्निर्म्रियमाणपुरुषवागधिष्ठातृतां परित्यज्य अनधिष्ठातृरूपेण वर्तत इति।

**'प्रथमेऽश्रवणादिति चेन्न ; ता एव ह्युपपत्तेः'**। यदुक्तम् — 'प्रश्नप्रतिवचनाभ्यां द्युपर्जन्यादिषु भूतसूक्ष्मपरिष्वक्तस्यैव जीवस्य गमनम्' इति, तन्नोपपद्यते। प्रणव एव विस्वर इति न्यायेन प्रथमाहुतावेव, 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति प्रथमपर्याये श्रद्धाया एव होम्यत्वश्रवणेन अप्छब्दितभूतसूक्ष्माणां होम्यत्वाश्रवणादिति चेन्न— यदि प्रथमे पर्याये अप्छब्दितव्यतिरिक्तायाः श्रद्धाया होम्यत्वम्, तर्हि प्रश्नप्रतिवचनयोः अपां पञ्चम्यामाहुताविति निर्देशो नोपपद्यते। अपां पञ्चमाहुतिसंबन्धो हि तदितराहुतिचतुष्टयसंबन्ध एवोपपद्यते(द्येत)। बुद्धिविशेषलक्षणश्रद्धाया आत्मतो निष्कृष्य होम्यत्वानुपपत्तेश्च श्रद्धाशब्देन आप एवोच्यन्ते। 'श्रद्धा वा आपः' इति श्रुतेः।

**"अश्रुतत्वादिति चेत्—न ; इष्टादिकारिणां प्रतीतेः"**। द्युपर्जन्यादिषु प्रश्नप्रतिवचनवशात् भूतसूक्ष्माणां गमनसंभवेऽपि न तत्परिष्वक्तस्य जीवस्य गमनम्, अश्रुतत्वात् इति चेन्न ; उत्तरत्र **पितृयाणवाक्ये**, 'मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा' इति द्युलोकं प्राप्तस्य इष्टादिकारिणो जीवस्य सोमराजभावश्रवणात, अत्रापि, 'तस्या आहुतेः सोमो राजा संभवति'

इति द्युलोकं प्रविष्टानां भूतसूक्ष्माणां सोमराजभावश्रवणात् अत्रापि, 'आपः पुरुषवचसो भवन्ति' इत्यप्छब्देन न केवलभूतसूक्ष्ममात्रमुच्यते ; अपितु तत्परिष्वक्तो जीवः । पुरुषशब्दाभिलपनीयत्वमपि तत्परिष्वक्त-जीवस्यैव । ततश्च, 'आपः पुरुषवचसो भवन्ति' इत्यत्र अबादिशब्दानां तत्परिष्वक्तजीवपरत्वात् भूतसूक्ष्मपरिष्वक्तस्यैव जीवस्य गमनं सिद्धम् ।

ननु, 'तं देवा भक्षयन्ति' इति सोमराजभावं प्राप्तस्य भक्ष्यमाणत्व-श्रवणात्, जीवस्यानदनीयत्वात्, पितृयाणमार्गे **सोमराज**शब्द-निर्दिष्टो न जीव इत्यत आह—**"भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति"** । देवभक्ष्यमाणत्ववचनं भाक्तम्, केवलेष्टादिकारिणां अनात्मवित्त्वात् । **अनात्मविदाश्च**, 'यथा पशुरेवं स देवानाम्' इति श्रुतिदर्शनेन पशुवत् भोगोपकरणत्वात्, 'तं देवा भक्षयन्ति' इत्युक्ति-रुपपद्यते । अतो भूतसूक्ष्मपरिष्वक्त एव जीवो गच्छतीति स्थितम् ।

(४) **समनन्तराधिकरणे—'यावत्संपातमुषित्वा'** इति संपातशब्दितसर्वकर्मफलस्य तत्रैवोपभोक्तव्यत्वश्रवणात्, 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे' इति **बृहदारण्यके** श्रवणात् सर्वं कर्मफलं भुक्त्वा निरनुशय एवावरोहति जीवः । **अनुशयः** भुक्तशिष्टं कर्म । एवं पूर्वपक्षे प्राप्ते उच्यते—**"कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च"** । **कृतस्य** कर्मणः **अत्यये** अवसाने अनुशयवानेव प्रत्यवरोहति जीवः, **दृष्टस्मृतिभ्यां** श्रुतिस्मृतिभ्यामित्यर्थः । 'तत् य इह रमणीयचरणा अभ्याशो ह यत्' इति **श्रुतेः**, 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य

कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशजातिकुलरूपायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते । विष्वञ्चो विपरीता विनश्यन्ति' इति स्मरणाच्च । अतः सानुशय एवावरोहति । 'यावत्संपातमुषित्वा' इत्यादिकं तु फलदानप्रवृत्तकर्मविशेषविषयम् । तत्र च, 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशम्' इति श्रवणात् यथागमनं प्रत्यागमनम् । 'आकाशाद्वायुं वायुर्भूत्वा धूमो भवति' इति श्रवणात् अनेवञ्च । येन प्रकारेण गतम्, तदन्येन प्रकारेणावरोहति इत्यर्थः । **"चरणादिति चेन्न ; तदुपलक्षणार्थेति कार्ष्णाजिनिः"** । ननु, 'रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन्' इत्यादिना सदसच्चरणयोरेव सदसद्योनिप्राप्तिहेतुत्वं श्रूयते । **चरणम्** आचारः शील वृत्तमिति पर्यायाः । ततश्च, 'रमणीयचरणाः' इति श्रुतिवशादवरोहतां सदसद्योनिजन्महेतुभूतचरणशब्दिताचारानुवृत्तावपि न कर्मशेषानुवृत्तौ प्रमाणमस्तीति चेन्न—चरणश्रुतिः कर्मोपलक्षणार्थेति **कार्ष्णाजिनि**राचार्यो मन्यते । केवलात् **चरण**शब्दितादाचारात् सुखदुःखहेतुभूतयोनिप्राप्त्यसंभवात् । **"आनर्थक्यमिति चेन्न ; तदपेक्षत्वात्"** । ननु सन्ध्यावन्दनाद्याचारस्य सुखदुःखहेतुत्वाभावे आनर्थक्यं स्यादिति चेन्न ; तदपेक्षत्वादग्निहोत्रादिपुण्यकर्मणः । 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' इति श्रवणात् सन्ध्यावन्दनाद्याचारवत एव वैदिक कर्मणि अधिकारात् । **"सुकृतदुष्कृते एवेति तु बादरिः"** । **'पुण्यं कर्माचरति, पापं कर्माचरति'** इति सुकृतदुष्कृतकर्मसु **चरति**-शब्दप्रयोगात् चर्यत इति चरणमिति व्युत्पत्त्या सुकृतदुष्कृते एव

**चरण**शब्दाभिधेये। 'यान्यनवद्यानि कर्माणि, तानि सेवितव्यानि। यान्यस्माकं सुचरितानि, तानि त्वयोपास्यानि' इति कर्माचा**रयोः** पृथङ्निर्देशस्तु गोबलीवर्दन्यायादुपपद्यते। वैतानिकानि तु **कर्माणि** कर्माणीत्युच्यते। इतराणि तु **आचार**शब्देनाभिलप्यन्ते। अतः **चरण**-शब्देन सुकृतदुष्कृतयोरेवाभिलाप इति **बादरि**राचार्यो मन्यत इति **स्थितम्**।

(५) तथा, 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा **धूमो** भवति' इत्यादौ आकाशादिभावोऽपि देवमनुष्यादिभाववत् तत्तच्छ**रीर**-कत्वलक्षण एवास्त्विति पूर्वपक्षे प्राप्ते—उच्यते—'**तत्स्वाभाव्या-पत्तिरुपपत्तेः**'। तत्स्वाभाव्यापत्तिः=आकाशादिसादृश्यापत्तिरित्य**र्थः**। स्वाभाव एव स्वाभाव्यम्। 'वर्तमानसामीप्ये' इत्यादिवत् स्वा**र्थिकः** ष्यञ्। अतः तत्स्वाभाव्यापत्तिः तत्सादृश्यापत्तिरित्यर्थः। **चन्द्रमण्डले** शरीरारम्भकाणां भूतसूक्ष्माणां कर्मक्षये द्रवीभूतानां आका**शादि**-(आकाश)गतानां भेदकाकारप्रहाणेन आकाशादिसादृश्ये तदुप**श्लिष्टानु**-शयिनोऽप्याकाशसमा भवन्तीत्यर्थः। कुतः? उपपत्तेः। सुखदु**ःखोप** भोगाय हि तच्छरीरसंसर्गः। न हि अनुशयिनं प्रति आकाशादेः **जीवा**-न्तरशरीरभूतस्य तद्भोगाश्रयत्वमस्ति। युगपत् भोक्तृद्वयसमा**वेशे** त**योः** परस्परविरुद्धभोगार्थतया शरीरोन्मथनप्रसङ्गात्। ननु अवरोहन्तो **जीवा** एव तत्तदभिमानिदेवता भवन्त्विति चेन्न—सर्गाद्यकालमारभ्य आ**प्रलय**-माकाशाद्यभिमानिदेवतानां अनुशयिभ्योऽन्यासां क्लृप्तानां **सत्त्वेन** **अनुक्षण**मवरोहतामनुशयिनामाशाद्यभिमानिदेवतात्वानुपपत्तेरिति **स्थितम्**।

(६) **तदुत्तराधिकरणे**—आकाशप्राप्तिप्रभृति यावद्व्री**ह्या**दि-

प्राप्ति किं तत्रतत्र नातिचिरं तिष्ठति, उत अनियम इति विशये, नियमहेत्वभावादनियम इति प्राप्ते--उच्यते, **'नातिचिरेण विशेषात्'**। आकाशादितो नातिचिरेण निष्क्रमणम् । कुतः ? विशेषात् । उत्तरत्र व्रीह्यादिप्राप्तौ, 'अतो वै खलु दुर्निष्प्रपतरम्' इति विशिष्य कृच्छ्र निष्क्रमणाभिधानादिति स्थितम् ।

(७) **तदुत्तराधिकरणे**, 'व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इत्यनेन अनुशयिनां व्रीह्यादिभाव उच्यते । तत्र, 'देवो जायते, मनुष्यो जायते' इतिवत् इह, 'तिलमाषा इति जायन्त' इति श्रवणात् व्रीह्यादिशरीरका एवानुशयिनो भवन्तीति प्राप्ते उच्यते, **'अन्याधिष्ठिते पूर्ववदभिलापात्'** । अवरोहतां जीवान्तराधिष्ठिते व्रीह्यादौ संश्लेषमात्रम् । कुतः ? पूर्ववदभिलापात् । 'आकाशाद्वायुं वायुर्भूत्वा धूमो भवति' इत्यादौ आकाशादिभावे हेतुभूतकर्मकीर्तनाभावात् यथा आकाशादिषु संश्लेषमात्रम्, एवं व्रीह्यादिस्थावरभावहेतुभूतकर्मकीर्तनाभावात्, उत्तरत्रैव, 'रमणीयचरणा अभ्याशो ह यत्' इति ब्रह्मणादिभाव एव हेतुभूतस्य कर्मणः कीर्तनात् व्रीह्यादौ जीवान्तराधिष्ठिते संश्लेषमात्रमेव । **'अशुद्धमिति चेन्न शब्दात्'** । इष्टादिकर्मणां पशुहिंसामिश्रत्वात् हिंसायाश्च, **'न हिंस्यात्'** इति निषिद्धत्वेनानिष्टसाधनत्वेन पापतया तन्मिश्रतया सुकृतकर्मणामशुद्धत्वात् सुकृतांशस्य फलं स्वर्गेऽनुभूय हिंसांशस्य स्थावरादिभावलक्षणं फलं अवरोहन् अनुभवतु । ननु. 'न हिंस्यात्' इति निषेधो विहितक्रत्वर्थहिंसाव्यतिरिक्तविषयोऽस्तु इति

चेन्न ; पुष्ट्यादिरूपेष्टसाधनघृतपानादौ मेहादिरूपानिष्टसाधनत्वस्य च दर्शनेन उत्सर्गापवादन्यायस्यानवतारात् । अतो यागाद्यनुप्रविष्ट-हिंसाफलत्वेन स्थावरभावोऽनुभोक्तव्य इति चेन्न—प्रवर्तनानिवर्तनारूप-विधिनिषेधयोर्विरोधस्य वक्तुमशक्यतया, सति च विरोधे सामान्य-विशेषन्यायेन निषेधस्य विहितहिंसाव्यतिरिक्तविषयत्वात् । वस्तुतस्तु यागीयपशुहिंसाया हिंसात्वस्यैवाभावात् । 'न वा उ एतन्म्रियसे न रिष्यसि' इति मन्त्रवर्णात् हिंसात्वभावस्यैव प्रतिपादनात्। न रिष्यसि= न हिंस्यसे इति हि तस्यार्थः ।

ननु 'न रिष्यसि' इति मन्त्रवर्णात् हिंसात्वाभावाभ्युपगमे, 'न म्रियसे' इति मन्त्रवर्णात् तन्मरणस्य मरणत्वमपि न स्यात् । ततश्च, 'न म्रियसे' इतिवत् 'न रिष्यसि' इत्युक्तिरप्यौपचारिकीत्येवाऽऽश्रयणीयम् । मरणोद्देश्यकमरणानुकूलव्यापारत्वस्यैव हिंसात्वरूपत्वादिति चेत्—न मरणोद्देश्यकमरणानुकूलव्यापारत्वं हिंसात्वम् । कशाताडनतप्तसंदंशिनीपटन—क्रकचदारणादीनां मरणोद्देश्यकमरणानुकूलव्यापारत्वाभावेन हिंसात्वाभावप्रसंगात् । अतः तीव्रदुःखजननौपयिकव्यापारत्वस्यैव हिंसा-पदप्रवृत्तिनिमित्तत्वे वक्तव्ये, (सति व्यपदेशाभावेन हि) 'व्रणादिचिकित्सके तात्कालिकतीव्रवेदनोत्पादके हिंसकत्वव्यपदेशाभावेन बलवत्तद्धिताजनकत्वे सति तद्वेदनाजनकव्यापारत्वं तद्धिंसात्वमित्याश्रयणीयम् । ततश्च व्रणचिकित्सया जायमानस्य आरोग्यरूपहितस्य तादात्विकवेदनापेक्षया बलवत्त्वान्न हिंसात्वम्' इति स्थिते पशुमरणानुकूलव्यापारस्य पशुवेदना-जनकत्वेऽपि स्वर्गप्राप्त्यादिलक्षणस्य पशुहितस्य बलवत्त्वान्न हिंसात्वम् ।

पञ्चमे एकादशः खण्डः

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनश्श शार्कराक्ष्यो बुडिल आश्वतराश्विः ते हैते सह शाला महा-

---

अतः, 'न हिंस्यात्' इति निषेधाविषयत्वात् क्रतुपशुहिंसाया न पापजनकत्वमिति तद्धेतोनावरोहतोऽनुशयिनो न व्रीह्यादिभावापत्तिरिति। "रेतःसिग्योगोऽथ", इतश्चौपचारिकं व्रीह्यादिजन्मवचनम्। व्रीह्यादिभाववचनानन्तरम्, 'यो यो ह्यन्नमत्ति, यो रेतः सिञ्चति, तद्भूय एव भवति' इति सिग्भावोऽनुशयिनां श्रूयमाणो यथा न मुख्यः, एवं व्रीह्यादिभावोऽपीत्यर्थः ॥ "योनेः शरीरम्"। योनिप्राप्तेः पश्चादेवानुशयिनां ब्राह्मणादिशरीरप्राप्तिश्रवणात् ततः प्राङ् न शरीरपरिग्रहः। किन्तु संश्लेषमात्रम्। यत्र पुण्यापुण्यकर्मणी तत्रैव सुखदुःखे। यत्र सुखदुःखे तत्रैव तद्धेतुभूतं शरीरम्। ततश्चाकाशादिषु कर्मकीर्तनाभावेन तत्फलभूतसुखाद्यनुभवाभावात् न तद्धेतुभूतं शरीरमिति न योनिप्राप्तेः प्राक् शरीरपरिग्रह इति स्थितम् ॥ प्रकृतमनुसरामः । ५-१०

वैश्वानरविद्या प्रस्तूयते—प्राचीन...किं ब्रह्मेति। उपमन्यु-

---

पञ्चाग्निविद्यानन्तरं वैश्वानरविद्या प्रस्तूयते। पुरुषाकारपरिणतभूतान्तर्वर्तिनो जीवस्य याथात्म्यविषयिणी सा; इयं पुरुषरूपेण कल्पितमहाभूततदन्यविश्वान्तरपरमात्मगोचरा। सा पञ्चभूतसूक्ष्माहुत्यनुसंधानमिश्रा; इयं पञ्चप्राणाहुत्यङ्गिका। तत्र राज्ञः सकाशात् सर्वथैव विप्राज्ञातविद्याग्रहणम्; अत्र राज्ञ एव अयथावद्विज्ञातविद्याग्रहणम्। तत्र पुत्रप्रेरितेन गौतमेन राज्ञो विद्याग्रहणम्; अत्र बहुविप्रपुरस्कृतेन तेनैव गौतमेन राजान्तरात् विद्यान्तरग्रहणमिति रीत्या आनन्तर्यनियामकं विभाव्यम्। प्राचीनशाल इति। अयमौप-

श्रोत्रियाः समेत्य मीमांसाञ्चक्रुः—को न आत्मा किं ब्रह्मेति ॥ १ ॥

---

सुतः **प्राचीनशाल**नामा, पुलुषसुतः **सत्ययज्ञ**नामा, भाल्लविसुत **इन्द्रद्युम्न**नामा, शर्कराक्ष्य(शर्कराक्ष?)सुतो **जन**नामा, अश्वतराश्वसुतो **बुडिल**नामा, ते एते पञ्चापि **महाशालाः** महागृहस्थतया विस्तीर्णशालासंपन्ना —प्रसिद्धा इति यावत्—**महाश्रोत्रियाः** अतीव श्रुताध्ययनसंपन्नाश्चैकत्र संभूय, 'अस्माकमन्तर्यामितयाऽऽत्मभूतं ब्रह्म किमिति **मीमांसाञ्चक्रुः** विचारं कृतवन्त इत्यर्थः ।

---

मन्यवाऽग्निरहस्ये महाशालो जाबालो महाकाश्यो निर्दिष्टः । इमे औपवेशिमरुणमहर्षिं समेत्य अश्वपतिमुपसन्नास्तत्रोक्ताः । इह तु आरुणिमुद्दालकं समेत्य । अत्र येन विप्रेण यदंशोपासनं क्रियमाणमिहोपवर्णितम्, न तत् तथैव तत्र, अत्र आदित्योपासकः तत्र अबुपासक इति रीत्या भेददर्शनात् । एवमुपपादनवैषम्येऽपि तत्तदुपास्याकाराणां सर्वेषां मेलनं वैश्वानरविद्यायामित्येतदुभयत्राविशिष्टम् । यत्तु किञ्चित् उपास्यांशेऽपि वैलक्षण्यं प्रतीयमानम्, यथा—अत्र दिव उक्तं सुतेजस्त्वमग्निरहस्ये आदित्यस्योक्तं विश्वरूपत्वस्थाने ; दिवस्तु अतिष्ठात्वमिति किञ्चिदिति—, तत्र शब्दभेदेऽपि अनुसंधेयार्थ एकरूप एव—सुतेजस्त्वं हि विश्वप्रकाशकतेजस्संपन्नत्वमेव ; अतिष्ठात्वञ्च सूर्यचन्द्रादितेजश्शालित्वरूपातिशयवत्तया स्थितत्वमेव—इति श्रुतप्रकाशिकायां समाहितम् । प्रादेशमात्रत्वं परं अत्र तत्र चोक्तं विभिन्नरूपमेवेति वैकल्पिकमिति वक्ष्यते । मूर्धादिपादान्तक्रमानुसारिणी निरूपणसरणिरिह ; अग्निरहस्ये पादादिमूर्धान्तक्रमादरणम् ।

मीमांसाञ्चक्रुरिति । विवादेन प्रवृत्तानामेषां मीमांसानन्तरमप्यैकमत्यं न संपन्नमिति व्यक्तमग्निरहस्ये । अत एव स्वस्वपक्षे

आग्रहेण अश्वपतिपृष्टेनैकैकेनापि, 'दिवमेव भगवो राजन्' इति रीत्या एवकारो निर्देक्ष्यते। 'को न आत्मा किं ब्रह्म' इत्यस्य पर्यवसितार्थमाह अस्माकमित्यादिना। किमित्यस्य किमाकारमित्यर्थः। प्रश्नद्वयं वा। ननु आत्मब्रह्मणोरेकत्वात् कथमेवं प्रश्नद्वयम्। न च जीवात्मपरमात्मानौ क्रमेणेह जिज्ञासितौ ; नः आत्मेति व्यधिकरणविभक्त्या जीवातिरेकावगमात् ; उपरि जीवात्मानिरूपणाच्चेति चेत्—अत्र श्रुतप्रकाशिका, 'आत्मब्रह्मशब्दवाच्यधर्म्यैकत्वानेकत्वजिज्ञासया वा किंशब्दद्वयप्रयोगः' इति। अयं भावः—किं ब्रह्मेति प्रश्ने, इदं ब्रह्म, एवंलक्षणं ब्रह्मेति उपरि वक्तव्यम्। तत्तु न। उपरि ब्रह्मपदप्रयोग एव न लक्ष्यते। एते च विशिष्य वैश्वानरात्मविषयविवादेन प्रस्थिता इत्यस्य अत्र संदर्भे सुस्पष्टत्वात् को न आत्मेत्यस्य (नः इति विशेषनिर्देशात्) अस्माभिरुपास्यवैश्वानरात्मा किंभूत इत्यर्थः। तत्र द्युलोकादित्याद्येकैकांशमात्रमितता तत्तदभिमता वैश्वानरस्य दर्शयिष्यते। किं ब्रह्मेत्यस्य तु किं कस्मात् अयं ब्रह्म ; यद्वा सोऽयमात्मा किं ब्रह्मैव उतान्य इत्यर्थः। अश्वपत्युत्तरश्रवणानन्तरमेव द्युलोकादित्यादिविश्वरूपत्वस्य वैश्वानरेऽवगमात् तादृशविश्वरूपतया प्रसिद्धं परं ब्रह्मैव वैश्वानर इत्यर्थोऽवसितं भविष्यति। ततः प्राक् तु द्युलोकादित्यादिमात्रत्ववित्तौ ब्रह्मत्वे संशय एव। तथाच द्यौर्वाऽऽदित्यो वा अन्यो वा कोऽसौ वैश्वानरात्मा। तावन्मात्रत्वे ब्रह्मत्वञ्च कथम् ; देवतान्तरत्वस्यापि संभवादिति अस्यात्मनो ब्रह्मणश्चैकत्वमनेकत्वं वेति जिज्ञासया किंशब्दद्वयमिति। अत एव किमयं ब्रह्म अन्यद्वेति मीमांसितवतां वृत्तं वर्णयन् वैश्वानरविद्यासंदर्भः अग्निसाधारणतया प्रतीयमानः पुनरशक्यनिर्णयत्व एवात्मानं स्थापयतीति वैश्वानराधिकरणे पूर्वपक्षे प्राप्ते, तन्निरासाय, "असंभवात्" इति सौत्रखण्डेन त्रैलोक्यशरीरकत्वं हेतुमश्वपतिवाक्याधिगतमुपन्यस्य ब्रह्मत्वसाधनमिति।

ते ह संपादयाञ्चक्रुः, 'उद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति, तं हन्ताभ्यागच्छाम' इति। तँ हाभ्याजग्मुः। स ह संपादयाञ्चकार, 'प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियाः। तेभ्यो न सर्वमिव प्रतिपत्स्ये। हन्ताहमन्यमभ्यनुशासानीति' इति ॥ ३ ॥

---

**ते ह संपादयाञ्चक्रुः**। ते एव मीमांसित्वा निश्चयमलभमानाः आत्मभूतब्रह्मोपदेष्टारं कञ्चित् संपादितवन्तः। निश्चितवन्त इत्यर्थः। किमिति। तत्राह **उद्दालको....अभ्यागच्छामेति**। हे भगवन्तः! अरुणसुत उद्दालकनामा इदानीं वैश्वानरमात्मानं अध्येति— इक् स्मरणे। उपास्त इत्यर्थ। यद्वा 'इण् गतौ' इति गत्यर्थानां ज्ञानार्थत्वात्, 'अवगच्छति' इत्यर्थः तमुद्दालकमभ्यागच्छामेति [निश्चित्य]।

**तं हाभ्याजग्मुः** तमभ्यागतवन्त इत्यर्थः। **स ह....अभ्यनुशासानीति**। स ह उद्दालकः तान् आगतान् दृष्ट्वा, 'एते महाशाला महाश्रोत्रिया मां वैश्वानरमात्मानं प्रक्ष्यन्ति। नाहं तत् सर्वं प्रतिपद्य तेभ्यो वक्तु (प्रति तुं) शक्नोमि। अतोऽन्यं तदभिज्ञं कञ्चित् **अनुशासानि** उपदिशानि' इत्येवं संपादितवान् = निश्चितवानित्यर्थः।

---

संपादयाञ्चक्रुः। न वैश्वानरात्मनिर्णयम्, किंतु तदर्थमभिमन्तव्यव्यक्तिनिर्णयम्। संप्रतीतिशब्दः सम्यगित्यर्थे श्रुतिप्रसिद्धः। प्रतिशब्दोऽभिमुखार्थः प्रतिवेश्मादिपदे प्रसिद्धः। संप्रति = सम्यगभिमुखम् ऋजु इति यावत्। तदेव सम्यगिति। पूर्वमपि (२-९), 'संप्रतिमध्यन्दिन' इति ऋजुमध्यन्दिन इत्यर्थे प्रयुक्तमस्ति। नन्वेवं संप्रतिशब्दावयवार्थपर्यालोचने संप्रतिमध्यन्दिनेत्यत्र संप्रतिपदं साक्षादुच्चकालमात्रग्रहणाय प्रयुक्तं स्यादित्यालोच्यत इति तत्र

तान् होवाच, 'अश्वपतिर्वै भगवन्तोऽयं कैक(के)यः संप्रतीममात्मानं वैश्वानरमध्येति ; तँ हन्ताभ्यागच्छेम' इति । तँ हाभ्याजग्मुः ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार । स ह प्रातः संजिहान उवाच, (श्लो) 'न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।

---

तान् होवाच । स उद्दालक औपमन्यवादीन् प्रति आह । किमिति। अश्व...गच्छामेति । केकयस्यापत्यं कैक(के)यः । शिष्टं स्पष्टम् । तं हाभ्याजग्मुः। तं अश्वपतिमुद्दालकषष्ठाः ते अभ्यागतवन्त इत्यर्थः ।

तेभ्यो ह....चकार । प्राप्तेभ्यः तेभ्यो महर्षिभ्यः कैकयः पृथक्पृथक् अर्हाणि अर्हणानि पूजाः भृत्यैः पुरोहितादिभिश्च कारितवानित्यर्थः ।

स ह...उवाच । स ह राजा अन्येद्युः प्रातःकाले स्वभवनं संजिहानः त्यजन् स्वभवनात् निर्गत्य ; तत्समीपमेत्येति यावत्—तान् महर्षीन् उवाचेत्यर्थः । किमिति । तत्राह—

न मे....भगवन्त इति । 'हे भगवन्तः पूजार्हाः ! मद्धिष्ठिते जनपदे स्तेनः चोरो वा, कदर्यः दानशून्यो वा, मद्यपायी वा,

---

षण्णाडिकात्मकमध्यन्दिनरूपार्थवर्णनं कृतमयुक्तमिति चेत् अस्तु सोऽर्थो यथाकथञ्चित् । एवं व्युत्पत्तेरपि संभवात् श्रुतिप्रयोगस्वरसाच्च सम्यगित्यर्थो ग्राह्यः । अत एव शाङ्करे सम्यगिति व्याख्यातम् । इदानीमित्यर्थश्च तत्काले वैश्वानरवेदनवत्त्वस्य तेषु सर्वेष्वविशिष्टतया अव्यावर्तकः । अभिगमनहेतुश्च सम्यक् तद्वेदनमेव । अत इह भाष्ये इदानीमिति अध्येतीति लडुक्तवर्तमानकालविवरणरूपं ग्राह्यम् । संप्रतिशब्दार्थं तु, 'न च ते तद्ज्ञानमपलापार्हम्' इति अश्वपतौ दर्शयिष्यति ।

जानश्रुतिविषये संजिहान इति पदम्, 'तल्पं त्यजन्' इति व्याख्यातम् ; अन्तःपुर एव क्षत्त्रा व्याहारसंभवात् । इह तु न तथेति ।

नानाहिताग्निर्नाविद्वान् न स्वैरी, स्वैरिणी कुतः ॥ यक्ष्यमाणो वै भगवन्तोऽहमस्मि। यावदेकैकस्मा ऋत्विजे धनं दास्यामि, तावत् भगवद्भ्यो दास्यामि। वसन्तु भगवन्तः' इति ॥ ५ ॥

ते होचुः, 'येन हैवार्थेन पुरुषश्चरेत्, तँ हैव वदेत्। आत्मानमेवेमं वैश्वानरँ संप्रत्यध्येषि, तमेव नो ब्रूहि' इति ॥ ६ ॥

---

सत्यां योग्यतायामनाहिताग्निर्वा, अविद्वान् वेदाध्ययनादिशून्यस्त्रैवर्णिको वा, स्वैरी परदारगन्ता वा, पुंश्चली वा एवमाद्याः दुष्टाः न सन्ति— न हि तैर्दत्तं धनमुपजीवामि। अतो मम प्रतिग्रहयोग्यताऽस्तीति [इति] भावः। 'अहमचिरेणैव कालेन यागं करिष्यामि। तत्र यागे एकैकस्मै ऋत्विजे यावत् धनं दास्यामि, तावत् भगवद्भ्यः प्रत्येकं दास्यामि। तावत्कालमत्रैव वसन्तु; यागञ्च पश्यन्तु' इति प्रार्थितवानित्यर्थः। भगवता च भाष्यकृता, "न मे स्तेन इत्यादिना, 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' इत्यन्तेन आत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धस्य परिहरणीयतां विहितस्य कर्तव्यतां च प्रज्ञाप्य, 'यावदेकैकस्मै ऋत्विजे धनं दास्यामि, तावत् भगवद्भ्यो दास्यामि। वसन्तु भगवन्त' इत्यवोचत्" इति भाषितम्।

ते होचुः। ते ऋषयो राजानं प्रति ऊचुः। किमिति। तदाह

---

स्वैरिणी कुत इति। स्वैरित्वस्य मिथुनायत्तत्वात् पुंसि स्वैरित्वनिषेधे स्त्रियः स न पृथक् कर्तव्य इति भावः। यद्वा इतस्ततो जनपदात् बहिरटतां पुंसामेवास्वैरित्वे प्रायोऽन्तः स्थितानां स्त्रीणां स्वैरित्वमसंभावितमिति। नन्विदं न मे स्तेन इत्यादिकं स्वात्मप्रशंसापर्यन्तमपि किमित्युक्तं राज्ञेत्यत्र स्वधनं तांस्तत्राव्यग्रान् महात्मनः प्रतिग्राहयितुमिति भावमाह न हि तैरित्यादिना।

तान् होवाच, 'प्रातर्वः प्रतिवक्तास्मि' इति। ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे। तान् हानुपनीयैवैतदुवाच॥ इति पञ्चमे एकादशः खण्डः

---

**येन....ब्रूहीति** । येन अर्थेन प्रयोजनेन, यत् प्रयोजनमुद्दिश्य पुरुषः **चरेत्** आगच्छति, तमेव पुरुषार्थं तस्य [**वदेत्** कुर्यामिति वदेत् ।] कुर्यात् [इति यावत्] । समीहितं हि कर्तव्यं भवति । अस्माकञ्च वैश्वानर आत्मा जिज्ञासितः । त्वञ्च तमात्मानमधुनाऽध्येषि उपास्से । न च ते तज्ज्ञानमपलापार्हम् । अतः तमेव नः उपदिश; न प्रयोजनान्तरमित्यर्थः । विश्वान् नरान् नयतीति, विश्व एनं नरा नयन्तीति वा विश्वानरः । विश्वानर एव वैश्वानरः; वय एव वायस इतिवत् ।

**तान्....प्रतिवक्तास्मीति** । तेषामभिमानं परिशोध्य, श्वः प्रतिवचनं दास्यामीति मत्वा, 'प्रातः प्रश्नस्य प्रतिवचनकर्तास्मि' इत्युवाचेत्यर्थः । **ते...प्रतिचक्रमिरे** । ते च राज्ञोऽभिप्रायज्ञाः समिद्भारहस्ता अपरेद्युः पूर्वाह्णे राजानम्, 'शिष्या भवेम' इत्युपगतवन्तः । **तान्...उवाच** । राजा तु तान् समित्पाणीन्, उपयामेति वदतः त्यक्तस्वजात्यभिमानान् उद्वीक्ष्य तेषामुपदेशयोग्यतां ज्ञात्वा, 'अब्राह्मणेन न ब्राह्मण उपनेतव्यः' इति शास्त्रार्थं ज्ञात्वा तैः समर्पितं समिदाद्युपाय-

---

श्वः इति । ननु पूर्वं प्रातः संजिहान इत्यत्र प्रातःपदमुदयप्राक्कालपरमस्तु । इह च तत् स्नानाद्यनुष्ठानानन्तरकालपरम् । उच्यते हि, 'पूर्वाह्णे प्रतिचक्रमिरे' इति समनन्तरम् । ब्रह्मविद्याग्रहणकालश्च स इति, 'पराशरं मुनिवरं कृतपौर्वाह्णिकक्रियम्' इत्यादौ प्रसिद्धम्। अतः किमिति दिनभेदकल्पनमिति चेत्—उच्यते। राज्ञः तस्मिन् दिने यज्ञव्यापृतत्वात् प्रतिवक्तास्मीति अनद्यतनार्थक-

'औपमन्यव ! कं त्वमात्मानमुपास्ते' इति । 'दिवमेव भगवो राजन्' इति होवाच । 'एष वै सुतेजा आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

---

नमस्वीकृत्यैव मैत्र्येव **एतत्** वक्ष्यमाणमुवाचेत्यर्थः ।

यत एवं महाशालाः महाश्रोत्रिया ब्राह्मणास्सन्तो महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ताः जातितो हीनं राजानं विद्यार्थितयोपजग्मुः, तस्मात् तथाऽन्यैर्विद्योपदित्सुभिर्भवितव्यमित्याख्यायिकया सूच्यते । ५-११-

अथ कैकयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुः विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मन्येतैः किञ्चित् ज्ञातम्, किञ्चिदज्ञातमिति विज्ञाय ज्ञातांशबुभुत्सया तान् एकैकशः प्रष्टुमुपक्रमते ; तत्रौपमन्यवं पृच्छति— **औपमन्यव....उपास्स इति। दिव....होवाच** । 'हे भगवः ! द्युलोकशरीरकं वैश्वानरमहमुपास्स' इति औपमन्यवः प्रत्युवाचेत्यर्थः । कैकय आह, **एष....नागमिष्य इति** । यं द्युलोकावच्छिन्नं वैश्वानरमात्मानं त्वमुपास्से, एष वैश्वानर आत्मा सुतेजाः । द्युलोको हि सूर्यचन्द्र[ादि] तेजोयुक्ततया सुतेजा भवति । य(अ)तश्च द्युलोकावच्छिन्नो वैश्वानर आत्मा त्वयोपास्यमानः सुतेजस्त्वगुणयोगेन सुतेजोनामा वैश्वानरः, तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते । अत्र **सुत-प्रसुत-आसुतशब्दाः** एकाहाहीनसत्रकर्मगताभिषवणपराः । सुतशब्दवत्त-

---

लुट्प्रयोगाच्च श्व इति सिद्धमिति ।

एकाहाहीनसत्रेति । सोमयागेषु ज्योतिष्टोम एकाहः ; पञ्चरात्राख्यस्य तस्य पञ्चममहरेकमेव सुत्याहः । द्विरात्रप्रभृतिरहीनो

अत्स्यन्नम्, पश्यसि प्रियम् ॥ अत्त्यन्नम्, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते ॥

---

साम्यात् सुतेजस्त्वोपासनायाः सुतादिफलकत्वोपपत्तिरिति भावः । **अत्स्यन्नं पश्यसि प्रियम्** । तदुपासनावैभवेन अन्नं लौकिकं भोग्यमनुभवसि, प्रियं पुत्रादिकञ्च पश्यसीत्यर्थः । एवमन्योऽपि यः, त्वमिव, त्वदुपास्यं वैश्वानरमुपास्ते, सोऽपि त्वमिवान्नादनप्रियदर्शनब्रह्मवर्चसशाली सन्तानवांश्च भवतीत्याह **अत्त्यन्नं....उपास्ते** । उक्तोऽर्थः । एवं तदुक्तमर्थमङ्गीकुर्वन्निव फलप्रदर्शनेन तमभिमुखीकृत्य तत्र वक्तव्यम् अंश-

---

द्वादशाहं यावत् । द्वादशाहादूर्ध्वं सर्वं सत्रम् । द्वादशाह उभयविधः । सुतमिति भावे क्तः । षुञ् अभिषवे । सुतशब्दवत्त्वसाम्यादिति । उपरि तत्तन्नामानुगुणमेव फलप्रदर्शनादिहापि तथैव वर्णने औचित्यादिति भावः । अत्र तस्मादित्यादिना मूले उपासनकालिकफलस्यैव कथनात् सर्वमिदमानुषङ्गिकफलमेव अयथोपासकेऽपि क्रमेण यथावत् समग्रोपासनसंभावनया भगवता कृपया तात्कालिकं संकल्प्यमानम् । अतः तन्मध्यनिविष्टम् अत्स्यन्नमित्यपि लौकिकफलपरमेवेति लौकिकं भोग्यमनुभवसीत्युक्तम् । न तु विद्याफलभूतं, 'सर्वेष्वात्मस्वन्नमत्ति' इत्यन्नादनमिह संबध्यते । अत्त्यन्नमित्युपरितनवाक्यं तु वक्ष्यमाणपरमात्मरूपान्नादनपरं भवितुमर्हति । एवमिति द्युलोकप्रकारकमित्यर्थः । भवत्यस्य प्रियमित्यादि च प्राणाग्निहोत्रे वक्ष्यमाणफलैकदेशः । अत्र कैकयस्यान्तराशयस्तावत्—यो यथावस्थितवैश्वानरात्मोपासनैकदेशरूपद्युलोकप्रकारकतदुपासनवान्, स तत्फलैकदेशवानिति । अज्ञाताशयस्तु श्रोता यथावस्थितज्ञानरहितः स्वोपासनस्यापि तत् फलं मेने । तन्मतिनिरासाय चोपरि अनर्थप्रदर्शनमिति । तदिदं सूचयितुं अङ्गीकुर्वन्निवेति इव-

मूर्धा त्वेष आत्मनः' इति होवाच, 'मूर्धा ते व्यपतिष्यत्, यन्मां नागमिष्यः' इति ॥ २ ॥ इति पञ्चमाध्याये द्वादशः खण्डः ।

## पञ्चमे त्रयोदशः खण्डः

अथ होवाच सत्ययज्ञं पौलुषिम्, 'प्राचीनयोग्य! कं त्वमात्मानमुपास्से' इति । 'आदित्यमेव भगवो राजन्' इति होवाच । 'एष वै विश्वरूप आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात् तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥ प्रवृत्तोऽश्वतरीरथो दासीनिष्कः; अत्स्यन्नम्; पश्यसि प्रियम् ॥ अत्त्यन्नम्, पश्यति प्रियम्, भवत्यस्य

---

मुपदिशति **मूर्धा तु....** । त्वया वैश्वानरबुद्ध्या उपास्यमान एष द्युलोकः परिच्छिन्नः **आत्मनो** वैश्वानरस्यात्मनो मूर्धावयवभूतः ; न तु स एव वैश्वानरात्मा । एतदर्थनिर्णयार्थं तव मत्समीपानागमने तव वैश्वानरात्ममूर्धरूपावयवभूते द्युलोके कृत्स्नवैश्वानरबुद्धिं कुर्वतस्तव **मूर्धा व्यपतिष्यत्** विपरीतविद्यावशादनर्थः स्यात्। अतः साध्वकार्षीः, यत् त्वं मामागतोऽसीत्यभिप्रायः।५-१२।**अथ...उपास्स इति**। प्राचीनयोग्य इति सत्ययज्ञस्य नामान्तरम्। **आदित्य....विश्वरूप आत्मा वैश्वानरः...** । रूप्यत इति **रूपम्**। विश्वं रूपं प्रकाश्यं यस्य, स विश्वरूपः। आदित्यस्य विश्वप्रकाशकत्वात् विश्वरूपत्वम् । **तस्मात्....दृश्यते** । एतदुपासनात् तव कुले बहु **विश्वरूपं** विश्वप्रकाशकं पुत्ररत्नादिकं दृश्यत इत्यर्थः । **प्रवृत्तो....नागमिष्य इति** । अश्वतरीभिर्युक्तो रथः **अश्वतरीरथः**

---

कारः । नेदमनुपास्योपासनं त्वया क्रियमाणम्, किंतु उपास्योपासनमेवेति दर्शयितुमेव एष वै सुतेजा इत्यादि प्रागुक्तम् । न तु तावदेव पर्याप्तमिति ।

ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते। चक्षुष्ट्वेतदा-त्मनः' इति होवाच, 'अन्धोऽभविष्यत्, यन्मां नागमिष्यः' इति ॥२॥

इति पञ्चमे त्रयोदशः खण्डः। अथ पञ्चमे चतुर्दशः खण्डः

अथ होवाच इन्द्रद्युम्नं भाल्लवेयम्, 'वैयाघ्रपद्य! कं त्वमात्मान-मुपास्से' इति। 'वायुमेव भगवो राजन्' इति होवाच। 'एष वै पृथग्वर्त्मा वैश्वानरः, यं त्वमात्मानमुपास्से। तस्मात् त्वां पृथक् बलय आ[य]यन्ति; पृथक् रथश्रेणयोऽनुयन्ति ॥ १ ॥ अत्स्यन्नम्; पश्यसि प्रियम् ॥ अत्स्यन्नम्, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते। प्राणस्त्वेष आत्मनः' इति होवाच, 'प्राणस्त उदक्रमिष्यत्, यन्मां नागमिष्यः' इति ॥ २ ॥

इति पञ्चमे चतुर्दशः खण्डः। अथ पञ्चमे पञ्चदशः खण्डः

अथ होवाच जनं शार्कराक्ष्यम्, 'शार्कराक्ष्य! कं त्वमात्मान-

---

त्वामनु[प्र]वृत्तः दासीभियुक्तो निष्कः हारः दासीनिष्कः त्वामनु-प्रवृत्त इत्यर्थः। शिष्टं सर्वं पूर्ववत्। ५-१३.

अथ....अनुयन्ति। व्याघ्रपद्यस्यापत्यं वैयाघ्रपद्यः। भाल्ल-वेरेव व्याघ्रपद्य इति नामान्तरम्। वायोर्विविधगतित्वात् पृथग्वर्त्म-त्वम्। तस्मात्....अनुयन्ति। पृथक् नानादिक्स्थाः वस्त्रान्नादि-लक्षणाः बलयः आययन्ति आगच्छन्ति। रथपङ्क्तयोऽपि त्वामनु-यान्तीत्यर्थः। अत्स्यन्नं...नागमिष्य इति। सर्वं पूर्ववत्। ५-१४.

अथ....धनेन च। एष वै बहुल आत्मा। भूतान्तरेभ्य

---

चक्षुष्ट्वेतदिति। चक्षुः, तु, एतदिति पदच्छेदः। दासीनिष्क इति अत्र दासीति जात्येकवचनान्तं पृथक्पदमपि सुवचम्। तथापि दासीभ्योपि निष्कदानानुरूपविशेषैश्वर्यलाभात् समास आश्रितः वैयाघ्रपद्येति। अयमिन्द्रद्युम्नो बुडिलश्च द्वावपि वैयाघ्रपद्यौ।

मुपास्से' इति । 'आकाशमेव भगवो राजन्' इति होवाच । 'एष वै बहुल आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात् त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥ अत्स्यन्नम्; पश्यसि प्रियम् ॥ अत्त्यन्नम्, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । संदेहस्त्वेष आत्मनः' इति होवाच—, 'संदेहस्ते व्यशीर्यत्, यन्मां नागमिष्यः' इति ॥ २ ॥

इति पञ्चमाध्याये पञ्चदशः खण्डः ।

### पञ्चमे षोडशः खण्डः

अथ होवाच बुडिलमाश्वतराश्विम्, 'वैयाघ्रपद्य! कं त्वमात्मानमुपास्से' इति । 'अप एव भगवो राजन्' इति होवाच । 'एष वै रयिरात्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात्त्वँ रयिमान् पुष्टिमानसि ॥ १ ॥ अत्स्यन्नम्; पश्यसि प्रियम् ॥ अत्त्यन्नम्, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानर-

---

आकाशस्य महत्त्वात् बहुलत्वम् । शिष्टं स्पष्टम् । **अत्स्यन्नम्....** । **संदेहः** मध्यकायः । मध्यकायो हि उत्तरापरकाययोः क्वानुप्रविष्ट इति संदिह्यमानत्वात् **संदेह** इत्युच्यते । **व्यशीर्यत्** विशीर्णोऽभविष्यत् । शिष्टं स्पष्टम् । ५-१५.

**अथ....पुष्टिमानसि** । **वैयाघ्रपद्य** व्याघ्रपद्गोत्रापत्येत्यर्थः । **एष वै रयिरात्मा** । अपां वेगवत्त्वात् रयित्वम् । विसर्गश्छान्दसः । [अतो रयीत्यनुक्तिः ।] धनप्राप्तिहेतुत्वाद्वा रयित्वम् । रयिमान् धनवान्

---

संदिह्यमानेति । दिहेरुपचयार्थत्वात् मांसादिबहुलं शरीरं संदेह इति परे । 'मध्यं ह्येषामङ्गानामात्मा' इति श्रुतिः । 'खं नाभिः' इति स्मृतिः । (१-२-, २९.) श्रुतप्रकाशिका द्रष्टव्या ।

मुपास्ते। 'वस्तिस्त्वेष आत्मनः' इति होवाच। 'वस्तिस्ते व्यभेत्स्यत्, यन्मां नागमिष्यः' इति ॥ २ ॥ इति पञ्चमाध्याये षोडशः खण्डः।

पञ्चमे सप्तदशः खण्डः

अथ होवाचोद्दालकमारुणिम्, 'गौतम! कं त्वमात्मानमुपास्से' इति। 'पृथिवीमेव भगवो राजन्' इति होवाच। 'एष वै प्रतिष्ठाऽऽत्मा वैश्वानरः, यं त्वमात्मानमुपास्से, तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १॥ अत्स्यन्नम्, पश्यसि प्रियम् ॥ अत्त्यन्नम्, पश्यति प्रियम्। भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते। 'पादौ त्वेतावात्मनः' इति होवाच, 'पादौ ते व्यम्लास्येताम्, यन्मां नागमिष्यः' इति ॥२॥ इति पञ्चमाध्याये सप्तदशः खण्डः।

पञ्चमे अष्टादशः खण्डः

तान् होवाच, 'एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाँसोऽन्नमत्थ। यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १॥

इत्यर्थः। **अत्स्यन्नम्...**। **वस्तिः** मूत्रस्थानम्। शिष्टं स्पष्टम् ॥ ५-१६

**अथ....पशुभिश्च**। प्राण्याधारत्वात् पृथिव्याः प्रतिष्ठात्वम्। **अत्स्यन्नम्....**। **व्यम्लास्येतां** म्लानौ श्लथौ अभविष्यतामित्यर्थः। शिष्टं स्पष्टम् ॥

**तान् होवाच**। अथ राजा **तान्** ऋषीन् पुनरुवाचेत्यर्थः।

**एते वै....अत्थ**। एतादृशा हि यूयमिमं वैश्वानरमात्मानं पृथगिव विद्वांसः भिन्नभिन्नतयोपासीनाः तदानुरूप्येण **अन्नमत्थ** लौकिकं भोगमनुभवथेत्यर्थः। पूर्वत्र **अत्स्यन्न**मिति प्रतिपुरुषमुक्तस्य अत्र **अत्थे**ति बहुवचनेन निर्देशः। अत्र **अन्नमत्थे**त्येतत्, प्रियं पश्यथेत्यस्याप्युप-

---

सर्वेषु लोकेष्विति। द्युलोकादित्यादीनां लोकभूतादिरूपत्वात्।

लक्षणम् । **यस्तु....अत्ति । अभिविमानं** सर्वाभिव्याप्ततया विगतमानं **वैश्वानरं** विश्वेषां नराणां नेतारं एतमात्मानं **प्रादेशमात्रं**। द्युलोकादि-प्रदेशसंबन्धिनी प्रादेशी । प्रादेशी मात्रा यस्य तं प्रादेशमात्रं—द्युप्रभृतिप्रदेशपरिच्छिन्नं य उपास्ते, स सर्वलोकसर्वभूतसर्वात्मवर्ति-ब्रह्मरूपमन्नं **अत्ति** अनुभवतीत्यर्थः ।

अनेन वैश्वानरोपासनस्य ब्रह्मप्राप्तिफलकत्वं उक्तं भवति । **भगवता च भाष्यकृता,** "सर्वेषु भूतेषु सर्वेष्वात्मसु च वर्तमानं यत् **अन्नं** भोग्यम्, तदत्ति । सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति । यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकं अनन्य-साधारणमन्नं भुज्यते, तत् मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते" इति **भाषितम् ।**

---

**वर्तिब्रह्मरूपमन्नमिति सर्वत्र सप्तम्यर्थोऽधिकरणत्वं कर्तृद्वारा वा धात्वर्थेऽन्वेति। यथा आसने भुङ्क्ते पात्रे भुङ्क्ते इति। तत्र कर्तृद्वारा अन्वय इह दुर्वचः। उपासकस्य फलानुभवदशायां सर्वलोकसर्व-भूतवर्तित्वसंभवेऽपि सर्वात्मवर्तित्वायोगात्। तस्य परमात्मासाधा-रणत्वात् । आत्मशब्दस्य शरीराद्यमुख्यार्थग्रहणस्य चायुक्तत्वात् । भूतपदेन चराचरग्रहणात् शुद्धात्मनामेवात्मपदेन ग्राह्यत्वात् । अतः कर्मद्वारा सप्तम्यर्थान्वयः। सर्वात्मवर्ति चान्नं ब्रह्मैव। प्रसिद्धमिदम् 'अहमन्नाद' इत्यादौ। मोक्षफलस्यात्र अन्नादनरूपेण कथनञ्च एक-देशोपासिनामन्नादनफलस्थितेः प्राक् प्रदर्शनात् तदानुरूप्याय; अन्ना-दनरूपाग्निहोत्राङ्गिकेयं विद्या अन्नादनफलिकेत्यौचित्याय च। यथा अक्षरातृजानश्रुतिविषये अन्नादनकथनम्। यथा च अन्नानिन्दनाजि-ज्ञतोपदेशा" वैमानन्दमयविद्यायाम्, 'अहमन्नम्, अहमन्नादः' इति।**

अत्र, "प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नाः। तथा तु व एनान् वक्ष्यामि यथा प्रादेशमात्रमभिसंपादयिष्यामीति। स होवाच मूर्धानमुपदिशन्, 'एष वा अतिष्ठा वैश्वानरः' इति; चक्षुषी उपदिशन्नुवाच, 'एष वै सुतेजा वैश्वानरः' इति; नासिके उपदिशन्नुवाच, 'एष वै पृथग्वर्त्मा वैश्वानरः' इति। मुख्यमाकाशमुपदिशन्नुवाच, 'एष वै बहुलो वैश्वानरः' इति; मुख्या अप उपदिशन्नुवाच, 'एष वै रयिर्वैश्वानरः' इति; चुबुकमुपदिशन्नुवाच, 'एष वै प्रतिष्ठा वैश्वानरः' इति" इति वाजसनेयकोक्तमूर्धचुबुकान्तरालप्रतिष्ठितत्वलभ्यं(भ्य) प्रादेशमात्रत्वं नोपजीव्यम्। द्युप्रभृतिप्रदेशसंबन्धिमात्रावत्त्वस्य(संबन्धित्वमात्रस्य) यौगिकार्थस्य प्रकरणतः प्रतीतेः। उक्तञ्च व्यासार्यैः सर्ववेदान्तप्रत्ययाधिकरणे, "यस्त्वेतमिति न वाजसनेयकोक्तानुवादः स्वशाखावाक्य एव पूर्वप्रतिपादितस्यानुवादेन फलसमर्पकत्वोपपत्तेः" इति।

---

नन्वस्य मूलवाक्यस्य, सर्वलोकभूतात्मतृप्तिकरमन्नादनमस्योपासकस्य भवतीत्यर्थोऽस्तु। तदेवोपरि विव्रियते, सर्वलोकादीन् उपासकशरीरे परिकल्प्य सर्वतृप्तिकरप्राणाग्निहोत्रवर्णनेनेति चेत्—न। पूर्वं, अत्स्यन्नमिति व्यस्तोपासनेषु अन्नादनस्य फलतया कीर्तनात् तस्य चैतद्वाक्याभिसंहितविषये अंशानुवादरूपतया अस्यापि वाक्यस्य फलपरताया आवश्यकत्वात्। त्वदुक्तार्थस्यैतोऽलाभाच्च। उपरि, 'सर्वेष्वात्मसु हुतं भवति' इति वाक्यान्तरेण तस्यार्थस्य वक्ष्यमाणत्वाच्च।

यौगिकार्थस्येति। न च प्रादेशशब्दरूढ्यर्थस्य शीघ्रप्रतीतस्य, अग्निरहस्यवाक्यशेषव्युत्पादितस्य प्रादेशमात्रपदार्थस्य च त्यागो न न्याय्य इति वाच्यम्—तद्ग्रहणे, 'तस्य ह वा एतस्य' इत्याद्युपरिवर्ण्य-

न चापरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशः संबन्धिन्या मात्रया कथं परिच्छिन्नत्वमिति चोदनीयम्—परिच्छिन्नत्वे बुद्धिसौकर्यलक्षणाभिव्यक्तेः संभवात्। सूत्रितञ्च, "अभिव्यक्तेरित्याश्मरथ्यः" इति। बुद्धिसौकर्यलक्षणाभिव्यक्तेर्हेतोः अभिविमानस्यापि ब्रह्मणः प्रादेशमात्रत्वमुपदिश्यत इत्याश्मरथ्य आचार्यो मन्यते इति सूत्रार्थः॥ अभिव्यक्त्यर्थं परिच्छिन्नत्वोपदेशेऽपि मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति न चोदनीयम्–तथोपासनार्थत्वात्। सूत्रितञ्च, "अनुस्मृतेर्बादरिः" इति। अनुस्मृतिः उपासनम्। अनुस्मृतेर्हेतोः पुरुषविधत्वनि(?)रूपणमिति बादरिराचार्यो मन्यत इति सूत्रार्थः।

अथ प्राणाहुत्याधारत्वेन त्रिविधाग्नित्वेन च परिकल्पितजाठराग्निशरीरकद्युमूर्धत्वादिविशिष्टात्मभाविते स्वशरीरे क्रियमाणप्राणाद्याहुतिभिः वैश्वानरविद्यानिष्ठेन परमात्मा समाराधनीय इति प्रतिपादयति तस्य ह...। एतस्यात्मनः=उपास्त इति अव्यवहितप्रकृतस्योपासकस्यात्मनः मूर्धैव तस्य वैश्वानरस्य = 'मूर्धा वेष आत्मनः'

---

मानप्रकारविरोधापत्तिबलादेव तस्यागात्। तत्र हि उपासकशरीरे मूर्धादिपादान्तेषु द्युलोकादिपृथिव्यन्तवैश्वानरमूर्धादिपादान्तावयवकल्पना कृताऽस्ति। सा, अग्निरहस्योक्ता मूर्धचुबुकान्तराले तावदवयवकल्पना च मिथोविरुद्धेति। शाङ्करेऽपि प्राकरणिकप्रादेशमात्रत्वमेवादृतमत्र।

तस्य ह वा इत्यादि। अत्र पृथक्पृथगुक्तानां सुतेजःप्रभृतीनां वैश्वानरीयमूर्धादीनां समुच्चित्यानुवादमात्रमित्युक्तौ वाक्यं सर्वथैव

**मूर्धैव सुतेजाः, चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मा, संदेहो**

---

इति वैश्वानरात्ममूर्धत्वेन निर्दिष्टः सुतेजा इत्यर्थः ।न चात्र **तस्य ह वा एतस्येति** पदयोः परमात्मपरतया सामानाधिकरण्यमेवास्तु, न त्वेतस्येति शब्दस्योपासकपरामर्शित्वमिति शङ्क्यम्—**उर एव वेदिरि-**

---

व्यर्थम् । तदाऽस्य वाक्यस्य यस्त्वेतमेवमिति फलवाक्यात् पूर्वनिवेशापत्तिश्च स्यात् । अतोऽत्र वाक्ये तस्येत्यादि वैश्वानरस्येत्यन्तं न समानाधिकरणम् । किन्तु तस्यैतस्यात्मनो मूर्धा वैश्वानरस्य सुतेजा इत्यन्वयः । आत्मवैश्वानरपदयोर्यथासंख्यं मूर्धसुतेजसोरन्वयात् । तस्येति यथाभाष्यं वैश्वानरविशेषणं वा । वैश्वानरस्येति षष्ठ्या अप्यवयवत्वमर्थः । आत्मशब्द उपासकपरः । उपासकमूर्धादिः वैश्वानरावयवभूतसुतेजआदिरित्युक्तं भवति । मूर्धचक्षुरादिपदानामुपासकावयवपरत्वं उरोलोमाद्युपरितनपदवत् स्वरसमिति तज्ज्ञप्तये एतस्यात्मन इत्येतत् मूर्धादौ उरःप्रभृतौ चान्वेति । नन्वन्वयोऽयं क्लिष्ट इति चेत्–उरइत्यादौ उपासकसंबन्धित्वलाभाय स्वीकार्योऽयं क्लेश इति । भावप्रकाशिकायां उपासात्मविशेषणतयैव वैश्वानरस्येति पदं स्वीकृतम् । उपासकात्मनो वैश्वानरसंबन्धित्वं च वैश्वानरोपासितृत्वरूपमेव । यद्वा स्वमूर्धादौ तन्मूर्धत्वादिकल्पनया स्वयं वैश्वानरीभविष्यत इत्यर्थः । अस्तु वा युक्त्यर्थयथावस्थितवैश्वानरविद्याशेषभूतप्राणाग्निहोत्रशेषतया स्वमूर्धादौ वैश्वानरमूर्धादिदृष्टिरिव स्वस्मिन् वैश्वानरदृष्टिरिह विवक्षता आत्मनो वैश्वानरस्येति षष्ठ्यन्ताभ्याम्; 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः' इत्यत्र पूर्वपक्षे विदुषि यज्ञदृष्टिवत् । अथवा आत्मन इति वा एतस्येति पदं वा जीवविशिष्टपरमात्मपरम् । विशिष्टस्य मूर्धेति च विशेषणभूतजीवमूर्धत्वाशयेनेति नानुपपत्तिः ।

त्यादौ उपासकोर परामर्शस्यावश्यम्भावात् मूर्धैवेत्यत्राप्युपासकस्य मूर्धैव परामृश्यते। तस्मात् **एतस्येति** शब्दस्योपासकपरत्वमेव सिद्धम्।

इह हि **भगवता भाष्यकृता,** 'आमनन्ति' इति सूत्रव्याख्याने,

**"एनं** पुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानर**मस्मिन्** उपासकशरीरे प्राणाहुत्याधारत्वायामनन्ति च, 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा' इत्यादिना। अयमर्थः— 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय, 'सर्वेषु लोकेषु' इत्यादिना ब्रह्मप्राप्तिफलमुपदिश्य, अस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं, 'तस्य ह वा एतस्य' इत्यादिनोपदिशति। यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरः तस्यावयवभूतान् द्युत्वादि·

---

आमनन्तीति सूत्रश्रीभाष्ये तु, 'तस्य ह वा इत्यादिना प्राणाग्निहोत्रस्य वैश्वानरोपासनाङ्गत्वोपदेशः' इति भाषणात्, वैश्वानरस्येत्यन्तं विहाय, 'मूर्धैव सुतेजाः' इत्यादीनेवांशान् खण्डशो गृहीत्वा उपासकमूर्धा वैश्वानरमूर्धेत्येवं व्याख्यानात् वैश्वानरस्येत्यन्तं तत्रानन्वितमित्याशय ऊह्यते। सुतेजा इत्येतावतैव वैश्वानरमूर्धत्वस्य प्रतिपन्नतया वैश्वानरस्य सुतेजा इत्याद्यन्वयोऽनपेक्षितः, क्लिष्टश्च; सुतेजःपदस्यावयवार्थकत्वाभावादिति। तदा च तस्येत्यादि सर्वं षष्ठ्यन्तं स्वरसगत्या परमात्मपरमेव। वैश्वानरस्य 'आराधनं प्रस्तूयत' इति शेषपूरणं स्यात्। दूरान्वयसंमतौ च होमीयमित्युपरितनपदेनान्वयः सम्यक् स्यात्। तस्यैतस्य वैश्वानरस्य परमात्मनः तद्धोमीयमिति प्रधानवाक्यमध्ये होमोपयोग्यंशनिरूपकाणि मूर्धेत्यादीनि अवान्तरवाक्यानि। तथाच प्राप्तं प्रथमभक्तं प्रकृतोपासनोपास्यवैश्वानराराधनभूतहोमसाधनमिति प्रधानवाक्यार्थः। खण्डभेदः एकवाक्यत्वाविरोधीति प्रागेव दर्शितम्।

**बहुलो वस्तिरेव रयिः, पृथिव्येव पादौ। उर एव वेदिर्लोमानि बर्हिः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥**

इति पञ्चमाध्याये अष्टादशः खण्डः ।

---

त्यादीन् सुतेजोविश्वरूपादिनामधेयान् उपासकशरीरे मूर्धादिपादान्तेषु संपादयति । **मूर्धैव सुतेजाः** । उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः। **चक्षुर्विश्वरूपः** । आदित्य इत्यर्थः । **प्राणः पृथग्वर्त्मा** । वायुरित्यर्थः । **संदेहो बहुलः** । उपासकस्य मध्यकाय एव परमात्म-मध्यकायभूताकाश इत्यर्थः । **वस्तिरेव रयिः** । अस्य वस्तिरेव तदव-यवभूता आप इत्यर्थः । **पृथिव्येव पादौ** । अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवमुपासकस्य शरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं संनिहितमनुसंधाय स्वकीयानि उरोलोमहृदयमनआस्यानि प्राणा-हुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वार्यपचनाहव-नीयान् अग्निहोत्रोपकरणभूतान् परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्य एवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति, 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' इत्यादिनोपदिश्यते ।'' इति **भाषितम्** । उरःप्रभृतीनां वेद्यादित्वोपदेशश्च प्राणाहुतेरग्निहोत्रत्व-संपत्त्यर्थ इति, 'संपत्तेरिति जैमिनिस्तथा हि दर्शयति' इति **सूत्रितम्** । 'स य इदमविद्वानग्निहोत्रं जुहोति' इति दर्शिताग्निहोत्रत्वसंपत्तेर्हेतोर्वेद्यादि-त्वोपदेश इति जैमिनिर्मन्यते इति सूत्रार्थः । **हृदयं गार्हपत्यः** हृदयकमलावच्छिन्नजाठराग्निर्गार्हपत्यः, **मनोऽन्वाहार्यपचनः** मन इन्द्रियावच्छिन्नजाठराग्निर्दक्षिणाग्निः, **आस्यमाहवनीयः** आस्यावच्छिन्न-

## पञ्चमे एकोनविंशः खण्डः

तत् यद् भक्तं प्रथममागच्छेत्, तद्धोमीयम्। स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति। प्राणस्तृप्यति ॥ १ ॥

प्राणे तृप्यति चक्षुस्तृप्यति। चक्षुषि तृप्यत्यादित्यस्तृप्यति। आदित्ये तृप्यति द्यौस्तृप्यति। दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चाऽऽदित्यश्चाधितिष्ठतः तत् तृप्यति। तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥ इति पञ्चमे एकोनविंशः खण्डः।

## पञ्चमे विंशः खण्डः

अथ यां द्वितीयां जुहुयात् तां जुहुयात् व्यानाय स्वाहेति। व्यानस्तृप्यति ॥ १ ॥ व्याने तृप्यति श्रोत्रं तृप्यति। श्रोत्रे तृप्यति चन्द्रमास्तृप्यति। चन्द्रमसि तृप्यति दिशस्तृप्यन्ति। दिक्षु तृप्यन्तीषु

---

जाठर आहवनीय इत्यर्थः। गार्हपत्यान्वाहार्यपचनादिपरिकल्पनस्य सजातीयजाठर एवोचितत्वात्, 'वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियते' इति भाषितत्वाच्चोक्त एवार्थः। अत्र च हृदयादिशब्दाः तत्तदवच्छिन्नजाठराग्निशरीरकपरमात्मपर्यन्ता इति द्रष्टव्यम्। ५-१८.

**तद्....होमीयम्।** तत् तस्य पुंसो यद् भक्तं यत् अन्नं भोजनकाले प्रथमत आगच्छेत् उपनमेत्, तत् होमीयं होमसाधनम्। तेन होतव्यमित्यर्थः। **स यां...प्राणस्तृप्यति।** प्राणाय स्वाहेति प्रथमायामाहुतौ हुतायां प्राणस्तृप्यतीत्यर्थः। **प्राणे...तत् तृप्यति।** एवं प्राणे तृप्ते सति क्रमात् चक्षुः, आदित्यः, द्यौश्च तृप्यन्ति। ततश्च द्य्वादित्याभ्यामधिष्ठितं वस्तुजातञ्च तृप्यतीत्यर्थः। **तस्य....ब्रह्मवर्चसेनेति।** (**ब्रह्मवर्चसेन तेजसा** वृत्ताध्ययननिमित्ततेजसेत्यर्थः।) तस्मिन् सर्वस्मिन् तृप्ते तस्य **तृप्तिमनु** तृप्तेः पश्चात् प्रजापश्वादिभिर्होताऽपि

यत्किञ्च दिशश्चन्द्रमाश्चाधितिष्ठन्ति तत् तृप्यति। तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति पञ्चमे विंशः खण्डः। अथ पञ्चमे एकविंशः खण्डः

अथ यां तृतीयां जुहुयात् तां जुहुयात् अपानाय स्वाहेति। अपानस्तृप्यति ॥ १ ॥ अपाने तृप्यति वाक् तृप्यति। वाचि तृप्यन्त्या-मग्निस्तृप्यति। अग्नौ तृप्यति पृथिवी तृप्यति। पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतः तत् तृप्यति। तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति पञ्चमाध्याये एकविंशः खण्डः

पञ्चमे द्वाविंशः खण्डः

अथ यां चतुर्थीं जुहुयात् तां जुहुयात् समानाय स्वाहेति। समानस्तृप्यति ॥ १ ॥ समाने तृप्यति मनस्तृप्यति। मनसि तृप्यति पर्जन्यस्तृप्यति। पर्जन्ये तृप्यति विद्युत् तृप्यति। विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतः तत् तृप्यति। तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति पञ्चमाध्याये द्वाविंशः खण्डः

पञ्चमे त्रयोविंशः खण्डः

अथ यां पञ्चमीं जुहुयात् तां जुहुयात् उदानाय स्वाहेति। उदानस्तृप्यति ॥ १ ॥ उदाने तृप्यति वायुस्तृप्यति। वायौ तृप्यति आकाशस्तृप्यति। आकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधि-तिष्ठतः तत् तृप्यति। तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ इति पञ्चमाध्याये त्रयोविंशः खण्डः।

---

तृप्यतीत्यर्थः। अत्र प्राणचक्षुरादिशब्दाः तत्तदभिमानिदेवतापराः; अचेतनानां तृप्तेरसंभवादिति।

एवमुत्तरत्रापि द्रष्टव्यम् ॥ शिष्टं स्पष्टम् ॥ ५-१९-२३.

**स य इदमविद्वानग्निहोत्रं जुहोति, यथाऽङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत् स्यात् ॥ १ ॥ अथ य एतदेवं विद्वानग्निहोत्रं जुहोति, तस्य सर्वेषु लोकेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥**

**तत् यथेषीक(का)तूलमग्नौ प्रोतं प्रदूयेत, एवँ हास्य सर्वे पाप्मानः प्रदूयन्ते, य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥**

**तस्मादु हैवंवित् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेत्, आत्मनि**

---

**स य...जुहोति** । उरःप्रभृतीनामग्निहोत्रोपकरणवेद्यादितामजानन् यः प्राणाग्निहोत्रमनुतिष्ठतीत्यर्थः । **यथा....स्यात्** । तदनुष्ठानं भस्माहुतिसमानं स्यादित्यर्थः । निष्फलमिति यावत् । **अथ य.... भवति**। [सर्वेषु लोकेषु इत्यादि] सर्वात्मकभगवदाराधनेन सर्वमाराधितं भवतीति हुतप्रकर्षोक्तिः ।

**तत् यथा....प्रदूयन्ते** । यथा इषीकायाः मुञ्जान्तर्वर्तितृणविशेषस्य तूलमग्नौ प्रक्षिप्तं सद्यो दह्यते, एवं सर्वाणि पापानि एतादृशविद्यापूर्वकप्राणाग्निहोत्रानुष्ठानेन दग्धानि भवन्तीत्यर्थः । ब्रह्मोपासनफलस्य सर्वपापप्रदाहस्य प्राणाग्निहोत्रे कीर्तनमङ्गिफलेनाङ्गस्य स्तुत्यर्थम् । ततश्चानेनापि प्राणाग्निहोत्रस्य वैश्वानरविद्याङ्गत्वं ज्ञापितं भवति ।

वैश्वानरविद्यां स्तौति **तस्मादु....स्यादिति** । उच्छिष्टप्रदानायोग्याय चण्डालायोच्छिष्टप्रदानमपि वैश्वानरे सर्वा[भूता]त्मनि अन्नं जुहोमीति बुद्ध्याऽनुष्ठितत्वात नाधर्माय भवतीत्यर्थः ।

---

यद्यपि चण्डालायेति । चण्डालायापि यदीत्यन्वयः। रूवाणि = बालाबालसर्वरूपाणि अग्निहोत्रमुपासत इति । अग्निहोत्रमस्माकं

हैवास्य तद् वैश्वानरे हुतँ स्यादिति । तदेष श्लोकः ॥ ४ ॥—
यथेह क्षुधिता बाला मातरं पर्युपासते ।
एवं सर्वाणि भूतान्यग्निहोत्रमुपासत इति अग्निहोत्रमुपासत इति ॥
इति पञ्चमाध्याये चतुर्विंशः खण्डः ।
इति छान्दोग्योपनिषदि पञ्चमोऽध्यायः (पञ्चमः प्रपाठकः)

---

तदेष श्लोकः । तत् उक्तप्राणाग्निहोत्रविषये एष श्लोकः श्रूयत इत्यर्थः । यथेह....उपासते । यथा बुभुक्षिताः बालाः, 'कदा माता अन्नं प्रयच्छति' इति मातरं परित उपासते, एवं सर्वाणि भूतानि एवंविदः प्राणाग्निहोत्रमुपासत इति विदुषः प्राणाग्निहोत्रस्तुत्यर्थोऽयं श्लोक इत्यर्थः । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते—

(१) समन्वयाध्याये, 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इत्यत्र श्रुतस्य वैश्वानरशब्दस्य नार्थो निर्णेतुं शक्यः । 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते' इति वैश्वानरशब्दस्य जाठरेऽग्नावपि प्रयोगदर्शनात्; 'विश्वस्मा अग्निं भुवनाय देवाः वैश्वानरं केतुमह्नामकृण्वन्' इति भूततृतीयेऽपि प्रयोगदर्शनात्; 'वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः' इति देवतायामपि प्रयोगदर्शनात्; 'तदात्मन्येव हृदय्येऽग्नौ वैश्वानरे प्रास्यत्', 'स एष वैश्वानरो विश्व-

---

तृप्तिं करोतु इत्यभिसंधेः सर्वभूतनिष्ठत्वाभावेऽपि, 'तृप्तिकरं किञ्चिद्वस्तु' इत्यभिसंधिसंभवात् तृप्तिकरत्वेन तद् वस्तुतस्तृप्तिकरं गृहीतं भवतीति भावः ।

हिकमित्यव्ययं हीत्यर्थम्। अभिश्रीः=अभिगतश्रीः। तदात्मन्येवेति।

रूपः प्राणोऽग्निरुदयते' इति परमात्मन्यपि प्रयोगदर्शनात् । अतो नार्थो निर्णेतुं शक्य इति पूर्वपक्षे प्राप्ते—उच्यते—

"**वैश्वानरः साधारणशब्दविशेषात्**" । वैश्वानरः परमात्मा । साधारणस्य **वैश्वानर**शब्दस्य परब्रह्मासाधारणैः, 'को न आत्मा किं ब्रह्म', 'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति', तद्यथेषीक(का)-तूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्त' इति वाक्य-श्रुतात्मत्वब्रह्मत्व(ब्रह्मानुभवफलकत्व)ब्रह्मप्राप्तिफलकोपासनविषयत्वसर्वपाप-प्रदाहकत्वादिधर्मैर्विशेष्यमाणत्वात् ।

"स्मर्यमाणमनुमानं स्यादिति" । 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति **आथर्वणा**दिषु परमात्म-संबन्धितया निर्दिष्टं रूपं अस्यां विद्यायां तदिदमिति **स्मर्यमाणं** प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽऽ**नुमानं** ज्ञापकं स्यादित्यर्थः ।

---

(तै. ब्रा. ३-११-८) अत्र हिरण्यस्य कनकमत्वं नाग्नौ प्रासनात् स्रष्टृकृतात्, किंतु हृदय्याग्नौ प्रासनादिति प्रसिद्धाग्निं व्युदस्योक्तोऽग्निं परमात्मैव, न जाठराग्निः । तस्य प्रस्तुताग्निभिन्नत्वाभावात् कान्ति-करत्वाप्रसिद्धेश्च । परमात्मा तु संकल्पतः सर्वकर्ता । हृदय्य इति हृदयपुण्डरीकवर्ती चेति भावः । अग्निः परमात्मसृष्टकान्तेजत्वि प्रतिबन्धे निवर्तकमात्रम् । सायणं(णीयं?) तु उपेक्ष्यम् ।

विशेष्यमाणत्वादिति । तथाच श्रीभाष्ये, 'विशेष्यत इति विशेषः' इति भावे व्युत्पत्तिप्रदर्शनम् । तथाच, 'विशेषानुगतिभ्याम्' इत्यत्रेव विशेषादित्यस्य (धर्मैः) विशेषणादित्यर्थ इति भावः ।

अग्निरिह द्युलोकः, 'असौ वाव लोकोऽग्निः' इति श्रुतेः ।

"शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते" । अग्निरहस्ये वैश्वानरविद्याप्रकरणे, 'स एषोऽग्निर्वैश्वानरो यत् पुरुषः' इति वैश्वानरशब्दसमानाधिकरणाग्निशब्दश्रवणात्, अग्नित्रयपरिकल्पनप्राणाहुत्याधारत्वरूपजाठराग्निलिङ्गाच्च, वाजसनेयके, 'स यो हैतमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः—प्रतिष्ठितं वेद' इति पुरुषान्तःप्रतिष्ठितत्वश्रवणाच्च जाठर एव भवितुमर्हतीति चेन्न—परमात्मलिङ्गानामिह सत्त्वेन अग्निशब्दलिङ्गानां तच्छरीरकपरमात्मोपासनपरतयाप्युपपत्तेः । तथादृष्ट्युपदेशात्....तथोपासनस्योपदिष्टत्वादित्यर्थः । त्रैलोक्यशरीरकत्वादीनाञ्च परमात्मधर्माणां जाठरे असंभवात्, वाजसनेयके, 'स एषोऽग्निर्वैश्वानरो यत् पुरुषः' इति पुरुषशब्दश्रवणात्, 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने' इति निरुपाधिकपुरुषत्वस्य अन्यत्रासंभवात्, अचेतने जाठराग्नौ सर्वात्मना असंभवात् न जाठराग्निः ।

"अत एव न देवता भूतञ्च" । उक्तैरेव हेतुभिः भूततृतीयदेवताविशेषयोरपि न प्रसक्तिरित्यर्थः ।

एवं सूत्रकारः अग्नित्रयपरिकल्पनादिजाठराग्न्याद्यनन्यथासिद्धलिङ्गैः, 'प्राणस्तथाऽनुगमात्' इत्यधिकरणोक्तन्यायेन जाठराग्निविशिष्टः परमात्मैव इहोपास्य इति, 'तथा दृष्ट्युपदेशात्' इति सूत्रखण्डेन सिद्धान्तमाविष्कृत्य, लिङ्गान्यथासिद्धिं संभावयतो जैमिनेरभि-

शब्दनिर्वाहप्रकारं दर्शयति—"साक्षादप्यविरोधं जैमिनिः"। 'मा-मुपास्स्व', 'प्राणोऽस्मि प्रज्ञात्मा' इत्यादिशब्दवत् अग्निशब्दस्य अपर्यव-सानवृत्त्या न तच्छरीरकपरमात्मपरमाश्रणीयम्। 'अग्रं नयतीत्यग्निः' इति योगव्युत्पत्त्या अग्निशब्दस्य अग्निव्यवधानमन्तरेण साक्षादेव परमात्म-परत्वसंभवं जैमिनिराचार्यो मन्यते। अत्र व्यासार्यैः, "अग्निलिङ्गे विद्यमाने अग्निशब्दस्यापर्यवसानवृत्त्या अग्निशरीरकपरमात्मपरत्वमेवो-चितम्। तादृशानन्यथासिद्धलिङ्गराहित्यस्थले अयमपि न्यायोऽस्तीति व्युत्पादनार्थमिहैतत् उपन्यस्तम्; न तु प्रकृतोपयुक्ततया" इत्युक्तम्।

'अभिव्यक्तेरित्याश्मरथ्यः', 'अनुस्मृतेर्बादरिः', 'संपत्तेरिति जैमिनिः तथा हि दर्शयति', 'आमनन्ति चैनमस्मिन्' इति चत्वार्यपि सूत्राणि पूर्वत्र व्याख्यातानि। अतो वैश्वानरः परमात्मेति स्थितम्।

तथा **गुणोपसंहारपादे** (२)—द्युमूर्धादिव्यस्तोपासनेषु औपमन्य-वादिभिरुक्तेषु, 'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते' इति व्यस्तोपासनेषु फलश्रवणात् व्यस्तोपासनमेव प्रामाणिकम्। 'यस्त्वेतमेवं प्रादेशमात्रमभिविमान-मात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्न-मत्ति' इति व्यस्तोपासनसमुदायानुवाद एव; न तु समस्तोपासनविधिः। अथवा अनेन वाक्येन समस्तोपासनमपि विधीयते। अतो द्वयमपि प्रामाणिकम्। अल्पफलार्थिभिर्व्यस्तोपासनं कर्तव्यम्—इति पूर्वपक्षे प्राप्ते उच्यते—**'भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति'**। **भूम्नः सामस्त्यस्य ज्यायस्त्वं** प्रामाणिकत्वम्। तथा हि दर्शयति श्रुतिः व्यस्तो-

पासनेऽनर्थं ब्रुवती, 'मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्य' इत्यादिना। न चेदं नहिनिन्दान्यायेन समस्तोपासनप्रशंसार्थमेव किं न स्यादिति वाच्यम्—अग्निहोत्रं प्रकृत्य श्रुतेन, 'जर्तिलयवाग्वा वा जुहुयात्, गवेधुकयवाग्वा वा जुहुयात्, न ग्राम्यान् पशून् हिनस्ति, नारण्यान्' इति वाक्येन जर्तिलगवेधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोः विकल्पेन अग्निहोत्राहुतौ द्रव्यत्वविधाने ग्राम्यारण्यपशुहिंसारहिततया तयोः स्तवने च प्रतीयमानेऽपि, 'अथो खल्वाहुः अनाहुतिर्वै जर्तिलाश्च गवेधुकाश्च ; पयसाऽग्निहोत्रं जुहुयात्' इति तदनन्तरं जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात् तदेकवाक्यतया 'जर्तिलयवाग्वा वा जुहुयात्' इत्यादेः, 'ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हा अपि जर्तिला गवेधकाश्च यदपेक्षया दुष्टाः, तत् पय एव प्रशस्तम्' इति पयःस्तुत्यर्थत्वं एकवाक्यतानुरोधादिति, 'न चेदन्यं प्रकल्पयेत् प्रकॢप्तावर्थवादः स्यात्' इति पूर्वतन्त्राधिकरणे, 'किञ्चिद्विधिपूर्वकं तन्निन्दायां विध्यन्तरश्रवणे सति तदेकवाक्यतानुरोधात् पूर्वप्रवृत्तयोर्विधिनिन्दयोः तदर्थवादत्वम्' इति समर्थितम्। तद्वदेवेहापि युक्तम्।

ननु जर्तिलगवेधुकयोः पयसा सह संबन्धाभावात् जर्तिलगवेधुकयवागूविधानयोरर्थवादतयैव विध्येकवाक्यता समर्थनीयेति तत्र तथाऽस्तु नाम। इह तु—भूमविद्यायां नामादीनां सत्येन ब्रह्मणा

---

सामस्त्यस्येति। भूमशब्दस्य धर्मिपर्यन्ते प्रयोगदर्शनेऽपि, भूमा बहुत्वं विपुलत्वमिति धर्म एव तस्य मुख्यत्वात् मुख्यस्यैवात्र पर्याप्तत्वात् समस्तस्येति नोक्तम्।

सह भूयस्त्वावधित्वेन संबद्धानां प्रासङ्गिकतदुपासनाविधिवत्——समस्तोपासनाविषयेण वैश्वानरात्मना द्युादित्यादीनां तदवयवत्वेन संबद्धानां प्रासङ्गिकोपासनविधिः किं न स्यादिति चेत्——मैवम् । व्यस्तोपासननिन्दनेन, 'मूर्धा त्वेष आत्मन इति होवाच' इत्यादिवाक्येषु तुशब्दकृतेन द्युादित्यादीनां स्वतन्त्रोपास्यत्वव्यवच्छेदेन, 'तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ' इति व्यस्तोपासनानां भ्रममूलत्वोद्घाटनेन भूमविद्यावैषम्यस्य बहुविधस्य सत्त्वेन जर्तिलयवागून्यायस्यैवात्र प्रवृत्त्यौचित्यात् । **क्रतुवत्** । यथा 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विहितस्य क्रतोः, 'यदष्टाकपालो भवति' इत्यादिरर्थवादः, न त्वष्टाकपालादिद्रव्यविधायकः, एवम् , 'अत्त्यन्नं पश्यति प्रियम्' इत्यादिश्रवणमप्यर्थवाद एवेति स्थितम् । प्रकृतमनुसरामः ॥ ५-२४.

**इति छान्दोग्योपनिषत्प्रकाशिकायां पञ्चमोऽध्यायः ।**

---

क्रतुवदिति । वैश्वानरविद्याया [illegible] फलकीर्तनं वैश्वानरेष्टौ एकदेशेषु फलकीर्तनवत् फलैकदेशानुवादमात्रमित्यन्तौचित्यमिति भावः॥

६-१ उद्दालकाधीता वैश्वानरविद्या प्रागुक्ता । अथ तदध्यापिता सद्विद्या उपदिश्यते । पूर्वमप्ययमुद्दालकः प्रस्तुतः सह श्वेतकेतुना पञ्चाग्निविद्यायाम् । यथा मधुविद्यामुद्दालकः स्वपितुरध्यैष्ट, 'तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच' इति प्राक्तन श्रुतेः, तथा श्वेतकेतुरारुणेयः स्वपितुरुद्दालकात् सद्विद्यामिमाम् । पूर्वं पादादिमूर्धान्ततया कल्पितविश्वशरीरकब्रह्मोपासनमुक्तम् ; अथ वास्तविकेन शरीरशरीरिभावेन विश्वविशिष्टं विश्वकारणमुपास्यमुच्यत इति च संगतिः ।

अथ षष्ठोऽध्यायः । षष्ठे प्रथमः खण्डः

श्वेतकेतुर्हारुणेय आस। तँ ह पितोवाच, 'श्वेतकेतो वस ब्रह्मचर्यम्। न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति' इति ॥ १ ॥

---

सद्विद्यामुपदेष्टुमाख्यायिकामाह—श्वेतकेतुर्हारुणेय आस । ह। प्रसिद्ध्यर्थः। अरुणपुत्रस्योद्दालकस्य पुत्रः श्वेतकेतुनामा बभूवेत्यर्थः। तं.... भवतीति । उद्दालकः पिता तं द्वादशवर्षमनुपनीतमनधीतिनं पुत्रं श्वेतकेतुं प्रति, 'हे सोम्य सोमार्ह !—प्रियदर्शनेति वार्थः— श्वेतकेतो ! कचिद् गुरावध्ययनार्थं वस । अस्मत्कुलप्रसूतः कोपि अननूच्य अनधीत्य ब्रह्मबन्धुरिव न भवति' इत्युवाचेत्यर्थः । यः स्वयमब्राह्मण एव सन् ब्राह्मणान् बन्धुत्वेन व्यपदिशति, स ब्रह्मबन्धुरित्युच्यते । अत्र स्वयं गुणवत एव पितुः गर्भाष्टमाद्युपनयनकालातिक्रमेऽपि उपनेतृत्वाभावे हेतुः प्रवासादिलक्षणात्यन्तानुपपत्तिरिति द्रष्टव्यम् ।

---

औद्दालकिरित्यनुक्त्वा आरुणेय इति कथनम्—पूर्वं, 'श्वेतकेतुर्हारुणेयः पञ्चालानां समितिमेयाय' इत्यत्रेव, अरुणस्यातिप्रसिद्धत्वात् अस्य पारम्परिकमभिजात्यमाविष्कर्तुम् । अत एव वक्ष्यति, 'अस्मत्कुलीनः' इति । तत्र इयायेत्यनुक्त्वा एयायेति प्रयोगः तस्यावश्यगन्तव्यस्थलत्वव्यक्तये । आसेति । अनेन महाकुलीनोऽपि महत्संनिधानेऽपि बालस्वभावोऽध्ययने स्वयमप्रवृत्त एवासीत्; तादृशस्य पितृप्रेरणव्याजेन ततो भृशोत्कटा प्रवृत्तिरिति वैचित्री व्यज्यते । वस ब्रह्मचर्यमिति । अन्यत्र गुरुकुले स्थित्वाऽधीष्वेत्यर्थः। प्रवासादीति । नन्वस्य प्रवासेऽप्यरुणः पितामहो महान् कथमुपनयनशास्त्रमतिलङ्घितवान् स्यात् । स नूनमतीतोऽशक्तो वा तदेति । अन्यद्वा किमप्युपनयनकारणमस्त्विति अनास्थया आदिपदप्रयोगः ।

स ह द्वादशवर्षः उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय । तँ ह पितोवाच ॥२॥—श्वेतकेतो! यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि, उत तमादेश-

---

**स ह....एयाय । सः** श्वेतकेतुः द्वादशवर्षस्सन् गुरुमुपेत्य गुरुकुले द्वादश वर्षान् उषित्वा सर्वान् वेदान् अधीत्य **महामनाः** प्रौढमतिः **अनूचानमानी** आत्मानं साङ्गवेदाध्यायिनं मन्यमानः **स्तब्धः** परिपूर्ण इव तृणीकृतजगत्त्रयः चतुर्विंशतिवर्षयुक्तः **एयाय** प्रत्यागतः ।

**तं ह पितोवाच** । स्पष्टोऽर्थः । उक्तिमेवाह **श्वेतकेतो.... स्तब्धोऽसि** । हे सोम्य ! महामना अनूचानमानी स्तब्धोऽसीतीदं **यत्** यस्माद्धेतोः, स क इत्यर्थः । तस्य ब्रह्मज्ञानरहिततां जानन्नप्यारुणिः 'जगदभिन्ननिमित्तोपादानभूतब्रह्मज्ञानवानेव पूर्णः ; नान्यः' इति तस्मै ज्ञापयित्वा पूर्णत्वाभिमानं तदीयमपनुद्य ब्रह्मणि जिज्ञासां संपादयितुं तदनुजिघृक्षया पृच्छति **उततमादेशमप्राक्ष्यो....विज्ञातमिति** ।

**अत्र व्यासार्याः**, "उपक्रमे तावत् , उत तमादेशमप्राक्ष्य" इत्यत्र

---

प्रौढमतिरिति महामनस्त्वं = सर्वशास्त्रार्थमननसंपत्तिसमृद्धत्वम् । सर्वोत्कृष्टोऽहमिति शाङ्करम्। स्तब्धत्वं = बुभुत्साप्रवृत्त्यादिरहितत्वम्।

आदेशशब्दः कर्मणि करणे वा व्युत्पन्नः सन् उपदेशगम्यं इति वा उपदेशरूपवाक्यमिति वा अर्थं वक्तीति शाङ्करसरणिः। अर्थपुष्टिं पर्यालोच्य तु श्रीभाष्ये आदेष्टारमित्यर्थो भाषितः । पराक्रान्तं चात्र सूरिभिरर्थतत्त्वविमर्शे । तत्र स्वयमपि विशेषेण विवक्षुः प्राचीनोक्तमप्यनुवदिष्यति अत्र व्यासार्या इत्यादिना । अत्रेदं बोध्यम्—तमादेशमित्यत्र तच्छब्दतः सर्वविषयकवेदनात्मकस्वेदनकमित्यर्थः

आदेशशब्देन प्रशासिताऽभिधीयते। अत्र श्लोकावाचार्यपादैरुक्तौ—

"छान्दोग्ये केचिदाहुर्दिशतिरुततमादेशमप्राक्ष्य इत्य-
त्राङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्तिं घञन्तः।

---

सुगमः; यच्छब्दघटितवाक्यानुरोधात्। वक्ष्यमाणमृन्मयादिदृष्टान्त-स्थले कुलालादेरिवात्राप्यन्यस्य निमित्तकारणस्य संभावना भवेत्। तावताऽपि तज्ज्ञानेन तत्कार्यसर्वप्रपञ्चविज्ञानस्याक्षतत्वात् न भवति एकविज्ञानेन सर्वविज्ञानक्षतिरिति। अतो निमित्तस्यैवोपादानत्व-मिति प्रथमत एव निर्विचिकित्सप्रतिपत्तये आदेशपदमिति युक्तम्। उपदेशगम्यत्वं तु न वक्तव्यम्; महामनसोऽनूचानमानिनोऽप्यज्ञात-त्वादेवास्य सिद्धत्वात्। उताप्राक्ष्य इति प्रश्नवचनादेव, 'उपदेश-मन्तरा न सुज्ञानम्' इति दर्शितत्वाच्च। अतः पदमिदं तदा व्यर्थमेव स्यात्। एवमादेष्टाऽप्यास्तिकतमेन श्वेतकेतुना बहुश्रुतेन विदित एव। जगदुपादानतया जगदभिन्नतया च स न विदित इति तमिति विशेषणम्। करणवाची प्रत्यय इति पक्षेण कर्तुः करणत्वविव-क्षाऽपि नानुचिता। फलविशेषसत्त्वात्। अयमादेष्टा स्वयमेव करण-मपि तत्र। नास्य करणकलेबराद्यचित्संसर्गापेक्षा तदर्थमिति स्वारस्य-प्रदर्शनं फलम्। अन्यच्च; यत् प्रमातरि प्रमाणव्यवहारे। उक्तं ह्युदय-नाचार्यैः, 'आप्तप्रामाण्यादि' इति सूत्रमादाय, 'तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते' इतीत्यादिरादेष्टेत्यर्थवादिनामभिसंधिरिति।

आचार्यपादैः व्यासार्याणां गुरुचरणैः श्रीवात्स्यवरदाचार्यैः उक्तम्, तत्त्वसारे (१६-१७)। अत्र परमतस्य संग्राहकः प्रथमश्लोकः; द्वितीयः स्वमतस्य। एतद्विवरणभूत एवोपरितनो व्यासार्यग्रन्थः। अनयोरन्वयार्थस्तु—छान्दोग्ये, 'उत तमादेशमप्राक्ष्य' इत्यत्र स्थितः आङ्पूर्वो घञन्तो दिशतिः=दिशिधातुः सद्विषयकं उपदेशरूपमर्थं प्रकटयति; न तु सत्संबन्धिनीं प्रशास्तिं=प्रशासनम्। घञ् हि कर्तृ-

नो कर्तर्यस्ति कर्मण्यगणि घञिह सत् कर्तृ शास्तौ न कर्म
स्यात् स्यात् (तत्) कर्मोपदेशो तदिदमुदि(त)तमादेशवाचोपदेश्यम्॥
अत्र ब्रूमः प्रशास्तिं वदति दिशिरसावाङ्मुखो नोपदेशं
शास्तौ(स्ता) सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसङ्गः ।
युक्तो(क्ता)ऽसाधारणोक्त्या घञगणि करणेऽप्यत्र वैवक्षिकत्वं
शब्दोक्तं कारकाणां ननु करणतया कर्तरि स्यात् विवक्षा ॥" इति।

---

रूपार्थे नो अस्ति। कर्मरूपार्थे तु शास्त्रेणैवागणि। इह सच्छब्दार्थः शास्तिं प्रति कर्तैव ; न तु कर्म। उपदेशरूपार्थे तु तत् सत् कर्म स्यात्। तत्=तस्मात् इदं सत् आदेशवाचा=आदेशमित्यनेन उपदेश्यमेवोदितमिति केचिदाहुः॥ अत्र ब्रूमः—असौ आङ्मुखः=आङ्पूर्वो दिशिः प्रशास्तिमेवार्थं शक्त्या वदति ; न तु उपदेशरूपमर्थम्। यत्र क्वापि लक्षणया कामं वदतु। अथापि शास्तिरूपार्थे स आङ्पूर्वः अत्यन्तं वेदे लोके शब्दशास्त्रे च प्रसिद्धः ; न तु परे उपदेशरूपार्थे। किञ्चेह निमित्तोपादानैक्यरूपार्थोऽपेक्षितो वक्तव्यः। अतः तस्य प्रसङ्गः=प्रस्तावो युक्तः। तथासति असाधारणोक्तिलाभात्। न हीदं निमित्तस्यैव सत उपादानत्वमन्यसाधारणम्। उपदेश्यत्वं तु साधारणम्। कर्तरि घञ् मा भूत्। कर्मणीव करणेऽपि तु सोऽगणि। अत्र=प्रयोगेषु कारकाणां वैवक्षिकत्वं शाब्दोक्तं ननु। वस्तुस्थितिविमर्शे कस्यचित् किञ्चित्कारकरूपत्वमेवेत्यर्थे सत्यपि एकत्रान्यकारकत्वविवक्षयाऽपि प्रयोगः शब्दानुशासनसंमतः किल। अतः प्रशासनकर्तुरेव तत्र करणत्वविवक्षेति आदेशशब्देन प्रशासनकरणत्वमुखेन प्रशास्तैवोच्यत इति।

ननु कर्तुरेव करणत्वविवक्षेति कथं श्वेतकेतुर्जानीयात्। आज्ञाकरणभूतमेव किञ्चिदिदं, आज्ञाकर्मभूतं वा, आज्ञाकरस्तु अन्य

आदेशशब्देनोपदेश्यमुच्यते। प्रकृत्यर्थ उपदेशः। प्रत्ययार्थः कर्मत्वम्। 'अकर्तरि च कारके संज्ञायाम्' इति कर्तृव्यतिरिक्तकारके घञो विहितत्वात्। उपदेशो ब्रह्मणः कर्मत्वोपपत्तेश्च। प्रशासने तु ब्रह्म न कर्म; अपितु कर्तृ। कर्तृव्यतिरिक्तकारके हि घञ्प्रत्ययविधिः। नात्र कर्तरि (नात्र) (नचात्र इगुपधलक्षण) कप्रत्यय उपपद्यते, 'क्ङिति च' इति गुणप्रतिषेधात् आदेशशब्दरूपासिद्धेः। नापि पचाद्यच्प्रत्यय उपपद्यते, दिशिधातोरिगुपधत्वेन 'इगुपधात् कः' (इगुपध) इत्यपवादसूत्रेण कप्रत्ययप्राप्तेः गुणाभावात्। अतो घञ्प्रत्ययान्त एवायमादेशशब्दः। स च प्रत्ययः कर्तरि अविहित(मनभिहित) इति कर्मार्थिकत्वस्यैव युक्तत्वात् उपदेश्यमेव आदेशशब्दवाच्यमिति।

अत्रोच्यते—प्रकृत्यर्थः शासनं प्रसिद्धिप्राचुर्यात्, अन्यथा स्वारस्यभङ्गात्, 'आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः; उपपूर्वस्तु नियोज्यप्रयोजनवचनः' इति हि न्यासकारः। नियोक्तरि प्रयोजनं यस्य

---

इति किं न जानीयादिति चेत्—तर्हि एवमाज्ञासंबन्ध्यनेकार्थस्वरसात् आदेशशब्दात् उपदेश्यमित्यमुख्यार्थं परं कथं निश्चिनुयात्? अतः स इदानीं वा जानीताम्, एकमेवाद्वितीयमिति पदश्रवणानन्तरं वा। [सर्वत्र पूर्वापरपरामर्शेनैवार्थस्य निर्णयतया तादृशविलम्बस्य सहत्वात्। अत एव सदेवेदमिति इदंपदमपि चिदचिद्विशिष्टपरं पर्यन्ते सुग्रहमिति ब्रूमः।] अस्माभिस्तु वक्तुर्विवक्षितोऽन्ततो निर्धार्योऽर्थः क इति संप्रति विचार्यते। वक्ष्यति च करणत्वविवक्षां विनैव कर्तृपरत्वमपि।

न्यासकार इति। न्यासो नाम काशिकाव्याख्या पञ्जिका।

तस्यार्थस्य वाच इत्यर्थः । एवमन्यत्रापि । किञ्च उपदेश्यत्वं लौकिक-अलौकिकध(क)र्मब्रह्मभागार्थसाधारणम् । [प्र]शासितृत्वं तु ब्रह्मणोऽसाधारणम् । 'अन्तः प्रविष्टः शास्ता जनानाम्', 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इत्यादिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात् । निरुपाधिकोपदेश्यत्वं ब्रह्मण इत्यसाधारण्यमिति चेन्न ; इष्टप्राप्त्यनिष्टनिवृत्ति(निवारण)तत्साधनेषु साधारण्यात् । यद्यप्यमितसुखप्राप्तिदुःखनिवृत्त्यादि साक्षादुपदेश्य स्यात् , तथापि संसारनिवृत्ति ब्रह्मतदुपासनानामुपदेश्यत्वं साधारणम् । प्रष्टव्यस्योपदेश्यत्वमर्थसिद्धम् । अत उपदेश्यत्वकथनवैयर्थ्यञ्च । ननु 'येनाश्रुतम्' इत्यादिनैकवाक्यात् स्वज्ञानेन अन्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणमिति चेत्-तथापि तादृशमुपदेश्यत्वं प्रतिज्ञावाक्येन, द्रष्टव्यत्वोक्त्या च अर्थसिद्धमिति अनपेक्षितोपदेश्यत्वकथनादपि अपेक्षितं प्रशासितृत्वमेव वाच्यमिति युक्तम् । येनाश्रुतमित्युपादानत्वे सिद्धे प्रशासितृत्वेन हि निमित्तत्वं सिध्येत् । निमित्तान्तरे सति हि एकविज्ञानात् सर्वविज्ञानं नोपपद्यते । अतः प्रतिपिपादयिषितवस्तुनोऽपेक्षितासाधरणाकारविशिष्टतयैव प्रतिपादनमुचितम् । घञ्प्रत्ययस्य करणे व्युत्पन्नत्वात् , विवक्षातः कारकाणां

---

उपदेशस्थले यं प्रति उपदेशः, तस्यैव तदनुष्ठाने फलम् । आदेशस्थले तु गामानयेत्यादौ आदेष्टुरेव क्रियाफलं मुख्यं प्रायिकमिति एतन्मुखेनार्थ वैलक्षण्यं दर्शितम्। सर्वथा आदेशो नोपदेशः। क्वचित् , 'एष आदेशः, एष उपदेशः' इति श्रवणं तु भगवदाशयरूपवैदिकविधिषु उक्ताकारद्वयमप्यस्तीति प्रतिबोधनायेति ।

शब्दोक्तनयेन कर्तर्येव करणान्तरनैरपेक्ष्येण साधकतमत्व-
प्रयोग उपपद्यते। अकर्तरीति सूत्रस्य प्रयोजनं करणत्व-
ना कर्तरि असाधुत्वेन प्रयोगनिवृत्तिः । उपदेशपक्षे

प्रशासनपक्षे प्रत्ययास्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्य-
ग्रमि)ति वैषम्यम्। अतः प्रशासनमेवाऽऽदेशशब्दाभिधेय-
युक्तम्'' इति।

विचार्यते---यत् तावदुच्यते, प्रसिद्धिप्राचुर्यात् प्रकृत्यर्थः
सत्यमेव तत्। 'शासनं विविच्य ज्ञापनम्' इति धातु-
ाख्यातत्वादुपदेश एव पर्यवसानम्। 'उपदेशेऽजनुनासिक
नेवदादेशोऽन'स्वधौ' इत्यादिसूत्रेषु, 'दिशिरुच्चारणक्रियः'
ाष्योक्तेः। 'अथातोऽहङ्कारादेशः' इत्यादौ आदेशः उपदेश
दं शास्त्याचार्यः' इति भाष्यस्य, इदमुपदिशतीति ह्यर्थः।
इत्यादौ अवक्तव्यमिति व्याख्यातम्। ततश्च आदेशः
। तत्कर्मत्वञ्च, 'अनु म एतां भगवो देवतां शाधि' इति
मिति प्रकृतिप्रत्ययोरविरोधसंभवात् प्रत्ययास्वारस्यानुसरण-
ात् (स्यायुक्तत्वम्)। न चानुशासनकर्मत्वेऽपि न शासनकर्म-
च्यम्-'शासु अनुशिष्टौ' इति शासनस्यैवानुशासनरूपत्वात्।
श्च करणत्वस्यारोपेण घञ्समर्थनमप्यनुचितम्। आरोपस्यानु-
। ननु करणत्वस्य नाध्यारोपः, तस्य सिद्धत्वादिति चेन्न—
सिद्धान्ते प्रत्ययास्वारस्याभ्युपगमस्यायुक्तत्वात्। अत एव,
नवि' इत्यादौ सौकर्यातिशयविवक्षया, 'ब्रह्मदृष्टिरुत्कर्षात्' इति

न्यायेन करणे कर्तृत्वारोपेऽपि कर्तरि करणत्वादेरसंभवः। तथासति राजनि भृत्यत्वारोपस्येवानर्थावहत्वात् अत एव, 'साधकतमं करणम्' इति सूत्रे अधिकरणस्थाल्याः तनुकपालतया साधकतमत्वविवक्षया स्थाल्या पचति इति प्रयोगमुपपाद्य, 'न चैवं कर्तुरपि करणत्वविवक्षाप्रसङ्गः ; भिन्नजातीयत्वात् । सकलसाधनविनियोगकरी खल्वसौ । न हि शतधनो निष्कधनेन स्पर्धितुमर्हति' इति कर्तुः करणत्वविवक्षाऽभावस्यैवोपपादितत्वात् । **निक्षेपरक्षायाम्**, भगवतो रक्षाकरणत्वानुसंधानं प्रपत्तिरिति पक्षे करणस्य कर्तृत्वासंभवेन जीवस्यैव रक्षकत्वमापतेदिति कर्तृत्वकरणत्वविरोधस्य, भगवति करणत्वानुसंधाने, 'ब्रह्मदृष्टिरुत्कर्षात्' इति न्यायविरोधस्य च प्रतिपादितत्वात्। 'शक्तिविपर्ययात्' इति सूत्रे अन्तःकरणस्य कर्तृत्वे ततोऽन्यत् करणं स्यादिति अन्तःकरणातिरिक्तं करणान्तरमभ्युपगन्तव्यं स्यादिति परैरप्युक्तत्वाच्च (उपपादितत्वाच्च) । किञ्च प्रशासनकर्तुः करणत्वसंभवे परमात्मनः प्रशासनकर्मत्वस्यापि संभवात् तदसंभवोक्तिः विरुध्येत । किञ्च करणत्वे विवक्षिते, 'करणाधिकरणयोश्च' इति परेण ल्युटा बाधितत्वेन घञोऽप्रसङ्गात्। न च, 'हलश्च' इत्यनेन घञः प्रसङ्गः । तत्रापि संज्ञायामित्यनुवृत्तेः । न च त्वन्मतेऽपि कर्मणि घञ् न स्यात् , 'अकर्तरि च कारके संज्ञायाम्' इति संज्ञायामेव घञो न विधानादिति वाच्यम्—'अकर्तरि च' इत्यत्र चकारस्य भिन्नक्रमत्वमाश्रित्य संज्ञायामप्यस्तीति पदमञ्जर्यादौ समर्थितत्वात्। 'संज्ञाग्रहणानर्थक्यञ्च सर्वत्र घञो दर्शनात्' इति वार्तिककृतोक्तत्वाच्च ।

किञ्च घञः करणार्थत्वे, उपक्रमे, 'आदेशशब्देन प्रशासिताऽ-

भिधीयत' इति यदभिहितम्, तद् विरुध्येत ; प्रशासनकरणत्वस्यैवाभि-
हितत्वेन प्रशासनकर्तुरनभिहितत्वात् । यच्चोक्तम्, 'प्रशासितृत्वम-
साधारणम्' इति—तदपि न। आदेशशब्देन प्रशासनकरणत्वमात्रा-
भिधानेन प्रशासितृत्वानभिधानात् । तदभिधानेऽपि निरुपाधिकप्रशा-
सितृत्वस्ये(स्यै)व मुख्योपदेश्यत्वस्य ब्रह्मासाधारणत्वात्। अत एव, 'ब्रह्म-
जिज्ञासा' इति सूत्रे ब्रह्मण इति कर्मणि षष्ठीपरिग्रहात् ब्रह्मण एव
आभिधानिकं जिज्ञासाकर्मत्वम्, तदुपासनादीनां त्वाक्षेप्यमित्युक्तम् ।
किञ्च आदेशशब्दमात्रस्य ह्यतिप्रसङ्गमाशङ्क्य तमित्येवं विशेषणो-
पादानात् अवश्यं तमित्यस्य आदेशविशेषकत्वमभ्युपेयम् । यदि हि
आदेशशब्दस्यैव निरुपाधिकप्रशासितृत्वमर्थः, तदा तस्य परमात्मा-
साधारणत्वात् तच्छब्दो विशेषको न स्यात् । यदपि चोक्तं प्रष्टव्यत्व-
कथनेनोपदेश्यत्वं सिद्धमिति तत्कथनस्यानपेक्षितत्वात प्रशासितृत्वमेवार्थं
इति—तन्न ; 'यद्यपि पूर्वं नाप्राक्षम्, अधुना स्वयमेव ज्ञास्यामि' इति
बुद्धिं व्युदसितुं उपदेष्टव्यत्वकथनस्यैवापेक्षितत्वात् । अत एव, 'तं
त्वौपनिषदं पुरुषं पृच्छामि' इत्यादौ प्रष्टव्यस्य उपदेश्यत्वलक्षणौप
निषदत्वकथनम् । यच्चोक्तम्—सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं निमित्तत्व-
मपेक्षितमिति—तन्न ; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाबलादुपादानत्व
स्येव तदन्यथानुपपत्त्या निमित्तत्वस्यापि लाभसंभवेन तस्य पृथग् वक्तव्य-
त्वाभावात् । तदनुपपत्तेर्भवतैवोक्तत्वादिति ।

अत्रोच्यते—'एष आदेशः', 'एष उपदेशः' इत्येवं पृथगु-
पदिष्टयोः, 'न वायुक्रिये पृथगुपदेशात' इति न्यायेन आदेशोपदेशयोः

भेदावश्यम्भावात् निमन्त्रणामन्त्रणयोरिव, **वृक्षवनस्पतिशब्दयोरिव च, स्नेहभक्तिशब्दयोरिव** च क्वचिदेकविषये प्रयोगमात्रेणानुभवभेदस्य दुरपह्नवत्वात्। 'आदिशति' इत्युक्ते हि यद्वाक्योल्लङ्घने दण्डो भवति, तादृशशब्दप्रयोक्तृत्वं नियमयितृत्वमाज्ञापयितृत्वं प्रतीयते। अत आदिशतीति व्यवहारः प्रभुविषय एव। अत एव **न्यासकारेण** आदेशोपदेशयोर्भेदो वर्णितः— 'आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः, उपपूर्वस्तु नियोज्यप्रयोजनवचनः' इति। 'अन्तः प्रविष्टः शास्ता जनानाम्' इत्यादौ तथैव (अन्यत्र) प्रतीतेश्च। प्रकृतिस्वारस्येन नियमनापरपर्यायाज्ञापनरूपार्थे प्रतीते घञ्प्रत्ययस्य कर्तृव्यतिरिक्तकारकमात्रवाचिनो योग्यतावशात् त्वन्मते कर्मार्थकत्ववत् अस्मन्मतेऽपि कारकवाचिनो घञ्प्रत्ययस्य सकलकारकप्रयोक्तृकर्तृलक्षणा समाश्रीयते; प्रष्टव्यवस्तुनः तादृग्रूपत्वात्। असंजातविरोधिमुख्यप्रकृत्यर्थानुग्रहेण जघन्यप्रत्ययलक्षणाया आश्रयणीयत्वात्। 'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः' इत्यादौ अहःपरत्वस्वरसत्रिवृदादिपदमुख्यत्वानुसारेण जघन्य**संवत्सर**पदस्यैव सौरचान्द्रमसाद्यनेकार्थसाधारण्येन निश्चयासमर्थस्य अहर्लक्षणाया अभ्यु-

---

पञ्चपञ्चाशतः त्रिवृतः इति। पञ्चाशत्पञ्चकं सार्धशतद्वयम्। तावन्तः त्रिवृतः = त्रिवृत्पदवाच्यस्तोमविशेषविशिष्टाः। सहस्रसंवत्सराधिकरणे (६-७-१३) संवत्सरशब्दस्यात्र अहःपरत्वं साधितम्। अहःपरत्वस्वरसेति। त्रिवृदादिशब्दानां ऋङ्नवकादिस्तोत्रीयासंख्यारूपस्तोमशक्तत्वेपि तद्युक्तदिनरूपार्थापेक्षया तद्युक्तसर्वदिनकत्वरूपसंवत्सरविशेषणपरत्वे गौरवादिति भावः। निश्चयासमर्थस्येति। इयमभ्युच्चययुक्तिः। सहस्रसंवत्सरजीविपुरुषाभावेन

पेतत्वात्। तथा, 'प्रयाजशेषेण हवींष्यभिघारयति' इति प्रयाजशेषप्रातिपदिकानुरोधेन तृतीयाया द्वितीयार्थलक्षणाया आश्रितत्वात्। तथा, 'प्राणा वाव ऋषयः' इत्यादौ ऋषिशब्दानुसारेण बहुवचनश्रुतेः पाशन्यायेन गौणार्थकत्वस्य 'गौण्यसंभावात् तत्प्राक्श्रुतेश्च' इत्यत्रोपपादितत्वाच्च।

नन्वादेशपदस्य प्रशासनापरपर्यायाज्ञापनरूपादेशप्रसिद्धस्योपदेशप्रसिद्धिप्राचुर्याभावेऽप्युपदेशार्थकत्वे प्रकृतेः सर्वात्मना मुख्यार्थत्यागाभावात् प्रत्ययस्य त्वन्मते कर्तृलक्षणायां मुख्यार्थत्यागात् कांस्यभोजिन्यायेन जघन्यद्यावापृथिव्येककपालानुरोधेन मुख्यै(ये)न्द्राग्नादीनां प्रसूनबर्हिर्नियमाश्रयणवत्. 'एकधा ब्रह्मण उपहरति' इत्यत्र सकृत् सहत्व-

---

संवत्सरशब्दमुख्यार्थग्रहणायोगात् दिनमासाद्यर्थस्य लक्षणया ग्राह्यत्वे सति अहर्लक्षणाश्रयणं त्रिवृदादिपदान्तरस्वारस्यात्। प्रयाजशेषस्थले तु प्रातिपदिकानुसारात् विभक्तौ लक्षणाश्रयणमिति विवेकः। प्रयाजशेषपदस्य प्रयाजोपयुक्तशेषो यः प्रतिपत्तिसापेक्षोंऽशः, तत्परतया प्रतिपत्तित्वसंपत्तये प्रयाजशेषोद्देशेन हविष्षु अभिघारणविधानाय प्रयाजशेषमित्यर्थस्वीकारात् (४-१-१४)। कांस्यभोजीति। शिष्यस्य कांस्यपात्र एव भोजनमिति नियमे गुरोश्चानियमे सति क्वचिदुभयोरेकपात्रभोजनप्रसक्तौ अमुख्यशिष्यानुरोधात् कांस्यपात्रस्यैव ग्रहणमिति तत्र दर्शितो दृष्टान्तः। जघन्येति। तृतीयतया श्रुतेत्यर्थः। प्रसूनेति। पुष्पितेत्यर्थः। लूनशेषात् पुनरुत्पन्नेत्यप्यर्थमाहुः। ऐन्द्राग्नादेः बर्हिर्मात्रमपेक्षितम्; एककपालस्य तु अतिदेशबलात् प्रसूनबर्हिरिति स्थिते, त्रयाणामेकप्रयोगविषयतया यत्किञ्चिदेकरूपबर्हिषां ग्राह्यत्वे सति जघन्यानुरोधेन प्रसूनबर्हिषामेव ग्रहणमिति (१२-२-१४)। सकृत्सहत्वेति। सकृत्त्वमेकप्रयत्नसाध्यत्वम्, एकत्वमेव वा; सहत्वं यौगपद्यम्।

साधारणस्य **एकधा**शब्दस्य भक्षान्तरप्रापकदुर्बलचोदकानुग्रहेण सहत्वार्थस्वीकारवत्, 'सप्तदश प्राजापत्यान्' इत्यत्र प्रजापतिसंबन्धविशिष्ट [अविशिष्ट?] अन्वययोग्यस्यापि बहुत्वस्य एकपशुनिष्पन्नैकादशावदान-प्रापकदुर्बलचोदकानुसारेण विशिष्टान्वयाभ्युपगमेन द्रव्यदेवतासंबन्धा-क्षिप्तयागभेदाभ्युपगमवच्च जघन्यघञ्प्रत्ययानुसारेण मुख्यदिशेरुपदेशार्थ-कत्वमेव युक्तम्। प्रकृतेर्मुख्यार्थत्यागाभावात्। प्रचुरप्रसिद्धमुख्यार्थ-त्यागमात्रं त्ववशिष्यते। तत्तु न दोषाय। अत एव, 'पत्नय उपगायन्ति'

---

**भक्षान्तरेति। नानाभक्षेषु चोदकप्राप्तेषु उपहरणे सकृत्त्ववादी प्रथमभक्षोपहरणमात्रमिच्छति। तत्र सिद्धान्तिनोच्यते (१०-२-४) भक्षान्तराणामप्यविशेषेण प्राप्त्या तद्बाधाय सहत्वरूपार्थ एव ग्राह्य इति। बहुत्वस्येति। प्रकृतौ, हृदयस्याग्रेऽवद्यतीत्यादिना एका-दशावयवावदानानि विहितानि। 'सप्तदश प्राजापत्यान्' इत्यत्र प्रजा-पतेरिमे प्राजापत्या इति वा, प्राजापत्यश्च प्राजापत्यश्चेत्येवं प्राजा-पत्या इति वा विग्रहः संभवति। तत्र प्रथमपक्षादरणे सप्तदशसु पशुषु प्रजापतिसंबन्धः सकृदिति याग एकः स्यात्। एवञ्चाति-देशप्राप्तं यत् यागे पश्वेकत्वं अवदानानामेकादशत्वञ्च, तद् बाध्येत। द्वितीयविग्रहे तु प्रतिपशु प्रजापतेः पृथक्संबन्धात् सप्तदश यागा इति एकैकस्य यागस्य पश्वेकत्वादिप्रापकं चोदकमबाधितं भवतीति तदादर इति (२-२-७)। चोदकेति। अतिदेशप्रमाणेत्यर्थः। पत्नय उपगायन्तीति। प्रकृतौ सामगानस्योपगातारः ऋत्विजः। विकृतौ, 'दिक्षु दुन्दुभयो नदन्ति, पत्नय उपगायन्ति' इति श्रुतम्। अत्र पत्नीनामुपगातृत्वश्रवणात् ऋत्विगुपगानबाध इति पूर्वपक्षः। यदि गायतेः शारीरगानमेवार्थः, तदा उपगानं नाम तदुपचयः इति ऋत्विग्मात्रव्यावृत्तिः स्यात्। शारीराशारीरसर्वसाधारण एव गायतिरिति दुन्दुभ्यादिगानोपचयकरत्वं पत्नीनामिति न ऋत्विग्बाध**

इत्यादौ गीतिशब्दस्य शारीरगाने प्रसिद्धिप्राचुर्ये सत्यपि अशारीरवादित्रादिगानस्यापि गीतिशब्दप्रयोगविषयत्वेन मुख्यार्थत्वात् संनिहितदुन्दुभ्यादिगानस्यैव काण्डवीणादिभिरुपचयं कुर्वत्यः पत्न्यो न ऋत्विजां निवर्तिका इति दशमे सिद्धान्तितमिति चेत्—

मैवम्—गानशब्दस्य बर्हिराज्याधिकरणन्यायेन गीतिमात्रवाचित्वात् युक्तं तत्र संनिहितदुन्दुभ्यादिगानवाचित्वम्। इह तु आदेशशब्दस्य क्वचिदपि, शिष्यः गुरुमादिदेशेत्यादिप्रयोगाभावेन साधारणोच्चारणार्थकत्वाभावात् उपदेशातिदेशशब्दयोरिव आदेशोपदेशशब्दयोरपि भिन्नार्थकत्वेन आदेशशब्दस्योपदेशार्थकत्वे मुख्यार्थत्यागस्यावर्जनीयत्वेन जघन्यप्रत्यय एव लक्षणाया उचितत्वात् ।

वस्तुतस्तु, 'उपदेशेऽजनुनासिक इत्' सूत्रे, 'करणाधि-

---

इति सिद्धान्तः (१०-५-४)। गानस्यैवोपचयमित्यनेन उपगानं नाम गानोपचय इत्यर्थेऽपि गानं दुन्दुभ्यादिगानमिति दर्शितम्। वस्तुतः उपगानं उपचयात्मकं गानमेव। तथाच दुन्दुभिनादस्य षड्जादिस्वरसमाहारात्मकगानत्वाभावेऽपि तदुपचयात्मकं भवितुमर्हति पत्नीगानमिति ध्येयम्। काण्डवीणादिभिरित्यनेन, 'काण्डवीणादिभिरुपगायन्ति' इति अशारीरगानविधानात् अशारीरदुन्दुभिनादस्याशारीरगानमुपचायकम्; तत्रैव पत्नीनां कर्तृत्वमिति नानेन शारीरस्य ऋत्विगुपागानस्य बाध इति दर्शितम्। दुन्दुभ्यादिगानेति। कै गै शब्दे इति गायतेः शब्दमात्रार्थकत्वादिति भावः। इहत्विति तुशब्देन वैलक्षण्यपरेण कांस्यभोजिन्यायादिपूर्वोक्तसकलन्यायानवतारः सूचितः।

एवं कर्तुः करणत्वविवक्षा, कर्तृलक्षणा वेति पक्षद्वयमुक्तम्। अथ स्वरसौ द्वौ पक्षौ स्वयमाह वस्तुतस्त्विति। वेदार्थसंग्रहे,

**मप्राक्ष्यो येनाश्रुतँ श्रुतं भवति अमतं मतमविज्ञातं विज्ञातमिति ।**

करणयोश्च' इति ल्युटा बाधितस्य घञः, 'अकर्तरि च कारके' इत्यनेनाप्रसङ्गमाशङ्क्य, 'कृत्यल्युटो बहुलम्' इति घञो भाष्यकृता समर्थितत्वात् तन्न्यायेन कर्तर्यपि तेनैव सूत्रेण घञ्सिद्धौ लक्षणाया अप्रसङ्गात् प्रशासितृत्वार्थकत्वमेवाऽऽदेशशब्दस्य युक्तम् । आदेशनम् आदेश इति घञन्तात् भाववाचिन आदेशशब्दात् अर्श आद्यजन्तादपि प्रशासितृत्वार्थकत्वमेवाऽऽदेशशब्दस्य युक्तमिति वयमुत्पश्यामः । ततश्च वा 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः', 'प्रशासितारं सर्वेषाम्' इत्यादिश्रुतिस्मृतिप्रतिपन्नपरमात्मधर्मभूतं प्रशासितृत्वमिह आदेशशब्दार्थः । एतत् सर्वमस्माभिर्भावप्रकाशिकायां प्रपञ्चितं तत्रानुसन्धेयम् । प्रशासनेन (शासितृत्वोक्त्या) च धारकत्वलक्षणमात्मत्वं फलितम् । ततश्चादेशशब्द आत्मत्वपर्यन्तः ।

**येनाश्रुतं श्रुतं भवति** इत्यत्र, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति', 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं भवति' इति मुण्डकबृहदारण्यकवाक्यानुसारेण–येन

---

"आदिश्यते अनेनेत्यादेशः" इति, "आदेशः प्रशासनम्" इति च एवं पक्षद्वयकटाक्षेण स्यादित्यपि ध्येयम् ।

अप्राक्षीरित्यर्थे अप्राक्ष्य इति छान्दसं रूपम् । लङि च अप्रक्ष्य इत्येव रूपम् । तच्छायया प्रयोगवशात् आगमनात् प्रागेव प्रष्टव्यं न पृष्टं त्वयेति प्रश्नातिपत्तिः सूच्यत इव । येनाश्रुतमित्यादि । अत्र एकस्मिन् ज्ञाते अन्यस्य ज्ञातत्ववचनं हेतुज्ञाने साध्यस्य ज्ञातत्ववचनादिस्थल इव न एकज्ञानजन्यान्यविषयकज्ञानान्तराभिप्रायेण ; अपि तु तदेकं येन ज्ञानेन विषयीक्रियते, तेनैव सर्वस्यापि विषयो-

विज्ञातेन, अश्रुतममतमविज्ञातं, श्रुतं मतं विज्ञातं भवतीति
ते] वाक्यपर्यवमितोऽर्थः, ब्रह्मस्वरूपसत्तामात्रस्याश्रुतश्रुतत्वा-
वात्। अथ अश्रुताभतादिशब्दानां, 'इदं सर्वं विदितं
त श्रुत्यन्तरानुसारात् सर्वार्थकत्वं द्रष्टव्यम्। ततश्च येन
श्रुतं भवतीत्यर्थः। ततश्च अश्रुतं श्रुतं भवतीति अश्रुतस्य
ादनं कथमिति शङ्काया नावकाशः। यद्वा अवस्थाविशिष्टतया
पेण श्रुतं भवतीत्यर्थः। अत्र विज्ञातशब्दो निदिध्यासनपरः;
ःतव्यो निदिध्यासितव्य इति क्रमप्रत्यभिज्ञानादिति द्रष्टव्यम्।
त्र, 'येनाश्रुतं श्रुतम्' इत्यनेन किमुपादानमिति पृष्टं भवति।
ार्थकेन आदेशशब्देन चात्मस्वरूपं पृष्टं भवति। ततश्चात्म-
किमिति प्रश्नस्य फलितार्थः। अत एव श्रीविष्णुपुराणे,
जगत् ब्रह्मन् यतश्चैतत् चराचरम्' इति [श्लोके यन्मयमिति
म्, यतश्चैतच्चराचरमिति] उपादानञ्च पृष्टम्। अत एव
त्ताः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति

---

अभिप्रायेण। तदानीमेव सर्वस्मिन् एकाभेदस्य विवक्षितस्य
। तदिदं स्पष्टीकर्तुं, 'येन ज्ञातेनाज्ञातं सर्वं ज्ञातं भवति'
ह्हेणानुक्त्वा अश्रुतेन श्रुतममतेन मतमित्येवं विस्तरेण
श्रुतं शाब्दबोधविषयः। न ह्येकस्मिन् ध्यानमननशाब्द-
सति सर्वं ध्यानमननशाब्दबोधविषयी भवेत्, यदि
दार्थयोरभेदो न स्यादिति भावः।

ब्रह्म ज्ञातवानसीति रीतिं विहायानया भङ्ग्या पिता
पप्रच्छेति चेत्—'असत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव' इति
ममृष्यमाणः, 'सर्वं विज्ञाय प्रतिनिवर्तितव्यम्' इति गुरु-

**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातँ स्यात्;**
**वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥—**

**यथा सोम्यैकेन....विज्ञातं स्यात्** । यथा उपादानभूते मृत्पिण्डे ज्ञाते तदुपादेयघटशरावादिकं ज्ञातं भवति, तद्वदित्यर्थः । नैयायिकरीत्या—, असदेव घटादिकं मृत्पिण्डेनोत्पद्यते । अतश्चोपादानोपादेययोर्भेदात् न मृत्पिण्डे ज्ञाते सर्वमृन्मयानां ज्ञातत्वं संभवतीति मन्वानं प्रत्याह— **वाचारम्भणं...मृत्तिकेत्येव सत्यम्** । घटत्वादिलक्षणो विकारो घटशरावादिनामधेयञ्च आरभ्यते=आलभ्यते=स्पृश्यत इत्यारम्भणम् । कर्मणि ल्युट् । तेनैव मृद्द्रव्येण घटशरावादिलक्षणो विकारो घटशरावादि नामधेयञ्च स्पृश्यत इत्यर्थः। **आरम्भण**शब्दस्य पुन्नपुंसकलिंग(लिङ्गान्त)-विकारनामधेयविशेषणत्वेऽपि नपुंसकैकशेषैकवद्भावाभ्यां वा लिङ्ग-सामान्यादिविवक्षया वा आरम्भणमिति नपुंसकैकवचननिर्देशः । मृद्द्रव्येण विकारनामधेये कस्मै प्रयोजनाय स्पृश्येते इत्यत्राह—**वाचेति** । प्रयोजनस्य हेतुत्वविवक्षया तृतीया । वाक्छब्दश्च अजहल्लक्षणया वागादि-व्यवहारपरः । ततश्च वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते । मृत्पिण्ड एव नामरूपभाग् भवतीत्यर्थः । अत्र यद्यपि मृत्पिण्ड-मृन्मयाभेदप्रतिपादनं 'वाचारम्भणं विकारः' इत्येतावन्मात्रेणापि सिध्य-तीति न नामधेयस्यापि स्पृश्यत्वं वक्तव्यम्—तथापि संज्ञाभेदादुपादा-नोपादेययोर्भेदशङ्काव्युदासाय नामापि मृद्द्रव्येण स्पृश्यत इत्युक्तिर-पेक्षितेति द्रष्टव्यम् ।— कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह—

---

नैयायिकरीत्येति, मन्वानमित्यत्रान्वेति । असंभवाभिमानस्य दृढत्वात् तत्परिह[illegible]न्तः खेन संभवप्रदर्शनम् ।

**मृत्तिकेत्येव सत्यम्** । मृन्मयं घटादिकं मृत्तिकेत्येव प्रमाणप्रतिपन्नम् । न तु तद्भिन्नत्वेनेत्यर्थः । यद्वा मृन्मयं मृत्तिकेति वाक्यमेव **सत्यं** अबाधितार्थकमित्यर्थः । ततश्चोपादानोपादेययोरभेदात् उपादाने ज्ञाते उपादेयस्य ज्ञातता भवतीत्यर्थः ।

एतेन "विकारो **वाचारम्भणं** वागालम्बनमात्रम् । **नामधेयम्** । स्वार्थे धेयट्प्रत्ययः। नामैव केवलम् ; न विकारो नाम वस्त्वस्ति; मृत्तिकैव सत्यम्" इति यत् परैरुक्तम्—तदपास्तम् । **वाचारम्भण**मित्यस्य वागालम्बनमित्येतदर्थकत्वे प्रमाणाभावात् । नामधेयमित्यनेन वागालम्बनमात्रमित्यनोऽतिरिक्तार्थाप्रतिपादनात् पुनरुक्तिश्च । मृत्तिकासत्यत्वमात्रत्व(?)विवक्षायामि**ति** शब्दवैयर्थ्यञ्च ।

उक्तञ्चाभियुक्तैः—"वाचारम्भणमित्युक्तेर्मिथ्येत्यश्रुतकल्पनम् ।
पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता ॥" इति ।

---

वाचा = वागिन्द्रियेण आरम्भणं = आरभ्यमाणं उत्पाद्यमानमित्यर्थे नामधेयमात्रे तदन्वयः स्यात् ; न विकारे । वाचा व्यवहारार्थं कुलालादिना आरभ्यते उत्पाद्यत इत्यर्थे सर्वनामधेयेषु तदन्वयो दुर्वचः ; घटादिनामधेयस्य कुलालादिकृतत्वाभावात् । अतो मृद्द्रव्येणेति कर्त्रध्याहारेण तेन स्पृश्यत इत्यर्थस्वीकारः । तदा कार्यकारणयोरभेदोपपादनायावश्यवक्तव्यमुपादानस्यैव विकारभाक्त्वं विशेषनामभाक्त्वं च सम्यगुक्तं भवतीति फलाधिक्यञ्च । एवं विकारनामधेयस्पर्शाभावे लोकव्यवहारो न सिद्ध्येदिति तत्प्रयोजनकथनं वाचेति । ननु चकाराभावात् आरम्भणमिति क्लीबनिर्देशाच्च एवमेवार्थोऽस्तु—मृत्तिकेति नामैव सत्यं = शाश्वतम् ; अन्यत्तु घटशरावादिनामधेयं वाचा आरभ्यमाणं विकारः = असत्यं अशाश्वतम्, कदाचिदेव भवतीति इति चेन्न—एतत्कथनस्य निष्प्रयोजन-

किञ्च परमते, "येनाश्रुतं श्रुतं भवति" इति सन्दर्भोऽपि न युज्यते। शुक्तितत्त्वे ज्ञाते तदध्यस्तरजतादेर्निवृत्तावपि रजतत्वस्य ज्ञातत्वादर्शनेन ब्रह्मणि ज्ञाते तदध्यस्तप्रपञ्चस्य निवृत्तावपि ज्ञातत्वासंभवात्। ननु शुक्तौ ज्ञातायां रजतस्य तत्त्वं ज्ञातमेव। शुक्तिव्यतिरिक्तरजततत्त्वस्या-भावात्। एवं ब्रह्मणि ज्ञाते प्रपञ्चस्य तत्त्वं ज्ञातमेवेति चेत्—न—परमार्थशुक्तेरपरमार्थरजततत्त्वरूपत्वाभावात्। न हि शुक्तौ ज्ञातायां रजततत्त्वं ज्ञातमिति व्यवहारो दृष्टचर इत्यास्तां तावत्।

ननु 'सर्वं मृन्मयं विज्ञातं स्यात्' इत्यत्र विकारार्थमयट्प्रत्ययेन घटत्वशरावत्वाद्यवस्थावद्द्रव्यरूपो विकार एवाभिधातव्यः। न तु घटत्वशरावत्वाद्यवस्थारूपो विकारः, तस्य मृत्पिण्डापेक्षया भिन्नत्वेन तज्ज्ञानेन ज्ञातत्वासम्भवात्। ततश्च तदुपपादके, 'वाचारम्भणं विकारः'

---

त्वात्; वाचारम्भणपदवैयर्थ्याच्च। चस्तु अर्थसिद्धः, 'गामश्वं पुरुषं जगत्' इतिवत्। नपुंसकं च निरूढं भाष्ये। ननु नामधेयपददृष्ट्या आरम्भणमिति प्रयोगे वाचारम्भणं नामधेयं विकार इति क्रमो युक्त इत्यत्राह लिङ्गसामान्येति। पदसंस्करापक्षावलम्बनेनेति भावः। इतिवाक्यमेव सत्यमिति। मृन्मयं न मृत्तिका; पटो न तन्तवः; मृन्मयं स्वावयवे स्वभिन्ने समवेतम् इत्यादितार्किकवाक्यमसत्यमिति भावः। वागालम्बनेति। वाचाया आरम्भणं आलम्बनं वाचारम्भण-मिति परमतम्। एकेन मृत्पिण्डेन घटशरावादिकार्यार्थमविभक्तेन मृत्पिण्डेन; सर्वं तन्मृत्पिण्डकार्यं सर्वमिति ह्यर्थः। अतः लोहमणि-नखनिकृन्तनपदाभ्यां पूर्वावस्थलोहकृष्णायसद्रव्यमात्रं विवक्षितम्। अत एवोपरि तथैव निर्देशः। निरवस्थद्रव्यस्थित्ययोगात् इयमेव पूर्वावस्थेत्यनियमाच्च यत्किञ्चिदवस्थानिर्देशः।

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातँ स्यात् वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥ ५ ॥—

यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातँ स्यात् वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यम्—

एवँ सोम्य स आदेशो भवतीति ॥ ६ ॥

न वै नूनं भगवन्तस्त एतदवेदिषुः; यध्द्येतदवेदिष्यन्, कथं मे

---

इति वाक्येऽपि **विकार**शब्देनावस्थावद्द्रव्यलक्षणस्य विकारस्याभिधानमुचितम्; न त्ववस्थालक्षणविकारस्येति चेत्, सत्यम्; तस्यैवाभिधानमुचितम्। तथापि मृद्द्रव्येण घटशरावादिलक्षणस्यावस्थावतो द्रव्यस्य स्पर्शासम्भवात्—न ह्यात्मैवात्मना स्प्रष्टुं शक्यः। अतः, **मृन्मय**मित्यत्र विकारवाचिमयट्प्रत्ययेनावस्थावतोऽभिधानेऽपि, तदुपपादके **वाचारम्भणं विकार** इति वाक्ये **विकार**शब्देनावस्थाया एव ग्रहणमुचितम्। तथा **मृत्तिकेत्येव सत्य**मित्यत्र विशेष्याकाङ्क्षायां सत्यमिति नपुंसकलिङ्गानुरोधात् अवस्थावद्द्रव्यवाचि **मृन्मय**मित्येतत् विशेष्यतयाऽनुषज्यते। ततश्च **सर्वं मृन्मयं...मृत्तिकेत्येव सत्य**मित्यत्र अवस्थावद्द्रव्यमेव विकारवाचिना मयट्प्रत्ययेनाभिधीयत इति न कश्चिद्दोष इति द्रष्टव्यम्। **यथा....स्यादित्यादि। लोहमणिः** सुवर्णपिण्डविशेषः। शिष्टं पूर्ववत्।

**यथा....स्यादित्यादि। नखनिकृन्तन**शब्देन कार्ष्णायसपिण्डो लक्ष्यते। शिष्टं पूर्ववत्। **एवं सोम्य स आदेशो भवतीति।** मयोक्त आदेशो मृत्पिण्डादितुल्य इत्यर्थः।

एवमुक्तः पुत्र आह—**न वै नूनं....। भगवन्तः** पूजावन्तो

---

**न वै नूनमिति। प्रष्टव्यमेव हन्त! मया प्राङ्न पृष्टम्।**

नाचक्ष्यन्' इति। 'भगवाँस्त्वेव मे तद्ब्रवीतु' इति। 'तथा सोम्य' इति होवाच ॥ ७ ॥

इति षष्ठाध्याये प्रथमः खण्डः।

---

मम गुरवः एतत्स्वरूपं न ज्ञातवन्तः। यत् यदि एतद् वस्तुतो जानीयुः, तर्हि भक्ताय गुणवते मह्यमुपदिशेयुर्हि। नोपदिष्टवन्तस्तु ते। तेनाहं मन्ये न विदितवन्त इतीत्यर्थः। एवमवाच्यमपि गुरोर्न्यङ्ग पुनर्गुरुकुलं प्रति प्रेषणभयादुक्त्वा, 'भगवानेव तद् वस्तूपदिशतु' इति पितरं प्रार्थयामासेत्यर्थः। तथा सोम्येति होवाच। पिताऽपि 'तत् तथैव वदानि' इत्युक्तवानित्यर्थः ॥ ६-१-७.

---

अस्त्विदम्। गुरुर्हि मे, 'नापृष्टः कस्यचित् ब्रूयात्' इति प्रश्नप्रतीक्षो न भवति; अत्यर्थकरुणया अपृष्टानामेवार्थानामनेकेषामतिशीघ्रमेवोपदेशात्। अतः स मन्ये नेदं विदितवान् स्यात्। अस्तु; तथापि तदज्ञानं मयोत्प्रेक्ष्यमाणं वाचा वक्तुं न साम्प्रतम्। अथवा रहसि पितृचरणसविधे मदुत्प्रेक्षायाः निवेदने न दोषः। अन्यथा ह्ययं मां पुनः तत्र प्रेषयेत्। तदा च गुरोरज्ञानं प्रतिनिवृत्तेन मया व्यक्तमेव वक्तव्यं स्यात्। ततो वरं संप्रति तद्वितर्कविनिवेदनमिति विमृश्यैवमाह श्वेतकेतुः। गुरौ स्वस्य गौरवबुद्धिं भगवन्त इति बहुवचनेन व्यनक्ति। नूनमिति वितर्कमात्रे।

न्यङ्गमिति। न्यग्भावमिति शाङ्करे। न्यङ्गो नितरामञ्जनम्। इह तु न्यङ्गं=न्यूनता। प्रेषणभयादिति। प्रेषणे, गुरोश्चैतदवेदने, 'न विदन्ति' इति स्पष्टं वक्तव्यं स्यादिति भयादित्यर्थः।

—०—०—

### षष्ठे द्वितीयः खण्डः

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ।**

---

प्रतिज्ञातस्यैकविज्ञानेन सर्वविज्ञानस्य समर्थनाय जगतो ब्रह्मैक-कारणतां प्रतिपादयितुं प्रवृत्तः' यथा लोकेऽपराह्णे प्रसारितानां घट-शरावोदञ्चनादीनां मृत्पिण्डैकोपादा(दी)नां प्रतिपिपादयिषुः, 'पूर्वाह्णे एतत् घटशरावादिकं मृत्पिण्ड एवाऽऽसीत्' इति प्रतिपादयति' तथा प्रतिपादयति—

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्** । इदं विभक्त-नामरूपं बहुत्वावस्थं जगत् **अग्रे** सृष्टे प्राक् **एकमेव** अविभक्तनामरूप-तयैकत्वावस्थापन्नमेव **अद्वितीयं** अधिष्ठात्रन्तरशून्यं **सदेवाऽऽसीदि-**त्यर्थः। अत्र सच्छब्दो नामसंबन्धयोग्यत्वलक्षणं सत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते । अयं च सच्छब्दो विशेष्यभूतपरमात्मवाचकोऽपि कारणविषयत्वसामर्थ्यात् कारणत्वौपयिकगुणविशिष्टप्रकृतिपुरुषकाल-शरीरकं परमात्मानं उपस्थापयति । 'देवाँ आज्यपाँ आवह' इत्यादौ विशेष्यवाचिन एवाऽऽज्यशब्दस्य विकृतिषु पृषदाज्यवाचित्वस्य दाश-मिकन्यायसिद्धत्वात् । अत्र **सदेवे**त्येवकारेण नैयायिकाभिमतमुत्पत्तेः

---

**अद्वितीयमिति पदेन निषेधमुखेनैवार्थस्योक्तत्वात् न तदु-पर्येवकारः । अस्य पदस्य, "द्वितीयगणनायोग्यो नासीदस्ति भवि-ष्यति । समो वाऽभ्यधिको वाऽस्य" इति श्रीभगवद्यामुनमुनि-दर्शितो वाच्यार्थः । एवं स्वतन्त्रवस्त्वन्तरनिषेधपरमिदं, 'तदैक्षत' इति वक्ष्यमाणोपयोगितया अधिष्ठात्रन्तरनिषेधपरमुक्तं भाष्यादा-वित्यन्यत्र विस्तरः । 'श्रुतप्रकाशिका-सिद्धिव्याख्यादि' द्रष्टव्यम् ।**

प्राक् जगतोऽसत्त्वं व्यावर्त्यते सदेवेत्येवकारस्य नैयायिकाभिमतोत्पत्ति प्राक्कालीनकार्यासत्त्वव्यावर्तकत्वम्, 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यसत्कार्यवादिदर्शनप्रतिक्षेपपरोत्तरवाक्यसंदर्भादवसीयते । एकमेवे-त्येवकारेण, 'बहु स्याम्' इति वक्ष्यमाणा स्रक्ष्यमाणकार्यबहुत्वावस्था व्युदस्यते । 'तदैक्षत', 'तत्तेजोऽसृजत' इत्युत्तरवाक्यसंदर्भे सच्छब्दि-तस्यैव निमित्तत्वकथनात् अद्वितीयमित्यनेन निमित्तान्तरं निषिध्यते । ततश्च एकं अद्वितीयमिति पदाभ्यामभिन्ननिमित्तोपादानत्वं सिद्धं भवति।

ततश्चायमर्थः—इदं बहुत्वावस्थं विभक्तनामरूपं प्रत्यक्षतया दृश्यमानं जगत् सृष्टेः प्राक् निमित्तान्तरशून्यं अविभक्तनामरूपतया एकं सच्छब्दितं ब्रह्मैवासीदित्यर्थः(दिति ?) । यद्यपीदानीमपि जगत् सदेव, तथापि अविभक्तनामरूपसद्भावापत्तिः सृष्टेः प्रागेवेति अग्र इत्यस्य नानुपपत्तिः । न च सच्छब्दस्य सूक्ष्मप्रकृतिकालजीवशरीरक-ब्रह्मपरत्वेन, सच्छब्दस्य कार्यभूते जगति सृष्टेः प्राक् तादृशब्रह्मत्वबोध-कत्वेऽपि जगति सत्तासंबन्धबोधकत्वाभावेन असत्कार्यवादव्युदासकत्वं कथमिति वाच्यम्—सृष्टेः प्राक् सच्छब्दितब्रह्माभेदबोधने नैयायिकाभि-मतासत्त्वव्युदासस्याप्यर्थसिद्धत्वात् ।

एतेन 'एकमेवाद्वितीयम्' इत्येतत् प्रपञ्चमिथ्यात्वे प्रमाणयन्तः परे प्रत्युक्ताः । तस्य ब्रह्मव्यतिरिक्तमिथ्यात्वपरत्वे, 'सदेव सोम्येदमग्र आसीत्' इति कालप्रापकेण पूर्वेणाग्रपदेन 'तदैक्षत', 'नामरूपे व्याकर-वाणि' इति ईक्षणनामरूपात्मकप्रपञ्चप्रापकेणोत्तरेण च विरोधप्रसंगात् । किञ्च. 'इदंशब्दोदितं सर्वं जगत् सृष्टेः प्राक् एकमेवाद्वितीयं सदेवासीत्'

तद्धैक आहुः, 'असदेवेदमग्र आसीदेकमेवाद्वितीयम्। तस्मा-

इति परैर्व्याख्यातत्वेन सृष्टिप्राक्काले अद्वितीयपदेन द्वितीयासत्त्वबोधनेऽपि सृष्ट्युत्तरकालं तस्यासत्त्वाप्रतिपादनेन जगतो मिथ्यात्वासिद्धेः। घट-शरावादिकं सर्वं सृष्टेः प्रागद्वितीयैकमृत्पिण्ड एवासीदित्युक्त्या घट-शरावादीनां मिथ्यात्वप्रतिपादनादर्शनात्। प्रागसत्त्वप्रतिपादनेन ह्यनित्यत्वमात्रं सिद्ध्येत्; न तु मिथ्यात्वम्। न च 'नेह नानास्ति' इति वाक्यात् सृष्ट्युत्तरकालेऽप्यसत्त्वावेदनात् मिथ्यात्वसिद्धिरिति वाच्यम्— 'न स्थानतोऽपि परस्य' इत्यधिकरणे तस्य वाक्यस्य ब्रह्मगतनानात्वनिषेध परतया परैरेव व्याख्यातत्वात्।

नन्वनित्यत्वमेव मिथ्यात्वम्। 'अनित्यस्य धर्मिणः अनित्यत्वं असत्यत्वम्' इति **वाचस्पतिमिश्रोक्तेः, विद्यारण्ययतिनाऽपि** तथैवोक्तत्वात्, 'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते। यत्तु कालान्त-रेणापि नान्यसंज्ञामुपैति वै। परिणामादिसंभूतां तद्वस्तु नृप! तच्च किम्' इति पराशरस्मरणादप्यनित्यत्वमेव मिथ्यात्वमिति चेत्— ईदृशस्य प्रामाणिकस्य प्रत्यक्षाविरुद्धस्य प्रपञ्चमिथ्यात्वस्य अस्माभिरप्यप्रतिक्षेप्य त्वादित्यास्तां तावत्।

**सदेव**ासीदिति सृष्टिप्राक्काले ब्रह्माभेदप्रतिपादनमुखेन सत्कार्य-वादमुक्त्वा तद्विरोध्यसत्कार्यवादं नैयायिकाभिमतं **वाचारम्भण**मित्या-दिना प्रतिक्षिप्तमपि कण्ठतः प्रतिक्षेप्तुं तन्मतमुपन्यस्यति— **तद्धैक**

**तद्धैक आहुरिति नैयायिकखण्डनम्, न तु शाङ्करोक्तरीत्या बौद्धखण्डनमिति परं व्यक्तं वेदार्थसंग्रहव्याख्यादौ। अर्थवर्णनरीतिस्तु**

दसतस्सज्जायत [इति] ॥ १ ॥

**आहुः...एकमेवाद्वितीयम्**। इदं जगदग्रे सृष्टेः प्राक् असदेवासीत्। न तु सदेवासीदित्यर्थः। नामरूपविभागाभावलक्षणस्यासत्त्वस्य सिद्धान्तेऽपि सम्मतत्वादाह **एकमेवाद्वितीयम्**। प्रागभावव्यतिरेकेणावस्थाया वा अवस्थाश्रयस्य वा कस्यापि सत्त्वं नासीत्यर्थः। यद्वा असदेवेत्यत्र

अत्रैव विशदा। 'असदेवासीत्' इत्युक्तौ अभाव एवासीदित्यर्थः प्रतीयते। स बाधितः। न हि प्रलयकाले कार्याभावमात्रमासीदिति नैयायिकमतम्। अतः इदं कार्यजातं तदानीं असत् अभावप्रतियोग्येवासीत्—नैवासीदित्यर्थः। उत्तरत्र तस्मादसत इत्यत्र तु असत्पदं नाभावप्रतियोग्यर्थकम्; अभावप्रतियोगिभूतात् स्वस्मात् स्वयं जायत इत्युक्तौ विरोधात्। अतस्तत्राभावमात्रपरम्। 'एकमेवाद्वितीयम्' इत्यस्य असच्छब्दार्थे अभावप्रतियोगिनि अनन्वयात्, 'यत् आसीत्, तदेकमेवाद्वितीयम्' इति पृथग्वाक्यं कार्यम्। यद्वा असदिति अभावमात्रपरमेव। एकोऽद्वितीयोऽभाव एवासीदित्येवार्थः। कोऽसावभाव इत्यत्र इदमिति तद्विशेषणम्। अभावे जगदभेदायोगात् इदमिति बुद्धिस्थमुच्यते। अयमेतज्जगत्प्रतियोगिकोऽभाव आसीदिति। (अस्तु वा मूले इदमग्रे इति, भाष्ये इदंजगदग्रे इति चैकं पदम्। सृष्टेः प्रागिति तदर्थः।) नैयायिकमते उपादानभूतानां परमाणूनां निमित्तभूतस्येश्वरस्य च प्रलये सत्त्वात् एकमेवाद्वितीयमिति कथमित्यत्र आशयमाह प्रागभावव्यतिरेकेणेत्यादिना। कार्यावस्थापेक्षया प्रागवस्था वा कार्यावस्थोपलक्षितं धर्मि वा तदानीं नेति पदद्वयविवक्षितम्; न त्वितरनिषेध इति भावः। अत्र शङ्करवाक्यार्थशोधने असदित्यत्र, 'अ' इति पृथक्करणमेवाभिसंहितं वाच्यमिति विमृश्य, अर्थपुष्टिबलात् तार्किकखण्डनार्थमपि तमेव पक्षमाहत्याह यद्वेति। अत्र पक्षे अद्वितीयमित्येतदनन्तरं इति-

'कुतस्तु खलु सोम्यैवँ स्यात्' इति होवाच 'कथमसतः सज्जायेत' इति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥

---

अ इत्येतत् सत्पदेनासमस्तं सत् 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति वाक्यार्थप्रतिक्षेपकम् । **तस्मादसतस्सज्जायत** । सदिति भावप्रधानो निर्देशः । सत्वेत्यर्थः । यस्माद्धेतोरुत्पत्तेः प्राक् अवस्थाश्रयस्याप्यभावः, तस्माद्धेतोरसतः [सकाशात्] सत्त्वरूपा उत्पत्तिर**जायत**

---

शब्दोऽध्याहार्यः । तथाचैतावदुक्तं भवति—इदं सद्रूपेण नासीत्, कार्यकारणयोर्भेदात्; नाप्येकमासीत्, भूतचतुष्टयपरमाणूनामनन्तानां स्थितत्वात् ; नाप्यद्वितीयमासीत्, ईश्वरादेः निमित्तस्यान्यस्य स्थितेरिति । यः खल्वसत्कार्यवादः तैत्तिरीये आनन्दवल्ल्यामुक्तः, न तस्यात्र निरासः । अतः एक इति पदं न शाखान्तराध्यायिपरम् । अत्रापि प्राक् तादृशासत्कार्यवादस्य (३-१९) उपक्षिप्तत्वादविशेषात् । अतः सूक्ष्मावस्थप्रकृतद्रव्यानभ्युपगन्तृमतनिरासपरमेवेदमिति ।

अत्रेदं बोध्यम्—सत्कार्यवाद इत्यस्य सत्=पूर्वकालावच्छेदेन स्थिमेव उत्तरकालावच्छेदेन कार्यं भवतीति वाद इत्यर्थः । सदित्यत्र वर्तमानत्वमविवक्षितम् । असत्कार्यवादश्च पूर्वकालावृत्तिद्रव्योत्पत्तिवादः । 'असतः सज्जायत' इत्यस्य पूर्वकाले अस्थितात् कार्योत्पत्तिरिति नार्थः । पूर्वकालेऽसतः कारणत्वायोगात् । उत्तरकाले असतः कार्यं भवतीत्यपि न । तन्तुकपालादेरुत्तरकालेऽवश्यमेव सत्त्वात् । अतोऽभावात् कार्यं जायत इत्यर्थः । तत्र तस्मादसत इत्यस्य तादृशात्=अवस्थातदाश्रयधर्मिविकलादभावादित्यर्थसंभवेऽपि कथमसत इत्यत्रेवात्रापि असत इत्येतेनैव विवक्षितार्थसिद्ध्या, असत इति षष्ठ्यन्तमित्याशयेन च तस्मादित्यस्य हेतुपरत्वमाह तस्माद्धेतोरिति । यस्माद्धेतोरित्यादिना पूर्ववाक्यस्यार्थो हेतुरिति

अभवदित्यर्थः । पर्यवसन्नमिति यावत् । जायत इत्यत्र अडभावश्छान्दसः ॥

तन्मतं प्रतिक्षिपति—**कुतस्तु खलु....सञ्जायेतेति** । **कुतः** केन प्रमाणेन असत उत्पत्तिः प्रतीयेत । तदेवेदमिति प्रत्यभिज्ञाविरोधेन

---

दर्शितम् । सञ्जायत इत्यस्य स्वयं पूर्वकालावच्छेदेन स्थितमेव पश्चात् जायत इत्यर्थस्वीकारे सत्कार्यवादस्वीकारापत्तिः । सत्= वर्तमानं उत्पत्तिकालावच्छेदेन विद्यमानं जायत इत्यर्थे सत्पद-वैयर्थ्यम् । उत्पद्यमानस्योत्पत्तिकालावच्छेदेन स्थितेः सर्वसंमत-त्वात् । असतः इत्यस्य अभावादितिवत् सदित्यस्य भाव इत्यर्थे अभावात् भावपदार्थो जायत इत्यर्थः सिध्यति । तदापि सत्पद-वैयर्थ्यमेव । अतः सदिति भावप्रधानं कृत्वा सत्=सत्ता भवनम् उत्पत्तिरित्यर्थम्, जायत इत्यस्य च उत्पत्तिरुत्पद्यत इत्यर्थायोगात् तस्मादिति हेत्वन्वयानुकूलम्, 'पर्यवसन्नम्' इत्यर्थश्च स्वीकृत्य व्याख्या-तम् । असतः सकाशादिति काचित्कपाठे. मूले असत इति पञ्चमी । यदि तु, कथमसतः सञ्जायत इत्येतत्समानार्थकत्वमत्रावश्यकम्, तदा असतो द्रव्यस्य सत्ता वा उत्पत्तिर्वा कथं भवतीति तत्र व्या-ख्यानात् अत्रापि सकाशादिति पदरहितपाठात् सैव रीतिरस्तु । यदि तु, 'उभयत्र असतः=अभावात् सत्=भावपदार्थभूतं द्रव्यमित्य-नुगतोऽर्थोऽस्तु । जायत इत्यस्य चोत्पत्तिरर्थः' इत्यालोच्यते, तदापि न तात्पर्यभेदः । अयमत्र कथमसत इति वाक्यस्य भावः । अभावस्य कारणत्वं वदता न तस्योपादानत्वमुच्यते, परमाणूनामेवोपादानतया अस्यापसिद्धान्तत्वात्, असत्सतोर्मिथो वैजात्यादुपादानोपादेय-भावायोगाच्च । नापि निमित्तकारणत्वम्–उत्पत्तिशब्दस्य आद्यक्षणा-वच्छिन्नोत्तरावस्थार्थकत्वात् पूर्वावस्थाश्रयद्रव्यस्य पूर्वमभावे तद-योगात् तस्य द्रव्यस्य कारणत्वेनैव कार्यनिर्वाहे तदतिरिक्तस्या-भावस्याकारणत्वात् ; अनङ्गीकार्यत्वाच्च । उत्पत्तेस्तादृशावस्थारूप-त्वादिकञ्च तन्तुः पटो जात इत्यादिव्यवहारसिद्धमित्यलम् ।

प्रमाणस्यानवतारादिति भावः । अतः कथमसतो द्रव्यस्य सत्ता भवेत् । अतः असतस्सकाशात् उत्पत्तिर्न भवति, अपि तु सत एव द्रव्यस्य प्रथमक्षणावच्छिन्नावस्थान्तरसम्बन्ध एवोत्पत्तिरित्यर्थः । एवं परपक्षं प्रतिक्षिप्य स्वमतमुपसंहरति सत्त्वेव...एकमेवाद्वितीयम् । नन्विदंशब्देन जगन्मात्रपरामर्शे तस्य सच्छब्दितब्रह्माभिन्नत्वेन 'सदेवेदमग्र आसीत्' इति ब्रह्माभेदानुपपत्तिः । नापीदंशब्देन इदंशब्दितजगच्छरीरकब्रह्मप्रतिपादनं संभवति, अश्रुतवेदान्तं प्रति इदमादिशब्दानां ब्रह्मपर्यन्तप्रत्यायकत्वासंभवादिति चेत्, अस्याः शङ्कायाः परिहारो मुण्डकप्रकाशिकायामेव प्रपञ्चितः। अत्रापि च स्वावसरे (६-८.) करिष्यामः। तत्रैवानुसन्धातव्यः॥

---

इदमपि बोध्यम्—वाचारम्भणादिवाक्यैः तार्किकमतनिरासः कृत इति शाङ्करादिसंमतमेव । ततस्तदुपेक्ष्य तत्त्वबुभुत्सया प्रार्थने कृते सदेवेत्यारब्धम् । तत्र पुनस्तार्किकनिरासस्य का आवश्यकता । अतो बौद्ध एव निरस्यताम् । तन्मते इदमेकमेवाद्वितीयमित्यस्य असति कथमन्वय इति चेत्—चोद्यमिदं तार्किकमतेऽपि तुल्यम् । क्लिष्टगतिस्तु सर्वत्र भवति । वस्तुत एवं सुवचम्—अभावमात्रात् भावोत्पत्तिवाद्येवात्र निरस्यते । स हि, बीजात् किलाङ्कुरोत्पत्तिः ; कथमभावादित्याशङ्कायाम्, बीजोपमर्दे जाते अङ्कुरप्रादुर्भावात् अभाव एव कारणमित्याहेत्युक्तं न्यायदर्शने, 'अभावाद् भावोत्पत्तिः, नानुपमृद्य प्रादुर्भावात्' (४-१ १४). इति । न्यायभाष्ये च, 'असतः सदुत्पद्यत' इति असदादिपदप्रयोगः कृतः । तथाच एकमेवाद्वितीयमित्यस्यायमर्थः—सृष्टिमध्ये हि बीजादेः सद्भावः । प्रलये तु उपमर्द्यबीजादितुल्यमपि नास्ति, तदावापकपुरुषतुल्योऽपि च नास्तीति शुद्धोऽभाव उपादानम् । अत एवासदेवेदमिति सामानाधिकरण्यमप्युपपन्नम् । इदमाक्षिप्यते कथमसत इति । सदसतोः साजात्या-

**तदैक्षत, बहु स्यां प्रजायेयेति। तत् तेजोऽसृजत। तत्तेज ऐक्षत, बहु स्यां प्रजायेयेति। तदपोऽसृजत। तस्मात् यत्र क्वचन**

---

**तदैक्षत....असृजत।** तत् एतत्सच्छब्दवाच्यं परं ब्रह्म विचित्रानन्तचिदचिन्मिश्रव्यष्टिजगद्रूपेणाहमेव बहु स्याम्; तदर्थं तेजोबन्नादिसमष्टिरूपेण प्रकर्षेण जायेयेति सङ्कल्प्य तेजः ससर्जेत्यर्थः। **तत्तेज.... असृजत।** अत्राचेतनस्य तेजआदेरीक्षितृत्वासंभवात् तेज आदिशब्दाः तच्छरीरकपरमात्मपरा द्रष्टव्याः। **भगवता भाष्यकृता,** 'गौणश्चेन्नात्मशब्दात्' इति सूत्रे, "तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः। 'तत्तेज ऐक्षन्त, ता आप ऐक्षन्त' इति मुख्य एवेक्षणव्यपदेशः" इति भाषितम्। तथा, 'तदभिध्यानादेव तु तल्लिङ्गात् सः' इति सूत्रे, "तत्तेज ऐक्षत, ता आप ऐक्षन्त' इति श्रूयमाणमीक्षणं तच्छरीरकस्य परस्यैव ब्रह्मण उपपद्यत" इति भाषितम्। संज्ञामूर्तिक्लृप्त्यधिकरणे, "तत्तेज

---

भावात् उत्पत्त्यादेरवस्थारूपत्वादितश्च पूर्वं सत् धर्मि अवश्यमस्तीति। एवमेतदपि सुवचम्। तार्किकः प्रागेव निरस्तः। अथापि सदेवेति उपन्यासानन्तरम्, 'असदेवेति' श्रुत्यन्तरमस्ति खलु' इति श्वेतकेतुशङ्कायाम् तदनुवादपूर्वकम्, नेदं तार्किकादिमतपरम्, तन्मतरीतेरनुपपन्नत्वादित्याहेति। तथा च एके शाखिन इत्येवार्थ इति।

अथापि आरम्भणाधिकरणे असद्व्यपदेशादिति तार्किकेण पूर्वपक्षकरणात् तद्रीत्या पूर्वपक्षार्थो वर्णित इति।

बहुस्यामिति, प्रजायेयेति च-पौनरुक्त्यपरिहारार्थम्, 'नामरूपे व्याकरवाणि, त्रिवृतं त्रिवृतमेकैकां करवाणि' इत्यत्रेव मध्ये तदर्थमित्यध्याहारेण व्यष्टि समष्टिपरमुक्तम्। व्यष्टेः समष्टिपश्चाद्भावेऽपि

शोचति स्वेदते वा पुरुषः, तेजस एव तदध्यापो जायन्ते ॥ ३ ॥

ता आप ऐक्षन्त। बह्व्यः स्याम प्रजायेमहीति। ता अन्नमसृजन्त। तस्मात् यत्र क्वचन वर्षति, तदेव भूयिष्ठमन्नं भवति। अद्भ्य एव तदध्यन्नाद्यं जायते ॥ ४ ॥

इति षष्ठाध्याये द्वितीयः खण्डः।

---

ऐक्षत इति तेजश्शरीरकं परं ब्रह्मैवाभिधीयत" इति च भाषितम्। ननु तत्तेज ऐक्षतेत्यत्र तेजश्शब्दस्य तेजश्शरीरकब्रह्मपरत्वे, 'तत्तेजोऽसृजत' इति वाक्येऽपि तेजश्शब्दस्य ब्रह्मपरत्वं स्यात्। न चेष्टापत्तिः। ब्रह्मणः सृज्यत्वाभावादिति चेन्न—तेजश्शरीरकब्रह्मणः कार्यत्वेन सृज्यत्वे दोषाभावात्। तेजसो जलहेतुत्वे उपपत्तिं दर्शयति तस्माद्यत्र....जायन्ते। यत्र क्वचन देशे काले च पुरुषः शोचति संतप्यते, स्वेदते प्रस्विद्यते वा। तत् तदा तेजस एवापोऽधिजायन्त इत्यर्थः।

ता आपः....असृजन्त। अत्रान्नशब्देन महाभूताधिकारात पृथिवी उच्यते। सूत्रितञ्च, 'पृथिवी', "अधिकाररूपशब्दान्तरेभ्यः" इति अधिकारः महाभूताधिकारः। रूपम्, 'यत्कृष्णं तदन्नस्य' इति। तैत्तिरीयके—'अद्भ्यः पृथिवी' इति शब्दान्तरम्। एतच्च सूत्रमन्यत्र

---

'फलेच्छापूर्विका उपायेच्छा' इति न्यायेन व्यष्टिसंकल्पात् समष्टिसंकल्पस्य पश्चाद्भावात् प्रजायेयेति समष्टिसंकल्पः पश्चादुक्तः।

अद्भ्य एवेति। पूर्ववाक्ये वर्षान्नयोरन्वयमात्रं दर्शितम्। अत्र तदधीनः अबन्नयोः कार्यकारणभाव उच्यते। अन्नाद्यमित्यत्र अन्नं च तत् आद्यञ्चेति प्रसिद्धविग्रहेऽपि अन्नप्रभृतीति तात्पर्यार्थोऽक्षतः। इदञ्च वाक्यमुपपादनवाक्यान्तर्भूतम्; न तु उपपाद्यार्थनिगमनमवेति।

व्याकृतम् । अपामन्नहेतुत्वे युक्तिमाह—**तस्माद्यत्र .... भवति । तदेव** तत्रैवेत्यर्थः। **अद्भ्य एव तदध्यन्नाद्यं जायते । तत्** तस्मात् पृथिव्येकदेशभूतव्रीहियवादिलक्षणस्यान्नस्य वृष्टिप्रभवत्वदर्शनादेव हेतोः **अन्नाद्यं** अन्नप्रभृति पृथिवीत्वावच्छिन्नमपि अद्भ्य एवाधि(भि)जायत इत्यर्थः ।

एतत्खण्डान्तर्गतवाक्यकविषयमधिकरणं लिख्यते-वियदधिकरणम् 2 3 1

द्वितीयाध्याये—**छान्दोग्ये,** 'तत्तेजोऽसृजत' इति तेजस एव प्रथमतः सृष्ट्यभिधानात्, आकाशोत्पत्तेरश्रुतेः आकाशो नोत्पद्यत इति "न वियदश्रुतेः" इति सूत्रेण पूर्वपक्षे प्राप्ते, उच्यते—"अस्ति तु" । आकाशस्याप्युत्पत्तिरस्त्येव; **तैत्तिरीयके,** 'आत्मन आकाशस्संभूतः' इत्युत्पत्तेः श्रवणात् ।

पुनश्चोदयति--"**गौण्यसंभवाच्छब्दाच्च**" । 'आत्मन आकाशः संभूतः' इति उत्पत्तिश्रुतिर्गौणी, निरवयवाकाशोत्पत्तेः छान्दोग्ये चाश्रुतायाः प्रतिपादनासंभवात्, 'वायुश्चान्तरिक्षश्चैतदमृतमुभयम्' इति आकाशस्यामृतत्वश्रवणाच्चेत्यर्थः । ननु, "आत्मन आकाशस्संभूतः" इत्यत्राकाशे **संभूत**शब्दस्य गौणत्वे, 'आकाशात् वायुः, वायोरग्निः' इत्यादौ श्रुतस्य संभूतत्वस्यापि गौणत्वं स्यादिति ; तत्राह—"**स्याच्चैकस्य ब्रह्मशब्दवत्**" । एकस्यैव **संभूत**शब्दस्याकाशे गौणत्वम्, 'वायोरग्निः' इत्यादावनुषक्तस्य **संभूत**शब्दस्य मुख्यत्वञ्च संभवति, यथा **मुण्डके** — 'तस्मादेतत् ब्रह्म नामरूपमन्नञ्च जायते' इति प्रधाने गौणतया प्रयुक्तस्य ब्रह्मशब्दस्य तस्मिन्नेव प्रकरणे, 'तपसा चीयते ब्रह्म' इति ब्रह्मणि मुख्यतया प्रयोगदर्शनात् ।

परिहरति, "**प्रतिज्ञाऽहानिरव्यतिरेकात्**"। आकाशस्यापि ब्रह्मोपादेयतया ब्रह्माव्यतिरेके सत्येव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अहानिर्भवति। ब्रह्माकार्यस्यापि वस्तुनः सत्त्वे एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञानेन सर्वविज्ञानप्रतिज्ञानं हीयेतेत्यर्थः। "**शब्देभ्यः**"। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्', 'ऐतदात्म्यमिदं सर्वम्' इत्यादिशब्दैः सर्वस्यापि वस्तुनो ब्रह्मकार्यत्वब्रह्मात्मकत्वप्रतिपादनपरैश्चायमर्थो विधीयते।

"**यावद्विकारं तु विभागो लोकवत्**"। तुशब्दश्चार्थे। छान्दोग्ये, 'एतदात्म्यमिदं सर्वम्' इत्यादिभिराकाशादेः सर्वस्यापि विकारत्वप्रतिपादनादेव **विभाग**शब्दिता उत्पत्तिरप्युक्तैव। यथा लोके, एते सर्वे देवदत्तपुत्रा इत्यभिधाय तेषु केषाञ्चिदुत्पत्तिप्रतिपादेनाऽपि सर्वेषामप्युत्पत्तिः प्रतिपादितैव भवति, तद्वत्। 'वायुश्चान्तरिक्षश्चैतदमृतम्' इति तु देवानामिव चिरकालस्थायित्वाभिप्रायम्।

"**एतेन मातरिश्वा व्याख्यातः**"। अकाशोत्पत्तिप्रतिपादनेनैव वायोरप्युत्पत्तिः प्रतिपादितैवेत्यर्थः। "**असम्भवस्तु सतोऽनुपपत्तेः**"। तुशब्दोऽवधारणार्थः। **असम्भवः** अनुत्पत्तिः **सतः** ब्रह्मण एव। तद्व्यतिरिक्तस्य कृत्स्नस्याव्यक्तमहदहङ्कारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्य एकविज्ञानेन सर्वविज्ञानादिभिरवगतकार्यभावस्यानुत्पत्तिर्नोपपद्यत इत्यर्थ इति स्थितम्। प्रकृतमनुसरामः॥ ६-२.

---

अव्यक्तमहदिति। एवंसति तेजआदित्रयमात्रकण्ठोक्तिः तेषामेव प्रत्यक्षत्वात् तत्रैव त्रिवृत्करणस्य प्रदर्शनसंभवादिति ध्येयम्॥

**कार्याभिन्नकारणसंभवं प्रथमखण्डे प्रदर्श्य द्वितीयखण्डे प्रजाये-**

षष्ठे तृतीयः खण्डः

**तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्य(न्त्य)ाण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥**

---

सर्वस्यैतस्य तेजोबन्नात्मकबीजत्रयप्रसूतत्वं दर्शयति—**तेषां.... उद्भिज्जमिति** । **आण्डजं** अण्डजं पक्षिसर्पादि । स्वार्थे अण् । **जीवजं** गर्भवेष्टनलक्षणजरायुजं पुरुषपश्वादि । **उद्भिज्जम्** । उद्भिनत्तीत्युद्भित् स्थावरम् । ततो जात**मुद्भिज्जम्** । [उद्भित् जायत इति वा उद्भिज्जम्] न च स्वेदजानामत्र सङ्कीर्तनाभावात् कथं त्रीण्येव बीजानीत्यवधारण-मिति शङ्क्यम्, उद्भिज्जशब्देन स्वेदजस्यापि संग्रहोपपत्तेः । **सूत्रितञ्च "तृतीयशब्दावरोधः संशोकजस्य"** इति । **संशोकजस्य स्वेदजस्य,** 'आण्डजं जीवजमुद्भिज्जम्' इत्यत्र तृतीयेनोद्भिज्जशब्देनावरोधः सङ्ग्रह

---

**येति समष्टिरुक्ता । अथ तृतीये बहुस्यामिति व्यष्टिरुच्यते । तेजो-बन्नात्मकेति । अत्र त्रीणीत्यस्य तेजोबन्नानीत्यर्थ इति न मन्तव्यम् । अत्र हि बीजानीत्युक्तानां कारणानां आण्डजमित्यादिना कार्यमुखेन प्रदर्शनमिति श्रुतप्रकाशिका । अतो बीजानीत्यनेन आण्डजीवोद्भि-त्पदविवक्षितानि प्रकृतिद्रव्याणि रेतःप्रभृतीनि गृह्यन्ते, न तु तेजो-बन्नानि । अत एव नचेत्यादिशङ्कासमाधानभाष्यमुपरितनं युज्यते । तेजोबन्नानां बीजपदविवक्षितत्वे स्वेदजरूपशरीरान्तरसद्भावेऽपि तस्यापि तेजोबन्नकार्यतया एवकारदर्शितावधारणानुपपत्तिविरहात् । एवंसत्येव श्रीभाष्याद्यैकरस्यमपि । अतः, 'सद्विद्याविजयोक्तरीत्या तेजोबन्नान्येव बीजपदार्थः' इति न मन्तव्यम् । एवञ्चोपक्रमे तेजो-बन्नात्मकेति, उपसंहारे तेजोबन्नानीति च कथनमेकैकबीजस्यापि तेजोबन्नरूपत्वस्य वस्तुगत्या सद्भावात् । तेन च—तेजोबन्नानि**

**सेयं देवतैक्षत, 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्म-**

---

इत्यर्थः । **उद्भित् स्वेदः**; तज्जत्वात्, **व्यासार्यो**क्तरीत्या पृथिव्यूष्म-जत्वायोनिजत्वपापोत्तरत्वसाम्याच्च द्रष्टव्यम् ।] इदञ्च सूत्रमन्यत्र व्याख्यातम् । **अण्डजादिशब्दनिर्दिष्टानामेषां भूतानां तेजोबन्नानि त्रीण्येव बीजानीत्यर्थः** । [तदेवं परस्मात् ब्रह्मणोऽनन्यत्वं जगतोऽभ्युपगन्तव्यमिति स्थितम् ।] तदेवोपपादयति—

**सेयं देवतैक्षत...व्याकरवाणीति** । अत्र संज्ञामूर्तिक्लृप्त्यधि

---

**रक्तानि; अथ तद्रूपैकैकबीजजानि भूतानि उच्यन्त इति पूर्वखण्डेन संगतिरस्य प्रदर्शिता भवति। न चात्र बीजानि भूतानां= तेजोबन्नानां भवन्ति—तत्परिणामभूतानीति, यद्वा तत्परिणामभूतबीजानि त्रीण्येव भवन्तीत्यर्थवर्णनं संगतमिति वाच्यम्; भूतशब्दस्य महाभूतापेक्षया अचिद्रूपव्यष्टिचेतन एव श्रुतिप्रसिद्ध्यतिशयात्, 'यतो वा इमानि भूतानि', 'असकृदावर्तीनि भूतानि' इत्येवम् । 'भूतानां प्राणिनः श्रेष्ठाः' इत्यादिश्च स्मृतिः । अत एवोपरितनवाक्ये, 'इमानि त्रीणि भूतानि' इत्यनुक्त्वा, 'इमास्तिस्रो देवता' इत्युक्तम्। अत एव श्रीभाष्येऽप्यत्र, "उद्भिज्जस्वेदजयोर्भूतयोः" इति भूतपदप्रयोगः। तेषामिति पृथक्कृत्य बीजानीत्यत्र संगम्यताम्, तेजोबन्नात्मकबीजलाभादिति चेत्—अस्तु। वस्तुतः तेषां भूतानामित्येव स्वरसोऽन्वयः। भूतानामचिदंशो तेजोबन्नरूपत्वात् तथोक्तिः। कार्यकारणैक्याच्च कार्याणां भूतानां तेजोबन्नरूपत्वोक्तौ बीजानां तेजोबन्नात्मकत्वसिद्धिः । तदेवोपपाद्यते उपरि सेयं देवतेत्यादिना ।**

**आण्डपदस्य अण्डान्तर्गतकारणद्रव्येत्यर्थवर्णनसंभवेऽपि स्वार्थे अणाश्रयणं अण्डरूपार्थे आण्डशब्द श्रौतप्रसिद्धिमवलम्ब्य । त्रीण्येवेत्येवकारः यथा प्रकृतिद्रव्याणि त्रीणि, तथा बीजान्यपि त्रीणीति**

**णाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥ तासां त्रिवृतमेकैकां करवाणि' इति ।**

---

करणे भगवता भाष्यकृता, "सेयं देवतेत्यादिवाक्यस्यायमर्थः—, सेयं सच्छब्दिता पर(परा?)देवता इमाः तेजोबन्नरूपाः तिस्रो देवताः अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि—" इति भाषितम् । 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति सूत्रे, "हन्ताहमिमास्तिस्रो देवताः इति तेजोबन्नानि देवताशब्देन विशेष्यन्त" इति भाषितत्वादत्र देवता इत्यभिमानिदेवतापरत्वं वक्त(मवगन्त)व्यम् । ततश्च इमास्तिस्रो देवता इत्यस्यायमर्थः— स्वस्वाभिमानिदेवताधिष्ठितानि तेजोबन्नानीति । तेजोबन्नाभिमानिदेवतानां परमात्मव्यतिरिक्तत्वे प्रमाणाभावात् परमात्मनश्च सर्वाभिमानिदेवतात्वसंभवाच्च परमात्मरूपदेवताधिष्ठिता इत्यर्थः । परमात्मव्यतिरिक्तदेवताभ्युपगमेऽपि देवताशब्दस्य तदधिष्ठितत्वमेवार्थः । न च, 'तत्तेजोसृजत, तत्तेज ऐक्षत' इत्यादौ तेज आदिशब्दानां परमात्मपरत्वात् तेजोबन्नावस्थापन्नपरमात्मनां तत्तदुपहितत्वा[द्य]वस्थाधीनबहुत्वाश्रयाणामेव, 'इमास्तिस्रो देवताः' इति देवताशब्देन परामर्शोऽस्तु ; न तु देवताशब्दस्य तदधिष्ठितपरामर्शित्वमिति

---

ज्ञापनार्थोऽपि । अत्र संदर्भे सदित्यादिविशेषणत्रिकप्रभृति अनेकत्रिकोक्तिः द्रष्टव्या ।

प्रमाणाभावादिति । परमात्मव्यतिरिक्तदेवताकर्तृकाभिमानस्य व्यष्टिरूपतत्सृष्ट्यनन्तरभावितया पूर्वं नादृशदेवताविरहादिति भावः ।

वाच्यम् । तत्तदवस्थारमात्मसु जीवस्य प्रवेशासंभवेन प्रवेशयोग्यतेजोऽन्नानामेव अभेदोपचारेण लक्षणया वा देवताशब्देन निर्देष्टव्यत्वात् । महासिद्धान्ते, "तदैक्षतेति सर्वज्ञत्वम्, 'असृजत' इति निमित्तत्वम्, 'बहु स्याम्' इत्युपादानत्वम्, तदुभयानुगुणं सर्वशक्तित्वं सत्यसङ्कल्पत्वञ्च, 'अनेन जीवेनात्मनाऽनुप्रविश्य' इति सर्वान्तरत्वञ्चोक्तं भवति। जीवेनात्मनेति जीवशरीरकेण मयेत्यर्थः । 'सिंहेन भूत्वा बहवो मयात्ताः, व्याघ्रेण भूत्वा बहवो मयात्ताः' इतिवत् । सार्वज्ञ्यादिगुणकस्य तद्विपरीताकारजीवैक्यासंभवात्, 'यस्यात्मा शरीरम्' इत्यादिवचनात्, 'तदनुप्रविश्य' इत्यचेतन इव जीवेऽप्यनुप्रवेशश्रवणाच्च, शरीरवाचिशब्दस्य शरीरिपर्यन्तत्वमुख्यताया उपपन्नत्वाच्च अयमेवार्थः" इति व्यासार्यैरुक्तम् ।

ननु जीवशरीरकेण मया प्रविश्य व्याकरवाणीत्यर्थो न संभवति। व्याकरवाणीति तिङा कर्तुरभिहितत्वेन अनभिहिताधिकारविहिततृतीयानुपपत्तेः । न च व्याकरणक्रियाकर्तुस्तिङाऽभिहितत्वेपि प्रवेशक्रियाकर्तुरनभिहितत्वात् तृतीया भविष्यतीति वाच्यम् । तर्हि, 'मया

---

मयात्ता इतिवदिति । यथा सिंहपदेन सिंहशरीरमात्राविवक्षया मयेत्यत्र सिंहभावान्वयाय सिंहशरीरकात्मपर्यन्तग्रहणम्, तथा जीवपदेन जीवविशिष्टात्मग्रहणमिति भावः । न तु तृतीयोपपत्त्यर्थमयं दृष्टान्तः ; कर्मणिप्रयोगगततृतीयायाः कर्तरिप्रयोगे तत्साधकत्वायोगात्। अत्ता इति न पदच्छेदः। जग्धा इति हि अदधातौ रूपम्। अतः आत्ता इतिच्छेदः । आदानं अदनार्थमिति तत् अर्थसिद्धम् ।

कर्तुरनभिहितत्वादिति । क्त्वाप्रत्ययस्य भावमात्रार्थकत्वात् ।

' इत्यपि प्रयोगः साधुः स्यात्। व्रजिक्रियाकर्तुरभिधानेऽपि
(नभिहितत्वात्। 'स्वादुमि णमुल्' इति सूत्रे कैयटेन,
। भावार्थत्वात्, 'पक्त्वौदनं भुङ्क्ते देवदत्तः, पक्त्वौदनो
न' इत्यत्र च क्त्वाप्रत्ययेन पचिक्रियाकर्तृकर्मणोरनभिधानात्
कुतो न प्राप्नुतः' इत्याशङ्क्य, 'आख्यातपदवाच्या
त्वात् प्रधानम्। इतरा तु विशेषणत्वादप्रधानम्। तत्क्रिया-
?)रपि शक्त्योस्तद्द्वारको गुणप्रधानभावः। तत्र प्रधान-
गुणक्रियाशक्तिरभिहितवत् प्रकाशते, प्रधानानुरोधात्
पृथक् तद्विरुद्धस्वकार्यारम्भायोगाच्च' इत्युक्तत्वादिति चेत्-
म्। मयेत्यस्य स्वरूपेणेत्यर्थः। आत्मशब्दः स्वरूपपरः।
रीरकं स्वरूपं व्याकरणकर्तुर्न भिद्यते, तथाऽपि 'व्यपदेश-

---

न्योः' इत्यस्य वस्तुस्थितिकथनरूपत्वात्; संबन्धपर-
त्वः।
मित्यर्धाङ्गीकारे। अयं भावः—क्त्वाप्रत्ययेन कर्तुरनभिधाने,
व्रजामि,' 'गोपालेन मया गोकुले विहृत्य कृष्णोऽहं
रकामधितिष्ठामि' इत्यादिप्रयोगापत्तिः। प्रधानक्रियया-
रकं गुणक्रियायामभिहितवद् भवतीति कैयटपक्षे, 'ओदनं
त्वं पच्यते,' 'श्रुत्वाऽप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिना'
नापत्तिः। कर्मणोऽभिहितवद्भावेन ओदनमिति, अर्थमिति
या अयोगात्। अतो यत्कारकवाचिपदं यत्क्रियान्वयि-
क्षनम्, तत्क्रियाकारकस्य तत्रानभिधाने अनभिहितकारक-
प्रत्येवेति ओदनमिति अर्थमिति च द्वितीयोपपत्तिः।
स्य कर्त्रर्थकत्वे, 'मया पक्त्वा मया भुज्यत' इत्यत्र, 'अहं

यदेकस्मिन् बुद्धया नानात्वकल्पना' इति न्यायेन कल्पितभेदमादाय अनभिहिताधिकारविहिततृतीयोपपत्तेः । घटः स्वेन रूपेणेतरव्यावृत्तिं करोतीत्यादिप्रयोगदर्शनात्, करोतीति तिङा कर्तुरभिहितत्वात् ।

ननु तत्र करणार्थे तृतीया, करणञ्च न तिङाऽभिहितमिति चेत्, तर्हि प्रकृतेऽपि तथाऽस्तु ।

"तेनेशस्तद्विशिष्टस्वकरणकतयाऽनुप्रवेशेऽपि कर्ता"

इत्यधिकरणसारावल्युक्तश्चायमर्थः ।

---

पक्त्वा मया भुज्यत' इति स्यात् । तदर्थकत्वाभावे, मया भुक्त्वा व्रजामीति प्रयोगापत्तिस्तु—'कर्तरि प्रयोगे परं क्त्वाप्रत्ययस्य कर्तरि निरूढलक्षणा' इति वा, 'प्रधानक्रियाभिहितकर्तृशक्तिः परं गुणक्रियायामभिहितवद्भवति' इति वा स्वीकृत्य वारणीया । व्यक्तमिदं खण्डदेवग्रन्थेषु ।

एवं क्त्वाप्रत्ययेन कर्तुः कर्तरिप्रयोगे अभिहितत्वादेव, 'तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैकाऽभवत्' इति उपसर्जनक्रियान्वयि देवतापदं प्रथमान्तम् । न हीदं देवतापदं प्रधानक्रियान्वयि ; बहुवचनान्तस्य एकवचनान्तक्रियान्वयायोगात् । अत एव च श्रीमति रामायणे, "सफेना सस्वना भूत्वा सागरस्य समुत्थिताम्। प्रशान्तमारुतोध्दूतां जलोर्मिमिव निःस्वनाम् ॥" (२-११४) इति द्वितीयान्तजलोर्मिविशेषणमपि सफेनादिकम्, भूत्वेत्यत्रान्वयानुसारात् तत्र कर्तुरभिहितत्वात् प्रथमान्तमेव प्रयुक्तम् । एवञ्च, 'मया भुक्त्वा अहं व्रजामि' इत्याद्यप्रयोग उपपन्न इति ।

एवं सति 'अनेन जीवेनात्मना' इति कथं तृतीया? कथञ्च, आत्मना मया' इति तदर्थभाषणमित्यत्राह मयेत्यस्येति। 'नायमात्मशब्दो जीवात्मपरः" इति प्रतिबोधनाय मयेत्युक्तम्। स्वेनेत्येव तु तदर्थ इति भावः।

ननु मयेतिवत् स्वेनेत्यप्ययुक्तमेव, उभयोरपि कर्तृपरत्वादिति शङ्कते यद्यपीति । अस्ति मयेत्यस्मात् स्वेनेत्यस्य विशेष इति प्रयोगदर्शनादर्शनाभ्यां स्वीकार्यम् । स्वशब्दात्मशब्दौ हि तृतीयान्तौ प्रयुज्येते, 'आत्मानं आत्मना वेत्सि', 'चैत्रः स्वयं पचति' इति—इत्यभिप्रेत्य परिहरति तथापीति । सत्यमस्ति प्रयोगः । कथं तदुपपत्तिरित्यत्राह व्यपदेशिवदिति । यादृशाकारविशिष्टस्य कर्तृत्वं तृतीयान्तेन विवक्षितम् । तादृशाकारविशिष्टस्य तत् क्त्वाप्रत्ययादिना नाभिहितमिति तृतीयोपपत्तिरिति भावः । नन्वेवं भेदविवक्षया स्वशब्दात्मशब्दव्यतिरिक्तास्मदादिशब्दस्यापि तृतीयान्तस्य प्रयोगापत्तिः। तथाच, 'गोपालेन मया विहृत्याहं द्वारकामधितिष्ठामि' इत्यादि स्यादिति चेत्, तर्हि अत्र भवदभिमतो निर्वाहः कः । करणे तृतीयेति स्यादिति चेत्—तर्हि तथैव करणत्वविवक्षया गोपालेनेति किं न स्यात ? अप्रयोगात् तत्र तदविवक्षेति चेत्—कर्तरितृतीयास्वीकारेऽपि समः समाधिरिति । कर्तरिप्रयोगे समानकर्तृकत्वस्य क्त्वाप्रत्ययेनाभिधानमित्येतत् स्वशब्दात्मशब्दप्रयोगे परं नेति नियमसंकोचेनापि कर्तरितृतीयोपपत्तिर्भवितुमर्हतीति च भावः ।

नन्वित्यादेरयं भावः—नियमसंकोचो नावश्यकः ; 'आत्मानम् आत्मना वेत्सि' इत्यादौ क्त्वाप्रत्ययरहितस्थलेऽपि कर्तुरभिधानेऽपि तृतीयादर्शनात् श्रूयते । अतस्तत्रैव करणत्वं तृतीयार्थः । न चेदृशविशिष्टगतकर्तृत्वस्यानभिहितत्वात् आत्मनेति तृतीयेति वाच्यम्—चैत्रत्वविशिष्टगतकर्तृत्वं क्रियापदेनानभिहितमिति चैत्रः पचतीत्यत्र चैत्रेण पचतीत्यापत्तेः । क्रियायां चैत्रान्वये विशिष्टस्य कर्तृत्वमभिहितमेवेति चेत्, गोपालोऽहं विहृत्येत्यादिरीत्या सर्वत्र प्रथमान्तप्रयोगेऽपि विशिष्टस्य कर्तृत्वमभिधीयेतैव । अतः आत्मनेति न कर्तरि तृतीया । किञ्च, 'आत्मना', 'स्वयम्' इत्येतत्स्थाने, 'आत्मानमात्मा वेत्सि', 'चैत्रः स्वमेव पठति' इति प्रथमान्तप्रयोगस्याप्यापत्तिः, कर्तुरभिहितत्वात् । ननु चैत्रादिपदोक्तस्यैव पुनः स्वादिपदेन

यद्वा आरम्भणाधिकरणे, "अनेन जीवेनाऽऽत्मना=मदात्मक-जीवेनात्मतयाऽनुप्रविश्य एतत् विचित्रनामरूपभाक् करवाणि" इति भाषितत्वेन जीवशब्दस्य परमात्मपर्यन्तत्वाभावस्यापि प्रदर्शितत्वात् (निश्चितत्वात्) तदनुसारेण जीवेनेत्यस्य जीव एवार्थः। आत्मशब्दस्य शरीरमर्थः। शरीरभूतेनानेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणीत्यर्थः। आत्मशब्दस्य शरीरवाचित्वमभिप्रेत्यैव मदात्मकजीवेनेति भाषितम्। 'आत्मतयाऽनुप्रविश्य' इति भाष्यस्यायमर्थः— आत्म-

---

वचने पुनरुक्तदोष इति चेत्—कुण्डली चैत्रः पठतीतिवत् चैत्रगताकारान्तरपरतया स्वादिपदं प्रयुज्यताम्। स्वादिपदस्याकारान्तरपरत्वं न स्वरसमिति चेत्—व्यपदेशिवद्भावेन भेदकल्पने परं स्वादिपदं किं स्वरसम्? तस्मात् स्वशब्दात्मशब्दौ क्रियापदानभिहितकरणकारक-विवक्षया तृतीयान्तौ प्रयुज्येते इति नियमः स्वीकर्तुमुचित इति। न्यायपरिशुद्धिरपि द्रष्टव्या।

यद्यपि स्वेन रूपेण व्यावृत्तिं करोति, जीवेनाऽऽत्मनाऽनुप्रविश्ये-त्यादौ वैशिष्ट्येऽपि तृतीया स्यात्, जीवविशिष्टस्वरूपशाली अनुप्रविश्येत्येवम्। अथापि कारकविभक्तौ संभवन्त्यां उपपदविभक्ति-रयुक्तेति तत्त्यागः। अत एव जीवेनात्मनेति न सहयोगे तृतीया। यद्यपि जीवस्यानुप्रवेशे कर्तृतया साहित्यमस्ति; भूतेष्विव जीवेऽपि परमात्मानुप्रवेशात् कर्मतया साहित्यमपि—अथापि तत् सर्वं न वाच्यार्थः; 'स्वेन व्यावृत्तिम्,' 'आत्मना वेत्सि' इत्यत्रेव कारक-विभक्तेरेव संभवात्।

एवं तावत् आत्मना पचति, स्वयं पचतीत्यादिरीत्या स्वशब्द-पर्यायाऽऽत्मशब्दग्रहणेन स्वरससमाधानं वक्तव्यमुक्तम्। अथाऽऽत्म-शब्दस्य परमात्मपरत्वं विहाय तच्छरीरभूतजीवात्मपरत्वेनापि वाक्यार्थसामञ्जस्यं कल्पद्वयेन दर्शयति यद्वेत्यादिना।

तयेति हेतौ तृतीया। हेतुत्वञ्च प्रयोजनत्वेन विवक्षितम्। [स्वस्य] आत्मत्वार्थमनुप्रविश्येत्यर्थः। प्रविश्य नियन्तृत्वाभावे आत्मत्वा-सम्भवात्(च), 'चारेणानुप्रविश्य परबलं सङ्कलयानि' इतिवदिति। यद्वा, 'जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' इत्यत्रेव 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यत्रापि जीवात्मनेत्येवार्थः। अस्मिन् पक्षे अनेनेति शब्दस्य प्रमाणप्रतिपन्नपुरोवर्तिवाचिनो मच्छरीरभूतेने-त्यर्थः। अनयोः पक्षयोः, 'चारेणानुप्रविश्य परसैन्यं संकलयानि', 'देवदत्तेन पक्त्वा चैत्रेण भुज्यते' इत्यत्रेव [च] विशिक्रियाप्रयोजककर्त्रा परमात्मना व्याप्रियमाणस्य जीवात्मनः करणतया तृतीयासंभवात् तृतीयाया नानुपपत्तिः। इयांस्तु विशेषः——नामरूपव्याकरणस्य, 'तासां त्रिवृतमेकैकां करवाणि' इति वक्ष्यमाणेन समानकर्तृकत्वावगमात् नामरूपव्याकरणांशे साक्षात्कर्तृत्वमस्ति। प्रवेशे तु सर्वव्यापकस्य परमात्मनः साक्षात्कर्तृत्वा-संभवात् प्रयोजककर्तृत्वम्। एवञ्चानुप्रवेशनामरूपव्याकरणयोः समानकर्तृ-

---

किमर्थमेवं पक्षवर्णनमित्यत्राह अनयोरिति। कर्तृभवस्यैव करणत्वस्थितिः, अनुप्रवेशस्य परमात्मन्युपपादनक्लेशविरहश्चात्र पक्ष-द्वये इति भावः। आत्मशब्दस्य परमात्मपरत्वे, 'अनेन जीवेनाऽऽत्मना' इति पदत्रयमेवमुपपन्नं मन्तव्यम्-अनेनेति पराकया निर्देशः स्वापेक्षया जीवे भेदस्य सूच्यत्वानुगुणकर्मवैचित्र्यस्य च प्रदर्शनाय; जीवपदेन ईदृशविचित्रजीवविशिष्टपरमात्मपर्यन्तग्रहणमिति प्रतिबोधनाय आत्मनेति पदम्। जीवात्ममात्रपरत्वे च आत्मनेति पदं व्यर्थमेव स्यात्। 'सर्वं खल्विदं ब्रह्म' इत्यादाविव अनेनेति इदन्त्वं विशेषणगतम्। एवं जीवस्य परस्य चानुप्रवेशकथनं व्याक्रियमाणनामरूपसंबन्धस्य अचिच्चित्परमात्मसु त्रिष्वपि बोधनाय। एवं तिस्रो देवता इति निर्देशः समष्टावपि परमात्मनि अनुप्रवेश-तच्छब्दवाच्यत्वयोः ज्ञापनायेति।

**सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत ॥ ३ ॥ तासां त्रिवृतं त्रिवृतमेकैकामकरोत ।**

---

कत्वसम्भवात् ज्ञ्याप्रत्ययस्याापि नानुपपत्तिरिति द्रष्टव्यम् ॥

एतेन अन्तःकरणविशिष्टस्याहमर्थत्वं वदन्तः परे प्रत्युक्ताः, 'बहु स्यां', 'हन्ताहमिमाः' इति सङ्कल्पसमये तस्याभावादित्यास्तां तावत् ॥

**तासां त्रिवृतं...करवाणी ते ।** अत्र संज्ञामूर्तिक्लृप्त्यधिकरणे **भगवता भाष्यकृता,** "तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोऽबन्नानां विशेषसृष्ट्यसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृतं त्रिवृतं करवाणि" इति इत्येतद्वाक्यार्थ उक्तः । अत्र **तदर्थ**मित्यस्य देवादिविचित्ररूपाणां तन्नामधेयानाञ्च करणार्थमित्यर्थः। पूर्वम्, "देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि" इत्युक्तिरिति द्रष्टव्यम् । अत्र **इति**शब्दस्य, 'सेयं देवतैक्षत' इति पूर्वेण सम्बन्धः ।

एवमीक्षित्वा परा देवता यथासङ्कल्पमकरोदित्याह **सेयं... अकरोत** । अत्र त्रिवृत्करणाधीनत्वात् नामरूपव्याकरणस्य, अर्थक्रमानु-

---

**पूर्वमेकैकसंकल्पतत्कार्यसृष्ट्युभयानन्तरमन्यान्यसंकल्पतत्कार्योभयकथनवत् इहापि प्रथमं त्रिवृत्करणसंकल्पं तत्कार्यञ्चोक्त्वा नामरूपसंकल्पादौ वक्तव्ये संकल्पद्वयमिश्रणं किमर्थमिति चेत्—अवान्तरसृष्टिव्यतिरेकेण तेजआदिसृष्टेः फलान्तरं समस्ति । त्रिवृत्करणस्य तु व्यष्टिनामरूपकरणैकार्थत्वमिति व्यञ्जनायैवमिति ।**

**ननु फलेच्छापूर्वकत्वादुपायेच्छायाः, संकल्पवाक्यक्रम उपपन्नः । नामरूपे व्याकरोत्, त्रिवृतमकरोदिति कार्यक्रमस्तु न घटते त्रिवृत्करणस्य प्राग्भावित्वे इत्यत्राह अत्रेति । प्रथमोक्तसंकल्पजन्यं कार्यं प्रथममुक्तम्, द्वितीयोक्तसंकल्पकार्यं तदनन्तरमुक्तम्; औचि-**

**यथा तु(नु) खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति, तन्मे विजानीहीति ॥ ४ ॥ इति षष्ठाध्याये तृतीयः खण्डः ॥**

---

रोधेन पाठक्रमो बाध्यते । तत्र तेजोबन्नदेवतासु एकैकां त्रिवृतं त्रिवृतं कृत्वा नामरूपव्याकरणमकरोदित्यर्थः। अत्र व्यापकस्य परमात्मनः स्वरूपेण [अ]पृथक्सिद्धसर्ववस्तुप्रवेशस्य सर्वदा सत्त्वेऽपि स्वशरीरभूतजीवेनानुप्रवेशस्य पूर्वमभावात्, 'जीवेनानुप्रविश्य नामरूपे व्याकरोत्' इत्यस्य नानुपपत्तिः; चारस्य राजशरीरत्वाभावाच्च चारेणानुप्रविश्येति वाक्यसाम्यञ्चेति द्रष्टव्यम् ।

**यथा तु....विजानीहीति** । देवताधिष्ठितानां तेजोबन्नानां त्रिवृत्[करण]प्रकारं मे निगदतः शृण्वित्यर्थः ।

**व्यासार्यैरानन्दमयाधिकरणे, 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वमवगम्यते । 'तत् सृष्ट्वा**

---

त्यात्, तत्र तत्र तत्तत्कार्यत्वज्ञप्तये । तदिदमवतरणे दर्शितम्, यथासंकल्पमकरोदिति । एवमुक्तिक्रमेऽपि, कार्यस्योत्पत्तिक्रमोऽपि स एवेति न मन्तव्यम् । तस्य क्रमस्यात्र वाचकपदाभावात् । पाठक्रमो बाध्यत इति । पाठगतक्रमकल्प्यः अर्थे क्रमो न सिध्यति । पाठगतक्रमस्यार्थे क्रमकल्पकत्वमिह नेत्यर्थः ।

अनुप्रवेशकर्तृत्वमत्यन्तमुख्यरीत्या परमात्मनि दुर्वचम्; किन्तु अणौ जीव एवेत्याह व्यापकस्येत्यादिना । [इति द्रष्टव्यमिति। सर्वमिदं जीवेनाऽऽत्मनेति जीवमात्रपरमिति स्वकृतनिर्वाहानुसारेणोक्तमिव ।]

यथातुखल्वित्यति वाक्यव्याख्यानात् पूर्वमेव वक्तव्यमिममनुप्रवेशस्वरूपशोधनादिरूपमंशं पूर्णं खण्डं व्याख्यायान्ते वक्तुं साम्प्रतमिति मत्वा पश्चादाह व्यासार्यैरित्यादिना ।

तदेवानुप्राविशत्' इत्यत्रानुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते। तस्मात् समानकर्तृकत्वमेव विवक्षितम्; न पौर्वापर्यमपि। अत एव हि, 'तस्य त्वष्टा विदधद्रूपमेति' इति सृष्ट्यनुप्रवेशयोः समानकालिकत्वमेव प्रतीयते। अथवा, 'तत् सृष्ट्वा तदेवानुप्राविशत्' इति सृष्ट्यनन्तरत्वेन श्रूयमाणानुप्रवेशः स्थित्यर्थोऽन्य एव" इत्युक्तम्। व्यापकस्यापि परमात्मनोऽन्तर्यामिविग्रहद्वाराऽनुप्रवेश उपपद्यत इति केचित्; जीवद्वारैवानुप्रवेशः; न स्वत इति केचित्। प्रतिवस्तु तत्तद्वस्तुमात्रपूर्णपरमात्मकार्यकारित्वात् तत्र प्रविष्ट इवेत्युक्तिरिति केचित्॥ ६-३.

---

प्रविष्ट इवेति। कात्स्न्येन प्रविष्टे वस्तुनि पूर्णत्वव्यवहारवत् परमात्मन्यपि प्रतिवस्तुपूर्णत्वव्यवहारात् तथाभिप्रायेण प्रवेशवाचोयुक्तिरिति भाव्यम्।

नन्वेकोऽप्यनुप्रवेशः परमात्मनि दुर्वच इति स्थिते व्यासार्यैः कथं सृष्ट्यनन्तरोऽनुप्रवेशः स्थित्यर्थत्वादन्य इति नानानुप्रवेशकथनमिति चेत्—अत्रेदं वक्तव्यम्—सर्वव्यष्टिसृष्टिनिरूपणं तावदत्र क्रियते। तत्रानुप्रवेशो विग्रहद्वारकश्चेत्, स्थावरेषु घटादिषु तत्सत्त्वे न प्रमाणम्। जीवद्वारैव सर्वत्रानुप्रवेशः, न परमात्मनः साक्षादिति पक्षे, 'तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्' इति पृथक् जीवेऽनुप्रवेशवर्णनं कथम्? वस्तुतः सर्वत्र प्रागेव विद्यमानत्वात् प्रवेशो दुर्वच एव। तथाच श्रीभागवतम्, 'तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे' इति। 'अन्वयं पुरुषविधः' इतिवत् प्रवेशानुकारमात्रमनुप्रवेशः; अनुकल्पभूतः प्रवेशो वाऽस्तु। वस्तुतो जीवानुप्रवेशोऽपि चिन्त्य एव। शरीरप्रकृतिभूतबीजादिद्रव्येषु प्रागेव संश्लिष्टस्य जीवस्य कोऽयं शरीरे प्रवेशो नामेति। तद्द्रव्यसंबन्धेऽपि शरीराकारपरिणामस्य प्राक् अभावात् प्राक् तादृशपरिणामविशिष्टासंबन्धिनः पश्चात्संबन्ध एव

प्रवेश इति चेत्—एष परमात्मन्यपि सुवचः। अतो व्यष्टिसृष्टिगत-सर्वांशविवेचने एवं वाक्यार्थो निष्पद्यते—नामरूपव्याकरणं हि समष्टावप्यस्त्येव। (यथा. 'स भूरिति व्याहरत् भुवमसृजत' इत्येवम्।) तदत्र जीवेनाऽऽत्मनाऽनुप्रविश्येत्यंशोऽधिकः। व्यष्टिसृष्टौ च परमात्मा यदा देवादिशरीरसंस्थानं करोति, तदैव जीवं धर्मभूत-ज्ञानद्वारा तन्नियमनौपयिकव्याप्तिमन्तं करोति; स्वयञ्च तदवस्था-वच्छिन्नद्रव्यनियमनौपयिक-तदनुरूप-धर्मभूतज्ञानगतविलक्षणपरि-णामवान् भवति। एवम्भूतपरिणामविशिष्टधर्मभूतज्ञानविशिष्टस्य जीवस्य स्वस्य च प्रागसंबन्धः रूपसंपत्तिकाले च संबन्धः स्थित इति स एव प्रवेशः। उक्तश्चैष एव प्रवेशो बृहदारण्यके (३-४-७) 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' इति। तथाच समष्टौ रूपव्याकरणं तद्रूपावच्छिन्नद्रव्ये स्वयं तन्नियमनौपयिकधर्मभूतज्ञानव्याप्तिरूप-प्रवेशञ्च कुर्वन् परमात्मा, व्यष्टौ देवत्वादिसंस्थानात्मकरूप-व्याकरणकाले जीवविशिष्टस्वप्रवेशं जीवस्य स्वस्य चोभयोः तदवस्थ-द्रव्यनियमनौपयिकविलक्षणविकारधर्मभूतज्ञानव्याप्तिरूपं करोतीति विवेचनार्थम्, 'जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्युच्यते। अत्र प्रवेशो नामरूपव्याकरणञ्च युगपदित्युक्तमेव श्रुत-प्रकाशिकायाम्। रूपशब्दश्च अचेतनगतसंस्थाने प्रसिद्धः। तदत्र प्रवेशशब्दः जीवस्य परमात्मनश्च धर्मभूतज्ञानद्वारकसंबन्धविशेष-प्रतिपादनार्थ इति। एतावता शरीरनियन्तृत्वं जीव इव परमात्म-न्यपि साक्षात् स्थितमुक्तम्। देवादिशब्दानामचिद्विशिष्टजीव-विशिष्टपरमात्मपरत्वञ्च जीवेनात्मनेति जीवविशिष्टवाचिजीवपदेन गमितम्; ततो जीवे परमात्मनोऽनुप्रवेशस्य श्रुत्यन्तरसिद्धस्य ज्ञाप-नात्। अत एव जीवपदस्य विशिष्टवाचित्वमावश्यकम्। तदिदं सर्वम् आनन्दमयाधिकरणश्रीभाष्येऽभिप्रेतम्। तत्रैव निगमितञ्च, 'एवञ्च सर्वं चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं सचेतनं जगत् तस्य शरीरं भवति' इति। अस्तु वा शरीरे जीवविशिष्टस्यानुप्रवेशो नाम

## षष्ठे चतुर्थः खण्डः

यदग्ने रोहितꣳ रूपम्, तेजसस्तद्रूपम्। यच्छुक्लम्, तदपाम्।

---

यदग्ने रोहितं रूपं तेजसस्तद्रूपम्। अग्नेर्यत् रोहितं रूपं

---

शरीरे जीवानुप्रवेशः, तथाप्रविष्टे च जीवे परमात्मप्रवेश इति।

अत्रेदं सूक्ष्ममीक्षणीयम्—व्याकरणं नामरूपनिष्पत्त्यनुकूलव्यापारः। तदुत्तरक्षणे तन्निष्पत्तिः। उक्तविधानुप्रवेशश्च निष्पत्तिसमकालः। अत एव, 'सृष्ट्वाऽनुप्राविशत्' इति उपपन्नम्। सृष्टिर्हि उत्पत्त्यनुकूलव्यापारः। अतः, 'सृष्ट्वाऽनुप्राविशत्' इत्यस्य उत्पत्त्यनन्तरमनुप्राविशदिति नार्थः। अत्र तु, 'अनुप्रविश्य नामरूपे व्याकरवाणि' इति सृष्टेः प्रागनुप्रवेश उक्तः। अयञ्चोत्पत्स्यमानशरीरप्रकृतिद्रव्यसंबन्धः। तत्र जीवानुप्रवेशो नाम सकरणभूतसूक्ष्मविशिष्टजीवसंश्लेषः। स्वानुप्रवेशो नाम सृष्ट्युपधायकशक्तिविशिष्टस्वसंबन्धः। अयमेव सृष्ट्यर्थानुप्रवेशः। सृष्ट्यनन्तरानुप्रवेशश्च स्थित्यर्थः। एवं प्रवृत्त्यादिकार्यार्थानुप्रवेशोऽपि कश्चिदस्ति, 'गामाविश्य च भूतानि धारयाम्यहमोजसा', 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते' इत्यादिभिरुक्तः। स च कार्योपधायकशक्तिविशिष्टपरमात्मसंबन्धः, शक्तिविग्रहविशेषविशिष्टपरमात्मसंबन्ध इत्येवमनेकरूप इति यथाप्रमाणं भाव्यम्। तदत्र यथा तेजश्शरीरकः परमात्मा अपः संकल्पयति, आपश्चानन्तरं भवन्ति, तथा व्यष्टिशरीरप्रकृतिद्रव्यानुप्रविष्टो नामरूपे व्याकरोति, व्यष्टिश्चानन्तरमुत्पद्यते। एवं प्रकृतिद्रव्य एवानुप्रवेशकथनं शरीरे प्रथमक्षणप्रभृति जीवविशिष्टस्वसंबन्धज्ञापनेन स्वपर्यन्तनामरूपभाक्त्वव्यञ्जनार्थमिति। एतावद्विवेचनमभिप्रेत्य च श्रुतप्रकाशिकायाम्, 'सृष्ट्वाऽनुप्राविशदिति स्थित्यर्थानुप्रवेशो वा' इति पक्षः प्रादर्शीति।

एवञ्च तेषां भूतानामिति पूर्ववाक्ये भूतशब्दवाच्येषु अचिद्विशिष्टचिद्वस्तुषु तच्छब्दोक्ततेजोबन्नाभेद उक्त इहोपपादितो भवति, तेष्वनुप्रविश्योत्पादनात् तानि तेजोऽबन्नानि इमानि भूतानीति।

यत् कृष्णम्, तदन्नस्य । अपागादग्नेरग्नित्वम् । वाचारम्भणं विकारो नामधेयम्; त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥

यदादित्यस्य रोहितꣳ रूपम्, तेजसस्तद्रूपम् । यच्छुक्लम्, तदपाम् । यत् कृष्णम्, तदन्नस्य । अपागादादित्यादादित्यत्वम् । वाचारम्भणं विकारो नामधेयम्; त्रीणि रूपाणीत्येव सत्यम् ॥ २ ॥

यच्चन्द्रमसो रोहितꣳ रूपम्, तेजसस्तद्रूपम् । यच्छुक्लम्, तदपाम् । यत् कृष्णम, तदन्नस्य । अपागाच्चन्द्राच्चन्द्रत्वम् । वाचारम्भणं विकारो नामधेयम; त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥

---

स्वरूपम्=रोहितो भागो दृश्यते, तत् आत्तवृत्कृतस्य तेजसः स्वरूपम् । यच्छुक्ल....तदन्नस्य । अपाम्, अन्नस्येयत्र रूपमित्यनुवर्तते । स्पष्टोऽर्थः । अग्नेस्तेजोबन्नसमुदायरूपत्वे यावत्तेजोबन्नावस्थानामग्निरूपेणोपलम्भः प्राप्नोतीत्यत्राह——अपागादग्नेरग्नित्वम् । तेष्वेव तेजोबन्नेषु अग्न्याद्यवस्थानाशकसामग्रीसन्निधाने अग्नित्वावस्था [अग्नेः] अपेता भवति, अवस्थान्तरं प्रादुर्भवति । वाचा...सत्यम् । अतः तेजोबन्नैरेवाग्नित्वाद्यवस्थालक्षणो विकारोऽग्न्यादिनामधेयञ्च वाक्पूर्वकव्यवहारसिद्धये तेजोबन्नैरेव (?) स्पृश्यते । अतः तेजोबन्नस्वरूपाण्येवाग्निरिति सत्यमित्यर्थः ।

यदादित्यस्य ... ... .... सत्यम् । पूर्ववदर्थः ।

---

रोहितं रूपमित्यादौ रूपं स्वरूपं द्रव्यांशः । रोहितादिपदं रूपविशिष्टद्रव्यपरम् । तदाह रोहितो भाग इति । अपागादिति । अनेन प्रक्रमप्रवृत्ततार्किकानुसारिशङ्काविशेषनिरासोऽपि भाव्यः । यदि विजातीयनानाद्रव्यजन्यः स्यादग्निः, तर्हि तत्र कथमग्नित्वजातिः सांकर्यदोषादिति शङ्का, 'संस्थानातिरिक्तनित्यजातावेव न प्रमाणम् । तच्च संस्थानं नाशार्हम्' इति ज्ञापनेन परिह्रियत इति ।

यद्ग्ने रोहितꣳ रूपम्, तेजसस्तद्रूपम्। यच्छुक्लम्, तदपाम्। यत् कृष्णम्, तदन्नस्य। अपागाद्ग्नेरग्नित्वम्। वाचारम्भणं विकारो नामधेयम्; त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥

एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रियाः, 'न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यति' इति ह्येभ्यो विदाञ्चक्रुः॥

यदु रोहितमिवाभूदिति, तेजसस्तद्रूपमिति तद्विदाञ्चक्रुः। यदु शुक्लमिवाभूदिति, अपाꣳ रूपमिति तद्विदाञ्चक्रुः। यदु कृष्णमिवाभूदिति, अन्नस्य रूपमिति तद्विदाञ्चक्रुः ॥ ६ ॥ यद्वविज्ञातमिवाभूदिति, एतासामेव देवतानाꣳ समास इति तद्विदाञ्चक्रुः ॥

---

**एतद्ध स्म....महाश्रोत्रियाः।** उपादानादुपादेयं न भिद्यत इत्येतत्त्वरूपज्ञाः **महाशालाः** महागृहस्था पूर्वे सर्ववेदपारगाः वक्ष्यमाणप्रकारेणोक्तवन्त इत्यर्थः। 'लट् स्मे' इति स्मयोगात् भूतार्थेऽपि **आहुरिति** लडुपपत्तिः। [न चात्र वर्तमानार्थत्वं युक्तम्; अग्रे, **विदाञ्चक्रुरिति** भूतार्थकस्य लिटो दर्शनात्।] **न नो....विदाञ्चक्रुः।** [विद्वांसः] तेजोऽबन्नान्येव ज्ञातवतां (ज्ञात्वा) **नः** अस्माकं **एभ्यः** तेजोबन्नेभ्यः अतिरिक्तमश्रुतममतमविज्ञातं कोऽपि नोदाहर्तुं शक्नोतीति तेजोबन्नेभ्य एव सर्वं ज्ञातवन्त इत्यर्थः।

सर्वस्यापि तत्रान्तर्भावमेव प्रदर्शयति **यदु रोहित....विदाञ्चक्रुः।** रोहितं शुक्लं कृष्णमिति भासमानं तेजोबन्नात्मकमेवेति ज्ञातवन्त इत्यर्थः।

**यद्वविज्ञात....चक्रुः।** उः त्वर्थे। यदु=यत्तु उक्तेन रूपेणाज्ञायमानमभूत्, तदपि पीतमाञ्जिष्ठधूम्रशोणादिरूपवत्त्वेन ज्ञायमानं रोहितशुक्लकृष्णतेजोबन्नसमुदायात्मकमेव; न तु ततोऽतिरिक्तमिति ज्ञातवन्त इत्यर्थः।

यथा तु (नु) खलु सं म्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति, तन्मे विजानाहीति ॥ ७ ॥

इति षष्ठाध्याये चतुर्थः खण्डः ।

षष्ठे पञ्चमः खण्डः

अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति ; यो मध्यमस्तन्मांऽसम् ; योऽणिष्ठस्तन्मनः ॥ १ ॥

---

एव सर्वस्यापि प्रपञ्चस्य त्रिवृत्कृततेजोबन्नरूपत्वेन तदभेदं प्रसाध्य, अध्यात्मं मांसलोहितमज्जास्थिलक्षणस्य देहस्य त्रिवृत्कृततेजोबन्नाभेदम् इन्द्रियमनःप्राणानाञ्च त्रिवृत्कृततेजोबन्नाप्यायितत्वं प्रदर्शयितुं प्रस्तौति—**यथा तु खलु....विजानीहीति** । तेजोबन्नानि पुरुषेण भुज्यमानानि पुरुषं प्राप्य यथा त्रिधात्रिधा परिणमन्ते, तं परिणामप्रकारं शृण्वित्यर्थः ॥ ६-४.

**अन्नमशितं त्रेधा विधीयते** । अशितं पुरुषेण भुक्तं जाठराग्निना पच्यमानमन्नं स्थविष्ठमध्यमाणिष्ठरूपेण त्रेधा विभक्तं भवति ।

---

ननु त्रिवृत्कृततेजःप्रभृतिषु कतमस्यास्मच्छरीरप्रकृतित्वमित्यत्र अंशाभेदेन त्रयमपि प्रकृतिरिति निरूपयितुं यथा तु खल्वित्यारम्भः । अत्र त्रिवृदिति पदं न पूर्ववत् तेजोबन्नत्रयवृता इत्यर्थपरम् ; किंतु परिणामत्रयवृतेति । विग्रहस्तु त्रिभिर्व्रियत इत्येक एवेत्यमिप्रेत्य तदर्थमाह त्रिधात्रिधापरिणमन्त इति । अत्र तिस्रो देवताः भूयस्त्वानुरोधेन तेजआद्यैकैकपदेन व्यवह्रियमाणं त्रिवृत् त्रिवृदेकैका = प्रत्येकं त्रिवृद्भूतमिदं पुरुषं शरीरं प्राप्य यथा भवति = यादृशपरिणामवत् भवति, तत् [मे = मदभिमतं] विजानीहीत्यप्यर्थः संभवति । तदा त्रिवृत्पदं पूर्वार्थकमेव ॥

आपः पीतास्त्रेधा विधीयन्ते। तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति; यो मध्यमस्तल्लोहितम्; योऽणिष्ठः स प्राणः ॥ २ ॥

तेजोऽशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तदस्थि भवति; यो मध्यमः स मज्जा; योऽणिष्ठः सा वाक् ॥ ३ ॥

अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति ॥

---

**तस्य...मनः** । स्थूलांशः पुरीषतामापद्यते । मध्यमांशस्तु मांसताम् । अणिष्ठांशस्तु मनस आप्यायकतामापद्यते । मनसः आहङ्कारिकत्वेन अन्नविकारत्वाभावादिति भावः । **आपः....प्राणः** । अपां सूक्ष्मांशः प्राणाप्यायको भवतीत्यर्थः । शिष्टं स्पष्टम् ॥ **तेजोऽशितं...वाक्** । तैलघृतादिकं तेजश्शब्देनोच्यते । **मज्जा** अस्थ्यन्तर्गतः स्नेहो धातुविशेषः । घृततैलादेः पीतस्य सूक्ष्मांशो वागाप्यायक इत्यर्थः । शिष्टं पूर्ववत् ॥ **अन्नमयं हि...वागिति** । उक्तरीत्या मनःप्राणवाचां अन्नजलतेजस्सूक्ष्मांशाप्यायितत्वात् मनः अन्नमयम्, प्राणः अम्मयः, तेजोमयी वागित्यर्थः। ननु केवलान्नभक्षाणां अम्बुभृतीनामपि वाग्मित्वप्राणवत्त्वदर्शनात्, अम्मात्रभक्षाणामपि मत्स्यादीनां मनस्वित्ववाग्मित्वदर्शनात्, घृततैलमात्रभक्षाणामपि मनस्वित्वप्राणवत्त्वदर्शनात् कथम्,

---

तेजःप्रक्रमे स्थिते अन्नमशितमिति अन्न परं अन्नस्य प्रथममुक्तिः तस्यैवाधिकमश्यमानत्वात्। स्थविष्ठमध्यमाणिष्ठपदैः असारसारतरग्रहणम्। तैलघृतेति। तैलादिर्हि उष्णपदार्थः। तथा, 'तेजो वै घृतम्' इति श्रुतिः। मज्जेति नकारान्तः पुँल्लिङ्गः। ननु प्रागेव स्थितानां मनोवाक्प्राणानामाहारजन्यत्वं कथम्। किञ्च आहङ्कारिकयोर्मनोवाचोः वायवीयस्य च प्राणस्य कथमन्नाप्तेजोंशत्वमित्यत्र तदिदमाप्यायनप्रयुक्तमिति बोधयितुम् अन्नमयं हीत्यादि विशेषवाक्यम्।

भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥४॥

इति षष्ठाध्याये पञ्चमः खण्ड. ।

षष्ठे षष्ठः खण्डः

दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत् सर्पिर्भवति ॥ १ ॥

---

'अन्नमयं हि सोम्य मन, आपोमयः प्राणस्तेजोमयी वाक्' इति उपपद्यत इति चेन, सर्वस्यापि त्रिवृत्कृतत्वेन सर्वस्यापि भक्षस्य तेजोबन्नरूपतया, 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इत्युपपद्यत इति न क्षतिरिति द्रष्टव्यम् ।

भूय एव मा भगवान् विज्ञापयत्विति । [एवमशितानां तेजोबन्नानां सूक्ष्मांशा वागाद्याप्यायकाः सन्तीत्यत्र न मनसो विस्रम्भः। अतः] भूयः पुनरपि सम्यग्दृष्टान्तैरमुमर्थं दर्शये[ति शिष्यः प्रार्थयामसे]- त्यर्थः। तथा सोम्येति होवाच । आचार्योऽपि तथाऽस्त्वित्युक्तवानित्यर्थः॥

दध्नः...सर्पिर्भवति । हे सोम्य ! मथ्यमानस्य दध्न ऊर्ध्वं उद्गतोऽणीयनशो यथा सर्पिर्भवतीत्यर्थः । एवमेव खलु....तन्मनो

---

विज्ञापयत्विति । विजानीहीति यस्मिन्नर्थे पूर्वं प्रयुक्तम्, तदनुकूलव्यापारार्थक एवायं णिच् । न तु नीचेनोच्चं प्रति निवेदनरूपं विज्ञापनमिदम् ।

ननु भूय एवेत्येतावता अस्यायं प्रष्टव्यांश इति कथं ज्ञायत इति चेत्— मुखदर्शनमात्रेण शिष्यजिज्ञास्यनिश्चयः ।

प्रवक्तुर्हि भवेत् तत् स प्रश्रितः परिपृच्छति ॥

अन्नादौ ईदृशसारतरसद्भावे निदर्शनमाह दध्न इत्यादिना ।

एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥ अपाꣳ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥

तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग् भवति ॥ ४ ॥

अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति ॥
भूय एव मा भगवान् विज्ञापयत्विति ॥ तथा सोम्येति होवाच ॥

इति षष्ठाध्याये षष्ठः खण्डः ।

षष्ठे सप्तमः खण्डः

षोडशकलः सोम्य पुरुषः । पञ्चादशाहानि माऽशीः; काममपः

---

**भवति** । एवमेव उक्तदृष्टान्तवदेव औदर्येणाग्निना पच्यमानस्यान्नस्य योऽणिमा अणीयानंशः[*] स ऊर्ध्वं उद्गतो मनो भवति । मनस आप्यायको भवतीत्यर्थः । **समुदीषति** । 'ईष गतिहिंसादर्शनेषु' इति हि धातुः । **अपां....वाग् भवति** । पूर्ववदर्थः । **अन्नमयं हि.... वागिति** । स्पष्टम् ।

**भूय...इति** । मनसोऽन्नमयत्वं यथा बुद्ध्यारूढं भवति, तथा प्रदर्शये[ति श्वेतकेतुराहे]त्यर्थः । **तथा....होवाच** । पूर्ववदर्थः ॥ ६-६.

**षोडशकलस्सोम्य पुरुषः** । षोडशांशयुक्तमन आदिकलायुक्तः पुरुषः । ततश्च मनआदेः षोडशांशाः प्रत्यहं सृज्यमानैरन्नादिभिराप्यायिता

---

**औदर्येणेति** । उदर्य एव औदर्यः । स्वार्थे अण् ।

भवत्वणिष्ठांशः । तदाप्यायितत्वे किं प्रमाणमित्यत्रान्वयव्यतिरेकाभ्यां तत् दर्शयति षोडशकल इति । पुरुषस्य षोडशकलत्वं नाना । प्रश्नोपनिषदुक्तमेकम् । तदेव मुण्डकेऽप्यनूदितम् । बृह-

पिब ; आपोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ १ ॥

स ह पञ्चदशाहानि नाऽऽश । अथ हैनमुपससाद, 'किं ब्रवीमि भो' इति । ऋचः सोम्य यजूंषि सामानीति । स होवाच, 'न वै मा प्रति भान्ति भो' इति ॥ २ ॥

---

भवन्ति । पञ्चदशाहानि मा शीः । तत्र पञ्चदशदिना(अहा)नि मा भुङ्क्ष्था । काममपः पिब । यथेष्टं जलं पिब । आपोमयः... विच्छेत्स्यत इति—जलपाने प्राणविच्छेदो[ऽपि] न भविता । जलमयत्वात् प्राणस्येत्याचार्य उवाचेत्यर्थः ।

स ह पञ्चदशाहानि....नाऽऽश । आशेति लिट् । एवं पित्रोक्तः पुत्रः पञ्चदशाहानि नाश न भुक्तवान् । अथ हैनमुपससाद किं ब्रवीमि भो इति । षोडशेऽहनि पितरमुपसन्नः शिष्यः, 'भगवन् किं ब्रवीमि' इत्युक्तवानित्यर्थः । इतर आह, ऋचस्सोम्य यजूंषि सामानीति । अधीतान् वेदान् पठेत्युक्तवानित्यर्थः । सः....भो

---

दारण्यके (३-५-१५) चन्द्रवत् षोडशकलत्वमुक्त्वा, 'तस्य वित्तमेव पञ्चदश कलाः, आत्मैवास्य षोडशी कला' इत्युक्तम् । पञ्च भूतानि, एकादशेन्द्रियाणि च पुंसः षोडश कला इति च प्रसिद्धमेव । षोडशकलश्चन्द्रश्च पञ्चदशभिः अहोभिः क्षीयते । तद्वत् पुरुषेऽपि तथात्वमत्र वर्ण्यते । तत्र च एकैकदिनक्षीयमाणस्यांशस्य एकैककलात्वम् , शिष्टस्यैककलात्वमिति कलनया पुरुषान्तर्गतमन आदेः षोडशकलत्वेन पुरुषस्य षोडशकलत्वमध्यवसीयते। मनआदिसंबन्धिकलाः षोडश यस्य स षोडशकल इति । मनआदीनामंशं कलापदेनोपरि श्रुतिरपि निर्देक्ष्यति । अतः षोडशांशयुक्तमनआदिकलायुक्त इति तात्पर्यार्थः; न शब्दार्थः ।

ऋच इत्यादि । सर्ववेदाध्ययनं हि तस्य नियतमस्ति । सर्वान् वेदान् अधीत्येति प्रागुक्तः ।

तँ होवाच—यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्; तेन ततोऽपि न बहु दहेत्—एवँ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात्; तयैतर्हि वेदान्नानुभवसि। अशान। अथ मे विज्ञास्यसीति ॥ ३ ॥

स हाऽऽश। अथ हैनमुपससाद। तँ ह यत् किञ्च पप्रच्छ, सर्वँ ह प्रतिपेदे।

---

इति। मां प्रति वदा न भान्तीति इतरः प्रत्युक्तवानित्यर्थः।

तँ होवाच। पिता प्रत्युवाचेत्यर्थः। **यथा सोम्य....विज्ञास्यसीति।** हे सोम्य! यथा लोके महतः इन्धनैरभ्याहितस्य प्रज्वलितस्याग्नेः शान्तस्य एकोऽङ्गारः खद्योतमात्रः परिशिष्टो भवेत्। **तेन** अङ्गारेण **ततोऽपि** खद्योतमात्रपरिमाणात् किञ्चिदपि बहु न दहेत्, एवमेव खलु सोम्य! ते अन्नोपचितानां षोडशानां मनसोंशानामेकोंशोऽवशिष्टः। [पञ्चदशदिनेषु पञ्चदशकलानां क्षीणत्वादिति भावः।] अतोऽल्पीयसा तेनांशेनेदानीं देवान् न प्रतिपद्यसे। **अशान** भुङ्क्ष्व। तत ऊर्ध्वं **मे** मदुक्तं ज्ञास्यसीत्यर्थः।

**स हाऽऽश; अथहैनमुपससाद।** एवं पित्रोक्तः **सः** श्वेतकेतुः **आश** भुक्तवान्। अथ भुक्त्वा पितरमुपसन्नः। **तं ह....प्रतिपेदे।** तं तदा पिता यद्यत् पृष्टवान्, ततत् सर्वं स ज्ञातवानित्यर्थः।

---

खद्योतमात्रः=खद्योतपरिमाणः। तेन ततोऽपीति। बहु दहनस्वभावोऽग्निः महांश्चेत्, महतोऽपि बहु दहेत्। अणुमात्रश्चेत् अणुमात्र त बह्वपि न दहेदिति। मे मदुक्तमिति। मदुक्तमित्यस्य मत्पृष्टमित्यर्थः; उक्तानां ऋगादीनामन्यतोऽधीतत्वात्।

तँ होवाच ॥ ४ ॥ यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्र[ा]ज्वालयेत्; तेन ततोऽपि बहु दहेत्—एवँ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत्; साऽन्नेनोपसमाहिता प्राज्वालीत्, (प्राज्वाली); तयैतर्हि वेदान् अनुभवसि ।

अन्नमयँ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति ।
तद्धास्य विजज्ञाविति—विजज्ञाविति ॥ ५ ॥

इति षष्ठे सप्तमः खण्डः ।

---

**तं होवाच** । पितेति शेषः। **यथा दहेत्**। यथा महतो ज्वलितशान्तस्य वह्नेरेकमङ्गारं खद्योतमात्रं परिशिष्टं तृणादिभिरुपसमिध्य **प्राज्वालयेत्** प्रकर्षेण आ समन्तात् वर्धयेत् । तेन च एवमिद्धेनाङ्गारेण **ततोऽपि** पूर्वपरिमाणात् बहु दहेदित्यर्थः। **एवं सोम्य...** । **एवमेव** पूर्वोक्तदृष्टान्तवत् हे सोम्य ! ते षोडशानां मनोंशानामेकोंशोऽन्नेनाप्यायितः प्रज्वलितः स्वकार्यकरणसमर्थोऽभूदित्यर्थः। [**प्राज्वाली**दिति (ली इति ?) दीर्घश्छान्दसः । ] अतो वेदान् इदानीं प्रतिपद्यसे इत्यर्थः ।

**अन्नमयं हि....वागिति**। अतोऽन्नमयं मनः । अनयैव रीत्या आपोमयः प्राणस्तेजोमयी वागिति जानीहीत्याचार्य उक्तवानित्यर्थः ।

**तद्धास्य विजज्ञाविति विजज्ञाविति** । **तत्** मनआदीना-

---

एवं मनःकार्यप्रतिभानतदभावयोः अन्नतदभावानुविधानं प्रदर्श्य मनस आप्यायितत्वमुपपादितम् । अन्नाभावेऽपि अम्मात्रेण प्राणस्थित्या आपोमयः प्राण इत्यपि उपपादितमेव । व्यतिरेकमुखेनोपपादनं तु नासीत्। तेजोमयी वागिति तु नतराम्। अत आह अनयैव रीत्येति।

मन्त्रमयत्वादिकम् **अस्य** पितुरुपदेशात् पुत्रो ज्ञातवानित्यर्थः । द्विरभ्यासस्त्रिवृत्करणप्रकारपरिसमाप्त्यर्थः ।

प्रकृतविषयाण्यधिकरणानि लिख्यन्ते ।

(१) द्वितीयाध्यायान्ते —, 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति स्वांशत्वेनाऽऽत्मभूतस्य जीवस्यैवानुप्रवेशव्याकरणकर्तृत्वाभिधानात्, परदेवतायाः स्वेन रूपेणानुप्रवेशानुक्तेः, हिरण्यगर्भस्य नामरूपव्याकर्तृत्वस्य पुराणादिषु प्रसिद्धत्वात् परमात्मांशभूतो हिरण्यगर्भ एव प्रवेशनामरूपव्याकरणयोः कर्ता । न चैवम्, 'व्याकरवाणि' इति परमात्मनोऽभिसन्धिर्नोपपद्यत इति वाच्यम्— जीवसमष्ट्याश्रयस्य प्रवेशव्याकरणकर्तुर्हिरण्यगर्भस्य परमात्मांशतया अत्यन्तभिन्नत्वाभावेन तद्गतनामरूपव्याकर्तृत्वस्य प्रवेशसमानाधिकरणस्य स्वनिष्ठतया परमात्मनोऽनुसन्धानोपपत्तेः। प्रयोजककर्तृतयाऽपि, 'व्याकरवाणि' इत्यभिसन्ध्युपपत्तेश्च । यदि पुनः परमात्मनः साक्षात्कर्तृभावो भवेत्, तर्हि, 'अनेन जीवेन' इत्यनर्थकम् । जीवस्य कर्तृत्वाभावेन, 'चारेणानुप्रविश्य परसैन्यं संकलयानि' इतिवत् करणत्व एव तृतीया वाच्या । करणत्वञ्च तदैवोपपद्यते, यदि परमात्मा प्रयोजककर्ता, जीवश्च प्रयोज्यकर्ता स्यात् । प्रयोजककर्तुर्हि साक्षात्कर्ता करणं भवति । प्रधानक्रियोद्देशेन प्रयोजकेन प्रयोज्यकर्तुर्व्याप्रियमाणत्वात् । अतः, 'जीवेन' इति करणत्वेन निर्दिश्यमानो जीवः साक्षात्कर्ते-

---

**स्वांशत्वेनाऽऽत्मभूतस्येति । अनेन पूर्वपक्षेऽपि आत्मनेत्यस्य स्वेनेत्येवार्थ इति ज्ञायते ।**

त्यवसीयते । अतः तेजोबन्नानि प्रविश्य हिरण्यगर्भ एव नामरूपे व्याकरोति। अतो हिरण्यगर्भकर्तृकैव नामरूपव्याक्रियेति प्राप्ते उच्यते—

"संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्" । **संज्ञामूर्तिक्लृप्तिः** नामरूपव्याकरणम्, त्रिवृत्करणं कुर्वतः परमात्मन एव ; न हिरण्यगर्भस्य । 'अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतत्रिवृतमेकैकामकरोत्' इति त्रिवृत्करणनामरूपव्याकरणयोः समानकर्तृकत्वावगमात् । न च त्रिवृत्करणं हिरण्यगर्भकर्तृकं सम्भवति, हिरण्यगर्भस्य त्रिवृत्कृततेजोबन्नोत्पादितब्रह्माण्डसृष्टत्वावेदनेन तस्य त्रिवृत्करणकर्तृत्वासम्भवात् । अतो जीवसमष्टिशरीरकस्सन् परमात्मा नामरूपे व्याकरोदिति सिद्धम्। 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' इत्यस्योपपत्तिस्तु तद्वाक्यविवरणदशायामेवोक्ता तत्रैवानुसन्धेया ।

ननु, 'यदग्ने रोहितं रूपं तेजसस्तद्रूपम्', 'अन्नमशितं त्रेधा विधीयते' इत्युत्तरत्र चतुर्मुखसृष्टाग्न्यादिषु त्रिवृत्करणप्रकारप्रदर्शनात् त्रिवृत्करणमपि चतुर्मुखकर्तृकमेवेत्यत्राह—"मांसादि भौमं यथाशब्दमितरयोश्च" । यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवादिविषयोऽयम्,

---

मांसादिभौममिति सूत्रमवतारयति नन्विति। अयं पूर्वपक्ष्याशयः-त्रिवृत्करणप्रकारप्रदर्शनं हि त्रयमेलनप्रदर्शनम् । तत् अग्न्यादौ एकप्रकारेण कृतम् । अथ प्रागेव त्रिवृद्भूतेषु अन्नादिषु पाकवशात् त्रयाणां पृथग्भावदर्शनात्, प्राक् त्रयमेलननिश्चयः। तथाच इमास्तिस्र इति वाक्यस्यायमर्थः—त्रिवृदेकैका स्थिता पुरुषं प्राप्य तिस्रो देवताः भवतीति । तत्रोक्तं सूत्रकारेण, 'मांसादि भौमं किल; न तु आप्यतैजसभूतम्' इति। मज्जाशब्दः आकारान्तोऽपि ।

अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यम्। तदेव च त्रिवृत्करणम्। तथा च स्मर्यते— "नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना।

नाशक्नुवन् प्रजाः स्रष्टुमसमागत्य(म्य) कृत्स्नशः॥

समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः।

महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते॥"

इति। अत एव च, 'अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्। तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति पाठक्रमोऽप्यर्थक्रमेण बाध्यते। अण्डान्तर्वर्तिष्वग्न्यादिषु त्रिवृत्करणप्रदर्शनं तु श्वेतकेतोः शुश्रूषोरण्डान्तर्वर्तित्वेन तस्य बहिःष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात् त्रिवृत्कृतानां कार्येष्वग्न्यादिषु त्रिवृत्करणप्रदर्शनं कृतमित्यविरोधः।

नन्वण्डान्तर्गतानां सर्वेषां त्रिवृत्कृततेजोबन्नरूपत्वे व्यवस्थिततेजोबन्नव्यवहारः कथं स्यादित्यत्राह—**"वैशेष्यात्तु तद्वादस्तद्वादः"**। पृथिव्यंशानां [अर्धांशतया] भूयस्त्वे पृथिवीव्यवहारः, जलांशानां भूयस्त्वे जलव्यवहार इति व्यवहारव्यवस्थोपपद्यत इत्यर्थः। 'तद्वादस्तद्वादः' इति सूत्रे द्विरुक्तिरध्यायपरिसमाप्तिद्योतनार्थेति स्थितम्।

(२) तथा द्वितीयाध्याये आरम्भणाधिकरणे—

उपादेयमुपादानादन्यदेव। घटेनोदकमाह्रियते, मृत्पिण्डेन घटादि निर्मीयत इति कार्यभेदात्। तथा घटस्य दण्डचक्रादिकं कारणम्, मृत्पिण्डस्य तु जलसंयोजनमर्दनादीति कारणभेदात्। तथा घटः पृथुबुध्नोदराकारः, मृत्पिण्डस्तु अतदाकार इत्याकारभेदात्। तथा पूर्वकालं कारणम्, अपर(उत्तर)कालं कार्यमिति कालभेदात्। बहवः

तन्तवः, एकः पट इति संख्याभेदात्। सत्यामेव मृदि घटो नष्ट इति प्रतीतेः। कार्यकारणयोर्बुद्धिशब्दादिभेदस्य दर्शनाच्च उपादानाद न्यदेवोपादेयम्। इतरथा कारकव्यापारवैयर्थ्यप्रसङ्गादिति काणादादि मतावलम्बनेन पूर्वपक्षे प्राप्ते उच्यते—

**"तदनन्यत्वमारम्भणशब्दादिभ्यः"**। तस्मात् परमकारणात् ब्रह्मणः जगतोऽनन्यत्वं वाचारम्भणशब्दादिभिरवगम्यते। वाचारम्भणं विकारो नामधेयम्' इत्यस्यार्थः पूर्वमेव वर्णितः। **आदिशब्देन**, 'सदेव सोम्येदमग्र आसीत्', 'येनाश्रुतं श्रुतं भवति', 'एकमेवाद्वितीयम्' इत्यादिकं गृह्यते। यदि च वैशेषिकादिरीत्या उपादेयमुपादानादन्यत् स्यात्, तदा कारणगुणप्रक्रमेण कार्यगुणोत्पत्तेः उपादानसुवर्णगुरुत्वेन तदुपादेयकुण्डले गुरुत्वोत्पत्त्यभ्युपगमावश्यम्भावेन गुरुत्वद्वैगुण्यप्रसङ्गात्। बुद्धिशब्दादिभेदानामुभयसम्प्रतिपन्नावस्थयैव व्यवस्थोपपत्तौ अवस्थाश्रयद्रव्यान्तरोत्पत्तिकल्पनाया अप्रामाणिकत्वात्।

ननु विरळतन्त्वारब्धपटे एकस्मिन्नेव कथमेकत्वानेकत्वयोर्युगपदुपलम्भः, एकस्मिन् धर्मिणि विरुद्धधर्मद्वयासम्भवादिति चेत् न; एकस्मिन्नेव वृक्षे मूलाद्यवच्छेदभेदेन संयोगतदभावसत्त्ववत् कुविन्द कारितसंयोगविशेषावच्छेदेन तन्तुषु पटत्वमेकत्वञ्च, तन्तुत्वावच्छेदेन तु अनेकत्वमित्युपपत्तेः। ननु कुविन्दकारितसंयोगाः तन्तुत्वसङ्कीर्णा एवेति कथं विरुद्धधर्मावच्छेदकत्वमिति चेत्—न; आर्द्रेन्धनप्रभव-

---

**आर्द्रेन्धनेति। एवं हेतुसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं वह्नेः तत्तद्व्यक्तित्वेन, अनवच्छेदकत्वं वह्नित्वेनेति च मणिकृदुक्तं ग्राह्यम्॥**

वह्नित्वावच्छेदेन धूमव्याप्यतावच्छेदकत्ववति वह्नित्वे अविशेषितवह्नित्वत्वावच्छेदेन व्याप्यतावच्छेदकत्वाभावस्य वृत्त्यभ्युपगमात् । एवं कार्यकारणानन्यत्ववादेऽपि एकस्मिन्नेव द्रव्ये तन्तुत्वावस्थाप्रापकांशु(श)-संयोगविशेषावच्छेदेन तन्तुत्वम्, तन्तुत्वावच्छेदेनानेकत्वञ्च ; पटत्व-प्रापकतन्तुसंयोगविशेषावच्छेदेन पटत्वम्, पटत्वावच्छेदेनैकत्वञ्चेति पटत्वतन्तुत्वयोरेकत्वानेकत्वयोश्च समावेशोपपत्तेर्न कश्चिद्दोषः ।

ननु संस्थानस्यासत उत्पत्तौ असत्कार्यवादप्रसङ्ग इति चेत्, असत्कार्यवादिमतोऽपि—उत्पत्तेरुत्पत्तिमत्त्वे अनवस्था स्यात् ; उत्पत्ति-राहित्ये सत्कार्यवादप्रसङ्गः । अस्माकं तु अवस्थायाः पृथक्प्रतिपत्ति-कार्ययोगानर्हत्वात् पृथगुत्पत्त्यादिकं नापेक्षितम् । अस्मन्मते घटस्यो-त्पत्तिर्नाम घटत्वावस्थासम्बन्ध एव ; न त्वसतः सत्त्वरूपम् । अतः उपादेयमुपादानादनन्यदेव ।

**"भावे चोपलब्धेः"** । हिरण्यकुण्डलादिकार्यभावेऽपि तदेवेदं हिरण्यमिति प्रत्यभिज्ञारूपोपलब्धेस्सत्त्वादभेद एवेत्यर्थ ।

**"सत्त्वाच्चापरस्य"** । **अपरस्य** कार्यस्य कारणे तादात्म्येन सम्बन्धेन सत्त्वाच्च उपादानादनन्यदुपादेयम् ; 'सदेव सोम्येदमग्र आसीत्' इति कार्ये नष्टेऽपि कारणे कार्यतादात्म्यप्रतीतेरित्यर्थः । 'भावे

---

न कश्चिद्दोष इति । न चैवं सर्वत्र भेदाभेदावतारप्रसङ्गः । अवच्छेदकभेदमन्तरा विरुद्धद्वयसमावेशो हि दोष इति । अस्तु वा घटादावेकत्वव्यवहारो गौणः। तथापि अनन्तावयवितद्गुणादिकल्पनं गुरुत्वद्वैगुण्यप्रसङ्ग-उपादानोपादेयाभेदप्रतीतिभङ्गप्रसङ्गपरिहारक्लेश - श्चापेक्ष्य राश्यादाविव गौणतद्व्यवहारस्वीकार एव ज्यायानिति ।

चोपलब्धेः' इति सूत्रे कार्यदशायां कार्ये कारणतादात्म्यप्रतीतिः प्रमाणतयोपन्यस्ता ; उत्तर(अत्र ?)सूत्रे तु कार्यनाशानन्तरमपि कारणे कार्याभेदप्रतीतिः प्रमाणतयोपन्यस्तेति विवेकः ।

"असद्व्यपदेशान्नेति चेन्न ; धर्मान्तरेण वाक्यशेषात् युक्तेः शब्दान्तराच्च" । 'असद्वा इदमग्र आसीत्', 'इदं वा अग्रे नैव किञ्चनासीत्' इति जगतः सृष्टेः प्राक् असत्त्वव्यपदेशात् सृष्टेः प्रागपि सता उपादानेनोपादेयस्यैक्यं नोपपद्यत इति चेत्--न ; नामरूपविभागलक्षणधर्मान्तराभावमादाय असत्त्वव्यपदेशोपपत्तेः। जगतः सत्त्वं नामरूपभाक्त्वम्। असत्त्वं नामरूपविरोधि[नी]सूक्ष्मावस्था । न तु सर्वात्मना असत्त्वम् । कुत इदमवगम्यत इति चेत्-**वाक्यशेषात्**। 'इदं वा अग्रे नैव किञ्चनासीत्' इत्यत्र, 'तदसदेव सन्मनोऽकुरुत' इति वाक्यशेषे मनःकर्तृ(स्रष्टृ)त्वप्रतिपादनात् । **युक्तेश्च** । घटस्य सत्त्वं हि नाम घटत्वावस्थासम्बन्धः। असत्त्वं नाम तद्विरोधिकपालत्वचूर्णत्वाद्य(त्वेति अ)वस्थासम्बन्ध एव । न हि तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते । **शब्दान्तराच्च** । 'कुतस्तु खलु सोम्यैवं स्यादिति होवाच' इति तुच्छत्वं प्रतिक्षिप्य, 'सत्त्वेव सोम्येदमग्र आसीत्' इति स्थापितत्वात् । 'तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत' इति सुस्पष्टमभिधानाच्च ।

"**पटवच्च**" । यथा तन्तव एव व्यतिषङ्गविशेषभाजः इति नामरूपकार्यादिकं भजन्ते, तद्वत् ब्रह्मापि ।

'**यथा च प्राणादिः**' । यथा वायुरेक एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तराणि भजते, तद्वत् एकमेव

ब्रह्मस्वरूपं जगत् भवतीति परमकारणात् परस्मात्
ब्रह्मणो जातोऽभ्युपगन्तव्यमिति स्थितम् ॥

अथ प्रथमाध्याये प्रकृत्यधिकरणे—, लोके घटकर्तुः
कुलालस्योपादानत्वादर्शनात् जगत्कर्तुः परमात्मनो जगदुपादानत्वं न
सम्भवति । किञ्च निष्कळतया अपरिणामिनः परमात्मनः परिणामित्व-
सम्भवाच्च ब्रह्मणो नोपादानत्वम् । अपि तु, 'अस्मा-
न्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः ॥ मायां तु
प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतिवशात् परिणामसमर्थप्रकृति-
रेवोपादानम्; ईश्वरस्य तु तदधिष्ठातृत्वमात्रमेवेति प्राप्ते उच्यते—

'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' । प्रकृतिश्च उपादानञ्च
ब्रह्मैव, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डादिदृष्टान्तस्य
चानुपरोधात् । न ह्युपादानभूतमृत्पिण्डज्ञान इव निमित्तभूतदण्डादि-
ज्ञानेन घटशरावादिकं ज्ञातं भवति । अत एकविज्ञानेन सर्व-
विज्ञानप्रतिज्ञया मृत्पिण्डादिदृष्टान्तस्वारस्येन च ब्रह्मजगतोरुपादानोपा-
देयभावोऽवसीयते ।

'अस्य ग्रामस्य प्रधानभूते चैत्रे दृष्टे सर्वे ग्रामस्थाः दृष्टाः'
इतिवत् ब्रह्मणः सर्वप्रधानतया, 'तस्मिन् दृष्टे सर्वं विदितप्रायम्'
इति तत् इति वाच्यम्—यदि ह्यत्र सर्वविज्ञानं प्राधान्याभि-
प्रायं स्यात्, तदा प्रधानज्ञानेन सर्वमन्यदप्रधानमविदितमपि
विदितप्रायं भवतीत्यस्यार्थस्य लोकसिद्धत्वेनैकविज्ञानेन सर्व-
विज्ञानं पश्यतः श्वेतकेतोः, 'कथं नु भगवः स आदेशः' इति

प्रश्नो न स्यात् । अभिप्रायानभिज्ञेन कृतेऽपि प्रश्ने, प्राधान्याद्वा साद्दश्याद्वा सर्वं ज्ञातं स्यादित्येव प्रतिवक्तव्यं स्यात्, न तु, 'यथा सोम्यैकेन मृत्पिण्डेन' इति । अतो ब्रह्म उपादानमेव ।

**'अभिध्योपदेशाच्च'** । 'तदैक्षत बहु स्यां प्रजायेय' इति ब्रह्मण एव बहु स्यामिति सङ्कल्पपूर्विका सृष्टिरुपदिश्यते । न हि कुलालादेः ईदृशसङ्कल्पपूर्विका सृष्टिः संभवति ।

**'साक्षाच्चोभयाम्नानात्'** । 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठत् भुवनानि धारयन्' इति हि श्रूयते । यत उपादानात् द्यावापृथिवी-शब्दोपलक्षितकृत्स्नं जगत् ब्रह्म निष्टतक्षुः,--**निष्टतक्षुः** निर्मितवानित्यर्थः। वचनव्यत्ययः छान्दसः, तादृशवृक्षस्थानीयं(य)द्यावापृथिव्यादिजग दुपादानमपि ब्रह्मैव ; तस्य उपादानभूतस्याधारभूतं वनमपि ब्रह्मैव । भुवनानि धारयन्नीश्वरो ब्रह्मशब्दवाच्यं स्वात्मानमेवाध्यतिष्ठदित्यर्थः । अ(त)तश्चाधिष्ठेयमुपकरणादिकमपि ब्रह्मैवेत्यर्थः ।

**"आत्मकृतेः"** । 'तदात्मानं स्वयमकुरुत' इति आत्मन एव बहुत्वकरणात् तस्यैव निमित्तत्वमुपादानत्वञ्च । न हि, 'कुलाल आत्मानं स्वयमकुरुत' इति व्यपदेशोऽस्ति ।

ननु, 'निष्कलं निष्क्रियम्' इति निरवयवस्यापरिणामिनः कथं परिणामित्वलक्षणमुपादानत्वं स्यात् । तत्राह—**"परिणामात्"** । निर्विकारत्वाद्यविरोधिपरिणामविशेषसम्भवादित्यर्थः । अयं भावः— 'निष्कलं निष्क्रियं शान्तम्' इत्यादिभिः परमात्मनः निर्विकारत्वं[च]

प्रतीयते; पूर्वोक्तसूत्रोदाहृतश्रुतिभिः प्रपञ्चोपादानत्वञ्च प्रतीयते। उभयमपि यथोपपद्यते, तथोपपादनीयम्। परमात्मनश्च निर्विकारत्वं श्रूयते—'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्', 'अजामेकां लोहित-शुक्लकृष्णाम्', 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः', 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादि-वाक्येषु प्रपञ्चोपादानतया परिणामिनी प्रकृतिः प्रतीयते। तत्र परिणम मानप्रकृतिरूपोपादानावरुद्धे प्रपञ्चे साक्षात्कारणत्वासम्भवात् तद्द्वारा ब्रह्म कारणमित्यवसीयते। यथा, 'यदाग्नेयोऽष्टाकपालः' इति पुरोडा-शावरुद्धे यागे व्रीहीणां कारणत्वं साक्षात्कारणत्वासम्भवात् पुरोडा-शाद्वारा पर्यवस्यति, तद्वत्।

ननु भवत्वन्यद्वारा कारणत्वनिर्वाहः; व्यापारव्यवधानेऽपि कारणत्वाक्षतेः। उपादानत्वं तु नान्यद्वारा सम्भवति। भाव्यवस्थावतः पूर्वावस्थायोगित्वं ह्युपादानत्वम्। अवस्थाश्रयत्वशून्ये परमात्मनि कथमुपादानत्वमिति चेन्न; परमात्माश्रितायाः तच्छक्तिभूतायाः प्रकृतेरवस्थाश्रयत्वेन परमात्मनोऽप्यवस्थाश्रयत्वोपपत्तेः। ततश्च ब्रह्मणि साक्षाद्विकाराभावमादाय अपरिणामित्वनिर्विकारत्वश्रुतयश्चोपपन्नाः; शक्तिशरीरादिशब्दितायाः प्रकृतेर्ब्रह्मणश्चाभेदोपचारेण वा, प्रकृतिगताव-स्थायाः परम्परया ब्रह्माश्रितत्वेन वा ब्रह्मणः परिणामो(म्यु)पादानत्ववादाः, ब्रह्मोपादानत्वावलम्बनाश्च, 'न विलक्षणत्वादस्य तथात्वञ्च शब्दात्', 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इत्याद्याक्षेपपरिहाराश्चोपपन्नाः।

**"योनिश्च हि गीयते"**। 'यद् भूतयोनिं परिपश्यन्ति धीराः'

षष्ठे अष्टमः खण्डः

उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच—स्वप्नान्तं मे सोम्य

---

इति **योनिः** उपादानं हि ब्रह्म गीयते। **योनि**शब्दस्योपादानवचनत्वम्, 'यथोर्णनाभिः सृजते गृह्णते च' इति वाक्यशेषादवगम्यते। अतश्च ब्रह्मैव निमित्तमुपादानञ्चेति स्थितम्। प्रकृतमनुसरामः॥ ६-७.

एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं ब्रह्मव्यतिरिक्तस्य तदुपादेयत्वं वक्तुं प्रवृत्तः तेजोबन्नात्मकसकलाचेतनवर्गस्य तदुपादेयत्वमुक्त्वा चेतन-वर्गस्यापि तदुपादेयतां प्रतिपादयितुं प्रस्तौति **उद्दालको....विजानी-**

---

अष्टमखण्डमवतारयति एकेति। पूर्वखण्डान्ते विजज्ञाविति विजज्ञाविति इति द्विरभ्यासो दृश्यते। स च विद्यासमाप्तावेव दृष्ट इत्येतावता सद्विद्यासमाप्तिस्तावत् इह न सुवचा। उपरि, 'सता सोम्य', 'अन्नेन—अद्भिः—तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' इत्येवं सम्यगेव सद्विद्याप्रत्यभिज्ञानात्। अतः, स त्रिवृत्करणप्रकार-परिसमाप्त्यर्थ इति प्रागेव भाषितम्। तदयमर्थः—स्तब्धं श्वेतकेतुं प्रति, 'उत तमादेशम्' इति पृष्टं पित्रा। तत्र तज्जिज्ञासाक्रमेण यावत् वक्तव्यम्, तावदुपदिष्टम्। तावता तृप्तः श्वेतकेतुः उपरत-जिज्ञास एवासीत्। तत् दर्शितं पूर्वमभ्यासकरणेन। एवं तस्य सद्रूप-तत्त्वज्ञाने जातेऽपि हितपुरुषार्थज्ञाने प्रवृत्तिर्नादृश्यत। 'न हि तदज्ञाने, मतं विज्ञातमिति पूर्वोक्तविज्ञानस्यावसरोऽस्ति। न चोक्तार्थमननात् पश्चात् तत्प्रश्नकालपर्यन्तमवश्यं प्रतीक्षितव्यम्' इति तदर्थमुद्दालकः स्वयं पुत्रस्नेहात् तमनुगृह्णन् स्वाप्ययप्रभृति-सर्वमुपदेष्टुमारभत। इदं सूचयितुमत्र, उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच इति प्रेमप्रदर्शनसहितमपूर्ववदारम्भः। तत्र, 'तत्त्वमसि' इत्युपदेश्यस्य, 'अहं ब्रह्मास्मि' इति हितपुरुषार्थोभयरूपस्य

**विजानीहीति। यत्रैतत्पुरुषः स्वपिति नाम, सता सोम्य तदा सम्पन्नो भवति। स्वमपीतो भवति। तस्मादेनँ स्वपितीत्याचक्षते, स्वँ ह्यपीतो भवति॥ १॥**

---

हीति। **स्वप्नान्तं** सुषुप्तिं प्रतिपादयतो मम वाक्याद्विजानीहीति पिता पुत्रमाह स्मेत्यर्थः। एवं शिष्यावधानार्थं प्रतिज्ञायाऽऽह—**यत्र...नाम।** **यत्र** यदा, **पुरुषः स्वपितीत्येतन्नाम** भवति। पुरुषः स्वपितीति शब्दो यदा प्रयुज्य इत्यर्थः। पुरुषस्वापो यदेति यावत्। **नाम**शब्दः प्रसिद्ध्यर्थो वा। [**एतत्पुरुषः** एष पुरुष इत्यर्थः।] **सता... भवति। तदा** तस्मिन् स्वापकाले, 'सदेव सोम्य' इति प्रकृतेन सता सम्पन्नो भवति। पद्ऌ गतौ। सङ्गतो भवतीत्यर्थः। तस्या एव सत्सम्पत्तेः सति लयरूपत्वं स्वपितिनामनिर्वचनानुगुणं विवृणोति— **स्वमपीतो भवति।** अत्र स्वशब्दस्तावन्न जीवमात्रपरः। 'सता सोम्य

---

अनुभवस्य चेतनस्वरूपशोधनमन्तरा दुर्वचतया तदर्थम्, 'अनेन जीवेनाऽऽत्मना' इति प्राक् संगृहीतं बहुभिः खण्डैर्विविच्यते। तेन जीवानामुपादेयत्वमुपपाद्यं यथावदुपपादितं भवतीति।

तत्र लयमुखेन सत उपादानत्वमत्र खण्डे कथ्यते। तत्र लोकप्रसिद्धानां, स्वपिति-अशनाया-उदन्याशब्दानां प्रामाणिकार्थविशेषपरत्वं प्ररोचनायै चमत्कारदृष्ट्या व्युत्पत्तिविशेषकल्पनया प्रतिपाद्य अर्थवादमुखेन सन्मूलकत्व प्रजानां स्थाप्यते। स्वप्नान्तम् = स्वप्नस्यान्तम् अवसानम्। सुषुप्तिं गच्छतो हि मध्ये स्वप्नताव्यः। नामेत्यतः प्राक् इतिशब्दाध्याहारे, नामशब्दस्य वाक्यपरत्वे च क्लेशादर्थान्तरमाह नामशब्दः प्रसिद्ध्यर्थो वेति। स्वशब्दोपपदादिति कर्मधारयः। परत्वं पञ्चम्यर्थः। स्वशब्दरूपं यदुपपदम्, ततः परभूतात् अपीतिशब्दादिति।

तदा सम्पन्नो भवति; स्वमपीतो भवति' इति स्थानप्रमाणेन सच्छब्द-स्वशब्दयोरेकविषयत्वावश्यम्भावात्। सच्छब्दस्य चास्मिन् प्रकरणे परमात्मविषयत्वात् स्वशब्दोऽपि तत्पर एव। ननु जीवभिन्नत्वात् परमात्मनः, तस्य कथं जीवं प्रति स्वत्वमिति चेत्; उच्यते—देवमनुष्यादिनामरूपाभिमानरागलोभाद्यनुगुणबहिर्मु(र्दुः)खज्ञानप्रसरवज्जागरि-तावस्थजीवविशिष्टः परमात्मा देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौ-पाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यरहितजीवशरीरकः सन् आत्म-न्यन्तर्भूत इत्यर्थ इति 'स्वाप्ययात्' इति सूत्रे **व्यासार्यै**र्व्याख्यातत्वात् नानुपपत्तिः। अत्र त्वपिपूर्वस्य एतेर्लयार्थस्य सकर्मकत्वात् **स्वमपीत** इति द्वितीया। **तस्मादेनं....भवति। हि** यस्मात् स्वस्मिन् लीनो भवति, तस्मात् स्वपितीति लौकिका आचक्षत इत्यर्थः। अत्र यद्यपि स्वपिधातोर्निष्पन्नः स्वपितिशब्दः; न तु स्वशब्दोपपदात् अपीतेः—तथापि अशनायादिनिर्वचनवत् अर्थवादरूपत्वमुपपद्यत इति द्रष्टव्यम्। अत्र जीवस्य परमात्मनि लयप्रतिपादनात् तेजोबन्नादिवत् जीवस्यापि तदुपादेयत्वात् तज्ज्ञानेन ज्ञातत्वमुपपादितं भवति।

ननु, 'यत्रैतत्पुरुषः स्वपिति नाम' इति पुरुषशब्दनिर्दिष्टस्यैव स्वशब्देन परामृष्टव्यतया पुरुषशब्दस्य जीवमात्रविश्रान्तत्वेन स्वशब्द-स्यापि तत्पर्यन्तत्वमेवोचितम्। न च पुरुषपदस्यापि ब्रह्मपर्यन्तत्वकल्पनं युक्तम्। 'यत्रैतत्पुरुषः स्वपिति नाम,' 'तस्मादेनं स्वपितीत्याचक्षते' इत्युपक्रमोपसंहारयोर्लौकिकप्रसिद्ध्यनुवादात्। लौकिकानां ब्रह्मणि तत्प्रसिद्धेरभावात्। 'सति सम्पद्य न विदुः, 'सत तागम्य न विदुः'

इत्युत्तरखण्डयोः प्रतिपाद्यमानस्याज्ञानस्य ब्रह्मान्वयासम्भवाच्च, 'पुरुषः स्वपिति नाम' इति वाक्यस्थपुरुषशब्दस्य ब्रह्मपर्यन्तत्वाभावेन स्वशब्दस्यापि न ब्रह्मपर्यन्तत्वं सम्भवति। किञ्च, 'सता सोम्य तदा सम्पन्नो भवति' इति वाक्ये सच्छब्दिते ब्रह्मणि स्थूलावस्थजीवविशिष्टपरमात्मलयप्रतिपादने तत्तुल्यार्थत्वेनाभ्युपेते 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः' इति वाक्येऽपि परिष्वक्तत्वमपि जीवशरीरकस्य ब्रह्मण एव स्यात्। न च इष्टापत्तिः। "सुषुप्त्युत्क्रान्त्योर्भेदेन" इति सूत्रे परिष्वञ्जकेन प्राज्ञेन परिष्वज्यमानस्याज्ञस्य जीवस्य भेदप्रतिपादनं हि विरुध्यत इति चेत्—

अत्र केचित्—शास्त्रानभिज्ञलौकिकप्रसिद्धेर्देहाद्यतिरिक्ते जीवेऽप्यभावादभिज्ञप्रसिद्धिरेव, 'स्वपितीत्याचक्षत' इत्यनुरुध्यते। अभिज्ञप्रसिद्धिश्च परमात्मविषयाऽपि सम्भवति। 'सम्पद्य न विदुः' इत्यग्रिम-

---

जीवेऽप्यभावादिति। उक्तं ह्यात्मसिद्धौ, "आनुमानिकीमप्यात्मसिद्धिमश्रद्दधानाः श्रौतीमेव तां श्रोत्रियाः संगिरन्ते" इति।

नाम्नि त्वाक्षिप्ता शङ्कितुरयमाशयः—हृदयान्तःस्थित एव जीवः सुषुप्तिकाले प्रासादखट्वापर्यङ्कायमाणनाडीपुरीतत्परमात्मसंश्लिष्टो भवतीति तावत् प्रामाणिकम्। तत्र परमात्मसंश्लेषः, स्वरूपेणावस्थितिरित्यंशद्वयं तावत् क्रमिकम्। तदुभयं क्रमेण, 'सता सोम्य तदा संपन्नो भवति, स्वमपीतो भवति' इति वाक्यद्वयेनोच्यताम्। तथाच किमिति स्वपदं विशिष्टवाचि। एवम्, 'प्राज्ञेनात्मना' इति वाक्यमपि सुषुप्तिनिर्वाहकप्राज्ञशब्दवाच्यपरमात्मसंश्लेषं, 'परिष्वक्तः' इति प्रतिपाद्य अहङ्कारममकारात्मकवेदनाभावविशिष्टस्वरूपावस्थितिं, 'न बाह्यम्' इत्यादिना दर्शयति। अतः सद्वाक्यप्राज्ञवाक्ययोरैकार्थ्यमिति। 'अत्र केचित्' इत्येभिरत्र ऐकार्थ्ये आदरो न दर्शितः। प्रकृत-

धारणाधीनत्वावगमात्, तस्य च प्रशासनस्य, 'अन्तःप्रविष्टश्शास्ता जनानाम्' इत्यन्तःप्रवेशपूर्वकत्वावगमात्, सर्वशाखाप्रत्ययन्यायेन अन्तः-प्रवेशशासनधारणानामन्यतमोक्तावपीतरयोः फलितत्वात्, 'सदायतनाः' इत्यनेन धारकत्वोक्तौ(क्तावपि) अन्तः प्रविश्य शासनेन धारकत्वलक्षणा-त्मत्वस्य फलितत्वाज्जगतः शरीरत्वं फलितम्। 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः सत्प्रतिष्ठाः' इति द्वाभ्यां सदुपादानकत्वम्। सदायतना इत्यनेन सदन्तर्यामिकत्वम्।

उपादानोपादेयभावस्याभिन्ननिष्ठत्वात् **प्रजा**शब्देनाचित्संसृष्ट-जीवमात्रपरामर्शे तस्य सदुपादानकत्वासम्भवात् **प्रजा**शब्देनापि प्रजा-शरीरकं ब्रह्मैवोच्यते। सदायतना इत्यत्र सदन्तर्यामिकत्वस्य शरीर-भूतचिदचिन्मात्रनिष्ठत्वेन चिदचिच्छरीरकब्रह्मनिष्ठत्वाभावात् सदायतना इति वाक्यानुषक्त**प्रजा**शब्देन शरीरभूतचेतनाचेतनमात्रमेवाभिधीयते। तथा—'सन्मूलास्सत्प्रतिष्ठाः' इत्युपादानत्वप्रतिपादकवाक्ये विशिष्टस्यै-वोपादानत्वात् सच्छब्देन सूक्ष्मचिदचिद्विशिष्टमेवोच्यते। सदायतना इत्यन्तर्यामित्वप्रतिपादकवाक्ये विशिष्टस्यान्तर्यामित्वासम्भवात् सच्छब्देन विशेष्यमात्रमेवाभिधीयते। 'तज्जत्वात् तल्लत्वात् तदनत्वात् सर्वं खल्विदं ब्रह्म' इत्यत्रापि तज्जत्वात् तल्लत्वादित्युपादानत्वप्रतिपादकांशे विशिष्टयो रेवोपादानोपादेयत्वात् सर्वशब्दोऽपि विशिष्टपरः। तच्छब्दोऽपि विशिष्टपरः। 'सर्वमिदं तदनत्वात् ब्रह्म' इति तदन्तर्यामित्वप्रतिपादकांशे तु विशिष्टयोः शरीरशरीरिभावासम्भवात् सर्वमिदमिति शब्देन शरीरभूतं जगदेव परामृश्यते; तदिति शब्देन केवलविशेष्यभूतं ब्रह्मैवोच्यते।

'ऐतदात्म्यमिदं सर्वम्' इत्यत्र, एष आत्मा यस्य, तत् ऐतदात्म्यमित्यर्थस्य वर्णनीयतया विशिष्टस्यात्मत्वाभावादेतच्छब्देन विशेष्यमात्रं परामृश्यते—इति । व्यासार्यैरुक्तमेतत् सर्वं गत्यभावादङ्गीकार्यम् ।

"कृत्स्नस्य जगतो ब्रह्मकार्यत्वेन तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात् तत्प्रत्यनीकनानात्वं निषिध्यत" इति महासिद्धान्तभाष्यव्याख्यानावसरे च व्यासार्यैः—यस्य ब्रह्मकार्यत्वं विशिष्टस्य, न तस्य तदन्तर्यामिकत्वम्; यस्य ब्रह्मान्तर्यामिकत्वं विशेषणस्य, न तस्य ब्रह्मोपादेयत्वम्; ब्रह्मान्तर्यामिकत्वस्य विशेषणमात्रनिष्ठत्वादिति परिचोद्य, 'जगतो ब्रह्मकार्यत्वात्' इति श्रूयमाणो जगच्छब्दो विशिष्टपरः, तदन्तर्यामिकत्वेनेत्यत्र विशेषणमात्रवाची निष्कर्षकः जगत इति शब्दोऽध्याहर्तव्य इत्युक्त्वा, अस्मिन् पक्षे बहुवैरूप्याश्रयणक्लेशं पर्यालोच्य— 'ब्रह्मान्तर्यामिकत्वेन' इत्युभयत्रापि 'जगत' इति निष्कर्षक एव शब्दः। न च निष्कृष्टस्य विशेषणमात्रस्य, जगतः तदन्तर्यामिकत्वोपपत्तावपि तदुपादानकत्वं न सम्भवतीति वाच्यम्—भाव्यवस्थाश्रयस्यैवोपादेयतया तच्छरीरभूतस्य जगतोऽपि भाव्यवस्थाश्रयत्वेन ब्रह्मोपादेयत्वं सम्भवतीति प्रतिपादितम् । अस्मिन् पक्षे वैरूप्यादिक्लेशाश्रयणाभावादयमपि पक्षो युक्त इत्यस्माभिर्मुण्डकोपनिषत्प्रकाशिकायां प्रतिपादितम् ।

---

**अभिन्नयोरेवोपादानोपादेयभावे वाक्यार्थनिर्वाहे क्लेशमगत्या स्वीकार्यमेतावता प्रदर्श्य, तावतैव भिन्नयोरुपादानोपादेयभावस्य युक्तत्वमासूच्य, तत्र भाष्यस्वारस्यं व्यासार्यवचनञ्च प्रमाणयति कृत्स्नस्येत्यादिना । मुण्डकोपनिषत्प्रकाशिकायामिति । उपादानत्वनिर्वचनादिकमपि तत्र विस्तरेण द्रष्टव्यम् ।**

अस्मिन् पक्षे, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति सदुपादानकत्वसदात्मप्रतिपादकवाक्ये प्रजाशब्दः केवलचिदचिन्मात्रपरः, न तु ब्रह्मपरः। सच्छब्दोऽपि केवलब्रह्ममात्रपरः। ततश्च केवलस्य ब्रह्मणः केवलचिदचित्प्रपञ्चस्य च पूर्वोत्तरावस्थाश्रयहेतुहेतुमद्रूपतया उपादानोपादेयभावोऽप्यस्ति। तदपृथक्सिद्धकारणत्वस्यैव तदुपादानत्वरूपत्वात्। विशेष्यस्य ब्रह्मणो विशेषणापृथक्सिद्धकारणत्वेनोपादानत्वस्यैव युक्तत्वात्।

'ऐतदात्म्यमिदं सर्वम्' इति वाक्येऽपि इदं सर्वमिति केवलचिदचिदात्मकः प्रपञ्चः परामृश्यते ; एतच्छब्देनापि केवलं विशेष्यमिति न पूर्ववाक्यवैरूप्यम्।

ननु, 'ऐतदात्म्यमिदम्' इत्यत्राऽऽत्मशब्देन किं स्वरूपमुच्यते, उत नियन्तृत्वम्। नाद्यः ; चिदचित्प्रपञ्चस्य ब्रह्मस्वरूपत्वाभावात्। न द्वितीयः ; शरीरात्मभावे, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति पूर्ववाक्योक्तसदुपादानकत्वसदन्तर्यामिकत्वयोर्हेतूकरणं विरुध्येत। न चेष्टापत्तिः। "तत्र च हेतुरुक्तः, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः'" इति भाष्यविरोधप्रसङ्गात्। 'सर्वं खल्विदं ब्रह्म तज्जलानिति' इति श्रुतावेव च सदुपादानकत्वसदन्तर्यामिकत्वयोः सर्वस्य ब्रह्मात्मकत्वे हेतूकरणादिति चेत्—न ; विशिष्टयोरेवोपादानोपादेयभाव इति पक्षेऽप्यस्य दोषस्य समानत्वात्।

---

अत्र पक्षे स्थितं वाक्यार्थवर्णनक्लेशमेव प्रपञ्चयति अस्मिन् पक्षे इति।

हेतूकरणम् = हेतुत्वाभिसंधिना श्रुत्या सदुपादनकत्वादिवचनम्। न चेष्टापत्तिरिति। श्रुतेः सोऽभिसंधिर्नेष्यत इति नेत्यर्थः।

कथं तर्ह्यस्य दोषस्य निस्तार इति चेत्—उच्यते ।

**आत्म्य**शब्दो व्याप्यवचनः 'अदृश्येऽनात्म्येऽनिरुक्ते' इत्यत्र **आत्म्य**शब्दस्य व्याप्यार्थकत्वाश्रयणात् । **ऐतदात्म्यम्** उपादानभूतेन अन्तर्यामिभूतेन च ब्रह्मणा व्याप्यमित्यर्थः । 'मृदा कुम्भादिकं यथा' इत्युपादानस्यापि व्यापकत्वप्रसिद्धेः । एतदात्म्यमेव ऐतदात्म्यम् । स्वार्थे अण् (ष्यञ्)। एष आत्मा यस्येति पक्षेऽपि स्वार्थे ष्यञ आश्रयणीयत्वात्। अस्मिंश्च पक्षे, 'ऐतदात्म्यमिदं सर्वम्', 'स आत्मा' इत्यनयोर्न पौनरुक्त्य-शङ्का । अत एव, 'रामानुजं लक्ष्मणपूर्वजातम्(जञ्च?)' इतिवत् आदराति-शयादुपपद्यत इति परिहाराश्रयणक्लेशोऽपि नाश्रयणीयः । **तत् सत्यम्।** एतदात्मकत्वमेव **सत्यं** प्रपञ्चस्य प्रामाणिकमित्यर्थः । **ऐतदात्म्यमिदं सर्वं तत् सत्य**मिति वाक्यस्यैवं वाऽर्थः—**सत्यं** प्रमाणप्रतिपन्नं **तदिदं सर्वं** जगत् **ऐतदात्म्यम्** अनेन ब्रह्मणा व्याप्तमित्यर्थः (?) । अत्र असत्यस्य शशशृङ्गादेस्तुच्छस्य व्याप्तत्वाभावेऽपि प्रमाणप्रतिपन्नस्य सर्वस्यापि ब्रह्मव्याप्तत्वमस्तीति भावः । **सः आत्मा** नियन्तेत्यर्थः ।

विशेष्यस्य विशेषणांशं प्रति उपादानत्वमस्तीत्यस्मिन् पक्षे, 'सदेव सोम्येदमग्र आसीत्' इत्यत्रेदंशब्दस्य कथमश्रुतवेदान्तं श्वेतकेतुं प्रति

---

तत्सत्यमित्यत्र तत्पदस्य शुद्धब्रह्ममात्रपरत्वे प्रपञ्चस्यासत्यत्वा-पत्तिरिति एतदात्मकत्वपरत्वमुक्तम् । तथा धर्ममात्रपरत्वे क्लेशात् वाक्यमन्यथा योजयति ऐतदात्म्यमित्यादिना । एतद्विचारो यथा-स्थानं टिप्पणे द्रष्टव्यः ।

कथं सामानाधिकरण्यमिति चेन्नेति । अत्र अतिचर्चायां क्रियमाणायामेवं सुवचम्—

ब्रह्मपर्यन्तप्रतीतिजनकत्वमिति शङ्काया अपि नावकाशः ।

ननु उक्तरीत्या भिन्नयोरुपादानोपादेयभावसमर्थनेऽपि—'सदेव सोम्येदमग्र आसीत्', 'सर्वं खल्विदं ब्रह्म' इति परस्परभिन्न-विशेषणविशेष्यवाचिनोर्जगद्ब्रह्मवाचिशब्दयोः कथं सामानाधिकरण्य-मिति चेत्–न; अपृथक्सिद्धवाचित्वस्यैव सामानाधिकरण्यप्रयोजकतया लोकवेदयोर्दृष्टत्वात् चिदचित्प्रपञ्चस्य तच्छक्तित्वेन तच्छरीर[क]त्वेन च तयोरभेदोपचारेणाभेदनिर्देशानां सदेवेदमित्यादिरूपाणामुपपत्तेः। शक्ति-शक्तिमतोर्दण्डघटादिवदत्यन्तभेदाभावात् । विशेषणभूतप्रपञ्चांशे ब्रह्मण उपादानत्वाभावे, 'न विलक्षणत्वात्' इत्यधिकरणस्य वा, 'कृत्स्नप्रसक्ति-र्निरवयवत्वशब्दकोपो वा' इत्यधिकरणस्य वा निरालम्बनत्वप्रसङ्गात् । ब्रह्मणो ब्रह्म प्रत्युपादानत्वे विलक्षणत्वशङ्काया वा, ब्रह्मणो जगद्रूपेण परिणामाभावे कृत्स्नप्रसक्तिनिरवयवत्वशब्दकोपाशङ्कयोर्वा अप्रसक्तेः ।

---

विशिष्टस्येव विशेषणस्यापि विशेष्यं प्रति उपादेयत्वं काम-मस्तु । अत एव उपादानत्वनिर्वचनमप्युभयानुगतं मुण्डकोप-निषत्प्रकाशिकोक्तमप्यस्तु । संभवति व्यवहारानुगमे तदुपेक्षणा-योगात् । अथापि समानाधिकरणवाक्यानामपृथक्सिद्धिरूपाभेदस्य विभक्तिविवक्षितत्वं न युक्तम्; तस्यामुख्यत्वात् । उक्तं ह्यत्रैव, 'अभेदोपचारेणाभेदनिर्देशानां सदेवेदमित्यादीनामुपपत्तेः' इति । प्रपञ्चितश्चेदमस्माभिः आचार्यभाष्यतात्पर्ये (ई. उ-१६)। अत्रापि, भाष्य एव तत्त्वमसिघट्टे इदमाविष्करिष्यते । एवमपृथक्सिद्धिरूपा-भेदतात्पर्ये च आरम्भणवाक्यैस्तार्किकखण्डनस्य नैव प्रसक्तिः । अवयवावयविभेदेऽपि अपृथक्सिद्ध्यैव मृदयं घट इत्यादिव्यवहारस्य, एकविज्ञानेन सर्वविज्ञानस्य चोपपन्नत्वात् । एतदन्यथानुपपत्त्या

नन्वेवम्, 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यधिकरणे प्रपञ्चस्योपादानभूतब्रह्मणा अभेदासम्भवादुपादानोपादेयाभेदसमर्थनं विरुद्धचेतेति चेत्—

१. [भवन्मतेऽपि ब्रह्मणो ब्रह्माभेदस्य सिद्धतया अधिकरण-वैयर्थ्यप्रसङ्गात्। तर्हि जगतोऽनन्यत्वं कथमुपपादनीयमिति चेत्—न हि तस्मिन्नधिकरणे उपादानोपादेयस्वरूपाभेदः समर्थ्यते। तयोरभेदे कारकव्यापारवैयर्थ्यप्रसङ्गात्। अपितु तदभिन्नसत्ताकत्वम्। तत्सत्ता-तिरिक्तसत्तानपेक्षित्वमिति यावत्। न च तत्सत्तातिरिक्तसत्ताशून्यत्व-मात्रेण प्रपञ्चस्य मिथ्यात्वं शक्यशङ्कम्, गुणगतजात्यनभ्युपगन्तृमते रूपादिगतसत्ताजात्यनभ्युपगमेऽपि द्रव्यगतसत्तयैव रूपादिषु सदिति-व्यवहाराभ्युपगमेऽपि तन्मिथ्यात्वाप्रसक्तिवत् उपादानसत्तयैव उपादेये

---

कार्यकारणैक्यमवस्थाभेदमात्रञ्च नोपपादयितुं शक्यत इति एवं तार्किकखण्डनं हि न स्यात्। अवश्यमेव च, 'तत् तेज ऐक्षत.' 'ता आप ऐक्षन्त' इत्यत्र तेजआदिपदे विशिष्टपरत्वं वक्तव्यम् ईक्षण-कर्तृत्वान्वयायेति, 'तत् तेजोऽसृजत' इत्येवं तेजश्शब्दाद्यपि तत्समानार्थमिति, सिद्धमेव, 'बहु स्याम्' इति बहुपदम्, इदमिति पदञ्च विशिष्टवाच्येवेति क विशेषणमात्रपरता।

विशिष्टस्यैवोपादानोपादेयभावे विलक्षणत्वाधिकरणविरोधोऽपि न। तत्र हि—स्थूलावस्था ब्रह्मोपादेयतावच्छेदिका न भवति, तद्विलक्षणनिष्ठत्वात्। यत् यद्विलक्षणनिष्ठम्, न तत् तदुपादेय-तावच्छेदकमिति पूर्वपक्षः। तत्र व्यभिचारप्रदर्शनम्, 'दृश्यते तु' इति सूत्रेण। अथ स्थूलावस्था ब्रह्मोपादेयतावच्छेदिका न भवति, ब्रह्मनिष्ठत्वाभावादिति साधनार्थम्, सा न ब्रह्मनिष्ठा तद्विलक्षण-निष्ठत्वादित्याक्षेपे, कार्यकारणयोर्वैलक्षण्येऽपि अभेदस्याक्षतत्वाद-

सदिति प्रतीत्युपपत्तौ सत्तान्तरकल्पने मानाभावादिति युक्त्या सत्तान्तरानभ्युपगममात्रेण मिथ्यात्वशङ्कायाः बुद्धिदौर्बल्यकारितत्वात्। 'नैकस्मिन्नसम्भवात्' इति सूत्रे, "कालस्य पदार्थविशेषणतयैव प्रतीतिः।

---

त्रापि व्याप्तिभङ्गः असदिति सूत्रेऽभिप्रेतः। तर्हि तादृशावस्थानां ब्रह्मनिष्ठत्वे ब्रह्मजगदभेदादसामञ्जस्यशङ्कायाम्, 'न साक्षात् तन्निष्ठत्वम्, किंतु प्रकृतिरूपतनुद्वारा, आत्मनि बालत्वादिवत्' इति, 'न तु दृष्टान्तभावात्' इत्यनेन दर्शितम्। तावता विशेष्यं प्रति विशेषणस्योपादेयत्वमेष्टव्यमिति न सिध्यति। तथाचोपादेयतावच्छेदकीभूतस्थूलावस्थाश्रयत्वं सद्वारकं ब्रह्मणोऽपि भवतीत्यस्याज्ञानात् पूर्वपक्षः; तत्प्रतिबोधनञ्च सिद्धान्ते इति सुवचम्। एवञ्च विलक्षणत्वाधिकरणे प्रपञ्चगतावस्थामादायैव ब्रह्मण उपादानत्वं समर्थ्यते; प्रकृत्यधिकरणे च परिणामसूत्रे स्वगतावस्थामादायापि तदिति विवेक्तव्यम्।

कृत्स्नप्रसक्त्यादिशङ्का तु विशिष्टोपादानत्वपक्षेऽपि भवतीति श्रीभाष्य एव दर्शितमस्ति। आरम्भणाधिकरणे च, 'असदिति चेन्न प्रतिषेधमात्रत्वात्' इति सूत्रे यत् अनन्यत्वमुक्तम्, तदेवानन्यत्वमाक्षिप्य स्थाप्यत इति भावितमेव। न हि अपृथक्सिद्धिरूपाभेदः तत्र सूत्रे उक्तः। सर्वमिदमिह सप्तमखण्डभाष्येऽन्तेऽभिप्रेतमित्यपि द्रष्टव्यम्।

एवमपि यदि गुणगुणिनयेनापृथक्सिद्धविशेषणं प्रति ब्रह्मण उपादानत्वमिष्यते, तदन्यत्। परंतु, 'सर्वं खल्विदं ब्रह्म' इत्यत्र सर्वपदस्य विशिष्टपरत्वाभावे मुख्याभेदपरसामानाधिकरण्यायोगात् सर्वत्रप्रसिद्ध्यधिकरणभाष्याद्यनुरोधात् विशिष्टपरत्वमेवेति तत्र कथं तदनत्वान्वय इत्येतदवशिष्यते।

तत्रेदमुपक्षिप्यते। जीववाचिपदस्य जीवविशिष्टपरत्वेऽपि अनन्यथासिद्धजीवलिङ्गान्वयो यथेष्यते, यथा च व्यासार्यैः, 'ब्राह्मणो

तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः । कालोऽस्तीति व्यवहारो जात्याद्यस्तित्वव्यवहारतुल्यः" इति स्पष्टमेव भगवता **भाष्यकृता** भाषितत्वात् । **व्यासार्यै**रपि, 'पृथक्प्रतिपत्तिकार्याणामेव पृथगुत्पत्त्यादिकमपेक्षितम् । अवस्थायास्तु पृथक्स्थितिप्रतिपत्तिकार्यानर्हत्वात् न पृथगुत्पत्त्यादिकमपेक्षितम्' इति निर्णीतम् । अतोऽपृथक्सिद्धानां पृथक्सत्ताऽनपेक्षितेति सिद्धम् । अपृथक्सिद्धत्वे च पृथगुत्पत्त्याद्यनपेक्षा तज्ज्ञाततयैव ज्ञातत्वमुपपद्यत इति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽपि सिद्ध्यति । ततश्च आरम्भणशब्दादिभ्यः उप(?)साध्यमानमनन्यत्वम्, 'अनन्या राघवेणाहं भास्करेण प्रभा यथा' इतिवत् अपृथक्सिद्धत्वलक्षणमेव ; न तु स्वरूपाभेदः । अपृथक्सिद्धकारणत्वमेव च उपादानत्वम् । अयं चार्थो विस्तरेण **मुण्डकोपनिषत्प्रकाशिकायां** प्रपञ्चितः । पक्षान्तरञ्च उपन्यस्तम् । तयोर्मध्ये यत् उक्तम् (युक्तम् ?), तत् विद्वद्भिः स्वीक्रियताम् । ]

---

**यजेतेत्यादौ ब्राह्मणादिशब्दानां ब्रह्मपर्यन्तत्वेऽपि ब्राह्मणः शुक्ल इतिवत् विशेषणभूतजीवमात्रे कर्मवश्यत्वान्वयः' (३-२-१४) इति, 'ब्रह्माध्यतिष्ठत् भुवनानि धारयन्निति भुवनानि धारयन् ईश्वरो ब्रह्मशब्दवाच्यं स्वात्मानमेवाध्यतिष्ठत्' (१-४-२५) इति चोक्तम्, तथा भविष्यति । विशेष्ये बाधितं विशेषणमुपसंक्रामतीति न्यायस्य सर्वसंप्रतिपन्नत्वादिति ।**

**तथाचातिचर्चायामेवमुक्तावपि, 'स्वमपीतो भवति पुरुषः' इत्यत्रैव समानाधिकरणनिर्देशाभावात् पुरुषपदेन जीवमात्रस्य लोकप्रसिद्धिप्रदर्शनबलविवक्षणीयस्य ग्रहणेऽपि स्वपदेन विशिष्टब्रह्मग्रहणेन तत्रास्य संभावितस्य लयप्रकारस्य अपीतपदेन कथनसंभवात्**

*२. ('अनन्या राघवेणाहं भास्करेण प्रभा यथा' इतिवत् अपृथक्सिद्धत्वलक्षणाभेदस्यैव समर्थितत्वात्। तावतैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेश्च । अपृथक्सिद्धकारणत्वस्यैवोपादानशब्दार्थत्वात्) ।

३. (न तस्मिन्नधिकरणे उपादानोपादेययोः स्वरूपाभेदः समर्थ्यते । तयोरभेदे कारकव्यापारवैयर्थ्यप्रसङ्गात् । अपितु तदपृथक्सिद्धत्वम् । तच्च तत्सत्ताधीनसत्ताकत्वम् । एतादृशस्यापृथक्सिद्धत्वस्याभेदव्यवहारप्रयोजकत्वम्, 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इति प्रमाणसिद्धम् । अतो न तदधिकरणविरोधः ।

यद्वा अस्मन्मते स्थूलचिदचिदात्मकप्रपञ्चस्येव तद्विशिष्टस्यापि

---

किमत्र विशिष्टपरत्वे विशेषास्थया । सन्मूला इति वाक्ये च प्रजा-

---

* 759 पुटे भवन्मतेऽपीत्येतत्प्रभृत्येतावत्पर्यन्तग्रन्थस्थाने कोशान्तरेऽयं पाठभेदः। अन्यत्र तु कोशे पाठान्तरं *एवं चिह्नितम् ॥ अत्र किञ्चित् विचार्यम् यथा यद्वेति, वस्तुतस्तु इति च पक्षद्वयात् पश्चात् अतश्चेत्यादिना पूर्वोक्तापृथक्सिद्ध्युपसंहारस्यायोगः, तथा अतश्चेत्यादिवाक्यं केवलपश्यन्तमात्रेण समाप्तं न शोभनम् । अतश्चेत्याद्यनन्तरं तु इहचेत्यतः पूर्वं यद्वेत्यादि स्यात् । अन्यथा वा। अत्र, 'बृहदारण्यकप्रकाशिकायां प्रतिपादितः' इत्युक्तश्च इदंशब्दस्य विशिष्टपरत्वोपपादनशेषभूतम् । क्व कोशपाठो मुण्डकप्रकाशिकानुसारी । एवमपि उपरि, 'यत्र नान्यत् पश्यति' (७-२४) इति वाक्यभाष्ये तत्सत्ताधीनसत्ताकत्वरूपार्थस्यैवादरणात् मुण्डकप्रकाशिकावैलक्षण्यस्य किञ्चित्प्रतीतेः तृतीयपाठस्वीकार इह वक्ष्यमाणैकरूप्याय युक्त इव । इहच इत्यादिकश्च प्रकृतोपयुक्तं पाठान्तरे अदृश्यमानं तृतीयपाठकोशात एव ग्राह्यमस्ति ।

ब्रह्मण उपादेयत्वादुपादानभूतसूक्ष्मचिदचिच्छरीरकस्य ब्रह्मण उपादेय-भूतस्थूलचिदचिद्विशिष्टब्रह्माभेदसमर्थनपरतया आरम्भणाधिकरणस्योपपत्तेर्न चोद्यावकाशः । वस्तुतस्तु यथा को भवानिति सौवीरराजप्रश्नस्य प्रकृतिसंसृष्टात्मविषयत्वेऽपि वस्तुगत्या भवच्छब्दमुख्यार्थत्वं परिशुद्धात्म-स्वरूपस्यैवोचितमिति मत्वा तस्यैव भवच्छब्दमुख्यार्थत्वं प्रदर्शयन् आदिभरतः, 'यदा समस्तभूतेषु पुमानेको व्यवस्थितः' इति प्रत्य-वोचत्—यथा वा अथर्वशिरसि रुद्रं प्रति देवैः प्रयुक्तस्य, 'को भवान्' इति प्रश्नस्य पुरोवर्तिरुद्रमात्रपरत्वेऽपि भवच्छब्दस्य परमात्मपर्यन्तत्व-शिक्षणाय, 'अहमेकः प्रथममासम्' इत्यादिवचनप्रवृत्तिः, एवमेव, 'इदमग्र आसीत्' इतीदंशब्दस्य विशेषणमात्रपरत्वे प्राप्ते विशेष्य-पर्यन्तत्वशिक्षणाय स्थूलचिदचिच्छरीरं ब्रह्म प्रति सूक्ष्मचिदचिच्छरीरकं ब्रह्म उपादानमित्येतदर्थप्रतिपादकस्योत्तरसन्दर्भस्य प्रवृत्तौ दोषाभावादिति द्रष्टव्यम् । अयं चार्थः, 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत' इति श्रुतिव्याख्यानावसरे **बृहदारण्यकप्रकाशिकायां** प्रतिपादितः तत्रानुसन्धेयः ।

अतश्च आरम्भणाधिकरणे तदनन्यत्वमित्यनेन, 'अनन्या राघवे-णाहं भास्करेण प्रभा यथा' इतिवदपृथक्सिद्धत्वलक्षणाभेदस्यैव समर्थित-त्वात् । तावतैवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेश्च । अपृथक्सिद्ध-कारणत्वस्यैवोपादानशब्दार्थत्वात् ।

इह च 'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो

---

**शब्दो विशेषणमात्रपर एव, तावतैवान्वयसामञ्जस्यादिति भाष्य-स्यान्तर आशय इति ।**

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयते, एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते। प्राणबन्धनँ हि सोम्य मन इति ॥ २ ॥**

---

भवति स्वमपीतो भवति' इत्यत्र पुरुषशब्दितस्य कार्यावस्थजीवस्य कारणावस्थस्वशब्दितजीवविशिष्टतया स्वशब्दवाच्येन परम्परया स्वावस्थाश्रयतयोपादानभूतेन सता सम्पत्तेरपि सूपपादतया प्राज्ञेनात्मना संपरिष्वक्तः' इति श्रुत्यैकार्थ्यमपि स्वरसत एव सिद्ध्यतीत्यलमतिचर्चया)।

प्रकृतमनुसरामः ॥ **स यथा....**। यथा पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण बद्धः प्रतिदिशं पतित्वा आश्रयान्तरमलब्ध्वा बन्धनं हस्तमेवाश्रयते, एवमेव हे सोम्य ! सुषुप्तिकाले **तत्**, 'अन्नमयं हि सोम्य मनः' इति प्राङ्निर्दिष्टं मनः दिशंदिशं पतित्वा जाग्रत्स्वप्नयोर्नानाविधविषयग्रहणव्यापृतं भूत्वाऽपि तत्रतत्रायतनं विश्रममलब्ध्वा विश्रमाय मुख्यप्राणेन संश्लेषविशेषमापद्यत इत्यर्थः। अत्र हेतुमाह— **प्राणबन्धनं हि सोम्य मन इति**—यतः प्राणे हि मन निबध्यते इत्यर्थः। यतः प्राणे हि मनः निबध्यते, अत एव हि प्राणे उत्क्रान्ते मनआदीनामप्युत्क(क्रा)मः। अतश्च सुषुप्तिदशायां वागादीन्द्रियसहितं मन, 'वाङ् मनसि सम्पद्यते, मनः प्राणे' इति प्रयाणकालोक्तन्यायेन प्राणे संश्लेषविशेषमापन्नं सत् उपरतव्यापार भवति। सुषुप्तिदशायां

---

**मुख्यप्राणेनेति। नात्र प्राणशब्दः शाङ्करे सद्विद्याविजये चोक्तरीत्या परमात्मपरो जीवात्मपरो वा। किंतु स्वरसप्रतीतमुख्यप्राणपर**

**अशना[या]पिपासे मे सोम्य विजानीहीति । यत्रैतत्पुरुषोऽशिशिषति नाम, आप एव तदशितं नयन्ते । तत् यथा गोनायोऽश्वनायः**

---

प्राणमात्रमनुपरतव्यापारमास्ते ; 'स यदा स्वपिति प्राणमेव वागप्येति, प्राणं चक्षुः, प्राणं श्रोत्रम्, प्राणं मनः' इति श्रुतेः ।

एवं जीवस्य परमात्मोपादेयत्वसिद्ध्यर्थं सुषुप्तिकाले परमात्मसम्पत्तिं तत्प्रसङ्गात् वागादीन्द्रियाणां प्राणे संश्लेषविशेषञ्च प्रतिपाद्य अशनायादिनामनिर्वचनमुखेन च (मुखेनापि) परमात्मनो जगन्मूलतामुपपादयति—**अशनायापिपासे मे सोम्य विजानीहीति** । स्पष्टोऽर्थः । **यत्र...नयन्ते**— । **यत्र** यदा पुरुषोऽशिशिषतीत्येत**न्नाम** । पुरुषोऽशिशिषतीति शब्दं यदा लोकाः प्रयुञ्जत इत्यर्थः । यदा पुरुषस्याशिशिषा भवतीति यावत् । **नाम**शब्दः प्रसिद्ध्यर्थो वा । तदा आपः तदशितं **नयन्ते** । जीर्णतां प्रापय्य रसरूपेण शरीरं नयन्ते । तेन अशिते जीर्णे पुनरशिशिषा जायते इत्यर्थः । **तद्यथा...अशनायेति** । गां नयतीति **गोनायः** । यथा गोनेतारं गोनाय इत्याचक्षते,

---

एवेति भावः । अयमर्थः श्रुत्यैव दर्शितोऽपीत्याह स यदा स्वपितीत्यादिना । स यथा शकुनिरित्यादिवाक्यं किमर्थं प्रवृत्तमिति चेत्—विषयप्रवणत्वान्मनसः, सुषुप्तिरेव कथमित्याशङ्काशमनार्थम् ।

एवं प्राणे मनःप्रभृतिनिरोधेन क्रियमाणसुषुप्तिमुखेन प्रजाशब्दार्थभूताचेतनविशिष्टचेतनांशभूतस्य चेतनस्य सदुपादानकत्वमुपपाद्य अचेतनांशेऽपि सदुपादानकत्वं सुषुप्तिकालिकप्राणसहकृताग्निकार्यमुखेनोपरि कथ्यते । अशनायापिपासे हि गृहीत्वा तत् उपरि कथ्यते । ते च, 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' इत्युक्तरीत्या तस्यामेव सुषुप्तौ उक्तप्राणेन स्वसहकृतजाठराग्निना अशितपीतजरणं विधाय आपाद्यमाने इति । अतोऽपि पूर्वं मुख्यप्राण एव प्रस्तुत इति ध्येयम् ।

पुरुषनाय इति, एवं तदप आचक्षतेऽशनायेति । तत्रैतच्छुङ्गमुत्पतितँ सोम्य विजानीहि, नेदममूलं भविष्यतीति ॥ ३ ॥

तस्य क्व मूलँ स्यादन्यत्रान्नात् ।

एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छ, अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ, तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ ।

सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥४॥

अथ यत्रैतत्पुरुषः पिपासति नाम, तेज एव तत् पीतं नयते । तत् यथा गोनायोऽश्वनायः पुरुषनाय इति, एवं एतत् तेज आचष्ट उदन्येति । तत्रैतदेव शुङ्गमुत्पतितँ सोम्य विजानीहि । नेदममूलं भविष्यतीति ॥ ५ ॥

---

यथा वा अश्वनेतारं पुरुषनेतारञ्च अश्वनायः पुरुषनाय इत्याचक्षते लौकिकाः, एवमशितनेत्रीरपः अशनायेत्याचक्षत इत्यर्थः । **तत्र... विजानीहि** । अद्भिः रसभावं नीतेऽन्ने उत्पन्नमेतत् शरीराख्यं [वट] शुङ्गसदृशं कार्यं विजानीहीत्यर्थः । नन्वमूलमेवेदं भवतु इत्यत्राह— **नेदममूलं भविष्यतीति** [कार्यमात्रस्य सकारणकत्वादित्यर्थः ।

तर्हि तस्यान्नातिरिक्त मूलान्तरं कल्प्यतामित्यत्राह **तस्य....अन्नात्।** कार्यस्य शरीरस्य स(सन्)मूलकत्वात् , मूलान्तरस्य चानुपलम्भात् , उपलब्धमन्नमेव मूलमित्यर्थः । **एवमेव खलु....अन्विच्छ** । यथा शरीरेण कार्यभूतेनोपचीयमाने तत्कारणमन्नमनुमीयते, एवमेव अन्नेन कार्येण अपः कारणमनुमिनुजानीहीति यावत् । एवमुत्तरत्रापि । ततः किमित्यत्राह । **सन्मूला....सत्प्रतिष्ठाः** । एतस्य वाक्यस्यार्थः पूर्वमुक्त एव ।

**अथ....उदन्येति** । उदकनेतृत्वात् तेजः उदन्येत्युच्यत इत्यर्थः । **तत्रैतदेव शुङ्गमुत्पतितं सोम्य विजानीहि ।** तत्र तेजसा शोष्यमाणास्वप्सु उत्पन्नं देहाख्यं शुङ्गमित्यर्थः । शिष्टं पूर्ववत् ॥

तस्य क्व मूलँ स्यादन्यत्राद्भ्यः। अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ, तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ।

सन्मूलाः सोम्येमाः सर्वा प्रजाः सदायतनाः सत्प्रतिष्ठाः।

यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति, तदुक्तं पुरस्तादेव भवति।

अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि संपद्यते, मनः प्राणे,

---

**तस्य...सत्प्रतिष्ठाः**। पूर्ववदर्थः।

ननु तेजोबन्नमूलकत्वे शरीरस्य लोहितमांसादिरूपेण परिणामः कथं स्यादित्याशङ्क्य पूर्वोक्तं स्मारयति **यथा तु खलु...भवति**। 'अन्नमशितं त्रेधा विधीयत' इत्यादिना पूर्वमुक्तं भवतीत्यर्थः।

एवं सुषुप्तौ सत्सम्पत्तिं जीवस्य प्रदर्श्य प्रयाणकालेऽपि सत्सम्पत्तिं प्रदर्शयति। **अस्य...देवतायाम्**। **प्रयतः** म्रियमाणस्येत्यर्थः। अत्र वाचो मनःप्रकृतिकत्वासम्भवात् व्यापारोपरमहेतुभूतसंश्लेषविशेष एव वाचो मनसि लयः। मनसः प्राणे लयोऽपि तादृश

---

क्व मूलमिति। शुङ्गः=अङ्कुरः। न च मूलं विना अङ्कुरोऽस्तीति। अद्भिः पीताभिः अशितस्य कठिनस्य द्रवीभावः प्रथमं जठरे। तेनान्नस्य अप्सु लयः सिध्यति। द्रवीभूतानाञ्च जाठराग्निना पाचनं रसादिपरिणामौपयिकं शोषणम्। तत्र शोषणवशादपां न्यूनत्वम् अबंशानामग्नौ लयादेवेति लयमुखेनोपादानमत्र खण्डे निरूपितं भवति।

अशितादेः शरीररूपेण परिणामः कया विधयेत्यत्र पूर्वोक्तं स्मारयति यथा त्विति।

एवमशनायोदन्यानिर्वचनेन अन्नस्याप्सु, अपां तेजसि च लयो दर्शितः। न तेजसः सति लयः। तदर्थं प्रायणरीतिं प्रदर्शयति अस्य

एव । "मनसि करणग्रामं प्राणे मनः पुरुषे च तं झडिति घटयन् भूतेष्वेनं परे च तमात्मनि ।" इत्युक्तरीत्या प्राणो जीवे सम्पन्नस्सन् जीवेन सह **तेजश्शब्दो**पलक्षितेषु सर्वेषु भूतेषु सम्पन्नो भवति । ततः परं सुखदुःखोपभोगायासविश्रमाय **तेजश्श**ब्दितानां सजीवानां भूतसूक्ष्माणां **परस्यां देवतायां** परमात्मनि सम्पत्तिर्भवतीत्यर्थः ।

---

सोम्येत्यादिना । एवम्परमिदं वाक्यं सुषुप्ताविव प्रायणेऽपि पुरुषस्य सत्संपत्तिपरमपि भवितुमर्हति, चिदंशस्योपादेयत्वोपपादनाय खण्डारम्भात् इत्यभिसंधायावतारयति एवं सुषुप्ताविति ।

तेजसीति । सत्सु भूतान्तरेषु तेजोमात्रकथनं तस्यैव सति लयस्य संप्रति वक्तव्यत्वात् । तेजोंशाधिक्याच्च । अत एव मरणानन्तरमौष्ण्यानुपलम्भः । ऊर्ध्वगतिश्च तेजसस्सुकरा । अत एवावरोहत्सु जीवेषु पतनौचित्याय अबंशस्यैवाधिक्यं सोमराजभावापगमे पर्जन्यपरिष्वङ्गानुगुणं संपद्यमानम् ; न तेजोंशस्येति । अत्र तेजश्शब्दस्य भूतान्तरोपलक्षणत्ववत् वाक्छब्दस्य इन्द्रियान्तरोपलक्षणत्वमपि द्रष्टव्यम् । विशिष्य तत्कथनञ्च उपकरणमध्ये वाक्चक्षुश्श्रोत्रमनःप्राणानां पञ्चानामेव प्राधान्यस्य केनादिसर्वोपनिषदादृतत्वात्, तत्रापि वाङ्मनःप्राणानां प्राधान्यस्य बृहदारण्यके स्पष्टत्वात् ; अत एव अन्नमशितं त्रेधेति समनन्तरस्मारिते वाक्ये एषां त्रयाणामेवाशितसंबन्ध्यणिष्ठांशत्वावेदनेन मनःप्राणवत् वाच एवोपस्थित्यतिशयाच्चेति भाव्यम् ।

अमुख्य एवायं लयः, मुख्यलयोऽप्येवंरीत्या भाव्य इत्याशयेन दर्शितः । चितः परमात्मनि लय इहापि मुख्य एव । अत एव भाष्ये तन्मात्रग्रहणेन प्रायणवाक्यावतारणम् । परस्यामिति पदविशेषेण, तस्याः कुत्र लय इति शङ्का निरुद्धा ।

स य एषोऽणिमा (६) ऐतदात्म्यमिदं सर्वम्। तत् सत्यम्। स आत्मा। तत् त्वमसि श्वेतकेतो इति।

---

**स य एषोऽणिमा**। एतादृशः सच्छब्दितः स एषः **अणिमा** अणुवद्दुर्विज्ञेयः। मानान्तरागोचर इत्यर्थः। **ऐतदात्म्यं....आत्मा**। अस्यार्थः पूर्वमेवोक्तः। एवं सर्वत्र सिद्धं सदात्मकत्वं श्वेतकेतावुपसंहरति **तत्त्वमसि श्वेतकेतो** इति। त्वंशब्दोऽन्तर्यामिपर्यन्तः।

---

स य एषोऽणिमेत्यादिकं नवस्वपि खण्डेषु अभ्यस्यते इति इदमेव प्रतिपिपादयिषितम्। प्रष्टुराशयं विज्ञाय तज्जिज्ञासाशमनाय अस्यैव भङ्गीभेदेन सर्वत्रोपपादनम्। इदं श्रुत्वा च श्वेतकेतुः, 'य एषोऽणिमा, ऐतदात्म्यमिदं सर्वम्, तत् सत्यम्, स आत्मा, तदहमसि' इत्यनुसंदध्यात्। तदनेनोपास्यसमर्पणं क्रियते। तत्र स य एषोऽणिमेत्यस्य यः स उक्तः उत्पत्तिलयस्थानत्वादिना, एषोऽणिमा सूक्ष्म इत्यर्थे अणिमत्वमत्र विधेयम्। यदि तु, "सैव हि सत्यादयः" इति सूत्रे अणिमादय इत्यनिर्देशात् भाष्येऽपि सत्यत्वाद्युपपादनभाषणाच्च सत्यत्वादिकमेव प्रकृतवाक्यविधेयमिति मन्यते; तर्हि,'य एषोऽणिमा' इति उत्पत्तिलयहेतुतौपयिकसूक्ष्मताविशिष्टतया पूर्वखण्डसिद्धार्थानुवादमात्रमिति, य एषोऽणिमा ऐतदात्म्यमिदं सर्वमित्येकं वाक्यम्। स य इति तच्छब्दस्तु अत्रैव २-१-४, ३-१९-४ इत्यादिस्थलेष्विव यच्छब्देनैकतामापन्नः। अणिमांशस्याविधेयत्वादेवान्तिमखण्डे एतदनुक्तिः। एवञ्च इदं सर्वं सजीवं जगत् ऐतदात्म्यम्, एषोऽणिमा आत्मा यस्य तत्। 'सैव हि सत्यादयः' इति सूत्रबलादेव सत्यपदं न इदं सर्वमित्यस्य विशेषणम्। किंतु सतः सत्यत्वविधायकम्। तत् अणिमरूपं सूक्ष्मं विशिष्टं सत् सत्यम्। विधेयप्राधान्यात् तत्, स इति लिङ्गभेदः। तत् सत्यमित्यनेन, मृदादिवदुपादानभूतमपि

ननु, 'तत्त्वमसि' इत्यत्र मानान्तरसिद्धत्वेन उद्देश्योपादेयविभागाभावस्य भाष्यकृतोक्तत्वात् तच्छब्दानुरोधेन प्रथमपुरुषो वा किं न स्यादिति चेत्–उच्यते । मानान्तरसिद्धत्वेऽपि त्वंशब्दार्थस्य तच्छब्दार्थापेक्षया प्रकृतित्वस्य विवक्षितत्वात्; प्रकृतेरेवास्तिक्रियाकर्तृत्वात्

---

यस्मादात्मभूतम्, तस्मात् निर्विकारम्; कुलालादिविलक्षणस्वतन्त्राधिष्ठातृत्वात् कर्तृत्वप्रयुक्तविकाररहितमपीत्युच्यते । स आत्मेत्यनेन, न केवलं कार्यकारणभावप्रयोजकावस्थाविशेषापन्नस्य, किन्तु तदनापन्नस्य द्रव्यस्याद्रव्यस्य सर्वस्यायमपृथक्सिद्धधर्मी साक्षाद्वा परम्परया वेति सर्वात्मत्वमुच्यते। तत् त्वमसि = स्थूल एवम्भूतस्त्वं सर्वदा सूक्ष्मं तादृशं सदेवासीत्यर्थः ।

तथाच पूर्वखण्डसिद्धजगदुत्पत्तिलयहेतुत्वापादकाणिमत्वेन सह सत्यत्वाऽऽत्मत्वस्वान्तर्यामित्वानि उपास्यगुणाः सर्वैः खण्डैरथोपपाद्य कथिता भवन्ति। तत्त्वमसिविचारावसरे भाष्ये ऐतदात्म्यमिति पदस्य, 'तस्यैष आत्मा' इति विवरणात्, एष आत्मा यस्येति विग्रहो ज्ञायते । आत्मशब्दः शरीरप्रतिसंबन्धिपरः, न तु स्वरूपपरः। वैयर्थ्यात्। अत एव भाष्यम्—"ऐतदात्म्यमिदं सर्वमिति प्रतिज्ञातार्थस्य तत्त्वमसीति सामानाधिकरण्येन विशेषे उपसंहारः" इति । अत्र सामानाधिकरण्यपदविशेषपदाभ्यां विवक्षितं विशदीकृतं व्यासार्यैः, "वैयधिकरण्येन प्रतिज्ञातस्य सामानाधिकरण्येनोपसंहारः; सामान्येन प्रतिज्ञातस्य विशेषे उपसंहार इत्यर्थः" इति । तेन सर्वमिति विशेषणमात्रपरम्, आत्मशब्दश्च शरीरप्रतिसंबन्धिपर इति सिद्ध्यति । नन्वेतद्वाक्योक्तशरीरात्मभावे सन्मूला इत्यादिना हेतुकथनमिति कथमिति चेत्—उच्यते । केवलोपादानोपादेयभावे शरीरात्मभावो न सिद्ध्यति; मृद्घटयोः तदभावात् । केवलधारणनियमनबलादपि न सः, शरीरादन्यस्यापि धार्यत्वात्,

मध्यमपुरुषो भवति। अत एव, 'यदग्ने स्यामहं त्वम्, त्वं वा स्या अहम्' इत्यत्र, 'अहं त्वं स्याम्, त्वं वा अहं स्याः' इति प्रकृत्याश्रयः पुरुषो भवतीति, 'युष्मद्युपपद' इति सूत्रे प्रतिपादितम्। ततश्च त्वंशब्दार्थस्य प्रकृतित्वस्य विवक्षितत्वात्, मानान्तरसदसद्भावयोरप्रयोजकत्वात्, त्वंशब्दार्थप्रकृतित्वाश्रयः **असी**ति मध्यमपुरुष एव भवति। अत एव **व्यासार्यैः**—"आत्मेति तूपगच्छन्ति" इत्यधिकरणे तथैवोपपादितम्। 'न किञ्चिदुद्दिश्य किञ्चिद्विधीयत' इति **भाष्य**स्यानुवाद्यत्वविधेयत्वप्रतिषेधपरत्वेऽपि प्रकृतिविकृतिलक्षणोद्देश्यविधेयभावप्रतिषेधपरत्वाभावात्। **न्यायपरिशुद्धौ**— 'सुवर्णं खदिराङ्गारसदृशे कुण्डले भवतः' इति

---

नियम्यत्वाच्च। उपादानत्वविशिष्टधारकत्वादि तु शरीरात्मभावसाधकम्, अव्यभिचरितत्वात्। एवम्, जगद्ब्रह्मणोर्यदि शरीरात्मभावो न स्यात्, तर्हि विशिष्टवेषेणोपपादनीय उपादानोपादेयभावः सार्वकालिकधार्यधारकभावादिश्च न स्यादिति तदन्यथानुपपत्त्या शरीरात्मभावसिद्धिरिति च सन्मूलत्वादेर्हेतुत्वम्। हेतुत्वमिदं ज्ञापकत्वरूपम्। शरीरं नाम चेतनापृथक्सिद्धद्रव्यम्, अपृथक्सिद्धिनिरूपकश्चेतन आत्मेति। इदमात्मत्वं धारकत्वोपादानत्वयोः प्रयोजकम्। अतोऽग्निधूमयोरिवेह यथार्हं कारकज्ञापकहेतुभाव इति।

तदेवं प्रकृतवाक्यस्य संभवन् अर्थो दर्शितः। न चैतावता ऐतदात्म्यमित्यादेः पूर्वं भाष्यदर्शितं विवरणममूलं मन्तव्यम्, वेदार्थसंग्रहे तथार्थस्योक्तत्वात्। आत्म्यमिति पदरीतिरपि तत्र टीकायां द्रष्टव्येति।

अत एव व्यासार्यैरिति। महासिद्धान्ते तथाऽनुक्तावपि आत्मत्वाधिकरणे तदुक्तेरेवमेवाशयः स्यादिति भावः। ईशावास्यश्रीदेशिकभाष्ये तु स्पष्टमिदम्। ततोऽधिकं न्यायपरिशुद्ध्युक्तमप्याह

**महाभाष्य**वाक्यमुदाहृत्य पुरुषस्योद्देश्यानुसारित्वनियमाभावः समर्थितः ।

ननु, 'तत्त्वमसि श्वेतकेतो' इत्यत्र, "संबुद्धिस्तावत् आत्मविद्योपदेशेन श्वेतकेतुमात्रपर्यवसितेति नासंबोध्यसंबोधनम्" इति **न्यायपरिशुद्ध्**युक्तरीत्या श्वेतकेतो इति संबोध्यत्वस्य परमात्मन्यसम्भवेन त्वंशब्दनिर्दिष्टत्वमपि परमात्मनो न सम्भवति ; त्वंशब्दस्य संबोध्यातिरिक्तविषयत्वस्य क्वाप्यदर्शनादिति चेत्—

अत्रोच्यते—'ऐतदात्म्यमिदं सर्वमित्युक्तस्य तत्त्वमसीति विशेषे उपसंहारः' इति **भाष्ये** भाषितत्वात् तत्त्वमसीत्यत्रापि सर्वशब्दस्थानापन्नस्य त्वंशब्दस्य संबोध्यविषयभूतजीवमात्रपरत्वमेव । ऐतदात्म्यपदस्थानापन्नस्य तदित्यस्य तदात्मकत्वमेवार्थः । ततश्च सर्वं तदात्मकमितिवत् त्वं तदात्मक इत्यर्थः । न चैवं सति तच्छब्दस्य तदात्मकत्वे लक्षणा स्यादिति वाच्यम्—अपर्यवसानवृत्त्या त्वंशब्दस्य तदन्तर्यामिपरत्वपक्षस्यापि लक्षणापेक्षया जघन्यत्वात् । 'साक्षादप्यविरोधं जैमिनिः' इत्यत्र **व्यासार्यै**रपर्यवसानलब्धार्थस्य यौगिकार्थतुल्यत्वश्रवणात्, यौगिकार्थस्य च रूढिपूर्वकलक्षणापेक्षया जघन्यत्वस्य प्रोद्गात्रधिकरणे मीमांसकै-

---

**न्यायेति । अत्र पक्षे तदित्येवोद्देश्यम् । श्रीभाष्ये उद्देश्योपादेयविभागस्योपेक्षितत्वात् तदित्यस्य प्राधान्यमेव काममस्त्विति भावः । पुरुषस्येति तिङ्विभक्तेरित्यर्थः। पूर्वपक्षिमत एव स्थित्वा श्रुतिनिर्वाहप्रकारं कश्चिदाह अत्रोच्यत इति । एतन्निरसनगर्भं सांप्रदायिकमतञ्च समनन्तरं प्रपञ्चयिष्यते । लक्षणाऽपीयं न साम्प्रतिकी, भूरिप्रयोगादृतत्वादित्याह अपृथक्सिद्धवाचिनामिति ।**

राश्रितत्वात् । त्वंशब्दस्य संबोध्यातिरिक्तविषयत्वस्य क्वाप्यदर्शनात्, 'श्वेतकेतो तत् त्वमसि' इति त्रयाणां पदानां प्रतीयमानसामानाधिकरण्यभङ्गप्रसङ्गाच्च अपर्यवसानलक्ष्यार्थस्याऽऽश्रयणासम्भवात् । अपृथक्सिद्धवाचिनां सामानाधिकरण्यस्य लोकवेदयोर्बहुशो दृष्टचरत्वेन अपृथक्सिद्धजीवपरवाचिनोः त्वंतच्छब्दयोः सामानाधिकरण्येन प्रयोगस्याप्युपपत्तेः न त्वंशब्दस्य परमात्मपर्यन्तत्वमाश्रयणीयम् । वस्तुतस्तु 'ऐतदात्म्यम्' इति शब्दनिर्दिष्टं तदात्मकत्वमेव बुद्धिस्थत्वात् तच्छब्देन परामृश्यते । न तु सच्छब्दितं ब्रह्म । येन तदात्मकत्वलक्षणा दोषः स्यात् । ततश्च त्वं **तदसि** ऐतदात्म्यमसीत्यर्थः । अस्मिंश्च पक्षे न कस्यापि पदस्य लक्षणा । **साम्प्रदायिकास्तु**—'स आत्मा' इति पूर्वनिर्दिष्टस्यैव, 'तत्त्वमसि' इत्यत्र तच्छब्देन परामर्शस्योचितत्वात् तच्छब्देन सच्छब्दितात्मैवाभिधीयते । जघन्यं त्वंपदं तु अपर्यवसानवृत्त्या अन्तर्यामिपर्यन्तमभिदधाति । न च श्वेतकेतो इति संबोध्यस्य जीवस्यैव त्वंपदेन परामर्शो युक्त इति वाच्यम्; हे देवदत्तेति देवदत्तं संबोध्य तत्पुत्राभिप्रायेण, 'त्वमेवं कृतवानसि' इति प्रयोगदर्शनात् । इयांस्तु विशेषः—तत्र मुख्यानुपपत्त्या त्वंपदस्य पुत्रे लक्षणा । इह तु तदनुपपत्त्या अन्तर्यामिण्यपर्यवसानवृत्तिराश्रीयते ।

ननु, 'साक्षादप्यविरोधं जैमिनिः' इति सूत्रे व्यासार्यैरपर्यवसानवृत्तेर्योगतुल्यत्वसमर्थनात् योगस्य च रूढिपूर्वकलक्षणापेक्षया दौर्बल्यस्य प्रोद्गात्रधिकरणे मीमांसकैः समर्थितत्वात् लक्षणापेक्षया

जघन्यैवापर्यवसानवृत्तिरिति [पर्यवसितमिति] चेत्—

उच्यते । सत्यमुक्तं **व्यासार्यै**रपर्यवसानवृत्तेर्योगतौल्यम् । तथाऽपि न तस्याः लक्षणापेक्षयाऽपि दौर्बल्यम् , प्रमाणाभावात् । प्रोद्गातृ-शब्दरूढ्यर्थस्य बहुत्वासम्भवात् पाशमन्त्र इव वचनमविवक्षितार्थमिति पूर्वपक्षे—'अदितिः पाशान् प्रमुमोक्तु' इति पाशमन्त्रे बन्धनसाधनस्य **पाश**शब्दरूढ्यर्थस्य वा यौगिकार्थस्य वा लक्ष्यार्थस्य वा बहुत्वासम्भवात् पाशानिति बहुवचनस्याविवक्षितत्वेऽपि प्रोद्गातृपदयोगार्थस्य वा लक्ष्यार्थस्य वा बहुत्वसम्भवान्न बहुवचनस्याविवक्षा युक्तेत्येतावन्मात्रमेव प्रोद्गातृनयसिद्धम् । न तु योगार्थस्य लक्षणापेक्षया दौर्बल्यमपि । ततश्च योगस्य लक्षणापेक्षया दौर्बल्याभावात् तत्तुल्याया अपर्यवसानवृत्तेर्न लक्षणापेक्षया दौर्बल्यम् । ततश्च योगार्थप्रतिबन्धिकाया रूढेरपगमे योगार्थोन्मज्जनस्यानिवार्यतया लक्षणापेक्षया योगस्य प्राबल्यमेव युक्तम् ।

अत एवाजामन्त्रे **भगवता भाष्यकृता,** न जायत इत्यजेति-योग एवाश्रितः ; न तु पररीत्या छागत्वकल्पनम् । अत एव, 'जगद्वाचित्वात्' इत्यत्र 'यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वा एतत् कर्म' इत्यत्र **कर्म**शब्दस्य चलनादृष्टयोः रूढस्य 'रूढ्योः कलहायमानयोः योगो लब्धात्मा' इति न्यायमनुसृत्य **कर्म**शब्दस्य क्रियते इति कर्मेति जगद्वाचित्वमेवाश्रितम् । तथा अपशूद्राधिकरणेऽपि रूढ्यर्थानुपपत्तौ **शूद्र**शब्दस्य योग एवाऽऽश्रितः । ततश्च लक्षणापेक्षया योगस्य बलवत्त्वात् तत्तुल्याया अप्यपर्यवसानवृत्तेर्लक्षणापेक्षया च बलवत्त्वमेव ।

ननु, 'साक्षादप्यविरोधं जैमिनिः' इत्यत्रैव **व्यासार्यैः**, 'तात्पर्य-लिङ्गैः परमात्मपरतया निर्णीते प्रकरणे, तत्र चिदचिच्छब्दानां ब्रह्मपरत्वे चावश्यंभाविनि योगार्थ एवोचितः। यथा **आकाशप्राण**शब्दादौ। यत्र तु चिदचिल्लिङ्गान्यपि सन्ति, तत्रापर्यवसानवृत्त्या तच्छरीरकपरत्वम्' इति व्यवस्थायाः कृतत्वात् चिदचिल्लिङ्गाभावस्थले योगाश्रयणस्योक्ततया अपर्यवसानवृत्त्यपेक्षया योगप्राबल्यमेवाविष्कृतमिति चेत्-अस्तु योगा-पेक्षया दौर्बल्यमपर्यवसानवृत्तेः। तथाऽपि लक्षणापेक्षया अपर्यवसान-वृत्तिः प्रबलैव।

ननु, 'छन्दोभिधानात्--' इति सूत्रे--'**गायत्री**शब्दस्य भूतादि-पादव्यपदेशादिब्रह्मलिङ्गैः ब्रह्मपरत्वेऽवश्यंभाविनि सति मासाग्निहोत्रे सादृश्यविधित्सयाऽग्निहोत्रशब्दस्येव चतुष्पात्त्वलक्षणगायत्रीसादृश्यविधि-त्सया ब्रह्मणि **गायत्री**शब्दप्रयोगः। न च वैदिकशब्दस्य एतादृशगौण-वृत्त्याश्रयणमयुक्तमिति शङ्क्यम्; **संवर्गविद्या**याम्, 'ते वा एते पञ्चान्ये पञ्चान्ये' इति निर्दिष्टेषु वाय्वग्निसूर्यचन्द्रसलिल-प्राणवाक्चक्षु-श्श्रोत्रमनस्सु दशसु दशत्वसंख्यासाम्यात्, 'सैषा विराडन्नादी' इति छन्दोवाचि**विराट्**छब्दो गौण्या प्रयुज्यमानो दृष्टः। एवं छन्दोभिधायि-**गायत्री**शब्दस्य चतुष्पात्त्वसादृश्यात् ब्रह्मणि प्रयोग उपपन्नः—इत्युक्त-त्वात् गौणीरूपलक्षितलक्षणापेक्षया अपर्यवसानवृत्तेर्दौर्बल्यमेव सूत्र-भाष्यकृदभिमतमिति प्रतीयते। यदि च अपर्यवसानवृत्तिः गौणीतः प्रबला, तर्हि तया गायत्र्यवस्थब्रह्मपरत्वस्य वक्तुं सुशकतया गौणी वृत्ति-र्नादर्तव्या स्यादिति चेत्—

न—अपर्यवसानवृत्त्या **गायत्री**शब्दस्य गायत्र्यवस्थब्रह्मपरत्वे तस्य सर्वभूतात्मत्वासंभवेन केवलब्रह्मणि गौण्याश्रयणस्य युक्तत्वात् ।

न च—गायत्र्यवस्थत्ववेषेण सर्वभूतात्मत्वाद्यसंभवेऽपि ब्रह्म स्वरूपे सर्वभूतात्मत्वं संभवत्येव । अत एव **दहरविद्यायां** हृदयावच्छिन्नस्य ब्रह्मणः तादूप्येण बाह्याकाशवैपुल्यासंभवेऽपि स्वरूपेण बाह्याकाश-वैपुल्यम्, 'यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः इति संदर्भे प्रतिपादितं संभवतीत्यभ्युपेतम् । तथा **शाण्डिल्यविद्यायाम्**, 'एष म आत्माऽन्तर्हृदयेऽणीयान्' इति अल्पत्वेन निर्दिष्टस्य ब्रह्मणः स्वरूपाभिप्रायेण, 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायान् अन्तरिक्षात्' इति पृथिव्यादिभ्योऽपि ज्यायस्त्वमुक्तम् । किं बहुना । सर्वासु अल्पायतनविद्यासु, 'आनन्दादयः प्रधानस्य' इत्यधिकरणन्यायेन सत्यत्वज्ञानत्वानन्तत्वादीनामुपसंहर्तव्यत्वात् तत्र च अल्पायतनस्यापि ब्रह्मणः स्वरूपेणाऽऽनन्त्यमपि संभवतीति आनन्त्योपासनस्याऽऽश्रितत्वाच्च तन्न्यायेन गायत्र्यवच्छिन्नत्ववेषेण सर्वभूतात्मत्वासंभवेऽपि स्वरूपेण सर्वभूतात्मत्वसंभवाच्च अपर्यवसानवृत्तौ अनुपपत्त्यभावात् **गायत्री**शब्द-स्यापर्यवसानवृत्त्यनाश्रयणं तद्दौर्बल्यकारितमेव—इति वाच्यम्—

गायत्र्यवच्छिन्नस्य ब्रह्मणः स्वरूपेण सर्वभूतात्मत्वोपपादनं क्लेशसाध्यमित्यभिप्रायेणापर्यवसानवृत्त्यनाश्रयणसंभवात् । अत एव 'आकाशादेव' इत्यादौ **आकाश**शब्दे अपर्यवसानवृत्त्यनाश्रयणस्येद-मेव बीजम् । 'यदि हि **आकाश**शब्दः तच्छरीरकब्रह्मपरः, तदा तच्छरीरकस्य जगत्कारणत्वासंभवात् स्वरूपाभिप्रायेण जगत्कारणत्व-

वादोऽभ्युपेयः स च क्लिष्टः' इत्येवापर्यवसानवृत्त्यनाश्रयणम् ; न तु योगप्राबल्यादित्येव रहस्यम् । किञ्च गायत्रीशब्देन, चतुष्पात्त्वादि-धर्मकीर्तनस्य, सादृश्यानुसंधानार्थत्वाभावे वैयर्थ्यप्रसङ्गाच्च तत्र गौण्या-श्रयणम् । [गायत्रीशब्दे] । न तु गौण्याः प्राबल्यात् । अतो न गौण्य-पेक्षया दौर्बल्यमपर्यवसानवृत्तेः ।

नन्वपर्यवसानवृत्तेर्लक्षणापेक्षया प्राबल्ये, 'क्षेत्रज्ञञ्चापि मां विद्धि' इत्यत्र, 'मां मदात्मकं विद्धीत्यर्थः' इति, तथा, 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इत्यत्र, 'देवं देवात्मकमित्यर्थः' इत्येवं बहुषु स्थलेषु क्षेत्र-ज्ञादिशब्दानामपर्यवसानवृत्तिमनाश्रित्य, 'मां', 'देवम्' इत्यादिशब्दानां लक्षणाश्रयणं नोपपद्यते । अतोऽवसीयते लक्षणाऽपर्यवसानवृत्त्योर्वैषम्या-भावो भाष्यकृदभिमत इति, इति चेत्–तस्यान्वारुह्योक्तिरूपतयाप्युपपत्तेः।

---

अन्वारुह्योक्तीति । न हि वेदान्तव्युत्पत्तिसिद्धार्थस्य वेदान्त-व्याहारे लक्षणातुल्यत्वम् । तस्यैव तत्र ग्राह्यत्वादिति अपर्यवसान-वृत्तिः प्रबला। ईदृशभाष्यं तु फलितार्थकथनमात्रमिति व्यक्तं तात्पर्य-चन्द्रिकादौ । न चात्र क्षेत्रज्ञपदस्य ब्रह्मजज्ञपदस्य च विशिष्टपरत्वे काचिदनुपपत्तिरस्ति । क्षेत्रज्ञञ्चापि मां विद्धि=त्वं क्षेत्रज्ञान्तर्या-मित्वविशिष्टमद्विषयकज्ञानवान् भव। ब्रह्मजज्ञं देवमीड्यं विदित्वा= ब्रह्मजज्ञजीवान्तर्यामित्वविशिष्टेड्यदेववेदनानन्तरम् इत्यर्थवर्णनस्य निर्बाधत्वात् । शरीरात्मभावः कथं ज्ञात इति चेत्—तद्ज्ञानाभावे मां=मदात्मकमित्यर्थोऽपि दुर्ग्रह एव। वस्तुतः जगत्कारणत्वस्य सर्व-विद्यावेद्यत्वाभावेऽपि सर्वविद्यानिष्ठवेद्यत्वमावश्यकम् । अत एव, 'कारणं तु ध्येयः' इति श्रुतिः । अत एव जगत्कारणत्वमुपलक्षण-मपीति भाष्यादौ । एवमवश्यज्ञेये कारणत्वे ज्ञाते तदनन्तरमेव

ननु मुख्यार्थसंबन्धेन तदपृथक्सिद्धविशेष्यस्य लक्षणया प्रतीत्युपपत्तौ न शक्तिः कल्प्या ; अनन्यलभ्यस्यैव शब्दार्थत्वादिति चेत्—

मैवम्। कल्पनायां परमुपालम्भः ; न तु क्लृप्तस्थले। प्रकृते च जातिगुणवाचिगोनीलादिशब्देषु अपृथक्सिद्धविशेषणवाचित्वावच्छेदेन विशेष्यवाचित्वस्य क्लृप्तत्वात् सर्वशब्दप्रवृत्तिनिमित्ताश्रये ब्रह्मणि सर्वशब्दवाच्यत्वस्य प्रत्याख्यातुमशक्यतया, 'वचसां वाच्यमुत्तमम्', 'नताः स सर्ववचसां प्रतिष्ठा यत्र शाश्वती', 'तन्नामरूपाभ्यां व्याक्रियत',

---

तत्तद्विद्योपदेशः। यत्र तथोपदेशो न लक्ष्यते, तत्रापि कारणत्वे ज्ञाते तदनन्तरमेव तत्तद्विद्योपदेशः। यत्र तथोपदेशो न लक्ष्यते, तत्रापि कारणत्वोपदेशोऽर्थसिद्धः निष्पन्न इति मन्तव्यम्। कारणत्वोपदेशश्चायं नामरूपव्याकरणप्रकारज्ञापनमुखेन वेदान्तव्युत्पत्तिसंपादनार्थोऽपि। अतः सदेवेत्यादिकारणवाक्यं सर्वविद्यासाधारणम्। अत एवाविदितवेदान्तार्थोऽयं श्वेतकेतुः पूर्वं कारणत्वादिवादेन व्युत्पादितः। अत एव एवमौपाद्घातिके सर्वसाधारणेऽर्थे विज्ञाते, विजज्ञाविति विजज्ञावितीत्यभ्यासं कृत्वा श्रुतिः उद्दालको हारुणिरित्यनया भङ्ग्या विशेषविद्योपदेशमारभत—इति साधु विमृश्यम्। एवञ्च सर्वस्यापि विद्योपदेशस्य वेदान्तव्युत्पत्तिमन्तं प्रत्येव प्रवृत्तेर्ज्ञापनायैव अनभिज्ञश्वेतकेतूपाख्यानेन कारणवादात्, क्लृप्तत्यागे मानाभावात् सर्वत्र विशिष्टपरत्वं संभवत्येवेति अन्यथाऽर्थवर्णनमन्वारुह्योक्तिरेवेति भावः।

ननु विशिष्टे शक्तेः प्रामाणिकत्वे अन्वारुह्योक्तिरियमिति वक्तव्यम्। तत्रैव न प्रमाणम्। प्रत्युत बाधक एव न्यायोऽस्ति इति, लोकवेदव्युत्पत्तिगतिमजानन् अर्धमीमांसकवासनावासितस्वान्तः पृच्छति ननु मुख्येति। तत् त्वमसीत्यस्य नानुपपत्तिरिति। यद्यत्र

'चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्' इत्यादिभिः ब्रह्मणः सर्वशब्दवाच्यत्वस्य सिद्धतया च तत्त्वमसीत्यस्य नानुपपत्तिरिति वदन्ति ।

अत्र **तत् त्वमसि** इति तत्त्वंपदाभ्यां सर्वज्ञत्वकिञ्चिज्ज्ञत्वोपलक्षितं चिन्मात्रं लक्ष्यते । अतः चिन्मात्र एवास्य श्रुतिसंदर्भस्य तात्पर्यमिति वदन्तः परे प्रत्युक्ताः ।

---

तत् इत्यस्य तदात्मक इत्यर्थः। तर्हि तदात्मकोऽहमित्येव तेन यथोपदेशं भावनीयम्। तथाच न केवलं तत्त्वमस्यर्थवर्णनभाष्यविरोधः, पञ्चाग्निविद्यातिरिक्ता सद्विद्यादिः सर्वा विद्या ब्रह्मविशेष्यकोपासनरूपेति भाष्यविरोधोऽपि । उपदेशक्रमत्यागे मानाभावेन इहापि जीवविशेष्यकविद्यात्वापत्तेरित्यादि इह निगूढम्।

इति वदन्तीति । अत्रेदमपि बोद्धव्यम्—यद्यपि पदानामपर्यवसानवृत्त्या विशिष्टवाचित्वं प्रामाणिकम् ; आवश्यकञ्च, 'अहं मनुरभवम्' इत्यादौ—तथापि, 'तत् त्वमसि' इत्यादौ संबोध्यमात्रस्य त्वंपदार्थत्वेऽपि न लक्षणादिदोषः । अपृथक्सिद्धिसंबन्धस्य समानाधिकरणप्रयोगे संबन्धत्वाभावेऽपि अभेदसंबन्धेनैव सर्वसंमतेन निर्वाहात्। अभेदो हि तादात्म्यम्। तद्वृत्तिधर्मविशेषवत्त्वं तदित्युक्तं व्युत्पत्तिवादे। शरीरगतावस्थादेश्च परम्परया शरीरिवृत्तित्वं पूर्वमेव दर्शितम् । तथाच तत् त्वमसि = त्वं परमात्मवृत्तित्वदीयधर्मविशेषवानसीत्यर्थ इति विनैव क्लेशं निर्वाहः । न च तावता, 'रूपं घटः, शरीरं चैत्रः' इत्यादिव्यवहारापत्तिः ; रूपत्वादिकं प्रति घटादेराधारताया अत एवास्वीकारात्। 'रसोऽहमप्सु', 'काठिन्यवान् यो बिभर्ति' इत्यादिप्रयोगबलेन सर्वस्यापि धर्मस्य परमात्मा परमाधार इति स्वीकारादिति ।

अत्रेदं वक्तव्यम्—स्वपर्यन्तनामरूपव्याकरणं परमात्मकृतं

"सर्वज्ञं सर्वकर्तारं नारायणमनामयम् ।

सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि ॥

---

प्रागुक्त्वा क्रियमाणं निगमनं विशिष्टपरमित्येव स्वरसम् । 'एतदात्म्यमिदं सर्वम्' इत्यत्र एतदन्तर्यामिकमित्युक्तत्वात् तदभेदान्वयाय कामं विशेषणमात्रपरता । कामञ्च, 'सन्मूलाः सोम्येमाः' इत्यत्रापि प्रजाशब्दो विशेषणमात्रपर एव; सदायतनत्वस्य तत्रैव भावात् । सन्मूलत्वादेश्च विशेष्यं प्रति विशेषणस्याप्युपादेयत्वस्य प्रागुक्ततया तत्रान्वयसंभवात् । एवं शरीरात्मभावं प्रतिपाद्य प्रवृत्तमिदं निगमनवाक्यं तु विशिष्टपरं युक्तम् । 'अहं मनुरभवम्' इत्याद्यविशेषात् । अभेदसंबन्धविषयेऽपि किञ्चिद् विमृश्यम्—तद्वृत्त्यसाधारणधर्मवत्त्वरूपः संबन्धः कश्चित् भासत इत्येतद्धि नानुभविकम् । अभेदेनान्वय इत्यस्य च, 'भेदसंबन्धोऽत्र कश्चिन्न भासते; किञ्चित्संबन्धनिरपेक्षो विशेष्यविशेषणभावः' इत्येवार्थः । समानाधिकरणवाक्यस्थले धर्मिणः पदद्वयतो द्विर्भानमेवासाभिर्नेष्यते इति कयोरभेदः संबन्धः। किंतु नीलमुत्पलमित्युक्तौ नीलत्वोत्पलत्वविशिष्टतया धर्मिणः सकृद्ग्रहणमेव, यथा प्रत्यक्षे अनेकधर्मविशिष्टतया धर्मिणः सकृद्ग्रहणम् । उक्तञ्च श्रुतप्रकाशिकायाम्, 'यथा द्वे चक्षुषी अर्थं पुरोवर्तिनं सकृद् भासयतः, तथा समानाधिकरणपदे' इति । अत एकं धर्मि पदद्वयोपस्थाप्यम् । तत्र धर्मद्वयान्वयः समानाधिकरण पदकृत्यमिति अपृथक्सिद्धसंबन्धेन वा अभेदेन वा भिन्नयोर्नान्वय इति साम्प्रदायिकानामाशयः । एवमपि तत् त्वमसीत्यत्र त्वम्पादतत्पदयोर्न मिथोऽन्वयः। तदित्यस्य विधेयस्य असीत्यनेनैव; त्वमसीत्युभयोरेव मिथोऽन्वयं इति नात्र तद्रीतिरित्यलमधिकेन ।

**भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ७ ॥**

**इति षष्ठे अष्टमः खण्डः**

---

सर्वेषामपि वेदानामितिहासपुराणयोः ।
प्रमाणानाञ्च सर्वेषां तदर्थञ्चान्यदुच्यते ॥''

इति **नारदीयपुराण**वचनविरोधात् । तन्मते श्रुतेः प्रत्यक्षविरोधभया-भावेन तत्त्वंपदमुख्यार्थयोरेवाभेदबोधनसंभवे तत्त्वंपदलक्ष्यचिन्मात्राभेद-प्रतिपादकत्वाश्रयणस्य निर्मूलत्वात् । व्याधकुलसंवर्धितराजकुमारस्य व्याधभावभ्रान्त्यपनयनाय प्रवृत्ते, 'त्वं राजकुमारोऽसि' इति वाक्ये **राजकुमार**पदे लक्षणाश्रयणाभावेन इहापि जगत्कर्तृत्वसर्वज्ञत्वविशिष्ट-वाचके तत्पदे लक्षणाश्रयणस्यान्याय्यत्वात् । त्वं राजकुमारोऽसीति वाक्येऽपि विधेयराजकुमारत्वे तात्पर्याभावे व्याधभावानुपमर्दवत् विधेय भूततच्छब्दार्थभूतजगत्कर्तृत्वसर्वज्ञत्वादितात्पर्याभावे तद्विरोधिजीवभावो पमर्दासंभवाच्चेत्यास्तां तावत् । प्रकृतमनुसरामः ॥

एवमुक्तः श्वेतकेतुः, सुषुप्तिकाले प्रजानां सत्संपत्तौ सत्याम्, 'एवं सति संपन्नाः' इति प्रतीतिः स्यात् ; समुद्रे तरङ्गादीनामिव परमा त्मनि सुषुप्तौ लीनानां पुनरुत्थितिश्च न स्यात् । अतः सुषुप्तौ प्रजानां सत्संपत्तिः न श्रद्धेयेति मन्वान आह **भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ।** विशिष्य ज्ञापयत्विति [पिता] श्वेतकेतुना प्रार्थितः तथेत्यङ्गीकृतवानित्यर्थः ॥

एतत्खण्डविषयाणि अधिकरणानि लिख्यन्ते । **उत्क्रान्तिपादे-**

(१) 'वाङ् मनसि संपद्यते' इति श्रूयमाणा वाचो मनस्संपत्तिः

वाग्वृत्तिविषया, न तु वाग्विषया। वाचो मनःप्रकृतिकत्वाभावेन अप्रकृतिभूते मनसि वाचः साक्षाल्लयासंभवात्। न च वाग्वृत्तेरपि अप्रकृतिभूते मनसि **संपत्ति**शब्दितो लयो न संभवतीति वाच्यम्—मनसि स्थितेऽपि वाग्व्यापाराभावमात्रेण **संपद्यत** इत्युपपत्तेः। विद्यमानायास्तु वाचः तादात्विकाभावस्याप्यभावेन संपत्तिश्रुतेरत्यन्तासंभवात् इति पूर्वपक्षे प्राप्ते—उच्यते—"वाङ् मनसि दर्शनात् शब्दाच्च"। वाक्स्वरूपमेव मनसि संपद्यते। वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिदर्शनात्। 'वाङ् मनसि संपद्यत' इति शब्दाच्च वागेव मनसि संपद्यते। यद्यपि मनसो वाक्प्रकृतित्वं नास्ति—तथापि अनुपरतव्यापारेऽपि मनसि वाच उपरतव्यापारत्वदर्शनात् वाक् मनसि संपद्यत इवेत्युच्यते। वृत्तिपक्षेऽपि संपद्यत इत्यस्य गौणत्वावश्यम्भावात्। ततश्च वाचो निर्व्यापारताहेतुभूता मनसा संयोगविशेषः **संपत्ति**शब्दार्थ इति द्रष्टव्यम्।

"अत एव सर्वाण्यनु"। यतो वाचो मनसा संयोगमात्रं संपत्तिः, अत एव, 'तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः' इति वाचमनु सर्वेषामिन्द्रियाणां संपत्तिश्रुतिरपि तदर्थिकैवेत्यर्थ इति स्थितम्॥

(२) तथा—'मनः प्राणे' इत्यत्र मनोवृत्तेरेव प्राणे अप्यय उच्यते। **मन**श्शब्दस्य मनोवृत्तिष्वपि प्रचुरप्रयोगसत्त्वात्। न तु पूर्वोक्तरीत्या संयोगविशेषः **संपत्ति**शब्दार्थः इति प्राप्ते—उच्यते—"तन्मनः प्राण उत्तरात्"। मनसो निर्व्यापारताहेतुभूतः प्राणेन संयोगविशेष एव इहापि संपत्तिशब्दार्थः। ततश्च मन एव प्राणे संपद्यते; 'मनः प्राणे' इत्युत्तरवाक्यादित्यर्थः। **मन**श्शब्दस्य मनोवृत्तिपरत्वेऽपि

संपत्तिश्रुतेर्गौणत्वावश्यम्भावेन **मन**श्शब्दस्य गौणत्वाश्रयणं स्यान्याय्यत्वादिति सिद्धान्तितम् ।

(३) तथा—'प्राणस्तेजसि' इति श्रुतेः प्राणः तेजसि संपद्यते इति प्राप्ते-उच्यते-"सोऽध्यक्षे तदुपगमादिभ्यः ।" **सः** इन्द्रियसहितः प्राणः **अध्यक्षे** जीवे संपद्यते । 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इति अन्तकाले प्राणानां जीवोपगमस्य, तेन सहोत्क्रान्तेश्च श्रवणात् जीवे एव संपद्यते । गङ्गया संयुज्य सागरं गच्छन्त्यां यमुनायाम्, 'यमुना सागरं गच्छति' इति प्रयोगवत् जीवद्वारा प्राणस्य सत्संपत्तावपि, 'प्राणस्तेजसि' इत्युक्तिरुपपद्यते । न च प्राणस्य तेजोद्वारेणैव जीवोपगमोऽस्तु इति वाच्यम्—निरध्यक्षस्य प्राणस्य तेजसि स्थितेरसंभवादिति स्थितम् ॥

(४) तथा प्राणस्तेजसीति जीवयुक्तस्य प्राणस्य तेजोमात्र एव संपत्तिश्रवणात् न सर्वभूतसंपत्तिरिति प्राप्ते—उच्यते—"भूतेषु तच्छ्रुतेः" । सजीवः प्राणः संहतेषु सर्वेषु भूतेषु संपद्यते । 'पृथिवीमय आपोमयस्तेजोमयः' इति संचरतो जीवस्य सर्वभूतमयत्वश्रवणेन सर्वभूतसंपत्तेर्वक्तव्यत्वात् ।

"नैकस्मिन् दर्शयतो हि ।" **एकस्मिन्** तेजोमात्रे न संपद्यते । एकैकस्य कार्याक्षमत्वम्,

'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति,

'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥

समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।

महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥'

इति श्रुतिस्मृती दर्शयत इत्यर्थ इति स्थितम् ॥

(५) तथा—'तेजः परस्यां देवतायाम्' इत्यत्र जीवपरिष्वक्ततेजश्शब्दितभूतसूक्ष्माणां परदेवतासंपत्तौ प्रयोजनाभावात्, 'तेजः परस्यां देवतायाम्' इति श्रुतिः स्तुतिमात्रपरेति पूर्वपक्षे प्राप्ते-उच्यते-"तानि परे तथा ह्याह"। तानि भूतसूक्ष्माणि **परे** परमात्मनि संपद्यन्ते। कुतः? तथा ह्याह श्रुतिः, 'तेजः परस्यां देवतायाम्' इति। श्रुतिवशाच्च सुषुप्तिप्रलययोरिव परमात्मसंपत्तेः सुखदुःखोपभोगायासविश्रमः प्रयोजनत्वेन परिकल्प्यत इति स्थितम् ।

(६) तथा सेयं परमात्मनि जीवस्य संपत्तिः प्राकृतलयवत् कारणापत्तिरूपैव, परमात्मनः (सर्वात्मनः) सर्वोपादानत्वात्। न तु वागादेर्मनआदिष्विव अविभागमात्रमिति पूर्वपक्षे प्राप्ते-उच्यते—'अविभागो वचनात्'। अत्रापि पृथग्भावानर्हसंसर्गविशेषलक्षणाविभाग एव संपत्तिशब्दार्थः। 'वाङ् मनसि संपद्यते' इत्यत्र सतः 'सपद्यते' इति शब्दस्यैवेहाप्यनुषज्यमानतया अभिधानवैरूप्याश्रयणस्यान्याय्यत्वादिति स्थितम् ॥ प्रकृतमनुसरामः। ६-८.

**यथा सोम्य मधु...गमयन्ति।** यथा लोके **मधुकृतः** मक्षिकाः मधु **निस्तिष्ठन्ति** निष्पादयन्ति, **नानात्ययानां** नाना-

रसान् समवहारमेकताँ रसं गमयन्ति ॥ १ ॥ ते यथा तत्र न विवेकं लभन्ते, अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोस्मीति—

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः, सति संपद्यामह इति ॥ २ ॥

त इह व्याघ्रो वा सिँहो वा वृको वा वराहो वा कीटो वा पतङ्गो

---

गतीनां [नानादिक्कालादीनां] वृक्षाणां रसान् समाहृत्य मधुत्वेनैक्यं गमयन्तीत्यर्थः। **ते यथा...इति।** ते च रसाः मधुत्वेन एकतां गताः अमुष्य वृक्षस्य वकुलस्य [वा] कुटजस्य [वा] रसोऽस्मीति यथा विवेकं न लभन्ते, एवमेवेमाः सर्वाः प्रजाः सति संपन्नास्सत्यः, अहं देवदत्तः, अय(अह)ममुष्य पुत्रः [इति ?] अधुना सति संपन्ना इति वा, सति संपत्स्यामह इति वा न जानन्तीत्यर्थः।

**त इह...आभवन्ति।** अथ सुषुप्तेरुत्थिताश्च प्रजाः स्वापात् पूर्वं **यत् यत् भवन्ति** येये अभवन्, तेते **आभवन्ति** आगत्य

---

ते यथेति। मूले संपद्यामहे इति वर्तमानकालनिर्देशे स्थिते भाष्ये संपन्ना इति, संपत्स्यामहे इति च भूतभविष्यन्निर्देशः, 'संपत्तिकाले संपत्तेरज्ञातत्वात् पश्चात् तत्स्मरणप्रसक्तिरेव नास्ति। तत्संपत्तेः केवलशास्त्रगम्यत्वात् पूर्वं पश्चाद्वा तदनुमानमपि दुर्लभम्। एवञ्च संपद्येति मूले ल्यपो निर्देशात् संपन्नाः स्मः इत्येव निर्देष्टव्ये मूले संपद्यामह इति वर्तमाननिर्देशः सर्वकालोपलक्षकः' इति ज्ञापनार्थः। संपद्यामह इति बहुत्वं यद्यपि अविवक्षितं सुवचम्—अथापि, 'वयं सर्वे संपद्यामहे' इत्यर्थक एवं निर्देशः अन्यचेतनसंपत्त्यवेदनतुल्यं स्वसंपत्त्यवेदनमेकैकस्यापीति ज्ञापनार्थं इत्याशयेन भाष्ये बहुत्वानुपेक्षा स्यात्। शाङ्करभाष्ये खण्डोऽयं सुषुप्तिमरणप्रलयरूपसर्वविषय एव योजितः। 'त इह व्याघ्रो वा' इत्यादिकञ्च पूर्वमेकस्मिन् जन्मनि

वा दँशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ ३ ॥

स य एषोऽणिमा । ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति ।

---

भवन्ति । सु[षु]प्ते प्राक् व्याघ्राभिमानी स्थितः, सुप्त्यनन्तरमपि, 'व्याघ्रोऽहम्' इत्यभिमन्यमान एव भवतीत्यर्थः । पूर्ववासनावासित(ताः) एवोत्तिष्ठ(ष्ठन्)तीति यावत् । ततश्च दर्शनानुसारात् सुप्तौ लयो न पुनरुत्थितिविरोधीति भावः । **स य एषोऽणिमा** । **[सः** परमात्मा **अणिमा]** **अणुः** सूक्ष्म इत्यर्थः । **एतदात्म्यं...श्वेतकेतो** । स्पष्टोऽर्थः।

---

व्याघ्रभूत एव पश्चादपि व्याघ्रो भवतीत्यर्थपरमपीति । अनादौ संसारे अनन्तसजातीयजन्मसंभवात्, तत्तज्जात्युचितकार्यार्थसंस्कारोद्बोधस्य तत्रतत्रावश्यकतया तादृशपूर्वजन्मध्रौव्यात्, 'यं यं वाऽपि स्मरन् भावम्' इति स्मृतेश्च तदप्यविरुद्धम् । अथापि प्रसक्तसुषुप्तिविषयतया सुप्रसिद्धलोकानुभवप्रदर्शकतयैव, 'त इह व्याघ्रः' इत्यादेरुपपत्तौ अपूर्वतादृशार्थपरत्वनिर्बन्धाभावात् सुषुप्तिमात्रपरं भाष्ये योजितम् । पश्चात् पूर्वजातसत्संपत्तिप्रतिसंधानं कुतो नेति शङ्कयोत्तरखण्डारम्भश्चेत्, इह सुषुप्तिमात्रविवक्षैव युक्ता, मरणप्रलययोः प्रतिसंधानशङ्काप्रसक्त्यभावादिति । अचेतनस्य रसस्य यथा स्वयं विवेकाभावः, तथा चेतनस्यापि सद्विषये ; तत्साक्षात्काराभावात्। विशिष्य च सुषुप्तौ बाह्यान्तरवेदनाभावे कथं तत्संपत्तिवित्तिः । उत्थाने च न तत्साक्षात्कारः, असत्त्वात् तदा संपत्तेरिति अनन्तरखण्डे वक्ष्यते । अतो रसानां स्वयमज्ञत्वेऽपि यथा तत्समाहारो न प्रतिषेध्यः, तथा सत्संपत्तिरपीति भावः । नायं पुनस्तद्भावापत्तिविरोधी परिपूर्णलय इति बोधयितुं प्रवृत्तम्, त इह व्याघ्रो वेत्यादि । तदाभवन्तीत्यत्र तदिति पदं ते इत्यर्थकम्। आङ् उपसर्गः।

अत्र खण्डे जीवनानात्वं दर्शितम् ।

भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच ॥४॥

इति षष्ठाध्याये नवमः खण्डः ।

षष्ठे दशमः खण्डः

इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते । पश्चात् प्रतीच्यः । ताः समुद्रात् समुद्रमेवापियन्ति । [1]समुद्र एव भवन्ति । ता यथा तत्र न विदुः, इयमहमस्मि, इयमहमस्मीति ॥ १ ॥—,

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति ।

त इह व्याघ्रो वा सिँहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दँशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ २ ॥

---

एवमुक्तः श्वेतकेतुः, 'सुषुप्तिदशायां परमात्मनि संपन्नः स्वापानन्तरं तत उत्थाय आगतश्चेत्, प्रातर्गृहादुत्थायाऽऽगतस्य, 'गृहात् आगतोऽस्मि' इति प्रतिसंधानवत् , सत आगतोऽस्मीति प्रतिसन्धानप्रसङ्गात् नैतत् विस्रम्भणीयमिति मन्यमान आह— **भूय एव मा भगवान् विज्ञापयत्विति । तथा...होवाच ।** स्पष्टोऽर्थः । ६–९.

**इमाः....होवाच ।** यथा गङ्गाद्या नद्यः **प्राच्यः** पूर्वदिक्प्रस्थिताः प्राङ्मुखतया समुद्रं यान्ति; **प्रतीच्यः** पश्चाद्देशप्रवृत्ता सिन्ध्वाद्याः नद्यः प्रत्यङ्(पश्चान् )मुखतया समुद्रं यान्ति , पुनश्च [ताः] समुद्रात् समुद्रं गच्छन्ति। समुद्रपर्यन्तदेशात् समुद्रमध्यं गत्वा समुद्रेणैकीभूताः सत्यः, 'इयं गङ्गाऽहमस्मि', 'इयं यमुनाऽहमस्मि' इत्येवं प्रत्यभि

---

इमाः सोम्येति । नन्वष्टमखण्डोक्तसुषुप्तिमरणविवरणरूपत्वमुपरितनखण्डानामिति कृत्वा किमत्रापि सति लयस्यैवोपपादनम् ।

---

1 'स समुद्र एव भवति' इति बहुसंमतं पाठान्तरमत्र ।

**स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम्। तत् सत्यम्। स आत्मा। तत् त्वमसि श्वेतकेतो इति।**

---

ज्ञातुं असमर्था भवन्ति[इत्यर्थः], तथा सुप्तोत्थिता अपि, सत उत्थिता आगता इति न प्रत्यभिज्ञातुं समर्था भवन्ति। अपितु व्याघ्रादिभाव-

---

आहो तत उत्पत्तेः। आद्ये, सत आगम्येत्यादि कथम्? अन्त्ये समुद्रमेवापियन्तीत्यादि कथम्? न च, 'सत आगम्य, सत आगच्छामहे' इत्युभयत्र सते इति चतुर्थी ग्राह्या। तेन तत्राप्यय एवोक्तो भवतीति वाच्यम्; भाष्यविरोधात्—उच्यते–सत इति पञ्चम्येव। मूले स्यन्दन्ते इत्यत्र समुद्रादिति शेषः। समुद्रे स्थिता एव हि नद्यो जलधरैराकृष्टाः वृष्टिरूपेण पतिताः स्यन्दन्ते। अनेन सत आगमनस्य दृष्टान्त उक्तो भवति। भाष्ये समुद्रमित्यध्याहारः स्यन्दनस्यापि समुद्रैकसंगमसंपादकत्वात्। तथाच समुद्रादुद्गत्य समुद्रं प्रति स्यन्दन्त इत्युक्तं भवति। अस्यैवार्थस्य ताः समुद्रादिति वाक्येन पुनरुक्तौ वैयर्थ्यात् उपर्युपरि सम्यग्लयप्रतिपादनमित्याशयेनार्थान्तरमुक्तं पुनश्च ता इत्यादिना। यद्वा मास्तु समुद्रादित्यध्याहारः। स्यन्दनं पूर्ववाक्यार्थः। लय उत्तरवाक्यार्थः। समुद्रेणैकीभूताः सत्य इत्यस्य वस्तुतः समुद्रेणैकीभूय पश्चाज्जाता अपीत्यर्थः। मूले तत्र नविदुरित्यादेरयमर्थः। तत्रेत्यस्य स्यन्दनाप्यययोः प्रतिवत्सरं क्रमभाविनोः सतोरित्यर्थः। तथाच स्यन्दनपूर्वकाप्यये जाते पश्चात् भवत् स्यन्दनं पूर्वजाताप्ययपूर्वकमेव। अथापि नदी न जानाति, अहं समुद्रे प्राक् लीना समुद्रादागताऽस्मीति। तथा सुषुप्तोत्थितोऽपीत्युक्तं भवति।

अत्र खण्डे जीवातिरिक्तः परमात्मा दर्शितः। पूर्वदृष्टान्तमालोच्य रससमुदायातिरिक्तमध्वभाववत् प्रजारूपजीवातिरिक्तस्य सतोऽभावशङ्कायाः नदीसमुदायातिरिक्तस्य समुद्रस्येव तस्य स्थितिप्रदर्शनेन परिहारात्।

**भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच ॥३॥**

**इति षष्ठाध्याये दशमः खण्डः**

---

मात्मनुसंदधते इत्येवं बोधितेन श्वेतकेतुना, 'ननु सुप्तोत्थितस्य, सो(व्याघ्रो)ऽहमित्यनुसंधानबलात् नाशाभावस्याभ्युपगन्तव्यत्वे मरणानन्तरं कदापि पूर्वजन्मस्मरणाभावात् जीवस्य देहवियोगसमये नाशः कस्मान्न स्यादिति मन्यमानेन, 'भूयो विज्ञापयतु' इति प्रार्थितः, 'तथाऽस्तु' इत्यवोचदित्यर्थः। एतत्खण्डाधिकरणं लिख्यते—

सुप्तस्य मुक्ताविशिष्टतया ब्रह्मणि लीनस्य पुनर्देहसंबन्धासंभवात् अन्य एवोत्तिष्ठति। सुप्तिरहितपुरुषेषु वैदिककर्मणां साफल्यञ्च भविष्यतीति प्राप्ते-उच्यते—**"स एव तु कर्मानुस्मृतिशब्दविधिभ्यः"**। स एव सुप्त एव तु उत्तिष्ठति। कुतः? कर्मानुस्मृतिशब्दविधिभ्यः। सुप्तेः प्राक् कृतं कर्म तेनैव भोक्तव्यम्। अन्यथा कृतहानादिप्रसङ्गात्। योऽहं सुप्तः, सोऽहं जागर्मीत्यनुस्मृतेः, 'त इह व्याघ्रो वा सिंहो वा इत्यादिशब्दात्, मोक्षार्थविधिवैयर्थ्यप्रसङ्गाच्च न सुप्तिर्मुक्तितुल्या। अत एव **प्रजापतिविद्यायाम्**—'नाह खल्वयमेवं संप्रत्यात्मानं जानाति' इति अज्ञत्वेन सुप्तिर्निन्द्यते। 'मनसैतान् कामान् पश्यन् रमते' इति मुक्तिः तद्विलक्षणतया प्रतिपाद्यते। अतो न सुप्तिर्मुक्तिरिति स एवोत्तिष्ठतीति स्थितम्। ६-१०

---

**कस्मान्न स्यादिति। न हि सुषुप्तौ व्याघ्रादेस्तदाभाव इव इहापि सोऽस्ति। किञ्च मरणं नाम नाशः। अतो जीवनाश एवेति भावः।**

**इति दशमः खण्डः**

षष्ठे एकादशः खण्डः

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्यात् जीवन् स्रवेत्; यो मध्येऽभ्याहन्यात्, जीवन् स्रवेत्; योऽग्रेऽभ्याहन्यात्, जीवन् स्रवेत्। स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥

तस्य यदेकाँ शाखां जीवो जहाति, अथ सा शुष्यति ; द्वितीयां जहाति, अथ सा शुष्यति ; तृतीयां जहाति अथ सा शुष्यति ; सर्वं जहाति, सर्वः शुष्यति—, एवमेव खलु सोम्य विद्धीति होवाच ॥२॥ जीवापेतं वाव किलेदं म्रियते ; न जीवो म्रियते इति ।

---

**अस्य सोम्य....होवाच**। अनेकशाखायुक्ते वृक्षे यदि कश्चित् मूले मध्ये अग्रे वा परश्वादिना अभ्याहन्यात्, तदा जीवयुक्त एव वृक्षः रसं स्रवति। अतो रसस्रु(स्र)तिरूपकार्यात् जीवात्मा आमूलाग्रं व्याप्य मूलैरुदकं पिबन् तत्प्रयुक्तसुखादिकञ्चानुभवन् आस्ते[स्त इत्यर्थः]। एव आमूलाग्रं व्याप्य वर्तमानो जीवो यदि (यदा?) कालधर्मवशात्(कर्मवशात्) यं यं प्रदेशं त्यजति, स स प्रदेशः शुष्यति। एवमेव सर्वं जहाति यदि, तत् सर्वं शुष्यति। ततश्च, यथा —एकैकशाखाशोषो न जीवनाशकृतः ; अपितु जीवसंकोचकृतः ; प्रदेशान्तरे जीवस्य सत्त्वेन नाशासंभवात्--एवमेव सर्वशोषोऽपि तत्त्यागकृत एव, न तु जीवनाशकृतः[त इत्यर्थः]-। अतो मनुष्यादिष्वपि जीवत्यागकृतं देहस्य मरणम्,

---

**य इत्यस्य यो भाग इत्यर्थे हन्यादित्यस्य स हन्यते इत्यर्थः लक्षणया। य इत्यस्य यः कश्चिन्मनुष्य इत्यर्थे तु न तच्छब्दापेक्षाऽपि। जीवन्नित्यस्य वृक्ष एव सदा कर्ता। जीवापेतमिति। मरणस्य ध्वंसपर्यायत्वे तत् देह एव संमन्तव्यम् ; न जीवे इति भावः। स य एष इति। एवं निष्कान्तजीवलयस्थानभूत इत्यर्थः।**

स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम्। तत् सत्यम्। स आत्मा। तत् त्वमसि श्वेतकेतो इति।

भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच॥३॥

इति षष्ठाध्याये एकादशः खण्डः।

षष्ठे द्वादशः खण्डः

न्यग्रोधफलमद(त) आहरेति। इदं भगव इति। भिन्धीति। भिन्नं भगव इति। किमत्र पश्यसीति। अण्व्य इवेमा धाना भगव इति। आसामङ्गैकां भिन्धीति। भिन्ना भगव इति। किमत्र पश्यसीति। न किंचन भगव इति॥१॥ तँ होवाच—यं वै सोम्यैतमणिमानं न

---

न जीवस्य मरणम्। तथासति कृतहानाकृताभ्यागमप्रसङ्गात्। अतः सुषुप्तिमरणदशायां सत्संपत्तावपि न जीवविनाश इति सिद्धमिति भावः। एवं बोधितेन श्वेतकेतुना, 'अणिम्नः सच्छब्दितस्य रूपस्पर्शादिहीनस्य विविधस्थावरजङ्गमादियुतानेकब्रह्माण्डहेतुत्वं न श्रद्धेयम्' इति मन्यमानेन, 'भूय एव मा भगवान् विज्ञापयतु' इति प्रार्थितः 'तथाऽस्तु' इत्युवाचेत्यर्थः। व्यासार्यैस्तु, 'ज्ञोऽत एव' इत्यधिकरणे, 'अस्य सोम्य महतो वृक्षस्य' इति वृक्षशब्देन शरीरं निर्दिश्यते इत्युक्तम्। ६-११.

**न्यग्रोधफलमद(त) आहरेति। इदं भगव इति।** न्यग्रोधफलमिदमाहरेत्याचार्येणोक्तः श्वेतकेतुः, 'इदं भगव' इत्यानीतवान् इत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। **भिन्धीति...भगव इति।** [किमत्र फले पश्यसीति पित्रोक्तः पुत्रः अण्व्य इवेमा धाना भगव इत्याह] इमानि बीजानि अणून्येव पश्यामीत्यर्थः। इवशब्द एवार्थः।

---

अत्यन्तसूक्ष्मादत्यन्तविचित्रस्थूलमुत्पत्तुमर्हतीति निदर्श्यते न्यग्रोधेत्यादिना। एतमणिमानम्=धानान्तर्वर्तिनं महान्यग्रोधात्मना

निभालयसे, एतस्य वै किल सोम्यैषोऽणिम्न एवं महान् न्यग्रोध-स्तिष्ठति ॥ २ ॥ श्रद्धत्स्व सोम्येति । स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति ।

भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच ॥३

इति षष्ठाध्याये द्वादशः खण्डः ।

षष्ठे त्रयोदशः खण्डः

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति । स ह तथा

---

**आसां....तं होवाच** । स्पष्टोऽर्थः । **यं...निभालयसे** । हे सोम्य एवं यमेतं वटबीजाणिमानं **न निभालयसे** न पश्यसीत्यर्थः । **एतस्य....तिष्ठति** । एष महान् न्यग्रोधः एतस्यैव किलाणिम्नः कार्यतया तिष्ठतीत्यर्थः । **श्रद्धत्स्व....इति** । अतः अणोरपि सच्छब्दि-तात् परिदृश्यमानस्य स्थूलस्य प्रपञ्चस्योत्पत्तिरुपपद्यत इत्यस्मिन्नर्थे श्रद्धा कर्तव्येत्यर्थः । शिष्टं स्पष्टम् ।

**भूय....होवाच** । यदि परमात्मा कारणानुगतः, कथं तर्हि तदनुपलम्भः । अनुपलम्भे च तस्य तत्रानुगतत्वे किं मानमित्यभिप्रायेण प्रार्थितः तथेत्युक्तवानित्यर्थः । ६—१२.

**लवण....चकार** । रात्रौ लवणं जले प्रक्षिप्य प्रातर्मत्समीपमा-

---

परिणामिनं सूक्ष्मांशम् । न पश्यसीति । त्वं निभालयसे किम् । न । तथाप्यणिष्ठस्य स्थविष्ठहेतुत्वमानुभविकमिति भावः ॥

नन्विदं सत् न केवलं जगत्पूर्वावस्थापन्नम् । किंतु, 'अनु-प्रविश्य नामरूपे व्याकरवाणि' इत्युक्ततया जगदन्तर्वर्तमानमपि । न च सर्वथेदमगोचरम्, एतद्विज्ञाने सर्वविज्ञानस्योक्तत्वात् । तत् कुतोऽनुपलम्भः । तत्राह लवणमिति । एतत् चक्षुषा त्वचा च

चकार। तँ होवाच यद् दोषा लवणमुदकेऽवाधाः, अङ्ग! तदाहरेति। तद्धावमृश्य न विवेद।

यथा विलीनमेवाङ्ग।॥१॥ अथास्याऽऽदावाचामेति; कथमिति। लवणमिति। मध्यादाचामेति; कथमिति। लवणमिति। अन्तादाचामेति; कथमिति। लवणमिति। अभिप्रास्यैतत् अथ मोपसीदथा इति। तद्ध तथा चकार। तच्छश्वत् संवर्तते। तँ होवाच—अत्र

---

गच्छेति गुरुणोक्तः श्वेतकेतुः तथा चकारेत्यर्थः। **तं....विवेद।** **दोषा**=रात्रौ यत् लवणमुदके **अवाधा**:=प्रक्षिप्तवानसि, तत् अङ्ग! अधुना आहरेत्युक्तो वि(क्तोऽव?)मृश्य न ज्ञातवान्। **यथा विलीनमेवाङ्ग।** यथा लवणं विद्यमानमपि विलीनं सत् चक्षुषा त्वचा वा नोपलभ्यते, एवं सदा(सर्वा)त्मस्वरूपमपीति भावः। एवं चक्षुषा त्वचाऽप्यग्राह्यस्य लवणस्योपायान्तरेणावगतिप्रकारं दर्शयति **अथ.... लवणमिति। अस्य** जलस्य **आदौ** मूलप्रदेशे उद्धृत्य आचामेति। [अथ] पित्रोक्तः पुत्र आचम्य, अनन्तरं कथमिति पृष्टो लवणमित्युक्तवानित्यर्थः। **मध्यात्....लवणमिति।** उक्तोऽर्थः। **अभि....चकार।** एतत् परित्यज्य मत्समीपमागच्छेत्युक्तः पुत्रः तथा चकार। **तत् शश्वत्**

---

गृह्यमाणम्। उदकान्तर्वर्ति तु न ताभ्यां गृह्यते। किं तु जिह्वेन्द्रियेण तद्रसमात्रम्। तथेदमिदानीमनुपलभ्यमानमपि उपायान्तरेण अस्तीति निश्चयोपयोगितया ग्राह्यमेवेति भावः। आचामेति कथमितीति। अत्र आचामेत्यनन्तरम् इतिकरणात्, 'मध्ये आचमनं तेन कृतम्। अथ पृष्टं कथमिति' इति ज्ञायते। अभिप्रास्य इति लोण्मध्यमपुरुषैकवचनमिति युक्तम्। ल्यबन्तत्वे अथशब्दवैयर्थ्यात्। भाष्यं तु निष्कृष्टार्थपरमिति।

वाव किल सत् सोम्य न निभालयसे अत्रैव किलेति ॥ २ ॥

स य एषोऽणिमा ऐतदात्म्यमिदं सर्वम् । तत् सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति ।

भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच॥३

इति षष्ठाध्याये त्रयोदशः खण्डः

---

**संवर्तते** । **तत्** लवणं जले **शश्वत्** सर्वदा सम्यक् वर्तते इत्युक्तवन्तं शिष्यं प्रति पितोवाच । किमिति । **अत्र वाव....किलेति** । रसनेन्द्रियेणोपलभ्यमानतया वस्तुतस्सदेव लवणं यथा चक्षुषा त्वचा वा नोपलभसे, एवमेव **अत्रैव** [जगति अन्तरात्मतया] आगमाचार्योपदे-शादिनाऽवगन्तुं योग्यमेव सच्छब्दितं ब्रह्म अत्रैव किल वर्तत इति **न निभालयसे**=द्रष्टुं न शक्तोऽसि, न पश्यसीत्यर्थः ।

**स....इति** । उक्तोऽर्थः। **भूय....होवाच** । तर्हि सर्वव्यापिनः सच्छब्दितस्यावगत्युपायं दृष्टान्तेन प्रदर्शयेति प्रार्थित आचार्यः तथाऽस्त्वित्युक्तवानित्यर्थः । ६—१३,

---

स्वरससिद्धेति भावः। 'तत् शश्वत् संवर्तते' इत्येतत् 'तं होवाच' इत्येतदनन्तरं वा योज्यम् । अन्यथा तत्र उवाचेत्यादेरध्याहारस्या-नुषङ्गस्य वाऽऽपत्तेः । 'विद्यमानमेव किलात्र त्वं न पश्यसि । एवं त्वया अदृष्टत्वेऽपि अत्रैव किल तत् शश्वत् संमिश्रं वर्तत' इति तदाऽर्थः । वाक्यमिदं दार्ष्टान्तिकविषयेऽप्यावर्त्य योज्यम् । तथाच दृश्यमप्यदृश्यं भवति कदाचित् । अथापि स्वीकार्यमेवेति ।
अत्र न्यग्रोधपरिणामार्हाकारानुपलम्भेऽपि बीजाणिमा धर्मी दृश्यत एव ; सत्तु न दृश्यत इत्यत्र लवणधर्म्यदर्शननिदर्शनेन स प्रत्यायित इति ध्येयम्। एवं लवणदृष्टान्तेन व्यापित्वमपि दर्शितं भवति॥ १३.

षष्ठे चतुर्दशः खण्डः

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्। स यथा तत्र प्राङ् वोदङ् वाऽधराङ् वा प्र(प्रा)ध्मायीत अभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥

तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति; स ग्रामात् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसंपद्येत—

---

**यथा सोम्य पुरुषं...विसृष्टः** । हे सोम्य! यथा लोके गन्धारेभ्यो जनपदेभ्यः **अभिनद्धाक्षं** पिनद्धचक्षुषं कश्चित् पुरुषं चोरो गृहीत्वा **अतिजने** विजने विसृजेत् यदि, सः दिग्भ्रमोपेतः प्राङ्मुख उदङ्मुखो वा अधोमुखो वा, 'अभिनद्धाक्ष एव चोरैरानीतोऽभिनद्धाक्ष एव विसृष्टोऽहम्' इति **प्रध्मायीत** विक्रोशेदि(ते)त्यर्थः ।

**तस्य....संपद्येत** । यथा— कश्चित् कारुणिकः तस्या**भिनहनं** बन्धनं मुक्त्वा, 'उत्तरतो गन्धाराः सन्ति । अत एतां दिशमुत्तरां व्रज' इति प्रब्रूयात् यदि, स तेन एवमुक्तो ग्रामात् ग्रामान्तरं पृच्छन् तैरुप-

---

यद्यप्येवं न संदृशे तिष्ठति रूपमस्य, न चक्षुषा पश्यति कश्चनैनम्—अथापि हृदा मनीषा मनसाऽभिक्लृप्तो भवति, यद्याचार्यवान् पुरुषः स्यादित्याह यथा सोम्येति। अभिनद्धाक्ष आनीतः अभिनद्धाक्षो विसृष्टः। समष्टौ, व्यष्टौ च यावदाचार्योपदेशम् अयमभिनद्धाक्ष एवेति अत्र पदद्वयद्योत्यम्। ग्रामात् ग्रामान्तरं पृच्छन्= अनुष्ठितकर्मयोगज्ञानयोगः। पण्डितः = भक्तियोगरूपविद्याविशेषानुष्ठानौपयिकौपदेशिकज्ञानसंपन्नः। यथा, 'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति। मेधावी= निध्यानसंपन्नः इति च भाव्यम्। ईदृशः वेद= साक्षात्करोति।

**एवमेवेहाऽऽचार्यवान् पुरुषो वेद। तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य [ते] इति ॥ २ ॥**

---

दिष्टमार्गो **मेधावी** उक्तार्थाविस्मरणशीलः **पण्डितः** ऊहापोहक्षमधीयुक्तो यथा गन्धारानेव पुनरभिसंपद्येत [प्राप्य निर्दुःखो भवेत्] इत्यर्थः।

**एवमेवेहाचार्यवान्....इति।** एवमाचार्योपदेशेन, 'ब्रह्मात्मकस्त्वमसि। अतः तदात्मकतया स्वात्मानमनुसंधत्स्व' इति उपदिष्टः तदात्मकत्वमनुसंधत्ते। तस्यैतादृशानुसंधाननिष्ठस्य **तावदेव चिरम्**= तावानेव विलम्बः, यावत् प्रारब्धकर्मारब्धशरीरात् न विमोक्ष्यते। **अथ** तदनन्तरं तु सद्रूपं ब्रह्म संपद्यत इत्यर्थः। **न विमोक्ष्ये, संपत्स्ये** इति पुरुषव्यत्ययः छान्दसः।

केचित्तु—**तस्य तावदेव चिर**मित्यत्र **मे** इत्यध्याहारः। 'तस्य मे तावानेव विलम्बः, यावत् कर्मभिर्न विमोक्ष्ये। अतः परं ब्रह्म संपत्स्ये' इति उपासकस्यानुसंधानप्रकारोऽनेन वाक्येनोच्यते—इति वदन्ति।

ननु **यावन्न विमोक्ष्ये** इत्युक्तौ कथं शरीरात् मोक्षसिद्धिः?

---

**वदन्तीति। इदमुपलक्षणम्—यावन्न विमोक्ष्य इति, 'मोक्षयिष्यामि', 'मुच्ल् मोक्षण' इत्येवं प्रयोगात् मोक्ष्ये इत्यस्य मुच्ये इत्यर्थः। यावदिति पदं इतीत्यनेनान्वेति। तथाच नाहमिदानीं मुच्यमानोऽस्मि, अथ मुक्तौ सिद्धायां संपन्नो भविष्यामीत्यभिसंधिर्यावद् भवति, तावत्कालं विलम्ब इत्यर्थः। नायमभिसंधिः विलम्बहेतुः। किंतु विलम्बकालपरिच्छेदकः। एतदभिसंधिसहकृतकर्मवासनास्थितिपर्यन्तं विलम्ब इत्युक्तं भवति। यद्वा तस्येत्यस्य इतीत्यनेनान्वयः। यावन्न विमोक्ष्ये, तावदेव चिरम्, अथ संपत्स्ये इति सुदृढनिश्चयः तस्य भवतीत्यर्थ इति।**

उच्यते । मोक्ष इत्युक्ते कस्मान्मोक्ष इत्याकाङ्क्षायाम्, अस्यामेव विद्यायाम्, 'अथ यदाऽस्य वाङ् मनसि संपद्यते' (६-८) इत्यादिना देहादुत्क्रमणश्रवणात्, अन्यत्र च, 'शरीरात् समुत्थाय परं ज्योतिरुपसंपद्य'; धूत्वा शरीरम्', 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रवणात्, 'त्यक्त्वा देहं पुनर्जन्म नैति' इति स्मरणाच्च शरीरान्मोक्ष इत्येवावगम्यते । **अथ संपत्स्य** इत्यत्रापि संपत्तेः कर्मापेक्षायाम्, 'सता सोम्य तदा संपन्नो भवति' इति वाक्यान्तरप्रतिपन्नं ब्रह्मैव कर्मतया संबध्यत इत्यवगम्यते । उत्तरखण्डिकायामेतद्विवरणप्रवृत्तायां देहमोक्ष-ब्रह्मसंपत्त्योः कथनाच्च एवमेवार्थः । एवमेव **व्यासार्यैः**, "तन्निष्ठस्य मोक्षोपदेशात्" इत्यत्रोक्तम् ।

न च, 'आचार्यवान् पुरुषो वेद' इत्यत्र वेदेत्यस्य जन्यशब्दज्ञानमात्रार्थकत्वं शङ्क्यम्—वेदान्तेषु विद्युपास्त्योर्व्यतिकरेण प्रयोगात् । शाब्दज्ञानमात्रेण मोक्षस्य, 'बुद्धे क्षेममप्राप्यं तच्छास्त्रैर्विप्रतिषिद्धम्' इत्यादिप्रमाणप्रतिषिद्धत्वाच्च विदिधातुरुपासनावाची एव ।

---

**एवमेव व्यासार्यैरिति । अयं भावः—'भोगेन तु—' इति सूत्रभाष्यानुसारात् वक्ष्यमाणरीत्या कर्मणो मोक्षो वक्तव्यः, न शरीरात् । अथापि चरमशरीरवियोगानन्तरभावि सर्वं संपत्तिकक्ष्यानिविष्टं कृत्वा एवं व्यवहारः। शरीरपदं वा, 'सूक्ष्मं प्रमाणतश्च' इति सूत्रोक्तसूक्ष्मदेहपरम् । अन्ततः पुनर्जननौपयिकाऽऽकारविरहकथने नैर्भर्यात् सर्वं समानतात्पर्यमिति । मूले अथशब्दः कर्मभिरिह मुक्तस्यापि अर्चिरादिगत्या पर्यङ्कारोहणपर्यन्तमीषद्विलम्बं दर्शयत्येव । श्रुतेः तदभिसंध्यभावे अथेत्यस्य स्थाने तदेति रीत्या शब्दः श्रूयेतेति ध्येयम् ।**

एवमस्यामपि विद्यायाम्, 'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्' इति **विज्ञान**शब्दश्रवणात्, तस्य च, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यनेनैकार्थ्याच्च उपासनापरत्वमेवाश्रयणीयम्। **व्यासार्य**ैस्तु, 'आचार्यवान् पुरुषो वेद' इति आचार्यवत्ताफलत्वेन प्रतिपादितार्थविशेषवेदनवचनं तदर्थस्यानुसंधेयत्वे लिङ्गम्' इति वाक्यार्थ-ज्ञानवाचिन एव वेदेत्यस्यानुसंधानाक्षेपकत्वमुक्तम्।

**चतुर्थाध्याये** (१) 'सर्वे पाप्मानः प्रदूयन्ते' इति सर्वकर्मप्रदाहश्रवणात् ब्रह्मविद्योत्पत्त्यनन्तरमेव सर्वकर्मणां नाशः। देहस्थितिस्तु चक्रभ्रमणा-दिवत् संस्कारवशादप्युपपद्यत इति प्राप्ते—उच्यते—"अनारब्धकार्ये एव तु पूर्वे तदवधेः"। विद्योत्पत्तेः प्राचीने अनारब्धकार्ये एव सुकृतदुष्कृते नश्यतः; न तु आरब्धकार्ये; 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति शरीरपातविलम्बावधिश्रवणात् यावच्छरीरधारणं प्रारब्ध-कर्मानुवृत्तेरवश्यम्भावात्। कर्मव्यतिरिक्तस्य देहधारकसंस्कारस्य सद्भावे प्रमाणाभावादित्युक्तम्।

(२) तथा, "भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते" इत्यत्र, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति विद्यायोनिशरीर-पातमात्रस्यैवान्तरायत्वश्रवणात् प्रारब्धयोः पुण्यपापकर्मणोः सत्त्वेऽपि विद्यायोनिशरीरावसाने भवत्येव मोक्ष इति प्राप्ते—उच्यते—"भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते"। **तु**शब्दः पक्षव्यावृत्त्यर्थः। इतरे आरब्ध-कार्ये पुण्यपापे फलभोगेन क्षपयित्वैव ब्रह्म संपद्यते। अनेकशरीर-भोग्यफले चेत्, तदवसाने संपद्यते; भोगेनैव क्षपयितव्यत्वात् प्रारब्ध-

स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम्। तत् सत्यम्। स आत्मा। तत् त्वमसि श्वेतकेतो इति।

भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच॥३

इति षष्ठाध्याये चतुर्दशः खण्डः।

षष्ठे पञ्चदशः खण्डः

पुरुषँ सोम्योपतापिनं ज्ञातयः पर्युपासते, जानासि मां जानासि

---

कर्मणोः। 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति न तद्देहविमोक्षे इत्युच्यते। अपितु देहारम्भककर्मविमोक्षे एवेति प्रतिपादितम्।

प्रकृतमनुसरामः। **स...इति**। उक्तोऽर्थः। **भूय....होवाच**। ननु देहविमोक्षानन्तरं ब्रह्मसंपत्तिरित्ययुक्तम्--'देवोऽहम्, मनुष्योऽहम्' इत्यभिमानस्य कदाप्यनुपरततया यावदात्मभावित्वेन देवादिशरीरसंबन्धस्यापि यावदात्मभावित्वात्। अतो देहराहित्योपजीविनी ब्रह्मसंपत्तिरपि न श्रद्धेयेति मन्वानेन श्वेतकेतुना, 'भूय एव मा भगवान् विज्ञापयतु' इति प्रार्थितः, तथेत्युवाचेत्यर्थः। ६-१४.

**पुरुषं....जानाति**। हे सोम्य! **उपतापिनं** मरणवेदनाक्रान्तं पुरुषं बन्धवः, मां जानासि किम्, मां जानासि किम् इति असकृत् वदन्तः परितस्तिष्ठन्ति। स तु मुमूर्षुः पूर्वोक्तसत्संपत्तिपर्यन्तं तान्

---

ननु संसृतिनिमग्नस्य तदभिमानोच्छेद एव दुर्लभ इत्यत्राह पुरुषमित्यादि। यावदात्मभावित्वादिति। अनादिः संसार इति हि स्वीकृतम्। अन्यथा पूर्वं मुक्तस्यैव स्वयं वा ईश्वरमुखेन वा कारणान्तरेण वा पुनः संसारस्वीकारे मुक्त्यर्थप्रयत्नतदर्थोपदेशादेरनावश्यकत्वात्। एवञ्च एतावत्पर्यन्तमनुच्छिन्नदेहात्माभिमानस्येतः परं तदुच्छेदोऽपि असंभावनीय इति भावः।

**मामिति । तस्य यावन्न वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्, तावज्जानाति ॥ १ ॥**

**अथ यदाऽस्य वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्, अथ न जानाति ॥ २ ॥**

**स य एषोऽणिमा, ऐतदात्म्यमिदँ सर्वम् । तत् सत्यम् । स आत्मा । तत् त्वमसि श्वेतकेतो इति ।**

**भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच॥३**

**इति षष्ठाध्याये पञ्चदशः खण्डः ।**

---

जानातीत्यर्थः । **अथ...न जानाति ।** सत्संपत्त्यनन्तरं तु तान् न जानातीत्यर्थः ।ततश्च सर्वेषामपि मरणदशायां सत्संपत्तौ देहाभिमानाननुवृत्तेः तत्प्रयुक्तदेहसंबन्धनित्यताशंकाया असंभवात्, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति देहसंबन्धात्यन्तनिवृत्तिप्रतिपादकश्रुतेर्नानुपपत्तिरिति भावः । **स य एषोऽणिमा**—प्रारब्धविमोक्षानन्तरभाविसंपत्तिकर्मत्वेन पूर्वखण्डिकानिर्दिष्टः सच्छब्दितः स एषोऽणुरित्यर्थः । शिष्टं स्पष्टम् ।

**भूय...होवाच ।** ननु देवमनुष्यादिप्रकृत्यात्मकत्वाभिसंधौ

---

ततश्चेति । एवं शरीरवियोगमात्रस्य अन्यथाज्ञाननिरोधकत्वे तत्त्वसाक्षात्कारसहितशरीरवियोगस्य तत् कैमुत्यसिद्धम् । यथा खल्वेकेन प्रबलेन कर्मणा प्रतिबन्धात् अन्येषामनेकविधजन्माद्यनुभावकानां कर्मणां कार्यजननशक्तिः कुण्ठ्यते, तथा सत्स्वपि सञ्चितेषु सर्वेषु कर्मसु तत्त्वसाक्षात्कारेण प्रतिबन्धात् दावाग्निदग्धबीजप्रायाणि तानि स्थितान्यपि न कार्यायालमिति स्थिते मुधैव तेषां कर्मणामनुवृत्तिकल्पनेति सर्वकर्मसमुच्छेद एवाऽनुमन्तुमुचितः, एतावत् अभूतस्य तत्त्वज्ञानादेरधुनोत्पत्तिवत् तस्यापि संभवात् श्रुतिसंमतार्थेऽनुपपत्त्यभावादिति ।

षष्ठे षोडशः खण्डः

पुरुषँ सोम्योत हस्तगृहीतमानयन्ति, अपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति। स यदि तस्य कर्ता भवति, तत एवानृतमात्मानं कुरुते। सोऽनृताभिसंधोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति। स दह्यते। अथ हन्यते ॥ १ ॥

---

अनर्थो भवति। सदात्मकत्वाभिसंधौ तु नानर्थप्राप्तिरिति न श्रद्धेयम्। न ह्यभिसंधिभेदमात्रेण महापुरुषार्थापुरुषार्थौ दृष्टचरौ इति मन्यमानेन श्वेतकेतुना, 'भूय एव मा भगवान् विज्ञापयतु' इति प्रार्थितः, 'तथाऽस्तु' इत्युवाचेत्यर्थः। ६-१५.

'ऐतदात्म्यमिदं सर्वं तत् सत्यम्' इति सत्यभूतं सदात्मत्वमनुसंदधानस्यैवानर्थनिवृत्तिः, न तु प्रकृत्यात्मत्वलक्षणासत्यानुसंधाननिष्ठस्यानर्थपरिहार इत्याह पुरुषं....तपतेति। हे सोम्य! लोके राजपुरुषाः हस्ते पुरुषं गृहीत्वा आनयन्ति। कोऽपराधोऽनेन कृत इति परैः पृष्टास्सन्तः, 'अपहारं कृतवान्=चौर्यरूपेणापहारं कृतवान्। अपहृत्य च अपनिह्नुते। अत एतस्य शोधनार्थं परशुं=अयःपिण्डमस्मै तपत' इति वदन्तः आनयन्तीत्यर्थः। स....हन्यते। सः हस्तगृहीतः पुरुषः,

---

अत्र खण्डे इदमप्युक्तं भवति—आचार्यसंबन्धरहितस्य तदज्ञतामात्रेण न तद्वस्त्वभावः। स्वस्य तदज्ञत्वमात्रेण तदभावे इष्यमाणे अदर्शनावस्थायां ज्ञातयोऽपि न सन्तीति स्यात्। तथाचाऽऽभाणकः, 'बिडालो मीलयेत् नेत्रम्, भूलोकोऽस्तमियात् कथम्' इति ॥ १५ ॥

एवं तावत्, अष्टमे खण्डे या परदेवतासंपत्तिरुक्ता, सा न सूक्ष्मदेहमात्रस्य, किंतु जीवविशिष्टदेहस्येति च अथ न जानातीत्यन्तेन दर्शितम्। नन्वियं परदेवतासंपत्तिः सर्वम्रियमाणसाधारणी। तत्

अथ यदि तस्याकर्ता भवति, तत एव सत्यमात्मानं कुरुते । स सत्याभिसन्धः सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति, स न दह्यते ; अथ मुच्यते ॥ २ ॥ स यथा तत्र न दाह्येत ऐतदात्म्यमिदं

---

'न मया द्रव्यमपहृतम्' इति द्रव्यापहारमपह्नुवानः, यद्यपहारस्य कर्ता स्यात्, तदा असत्यप्रतिज्ञत्वात् स्वात्मानमनृतं करोति । अनृताभिसंध्यन्तर्हितः स ततः तप्तं परशुं राजपुरुषार्पितं हस्तेन प्रतिगृह्णाति । ततः स दह्यते । राजपुरुषैर्हन्यते चेत्यर्थः । **अथ यदि....मुच्यते ।** स यदि तस्य चौर्यस्य अकर्तैव सन्, नाहमपाहार्षमिति प्रतिजानीयात्, तदा सत्याभिसंधिवशेनैवात्मानं सत्यं कृत्वा सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं गृह्णाति । सत्याभिसंधिवशादेव प्रतिबद्धदाहो राजपुरुषैर्मुच्यते ।

**स यथा तत्र न दाह्येत... । सः** सत्याभिसंधः पुमान् तत्र परशुग्रहणे यथा **न दाह्येत,** न दह्यते इत्यर्थः । एवं सदात्मकत्वलक्षण सत्याभिसंधिः पुमान् सांसारिकैरनर्थैः न स्पृश्यत इत्यर्थः । **ऐतदात्म्य**

---

बन्धनस्वभावः प्रपञ्चो मुक्तौ कथं न बध्नीयादित्यत्र कर्माभावान्न बन्ध इति सनिदर्शनमाहान्तिमखण्डे । अनृतमात्मानं कुरुते । प्रागेवाभ्युपगतस्तेयश्चेत्, कुतः परीक्षा ? कुतस्तरां परशुतापः ? त्वं मे इति ईश्वरेणोक्ते, 'अहं ते' इत्येवायमनुमन्यते चेत्, कथमयं संसारतापः । अतः स इवायमपि चोरः, अनृताभिसंधश्चेति । ननु स्तेयविस्मरणे कथमनृतम् ? अहमकार्षमिति स्वीकारायोगादिति चेन्न ; तेनापि, नाहं स्मरामीति वक्तव्यम्, न तु नाहं स्तेयमकार्षमिति । वस्तुतः स्तेये प्रवृत्तस्यानृताभिसंधत्वमपि सहजमिति, एवमुक्तम् । स्तेयकर्मतदभावावेव दाहादाहप्रयोजकावभिमतौ । मूले अपहार्षीदिति अडभावः छान्दसः ।

सर्वम्। तत् सत्यम्। स आत्मा। तत् त्वमसि श्वेतकेतो इति।

---

**मिदं....तत् त्वमसि श्वेतकेतो इति।** अतः सर्वस्य सदात्मकत्वानुसंधानमेव सत्याभिसंधिरिति सर्वान्तर्गतः त्वमपि सदात्मक इति सदात्मकत्वरूपसत्याभिसंधिमान् भव। तेन संसारदाहानभिभूतो मुच्यस इत्यर्थः। **तद्धास्य**

---

ऐतदात्म्यमिति। अत्र खण्डे स य एषोऽणिमेत्यनुक्त्या सत्यत्वाद्युपपादनार्था एव सर्वे इमे खण्डा इति ज्ञायत इति प्रागेवाभिहितम्। अत्र तद्वाक्योपेक्षाकारणं तु, यथा तत्र दृष्टान्ते सत्याभिसंधः तप्तपरशुना न दाह्यते, एवमिदं सर्वमैतदात्म्यं जगदपि न दाह्येत, यदि सत्याभिसंधं स्यात् इत्यन्वयस्य स्फुटप्रतिपत्तये। दार्ष्टान्तिकान्वयानुगुणश्चात्र दाह्येत इति लिङन्तमेव श्रूयते, न तु दाह्यत इति। एवमिह प्रपञ्चान्तर्गतः सर्वोऽपि जीवो मोक्षार्ह इति ज्ञापितं भवति। तत् सत्यमिति। अनृतेन प्रत्यूढाः अनृताभिसंधस्तेनवत् तप्ता भवेयुः। अतापाय स यथा सत्याभिसंधः, तथा त्वमपि सत्याभिसंधो भव। तद्धि सत् सत्यम् इत्युपदेशः कृतो भवति। अयमत्र सारसंग्रहः—

(१) 'कार्यात्म सज्जगद्धेतुः (२) तेजोबन्नसमष्टिकृत्।<br>
(३) त्रिवृत्कृत्य व्यष्टिकृच्च (४) त्रिवृत्ता चाक्षगोचरः॥१॥<br>
(५) तेजोबन्नैः कायपोषः (६) तन्नाणिष्ठांशसंभवः।<br>
(७) तदभावे मनोहानिः' इति व्याहृतिभिर्वदन्॥२॥<br>
(१) 'चिदचिल्लयभूमिर्यो (२) नानाजीवलयास्पदम्।<br>
(३) चिन्नदीनिर्गमाम्भोधिः (४) अविनाशिचिदाश्रयः॥३॥<br>
(५) सूक्ष्मोऽप्यतिस्थूलहेतुः (६) व्यापी चाब्लवणं यथा।<br>
(७) आचार्यवद्भिर्वेद्यश्च (८) स्वसंपत्याऽभिमानहा॥४॥<br>
(९) यदाप्तौ न पुनर्बन्धः स सत्यात्माऽन्तरोऽणिमा।'<br>
इति खण्डैः रसैः श्वेतकेतुमुद्दालकोऽब्रवीत्॥५॥

तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ३ ॥ इति षष्ठे षोडशः खण्डः ॥
इति छान्दोग्योपनिषदि षष्ठोऽध्यायः (षष्ठः प्रपाठकः)

—०—०—

**विजज्ञाविति विजज्ञाविति**। सच्छब्दितं तत् परं ब्रह्म **अस्य** गुरोर्वचनात् **विजज्ञौ** ज्ञातवान् श्वेतकेतुरित्यर्थः। द्विरुक्तिःअध्यायसमाप्त्यर्था।

अत्र **व्यासार्यैः, तद्धास्य विजज्ञा**वित्यत्र **विजज्ञा**विति पदम्, 'अविज्ञातं विज्ञातम्' इति प्रक्रमश्रुत**विज्ञान**शब्दसमानार्थकम्, अत एवोपासनवचनमित्युक्तम्। तत्तु संभवाभिप्रायेण। पूर्वत्र अष्टकृत्वोऽभ्यस्तेन, 'भूय एव मा भगवान् विज्ञापयतु' इति वाक्येन, 'तन्मे विजानीहि' इति वाक्येन च प्रस्तुतविज्ञानविषयत्वादस्य **विजज्ञा**विति पदस्य। तत्र च वाक्ये उपासनप्रसक्तेरेवाभावात्। न हि, **विज्ञापय**त्वित्यत्र उपासनं कारयतु इत्यर्थो युक्तः। 'त्रिवृत् त्रिवृदेकैका भवति, तन्मे विजानीहि' इति, 'भूय एव मा भगवान् विज्ञापयतु' इति वाक्ये, 'तद्धास्य विजज्ञाविति विजज्ञौ' इति वाक्ये च पूर्वत्र त्रिवृत्करणे श्रुतस्य विजानातेरुपासनार्थत्वाभावेन इहापि तथात्वस्यैव युक्तत्वादिति द्रष्टव्यम्। केचित्तु, 'त्रिवृत्करणप्रकरणे च अत्र च श्रुतानां विज्ञानशब्दानामुपासनार्थत्वे दोषाभावादेतेषां विज्ञानशब्दानामुपासनार्थत्वमेव। अथवा मध्ये विज्ञानशब्दानामतथात्वेऽपि उपक्रमोपसंहारैकरूप्यार्थमुपक्रमस्थविज्ञानशब्दवत् उपसंहारस्थं **विजज्ञा**विति पदमुपासनार्थमेव' इति वदन्ति ॥

एतद्विषयमधिकरणं लिख्यते—**समन्वयाध्याये** प्रथमपादे—

सर्वं हि जगत् सुखदुःखमोहात्मकं दृष्टम्। लोके हि एकस्यैव रूपयौवनशालिनो योषित्पिण्डस्य भर्तारं प्रति सुखरूपत्वम्, सपत्नीजनं

प्रति दुःखरूपत्वम्, कामुकपुरुषान्तरं प्रति मोहरूपत्वञ्च दृष्टम्। अतः सुखदुःखमोहात्मकतया सत्त्वरजस्तमोमयस्य जगतः तदनुरूपमेव कारणं वक्तव्यमिति युक्तिसिद्धं त्रिगुणात्मकं प्रधानं **सर्वज्ञकपिलस्मृति**सिद्धं **सद्विद्या**प्रतिपाद्यमिति पूर्वपक्षे प्राप्ते—उच्यते—

**"ईक्षतेर्नाशब्दम्"**। शब्दः प्रमाणमेव न भवति यस्य, तत् **अशब्दम्**। आनुमानिकमिति यावत्। आनुमानिकं प्रधानम्, 'सदेव सोम्येदमग्र आसीत्' इति न **सच्छब्दितम्**। अपितु परं ब्रह्मैव। कुतः? **ईक्षतेः**। ईक्षणादित्यर्थः। यद्यपि, 'इक्श्तिपौ धातुनिर्देशे वक्तव्यौ' इति **ईक्षति**शब्दो धातुवाची, तथापि इह धातुवाचिना **ईक्षति**शब्देनार्थो लक्ष्यते। 'तदैक्षत बहु स्यां प्रजायेयेति' इति सच्छब्दितस्येक्षणकथनात्। अचेतने ईक्षणासंभवात्। न च एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृत्पिण्डादिदृष्टान्तस्य चोपन्यासेन अनुमानविषयत्वप्रतीतेः आनुमानिकमेव प्रधानमिह प्रतिपाद्यत इति शङ्क्यम्—प्रतिज्ञ दृष्टान्तोपन्यासेऽपि प्रधानभूतहेत्ववयवानुपदेशेन अनुमानोपन्यासरूपत्वाभावात्। न च, 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' इति कार्यलिङ्गोपन्यासात् अनुमानविवक्षा प्रतीयत एवेति वाच्यम्; उपक्रमोपसंहाराद्यन्तर्गतोपपत्तिरूपतात्पर्यलिङ्गतया कार्यलिङ्गोपन्यासेऽपि सांख्याभिमतसुखदुःखमोहान्वितत्वरूपहेतूपन्यासादर्शनात्।

**"गौणश्चेन्नात्मशब्दात्"**। ननु, 'तत्तेज ऐक्षत' इति अचेतने

---

**न सच्छब्दितमिति। सच्छब्दितमिति पक्षनिर्देशः। उपक्रमोपसंहाराद्यन्तर्गतेति। 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इत्युक्तान्तर्गतेत्यर्थः।**

तेजआदौ श्रुतस्य ईक्षणस्य मुख्यस्यासंभवेन कार्यौन्मुख्यलक्षण गौणार्थस्यैव समाश्रयणीयतया सच्छब्दितेऽपि श्रूयमाणमीक्षणं गौण मेवास्तु इति चेन्न ; 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा' इति सत आत्मत्वप्रतिपादकश्रुति[व्या]कोपप्रसङ्गेन गौणेक्षणप्रायपाठस्यानादर्तव्यत्वात् । तेजःप्रभृतिशब्दानामपि परमात्मपर्यन्त(त्मपर)तया तत्तापीक्षणस्य मुख्यत्वसंभवाच्च । "तन्निष्ठस्य मोक्षोपदेशात्" । तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति सदात्मकत्वविद्यानिष्ठस्य शरीरपातमात्रान्तरायब्रह्मसंपत्तिलक्षणमोक्षश्रवणात् । न हि प्रकृत्यात्मत्वानुसंधाननिष्ठस्य मोक्षः सांख्यमतेऽपि संप्रतिपन्नः ।

"हेयत्वावचनाच्च" । यदि सच्छब्दितं प्रधानं स्यात् , तर्हि सदात्मकत्व मुमुक्षोः हेयतयोपदेश्यं स्यात् ; न तु अनुसंधेयत्वेनेत्यर्थः।

'प्रतिज्ञाविरोधात्' । प्रधानविज्ञाने तत्कार्याचेतनमात्रविज्ञानेऽपि चिदचिदात्मकसर्वप्रपञ्चविज्ञानाभावेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा पीड्येत । "स्वाप्ययात्" । 'सता सोम्य तदा संपन्नो भवति' इति श्रुतिः, सत्संपत्तिम् , 'स्वमपीतो भवति' इति स्वाप्ययत्वेन बोधयति । सच्छब्दितस्य प्रधानत्वे स्वशब्दार्थभूतमात्मत्वं नोपपद्यते । ब्रह्मत्वे तु स्वशब्दार्थभूतमात्मत्वमुपपद्यते । तथा अचेतने अकारणे जीवस्याप्ययशब्दितो लयश्च नोपपद्यते । "गतिसामान्यात्" । सर्वेषु वेदान्तेषु, 'आत्मा वा इदमेक एवाग्र आसीत्', 'एको ह वै नारायण आसीत्', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु चेतनकारणत्वावगतेः तत्साम्यमेवेहापि वक्तव्यम् । अतस्तदैकार्थ्याय इहापि सच्छब्दितं ब्रह्मैव कारणत्वेन निर्दिश्यते ।

"श्रुतत्वाच्च" । अस्यामेवोपनिषदि सच्छब्दवाच्यस्य अद्वितीयत्व-नामरूपव्याकर्तृत्व-सर्वज्ञत्व-सर्वशक्तित्व-सर्वाधारत्वापहतपाप्मत्वादीनां श्रवणात् नाचेतनं प्रधानं सच्छब्दितमिति स्थितम् ॥

**इति छान्दोग्योपनिषत्प्रकाशिकायां षष्ठोऽध्यायः (षष्ठः प्रपाठकः)**

+ + + + +

---

इति स्थितमिति । एवमन्तराभूतग्रामाधिकरणेऽपि सद्विद्याविचारोऽस्ति । प्रधानविषयवाक्यमन्यदधिकृत्य प्रवृत्तत्वात्तु तदधिकरणमत्र भाष्ये न निरदेशि । आद्यसूत्रद्वयेऽपि, 'उपदेशवत्', 'इतरवत्' इति एतद्दृष्टान्तीकरणात्, तृतीयसूत्रस्य, 'सैव हि सत्यादयः' इत्यस्य सर्वात्मना एतद्विषयकत्वाच्च तदप्यनुसंधेयम् ॥

अथ भूमविद्या

(७.१) अणिम्न उपासनरूपा सद्विद्या प्रागुक्ता ; अथ भूम्न उपासनरूपा भूमविद्या । सा, 'तत् सत्यम्' इति सत्यविषयिणी ; इयमपि, 'यः सत्येनातिवदति' इति वचनात् तथा । तत्र, 'स आत्मा' इति, अत्र, 'अथात आत्मादेशः', 'आत्मतः प्राणः' इति चोभयोरात्मविषयता । तत्र, 'तत्त्वमसि' इत्यनेन 'अहं ब्रह्मास्मि' इत्युपासनमुक्तम्, 'अहमेवेदं सर्वम्' इति चात्र । तत्र, 'यावन्न विमोक्ष्ये, अथ संपत्स्ये' इति संगृहीतं मोक्षस्वरूपमत्र विव्रियते, 'स स्वराड् भवति, तस्य सर्वेषु लोकेषु कामचारो भवति, स एकधा भवति त्रिधा भवति' इत्यादिना । न केवलं मनुष्याधिकारं ब्रह्मविद्यानुष्ठानम्, किन्तु तदुपर्यपीत्येतदुपाख्यानमुखेनात्र सूच्यते । पूर्वं स्तब्धस्य नि शोकस्यानुपसन्नस्य पुत्रस्य पित्रा कृपया कृतो विद्योपदेशः ; अत्र च अकृत्स्नतत्त्ववेदिनः शोकार्तस्योपसन्नस्य भ्रातुः भ्रात्रा कृपया कृत्स्नोपदेश इत्येवं संगतिर्भाव्या । अणिमेति सौक्ष्म्यं सर्ववस्त्वन्तःप्रवेशार्हत्वातिदुर्ग्रहत्वरूपम्, भूमेति वैपुल्यञ्चात्यन्तापरिच्छिन्नत्वरूपमेकस्मिन्नविरुद्धमिति उभयमपि ब्रह्म-

अथ सप्तमोऽध्यायः ॥ प्रथमः खण्डः

अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तँ होवाच यद्वेत्थ, तेन मोपसीद । ततस्त ऊर्ध्वं वक्ष्यामीति ॥ १ ॥

---

**भूमविद्या** प्रस्तूयते—**अधीहि...नारदः ।** सनत्कुमारं योगीन्द्रं नारद ऋषिः, 'अधीहि भगवः' इति मन्त्रोच्चारणपूर्वकं विधिवदुपसन्न इत्यर्थः । **अधीहि** अधीष्वेत्यर्थः । **तं होवाच ।** तमुपसन्नं नारदं सनत्कुमार उवाचेत्यर्थः । तदेवाह **यद्....उपसीद ।** यत् त्वं ज्ञातवान् असि, 'तत् इदमहं जाने' इति तत्प्रख्यापनेन मामुपसीद । **ततस्त ऊर्ध्वं वक्ष्यामीति ।** तत ऊर्ध्वं=ज्ञातांशातिरिक्तम् । ज्ञातांशस्यैवोपदेशो व्यर्थ इति भावः ।

---

विद्या । यथावस्थितभूमब्रह्मविद्यायां पुरुषमवतारयितुमादौ अर्वाञ्चि चतुर्दशोपासनान्युच्यन्ते ।

> क्रमादिमेऽत्र विषयाः नाम वाक् च मनस्तथा ।
> संकल्पश्चित्तमाध्यानं विज्ञानं बलमन्नकम् ॥ १ ॥
> आपस्तेजस्तथाऽऽकाशः स्मर आशा चतुर्दश ।
> प्राणः पञ्चदशस्त्वीक्ष्यो भूमविद्यारतैरपि ॥ २ ॥

अधीहि भगव इति । 'अधीहि भगवो ब्रह्म' इति मन्त्रो भृगुणा वरुणाय पित्रे निवेदितो भृगुवल्ल्यां श्रूयते । अयमपि नारदो नूनं तथैवार्थयितुं प्रवृत्तः शोकवेगविवश एवं कर्मकारकमत्यक्षत् । अत एव सनत्कुमारः, 'अध्यापनीयोंशः कः' इत्यनिर्धार्य, 'यद्वेत्थ' इत्यादि वक्ष्यति । यद्वा अधीतबहुविद्य एवायं नारदः आत्मवेदनविरहमात्रेण सर्वमनधीतमेव मन्वानः आत्मवेदनसिद्ध्यौपयिकं पूर्णाध्ययनमेव चिकीर्षुरिव प्रत्यग्रोपनीतवटुवत् , 'अधीहि भगवः' इत्याकारकमेव मन्त्रं प्रायुङ्क्त । सनत्कुमारस्तु, 'अलमधीताध्यापनेन। युक्तमनधीत-

**स होवाच—ऋग्वेदं भगवोऽध्येमि यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं**

---

**स....।** सः नारदः । हे भगवः! **अध्येमि** स्मरामि । वेद्मीति यावत् । यत् वेत्थ' इति वेदनस्योक्तत्वात् ।....**इतिहास-पुराणं पञ्चमम्** । 'वेदान् अध्यापयामास महाभारतपञ्चमान्' इतिवत् ऋगादिभिरितिहासस्यात्र पञ्चमत्वोक्तिः । **वेदानां वेदम्** । **वेदानां** ऋग्वेदादीनां **वेदं** प्रकृतिप्रत्ययाऽऽवेदकम् । व्याकरणमित्यर्थः । **पित्र्यं** श्राद्धकल्पम् । **राशिं** गणितम् । **दैवम्** उत्पातज्ञानम् । **निधिं**

---

मात्राध्यापनम्' इति सूचयन्, 'यद्वेत्थ' इत्यादिकमवादीदिति । अधीष्वेत्यर्थ इति । भृगुवल्ल्याम्, 'अधीहि उपदेशाय स्मर, अधीष्व, अध्यापय' इत्युक्तः सर्वोऽर्थ इहापि भाव्यः । 'इक् स्मरणे' इत्ययं धातुः परस्मैपदी । अयमपि, 'इङ् अध्ययने' इति धातुवत् अधिपूर्वक एव ।

इतिहासपुराणं पञ्चममिति । नूनमयं वेदभागो वेदव्यासेन महर्षिणा चतुर्विधार्त्विज्योपयोगितया ऋग्वेदादीन् चतुरोऽध्यापितवता साक्षान्नाध्यापितः, स्वकृतेतिहासपुराणमुखेन तु फलतः संगृहीत इति । यद्यपि वेदानां वेदमित्येतत् एतद्विशेष्यं भवितुमर्हति, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इत्युक्तरीत्या वेदार्थवेदकत्वात् वेदानां वेद इति । एवं पित्र्यमित्यस्य राशिमिति, दैवमित्यस्य निधिमिति च विशेष्यं प्रतीयते । अत एवोपरि, 'पित्र्यो राशिः । दैवो निधिः' इति पित्र्यदैवपदयोः पुल्लिङ्गत्वौचित्यम् । अन्यथा सामान्ये नपुंसकमेव स्यात्—अथापि तथा राशिनिधिपदनिर्दिष्ट-ग्रन्थविशेषाप्रसिद्धेः, विशेष्यविशेषणभावोपेक्षया पृथक्करणे नारद-स्याधिकाभिज्ञत्वसिद्ध्या च यथाशाङ्करमर्थो वर्णितः । व्याकरणमिति अनुक्ताङ्गान्तरोपलक्षकम् । पित्र्यादिः सर्वोऽप्ययं वेदानां वेद एव ।

वाकोवाक्यमेकायनम्, देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्याम्। एतद्भगवोऽध्येमि ॥ २ ॥

सोऽहं भगवो मन्त्रविदेवाऽस्मि; नाऽऽत्मवित्। श्रुतँ ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मविदिति। सोऽहं भगवः शोचामि;

---

निधिदर्शनोपायप्रतिपादकशास्त्रम्। **वाकोवाक्यं** तर्कशास्त्रम्। **एकायनम्** एकायनशाखाम्। **देव....विद्याम्। देवविद्या** देवतोपासनप्रकारविद्या। **ब्रह्मविद्या** वेदाङ्गभूतशिक्षादिविद्या। **भूतविद्या** वशीकरणविद्या। **क्षत्रविद्या** धनुर्वेदः। **नक्षत्रविद्या** ज्यौतिषम्। **सर्पविद्या** गारुडविद्या। **देवविद्या** गान्धर्वशास्त्रम्। **जनविद्या** आयुर्वेदः। **एतद् भगवोऽध्येमि**—अहमेतत् सर्वं जानामीत्यर्थः। **सोऽहं...**। [हे भगवः पूजावन्!] अहमेतत् सर्वं [जानामि।] जानन्नपि **मन्त्रविदेवास्मि** शब्दब्रह्मनिष्ठ एवास्मि। यद्वा (?) मन्त्रप्रधानकर्मनिष्ठ इति वा अर्थः। **नात्मविदस्मि** न परब्रह्मवित्। **आत्म**शब्दस्य तस्मिन्नेव मुख्यत्वात्। जीवस्य [तु] आपेक्षिकात्मत्वेन निरङ्कुशात्मत्वाभावाच्च। मन्त्रवित्त्वात् आत्मवित्त्वे किमधिकं स्यादित्यत्राह **श्रुतं....इति। भगवद्दृशेभ्यः**

---

तर्कशास्त्रमिति। वाकोवाक्यमिति उक्तिप्रत्युक्तिरूपवाक्यं पूर्वपक्ष-सिद्धान्त-प्रश्नसमाधानादिरूपमुच्यते। तर्कश्च, 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितः तत्त्वज्ञानार्थमूहस्तर्कः' इति लक्षितः तादृश इति। एकायनं = नीतिशास्त्रमिति शाङ्करम्। सर्पदेवजनेति क्रमेण पाताल-स्वर्गधरणिगतप्राणिकथनात् तत्तल्लोके तत्तदुत्पत्तिस्थित्यादिविषयिणी विद्येत्यपि स्यात्। यः कश्चिदर्थोऽस्तु; नूनमनिर्भर ईदृशे विषये भाष्यकृतां सर्वेषाम्। सर्वार्थोक्तौ विस्तरापत्तेः एकमात्रे वक्तव्ये कस्यापि कथनसंभवादिति। मन्त्रविदेवास्मीति। मन्त्रार्थमपि

**तं मा भगवाञ्छोकस्य पारं तारयत्विति ।**

**तँ होवाच । यद्वै किंचैतदध्यगीष्ठाः, नामैवैतत् ॥ ३ ॥**

**नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहास-**

---

भवादृशेभ्यः महद्भ्यः, 'आत्मवित् शोकं संसारं तरति' इति मे श्रुतमेव हि । **मे** इति संबन्धसामान्ये षष्ठी । मया श्रुतमित्यर्थः । **सोऽहं...तारयत्विति** । एतादृशविद्यासंपन्नोऽप्यहं आत्मज्ञानराहित्यात् शोकार्णवे पतितोऽस्मि । तं तादृशं मां भगवान् आत्मज्ञानेन शोकार्णवस्य पारं तारयतु—इत्युवाचेत्यर्थः ।

**तं होवाच** । सनत्कुमार इति शेषः । **यद्वै...एतत्** । **अध्यगीष्ठाः** अधीतवान् असीत्यर्थः । अत्र तेषां नामैवात्मेति प्रतिवचने दातव्ये नामैवैतदिति अधीतर्ग्वेदादिसमानाधिकरण्येन प्रतिवक्तुः सामानाधिकरण्यनिर्देशार्हत्वमेवाऽऽत्मत्व[स्वौपयिक]मिति भावः । तदेव प्रपञ्चयति **नाम वै...विद्या** । स्पष्टोऽर्थः । उपसंहरति **नामैवैतत्** ।

---

जानामि ; अथापि, 'वचसां वाच्यमुत्तमम्' इति सर्वशब्दविद्यापर्यवसानभूमेरज्ञानात् सर्वत्राहमकृत्स्नविदेव । अतो नाममात्रज्ञतुल्योऽहमिति भावः । किमधिकं स्यादिति । आत्मज्ञानाभावे का हानिरित्यर्थः ।

अधीते ऋग्वेदादौ तस्याश्रद्धा मा भूदिति प्रथमतस्तस्य नामत्वं ब्रह्मदृष्ट्यर्हत्वञ्च प्रदर्श्याथ प्रश्नप्रतिवचनक्रमेण मुख्यब्रह्मभूमसुखमवतारयितुमनाः सनत्कुमार आह यद्वै किञ्चैतदध्यगीष्ठा इति । सामानाधिकरण्येन प्रतिवक्तुरिति । नाम्नि ब्रह्मदृष्टेर्विधास्यमानतया ब्रह्मवत् नाम्नोऽप्यात्मत्वप्रयुक्तसामानाधिकरण्यनिर्देशार्हत्वं मनसि निधाय नामैवैतदिति समानाधिकरणं प्रयुक्तमित्याशयः स्यात् । इदञ्च

पुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या । नामैवैतत् । नामोपास्स्वेति ॥ ४ ॥

स यो नाम ब्रह्मेत्युपास्ते, यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति, यो नाम ब्रह्मेत्युपास्ते ।

---

नामरूपमयत्वात् प्रपञ्चस्य, विशिष्य(ष्ट)ऋग्वेदादिलक्षणशब्दराशेः नामरूप(नामात्मक)त्वाच्च सर्वं नामैवेत्यर्थः । ततः किमित्यत्राह **नामोपास्स्वेति** । अत्र ब्रह्मेति शेषः। नाम ब्रह्मोपास्स्वेत्यर्थः । तस्य फलमाह **स यो...भवति** । नामप्रवृत्तिर्यावति देशे भवति, तावति देशे अस्य नामब्रह्मोपासकस्य यथेष्टं सञ्चरणं भवतीत्यर्थः। उक्तमेव पुनरुपसंहरति **यो... ब्रह्मेत्युपास्ते** । आत्मानं जिज्ञासमानं प्रति ब्रह्मत्वेन नामोपदिशतः (नामोपदर्शनस्य) आत्मत्वब्रह्मत्वे अन्यूनानतिरिक्तवृत्तिधर्माविति भावः ।

ब्रह्मशब्दप्रवृत्तिनिमित्तं बृहत्त्वं नाम्नि न पुष्कलमिति मत्वा

---

ऋग्वेदाद्यपेक्षया नाम्नो भिन्नत्वमनुमत्य । अभिन्नत्वं सहजमस्तीति च दर्शयिष्यति, 'विशिष्य ऋग्वेदादिलक्षणशब्दराशेर्नामरूपत्वाच्च' इति । नामैवैतदित्येवकारेण वस्तुतः ऋग्वेदादेर्न ब्रह्मत्वम् । किन्तु आरोप एवेति वक्ष्यमाणदृष्टिविध्युपयुक्तसूचनमपि ।

स यो नाम ब्रह्मेत्युपास्ते इति आद्यन्तयोः कथनं व्यर्थमिति शङ्कां परिहरति उक्तमेव पुनरुपसंहरतीति । एवं वाऽस्तु—उपासनमुपदिष्टम्; तत्राधिकारी कथ्यते स इति । अत्र वर्ण्यत इति शेषः । पृथग्वाक्यमिदम् । यो नाम ब्रह्मेत्युपास्ते, सोऽथ वर्ण्यत फलमुखेनेति । अथ वर्णनम्, यावन्नाम्न इत्यादिना । एवञ्च स इत्यस्योत्तरवाक्ये अस्येति पदघटितेऽन्वयासंभवेऽपि न क्षतिः । एवं ७-११-२. इत्यादावपि सर्वत्र द्रष्टव्यम् ।

अस्ति भगवो नाम्नो भूय इति । नाम्नो वाव भूयोऽस्तीति ।
तन्मे भगवान् ब्रवीत्विति ॥ ५ ॥

इति सप्तमाध्याये प्रथमः खण्डः ।

---

नामोपदेशेन अपरितुष्टस्सन् नारदः पृच्छति **अस्ति भगवो नाम्नो भूय इति** । वैपुल्यार्थात् बहुशब्दात् अतिशायनिके ईयसुन्प्रत्यये **भूय** इति रूपम् । किं नाम्नोऽपि विपुलतरं किञ्चिदस्तीति प्रश्नार्थः । वैपुल्यं तु गुणोत्कर्षकृतम्; न तु परिमाणकृतम् । तथैवोत्तरत्र प्रपञ्चनादिति द्रष्टव्यम् । अत्र नाम्नो बृहत्त्वलक्षणब्रह्मत्वे कथिते ततोऽपि किं बृहदस्तीति प्रष्टव्ये ततोऽपि किं भूयोऽस्तीति प्रश्नात् भूयस्त्वं बृहत्त्वञ्चैकमिति ज्ञाप्यते । गुरुराह **नाम्नो वाव भूयोऽस्तीति** ।

शिष्य आह **तन्मे भगवान् ब्रवीत्विति** । स्पष्टोऽर्थः । ७-१.

---

नाम्नो वाव भूयोऽस्तीति । नन्वत्र नारदो नाम्नि ब्रह्मदृष्टिरिहोक्तेति किं मन्यते, उत वास्तवब्रह्मोपास्तिरिति । नाद्यः; तथासति उत्कृष्टदृष्टेरेव निकृष्टे कर्तव्यतया नामापेक्षया ब्रह्म भूयोऽस्तीति तेन ज्ञातमेवेति कथमयं प्रश्नः । अन्त्ये, नामशब्दस्य नामान्तर्याम्यर्थकत्वात् तादृशनामपदवाच्यात् भूयो नास्त्येव; अतः प्रश्नः समाधिरीतिश्च न युज्यत एवेति चेन्न-ब्रह्मदृष्टेरेव तेनापि बुद्धत्वात् । प्रश्नार्थस्तु नामापेक्षया विपुलतरं किञ्चिद् ब्रह्मदृष्ट्यर्हमस्ति किमिति । वास्तवब्रह्मत्वाभावात् औपचारिकं किञ्चिद्रूपं बृहत्त्वमादाय नाम्नि ब्रह्मदृष्टिरेव क्रियते । सा च ततो विपुलतरसत्त्वे तत्रोचितेति प्रश्नतात्पर्यम् । अत एव प्राणशब्दवाच्यजीवात्मातिशयितस्य ब्रह्मन्यूनस्य ब्रह्मदृष्ट्यर्हस्य कस्यचिदभावात्, 'अस्ति भगवः प्राणात् भूयः' इति न पृष्टं नारदेनेत्यलमिदानीम् ॥

वाग् वाव नाम्नो भूयसी । वाग् वा ऋग्वेदं विज्ञापयति यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्याम्, दिवञ्च पृथिवीञ्च वायुञ्चाऽऽकाशञ्चाऽऽपश्च तेजश्च देवाँश्च मनुष्याँश्च पशूँश्च वयाँसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलिकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्च । यद्वै वाङ् नाभविष्यत्—न धर्मो नाधर्मो व्यज्ञापयिष्यत्; न सत्यम्, नानृतम्, न साधु, नासाधु, न हृदयज्ञो, नाहृदयज्ञो वागेवैतत् सर्वं विज्ञापयति । वाचमुपास्स्वेति ॥ १ ॥ स यो वाचं ब्रह्मेत्युपास्ते, यावद् वाचो गतम्, तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्ते । अस्ति भगवो वाचो भूय इति । वाचो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्याये द्वितीयः खण्डः ॥

---

गुरुराह **वाग्वाव नाम्नो भूयसी** । वावशब्दः प्रसिद्धौ । तदेव प्रपञ्चयति **वाग्वा ऋग्वेदं विज्ञापयति** । वैशब्दोऽवधारणे । **यजुर्वेदं....अहृदयज्ञं च** । **हृदयज्ञो** मनोज्ञः, हृदयप्रिय इत्यर्थः । शिष्टं स्पष्टम् । एतत् सर्वं वागेव विज्ञापयतीति पूर्वेणान्वयः । वागभावे एतज्ज्ञानं नास्तीत्यपि दर्शयति **यद्वै....व्यज्ञापयिष्यत्** । वागिन्द्रियाभावे वेदाध्ययनाद्यभावात् धर्मादिकं विज्ञातं च नाभविष्यदित्यर्थः । **वागेव...उपास्स्वेति** । स्पष्टम् ।

**स यो...ब्रवीत्विति** । सर्वं पूर्ववत् ॥ ७-२ ॥

---

श्वापदानि=व्याघ्रादीनि हिंस्राणि सत्त्वानि। पतङ्गाः=शलभाः॥

सप्तमे तृतीयः खण्डः

मनो वाव वाचो भूयः । यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवति, एवं वाचञ्च नाम च मनोऽनुभवति । स यदा मनसा मनस्यति—मन्त्रानधीयेयेति, अथाधीते; कर्माणि कुर्वीयेति, अथ कुरुते ; पुत्रांश्च पशूँश्चेच्छेयेति, अथेच्छते ; इमञ्च लोकममुञ्चेच्छेयेति, अथेच्छते । मनो ह्यात्मा । मनो हि लोको मनो हि ब्रह्म । मन उपास्स्वेति ॥ १ ॥

---

गुरुराह **मनो....भवति** । यथा आमलकफलद्वय वा [नां]कोल-फलद्वयं वा विभीतकफलद्वयं वा मुष्टावन्तर्गतं भवति, एवं वाङ्नामनी मनस्यन्तर्गते इत्यर्थः । तदेवोपपादयति **स यदा....अथेच्छते** । **स** पुरुषो यदा मनसा, **'मन्त्रान् अधीयीय'**, 'मन्त्रान् उच्चारयेयम्' इति **मनस्यति** मनुते, तदनन्तरमेवाधीते । कर्माणि करवाणीति मननानन्तरमेव कर्माणि कुरुते । पुत्रांश्च पशूंश्च इच्छेयम् , इमं लोकममुञ्च इच्छेयमिति मत्वेच्छति । अतश्च मननलक्षणमनोव्यापाराधीनत्वात् वागादिप्रवृत्तेर्मनसो भूयस्त्वमिति भावः । **मनो...ब्रह्म** । मनोधीनत्वात् आत्मधर्मभूतकर्तृत्वादेः, मन एवाऽऽत्मा । लोकस्यापि मनोव्यापाराधीनत्वात मन एव लोकः । वागाद्यपेक्षया बृहत्त्वात् मनो हि

---

कोलफलं पूगफलमिति माध्वोक्तम् । बदरफलमिति शाङ्करे ।

स यदा मनसा मनस्यतीत्येतत् अधीयेयेति इत्यत्रैव कुर्वीयेति, इच्छेयेति इत्युभयत्राप्यन्वेति । अत एव तस्य प्राङ्निर्देशः। इच्छेयमिति मनस्यनं नाम, किमियमिच्छा अस्थानपतिता, स्थाने वेति विमर्शपूर्वकावधारणम् , 'असंशयं क्षत्रपरिग्रहक्षमा' इत्यादिवत् । अध्ययनानुष्ठानपुत्रपश्वाद्यैहिकामुष्मिकफलानि मनोधीनानीत्युक्तं भवति ।

स यो मनो ब्रह्मेत्युपास्ते, यावन्मनसो गतम्, तत्रास्य यथा-कामचारो भवति, यो मनो ब्रह्मेत्युपास्ते ।

अस्ति भगवो मनसो भूय इति । मनसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ।

इति सप्तमाध्याये तृतीयः खण्डः ।

सप्तमे चतुर्थः खण्डः

संकल्पो वाव मनसो भूयान् । यदा वै संकल्पयते, अथ मनस्यति, अथ वाचमीरयति, तामु नाम्नीरयति । नाम्नि मन्त्रा एकं भवन्ति । मन्त्रेषु कर्माणि ॥ १ ॥

तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि । समक्लृपतां द्यावापृथिवी, समकल्पेतां वायुश्चाऽऽकाशश्च, समकल्पन्तामापश्च तेजश्च। तेषाँ संक्लृप्त्यै वर्षं संकल्पते। वर्षस्य

---

ब्रह्म । मन उपास्स्वेति । अतस्त्वं मन उपास्स्वेत्यर्थः । [तस्य फलमाह] स....ब्रवीत्विति । स्पष्टोऽर्थः ॥ ७-३.

गुरुराह संकल्पो वाव मनसो भूयान् । यदा....कर्माणि । यदा इदं कर्तुं युक्तमिति संकल्पयति, अथ तदा मनस्यति इदं कर्तव्यमिति मन्यते । ततश्च वागिन्द्रियं प्रेरयति । तच्च वागिन्द्रियं नाम्नि ईरयति शब्दोच्चारणविषये नियुङ्क्ते इत्यर्थः । शिष्टं स्पष्टम् । तानि प्रतिष्ठितानि । तान्येतानि नामादीनि । संकल्प एकमयनं मार्गो

---

नामादिषु संकल्पान्तेषु पूर्वपूर्वहेतुत्वादुत्तरोत्तरस्य भूयस्त्वमिति श्रुतिरेव दर्शयति यदा वै संकल्पयत इत्यादिना । एकं भवन्ति = अन्तर्भवन्ति । मन्त्रेषु कर्माण्येकं भवन्ति मन्त्राणां कर्मतत्समवेतार्थ-प्रकाशकत्वात् । समक्लृपतामिति लुङि द्विवचनम् । 'क्लृपू सामर्थ्ये' इति धातोः आत्मनेपदिनः लुङादौ परस्मैपदिवदपि रूपसत्त्वात् ।

येषाम्, तानि **संकल्पैकायनानि** संकल्पानुसारीणीति यावत्। संकल्प आत्मा कर्ता येषाम्, तानि **संकल्पात्मकानि**; संकल्पकर्तृकाणीत्यर्थः। यद्वा संकल्प **आत्मा** व्यापको येषां तानि। संकल्पव्याप्तानीति यावत्। **संकल्पे प्रतिष्ठितानि** असति संकल्पे एषां न सत्ता। अतः संकल्पाधीनसत्ताकानीति यावत्। **समक्लृपतां....तेजश्च।** द्यौश्च पृथिवी च, 'निश्चलतया वर्तावहे' इति संकल्पं कृतवत्यावित्यर्थः। तथा वाय्वाकाशादयोऽपि स्वेन रूपेण वर्तामहे इति वा, स्वस्वकार्यञ्च करवामहै इति वा' संकल्पं कृतवन्त इत्यर्थः। तथा संकल्पाभावे तथा प्रवृत्त्यसंभवादिति भावः। **तेषां संक्लृप्त्यै वर्षं संकल्पते।** अप्तेजोधीनत्वात् वर्षणस्य, आपः तेजांसि च सम्यक् कल्पन्ताम्=स्वस्वकार्यसमर्थानि भवन्तु इत्येवं तत्सिद्ध्यै वर्षं संकल्पते इत्यर्थः। **वर्षस्य**

---

संकल्परूपमानसव्यापारप्रक्रमात् समक्लृपतामित्यादावपि संकल्पं कृतवत्यौ इत्येवंरूप एवार्थो भाष्यते यथाशाङ्करम्। परन्तु संकल्पशब्दो णिजन्तात् निष्पन्नः प्रयुज्यते—संकल्पयते इति। क्लृप्तिः सामर्थ्यम् अर्थक्रियाकारित्वं सत्त्वम्। तदर्थमनोव्यापारः संकल्पः। इह तु समक्लृपतामित्यादेरणिजन्तत्वात् सामर्थ्यमेव वाच्यार्थः। तत्र पूर्वसंकल्पघटनेनार्थविवक्षायां समक्लृपतां=संकल्पसिद्धौ अभूतामित्यर्थः स्यात्। एवमपि णिजर्थव्यापारजन्यफलाश्रयत्वमेवोक्तं भवतीति द्यावापृथिवी भोगादिकार्यसमर्थे अभूतामिति रीत्यार्थ एव भवति। वक्ष्यते चेदृशोऽर्थः 'तेषां संक्लृप्त्यै' इत्यादिवाक्येषु। तेजोवर्षान्नादिषु पूर्वपूर्वस्य उत्तरोत्तरद्वारा भोगसाधनसामर्थ्यात् उत्तरोत्तरस्य तत्सामर्थ्याभावे पूर्वपूर्वस्य तत्सत्त्वासिद्धेः संक्लृप्त्यै इति चतुर्थीनिर्देशः। तेजस्समर्थत्वाय वर्षं समर्थं भवतीत्येवमर्थ इति। अतः अणिजन्तस्थले सर्वत्र धातोर्मुख्यार्थपरतयैव कश्चिदर्थश्चिन्त्यः।

संक्लृप्त्या अन्नँ संकल्पते । अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते । प्राणानाँ संक्लृप्त्यै मन्त्राः संकल्पन्ते । मन्त्राणाँ संक्लृप्त्यै कर्माणि संकल्पन्ते । कर्मणाँ संक्लृप्त्यै लोकः(काः) संकल्पते(न्ते)। लोकस्य संक्लृप्त्यै सर्वँ संकल्पते। स एष संकल्पः। संकल्पमुपास्स्वेति ॥२॥

स यः संकल्पं ब्रह्मेत्युपास्ते, संक्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः, प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानान् अव्यथमानोऽभिसिद्ध्यति। यावत् संकल्पस्य गतम्, तत्रास्य यथाकामचारो भवति, यः संकल्पं ब्रह्मेत्युपास्ते। अस्ति भगवः संकल्पाद् भूय इति। संकल्पाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति॥३॥ इति सप्तमाध्याये चतुर्थः खण्डः॥

---

**संक्लृप्त्या अन्नं संकल्पते** । अन्नस्य वर्षाधीनत्वात् अन्नं वर्षसिद्ध्यै संकल्पत इत्यर्थः । **अन्नस्य...संकल्पते** । अन्नसमृद्धिं [प्रति ?] प्राणाः संकल्पन्त इत्यर्थः । **प्राणानां....कल्पन्ते** । मन्त्रोच्चारणस्य प्राणायत्तत्वात् मन्त्राः तत् सिद्धिमाशंसन्ते । **मन्त्राणां....कल्पन्ते** । अग्निहोत्रादीनां कर्मणां मन्त्रजन्यस्मृत्यधीनानुष्ठानत्वादिति भावः । **कर्मणां....कल्पते** । स्वर्गादिलोकस्य कर्माधीनसिद्धिकत्वादिति भावः । **लोकस्य....कल्पते** । सर्वस्यापि भूतजातस्य लोककामत्वादिति भावः । अत्राचेतनेषु संकल्पकथनं स्तुत्यर्थतया [वा] चेतनत्वारोपेण वा तदभिमानिदेवतापरतया वोपपन्नमिति द्रष्टव्यम् । **स एष संकल्पः** । एतादृशमहिमशाली संकल्प इत्यर्थः। **संकल्पमुपास्स्वेति** । स्पष्टोऽर्थः । **स....सिद्ध्यति। संक्लृप्तान्** संकल्पसिद्धान्, **ध्रुवान्** नित्यान्, भोगोपकरणैः प्रतिष्ठितान्, **अव्यथमानान्** शत्रुपीडादिरहितान् [एतादृशान्] लोकान् स्वयमपि ध्रुवत्वप्रतिष्ठितत्वाव्यथमानत्वयुक्तस्सन् **अभिसिद्ध्यति** प्राप्नोतीत्यर्थः । **यावत्...ब्रवीत्विति** । स्पष्टोऽर्थः ॥ (७-४)

सप्तमे पञ्चमः खण्डः

चित्तं वाव संकल्पाद् भूयः। यदा वै चेतयते, अथ संकल्पयते; अथ मनस्यति ; अथ वाचमीरयति ; तामु नाम्नीरयति, नाम्नि मन्त्रा एकं भवन्ति, मन्त्रेषु कर्माणि ।

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि(त्मकानि) चित्ते प्रतिष्ठितानि। तस्माद् यद्यपि बहुवित् अचित्तो भवति, नायमस्तीत्येवैनमाहुः, यदयं वेद। यद्वा अयं विद्वान्, नेत्थमचित्तः स्यादिति। अथ यद्यल्पविच्चित्तवान् भवति, तस्मा एवोत शुश्रूषन्ते। चित्तं

---

**चित्तं वाव....कर्माणि** । "अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते" इति, "हस्तादयस्तु स्थितेऽतो नैवम्" इति सूत्रे भाषितत्वात् प्राप्तकालानुरूपातीतानागतविषयप्रयोजनचिन्ता[नु]रूप[प्र]वृत्तिविशिष्टं मनः चित्तमित्युच्यते । चेतयतिधात्वर्थोऽपि स एव । शिष्टं स्पष्टम् ।

**तानि....प्रतिष्ठितानि** । उक्तोऽर्थः । **तस्मात्...वेद** । बहुशास्त्रज्ञोऽपि पुमान् विषयप्रयोजननिरूपणलक्षणचित्तहीनो यदा भवेत्, तदा लौकिकाः, 'अयं नास्ति, अयं वेदेति यत् तदपि नास्ति' इत्येवं ज्ञातारं तदीय शास्त्रज्ञानञ्चापलपन्तीत्यर्थः । [किञ्च] तत्र युक्तिश्च वदन्ति [। का युक्तिः ?] **यद्वा अयं विद्वान्, नेत्थमचित्तः स्यादिति । यत्** यदि **अयं** पुमान् **विद्वान् वै** विद्वानेव स्यात्, तर्हीत्थमचित्तो न स्यात् । तस्मादेतस्य शास्त्रज्ञानमेव नास्तीत्याहुरित्यर्थः। **अथ यदि....शुश्रूषन्ते** । यदि अल्पशास्त्रविदपि चित्तवान् भवति, **तस्मै शुश्रूषन्ते** तद्वाक्यं श्रोतुमिच्छन्ति [जना] इत्यर्थः ! **चित्तं हि....**

---

यद्यपि बहुविदिति । यदि बहुविदपीत्यन्वयः ।

ह्येवैषामेकायनम्, चित्तमात्मा, चित्तं प्रतिष्ठा। चित्तमुपास्स्वेति॥२

स यश्चित्तं ब्रह्मेत्युपास्ते, चित्तान् वै स लोकान् ध्रुवान् ध्रुवः, प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानान् अव्यथमानोऽभिसिद्ध्यति—यावच्चित्तस्य गतम्, तत्रास्य यथाकामचारो भवति, यश्चित्तं ब्रह्मेत्युपास्ते।

अस्ति भगवश्चित्ताद् भूय इति। चित्ताद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति। इति सप्तमाध्याये पञ्चमः खण्डः।

सप्तमे षष्ठः खण्डः

ध्यानं वाव चित्तात् भूयः। ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षम्, ध्यायतीव द्यौर्ध्यायन्तीवाऽऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्याः।

---

**उपास्स्वेति।** पूर्ववदर्थः। **स यः....ब्रवीत्विति। चित्तान्** उपचितानित्यर्थः। इतरत् पूर्ववत्। (७-५.)

**ध्यानं वाव...देवमनुष्याः।** "ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनम्" इति **"ध्यायनाच्च"** इति सूत्रे भाषितम्। यथा योगी ध्यायन् निश्चलो भवति, एवं पृथिव्यादयोऽपि ध्यानलक्षणस्वमाहात्म्यप्रख्यापनाय(येव) निश्चलाः सन्तो ध्यानमभिनयन्ति। अतो ध्यानं माहात्म्यहेतुरित्यर्थः। सूत्रितञ्च, **'अचलत्वञ्चापेक्ष्य'** इति। तत्र हि-

---

ध्यानमभिनयन्तीति। ध्यायतीत्यस्य ध्यानं करोतीति मुख्यार्थस्वीकारे पृथिव्यादीनां ध्यानकर्तृत्वमात्रे कथिते तावता ध्यानस्य भूयस्त्वं न सिद्ध्यतीति ध्यानमभिनयतीति लक्ष्यार्थः स्वीकृतः। अभिनेयार्थे स्वस्मिन्नविद्यमाने अभिनयकरणं हि तत्राभिनेतुर्गौरवबुद्धौ सत्यामिति। यद्वा ध्यानमभिनयन्तीत्यस्य स्वस्मिन् ध्यातृत्वबुद्धिं जनयन्तीत्यर्थः। ध्यायतीवेत्यादिप्रकृतवाक्यविषयकोक्तसूत्रघटितत्वात्

**तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति, ध्यानापादाँशा**

तिष्ठन् आसीनः शयानो वा ध्यानमनुतिष्ठेत्, विशेषाभावादिति प्राप्ते--अभिधीयते--"**आसीनः संभवात्**"। आसीनः उपासनमनुतिष्ठेत्। कुतः? संभवात्। आसीनस्यैव हि एकाग्रचित्तता संभवति। स्थितिगत्योः प्रयत्नसापेक्षत्वात्, शयने च निद्रासंभवात्। "**ध्यायनाच्च**"। वि(स?)जातीयप्रत्ययान्तराव्यवहितचिन्तालक्षणध्यानलक्षणत्वादुपासनस्य, तत्र च चित्तैकाग्र्यावश्यम्भावेन,तत्सिद्धये आसीनत्वस्यापेक्षितत्वाच्च। "**अचलत्वञ्चापेक्ष्य**"। निश्चलत्वरूपं सादृश्यमपेक्ष्य, 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षम्' इत्यादौ **ध्यायति**शब्दप्रयोगदर्शनात् ध्यातुर्निश्चलत्वस्यापेक्षितत्वात्, आसीनस्यैव च निश्चलत्वसंभवात् आसीनस्यैवोपासनम्। "**स्मरन्ति च**"। 'उपविश्याऽऽसने युञ्ज्याद् योगमात्मविशुद्धये' इति ध्यानाङ्गतया आसीनता स्मर्यते। अतो ध्याने चित्तैकाग्र्यस्यात्यावश्यकत्वात् तदर्थमासीनत्वमपेक्षितम्।

"**यत्रैकाग्रता तत्राविशेषात्**"। यत एव चित्तैकाग्र्यं प्रधानहेतुः, अत एव यस्मिन् देशे चित्तैकाग्र्यं भवति, स एव देशोऽपेक्षितः। 'समे शुचौ शर्करावह्निवालुकाविवर्जिते' इत्यादिदेशविशेषनियमस्यापि चित्तैकाग्र्यसिध्यर्थत्वात् चित्तैकाग्र्यविरोधे सोऽपि नादर्तव्य इत्यर्थं इति स्थितम्।

प्रकृतमनुसरामः। **तस्मात्....भवति**। ध्यानमापन्नाः **ध्यानापादाः**। ये मनुष्याणां मध्ये धनादिभिर्महान्तः, ते ध्यानापादानां

---

आसीनाधिकरणमारचयति—तत्र हीत्यादिना।

**ध्यानापादशब्दे आपादशब्दस्य आपाद्यफलपरत्वापेक्षया**

इवैव ते भवन्ति। अथ येऽल्पाः, कलहिनः पिशुना उपवादिन
अथ ये प्रभवो ध्यानापादाँशा इवैव ते भवन्ति। ध्यानमुपास्स्वे

स यो ध्यानं ब्रह्मेत्युपास्ते, यावत् ध्यानस्य गतम्, त
यथाकामचारो भवति, यो ध्यानं ब्रह्मेत्युपास्ते।

अस्ति भगवो ध्यानात् भूय इति। ध्यानाद्वाव भूयोऽस्त
तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ इति सप्तमाध्याये षष्ठः खण्ड:

सप्तमे सप्तमः खण्डः

विज्ञानं वाव ध्यानात् भूयः। विज्ञानेन वा ऋग्वेदं विजा
यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदान
पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां

---

ध्यातॄणा**मंशा इव** सदृशा इव भवन्ति।; यथा ध्यातारोऽचचनाः
महान्तोऽप्यवचनतया ध्यातृसादृश्यं प्रतिपद्यन्त इत्यर्थः। तन्न
सति तत्सदृशत्वं तदंशत्वम्। महान्तोऽपि मनुष्याः यतो ध्यातॄणाम
अतो ध्यानं श्रेष्ठमित्यर्थः। **अथ ये...ते**। ये **अल्पाः** क्षुद्राः
**कलहिनः** कलहशीलाः, **पिशुनाः** परदोषोद्भावकाः, **उपवा**
परेषां समीपे तद्दोषवदनशीलाः वाचाटा भवन्ति; न तु ध्यातृसा
लेशमपि प्रतिपद्यन्त इत्यर्थः। **अथ ये प्रभवो...ध्यानमुपास्स्वे**
ये तु **प्रभवः** महान्तः, ते अजल्पाकाः सन्तः ध्यातृसदृशा भव
अतो ध्यानमुपास्स्वेत्यर्थः।

**स यो ध्यानं...ब्रवीत्विति**। सर्वं पूर्ववत्। (७

**विज्ञानं वाव...उपास्स्वेति**। प्रमाणजन्यज्ञानरूपस्य (प्र

---

आपादनकर्तृपरत्वे तदंशत्वं महत्त्वाभावात् सुगममित्यभिप्रेत्याह ध्य
मापन्ना इति, ध्यातॄणामिति च अर्थ उक्तः॥

विद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्याम् ; दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवाँश्च मनुष्याँश्च वयाँसि च तृणवनस्पतीन् श्वापदानि आकीटपतङ्गपिपीलिकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्चान्नञ्च रसञ्चेमञ्च लोकममुञ्च विज्ञानेनैव विजानाति। विज्ञानमुपास्स्वेति ॥ १ ॥

स यो विज्ञानं ब्रह्मेत्युपास्ते, विज्ञानवतो वै स लोकान् ज्ञानवतोऽभिसिद्ध्यति—यावद् विज्ञानस्य गतम्, तत्रास्य यथाकामचारो भवति, यो विज्ञानं ब्रह्मेत्युपास्ते।

अस्ति भगवो विज्ञानाद् भूय इति। विज्ञानाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ इति सप्तमाध्याये सप्तमः खण्डः।

सप्तमे अष्टमः खण्डः

बलं वाव विज्ञानाद् भूयः। अपि(पी) ह शतं विज्ञानवतामेको बलवानाकम्पयते। स यदा बली भवति, अथोत्थाता भवति, उत्तिष्ठन् परिचरिता भवति; परिचरन्नुपसत्ता भवति; उपसीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति। बलेन वै पृथिवी तिष्ठति, बलेनान्तरिक्षम्, बलेन द्यौर्बलेन

---

ज्ञानजन्यस्य ज्ञानरूपस्य) विज्ञानस्य स्मृतिसंततिलक्षणं ध्यानं प्रति हेतुत्वात् ततो भूयस्त्वं द्रष्टव्यम्। शिष्टं पूर्ववत्।

**स यो विज्ञानं...ब्रवीत्विति**। ज्ञानविज्ञानशब्दयोः सामान्यविशेषरूपत्वात् विज्ञानवतो ज्ञानवतो लोकानित्युपपत्तिः। शिष्टं स्पष्टम् ॥

**बलं वाव....भवति**। एको हि बलवान् हस्ती विज्ञानवतां मनुष्याणां शतमप्याकम्पयते। [किञ्च] सति बले गुर्वादिषु दृष्टेषु अभ्युत्थानम्। परि(उप)चर्या उपसदनम् श्रवण-मनन-निदिध्यासन-साक्षात्काराः कर्मविषयकर्तृत्वं कृतविषयकज्ञानमित्येतत् सर्वं बले

पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाँसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकं बलेन लोकस्तिष्ठति । बलमुपास्स्वेति ॥ १ ॥

स यो बलं ब्रह्मेत्युपास्ते, यावद् बलस्य गतम् तत्रास्य यथाकामचारो भवति, यो बलं ब्रह्मेत्युपास्ते ।

अस्ति भगवो बलाद् भूय इति । बलाद् वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ इति सप्तमाध्याये अष्टमः खण्डः ।

सप्तमे नवमः खण्डः

अन्नं वाव बलाद् भूयः । तस्माद् यद्यपि दश रात्रीर्नाश्नीयात्, यद्युह जीवेत् अथवा, अद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवति। अथान्नस्याऽऽये(यी)द्रष्टा भवति, श्रोता भवति, मन्ता भवति, बोद्धा भवति, कर्ता भवति, विज्ञाता भवति। अन्नमुपास्स्वेति ॥ १ ॥

स योऽन्नं ब्रह्मेत्युपास्ते, अन्नवतो वै स लोकान् पानवतोऽभि-

---

सत्येव भवति । अतो विज्ञानापेक्षया बलमेव भूय इत्यर्थः। **बलेन वै.... उपास्स्वेति** । स्पष्टम् । **स यो बलं.... ब्रवीत्विति**। स्पष्टोऽर्थः॥ (७-८)

**अन्नं वाव...भवति** । बलसंपादकत्वादन्नमेव बलात् भूयः । अत एव यदि कश्चित् पुमान् दश रात्रीः नाश्नीयात्, तर्हि बलहान्या म्रियत एव । अथवा यदि कथञ्चित् जीवेत्, तर्हि द्रष्टृत्वश्रोतृत्वादिरहित एव भवेत् । **अद्रष्टा अश्रोता** इति च्छेदः । **अथान्नस्याये.... उपास्स्वेति** । अन्नस्य आये लाभे सति । **अन्नस्यायै** इति पाठे छान्दस एकारस्य ऐकारः । **अन्नस्यायी** इति पाठेऽपि **आयो** लाभः । **अन्नस्यायी** अन्नलाभवान् (आयी लब्धवान् इत्यर्थः। अतश्चान्वयव्यतिरेकाभ्यामन्नस्यैव बल(लादि)हेतुत्वदर्शनादिति भावः। शिष्टं स्पष्टम् । **स**

सिद्ध्यति, यावदन्नस्य गतम् तत्रास्य यथाकामचारो भवति, योऽन्नं ब्रह्मेत्युपास्ते ।

अस्ति भगवोऽन्नाद् भूय इति । अन्नाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ इति सप्तमाध्याये नवमः खण्डः ।

सप्तमे दशमः खण्डः

आपो वा[व] अन्नाद् भूयस्यः, तस्माद् यदा सुवृष्टिर्न भवति, व्याधीयन्ते प्राणाः, अन्नं कनीयो भविष्यतीति । अथ यदा सुवृष्टिर्भवति, आनन्दिनः प्राणा भवन्ति, अन्नं बहु भविष्यतीति । आप एवेमा मूर्ताः येयं पृथिवी, यदन्तरिक्षम्, यद् द्यौः, यत् पर्वताः, यद्देवमनुष्याः, यत् पशवश्च वयाँसि च ; तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकमाप एवेमा मूर्ताः । अप उपास्स्वेति ॥ १ ॥

स योऽपो ब्रह्मेत्युपास्ते, आप्नोति सर्वान् कामाँस्तृप्तिमान् भवति, यावदपां गतम्, तत्रास्य यथाकामचारो भवति, योऽपो ब्रह्मेत्युपास्ते ।

---

**योऽन्नं....ब्रवीत्विति** । **पानवतः** पेयप्रचुरानित्यर्थः । शिष्टं स्पष्टम् ॥

**आपो वा अन्नात्....भविष्यतीति** । यस्मिन् काले शोभना वृष्टिर्न भवति, तदा अन्नं **कनीयः** अल्पं भविष्यतीति **प्राणाः** प्राणिनः **व्याधीयन्ते** दुःखिनो भवन्ति । यदा शोभना वृष्टिर्भवति, तदा अन्नं बहु भविष्यतीति **आनन्दिनः** हृष्टा भवन्ति । **आप एवेमा मूर्ताः** । **इमाः** वक्ष्यमाणाः **मूर्ताः** मूर्तिभेदाकारपरिणताः पृथिव्यन्तरिक्षादि-कीटपतङ्गपिपीलिकान्ताः आप एवेत्यर्थः । शिष्टं स्पष्टम् । **स योऽपो....ब्रवीत्विति** । अपामुपासकस्य कामानामाप्तिर्युक्तैवेति भावः । शिष्टं पूर्ववत् ॥ (७-१०)

अस्ति भगवोऽद्भ्यो भूय इति। अद्भ्यो वाव भूयोऽस्तीति।
तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ इति सप्तमाध्याये दशमः खण्डः।

सप्तमे एकादशः खण्डः

तेजो वा अद्भ्यो भूयः। तद्वा एतद्वायुमागृह्याऽऽकाशमभितपति। तदाहुः—निशोचति, नितपति, वर्षिष्यति वा इति। तेज एव तत् पूर्वं दर्शयित्वाऽथापः सृजते। तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भि-[र्]ह्रादाश्चरन्ति। तस्मादाहुः–विद्योतते, स्तनयति, वर्षिष्यति वा इति। तेज एव तत् पूर्वं दर्शयित्वाऽथापः सृजते। तेन उपास्स्वेति ॥ १ ॥

स यस्तेजो ब्रह्मेत्युपास्ते; तेजस्वी वै स तेजस्वतो लोकान्

---

**तेजो वा....सृजते**। तेजसोऽप्कारणत्वात् तेज एवाद्भ्यो भूयः। **तत्** तस्मात् अप्कारणत्वादेव हेतोः **एतत्** तेजः यदा वायुं स्वात्मना **आगृह्य** निश्चलीकृत्य आकाशमभिव्याप्य तपति, तदा लौकिकाः, 'तेजः कर्तृ, जगत् **निशोचति** नितरां शोच[य?]ति, **नितपति** नितरां तपति च; तस्मादवश्यं वर्षिष्यति' इत्याहुः। तेजसोऽप्कारण-त्वादेव **तत्** तेजः प्रथमतः स्वात्मानं दर्शयित्वा पश्चादपः सृजते इत्यर्थः। **तदेतत्....उपास्स्वेति**। **तत्** तस्मादेव तेजसोऽप्कारण-त्वात् **एतत्** एतस्मिन्नपि काले ऊर्ध्वगताभिः तिर्यग्गताभिश्च विद्युद्भिः सह ह्रादाः=स्तनयित्नुशब्दाः चरन्ति। तद्दर्शनादेव लौकिकाः, 'विद्योतते, स्तनयति, वर्षिष्यति वा' इति वदन्तीत्यर्थः। अत एव कारणभूतं तत् तेजः स्वात्मानं प्रथमतो दर्शयित्वाऽथापः **सृजते**। अतः [पूर्वोक्तानां भूयसीनामपामपि करणं] तेज उपास्स्वेत्यर्थः।

**स यस्तेजः...अभिसिद्ध्यति—**। तेजस्वित्वादेव लोकानां

भास्वतोऽपहततमस्कान् अभिसिद्ध्यति, यावत् तेजसो गतम्, तत्रास्य यथाकामचारो भवति, यस्तेजो ब्रह्मेत्युपास्ते ।

अस्ति भगवस्तेजसो भूय इति । तेजसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ इति सप्तमाध्याये एकादशः खण्डः।

सप्तमे द्वादशः खण्डः

आकाशो वाव तेजसो भूयान् । आकाशो वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निः । आकाशेनाऽऽह्वयति, आकाशेन शृणोति, आकाशेन प्रतिशृणोति, आकाशे रमते, आकाशे न रमते, आकाशे जायते, आकाशमभिजायते । आकाशमुपास्स्वेति ॥ १ ॥

---

तत्कार्यं प्रकाशवत्त्वलक्षणं भास्वरत्वं बाह्यान्तरान्धकारशून्यत्वरूपमपहततमस्कत्वञ्च । तादृशो लोकान् स्वयमपि तेजस्वी सन् आप्नोतीत्यर्थः । शिष्टं स्पष्टम् ॥ (७-११)

**आकाशो वाव...उपास्स्वेति ।** पूर्वखण्डोक्तयोस्तेजोवाय्वोर्हि आकाशः कारणम् । अत आकाशस्य तेजोवाय्वपेक्षया भूयस्त्वम् । अत एवाऽऽदित्यादिज्योतिर्मण्डलमाकाशाश्रितमाकाशान्तर्वर्ति । आह्वानश्रवणप्रतिश्रवणान्यपि आकाशसाध्यानि । रममाणोऽपि जन आकाशे । शोचन्नपि जन आकाशे । जायमानोऽप्यङ्कुरादिः आकाशादिलक्षणमव-

---

अत्राप्तेजआकाशानां कार्यकारणभावः श्रुतिप्रसिद्ध एव लोकानुभवेनोपपादितः तत्पर्यायेषु । तेजःपर्याये, वायुमागृह्येति तेजसो वायुनिरोधकत्वेनोक्तत्वादत्र वायोर्भूयस्त्वेन कथनं न युक्तमिति तदुपेक्षया तेजोनन्तरमाकाशस्यादरणम् । आह्वयतीत्यादि । आह्वयितुराहूयमानस्य च मध्ये आकाशाभावे कथमाह्वानम् । श्रोत्राकाशाभावे कथं श्रवणम् । मुखाकाशाभावे कथं प्रतिश्रवणम्, अय-

स य आकाशं ब्रह्मेत्युपास्ते, आकाशवतो वै स लोकान् प्रकाशवतोऽसंबाधान् उरुगायवतोऽभिसिद्ध्यति । यावदाकाशस्य गतम् तत्रास्य यथाकामचारो भवति, य आकाशं ब्रह्मेत्युपास्ते ।

अस्ति भगव आकाशाद् भूय इति । आकाशाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ इति सप्तमाध्याये द्वादशः खण्डः ।

सप्तमे त्रयोदशः खण्डः

स्मरो वा आकाशाद् भूयः (यान्) । तस्माद् यद्यपि बहव आसीरन् अस्मरन्तः, नैव ते कञ्चन शृणुयुः, न मन्वीरन्, न विजानीरन्, यदा वाव ते स्मरेयुः, अथ शृणुयुः, अथ मन्वीरन्, अथ विजानीरन् । स्मरेण वै पुत्रान् विजानाति ; स्मरेण पशून् । स्मरमुपास्स्वेति ॥ १ ॥

स यः स्मरं ब्रह्मेत्युपास्ते, यावत् स्मरस्य गतम् तत्रास्य यथा-

---

काशमभिलक्ष्य प्रतीक्ष्यैव जायते । अत आकाशमुपास्स्वेत्यर्थः । **स य आकाशं.... अभिसिद्ध्यति....।** आकाशवतः विस्तारयुक्तान् अत एव **असंबाधान्** अन्योन्यपीडालक्षणसंबाधशून्यान् **प्रकाशवतः** तेजस्विनः **उरुगायवतः** कीर्तिमतो लोकान् प्राप्नोतीत्यर्थः। शिष्टं स्पष्टम् ॥ ६-११

**स्मरो वा आकाशात् भूयः**। भूय इति लिङ्गव्यत्ययश्छान्दसः । **तस्माद्यद्यपि....उपास्स्वेति** । स्मरणशून्या एकत्र बहव आसीना अपि न श्रवणादिकार्यसमर्थाः । सति तु शक्त्यादिस्मरणे श्रवणादिकार्यसमर्था भवन्ति । अत आकाशकार्यस्य श्रवणादेः स्मरणाधीनत्वात् तस्या आकाशाद् भूयस्त्वमिति भावः । किञ्च, **स्मरेण वै....उपास्स्वेति ।** स्मरणशून्यस्य न पुत्रपश्वादिज्ञानमित्यतः स्मरणमुपास्स्वेत्यर्थः ।

---

**महमायामि, करोमीत्यादिरूपमिति ।**

**शृणुयुरिति। श्रवणम् = श्रुतशब्दादर्थज्ञानम्। श्रवणमननविज्ञा-**

काममचारो भवति, यः स्मरं ब्रह्मेत्युपास्ते ।

अस्ति भगवः स्मराद् भूय इति । स्मराद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ इति सप्तमाध्याये त्रयोदशः खण्डः।

सप्तमे चतुर्दशः खण्डः

आशा वाव स्मराद् भूयसी । आशयेद्धो वै स्मरो मन्त्रानधीते, कर्माणि कुरुते, पुत्रांश्च पशूँश्चेच्छते, इमञ्च लोकममुञ्चेच्छते । आशामुपास्स्वेति ॥ १ ॥

स य आशां ब्रह्मेत्युपास्ते, आशयाऽस्य सर्वे कामाः समृद्ध्यन्ति ; अमोघा ह्यस्याशिषो भवन्ति, यावदाशाया गतम् तत्रास्य यथाकामचारो भवति, य आशां ब्रह्मेत्युपास्ते ।

अस्ति भगव आशाया भूय इति । आशाया वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ इति सप्तमाध्याये चतुर्दशः खण्डः ।

---

**स यः स्मरं ....ब्रवीत्विति** । सर्वं पूर्ववत् ॥ (७-१३)

**आशा वाव...उपास्स्वेति** । आशया फलेच्छया इद्धः दीपितः उत्पादितः स्मरः इष्टसाधनत्वादिविषयकं स्मरणमध्ययनकर्मानुष्ठानादिहेतुर्भवतीत्यर्थः। किञ्च फलाशयचैव पुत्रपश्वादीहलोकपरलोकवाञ्छा । अतः आशाया भूयस्त्वमित्यर्थः ।

**स य आशां....ब्रवीत्विति** । आशया उपासितया सर्वे कामाः समृद्धा भवन्ति । आशाश्चास्य सर्वाः **अमोघाः** सफला भवन्तीत्यर्थः । **यावदाशाया गतम्....ब्रवीत्विति** । स्पष्टोऽर्थः ॥ (७-१४)

---

**वानि** अत्रापि क्रमेणोक्तानि ।

स्मरादिति । इह स्मरशब्दस्य पूर्वत्र स्मरपर्याय इव स्मरणमात्रार्थकत्वेऽपि स्मरः इत्यस्य अर्शं आद्यचि स्मरणवानित्यर्थे अधीते

प्राणो वाव आशाया भूयान्। यथा वा अरा नाभौ समर्पिताः, एवमस्मिन् प्राणे सर्वं समर्पितम्। प्राणः प्राणेन याति। प्राणः प्राणं ददाति; प्राणाय ददाति। प्राणो ह पिता, प्राणो माता, प्राणो भ्राता, प्राणः स्वसा, प्राण आचार्यः, प्राणो ब्राह्मणः ॥ १ ॥

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चित् भृशमिव प्रत्याह, धिक् त्वाऽस्त्वित्येवैनमाहुः,

---

**प्राणो वाव आशाया भूयान्।** अत्र **प्राण**शब्देन प्राणसहचरितो जीवो लक्ष्यते। तत्र च हेतुरुत्तरत्र वक्ष्यते। **यथा वा.... समर्पितम्।** यथा रथचक्रस्य अराः रथनाभ्याश्रिताः, एवं समस्तमचेतनं भूतजातमेतच्चेतनाश्रितमित्यर्थः। 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः' इति श्रुत्यन्तरात्। **प्राणः प्राणेन....।** गन्ता देवदत्तादिरपि जीव एव। गमनकरणमश्वादिरपि जीव एव। दातापि जीव एव। देयो गवादिरपि जीव एव। सम्प्रदानभूतो ब्राह्मणादिरपि जीव एवेत्यर्थः। **प्राणो ह पिता...ब्राह्मणः।** पित्रादिरपि जीव इति प्रसिद्ध एवेत्यर्थः॥

ननु परिदृश्यमानमांसपिण्डविशेषा एव पित्रादिशब्दवाच्याः, न तु जीव इति मन्वानं प्रत्याह **स यदि पितरं...त्वमसीति।**

---

इत्यादिसर्वक्रियान्वयसामञ्जस्यात् भाष्यं पर्यवसितार्थपरं युक्तम्।

जीवो लक्ष्यत इति। प्राणशब्दस्य प्राणिपरत्वमेवेह संदर्भे श्रुत्यभिमतमिति, दशमखण्डे, 'ध्याधीयन्ते प्राणाः', 'आनन्दिनः प्राणा भवन्ति' इति पूर्वप्रयोगादपि सुग्रहम्। आशां प्रति प्राणस्याऽऽधारत्वमभिसंधाय हि, 'एवमस्मिन् प्राणे' इति इहोक्तम्। ततोऽपि प्राणो जीवः। उपरि, 'स वा एष एवं पश्यन्' इति चेतनस्यास्य

पितृहा वै त्वमसि, मातृहा वै त्वमसि, भ्रातृहा वै त्वमसि, स्वसृहा वै त्वमसि, आचार्यहा वै त्वमसि, ब्राह्मणहा वै त्वमसीति ॥ २ ॥

अथ यद्यप्येनान् उत्क्रान्तप्राणान् शूलेन समासं व्यतिसंदहेत्, नैवैनं ब्रूयुः पितृहाऽसीति, न मातृहाऽसीति, न भ्रातृहाऽसीति, न स्वसृहाऽसीति, नाचार्यहाऽसीति, न ब्राह्मणहाऽसीति ॥ ३ ॥

प्राणो ह्येवैतानि सर्वाणि भवति ।

---

सजीवेषु पित्रादिशरीरेषु धिक् त्वामित्येव किञ्चित् भृशमधिक्षिपति पुरुषे पितृहेत्यादिशब्दान् प्रयुञ्जते इत्यर्थः ।

**अथ यद्यपि....असीति ।** अथ तेष्वेव शरीरेषूत्क्रान्तजीवेषु सत्सु तान् शूलेन **समासं**—सम्पूर्वात् क्षेपार्थात् अस्यतेर्णमुलन्तोऽयं शब्दः—शूलेन सम्यक् प्रक्षिप्य व्यत्यस्य सम्यक् दहत्यपि पुरुषे पितृहेत्यादिशब्दा न प्रयुज्यन्ते इत्यर्थः ।

**प्राणो....भवति ।** अतः सजीवेषु पित्रादिषु हिंसितेषु पितृहेत्यादिशब्दप्रयोगात् निर्जीवेष्वप्रयोगाच्च निर्जीवस्य शरीरस्य पित्रादित्वाभावस्य सिद्धत्वात् जीव एव पित्रादिर्भवतीत्यर्थः । **भगवता भाष्यकृता**—"प्राणशब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव; न वायुविशेषमात्रम् । 'प्राणो ह पिता प्राणो माता' इत्यादयः प्राणस्य चेतनतामवगमयन्ति । पितृहा मातृहेत्यादिना सप्राणेषु पितृप्रभृतिषूप-

---

चाभेदकथनादपि अयं जीवः । प्राणस्य बहुप्रकारतया बहुत्वं बोध्यते प्राणः प्राणेनेत्यादिना ।

हिंसितेषु=वाचिककायिकक्रूरकर्मविषयीकृतेषु । सत्स्विति शेषः। एवं निर्जीवेष्वित्यत्रापि। हिंसायोग्यः हिंसाव्यापारजन्यसंवेदनरूपफलाश्रयः । अयमर्थो वेदनाजनकेत्यादिना उपरि दर्शयिष्यते ।

मर्दकारिणि हिंसकत्वादिनिमित्तोपक्रोशवचनात्, तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्यु(ण्यप्यु)पक्रोशाभाववचनाच्च हिंसायोग्यश्चेतन एव प्राणशब्दनिर्दिष्टः। अप्राणेषु स्थावरेष्वपि चेतनेषूपमर्दभावाभावयोः हिंसातदभावदर्शनात् हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते। अत एव च अरनाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टः पर इति न भ्रमितव्यम्; परस्य हिंसाप्रसङ्गाभावात्। जीवादितरस्य भोग्यभोगोपकरणस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तस्थितित्वेन प्रत्यगात्मन्येवारनाभिदृष्टान्तोपपत्तेश्च" इति **भाषितम्**।

---

एवं तावत् नारदेन नाम्नां प्रस्तुतत्वात् नामैवारभ्य, प्राणपर्यन्तमुत्तरोत्तरं यत् भूयः, तत् प्रदर्शितम्। एवं कारणत्वेन तस्यतस्य भूयस्त्वकथनञ्च सर्वकारणब्रह्मप्रतिपादनौचित्यात्। नामापेक्षया तदुच्चारणहेतुत्वात् वाग् भूयसी। वाक्प्रवृत्तिः कुर्वीयेति मनोव्यापाराधीना। स च वागादिव्यापाराव्यवहितपूर्वक्षणोत्पन्नः ततः प्राक् विमर्शानन्तरजातात् कृत्यध्यवसायरूपसंकल्पात्। तदुक्तं न्यायकुसुमाञ्जलौ (५-६८), 'व्यवहितार्थसंकल्पः कर्तव्यो मया' इति। स च संकल्पः सुदीर्घविमर्शात् चित्तस्थैर्यकृतात् ऐकाग्र्यरूपात् ध्यानात्। तच्च तद्वस्तुग्रहणात्। तच्च बलात्। अन्नाधीनबलाभावे हि गृहीतमपि न प्रतिभाति; किमुत ग्रहणम्। तत् बलमन्नात्। तत्र क्रमेण कारणानि अप्तेजआकाशाः। सर्वमिदं नामव्याहारपर्यन्तमाकाशाद्यं पुंसः स्मरणशक्तत्वे। स्मरणमपि बुभुत्सारूपाशावशात्। तद्बलाधीनो ह्यनुभवः स्मरणहेतुं संस्कारमादध्यात्। अत्र स्मरपदमाकाशान्तकारणभूतपुरुषगतकर्मवासनानुभववासनोपलक्षकम्, आशापदञ्च बुभुत्साबुभुक्षारूपसर्वेलाशापरं भवितुमर्हति। तथा च सृष्टिः सर्वा कर्मिजीवगुणाधीनेति दर्शितं भवति। ततो भूयान्

स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् अतिवादी

यद्यपि, 'नायं हन्ति न हन्यते' इति निर्दिष्टस्य जीवस्य स्वतो हिंसा-योग्यत्वाभावेऽपि देहादिसाहित्यप्रयुक्तहिंस्यत्ववत् मुख्यस्य प्राणस्यापि हिंस्यत्वं सुवचम् । स्थावरहिंसास्थले[अपि], 'भेदश्रुतेर्वैलक्षण्याच्च' इति **सूत्रभाष्योक्त**रीत्या स्थावरेषु प्राणस्य पञ्चधाऽवस्थाय शरीरधारणा-भावेऽपि प्राणसद्भावोऽस्तीति, 'न तु दृष्टान्तभावात्' इति सूत्रे भाषित-त्वेन प्राणस्य सद्भावात् हिंसादिवचनमुपपद्यत एव—तथापि, 'प्राणो ह पिता' इत्यादिवाक्यनिर्दिष्टानां जीववाचितया लोके प्रसिद्धानां बहूनां **पित्रा**दिशब्दानां गौणत्वकल्पनापेक्षयैकस्य **प्राण**शब्दस्यैव जीव(जीवपर?) त्वमाश्रयणीयमिति **भाष्यकारा**भिप्रायः । अत एव वृत्तिकृता भगवता **बोधायने**नापि, 'भूमा सम्प्रसादादध्युपदेशात्' इति सूत्रव्याख्याने, 'प्रत्यगात्मन ऊर्ध्वमुपदेशात्' इत्येवोक्तम्; न तु मुख्यप्राणादूर्ध्वमिति ॥ वेदनाजनकव्यापारलक्षणहिंसायाः वेदनाशून्ये अचेतने असम्भवाच्च ॥

**स वा....भवति** । पूर्ववाक्ये **प्राण**शब्दनिर्दिष्टः **स वा एषः** जीवः स्वात्मानम् उक्तेन प्रकारेण मननविषयीकुर्वन् **विजानन्** उपासीनश्च सन् तेन प्रकारेण **पश्यन्** साक्षात्कुर्वन्, **अतिवादी भवति** अति-

---

प्राणः, तदाधारत्वात् । तदभिप्रेत्य ह्युक्तम्, 'यथा वा अरा नाभौ समर्पिताः, एवमस्मिन् प्राणे सर्वं समर्पितम्' इति । प्राय आत्म-गुणा एव ह्यत्र प्रागुक्ता इति । एवं विलक्षणं जीवं प्रतिपाद्य आह एवं पश्यन्नित्यादि । आशादिगुण-आकाशादिप्रपञ्चोभयविधाधिक-तया प्राणं पश्यन् इत्यर्थः । अतिवादी भवतीत्यादेः संभवत् अर्था-न्तरमुपरि वेदयिष्यते ॥

भवति । तञ्चेत् ब्रूयुः अतिवाद्यसीति, अतिवाद्यस्मीति ब्रूयात्; नापह्नुवीत ॥ ४ ॥ इति सप्तमाध्याये पञ्चदशः खण्डः ।

---

क्रान्तस्वोपास्यवस्तुवादी भवति । स्वोपास्यवस्तुनः सर्वोत्कृष्टत्ववादी भवतीत्यर्थः । बृहस्पतिसमप्रत्यर्थिजनाप्रतिभाधायक(कं)स्वोपास्यदेवतापारम्य[वाद?]शीलत्वं अतिवादित्वम् । तच्चोपास्यदेवतातिशये पर्यवस्यति । 'एवं पश्यन्नेवं मन्वानः' इत्यादौ, 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे शतृप्रत्ययः। ततश्च स्वोपास्यदेवतासाक्षात्कारोऽतिवादित्वे हेतुरित्यर्थः। साक्षात्कारप्रीतस्वोपास्यदेवतानुग्रहादीदृशमतिवादित्वं भवतीति भावः । अत्र, 'स वा एष एवं पश्यन्नेवं मन्वानः' इति वाक्येन पूर्वसन्दर्भनिर्दिष्ट प्राणस्य द्रष्टृत्वमन्तृत्वादिकथनादपि **प्राण**शब्दनिर्दिष्टो जीव इत्यवसीयते। **प्राण**शब्दनिर्दिष्टस्य जीवत्वज्ञापनायैव **स वा एष** इति पदयोः प्रवृत्तेरिति द्रष्टव्यम् । **तं चेत्.... नापह्नुवीत । प्राण**शब्दितस्य जीवस्य पूर्वोक्तनामाद्याशान्तसर्वातिशायित्वादेवातिवादित्वं नापह्नोतव्यमिति [1]भावः। ७ १५.

अत्र पूर्वपर्यायेष्वनुक्तस्यातिवादित्वस्य कथनात् प्रक्रान्त

---

एवं पञ्चदशभिः खण्डैः पञ्चदशोपक्षिप्य प्रवृत्तं षोडशं खण्डं पञ्चदशाधिकपरमात्मपरं गमयितुमवतारयति अत्रेति। अत्रेदं बोध्यम्– पूर्वं तत्रतत्र भूयः प्रश्नवत्, अत्र, 'अस्ति भगवः प्राणाद्भूय' इति न पृष्टम् । तत् कस्मात्? जीवादधिकस्य ब्रह्मदृष्टिविषयस्य कस्यचिदभावात्; पूर्वरीतिमुपेक्ष्य रीत्यन्तरेण प्राणोपन्यासाच्च । अत्रैवं नारदो

---

1 नापह्नोतव्यमिति । पूर्वोक्तेषु नामादिषु पूर्वपूर्वापेक्षया उत्तरोत्तरस्यातिशयितत्वं न नियतम्, विवक्षाभेदेन पूर्वस्यापि तत्संभवात्। आत्मभूतप्राणस्य तु उक्तसर्वापेक्षयाऽतिशयो वास्तव इति भावः ।

सप्तमे षोडशः खण्डः

एष तु वा अतिवदति, यः सत्येनातिवदति ।

---

आत्मोपदेशः प्राणशब्दिते प्रत्यगात्मनि पर्यवसन्न इति प्राणाद्वाव भूयोऽस्ती(?)ति पुनरपृच्छत्येव नारदे सनत्कुमारः स्वयमेव ततोऽप्यतिशयितं परमात्मानमुपक्षिपति— **एष तु....वदति** । तुशब्दो विशेषप्रदर्शकः । 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' इति **दहरविद्यायां** वक्ष्यमाणत्वात्, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति **सत्यशब्दस्य** ब्रह्मणि प्रसिद्धेः **सत्यशब्दो** ब्रह्मपरः । तस्य सततैकरूपत्वेन निर्विकार-

---

**मेने—यथा हि पूर्वं, 'नामोपास्स्व' इति, 'स यो नाम ब्रह्मेत्युपास्ते' इति चोपासनं तत्फलञ्च क्रमेण दर्शितम्, तथेहापि, 'प्राणो ह्येवैतानि सर्वाणि भवति' इत्येतदनन्तरम्, 'प्राणमुपास्स्वेति, स यः प्राणं ब्रह्मेत्युपास्ते' इति एतदुपासनं फलञ्चोपदेष्टव्यम् । तदकृत्वा उपासनं सिद्धं कृत्वा, 'स वा एष एवं पश्यन्' इति भङ्ग्यन्तरमाहृतम् । यद्यपि मया आशावद् ब्रह्मदृष्ट्योपास्यं ततो भूयः किमस्तीत्याशयेन पृष्टत्वात् तत्र प्राणं प्रतिब्रुवता गुरुणा, प्राणो ब्रह्मदृष्ट्योपासितुमर्हः इति दर्शित एव—एवमपि तथोपासनस्य उपरि अनुक्त्या, 'प्राणस्यास्य ब्रह्मदृष्ट्योपासनं विहाय एवं विजानन् भवेः = आशान्ताचेतनाधिकत्वेन परमुपासीनः स्याः' इति स वा एष इति वाक्येन बोधयति । अत्र फलञ्च न दर्शयति । तेन, 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्' इति मयैव विज्ञापितत्वात् ईदृशात्मवेदनमेतस्मै फलायेति मयैव ज्ञातमिति मन्यते । अतो यदर्थमुपसदनं कृतम्, तस्य संपन्नत्वात् प्राणेऽपि ब्रह्मदृष्टेर्गुरुणोपेक्षिततया तदुपरि ब्रह्मदृष्ट्या उपास्यमस्ति किमिति प्रश्नस्यानुचितत्वाच्च नास्ति प्रश्नस्यावसर इति ॥**

त्वात् सत्यत्वम् । तेन ब्रह्मणा निमित्तेन योऽतिवदति एषोऽतिवादी पूर्वस्मात् प्राणातिवादिनो विशिष्ट इत्यर्थः। अत्र भाष्यकृता, "सत्येनेतीत्थम्भूतलक्षणे तृतीया । सत्येन परेण ब्रह्मणा उपास्येन उपलक्षितो

---

एषत्वित्यादि वदतो गुरोरयमाशयः—जिज्ञासितमात्मोपासनं प्राणोपासने विश्रान्तमिति मा मन्वीथाः ; अस्य उक्तरीत्या नानात्वात् हिंसायोग्यतया दुःखमिश्रत्वाच्च मुख्यात्मत्वायोगात् । परमात्मोपासनस्य प्राणोपासनगर्भत्वात्तु स प्राणो ब्रह्मदृष्टिं विना यथावदुपास्य उपदिष्टः। एवं तर्हि नामाद्युपासनवत् उत्कृष्टब्रह्मविषयकत्वविरहादिदमुपासनं निकृष्टमिति मतिनिवारणार्थम्, 'एवं पश्यन्नतिवादी भवति' इति, अतिक्रान्तस्वोपास्यवस्तुवादित्वरूपमतिवादित्वं भवितुमर्हति, शुद्धज्ञानानन्दरूपात्मविषयकत्वादुपासनस्येति उपरि दर्शितम् । तावता शोकतरणरूपपरमफलाधायकप्रकृष्टस्वोपास्यवस्तुवादित्वरूपमतिवादित्वं न सेत्स्यति । तादृशवस्त्वतिवादी तु अन्य इति । कोऽसौ? तमाह यः सत्येनातिवदतीति । एवंरीत्या प्रवृत्तत्वादिदं वाक्यं न सत्यवदनरूपाङ्गविधायकमिति ।

अत्रेदं विमृश्यम्—वाक्यमिदमुपपादितरीत्या मा भूत् प्राणविद्याङ्गतया सत्यवादविधायकम् । अत्र वाक्ये उपासनरूपोद्देश्यसमर्पकपदाभावाच्च । न च प्राणोपासनाङ्गभूतातिवादोद्देशेन सत्यस्याङ्गत्वविधिरिति संभवति । अतिवादस्यार्थप्राप्ततया विहितत्वाभावात् । अविहितस्य कर्मणोऽनङ्गत्वेनानुद्देश्यत्वात् । अथापि सत्यवादरूपातिवादकतैव वस्तुतोऽतिवादीति इहोच्यते । न च—पूर्वं प्राणोपासनस्य ब्रह्मदृष्टिरूपत्वे आरोपरूपत्वात् तन्मूलकवादः सत्यवादो न स्यात् । शुद्धप्राणोपासनरूपत्वात्तु तद्वादोपि सत्यवाद एव—इति वाच्यम्—अतिवादित्वं हि सर्वातिशयितस्वोपास्यवस्तुवादित्वम् । तत् कथं ब्रह्मापेक्षया निकृष्टजीवोपासके। अतः तद्वादो न सत्यवादः।

योऽतिवादतीत्यर्थः" इति इत्थम्भूतलक्षणे तृतीया कण्ठतः प्रतिपादिता। "अतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयञ्च परं ब्रह्म प्रतीयते" इति **भाष्य**वाक्यात् निमित्तार्थकत्वमपि तृतीयायाः सूचितम्। ततश्च निमित्तस्य करणत्वविवक्षया कारकविभक्तित्वमपि **भाष्यकृद**भिमतमेवेति द्रष्टव्यम्। अत्र सत्यातिवादिनः प्राणातिवाद्यपेक्षया अतिशयकथनात् सत्यशब्द-निर्दिष्टस्य परस्य ब्रह्मणः प्राणशब्दनिर्दिष्टजीवापेक्षया भूयस्त्वमुक्तं भवति।

न च पूर्वप्रस्तुतप्राणातिवादिनः, 'एष तु वा अतिवदति, यः सत्यं वदति' इत्यादाविव सत्यवदनमङ्गतया विधीयतामिति वाच्यम्—

ब्रह्मोपासककर्तृकोऽतिवाद एव सत्यवाद इत्याशयात्। अतः, 'यदा वै विजानाति, अथ सत्यं वदति' इति वक्ष्यमाणः सत्यवाद एव सत्येनेति तृतीयान्तार्थः। न तु सत्यपदस्य ब्रह्मार्थकत्वम्, इत्थम्भूत-लक्षणतृतीयाग्रहणञ्च। यदि सूत्रकृत् सत्यपदमिह ब्रह्मवाचीत्यमंस्यत, तर्हि, 'भूमा संप्रसादात्' इति सूत्रे, 'सत्यं संप्रसादात्' इति निरदे-क्ष्यत्। तस्मात् एषत्विति तुशब्देन अतिवाद्यन्तरोक्तेरुपक्रान्तत्वेऽपि तदुपास्यवस्तु भूमपदेनैव निर्देक्ष्यते; न त्विहेति युक्तमिति—

अत्रोच्यते—सत्यं परमात्मोपासकेन कृतोऽतिवाद एव सत्य-वादः। सर्वत्र वाक्यस्य सत्यत्वमर्थसत्यत्वनिबन्धनम्। अतो ब्रह्मो-पासकक्रियमाणस्यातिवादस्य सत्यत्वं वस्तुतस्सर्वातिशायिवस्तु-विषयकत्वात्। एवञ्च सत्यं वदतीत्यस्य सत्यवाक्यमुच्चारयतीत्यर्था-पेक्षया सत्यमर्थं वक्तीत्यर्थो वक्तुमुचितः। तथाच अस्यातिवाद-त्वमतिशयितवस्तुविषयकत्वात्; वस्तुनोऽतिशयितत्वं ब्रह्मत्वादिति ब्रह्मविषयकत्वेनातिवादत्वे वक्तव्ये सति सत्यपदेन ब्रह्मग्रहणं ह्युप-पन्नम्। प्राणोपासकादन्य एवातिवादीत्युक्तौ च कस्योपासनात् अन्योऽतिवादीत्युपास्याकाङ्क्षायाः स्वरसभावितया तच्छमकत्वं

'एष तु वा अग्निहोत्री' इति वाक्ये द्रव्यदेवतान्तराभावेन अग्निहोत्रा-न्तराप्रतीतेः तुशब्दस्वारस्यभङ्गः ; इह तु प्रकृतातिवादनिमित्तप्राण-व्यतिरिक्तस्य सत्यशब्दितस्य ब्रह्मणो निमित्तान्तरस्य प्रतीतेः न तत्स्वा-रस्यभङ्गो युक्तः । किञ्च सत्यवदनस्याङ्गतया विधाने, 'सत्यं वदति'

---

सत्यपदस्य संभवन्न युक्तमुपेक्षितुम्। तत् सत्यत्वरूपसामान्यमुखेनापि ब्रह्मैव ग्राह्यम् । प्रसिद्धश्चायं विशिष्यैव ब्रह्मणि सत्यशब्दः, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति । चेतनाचेतननियन्तृत्वं सत्यत्वमिति तन्निर्व-चनञ्च बृहदारण्यके, अत्र चाष्टमे स्पष्टमिति तथाविधवस्तुविषय-कत्वादयमतिवाद इति कथनमतीवोचितम् । न चेदं सूत्रेऽनुक्तम् ; अध्युपदेशादित्यस्य अधिकतया सत्यपदेनोपदिष्टत्वादित्यर्थादेतदुक्ति-सिद्धेः। यथा च भूमेति सूत्रे निर्देशोऽपि ततः प्राक्तनम्, 'सुखं त्वेव विजिज्ञासितव्यम्' इति सुखपदमपि ब्रह्मपरम्, तथा ततोऽपि प्राक्तनं सत्यपदमपीति नानुपपत्तिः । अतः सुष्ठूक्तं सत्यशब्दो ब्रह्मपर इति ।

इदं तु स्यात्—अतिवाद्यस्मीति ब्रूयादित्यादेः विधिपरत्वं विना संभावनापरतयाऽपि योजना युज्यते ; प्राणोपासकेऽतिवादित्वस्य वस्तुतोऽयथार्थत्वात् । तदयमर्थः—ज्ञानानन्दप्रत्यगात्मयाथात्म्यवेदी स्वयमतिवादी भवति । तदयुक्तमित्यभिप्रायेण यदि केचित् महा-न्तो ब्रूयुः, किमतिवाद्यसीति—तदापि अतिवादित्वमसत्कृतमतीव युक्तमिति मन्वानस्य, धैर्येण तदपह्नवमकृत्वा अतिवाद्यस्मीति स्वीकरणमेव संभावितम् । अपह्नवो न भवेत् ; यतः, 'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः' इति प्रत्यगात्मनिष्ठस्य स्थिति-र्गीयते । अत एव, 'अयुक्तमिदमतिवादित्वम् । अतोऽपह्नोत-व्यमिदम्' इति न स परामृशेत् । एवमस्यासंकोचेन स्वयमतिवदन-कर्तृत्वेऽपि नायं वास्तवातिवादी भवति । किंतु यः सत्येन परब्रह्म-णाऽतिवदति, स एवेति ।

**सोऽहं भगवः सत्येनातिवदानीति।**
**सत्यं त्वेव विजिज्ञासितव्यमिति। सत्यं भगवो विजिज्ञास इति॥**
**इति सप्तमाध्याये षोडशः खण्डः।**

**सप्तमे सप्तदशः खण्डः**

**यदा वै विजानाति, अथ सत्यं वदति। नाविजानन् सत्यं**

---

इति निर्देशस्य युक्ततया सत्येनेति तृतीयायाः अतीत्युपसर्गस्य चायोगादिति द्रष्टव्यम्।

**सोऽहं भगवः सत्येनातिवदानीति।** ब्रह्मणाऽतिवदानीति शिष्यः प्रार्थयामासेत्यर्थः। इतर आह **सत्यं त्वेव विजिज्ञासितव्य-मिति।** यदि **सत्य**शब्दितब्रह्मनिमित्तकातिवादितामभिलषसि, तर्हि ब्रह्मो-पास्यमित्यर्थः। ब्रह्मोपासनमतिवादित्वहेतुरिति यावत्। शिष्यः तद-भ्युपगच्छति **सत्यं भगवो विजिज्ञास इति। विजिज्ञासे** उपासितं करोमीत्यर्थः॥ (७-१६)

ब्रह्मोपासनस्यातिवादहेतुत्वं ब्रह्मसाक्षात्कारद्वारेत्याह **यदा...**

---

सत्यम्; पूर्वयोजनायामपि नातिवदनं प्राणविदो विधीयते, कर्तव्य-मिति। किंतु अनुमन्यते, अनात्मविदपेक्षयाऽस्योत्कर्षादिति ध्येयम्।

ब्रह्मोपास्यमित्यर्थ इति। ननु विजिज्ञासितव्यमित्यस्येह उपास्य-मित्यर्थ उपरितनवाक्येषु संपाद्यमित्यर्थः; सुखभूमवाक्ययोस्तु ज्ञात-व्यमित्यर्थ इत्यव्यवस्था न युक्ता। न चैकार्थासंभवः; विशेषेण ज्ञातुमेष्टव्यम्, विशेषेण ज्ञातव्यमिति वाऽर्थस्यानुगतत्वात्। एवं ज्ञातव्यत्वे गुरुणोक्ते, तत् तत् ज्ञातुमिच्छामीति शिष्य आह, 'विजि-ज्ञासे' इति। ज्ञापयति च गुरुस्तत्तत् ऊर्ध्ववाक्येन। तत्र सत्यं विज्ञातव्यमित्युक्ते शिष्य आह, 'सत्यं किं' इति ज्ञातुमिच्छामीति।

वदति। विजानन्नेव सत्यं वदति। विज्ञानं त्वेव विजिज्ञासितव्य-मिति। विज्ञानं भगवो विजिज्ञास इति॥ १॥

इति सप्तमाध्याये सप्तदशः खण्डः।

---

**वदति**। अत्र **विजानाति**शब्दः साक्षात्कारपरः। यदा वै साक्षात्करोति, तदा **सत्यं वदति** सत्येनातिवदतीत्यर्थः। पूर्वत्र सत्येनातिवदानीति निर्दिष्टत्वात् **सत्य**शब्दितस्य ब्रह्मणोऽतिवदनं प्रति निमित्तत्वेन करणत्व-विवक्षया तृतीयावत्, वदनं प्रति कर्मतया द्वितीयाया अप्युपपत्तेः। 'स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्नतिवादी भवति' इति साक्षात्कारमननोपासनानामतिवादित्वनिमित्ततया पूर्वोक्तत्वात्, 'सत्यं त्वेव विजिज्ञासितव्यम्' इति उपासनस्योक्तत्वात्, 'मतिस्त्वेव विजिज्ञासितव्यः' इति मननस्य वक्ष्यमाणत्वात् अत्र **विजानाती**त्यनेन साक्षात्कार एवोच्यते। उक्तञ्च **व्यासार्यैः**, "विजानातिशब्दः साक्षा-त्कारपरः, न तु शास्त्रजन्यज्ञानपरः; 'यदा वै मनुतेऽथ विजानाति' इति

---

अथ गुरुराह—न तज्ज्ञानमात्रादतिवादसंभवः; उपासनरूप-विज्ञानमावश्यकमिति। विज्ञानज्ञानमिच्छामीति शिष्योक्ते, विज्ञानं मननात् भवतीत्युक्तम्। अथ क्रमेण—मतिः कथम्, श्रद्धा कथम्, निष्ठा कथम्, कृतिश्च कथं भवतीति जिज्ञासायां तत्तदुत्पत्तिरीति-रुपदिष्टा। तत्र श्रवणं मननोपाय इति नारदस्य तदाऽनुभूयमानत्वात् तन्नोक्तम्। अथ सुखं कथम्भूतमित्यत्र भूमोपदिष्टः। को भूमेत्यत्र तदुप-पादनम्, यत्र नान्यदित्यादिना। अतः सर्वत्रैकार्थवर्णनं युक्तमिति चेत्–सत्यम्–एवमपि विजानाति, विजानन् इति पदयोः उपासनपर-त्वमेव वाच्यम्, श्रुत्यन्तरप्रसिद्धिम्, 'एवं पश्यन्नेवं मन्वान एवं विजा-नन्नतिवादी भवति' इति पूर्ववाक्यञ्चानुसृत्य। एवञ्च तन्मध्यगते, उपा-

विजानात्यर्थस्य मननसाध्यत्वावगमात् । **सत्यं वदति** सत्यमतिवदतीत्यर्थः'' इति । **नाविजानन्....इति** । साक्षात्काराभावे नातिवादित्वम् । अतः साक्षात्काररूपं विज्ञानं **विजिज्ञासितव्यम्** संपाद्यमित्यर्थः । पाकं पचतीतिवत् **विज्ञानं विजिज्ञासितव्य**मिति निर्देशः । उत्तरत्रापि **विजिज्ञासितव्य**पदस्य संपाद्यत्वमेवार्थः। उक्तञ्च **व्यासार्यैः,** ''सत्यव्यतिरिक्तविषयाणि विजिज्ञासितव्यपदानि संपाद्यवाचीनि'' इति । शिष्यः तदभ्युपगच्छति **विज्ञानं भगवो विजिज्ञासे इति** । हे भगवन् ! अतिवादित्वनिमित्तं साक्षात्कारं संपादयामीत्यर्थः । पूर्वखण्डे, 'सत्यं त्वेव विजिज्ञासितव्यम्' इति ब्रह्मोपासनस्यातिवादित्वहेतुत्वकथनात् अत्र च वाक्ये साक्षात्कारस्यातिवदनहेतुत्वकथनात् ब्रह्मोपासनतत्साक्षात्कारयोः द्वारद्वारिभावापन्नयोरेवातिवादहेतुत्वं सिद्ध्यति । एतत् सर्वमभिप्रेत्य **भगवता भाष्यकृता,** ''ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये परब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनम्, 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्युपदिश्य'' इति भाषितम् ।

केचित्तु—'सत्यं त्वेव विजिज्ञासितव्यम्' इति विहितं साक्षात्कारहेतुभूतं विज्ञानमेव, 'यदा वै विजानात्यथ सत्यं वदति' इति खण्डेनापि निर्दिश्यते ; न तु साक्षात्कारः । एवञ्च सति, ''सत्यं त्वेव

---

**सनपर्यन्तज्ञानेनैवातिवादस्य कार्यतामध्यवस्यता गुरुणा प्रयुक्ते विजिज्ञासितव्यमिति पदे उपासनरूपार्थपरत्वाभिसंधिर्न मनागपि न घटते । उपरि पुनः एतदर्थबाधादर्थान्तरस्वीकार इति । अस्तु वा सर्वत्र विशदज्ञानमेव विज्ञानपदवाच्यार्थः। तत् यथायथमुपासनमन्यद्वेति॥**

सप्तमे अष्टादशः खण्डः

यदा वै मनुतेऽथ विजानाति । नामत्वा विजानाति । मत्वैव विजानाति । मतिस्त्वेव विजिज्ञासितव्येति । मतिं भगवो विजिज्ञास इति ॥ १ ॥ इति सप्तमाध्याये अष्टादशः खण्डः ।

सप्तमे एकोनविंशः खण्डः

यदा वै श्रद्दधाति, अथ मनुते । नाश्रद्दधन्मनुते । श्रद्दधदेव मनुते । श्रद्धा त्वेव विजिज्ञासितव्येति । श्रद्धां भगवो विजिज्ञास इति॥

इति सप्तमाध्याये एकोनविंशः खण्डः ।

---

विजिज्ञासितव्यमिति ब्रह्मोपासनमुपदिश्य, तदुपायभूतं ब्रह्ममननं, 'मतिस्त्वेव विजिज्ञासितव्यः' इत्युपदिश्य'' इति भाष्यमपि स्वरसमिति वदन्ति॥

**यदा वै मनुते...विजिज्ञासितव्येति** । ब्रह्मोपासनोपायभूतं मननं संपाद्यमित्यर्थः । शिष्य आह **मतिं...इति** । (७-१८)

**यदा वै श्रद्दधाति...इति** । अत्र[च भगवता] भाष्यकृता, ''श्रवणप्रतिष्ठार्थत्वान्मननस्य, मननोपदेशेन श्रवणमप्यर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धां श्रद्धा त्वेव विजिज्ञासितव्येत्युपदिश्य''

---

श्रवणप्रतिष्ठार्थत्वादित्यादि । ननु मननमेवार्थसिद्धं मत्वा श्रवणमेव कस्मान्नोपदिशति श्रुतिरिति चेत्—पूर्वं 'एवं मन्वान एवं विजानन्' इति मननस्य प्रस्तुतत्वात् मननमेवेहाप्युपदिष्टमिति । किञ्च भाष्ये श्रवणोपायभूतां श्रद्धामित्येतावता मननोपायत्वं श्रद्धाया न भवतीति नाभिप्रेतम् । किंतु व्यवहितोपायभूते श्रवणेऽपि श्रद्धावश्यकत्वे कथिते, मननेऽपि तदावश्यकता कैमुत्यात् सेत्स्यतीत्येतदेव । अत्र श्रवणप्रस्तावादर्शनात्, 'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्युक्तं मननमेव विवक्षितमित्यत्र नियामकाभावात्, 'बाल्यं पण्डित्यञ्च निर्विद्याथ मुनिः' इति श्रुत्यभिमतं सहकार्य-

सप्तमे विंशः खण्डः

यदा वै निस्तिष्ठति, अथ श्रद्दधाति। नानिस्तिष्ठन् श्रद्दधाति। निस्तिष्ठन्नेव श्रद्दधाति। नि(निः?)ष्ठा त्वेव विजिज्ञासितव्येति। नि(निः?ष्ठां) भगवो विजिज्ञास इति। इति सप्तमाध्याये विंशः खण्डः।

---

इति भाषितम्। अत्र, 'श्रवणोपायभूतां ब्रह्मणि श्रद्धाम्' इत्यनेन ब्रह्मश्रवणविषयिणी श्रद्धा विवक्षिता। श्रद्धा च त्वरेति **व्यासार्यै-** र्व्याख्यातम्। शिष्टं स्पष्टम्॥ (७-१९)

**यदा वै निस्तिष्ठति....इति।** ब्रह्मैव श्रोतव्यम्, नान्यदिति व्यवसायरूपा **निष्ठा** श्रोतुः त्वरालक्षणश्रद्धोपायतया संपाद्येत्यर्थः। शिष्टं पूर्ववत्॥

---

न्तरविध्यधिकरणदर्शितमुपासनोपायभूतमालम्बनसंशीलनमेव मननमस्तु गृह्यमाणम्। तत्रापि श्रद्धादीनामपेक्षाऽस्त्येवेति तदुक्तिरपि इति शङ्का स्यात्। इदमपि भाष्यकृतां नैवानभिमतम्। व्यवहितोपाये श्रवणेऽपि श्रद्धादेरावश्यकत्वज्ञप्तये तु तथा भाषितमिति। वस्तुतो विज्ञानसामान्ये हेतुभूतं श्रवणानन्तरमननमेवेदमित्येव युक्तम्। मननकाले श्रद्धानुवृत्त्यभावे प्रतितर्कोपप्लुतः स्यादिति तदानीमपि श्रद्धावश्यकत्वज्ञप्तये श्रुतिर्मननानन्तरमेव श्रद्धामाह। सर्वथा श्रवणविषयकत्वकथनमुपलक्षणं मननादिविषयकत्वस्यापि। एवं निष्ठापि न केवलम्, 'ब्रह्मैव श्रोतव्यम्, नान्यदित्येतावन्मात्रकारा; किंतु ब्रह्मैव मन्तव्यं विजिज्ञासितव्यम्' इत्याद्याकाराऽपि। एवं यदुक्तम्—श्रोतव्यान्तरेषु हेयत्वानुसंधाने मनसो नियमनरूपा कृतिरिति, तत्रापि ब्रह्मेतरस्मिन् हेयत्वानुसंधानविषयिणीव रजस्तमोनिबर्हणेन सत्त्वाभिवर्धनेन पूर्वोक्तनिष्ठारूपाध्यवसायसंपादकसात्त्विकत्यागपूर्वकविशुद्धकर्मानुष्ठानरूपकृतिरप्यभिमतैवेति ध्येयम्। ईदृशी स्थितिश्च श्रवणात् प्रागपि यथार्हं पुरुषस्यापेक्षितेत्यादरातिशयात् भाष्ये श्रवणप्रस्ताव इति॥

सप्तमे एकविंशः खण्डः

यदा वै करोति, अथ निस्तिष्ठति। नाकृत्वा निस्तिष्ठति। कृत्वैव निस्तिष्ठति। कृतिस्त्वेव विजिज्ञासितव्येति। कृतिं भगवो विजिज्ञास इति ॥ १ ॥ इति सप्तमाध्याये एकविंशः खण्डः।

सप्तमे द्वाविंशः खण्डः

यदा वै सुखं लभते, अथ करोति। नासुखं लब्ध्वा करोति।

---

**यदा वै करोति**....इति। उद्योगप्रयत्नापरपर्याया श्रोतव्यान्तरेषु हेयत्वानुसंधाने(धानेन) मनसो नियमनरूपा कृतिः, ब्रह्मैव श्रोतव्यमिति व्यवसायलक्षणनिष्ठाहेतुत्वात् संपाद्येत्यर्थः। अन्यत् पूर्ववत् ॥ ७-२१

**यदा वै सुखं**...इति। उक्तलक्षणायाः कृतेः ब्रह्मणि निरतिशयानुकूलत्वावगममन्तरेणासंभवात् श्रोतव्यान्तरेषु हेयत्वानुसंधानाऽऽहितमनोनियमनरूपकृतिहेतुतया अत्यन्तानुकूलत्वलक्षणं सुखत्वं [ब्रह्मणि] ज्ञातव्यमित्यर्थः। अत्र च श्रवणमननश्रद्धादेः प्रागेव, सुखप्राप्त्यसंभवात् प्राप्त्यर्थस्यापि **लभतेः** ज्ञानमेवार्थः। ज्ञानस्यापि प्राप्तिरूपत्वात्। श्रोतव्येऽत्यन्तानुकूलत्वज्ञानाभावेन श्रोतव्यान्तरेषु हेयत्वानुसंधानाऽऽहितमनोनियमनरूपकृतेरसंभवात् अत्यन्तानुकूलत्वं श्रोतव्ये

---

उद्योगप्रयत्नेति। उद्योगरूपः प्रयत्न इति व्यासार्यैरुक्तम्। कर्मयोगादिरूपोद्योगविषयप्रयत्नेति विवक्षितं स्यात्।

येयं विषयेषु हेयत्वानुसंधाने विशुद्धकर्मानुष्ठाने च पुंसः कृतिः, एषा अतिशयितसुखरूपपुरुषार्थं लम्भनीयं स्थितमनाकलयतो न भवितुमर्हतीति तत् सुखं ज्ञातव्यमिति दर्शयति यदेति। असुखमित्यत्र अ इति पृथक्पदम् असुखं लब्ध्वा सुखमलब्ध्वा।

सुखमेव लब्ध्वा करोति। सुखं त्वेव विजिज्ञासितव्यमिति। सुखं भगवो विजिज्ञास इति ॥ १ ॥ इति सप्तमाध्याये द्वाविंशः खण्डः।

सप्तमे त्रयोविंशः खण्डः

यो वै भूमा तत् सुखम्। नाल्पे सुखमस्ति। भूमैव सुखम्। भूमा त्वेव विजिज्ञासितव्य इति। भूमानं भगवो विजिज्ञास इति।

इति सप्तमाध्याये त्रयोविंशः खण्डः।

---

ब्रह्मणि ज्ञातव्यमिति भावः। अत्रत्यविजिज्ञासितव्यशब्दस्य ज्ञातव्यत्वमर्थः, नोपासितव्यत्वं संपादनीयत्वं वेति द्रष्टव्यम् ॥ (७-२२)

**यो वै भूमा...इति।** **भूम**शब्दो [हि] बहुत्ववाची। **बहु** शब्दात् पृथ्वादित्वात् इमनिचि, 'बहोर्लोपो भू च बहोः' इति प्रकृतिप्रत्यययोर्विकारे च सति तन्निष्पत्तेः। बहुत्वञ्चात्र वैपुल्यम्, न संख्याविशेषः। बहुशब्दस्य, बहुषु 'बहुवचनम्' इत्यादौ सङ्ख्यायामिव, 'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः' इत्यादौ अल्पत्वप्रतियोगिनि वैपुल्येऽपि प्रयोगदर्शनात्, इहापि 'नाल्पे सुखमस्ति' इति अल्पत्व प्रतिद्वन्द्वितयैव **भूम**शब्दप्रयोगाच्च वैपुल्यमेवार्थः। वैपुल्यञ्च गुणोत्कर्ष रूपम्। न तु परिमाणरूपम्। सुखशब्दसामानाधिकरण्यात्। न हि

---

नन्विदं सुखं विषयसुखविलक्षणमतिशयितं ज्ञानानन्दस्वात्मरूपमेवास्तु इत्यत्राह यो वै भूमेति। सर्वातिशयितपुरुषार्थभूतस्वोपास्यवस्तुवादरूपातिवादित्वनिमित्तभूतविज्ञानमननश्रद्धानिष्ठाकृतिप्रयोजकं हि सुखज्ञानं निरतिशयसुखज्ञानमेव भवितुमर्हति। तादृशसुखत्वञ्च सर्वप्रकारोत्कृष्टस्यैव स्यात्; नाल्पस्य। प्राणश्चाल्पः, न भूमा। 'प्राणः प्राणेन' इत्यादिना प्रागेव प्राणानामनेकत्वस्य, हिंसायोग्यतया नानाविधदुःखास्पदत्वस्य चोक्ततया सर्वोत्कृष्टत्वासिद्धेरिति भावः॥

**यत्र नान्यत् पश्यति, नान्यच्छृणोति, नान्यत् विजानाति, स भूमा ।**

---

सुखे उत्कर्षवत् परिमाण प्रसिद्ध स्यात् । अत उत्कर्षकृतवैपुल्यमेवेह **भूम**शब्देन विवक्षितम् । अत एव न वैपुल्यरूपधर्मपरो **भूम**शब्दः; सुखस्य वैपुल्यरूपत्वाभावात् । अल्पप्रतियोगितया निर्देशाच्च । न ह्यत्र वा उत्तरत्र वा अल्पत्वं भूमप्रतियोगितया निर्दिश्यते; अपितु अल्पमेव । अतोऽ**ल्प** शब्दप्रतियोगितया प्रयुज्यमानो **भूम**शब्दो वैपुल्याश्रयधर्मिपर एव ।

ततश्चायमर्थः—यत् उत्कृष्टं विपुलम्, तदेव **सुखम्** अत्यन्तानुकूलमित्यर्थः । **नाल्पे सुखमस्ति** । सुखं सुखत्वम् । अत्यन्तानुकूलत्वमित्यर्थः । 'अपशवो वा अन्ये गोअश्वेभ्यः' इत्यत्र गवाश्व व्यतिरिक्ते अजादौ पशुत्वनिषेधस्य प्रशस्तपशुत्वनिषेधपरत्ववत् अल्पे प्रत्यगात्मनि सुखे सुखत्वनिषेधस्य प्रशस्तसुखत्वनिषेधपरत्वात् पूर्वखण्ड एव सुखशब्दस्यात्यन्तानुकूलार्थतया व्याख्यातत्वात् । ततश्च भूम भिन्नस्य सुखत्वाभावात् सुखत्वादेव हेतोर्भूमत्वमप्यस्तीति ज्ञातव्यमित्यर्थः । एतत् सर्वं **भाष्ये**ऽपि द्रष्टव्यम् । शिष्टं स्पष्टम् ॥ (७-२३)

एतद्वाक्यप्रस्तुतयोः **भूमाल्प**शब्दयोरर्थजिज्ञासुं प्रत्याह **यत्र नान्यत्...स भूमा** । यत्रेति, 'अनुभूयमाने' इत्यध्याहारः । यत्र

---

प्राणोऽपि धर्मभूतज्ञानविभवदशायां भूमा भवतीति न मन्तव्यमिति व्युत्पादनाय, यादृशस्य भूमशब्दविवक्षितत्वे सर्वातिशयितसुखरूपत्वं सिद्ध्येत्, तादृशमर्थमाह यत्र नान्यदिति । प्रपञ्चान्तर्गतं सर्वं गुणरूपेण विभूतिरूपेण वा यस्यैकस्य प्रकारभूतम्, स भूमशब्दार्थ इति विवक्षितम् । अत्र, 'स्थितेऽरविन्दे मकरन्दनिर्भरे

वस्तुनि अनुभूयमाने ततोऽन्यन्न दृश्यते, न श्रूयते, न विज्ञायते च, स भूमेत्यर्थः । यस्मिन् दृश्यमाने ततोऽन्यन्न दृश्यते, यस्मिन् श्रूयमाणे ततोऽन्यन्न श्रूयते, यस्मिन् विज्ञायमाने ततोऽन्यन्न विज्ञायते, स भूमेत्यर्थः । यद्वा सप्तम्याः विषयत्वमर्थः । पश्यन्नित्यध्याहारः । यं पश्यन् यतोऽन्यन्न पश्यतीत्यर्थः । अत्र तदितरस्य दर्शनाद्यभावो विषयाभावकृतः । ततश्च यतोऽन्यन्नास्ति, स भूमेत्यर्थः पर्यवसितः ।

ननु चेतनाचेतनवर्गस्य तद्भिन्नत्वात् कथ भूम्नोऽन्यन्नास्तीत्युच्यते । न च चिदचिद्विशिष्टस्यैव भूमब्रह्मशब्दार्थत्वात् चिदचितोरपि तत्रान्तर्भावात् तदन्यन्नेति निषेधः शक्यते कर्तुमिति वाच्यम्–विशेषणभूतयोः चिदचितोः भूमब्रह्मशब्दार्थभूतात् विशिष्टादन्यत्वेन ततोऽन्यन्नास्तीति निषेधस्यायुक्तत्वात् । किञ्च, 'अथात आत्मादेशः' इति भूम्न एवाऽऽत्मत्वस्योपदेक्ष्यमाणत्वात् । 'तरति शोकमात्मवित्' इति प्रस्तुतस्यात्मोपदेशस्य भूम्नि पर्यवसानाच्च भूम्न आत्मत्वमवर्जनीयम् । न हि चिदचिद्विशिष्टस्याऽऽत्मत्वमस्ति; विशेष्यस्यैवान्तः प्रविश्य नियन्तृत्वेनात्मत्वात् । ततश्च तस्यैव भूमत्वं वक्तव्यम् । न चेदं लक्षणं तस्य संभवति । तद्व्यतिरिक्तस्य वस्तुनः सत्त्वादिति चेत्—

---

मधुव्रतो नेक्षुरकं हि वीक्षते' इति न्यायेन ब्रह्मदर्शनश्रवणादौ प्रवृत्तो नान्यत् पश्यति न शृणोतीत्यर्थस्वीकारे प्रपञ्चोऽननुभूयमान इति प्रतीयेत । अतः प्रपञ्चस्यापि सुखत्वमनुभूयमानत्वञ्च स्थितमिह दर्शयितुं भगवता भाष्यकृता, "विभूतिगुणविशिष्टं निरतिशयसुखस्वरूपं ब्रह्मानुभवन् तद्व्यतिरिक्तस्य वस्तुनोऽभावादेव किमप्यन्यन्न पश्यति" इत्येतदर्थो दर्शितः । तमर्थं मनसिकृत्याह अत्र तदितरस्येत्यादि ।

उच्यते—ब्रह्मशब्दवत् भूमशब्दस्यापि वस्तुपरिच्छेदशून्यत्वमेवार्थः । वस्तुपरिच्छेदो नाम इदमिदं नेति निर्देशार्हत्वम् ; तद्राहित्यं स्वरूपाभेदाद्वा भवेत्, तदपृथक्सिद्धत्वाद्वा भवेत् । तत्र जीवजडयोरीश्वराभेदाभावात् तदपृथक्सिद्धसत्ताकत्वमिति फलति । तच्च द्वेधा घटते ; तत्सत्ताव्यतिरिक्तसत्ताशून्यत्वाद्वा, 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इति स्मृत्यनुसारेण तदधीनसत्ताकत्वाद्वा भवेत् । तत्र तत्सत्ताव्यतिरिक्तसत्ताशून्यत्वमपि सत्तारूपविशेष्याभावेन मिथ्यात्वाद्वा भवेत्, तत्सत्ताऽभिन्नसत्ताकत्वेन सत्ताव्यतिरिक्तस्वरूपविशेषणाभावाद्वा भवेत् । तत्र सत्ताशून्यत्वं सकलप्रमाणविरुद्धं नाभ्युपगमार्हम् । तथैव तत्सत्ताभिन्नसत्ताकत्वमपि नाभ्युपगमार्हम् ।

अपितु तत्सत्ताधीनसत्ताकत्वमेव । एवंविधस्यापृथक्सिद्धत्वस्य सिद्धान्तेऽभ्युपगतत्वान्नानुपपत्तिः ।

---

तत्सत्ताभिन्नसत्तेति । मुण्डकप्रकाशिकास्वीकृतस्याप्यस्य पक्षस्यात्रानादरः परमात्मानं विहाय पृथक् संप्रति प्रतीयमाने प्रपञ्चे अप्रतीतपरमात्मसत्तामादाय सत्ताव्यवहारेऽनौचित्यात् । तार्किकैरपि द्रव्यवत् गुणकर्मणोरपि पृथक् प्रतीत्या सत्ता स्वीकृता । सामान्यादावेव स्वतन्त्रप्रतीत्यनर्हे सा नेष्टा । श्रीभाष्येऽपि पृथगप्रतीयमानस्य कालस्यैव पृथगस्तित्वं नेष्टमिति । ननु यत्र नान्यदिति यत्पदस्य विशेष्यमात्रपरत्वे, अत एव भूमेत्यस्य च तथात्वे, विशेष्यमात्रे सुखत्वप्रतीतिः स्यात् । तथाच श्रीभाष्यविरोधः । तत्र, यो वै भूमा तत् सुखमिति वाक्येन विशेष्यवत् विशेषणे प्रपञ्चेऽपि सुखत्वप्रतीतिमुपजीव्यैव विस्तरेण तदुपपादनात् ।

**अथ यत्रान्यत् पश्यति, अन्यच्छृणोति, अन्यत् विजानाति, तदल्पम्। यो वै भूमा, तदमृतम्। अथ यदल्पम्, तन्मर्त्यम्।**

---

ततश्च **यत्र नान्यदि**त्यस्यापि यत्सत्तानधीनसत्ताकं नास्ति, यदनात्मकं नास्ति इत्यर्थपर्यवसानात् नानुपपत्तिः।

यद्वा, 'समाने पूर्ववत्त्वात्--' इति साप्तमिकाधिकरणे (७-१-२.) **इतरा**दिसर्वनामशब्दानां पूर्वनिर्दिष्टसदृशवाचित्वस्य व्यवस्थापिततया, 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिवाक्येष्विव, 'यत्र नान्यत् पश्यति' इति वाक्येऽपि समानान्यनिषेधपरत्वाश्रयणान्नानुपपत्तिः।

**अथ यत्रान्यत्...तदल्पम्**। उक्तलक्षणभूमविपरीतलक्षणमल्प-मित्यर्थः। **यो वै....मर्त्यम्**। उक्तलक्षणो भूमैवा**मृतम्** जननमरणादि-शून्यम् नित्याविर्भूतानन्याधीनापहतपाप्मत्वादिगुणाष्टकमिति यावत्।

---

किञ्च सर्ववस्तुसामानाधिकरण्यानर्हत्वरूपवस्तुपरिच्छेद-शून्यत्वञ्च शोध्यमानं सर्वात्मत्वरूपमेव भवति इत्यतः भूमपदस्य विशेष्यमात्रपरत्वेऽपि विशिष्टपरत्वेऽपि च संभवन्तं निर्वाहमाह यद्वेति। समाने इति। 'समानमितरच्छ्येनेन' इति, इषुनामनि एकाहे ज्योतिष्टोमविकारे श्येनयागविकृतित्वसिद्ध्यै पठ्यते। श्रुत्यर्थश्च, इतरत्=इषौ, पठिताङ्गसदृशं=अप्राकृतत्वेन, प्रकृताङ्गानुवादेन विहितत्वेन वा रूपेण यत् पठिताङ्गसदृशम्, तत् श्येनसमानं कुर्यादिति। (प्रत्यक्षवचनातिदेशोऽयम्) अत्रोपात्तं तु पूर्वपक्षसूत्रम्।

'अनन्यचेताः सततम्', 'राममेवानुपश्यति' इत्यादौ तदन्यत्वं तदनन्तर्गतत्वं तद्विषयकप्रतीत्यविषयत्वरूपमानुभविकम्। तथाच यत्रानुभूयमाने यदन्यत् न पश्यतीत्युक्तौ यदनन्तर्गतं न पश्यतीत्येवार्थः। ईदृशार्थलाभश्च अन्यादिपदस्य सदृशरूपान्यपरत्वस्वारस्यसिद्धः इति।

यदल्पं तन्मर्त्यमिति। ननु प्राणस्य जीवस्याल्पस्यापि अमृत-

इतरत्तु अनीदृशम् । नित्यमुक्तादीनामपि अनन्याधीनतादृक्त्वाभावात् न वाक्यार्थानुपपत्तिरिति द्रष्टव्यम् ।

---

त्वात् कथमिदं घटत इति चेत्—न। मर्त्यत्वं मृत्यर्हत्वम्। तत् वस्तुतो विमृत्योः जीवस्यापि घटते। जीवानां परमात्मपरतन्त्रतया मृतिस्वरूपयोग्यतायाः स्वीकृतत्वादिति । अत्र, 'विशेषितत्वाच्च' इति सूत्रे श्रीभाष्ये, 'नामादिप्राणपर्यन्तोपासिनां परिमितफलविशेषः भूमविद्याप्रकरणे दर्शितः' इत्युक्तत्वात् प्राणोपासनफलस्यैतत्पूर्वमत्रा-कथनात्, यदल्पं तन्मर्त्यमिति वाक्यमेव तत्परं भाष्यकृदभिमतमिति प्राणस्य मर्त्यत्वाभावेऽपि प्राणात्मकसुखानुभवरूपकैवल्यस्यानित्य-त्वादेवं मर्त्यत्वनिर्देशः; भगवदनुभवानन्तर्गतं हि सर्वं भङ्गुरमिति कैवल्यस्यानित्यत्वमातिष्ठमानानामिह संभवति वर्णनसरणिः।

तदयं प्रघट्टार्थः—निरतिशयपुरुषार्थभूतभूमसुखं ब्रह्म प्राप्यम-विदुषा विषयेषु परं हेयत्वानुसंधानेन कर्मजन्यतया प्रमिततत्त्वदैश्वर्य-फलाभिसंधिरहितकर्मानुष्ठानेन च कृतिमता पुरुषेण किञ्चिद्रूप-निष्ठाश्रद्धामननपूर्वकं क्रियमाणमुपासनं प्राणमात्रविषयकं मर्त्यकैवल्य-रूपाल्पफलपर्यवसितमिति तन्मूलातिवादो न वस्तुतोऽतिवादः। न च तावता उपक्रमोक्तं शोकसंतरणम्, उपसंहारोक्तं तमसः पारदर्श-नञ्च। तदवश्यं तत्क्षुद्रपुरुषार्थरूपाकर्षकानाकृष्टत्वमात्मनि वाञ्छता स्थिरपुरुषार्थलिप्सया भगवत्समाराधनभूतभगवत्कर्मकर्मयोगादि-कृत्या भगवान् आश्रयितव्यः। तदा च विलक्षणनिष्ठा-श्रद्धा-मननादि-निष्पत्त्या सत्यमुक्तिसिद्धिरिति । संगृहीतश्चायमर्थः श्रीमद्वकुल-भूषणदिव्यसूरि-श्रीमुखसूक्ते (१-२-५); यस्यायं संस्कृतानुवादः ईशोपनिषदाचार्यभाष्यतात्पर्येऽस्मत्कृतः,

अपेतो बाह्यसङ्गश्चेत्, आप्तं कैवल्यमात्मना ।
त्यक्त्वा तत् स्थिरलिप्सायां निश्चित्येश्वरमाश्रय ॥ इति ।

**स भगवः कस्मिन् प्रतिष्ठित इति । स्वे महिम्नि, यदि वा न महिम्नीति । गोअश्वमिह महिमेत्याचक्षते, हस्ति-**

---

सर्ववस्तूनामाधारसापेक्षत्वं दृष्ट्वा शिष्यः पृच्छति **स भगवः कस्मिन् प्रतिष्ठित इति** । उत्तरमाह **स्वे महिम्नीति** । सः स्वीय(स्वस्वरूप)-महिमाधारक इत्यर्थः । 'स्वयंदासास्तपस्विनः' इतिवत् अनाधार इत्यभिप्रायः । उक्त(अनेन)ाभिप्रायेणाचार्यः स्वयमुक्त्वा, "स्वशब्दस्याऽऽत्मात्मीयवचनत्वात् आत्मीये नियाम्यतया महिमभूते गवाश्वहस्तिहिरण्यदासभार्यादिलक्षणे प्रतिष्ठित इत्यभिप्रायं शिष्यो गृह्णीयात् । अथवा स्वशब्दस्य स्व(आ)त्मपरतया आत्माधार इत्यभिप्राय इति वा(?) वाक्याभिप्रायं बुद्ध्येत । न च तदुभयमपि संभवति । परमात्मन उभयविभूतिलक्षणात्मीयमहिमसद्भावेऽपि अनाधारस्य परमात्मनः तत्प्रतिष्ठितत्वासंभवात् । 'न ह्यतिशिक्षितोऽपि नटवटुः स्वस्कन्धमारुह्य नरीनर्ति' इति न्यायेन स्वस्य स्वाश्रितत्वासंभवाच्च । अतो न द्वयमपि युज्यते । अतः शिष्यस्य सा बुद्धिर्निवर्तनीया" इति मत्वा पुनराह **यदि वा न महिम्नी**ति । **यदि वा** स्वविवक्षितानाधारत्वाभिप्रायातिरिक्ते पूर्वोक्तपक्षद्वये त्वया आशङ्किते, न स्वे महिम्नि प्रतिष्ठित इति ब्रूम इत्यर्थः । तत् विवृणोति **गो....इति । गो** अश्वमित्यादौ द्वन्द्वैकवद्भावः । **आयतनानीति**

---

**पूर्वं, 'यथा वा अरा नाभौ समर्पिताः, एवमस्मिन् प्राणे सर्वं समर्पितम्' इति प्राणस्य सर्वाधारत्वमुपवर्ण्य तादृशप्राणविदपेक्षयापि भूमविद एवातिवादित्वे दर्शिते, अस्यापि भूम्न आधारान्तराश्रितत्वे तत्राप्यतिवादित्वकथनानवकाशमुत्पश्यन् निराधारवस्त्वभावमत्या पृच्छति स भगव इति ॥**

हिरण्यं दासभार्यं क्षेत्राण्यायतनानीति । नाहमेवं ब्रवीमीति होवाच, अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥ २ ॥

इति सप्तमाध्याये चतुर्विंशः खण्डः ।

सप्तमे पञ्चविंशः खण्डः ।

स एवाधस्तात्, स उपरिष्टात्, स पश्चात्, स पुरस्तात्, स दक्षिणतः, स उत्तरतः, स एवेदँ सर्वमिति ।

---

इतिशब्दः प्रकारवचनः । एवञ्जातीयकानीत्यर्थः । **नाहमेवं ब्रवीमीति होवाच** । तत्र प्रतिष्ठितत्वं न ब्रवीमीत्यर्थः । उक्तञ्च **व्यासार्यैः**, 'अस्य महिमानमिति वीतशोकः', 'एतां विभूतिं योगञ्च' इत्यादिश्रुतिस्मृतिषु परमात्मनो महिमवत्त्वावगमात्, 'यदि वा न महिम्नि' इति न महिमनिषेधः । अपितु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेधोऽवगम्यते' इति । अथ स्वरूपमहिमप्रतिष्ठितत्वं निषेधति **अन्यो ह्यन्यस्मिन् प्रतिष्ठित** इति । [न स्वस्य स्वप्रतिष्ठितत्वं संभवतीति भावः ।] ७-२४

ननु, 'यत्र नान्यत् पश्यति' इत्यनुपपन्नम्, नानादिग्वर्तिनां चेतनाचेतनपदार्थानां भिन्नानामुपलम्भादित्यत्राह **स एवाधस्तात्.... सर्वमिति** । अत्र **स एवेदं सर्वमिति** सामानाधिकरण्यात् स इति निर्दिष्टस्य भूम्नः, इदं सर्वमिति निर्दिष्टस्य चिदचिद्वर्गस्य च शरीरात्मभावः फलितो भवति । ततश्च, 'यत्र नान्यत् पश्यति' इति तदनात्मकान्यनिषेधे नानुपपत्तिरिति भावः ।

---

अथ सर्वस्यापि प्रपञ्चस्य तदन्तर्भावात् तदन्यस्याभावो य उक्तः, 'यत्र नान्यत् पश्यति' इति, तदुपपादनं स एवाधस्तादित्यादिना । एवम्भूतभूमोपासनं स्वात्मगर्भमेव कार्यम् । अतः स वा एष

**अथातोऽहङ्कारादेश एव—अहमेवाधस्तात्, अहमुपरिष्टात्, अहं पश्चात्, अहं पुरस्तात्, अहं दक्षिणतः, अहमुत्तरतः, अहमेवेदँ**

---

एवं सर्वात्मभूतस्य भूम्न उपासने स्वशरीरकतयोपासनं कर्तव्यमु-(मित्यु)पदिशति **अथातोऽहङ्कारादेशः** । क्रियत इति शेषः । **अथशब्दः** प्रकृतविषय[त्व]द्योतनार्थः । **अहङ्कारः** अहंबुद्धिः=अहङ्ग्रहेण भूम्न उपासनप्रकारः अतःपरमुपदिश्यत इत्यर्थः । न तु जीवस्वरूपोपदेश इति मन्तव्यम् । तथासति, 'अहमादेशः' इति निर्देशस्यैव युक्ततया **कार**-पदवैयर्थ्यात् । परमात्मनोऽहङ्ग्रहेणोपासनप्रकारमेव दर्शयति **अहमेव... सर्वमिति** । सर्वदिग्वर्ती सर्वात्मा भूमाऽहमेवेति ज्ञातव्यमित्यर्थः । न तु जीवस्य सर्वात्मकत्वमुपदिश्यत इति भ्रमितव्यम्; जीवस्यासर्वाधार-[त्वेनासर्वात्मक]त्वात् । तथात्वे **कार**शब्दवैयर्थ्यस्योक्तत्वाच्च । उक्तञ्च **भगवता भाष्यकृता**, "यत्तु अहमेवाधस्तादित्यादिना सर्वात्मत्वमुपदिष्टम्, तद् भूमविशिष्टस्य ब्रह्मणोऽहङ्ग्रहेणोपासनमुपदिश्यते, 'अथातोऽहङ्कारादेशः' इति अहङ्ग्रहणोपदेशोपक्रमात्" इति, "परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहङ्ग्रहेणोपासनं कर्तव्यम्" इति च ।

ननु **अहंबुद्धि**शब्दयोर्जीवात्मविषययोः कथं भूमपर्यन्तत्वम्? अनहमर्थे च परमात्मनि अहंग्रहोपासनस्य [अ?]यथार्थत्वमेव स्यादित्याशंक्य, भूम्नः प्रत्यगात्मानं प्रति आत्मत्वेन तद्विषयबुद्धिशब्दानां परमात्मपर्यन्तत्वमुपपद्यत इति दर्शयन्, 'तरति शोकमात्मवित्' इति प्रकान्तमात्म-

---

एवं पश्यन्निति पूर्वं प्राणोपासनकथनमेतदर्थमिति दर्शयति अथातोऽहङ्कारादेश इति ।

**सर्वमिति॥१ अथात आत्मादेश एव-आत्मैवाधस्तात्, आत्मोपरिष्टात्, आत्मा पश्चात्, आत्मा पुरस्तात्, आत्मा दक्षिणतः, आत्मोत्तरतः, आत्मैवेदँ सर्वमिति ।**

---

त्वोपदेशं भूम्नि समापयति—**अथात आत्मादेशः** । अत्रापि, 'क्रियत' इति शेषः ; **अथशब्दः** प्रकृतविषयत्वद्योतनार्थः । **आत्मादेशः** आत्मत्वोपदेशः क्रियत इत्यर्थः । **आत्मैवाधस्तात्—आत्मैवेदँ सर्वमिति** । सर्वात्मतया उपदिश्यमानो भूमा उ(स्त्वो)पासकस्यात्मैवेत्यर्थः । ततश्च **तत्राहंबुद्धि**शब्दयोर्याथार्थ्यमेवेति भावः ।

ननु, 'अथात आत्मादेशः' इत्यात्मत्वोपदेशः प्रकृतभूमविषय इति कथमवसीयत इति चेन्न ; भिन्नयोर्द्वयोः सर्वात्म्यायोगेन एकविषयत्वस्यैव सिद्धत्वात् । ननु च, स एवाधस्तादित्यनेनैव सार्वात्म्यस्य सिद्धतया उपासकात्मत्वमपि सिद्धमेवेति, 'अथात आत्मादेशः' इत्युपदेशो व्यर्थ इति चेत्— सत्यम्, स एवेदँ सर्वमिति सामानाधिकरण्येनाऽऽत्मत्वं फलति। अथापि कण्ठोक्त्योपासकात्मत्वसिद्ध्यर्थं विशिष्य(?) कण्ठोक्त्योपदेशः । न च, 'अथात आत्मादेशः' इति सामान्योक्तिरुपासकं प्रति आत्मत्वोपदेश इति विशेषे किं नियामकमिति वाच्यम्— 'एवं विजानत आत्मतः प्राणः' इति विद्वदात्मनः प्राणाद्युपादानत्वेन सार्वात्म्यस्योत्तरत्र प्रतिपादयिष्यमाणत्वात् ।

यत्तु–अत्र परैः, 'अहङ्कारस्यात्मैकत्वेन प्रत्यक्षसिद्धस्य, 'अथातोऽहङ्कारादेशः', 'अथात आत्मादेशः' इति पृथगुपदेशो भेदार्थः, भूमात्मनोर्भिन्नत्वेन प्रत्यक्षसिद्धयोः पृथगुपदेश एवयार्थः । द्वयोः सार्वा-

**स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् आत्मरति-रात्मक्रीड आत्ममिथुन आत्माऽऽनन्दः ; स स्वराड् भवति। तस्य सर्वेषु लोकेषु कामचारो भवति। अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति। तेषाँ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥**

**इति सप्तमाध्याये पञ्चविंशः खण्डः।**

---

त्म्यायोगात् इति [उक्तम् ?]—तदसारम्। अहमर्थादन्यस्याऽऽत्मनो भूमाख्यब्रह्मभिन्नत्वेव प्रत्यक्षासिद्धत्वात् तयोः पृथगुपदेशो भेदार्थः। अहमर्थस्य तु ब्रह्मभिन्नत्वेन प्रत्यक्षसिद्धत्वात् तयोरुपदेश ऐक्यार्थ इति वैपरीत्यस्यापि सुवचत्वादित्यास्तां तावत्।

**स वा एष....आत्माऽऽनन्दः।** **रतिः** स्रक्चन्दनादिजन्या प्रीतिः। **क्रीडा** उद्यानादिजन्या। स्त्रीसम्भवा प्रीतिः **मिथुनम्।** विभूतिजन्या प्रीतिरा**नन्दः।** आत्मन्ये(त्मै)व रतिर्यस्य स तथोक्तः। एवमुत्तरत्रापि। श्रवणमननिदिध्यासनैरुक्तभूमात्मसाक्षात्कारनिष्ठस्य सर्वविधसुखानुभवोऽप्यात्मसुखानुभवान्तर्गत इत्यर्थः। **स स्वराड् भवति। स्वराट्** स्वयमेव राजा ; अकर्मवश्यः ; विधिनिषेधकिङ्करो न भवतीति यावत्। "अत एव चानन्याधिपतिः" इति सूत्रे, "अत एव सत्यसङ्कल्पत्वादेव **अनन्याधिपतित्वं** विधिनिषेधायोग्यत्वम्। विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत्। अतः सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वञ्च सिद्धम्। अत एव स स्वराड् भवतीत्युच्यते" इति भाषितम्। **तस्य सर्वेषु लोकेषु कामचारो भवति।** "प्रत्यक्षोपदेशान्नेति चेत्" इति सूत्रे, "अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूतान् अनुभूय यथाकामं तृप्यतीति, 'सर्वेषु लोकेषु काम-

सप्तमे षड्विंशः खण्डः।

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्न मात्मतो बल- मात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो

---

चारो भवति' इत्यस्य वाक्यस्यार्थः'' इति भाषितम्। अथ येऽन्यथा.... भवति। ये उक्तप्रकारादन्येन प्रकारेणोपासते, तेऽन्यराजानो भवन्ति= विधिनिषेधकिंकरा भवन्ति। कर्मवश्या भवन्तीत्यर्थः। स्वराडित्यस्य प्रतिद्वन्द्वित्वात्। किञ्च ते क्षय्यलोकाश्च भवन्तीत्यर्थः। अत्र, 'क्षय्य- लोका भवन्ति' इत्यनेन यथोक्तप्रकारेण परमात्मोपासकानामक्षय्यभगव ल्लोकत्वमस्तीत्युक्तं भवति॥ (७-२५)

**अथात आत्मादेश** इत्यनेनोक्तमुपासकान्तर्यामिणः चेतना- चेतनसकलप्रपञ्चोपादानत्वलक्षणसर्वात्मकत्वं स्पष्टयति **तस्य ह....सर्व मिति**। उपासकस्यान्तर्याम्येव प्राङ्निर्दिष्टप्राणशब्दितजीवपर्यन्तसकल- प्रपञ्चोपादानम्। अतः **अहमेवेदं सर्व**मिति विहितोऽहंग्रहः तात्त्विकविषय

---

पूर्वं नामवागादीनामुत्तरोत्तरस्य पूर्वपूर्वकारणत्वमुक्तम्। तत्र प्राणं प्रति भूम्नः कारणत्वं नोक्तमिति तद् दर्शयति विजानत आत्मतः प्राण इति। विजानत इति षष्ठी। एवञ्च प्राणो भूमजन्यः; आशा- दिकं नामान्तं तु न साक्षात् भूमजन्यम्, किन्तु सन्तानक्रमेणेति सिध्येत्। न तथा मन्तव्यम्। किन्तु सद्विद्योक्तरीत्या, 'एतस्माज्जा- यते प्राणो मनः सर्वेन्द्रियाणि च' इत्युक्तरीत्या च पूर्वपूर्वकारणा- न्तर्वर्ती परमात्मैव सर्वकारणम्; न केवलं नामान्तस्य, किन्तु सर्व- स्यापि प्रपञ्चस्येति दर्शयितुम् आत्मत आशेत्यादि।

मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदँ सर्वमिति ॥ १ ॥

तदेष श्लोकः—न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वँ ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥ इति ॥
स एकधा भवति त्रिधा भवति पञ्चधा ।
सप्तधा नवधा चैव पुनश्चैकादश(शः) स्मृतः ॥
शतञ्च दश चैकञ्च सहस्राणि च विंशँतिः ।

---

एवेति भावः । **तदेष श्लोकः । तत्** तस्मिन् विषये **एषः** वक्ष्यमाणः श्लोकः प्रवृत्त इत्यर्थः । **न पश्यो मृत्युं...सर्वमाप्नोति सर्वश इति । पश्यः** ब्रह्मदर्शी **मृत्युं** मरणं **रोगं** दुःखसाधनं **दुःखतां** जगति प्रतिकूलताञ्च न पश्यति । सर्वसाक्षात्कर्ता सन् सङ्कल्पमात्रेण सङ्कल्पितान् अर्थान् सर्वस्मिन् काले प्राप्नोतीत्यर्थः । अपहतपाप्मत्वादिगुणाष्टकाविर्भावो भवतीत्यर्थः । अत्र, जगति दुःखतां न पश्यतीत्युक्त्या जगतो मुक्तं प्रति प्रतिकूलत्वं नास्ति, पित्तोपहतस्य पयःप्रतिकूलत्ववत् जगतः प्रतिकूलत्वं [कर्तृ] कर्मनिबन्धनमित्युक्तं भवति ।

**स एकधा....विंशतिः ।** आत्मनः निरवयवस्य **त्रेधा पञ्चधा सप्तधे**त्यादिविभागायोगात् सङ्कल्पपरिगृहीतानेकविधशरीरो भवतीत्यर्थः। एवं मोक्षसाधनभूतोपासनप्रकारमुपदिश्य, 'तादृशोपासननिष्पत्तौ अन्तःकरणस्योपासनोत्पत्तिप्रतिबन्धकपापराहित्यमपेक्षितम् । तच्च राजसताम-

---

**एवम्, 'स वा एष एवं पश्यन्—आत्मरतिः' इति आत्मदर्शनं नारदप्रार्थितमुपदिश्य, इतस्तरति शोकमात्मविदिति प्रत्याययति तदेष इति । ननु विज्ञानानन्तरभाविनि दर्शने मोक्षहेतौ सति, स वा एष एवं मन्वान एवं विजानन् एवं पश्यन्निति क्रमेण निर्देष्टव्यम् ।**

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ॥
स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ।
तस्मै मृदितकषायाय [देवर्षये नारदाय] तमसः पारं दर्शयति

---

साहारसेविनां न सम्भवति । अपितु तद्विविक्तसात्त्विकाहारसेविनां भवेदिति उपासकः सात्त्विकाहारसेवी भवेत्' इत्युपदिशति **आहारशुद्धौ...विप्रमोक्षः** । **आहारशुद्धौ** सात्त्विकाहारसेवने सति **सत्त्वस्या**न्तःकरणस्य **शुद्धिः** नैर्मल्यं भवति । तन्नैर्मल्ये सति **ध्रुवा स्मृतिः** अविच्छिन्नस्मृतिसन्तानरूपात्मध्यानं सिद्ध्यति । **ध्रुवस्मृतिलम्भे** तल्लाभे सति दुर्मोचतया **ग्रन्थि**शब्दवाच्यानामविद्यारागादीनां मोक्षो भवतीत्यर्थः। अत्र, 'स्मृतिलम्भ एव सर्वग्रन्थीनां विप्रमोक्षः' इत्युक्त्या 'स्मृत्यनन्तरभाविना स्मृतिविलक्षणेन दर्शनेन न मोक्षः, अपितु दर्शनसमानाकारस्मृतिसन्तानेनैव । ततश्च, 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्' इत्यत्र **पश्यन्नि**त्यादिशब्दाः दर्शनसमानाकारोपासनपराः; प्रकरणान्तरस्थाः, 'आत्मा वा अरे द्रष्टव्यः' इत्यादिशब्दाश्च दर्शनसमानाकारध्यानपराः' इति सूचितं भवति ।

शास्त्रार्थमशेषत उक्त्वा आख्यायिकामुपसंहरति श्रुतिः **तस्मै....**

---

**तत् कथं प्रागन्यक्रमादरणमित्यत्राह आहारशुद्धावित्यादि । स्मृतिसंततिरूपा परभक्तिरेव मोक्षहेतुः । तस्या एवाऽऽहारशुद्धिप्रभृतिपुरुषप्रयत्नसाध्यतया विधेयत्वात् । पश्यन्निति तु तस्या एव क्रमभवत् दर्शनसमानाकारत्वमभिप्रेतम् । न मुख्यः साक्षात्कारः । यद्वाऽत्र प्रकरणे श्रवणस्य पृथक्कीर्तनाभावात् स्थानप्रमाणात् पश्यन् इत्यस्य, 'शब्दतो विदन्' इत्यर्थोऽस्तु । अत एवोपदेष्टा सनत्कुमारः, तमसः**

भगवान् सनत्कुमारः। तँ स्कन्द इत्याचक्षते तँ स्कन्द इत्याचक्षते॥
इति सप्तमाध्याये षड्विँशः खण्डः।

## इति छान्दोग्योपनिषदि सप्तमोऽध्यायः॥

---

**सनत्कुमारः**। एवं शुद्धान्तःकरणाय नारदाय भगवान् सनत्कुमारः संसारसंतमसचण्डभानुभूतोपासनगोचरं परमात्मानं स्पष्टमुपादिक्षदित्यर्थः। अत्र नामादिषु ब्रह्मत्वेनोपदिष्टेष्वपि तत्र ब्रह्मत्वस्यानभ्युपगमात् तस्य मृदितकषायत्वम्। शिष्यस्य परिशुद्धान्तःकरणतया उपदेशयोग्यतां परीक्ष्यैवोपदिष्टवानित्यर्थः। **तं स्कन्द....इत्याचक्षते**। [सनत्कुमारं स्कन्द इत्यपि वदन्तीत्यर्थः] स्पष्टोऽर्थः। द्विरुक्तिरध्यायसमाप्त्यर्था॥

एतद्विषयमधिकरणमुपन्यस्यते—

(१) अत्र मुक्तस्य देहेन्द्रियाणि सन्ति, न सन्तीति विचारे- **"अभावं बादरिराह ह्येवम्"**। शरीरेन्द्रियाणामभावं **बादरि**राचार्यो मन्यते। 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इत्येवं श्रुतिराहेत्यर्थः। **"भावं जैमिनिर्विकल्पामननात्"**। मुक्तस्य देहेन्द्रियादिसद्भावं **जैमिनि**राचार्यो मन्यते। कुतः? **विकल्पामननात्**। विविधः कल्पो **विकल्पः,** वैविध्यमित्यर्थः। 'स एकधा भवति, त्रिधा भवति पञ्चधा।

---

पारं दर्शयतीति दर्शकत्वेनोच्यते। उपदेशरूपश्रुतेश्च दर्शनपदेन प्रत्यक्षपदेन च सूत्रे व्यवहारो बहुत्र। अत्र उपदेशतः, 'चिरनिर्वृत्तमप्येतत् प्रत्यक्षमिव दर्शितम्' इति रीत्या शास्त्रचक्षुषा पश्यन्, अथ मन्वानः, अथ विजानन् इत्यर्थोऽपि नायुक्तः इति। अत एव श्रीभाष्ये, 'प्रस्तुतं श्रवणं क्रमवक्तव्यं कथं नोक्तम्' इति विमृश्य, 'श्रवणमर्थसिद्धं मत्वा' इत्युक्तमित्यपि स्यादिति।

## अथ अष्टमोऽध्यायः ॥ प्रथमः खण्डः ।

**अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म**

---

संप्रसादो जीवः । 'एष तु वा अतिवदति, यः सत्येनातिवदति' इति सत्या[निमित्तक]तिवादिनः **प्राण**शब्दनिर्दिष्टजीवातिवाद्यपेक्षया तुशब्देन अधिकत्वेनोपदिश्यमानतया अतिवदननिमित्तस्य **सत्य**शब्दनिर्दिष्टस्य **प्राण**शब्दितात् जीवादधिकत्वप्रतीतेः न **प्राण**शब्दनिर्दिष्टो जीवो भूमा ।

"**धर्मोपपत्तेश्च**" । 'स्वे महिम्नि प्रतिष्ठितः', '**स** एवेदं सर्वम्' इत्यादिभिः प्रतिपादितस्वमहिमप्रतिष्ठत्वसर्वात्मकत्वादिधर्माणाम्, आत्मतः प्राणः आत्मत आशा' इत्यादिवाक्यसंदर्भप्रतिपादित-**प्राण**शब्दितजीव-प्रभृतिसकलप्रपञ्चोपादानत्वस्य **प्राण**शब्दिते जीवेऽसंभवाच्च भूमा परमात्मेति स्थितम् ॥ ७—२६

**इति छान्दोग्योपनिषत्प्रकाशिकायां सप्तमोऽध्यायः ॥**

दहरविद्या प्रस्तूयते—**अथ...वेश्म** । विद्यान्तरारम्भप्रदर्श-

---

**अणिमोपासनरूपायां सद्विद्यायां विभुत्वाविरोधि किञ्चिद्रूपं स्वरूपगतमणुत्वमुक्तम् । अथ भूमविद्यायां वैपुल्यमुपपादितम् । अथ दहरविद्यायां तस्य दहरहृदयपरिच्छिन्नत्वप्रयुक्तं दहरत्वमुपवर्ण्यते । एवमुक्तोपासनद्वयमिव इदमपि सत्यविषयकम् । स्वरूपसत्यत्वमात्रं प्रागुक्तम् । इह तद्गुणानां सत्यत्वमप्युच्यते, 'एतांश्च सत्यान् कामान्' इति । सद्विद्योक्ता मोक्षसंपत्तिः भूमविद्यायां मनआद्युपास्त्यर्थकृतलोककामचारप्रस्तावानुरोधेन सर्वलोककामचारादिरूपेण किञ्चिद् विवृता, इहैव लोकविशेष-विहारविशेषादिवर्णनेन सम्यग् विशदीक्रियते सत्यकामत्वविवरणाभिप्रायेण । पूर्वाध्यायेषु गुरूप-**

**दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ।**

---

नार्थोऽयमथशब्दः । उपास्यतया संनिहितस्य परब्रह्मणः स्थानतया नवद्वारादिमत्त्वादिना च **पुर**शब्दिते अस्मिन् शरीरे पुण्डरीकाकारमल्पं हृदयाख्यं परस्य ब्रह्मणो वेश्मेत्यर्थः। **दहरो...विजिज्ञासितव्यमिति । अस्मिन्** वेश्मन्यन्तः **दहरः** सूक्ष्मः आकाशः । अत्र य इति पुंलिंगयच्छब्दोऽध्याहर्तव्यः । अस्मिन् यो दहर आकाश इत्यर्थः । **तस्मिन् यदन्त**रित्यत्रान्तरशब्दोऽन्तर्वर्तिपरः । चशब्दश्चाध्याहर्तव्यः । ततश्चायमर्थः—**अस्मिन्** दहरपुण्डरीके यो दहर आकाशः तदन्तर्वर्ति च यत्, तदुभयं श्रवणमननाभ्यामवगन्तव्यं ध्यातव्यञ्चेति । **तदन्वेष्टव्यमित्यत्र**

---

देशानुवादरूपेण श्रुतिः प्रवृत्ता। इह, 'तञ्चेद् ब्रूयुः', 'स ब्रुयात्' इति भङ्ग्या गुरुं प्रति उपदेशक्रमशिक्षणमुखेन प्रवृत्तेति वैलक्षण्यम्।

परब्रह्मणः स्थानतयेति। लोके सार्वभौमस्य स्थानं पुरं भवति। उभयविभूतीश्वरात् ब्रह्मणः कोऽन्यः सार्वभौमो नाम। सर्वासु भूमिषु गुणत इव स्वरूपतोऽपि सर्वात्मना संबन्धी अयमेव सार्वभौमः। उक्तञ्च तात्पर्यचन्द्रिकायाम्, 'शरीरं पुरम्, इन्द्रियाणि पौरान्, ब्रह्म सार्वभौमम्, आत्मानञ्च भृत्यं भावयेत्' इति। नवद्वारेति । चक्षुश्श्रोत्रघ्राणमुखद्वाराणि सप्त ; गुदोपस्थाभ्यां द्वारनवकम्। 'सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी। नवद्वारे पुरे देही नैव कुर्वन् न कारयन्' इति हि गीतम्। आदिना, 'पुरमेकादशद्वारम्' इति कठोक्तं नाभिब्रह्मरन्ध्रमेलनेन एकादशकं ग्राह्यम्।

दहरोऽस्मिन्नन्तर आकाश इति। यः आ समन्तात् काशत इति आकाशः, स एवास्मिन् अन्तर्वर्तमानत्वात् दहर इत्युच्यत इति ज्ञापनाय आकाशपदप्रयोगः। अत्र य इति यच्छब्दाध्याहारः,

**तदि**ति नपुंसकलिङ्ग(ङ्गैकवचन)निर्देशो लिङ्गसामान्यविवक्षया द्रष्टव्यः । यद्वा दहरोऽस्मिन्नन्तराकाश इति न पुंलिंगयच्छब्दोऽध्याहर्तव्यः। अस्मिन् दहराकाशस्तदन्तर्वर्ति च यदिति यच्छब्देनैव, 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति कृतनपुंसकैकशेषैकवद्भावेनैकेनैव नपुंसकलिङ्ग(ङ्गेन) यच्छब्देन द्वयोरपि परामर्शसम्भवात् । तदन्वेष्टव्यमिति वाक्ये तच्छब्देऽपि नपुंसकैकशेषसंभवादेकेनैव तच्छब्देन द्वयोरपि परामर्शः। ततश्चानेन वाक्येन दहराकाशस्तदन्तर्वर्ति चान्वेष्टव्यमित्युक्तं भवति । उक्तं च भगवता **भाष्यकृता**—'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म इत्यनूद्य तस्मिन् दहरपुण्डरीकवेश्मनि यो दहर आकाशः, यच्च तदन्तर्वर्ति, तदुभयमन्वेष्टव्यमिति विधीयत' इति । अत्र आकाशशब्द आ

---

तदन्वेष्टव्यमित्यत्र तच्छब्देन गुणवत् अस्यापि ग्रहणाय । अध्याहारं विनाऽपि निर्वहति यद्वेति। अनध्याहारपक्षोऽपि द्विप्रकारः, तत् इति तच्छब्दमात्रेण आकाशश्च तच्च तत् इति, 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषेण आकाशतदन्तर्वर्त्युभयग्रहणमित्येकः ; यदिति यच्छब्देनापि यच्च यश्च यदिति उभयग्रहणमित्यन्यः । अयं पक्ष उच्यते अस्मिन्—दहराकाशः तदन्तर्वर्ति च यदिति । दहरहृदयनिष्ठदहराकाशतदन्तवर्त्युभयरूपं यदित्यर्थः । अस्मिन् पक्षे मौलं तस्मिन् इति पदमपि एकशेषैकवद्भावेन वेश्मदहराकाशोभयपरं ग्राह्यम् । ननु उपरि, 'किं तदत्र विद्यते यदन्वेष्टव्यम्' इति प्रश्नवाक्ये यत्तत्पदाभ्यामाकाशान्तर्वर्तिन एव परामृष्टव्यतया अत्रापि तदैकरूप्यमेव युक्तमिति चेन्न—अत्र एवमर्थविवक्षणौचित्यस्य भाष्य इह विशदमेवोपपादितत्वात् । अत्र द्वयोर्ग्रहणेऽपि तत्र आकाशान्तर्वर्तिमात्रेऽसंभावितत्वशङ्कया तथा प्रश्नोपपत्तेः ।

**तञ्चेत् ब्रूयुः—यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः, किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजि-**

---

समन्तात् काशते प्रकाशत इति व्युत्पत्त्या परमात्मपरः । तत्र च हेतुरुत्तरत्र वक्ष्यते । न च तदन्तर्वर्तिन एवान्वेष्टव्यत्वे प्रतीयमाने दहराकशशब्दितस्याप्यन्वेष्टव्यतासिद्धयर्थमेतावान् क्लेशः किमर्थमाश्रीयते । किञ्च, "विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति" इत्यत्र पृष्ठगतसर्वताविध्याक्षिप्तपृष्ठविधिवत् दहराकाशान्तर्वर्तित्वेन गुणजातोपासनस्य दहराकाशोपासनमन्तरेणासम्भवेनाक्षेपादेव दहराकाशोपासनस्यापि सिद्धतया **यत्त**च्छब्दयोर्नपुंसकैकशेषैकवद्भाव-चशब्दाध्याहारक्लेशानुभवो व्यर्थ इति वाच्यम् ; 'अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येताँश्च सत्यान् कामान्' इत्यौपसंहारिकोभयोपासनवचनानुसारेणास्य क्लेशस्यानुभोक्तव्यत्वात् । न च तदेव वाक्यं दहाराकाशतदन्तर्वर्तिलक्षणोभयोपासनविधिपरमस्त्विति वाच्यम् ; प्रक्रमस्थं विस्पष्टतव्यप्रत्यययुक्तं वाक्यं विहायौपसंहारिकस्य विस्पष्टविधिप्रत्ययशून्यस्य यच्छब्दयुक्तस्य विधित्वकल्पनानौचित्यात् । तस्य विधित्वकल्पनायामप्यनुवादरूपस्याप्यस्य वाक्यस्य तदनुसारेणार्थद्वयोपासनपरत्वस्याश्रयणीयतया नपुंसकैकशेषादिक्लेशस्याश्रयणीयत्वादिति । **इति**शब्दो वाक्यसमाप्तौ । अथवा इतीत्यस्यानन्तरमाचार्यो ब्रूयादित्यध्याहारः ।

**तञ्चेत्....विजिज्ञासितव्यमिति ।** एवमुक्तवन्तमाचार्यम्, स्वल्पहृदयमध्यवर्तितयाऽतिस्वल्पे आकाशे किं वा वर्तितुमर्हति, यदन्वेष्टव्यं स्यादिति दहराकाशशब्दितस्य ब्रह्मत्वं तदन्तर्वर्तितया निर्दिष्टस्य

तद्गुणजातत्वञ्चाजानाना अन्तेवासिनो यदि ब्रूयुरित्यर्थः । 'किं तदत्र विद्यत' इति वाक्यं सर्वान्तरस्य परमात्मनः अन्तर्वर्त्यन्तरासम्भव-लक्षणानुपपत्तिगर्भान्तर्वर्तिविशेषप्रश्नपरमिति **व्यासार्याणा**मभिप्राय इति यद्यपि प्रतीयते—तथाऽपि, 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इत्येतावन्मात्रं श्रुतवतां शिष्याणां परमात्मत्वविरोधिन्याकाशशब्दे जागरूके, दहरत्वान्वेष्टव्यान्तराधार-त्वादिविरोधिलिङ्गे च जाग्रति, ब्रह्मलिङ्गेषु चानुपन्यस्तेषु, परमात्मत्व-निश्चयस्य वा तदुपजीव्याक्षेपप्रवृत्तेर्वा असम्भवात्, सर्वान्तरस्य परमात्म-नोऽन्तर्वर्त्य[न्तरा]सम्भवलक्षणानुपपत्तेरेव शिष्याणां हृदि विपरिवर्त-मानत्वे-प्रश्नवाक्ये, 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इति दहरपुण्डरीकान्तर्वर्तित्वेनाकाशस्य दहरत्वोपन्यासस्य वा, प्रति-वचने, 'यावान् वा अयमाकाशः' इति वैपुल्योपन्यासस्य वा असङ्गत-त्वापातात् **व्यासार्याणा**मप्युक्त एवार्थोऽभिप्रेतः ।

केचित्तु—शरीरस्य ब्रह्मपुरत्वेनोपक्रमादेव तदन्तर्वर्त्याकाशशब्द-निर्दिष्टं ब्रह्मेत्यवगत्यैव तदन्तर्वर्तिवस्त्वन्तरासम्भवलक्षणानुपपत्तिमभि-प्रयन्त एवान्तर्वर्तिविशेषं पप्रच्छुरित्यपि, सम्भवान्नानुपपत्तिः-इति वदन्ति।

---

इति वदन्तीति । अत्रायं भाष्यकाराशयः—यदि ब्रह्मान्तर्वस्त्व-न्तरासंभवं मन्यन्ते, तर्हि 'तस्यान्ते सुषिरं सूक्ष्मम्' इति तैत्तिरीये सुषिरपदेनेव आकाशपदेन हृदयाकाशं गृहीत्वा तदन्तरन्वेष्टव्यमेव ब्रह्मेति ब्रह्मपुरपदबलान्निर्धारयितुमर्हन्तीति प्रश्नायोगस्तदवस्थ एव । अतः तद्वदत्रार्थो न ग्राह्य इति ज्ञापनायैव प्रश्नप्रतिवचनभङ्ग्या आकाशान्तर्वर्तिपदार्थजातप्रदर्शनमुखेन आकाशं ब्रह्मेति दर्शयतीति

ज्ञासितव्यमिति, स ब्रूयात्-यावान् वा अयमाकाशस्तावानेषोऽन्त-र्हृदय आकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभाव-ग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि। यच्चास्येहास्ति यच्च नास्ति, सर्वं तदस्मिन् समाहितमिति।

---

**स ब्रूयात्**—एवमुक्तः स आचार्यः प्रतिब्रूयात्। किमिति? **यावान्....नक्षत्राणि** हृदयपुण्डरीकमध्यवर्ती आकाशशब्दनिर्दिष्टः भूताकाशवद्विपुलः। द्यावापृथिव्यादिशब्दलक्षितं भोग्यभोगस्थानभोगोप-करणं अग्निसूर्यादिशब्दलक्षितो भोक्तृवर्गश्च तदाश्रित इत्यर्थः। **यच्च.... मिति।** अस्य उपासकस्येह लोके यत् भोग्यजातमस्ति, यच्च मनोरथ-मात्रगोचरमिह नास्ति, सर्वं तत् भोग्यजातमस्मिन् दहराकाशे समाहित-मित्यर्थः। दहराकाशो निरतिशयभोग्य इति यावत्।

---

वक्तव्यम्। तत्र दहरत्वात् किञ्चिदनाधारत्वशङ्कायामेव उपरि, हृदय-परिच्छिन्नत्वेऽपि अच्छिन्नत्वात् अच्छेद्येऽनवयवे तस्मिन् वैपुल्यस्या-भङ्गात् सर्वाधारत्वमित्युपपादनं संगच्छते। व्यासार्यसूक्तिस्तु परोक्तार्थपरिष्कारपरा नेह वास्तवार्थकथनप्रवृत्तेति।

इह लोक इति। बाह्याकाशसाम्यं ब्रह्मण्याकाशे उक्त्वा, अत एव बाह्याकाशवत् द्यावापृथिव्यादिसर्वाधारत्वं दर्शयितुम् उभे अस्मिन् इत्यादि। नायं बाह्याकाशवत् तावन्मात्राधारः, किंतु सर्वा-धार इत्यतिशयकथनाय यच्चास्येहेति। एवञ्च इहेति पदं बाह्याका-शार्थकमपि भवितुमर्हति—अथापि अस्येति पदावैयर्थ्याय सर्वे च कामा इति वक्ष्यमाणानुसारेण उपासकभोग्यमित्यर्थस्य ग्रहणे इहे-त्यस्य इहलोके इत्यर्थ एव स्वरसः। तथाच इहेत्यस्य प्राकृतलोके इत्यर्थः। तथासत्येव विवक्षितस्य बाह्याकाशात् वैषम्यस्यात्यन्तं सिद्धिरिति भावः।

उक्तश्च भगवता भाष्यकृता—"यावान् वा अयमाकाशस्ता-
वानेषोऽन्तर्हृदय आकाश इति दहराकाशस्याति(तीव)महत्तामभिधाय,
'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्या-
चन्द्रमसावुभौ विद्युन्नक्षत्राणि' इति प्रकृतमेव दहराकाशमसम्भिनिति

---

नन्वत्र द्यावापृथिव्यादीनां तदन्तर्वर्तित्वेन कथनात्, 'तद्वाव विजिज्ञासितव्यम्' इति तेषामुपास्यत्वमिति चेन्न—पदार्थविशेषाधारत्वमुक्त्वा यच्चास्येति उपासकभोग्यत्वेन रूपेण सर्वक्रोडीकारात् तेन रूपेण द्यावापृथिव्योरपि क्रोडीकृततया भोग्यत्वेन रूपेणसर्वस्यैवोपास्यताया इष्टत्वात्। पदार्थविशेषाधारत्वनिर्देशश्च बाह्याकाशसाम्यस्य विशदमुपपादनाय। एवमुक्तानुक्तसर्वग्रहणप्रकारप्रदर्शनायैव, 'सर्वे च कामा' इत्युक्तम्; 'अस्मिन् कामाः समाहिताः' इति च। नन्वेवं भाष्यविरोधः; कामा इति अपहतपाप्मत्वादिगुणाष्टकस्यैव तत्रोक्तेरिति चेत्—उच्यते। सत्यकामः सत्यसंकल्प इत्यत्र सत्यकामपदम्, नित्यं यद् भोग्यभोगोपकरणभोगस्थानरूपम् तत्परम्। अनित्यं तादृशं सर्वं तु सत्यसंकल्पपदत एव गृहीतम्। सत्यसंकल्पत्वं हि स्वसंकल्पमात्राधीनस्वाभिमतसिद्धिकत्वम्। नित्यानामेतदधीनस्थितिप्रवृत्तिकत्वमपि सत्यसंकल्पपदसंगृहीतम्। व्यक्तमिदं वेदार्थसंग्रहान्ते। अतः, 'स यदि पितृलोककामः' इत्यादिना वक्ष्यमाणानामन्येषाञ्च कामानामुत्पाद्यानाम् आप्यानाञ्च सत्यसंकल्पत्वगुणान्तर्गतत्वमस्त्येवेति। एवञ्च कामपदेन काम्यमानत्वाविशेषात् अपहतपाप्मत्वादिकमपि संगृहीतं भवति; तद्विषयकपदान्तराभावाच्चैवमिति गुणाष्टकपरं भाष्ये दर्शितम्। एतेन—स यदि पितृलोककाम इति विशदवक्ष्यमाणकामविशेषाः सत्याः कामा इत्युच्यन्ताम्। तेषां सत्यत्वञ्च यथासंकल्पभावित्वमेव-इति निरस्तम्। सत्यकामपदोक्तनित्यकामोपेक्षणायोगात्। पितृलोकादिकामानाञ्चेहान्तर्भावस्य ज्ञापयितव्यतया उपरि तद्वर्णनस्यासंगतत्वाभावात्।

निर्दिश्य तस्य [सर्व]जगदाधारत्वमभिधाय, 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इति पुनरप्यस्मिन्निति तमेव दहराकाशं परामृश्य, तस्मिन् अस्य उपासकस्येह लोके यत् भोग्यजातमस्ति यच्च मनोरथमात्रगोचरमिह नास्ति, सर्वं तत् भोग्यजातमस्मिन् दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय" इति ।

न च, 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इत्यनेन उपासकभोग्यवस्त्वाधारत्वमात्रमुपास्यस्य प्रतीयते; न तु दहराकाशस्य निरतिशयभोग्यत्वम् । ततश्च, "यच्चास्येहास्तीति वाक्येन दहराकाशस्य निरतिशयभोग्यत्वमभिधाय" इति भाष्यं कथमुपपद्यता-मिति वाच्यम्—उपासकस्य ब्रह्मप्राप्त्येकफलकस्य स्वर्गपश्वादीनां भोग्यत्वाभावात्, 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इत्यनेन दहराकाशस्य निरतिशयभोग्यत्वमेव प्रतिपादितमिति भाष्याभि-प्राय इति व्यासार्यैरुक्तत्वान्नास्याः शङ्काया अवकाश इति द्रष्टव्यम् ।

केचित्तु 'स यदि पितृलोककामो भवति' इत्यादिना प्राचीना-नेकजन्मसम्बन्धिपित्रादिवर्गदिदृक्षायाः, सङ्कल्पमात्रेण तत्स्रष्टृत्वस्य च प्रतिपादयिष्यमाणत्वात्, सूत्रकृताऽपि "सङ्कल्पादेव तच्छ्रुतेः" इति सूत्रेण तद्वाक्यस्य विवक्षितार्थत्वाविष्करणात्, 'यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभतेऽथ ये चास्येह जीवाः ये च प्रेताः यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते' इति नष्टानां पित्रादीनां मुक्तकामना-विषयत्वप्रतिपादनात्, "प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डल स्थोक्तेः" इति सूत्रोक्तन्यायेन ब्रह्मविभूतितया नष्टपित्राद्यनुभवस्य

तश्चेत् ब्रूयुः—अस्मिँश्चेदिदं ब्रह्मपुरे सर्वं समाहितँ सर्वाणि च

कामनाविषयत्वसम्भवाच्च,—अन्यथा, 'अस्मिन् कामाः समाहिताः', 'एतांश्च सत्यान् कामान्' इत्यादावपि **काम**शब्दस्य निरतिशय भोग्यार्थकत्वं को वारयेत् । ततश्च 'जक्षत्क्रीडन्' इत्यत्रापि भोग्यत्वार्थ कत्वं स्यादिति परो विजयेत । अतः-अस्य वाक्यस्य यथाश्रुतार्थत्वेऽपि न दोषः । भाष्यमपि भोग्याधारत्वफलितभोग्यत्वपरमेवास्त्विति वदन्ति ।

अत्र भूताकाशसदृशवैपुल्यप्रतिपादनेन द्यावापृथिव्यादिजगदाश्रयत्वप्रतिपादनेन उपासकं प्रति निरतिशयभोग्यत्वप्रतिपादनेन च दहराकाशस्य प्रसिद्धाकाशवैलक्षण्यप्रतिपादनात्, 'स्वल्पे दहराकाशे किमपि मातुं न शक्नोति' इत्याक्षेपबीजं परिहृतं भवति ।

**तश्चेत्...अतिशिष्यत इति ।** अल्पत्वरूपमाक्षेपबीजं परि-

---

वदन्तीति। समुद्रे गोष्पदमस्तीति न्यायेन परमात्मस्वरूपानुभवैकदेशतुल्यत्वात् सर्वानुभवानां परमात्मानुभवमात्रस्यापि सर्वानुभवरूपत्वमिति वस्तुस्थितावपि वस्त्वन्तरानुभवापलापो न कार्य इति केषाञ्चिदाशयोऽयं स्थाने। परंतु नष्टपित्रादीनां कामनाविषयत्वं नाम किं दर्शनमात्रे उत संश्लेषादिकेऽपि । नाद्यः, तदा सार्वज्ञ्याविर्भावात् कामनां विनाऽप्यनायासेन सर्वदर्शनस्थितेः । नान्त्यः; नष्टैः संश्लेषादेर्दुष्करत्वात्॥ सजातीयोत्पादनमिष्टमिति चेत्—तावता सर्वज्ञो नष्टविषयकानुभवत्वेन कथं गृह्णीयात् । न च ते जातिस्मराः। न ह्ययं स्वप्नद्रष्टृपुरुषवत् तिरोहितस्वरूपः । पितृलोककामो भवतीत्यादिवाक्यं तु मुक्तस्याप्यवतारमेवान्ततो दर्शयतीति न तस्य नष्टविषयकत्वम्। 'न तमिह दर्शनाय लभते' इति वाक्यं तु तदा नष्टानामपि दर्शनमेव ब्रवीति, न संकल्पाधीनसृष्टिमिति चिन्त्यम्। उपर्यपि भाष्ये एतदर्थः प्रस्तूयते ।

भूतानि सर्वे च कामाः, यदैन(त)ज्जरामा(वा)प्नोति प्रध्वँसते वा किं

हृत्य, 'किं तदत्र विद्यत' इति प्रश्नं प्रतिविवक्षत्येवाचार्ये, उक्तेऽर्थेऽनुपपत्तिं पश्यन्तः शिष्याः यद्याचार्यं ब्रूयुः,—किमिति ? ब्रह्मपुरशब्दितं शरीरं द्यावापृथिव्यादिशब्दनिर्दिष्टभोग्यभोगोपकरणभोगस्थानानि अग्निवाय्वादिशब्दनिर्दिष्टो भोक्तृवर्गश्च यद्याश्रयेयुः, तदा शरीरस्य, जरानाशादौ सति द्यावापृथिव्यादिकं किमपि नावशिष्येत । तदपि नश्येदि(दिति—इ ?)त्यर्थः । [सर्वे िच कामा इत्यस्य, 'यच्चास्येहास्ति' इति वाक्यनिर्दिष्टनिरतिशयभोग्यत्वानुवादित्वात्, 'सर्वे च कामाः' इत्यस्य निरतिशयभोग्यत्वमर्थ इति व्यासार्यैरुक्तम् ।]

ननु दहराकाशाश्रितं द्यावापृथिव्यादिकमिति वदन्तं प्रति अस्याः शङ्कायाः कथमुत्थानम् । दहराकाशाश्रितत्वस्यैवोक्तत्वात्(तया) ब्रह्मपुरशब्दितशरीराश्रितत्वस्येहानुक्ततया तज्जरानाशानुविधायिजरानाशत्वस्य दहराकाशाश्रिते द्यावापृथिव्यादौ कथं प्रसक्तिरिति चेत्—उच्यते । यथा घटाद्यन्तराकाशे निहितस्य दध्यादेर्वस्तुतो घटादिरेव धारकः, आकाशः परमवकाशात्मनोपकरोति, एवं देहान्तर्वर्तिनि दहराकाशे विद्यमानस्य द्यावापृथिव्यादेर्देह एव धारकः, दहराकाशस्तु केवलमवकाशात्मनोपकरोति । अस्तु वा दहराकाशस्य घटाद्याकाशवैलक्षण्येन स्वतो धारकत्वं, तथाऽपि तस्य देहजराप्रध्वंसानुपदभाविजराप्रध्वंसत्वात्, यावद्देहस्य भारधारणानुकूलं बलम् तावत्पर्यन्तमेव दहरा-

एतज्जरावाप्नोतीति पाठे एतदित्यस्य द्वितीयान्तत्वे ध्वंसत इत्यत्र कर्त्रध्याहारः इत्यस्ति क्लेशः ।

ततोऽतिशिष्यत इति (४) स ब्रूयात्—नास्य जरयैतज्जीर्यति, न वधेनास्य हन्यते ; एतत् सत्यं ब्रह्मपुरम् ।

---

काशस्य तद्धारकत्वमिति फलतो देह एव तस्य सर्वस्य धारकः पर्यवस्यतीति आक्षिपतां शिष्याणामभिप्रायः ।

**स ब्रूयात्**, आचार्यस्तत् प्रतिवक्ति—, **नास्य....पुरम्** । भोग्यभोगस्थानभोगोपकरणभोक्तृवर्गादिशालितया पुरमिव वर्तमान**मेतत्** दहराकाशाख्यं ब्रह्म ; न तु घटादिवत् केवलमवकाशात्मनोपकारकम् । यथा पुरं भोग्यभोगोपकरणभोगस्थानादीनां स्वत एवाधारभूतम् ; न तु दध्यादीनां घटाकाशादिवदाकाशात्मनोपकारकम्—तथेत्यर्थः । ननु स्वतो धारकत्वेऽपि तद्देहान्तर्वर्तितया तदन्तर्गतहृदयवत् तज्जरानाशानुविधायिजरानाशत्वं स्यादिति शङ्काबीजं परिहरति—**एतत्सत्य**मिति । **सत्यं** निर्विकारमित्यर्थः । अत एव न देहजरामरणानुविधायिजरामरणकमित्यर्थः। यद्वा, 'अथ यत्सत् तदमृतम्' इति अस्मिन् प्रकरणे वक्ष्यमाण**सत्य**शब्दनिर्वचनरीत्या चेतनाचेतननियामकत्वं वा सत्यत्वम् । यथा कथञ्चित् घटाकाशादिविलक्षणाधार इत्यर्थः ।

[केचित्तु, 'अस्मिश्चेदिदं ब्रह्मपुरे' इति प्रश्नवाक्ये **ब्रह्मपुर**शब्देन ब्रह्मरूपपुरत्वात् दहराकाश एवोच्यते । '**यदैतज्जरावाप्नोती**त्येव पाठः । तत्र च पाठे—**एतस्य** शरीरस्य जरा **एतज्जरा** यदा दहराकाशं प्राप्नोति, तद्ध्वंसेन ध्वंसते वा, तदा द्यावापृथिव्यादिकं नावशिष्येतेत्येवार्थः । न तु **ब्रह्मपुर**शब्देन शरीरपरामर्शमभ्युपेत्य तदनु-

---

ब्रह्म पुरमिवेत्युपमितसमास इति ज्ञापयति पुरमिवेति ।

अस्मिन् कामाः समाहिताः । एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः ।

---

गुणैतादृशाभिप्रायकल्पनपरिक्लेशोऽनुसर्तव्य इति वदन्ति ।]

एवं मध्ये प्रसक्तमाक्षेपं परिहृत्य, 'किं तदत्र विद्यत' इति अन्तर्वर्तिविशेषजिज्ञासां शमयति--**अस्मिन् कामाः समाहिताः**। काम्यन्त इति **कामाः** कल्याणगुणाः । को दहराकाशः ? स च कैः कामैर्विशिष्ट इत्याकाङ्क्षायामाह--**एष आत्मा....सङ्कल्पः**। उक्तञ्च **भगवता भाष्यकृता,** 'दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्यात्मत्वञ्च 'एष आत्माऽपहतपाप्मा' इत्यादिना सत्यसङ्कल्प इत्यन्तेन स्फुटीकृत्य" इति । सत्यपापजरामरणशोकबुभुक्षापिपासावर्जितः सत्यकामः सङ्कल्पश्चेत्यर्थः ।

परमात्मप्रकरणेषु **पाप**शब्दः सुकृत [दुष्कृतोभय] साधारणः। 'न

---

'जरामाप्नोति प्रध्वंसते वा' इति कृतशङ्कापरिहाराय विजरो विमृत्युरित्युक्तम् । नन्वेवं प्राप्तं नित्यत्वं प्रतिकूलमेव, 'वियोगो बान्धवैरायुः' इति रीत्या शोकाद्यावहत्वात् ; तत्राह विशोक इत्यादि। अत्र सर्वत्रापहतपाप्मत्वं प्रयोजकम् । एवं शरीरान्तःस्थस्यैव, 'अनश्नन्नन्योऽभिचाकशीति' इत्युक्तमनश्नत्त्वमुपपादितम् । अथाभिचाकशीतीत्युक्तार्थविवरणमिह सत्यकामः सत्यसंकल्प इति । एवमस्मिन् संदर्भे सशरीरत्वावस्थायामेवापहतपाप्मत्वाद्युपपादनात् जीवे तेषामाविर्भूतस्वरूपत्वदशानन्तरभावितया प्रकृतशरीरान्तर्वर्तित्वदशायामेव वर्णनायोगात् परमात्मैवेहोक्तः न जीव इति स्थितं दहराधिकरणे । अतः शरीरस्थितस्यैवेदृशाकारकथनात् न जीव इह विवक्षितुमर्हः । प्रजापतिविद्यायां तु जीवस्वरूपं तात्त्विकमीदृशम् ; परंज्योतिरुपसंपद्याऽऽविर्भवतीत्युक्तम् । तेन अपहतपाप्मत्वादिविपरीतेन

सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति सुकृतेऽपि **पाप**शब्द-प्रयोगात्, 'एते वै निरयास्तात स्थानस्य परमात्मनः' इति स्वर्गादीनामपि मुमुक्ष्वनिष्टत्वेन स्वर्गादिसाधनकर्मणः मुमुक्षून् प्रति अनिष्टसाधनत्वेन अलौकिकत्वे सत्यनिष्टसाधनत्वलक्षण**पाप**शब्दप्रवृत्तिनिमित्तकोडीकृतत्वेन **पाप**शब्दवाच्यत्वावश्यम्भावात्। अपहतपाप्मत्वञ्च न ध्वस्तपाप्मत्वम्। 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्' इति सुकृतदुष्कृतप्राप्त्यभावश्रवणात्। तरतेः प्राप्तिवचनत्वात्। तस्मा**दपहतपाप्म**त्वं अश्लिष्टपाप्मत्वमित्यर्थः। अकृतकर्माश्लेषस्य सर्वसाधारणत्वात् कृतेऽपि कर्मणि तत्फलाश्लेष उच्यते। अत ईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानीत्यर्थः। कृतेऽपि पापे तत्फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदीश्वरस्य स्वभावविशेषः अपहतपाप्मत्वम्। परिशुद्धात्मविषयस्यापहतपाप्मत्वस्याप्ययमेवार्थः। स तु तस्य तिरोधानार्हः प्रतिबन्धनिवृत्तावाविर्भवति, ईश्वरस्य तु तिरोधानानर्हो नित्याविर्भूत इति **विशेष इति व्यासार्यैः**, "अन्तस्तद्धर्मोपदेशात्" इत्यत्र वर्णितः(म् ?)।

अत्र **सत्यकाम**शब्दो न कामनायाः सत्यत्वपरः; अमोघाशत्वस्य सत्यसङ्कल्पशब्देनैव सिद्धत्वात्। नापि काम्यत इति व्युत्पत्त्या गुणमात्रपरः; कतिपयगुणान्तराणां पृथगुक्तेः। अतो भोग्यभोगोपकरणभोग्यस्थान-

---

**पाप्मापहतत्वादिना आकारेणेह युक्तोऽयं मुक्तश्चेत्—तदाऽस्य, तस्य परस्यानुकृतेः कामरूपिणोऽनेकधाभावे इदमपहतपाप्मत्वादिकं सम्यक् कार्यकरं भविष्यतीति निरूपितं भवति।**

**यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति । ५ ॥**

---

रूपाः नित्याः कामा अस्य सन्तीत्युच्यते। 'तदक्षरे परमे व्योमन्' इत्युक्तनित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थ इति **व्यासार्यै**रुक्तम् । **वेदार्थ सङ्ग्रहे भाष्यकृता**ऽप्युक्तम् । **सत्यसङ्कल्पः** अप्रतिहतसङ्कल्प इति ।

**यथा...जीवन्ति । इह** अस्मिन् लोके प्रजाः यथानुशासनं राजशासनानुल्लङ्घनेन राजानम**न्वाविशन्ति** अनुसरन्तीत्यर्थः । अनुसृत्य किं कुर्वन्तीत्यत्राह **यं यमन्तमभिकामा भवन्ति....**। कर्मणः फलापवर्ग(र्गि)त्वात् फलमेव कर्मणोऽन्तः । **यं यमन्तं** यद्यत् फल**मभिकामा** अभ्यर्थिनो भवन्ति, जनपदक्षेत्रादिकं वा कामयन्ते तत्तत् फलं यथाशासनमेवोपजीवन्ति । राजशासनानुरोधेनैवेह लोके यथोपजीवन्ति, तथा परलोकेऽपि परतन्त्रा एव भवन्तीति भावः । यद्वा यं यमन्तमभिकामा भवन्ति, तं तमिह लोके यथा प्रजा अन्वाविशन्ति=राजानमनुसृत्य लभन्ते, तथा परलोकेऽप्युपजीवन्तीत्यर्थः । अयमेवार्थो **व्यासार्यै**र्वर्णितः । एवं कर्मसाध्ये परलोके पारतन्त्र्यमुक्त्वा क्षयिष्णुत्वमप्याह

---

**कर्मणः फलापवर्गित्वादिति । नन्वस्मिन् व्यासार्याभिमतार्थे, 'यंयमन्तमभिकामो भवति', 'यं कामं कामयते' इति वक्ष्यमाणवाक्ये पौनरुक्त्यं स्यात् । अतः अन्तपदं देशपरमिति चेन्न—तदापि कामपदेनैव सर्वग्रहणसंभवात् पौनरुक्त्यानपायात् । यंयमिति वीप्सया अतिमहत् अल्पं वेति विवक्षितमिति ज्ञापनाय यं जनपदं यं क्षेत्रभागमिति तद्विवरणम् । अन्तशब्दप्रयोगः फलस्येदृशस्य अन्तवत्त्वमशाश्वतत्वं दर्शयितुम् । (मुक्तानुबुभूषितपितृलोकादेरप्यन्तवत्त्वात् ।) 'अन्तवत्फलावाप्तिम्' इति च श्रीभाष्यम् ।**

तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते। तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेष्वकामचारो भवति।

---

**तद्यथेह....क्षीयते।** राजसेवादिकर्मणा **चितः** अ(आ)र्जितो लोको यथा क्षीयते, एवमेव **अमुत्र** परलोकेऽपि **पुण्यचितः** पुण्यसम्पादितो लोकः क्षीयत इत्यर्थः। **तद्य इह....भवति।** यस्मात् सुकृतसाध्येषु परलोकेषु पारतन्त्र्यक्षयिष्णुत्वादिकम्, तस्मात् ये उक्तमात्मानमेतम्, अपहतपाप्मत्वादी**नेतांश्च सत्यान्**—नित्यान् काम्यमानान् कल्याणगुणांश्चानुपास्य परलोकं व्रजन्ति तेषां सर्वलोककामचाराभावः। पारतन्त्र्यमिति यावत्।

---

व्यासार्थैरिति। यंयमिति वाक्यस्य उपजीवन्तीति वाक्येनैकवाक्यता प्राक् स्वयमुक्ता; अन्वाविशन्तीत्यनेनैकवाक्यता व्यासार्थोक्तेत्येष एव विशेषः। तथा परलोकेऽप्युपजीवन्तीति स्वयमर्थसिद्धकथनम्। श्रुतौ तु, यथा प्रजाः अन्वाविशन्ति, तथा ताः राजदत्तं फलं लभन्ते इत्यर्थो व्यासार्थविवक्षितो भावप्रकाशिकोक्तः। एवमेव व्यासार्थैरित्यादेरयमान्तराशयः स्यात्—'मूले इह प्रजा अन्वाविशन्तीत्युक्तस्य श्रुत्यैव विवरणम् यथानुशासनमित्यादिना लभन्त इत्यन्तेन। अन्वाविशन्तीत्यत्र अनुशब्दार्थविवरणं यथानुशासनमिति पदेन। तेन वक्ष्यमाणासत्यसंकल्पत्वोपयोगि परसंकल्पाधीनत्वकथनम्। यथा ह्येवेह, तद्यथेह इति यथाशब्दद्वयप्रतिनिर्देशः एवमेवामुत्रेति। अमुत्रेत्येतदनन्तरम्, इह प्रजा अन्वाविशन्तीति वाक्यात् प्रजा अन्वाविशन्तीत्यस्यानुषङ्गोऽर्थसिद्धः। कर्मचित इत्यादेर्दार्ष्टान्तिकांशः पुण्यचित इत्यादिः' इति योजनाऽपि भवितुमर्हतीति।

अत्र, 'तंतंलोकं जयते तांश्च कामान्' इति रीत्या जिधातुप्रयोग एव बहुलं श्रुताविति 'कर्मजितः', 'पुण्यजितः' इति श्रुतिपाठं रोचयन्ते।

अथ य इहात्मानमनुविद्य व्रजन्त्येताँश्च सत्यान् कामान्, तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥

इति अष्टमाध्याये प्रथमः खण्डः ।

---

अथ.... भवति । ये तु आत्मानमपहतपाप्मत्वादींश्च काम्यमानान् कल्याणगुणान् उपास्य परलोकं व्रजन्ति, ते ब्रह्मविभूतिभूतान् विकारलोकान् अनुभूय यथाकामं तृप्ताः न पारतन्त्र्यमनुभवन्तीत्यर्थः ।

नन्वपहतपाप्मेत्यादिवाक्ये[षु] अपहतपाप्मत्वादिधर्माणां स्वातन्त्र्येणानुपस्थितानां कथम् **एता**नित्यनेन परामर्शः । न च गत्यभावात् तेषामेव परामर्श इति वाच्यम्—'यच्चास्येहास्ति' इति वाक्ये निर्दिष्टस्य, 'सर्वाणि च भूतानि सर्वे च कामाः' इति बहुवचनान्त**काम**शब्देनानूदितस्य निरतिशयभोग्यत्वस्यैव 'अस्मिन् कामाः समाहिताः'; 'एतांश्च सत्यान् कामान्' इत्यत्रापि निर्देशोऽस्त्विति[इति ?] चेन्न-तथासति 'अपहतपाप्मा विजरः' इत्याद्युपन्यासस्य वैयर्थ्यप्रसङ्गात् । कामानित्यस्य भोग्यत्वपरत्वे बहुवचनासङ्गतेश्च अपहतपाप्मत्वादय एव, 'एतांश्च सत्यान् कामान्' इति **काम**शब्देन निर्देश्याः। भोग्यत्वहेतुपितृलोकादिविषयपरत्वे 'सत्या' इति कामानां नित्यत्वकथना(नस्या)सम्भवादिति सिद्धम् ।

ततश्च 'दहरोस्मिन्नन्तराकाशः' इति आकाशशब्दनिर्दिष्टः

---

**आत्मानुवेदनं कामान्तररूपक्षुद्रफलकामचारकारणमपीति, एतांश्च सत्यान् कामान् इत्यधिकमुक्तम् । अकामचार इति असत्यसंकल्पत्वमुक्तं भवति । स्वसंकल्पाधीनस्वाभिमतसिद्धिमत्त्वरूपसत्यसंकल्पत्वं परमात्मनि कैमुत्येन ज्ञाप्यते मुक्तविषयेण, स यदि पितृलोककाम इत्यादिना ।**

परमात्मा ; न भूताकाशः; 'तस्मिन् यदन्तः' इति निर्दिष्टमपहतपाप्मत्वादि-गुणजातमितीयता सन्दर्भेणोपदिष्टं भवति ।

(१) एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते । अत्र दहराकाशो भूताकाशः । **आकाश**शब्दस्य तत्रैव प्रसिद्धेः । व्यापके परमात्मनि दहरत्वस्याभावाच्च, 'तस्मिन् यदन्तः' इत्यन्वेष्टव्यान्तराधार-तया(त्व ?) निर्देशाच्च । न हि परमात्मनः स्वयमेवान्वेष्टव्यान्तराधारत्वं सम्भवति । 'यावान्वा अयम्' इत्यादिना निर्दिश्यमानभूताकाशोपमेय-त्वस्य, 'गगनं गगनाकारम्' इत्यदिवत् अभेदेऽप्युपपत्तेः । निरतिशय विपुले परमात्मन्यपि परिच्छिन्नभूताकाशोपमेयत्वस्यास्वरसत्वाच्च भूता-काशो दहराकाश इति पूर्वपक्षे प्राप्ते—उच्यते—

**"दहर उत्तरेभ्यः"** । [उत्तरेभ्यो हेतुभ्यः] दहराकाशः परमात्मा, वाक्यशेषगतभूताकाशोपमेयत्व-सर्वाधारत्व-निरतिशयभोग्यत्व-निरुपाधि-कापहतपाप्मत्वादिगुणानां परमात्मव्यतिरिक्ते भूताकाशे असम्भवात्, परमात्मनोऽप्यपहतपाप्मत्वादिलक्षणान्वेष्टव्यान्तराधारत्वसम्भवाच्च। न च गगनं गगनाकारमितिवत् अभेदेऽप्युपमानोपमेयभावोऽस्त्विति वाच्यम्-गगनं गगनाकारमित्यादावभेदे सादृश्यं निबध्यमानमनन्वितत्वादनुपम कत्वफलकं सत् अनन्वयालङ्काररूपम्। न चेह तथा सम्भवति। 'यावान् वा अयमाकाशः' इति वाक्ये बाह्याकाशत्वहार्दाकाशतारूपोपमानोपमेयता-वाच्छेदकधर्मभेदसत्त्वेन अनन्वयस्यासंभवात्। उपमानोपमेयतावच्छेदक-धर्मैक्ये ह्यनन्वयालङ्कारः। यथा, गगनं गगनाकारमित्यादौ। यच्चोक्तम्-अतिविपुलस्य ब्रह्मणः परिच्छिन्नभूताकाशोपमेयत्वं न सम्भवतीति—

तन्न ; अधिकजवेऽपि सवितरि इषुवद्गच्छति सवितेति गतिमान्द्य निवृत्तिपरवचनवत् स्वल्पत्वनिवृत्त्यर्थतया भूताकाशसादृश्यकथनस्योपपत्तेः।

यदुक्तमाकाशशब्दस्य भूताकाशे प्रसिद्धत्वादिति, तत्राह— "**प्रसिद्धेश्च**"। 'यदेष आकाश आनन्दो न स्यात्' इत्यादौ परमात्मन्यप्याकाशशब्दस्य प्रसिद्धत्वात् ।

यदुक्तम्—परमात्मनोऽल्पपरिमाणत्वं नोपपद्यत इति, तत्राह, 'अल्पश्रुतेरिति चेत्—तदुक्तम्'। **शाण्डिल्यविद्यायाम्**, 'निचाय्यत्वादेवं व्योमवच्च' इति सूत्रखण्डेनोपासनार्थं विपुलस्याल्पत्वोपदेश उपपद्यत इति पूर्वमेवोक्तमित्यर्थः ।

(२) तथा, 'प्रदानवदेव तदुक्तम्' इत्यत्र, 'इहात्मानमनुविद्य व्रजन्ति' इति दहराकाशोपासनमुक्त्वा, एतांश्च सत्यान् कामानित्यपहतपाप्मत्वादिगुणानामुपासनस्य पृथगाम्नानात् अपहतपाप्मत्वादिगुणोपासनदशायां न धर्मिस्वरूपं चिन्तनीयम् । ततश्च प्रथमं दहराकाशाख्यं धर्मिस्वरूपमनुसन्धाय तस्यापहतपाप्मत्वविजरत्वविमृत्युत्वविशोकत्वविजिघत्सत्वापिपासत्वसत्यकामत्वसत्यसङ्कल्पत्वरूपाः कामा इत्येव चिन्तनीयम्। न तु, 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति गुणाश्रयस्य गुणिनोऽपि चिन्तनमिति पूर्वपक्षे प्राप्ते-उच्यते-'प्रदानवदेव तदुक्तम्'। यद्यपि दहराकाश एवापहतपाप्मत्वादिगुणानां गुणी । स च प्रथमं चिन्तितः, तथाऽपि स्वरूपमात्रात् गुणविशिष्टाकारस्य भिन्नत्वात्, प्रकृते च 'अस्मिन् कामाः समाहिताः' इति ब्रह्मणि कामसमाधानाधारत्वमुक्त्वा, के ते कामा

अष्टमाध्याये द्वितीयः खण्डः

**स यदि पितृलोककामो भवति, सङ्कल्पादेवास्य पितरः समु-**

---

इत्याकाङ्क्षायां निष्कृष्यापहतपाप्मत्वं विजरत्वमित्यनुक्त्वा अपहतपाप्मा विजरो विमृत्युरिति तद्विशिष्टविशेष्यपर्यन्ततया निर्देशात् अनेनैवाऽऽकारेणानुसन्धानं कर्तव्यमिति श्रुतेराशय उन्नीयते । अतो वैशिष्ट्यानुसन्धानार्थं विशेष्यचिन्तनमप्यावर्तनीयम् । प्रदानवत् । तदुक्तं **सङ्कर्षे**—"नाना वा देवतापृथक्त्वात्" इति । तत् नानाप्रदानाधिकरणमित्थम्—

अस्ति त्रैधातवीयेष्टिः, 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इति त्रिपुरोडाशा । तत्र तेषां पुरोडाशानां [पाकानन्तरं पात्रे निधानदशायां] उपर्युपर्यधिश्रयणं सर्वेषां युगपदवदानञ्च विहितम् । तेषां पूर्वार्धादवदानं प्रकृतिवत् कर्तुं शक्यम् । तथापि मध्यादवदानं कर्तुमशक्यम् । पुरोडाशानां मध्ये नलकप्रवेशाद्युपायेन मध्यादपि युगपदवदानं ग्राह्यम् । एवं स्थिते, 'प्रदानमपि युगपत् कर्तव्यम् क्रमेण वा' इति संशये, 'तेषामपृथक्त्वदानमवदानैकत्वात्'' इति सूत्रेण, 'अवदानवत् प्रदानमपि युगपदेव कर्तव्यम्' इति पूर्वपक्षः । तत्रेदं सिद्धान्तसूत्रम्, "नाना वा देवतापृथक्त्वात्" इति । त्रयाणां यागद्रव्याणां भेदात् विशिष्टरूपाणां देवतानाञ्च भेदात् त्रिभिर्द्रव्यदेवतासम्बन्धैः कल्प्यानाञ्च यागानां तत्तद्देवतोद्देशेन क्रमिकाणि प्रदानानि कर्तव्यानीति सूत्रार्थ इति स्थितम् । प्रकृतमनुसरामः । (८-१.)

**स यदि....महीयते ।** सः मुक्तस्सन् यदि प्रचीनानेकजन्म-

---

**सः मुक्त इति । ननु तेषामिति मुक्तानां बहुवचनेन निर्देशात्**

त्तिष्ठन्ति । तेन पितृलोकेन संपन्नो महीयते ॥ १ ॥

अथ यदि मातृलोककामो भवति, सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति । तेन मातृलोकेन संपन्नो महीयते ॥ २ ॥

अथ यदि भ्रातृलोककामो भवति, सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति । तेन भ्रातृलोकेन संपन्नो महीयते ॥ ३ ॥

अथ यदि स्वसृलोककामो भवति, सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति । तेन स्वसृलोकेन संपन्नो महीयते ॥ ४ ॥

अथ यदि सखिलोककामो भवति, सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति । तेन सखिलोकेन संपन्नो महीयते ॥ ५ ॥

अथ यदि गन्धमाल्यलोककामो भवति, सङ्कल्पादेवास्य गन्ध-

---

सम्बन्धिपितृवर्गं दिदृक्षेत, तदा पितृवर्गः एतस्य सङ्कल्पमात्रात् समुत्थितो भवति । तेन सहितः पूज्यते इत्यर्थः ।

**अथ... ... ... .... महीयते** । सर्वं पूर्ववत् ।

---

इह स इत्येकवचनायोगात् परमात्मैव गृह्यताम् । पितृलोककाम इत्यस्य च दशरथवसुदेवाद्यपूर्वपितृकाम इत्यर्थः ; न तु प्राचीनस्वपितृलोकेति रीत्यैव । तथाच परमात्मनिष्ठं सत्यसंकल्पत्वं प्रकृतमेवेह वर्ण्यतामिति चेन्न ; सर्वेषु लोकेषु कामचारो भवतीत्येतद्विवरणरूपत्वौचित्याय मुक्तपरत्वस्वीकारात् । बहुत्वेन प्रक्रमेऽपि पित्रादिरूपबन्धुवर्गस्य तत्तन्मुक्तं प्रति भिन्नतया तु प्रत्येकजिघृक्षया स इति निर्देशः । अतः, 'भावे जाग्रद्वत्' इति सूत्रोक्तरीत्या मुक्तविषयमेवेदमिति । दिदृक्षेतेति । नेयं प्राचीनपित्रादिदिदृक्षा भूतानां तेषां भूतत्वेन रूपेण । मुक्तस्याविर्भूतस्वरूपस्य स्वतः सर्वदर्शनसत्त्वेन दिदृक्षाया अयोगात् ; तस्य तदधीनत्वाभावाच्च । अतो दर्शनं वर्तमानार्थसाक्षात्काररूपं लोकप्रसिद्धमिति अतीतपित्रादीनां सृष्ट्या स्वपितृत्वादिरूपेण वर्तमानतया दर्शनेच्छारूपा दिदृक्षा विवक्षिता ।

माल्ये समुत्तिष्ठतः । तेन गन्धमाल्यलोकेन संपन्नो महीयते ॥ ६ ॥

अथ यद्यन्नपानलोककामो भवति, सङ्कल्पादेवास्य अन्नपाने समुत्तिष्ठतः । तेनान्नपानलोकेन संपन्नो महीयते ॥ ७ ॥

अथ यदि गीतवादित्रलोककामो भवति, सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतः । तेन गीतवादित्रलोकेन संपन्नो महीयते ॥ ८ ॥

अथ यदि स्त्रीलोककामो भवति, सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति । तेन स्त्रीलोकेन संपन्नो महीयते ॥ ९ ॥

यं यमन्तमभिकामो भवति, यं कामं कामयते, सोऽस्य सङ्कल्पादेव समुत्तिष्ठति । तेन संपन्नो महीयते ॥ १० ॥

इति अष्टमाध्याये द्वितीयः खण्डः ।

---

**यं यमन्तं...महीयते** । यं यमन्तं फलम् । यं यं **कामं**

---

तथाचाभिमतपित्रादिव्यक्तीनां सद्भावे, मुक्तः तत्पुत्रत्वादिरूपेण स्वसृष्टिं संकल्पयते । तासामतीतत्वे, तत्सृष्टिपूर्वकं तत्पुत्रादिरूपेण स्वस्य भवनं संकल्पयते इत्युक्तं भवति । अत्र पितृवर्गं दिदृक्षेतेत्येतावदनुक्त्वा प्राचीनानेकेत्यादिकथनम्, 'ये चास्येह जीवाः ये च प्रेताः' इति वक्ष्यमाणैकरूप्याय । प्राचीनानां नष्टानामुत्थानं नाम तेषां चेतनानां तज्जातीयशरीरपरिग्रहेण प्रादुर्भावः । शरीरनाशेऽपि चेतनेष्वभिमानेन हि श्राद्धादि क्रियते । लोकयत इति लोकः अनुभाव्यपदार्थः । एतद्धात्वर्थज्ञापनायैव दिदृक्षापदप्रयोगो भाष्ये ।

ननु स यदि पितृलोककाम इत्यादिकमैहिकफलं स्यात्; परमात्मानुवेदनस्य; 'अहरहर्वा एवंवित् स्वर्गमेति' इति कृत्स्नोपासनफलस्य पश्चाद् वक्ष्यमाणत्वादिति चेन्न–'आत्मानमनुविद्य व्रजन्ति' इति 'तदत्र गत्वा विन्दते' इति च गत्यनन्तरभावित्वोक्त्या तदयोगात् । अहरहरिति वाक्यं तु प्रकृतस्योपासनस्यैवाहरहरनुष्ठेयत्वविधायकम् ।

अष्टमे तृतीयः खण्डः

**त इमे सत्याः कामा अनृतापिधानाः। तेषाँ सत्यानाँ सतामनृतमपिधानम्। यो यो ह्यस्येतः प्रैति, न तमिह दर्शनाय लभते।**

---

इष्टं कामयते स सर्वोऽस्य सङ्कल्पादेव समुत्तिष्ठतीत्यादि पूर्ववत्।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते। अत्र सत्यसङ्कल्पत्वेन व्यवह्रियमाणानामपि राजादीनामभिलषितसृष्टेः प्रयत्नान्तरापेक्षत्वदर्शनात् मुक्तस्यापि सिसृक्षितपितृलोकादिसृष्टिः सङ्कल्पव्यतिरिक्तप्रयत्नान्तरसापेक्षैवेति प्राप्ते–उच्यते–**"सङ्कल्पादेव तच्छ्रुतेः"**। सङ्कल्पमात्रादेव सृष्टिः। न प्रयत्नान्तरसापेक्षा। कुतः? 'सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्येवकारश्रुतेः। न चैवकारस्यायोगव्यवच्छेदकत्वमत्यन्तायोगव्यवच्छेदकत्वं वाऽर्थः। विशेषण-क्रियासङ्गतयोः एवकारयोरेव अयोगात्यन्तायोगव्यवच्छेदकत्वेन एतस्य चातथात्वेन अन्ययोगव्यवच्छेदकत्वस्यैव युक्तत्वात्। **"अत एव चानन्याधिपतिः"**। एतच्च सूत्रं पूर्वमेव (७. २५. २.) व्याकृतम्। अतः पित्रादीनां सङ्कल्पमात्रसाध्यत्वं स्थितम्। प्रकृतमनुसरामः॥ (८-२.)

**त इमे....अपिधानम्।** परमात्मनिष्ठा इमे सत्या अपहतपाप्मत्वादयः कामाः। अनृतापिधानाः अनृतमपिधानं येषां ते **अनृतापिधानाः** अनृताच्छादिताः। "ऋतेतरविषयो ह्यनृतशब्दः। ऋतमिति कर्मवाचि। ऋतं=कर्मफलाभिसन्धिरहितं परमपुरुषाराधनवेषं

---

ऋतं कर्मफलाभिसंधिरहितमिति। अत्र ऋतशब्दार्थविचारः परमार्थप्रकाशिकायां कृत एव। अत्रापि किञ्चिदुच्यते—ऋतं सत्यं तात्त्विकाकारविशिष्टम्। 'प्रत्ययार्थश्च मोक्षस्य सिद्धयः संप्रकीर्तिताः'

अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते, सर्वं तदत्र गत्वा विन्दते । अत्र ह्यस्यैते सत्याः कामा अनृतापिधानाः ।

---

तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तफलं सांसारिकफलं कर्म **अनृतं** ब्रह्मप्राप्तिविरोधि" इति **महासिद्धान्ते भाषितम्** । तेषां सत्यानां **सतां** विद्यमानानामेव कर्म आच्छादकम् । ततश्च स्वात्मभूतपरमात्मगता अपहतपाप्मत्वादयो धर्माः कर्मरूपाविद्यातिरोहितत्वान्न भासन्त इत्यर्थः । **योयो...लभते** । अस्य उपासकस्य योयो बन्धुवर्गः इतः प्रैति, न स इह द्रष्टुं शक्य इत्यर्थः ।

**अथ...विन्दते** । अस्य(अथ?) तु ये जीवन्तो नष्टाश्च बन्धवः, अलभ्याश्च मनोरथाः, तत् सर्वं दहराकाशं परमात्मानं प्राप्य लभते । अत्र, 'यच्चास्येहास्ति यच्च नास्ति' इति वाक्यसमानार्थत्वादस्य वाक्यस्य, मुक्तस्य [सर्वतो विरक्तस्य] प्राप्यान्तरासम्भवात्, निरतिशयभोग्यत्वमेवार्थः । **अत्र...अनृतापिधानाः** । यत उपासकस्य काम्यमानाः भोग्यभूताः अपहतपाप्मत्वादय एतन्निष्ठाः पूर्व**मनृत**शब्दितकर्माच्छादिताः इदानीं दहराकाशं प्राप्तस्याविर्भवन्ति, अतो निरतिशयभोग्यत्वमित्यर्थः । **हि**शब्दो हेतुपरः । **तद्यथा....न विन्दन्ति** । यथा अधस्तान्निक्षिप्तं हिरण्यनिधिं **अक्षेत्रज्ञाः** निधिमत्क्षेत्रस्वभावविज्ञानहीनाः निधेरुपर्युपरि सञ्चरन्तोऽपि निधिं न लभन्ते, एवमेवेमाः सर्वाः प्रजाः सुषुप्तिकाले अहरहर्गच्छन्त्यः सुषुप्तौ, 'सति

---

इति न्यायेन वस्तुतो भगवत्प्रीत्यर्थमेव कर्तव्यानां कर्मणां क्षुद्रफलार्थमन्यदेवताराधनत्वमौपाधिकमिति फलाभिसंधिरहितत्ववेषेणैव कर्म सत्यम्, काम्यवत्त्वेषेण चानृतमिति । न केवलं सत्याः कामाः,

**तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति ; अनृतेन हि प्रत्यूढाः ॥**

---

संपद्य न विदुः' इत्युक्तरीत्या अविभागं गच्छन्त्यः **एतं** दहराकाशाख्यं ब्रह्मलोकं **न विन्दन्ति** न लभन्ते=न जानन्तीत्यर्थः। ब्रह्मशब्दलोकशब्दौ निषादस्थपतिन्यायेन समानाधिकरणौ । तत्र हेतुमाह—**अनृतेन हि प्रत्यूढाः । प्रत्यूढाः** प्रतीपं नीताः । स्वभावान्तरं प्रापिताः । आच्छादिता इति यावत् । यद्वा **अहरहर्गच्छन्त्य** इति न सुषुप्ति-कालीनं गमनमुच्यते, अपितवन्तरारमत्वेन सर्वदा वर्तमानस्य दहराकाशस्य हिरण्यनिधिवत् परमपुरुषार्थभूतस्य उपर्युपर्य**हरहर्गच्छन्त्यः** सर्वस्मिन् काले वर्तमानाः तमजानन्त्यः तं न विन्दन्ति=न लभन्त इत्यर्थः। अर्थद्वयमपि **भाष्यकृता** वर्णितम्, 'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च' इति सूत्रे ।

सूत्रस्य चायमर्थः—'तद्यथा हिरण्यनिधिं निहितम्' इति अहरहः सर्वेषां क्षेत्रज्ञानां गमनात्, ब्रह्मलोकशब्दाच्च दहराकाशो ब्रह्मेत्यवसीयते । तथा ह्यन्यत्र सुषुप्तिकालीनगमनब्रह्मलोकशब्दौ ब्रह्म-विषयावेव दृष्टौ, 'एवमेव खलु सोम्येमाः सर्वाः प्रजा सति सम्पद्य न विदुः', 'एष ब्रह्मलोकः सम्राडिति होवाच' इति । मा भूदन्यत्र सुषुप्तिकाले ब्रह्मणि गमनदर्शनम् ; एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकालेऽवस्थानं ब्रह्मव्यतिरिक्तेष्वसम्भावितं दहराकाशस्य परब्रह्मत्वे लिङ्गम् । **भाष्ये**

---

तदाधारः परमात्माऽपि अनृतप्रत्यूढैरस्माभिरग्राह्य एवेत्याह तद्यथेति।

एवमेकां व्याख्यां कृत्वा, "अथवा अहरहर्गच्छन्त्य इति न सुषुप्तिविषयं गमनमुच्यते । अपित्वन्तरात्मत्वेन सदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्य उपर्युपर्यहरहर्गच्छन्त्यः सर्वस्मिन् काले वर्तमानाः तमजानन्त्यः तं न विन्दन्ति=न लभन्ते । यथा हिरण्यनिधिं निहितं तत्स्थानमजानानाः तदुपरि सर्वदा वर्तमाना अपि न लभन्ते, तद्वदित्यर्थः। सेयमेवान्तरात्मत्वेनावस्थितस्य दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति । तथा ह्यन्यत्र परब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिः स्वस्मिन् वर्तमानाभिः प्रजाभिरवेदनं दृष्टम् । यथा **अन्तर्यामिब्राह्मणे**, 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद' इति, 'अदृष्टो द्रष्टा अश्रुतः श्रोता' इति च । मा भूदन्यत्र दर्शनम् । स्वयमेव त्विदं निधिदृष्टान्तावगतपरम पुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतया अहरहः सर्वासां प्रजा-नामजानतीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्" इति व्याख्यातम् । सुषुप्तिकालीनगमनविषयपूर्वव्याख्यायाम्, 'उपर्युपरि' इत्यस्य दृष्टान्त एवान्वयः, न दार्ष्टान्तिके; सुषुप्तिकाले एकीभावसद्भावेऽपि उपरि-गमनाभावात् । अन्तर्यामिविषयद्वितीयव्याख्यायां तु अन्तर्यामिण उपरि सर्वदा गतिसत्त्वात् **उपर्युपरी**त्यस्य दार्ष्टान्तिकेऽप्यन्वयो द्रष्टव्यः ।

[अत्र **व्यासार्यैः**, "अन्तर्यामिविषयतया व्याख्याने अन्तर्या-मिण्यहरहर्गमनस्य दहराकाशपरब्रह्मत्वसाधकत्वमयुक्तम् । उपासकानु ग्रहावस्थितो हि दहराकाशः; अन्तरात्मतया स्थितो ह्यस्याधारः, तयोः रूपभेदात्" इत्याशङ्क्य धर्म्यैक्याभिप्रायेणैवमुक्तमिति परिहृतम् ।]

स वा एष आत्मा हृदि । तस्यैतदेव निरुक्तं हृद्ययमिति । तस्माद्धृदयम् । अहरहर्वा एवंवित् स्वर्गं लोकमेति ।
अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य

---

पूर्वोक्तं हृदयान्तर्वर्तित्वं स्मारयति—**स वा...हृदि ।** अन्तर्वर्तते इति शेषः । हृदयनामनिर्वचनादपि आत्मनो हृद्गतत्वं सिध्यतीत्याह—**तस्य...हृदयम् ।** **तस्य** एतस्य हृदयस्य । हृदि अयमात्मा वर्तत इति हि **हृदय**शब्दनिरुक्तमिति भावः। **अहरह....मेति । अहरहः** प्रत्यहमाप्रयाणं **एवंवित्** एतादृशदहराकाशोपासननिष्ठः **स्वर्गं** सुखरूपं **लोकं** लोक्यमानं ब्रह्म प्राप्नोतीत्यर्थः । ब्रह्मोपासननिष्ठस्य तत्क्रतुन्यायेन ब्रह्मप्राप्तेरेव वक्तव्यतया प्रसिद्धस्वर्गलोकप्राप्त्यसम्भवादिति द्रष्टव्यम् ॥

कथं ब्रह्मप्राप्तिः, प्राप्तस्य वा ततः किं भवतीत्यत्राह—**अथ...निष्पद्यते ।** **अथ**शब्दः प्रकृतापेक्षत्वद्योतकः । **संप्रसाद**शब्दः

---

हृदयस्येति । यद्यप्यत्र यथा दहराकाशशब्दः हृदयाकाशवाचकत्वार्होऽपि इह परमात्मपर एव, तथा हृदयशब्दो हृन्मात्रवाच्यपि, 'हृदि अयम्' इति हृदयमिति व्युत्पत्त्या परमात्मपरः । नन्वेवं हृच्छब्दस्य इदंशब्दस्य चायं समास इति प्राप्नोति । तथाचानेन किं हृदिदन्त्वरूपधर्म उच्यते, उत हृदयत्वरूपधर्म इति चेत् ; न—हृदयमिति पदवाच्यत्वस्यैवानुसंधेयाकारतया अन्यविचारवैयर्थ्यात् । अस्तु वा, 'अय गतौ' इत्यतः अयमिति निष्पत्तिरित्यलम् । स्वर्गं लोकमेतीत्येतच्च उपरि सत्यशब्दनिर्वचन इव अङ्गिफलनिर्देशरूपम् । तथाचापहतपाप्मत्वसत्यत्वादिवत् उक्तरीत्या हृदयशब्दवाच्यत्वमप्युपास्याकार इति प्रतीयते—अथापि परमात्मनि हृदयशब्दप्रयोगस्य कुत्राप्यदर्शनात् हृत्परतयैव निर्वचनमिदं व्याख्यातमिव ।

**स्वेन रूपेणाभिनिष्पद्यते, एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति।**

सुषुप्तिस्थानवचनस्सन् तत्सम्बन्धात् जीवं लक्षयति। एष सम्प्रसादः, 'अहरहर्वा एवंवित्' इति पूर्ववाक्ये निर्दिष्ट उपासको जीवः **अस्मात्** हेयतया परिदृश्यमानात् शरीरादुत्क्रम्य देशविशेषनिष्ठं परमात्मानं प्राप्य स्वेन रूपेणाभिनिष्पद्यते इत्यर्थः। अस्य वाक्यस्यार्थः **प्रजापतिविद्यायां** विशिष्य वक्ष्यते। **एष...ब्रह्मेति।** एष आत्मा एतदमृतमभय मेतदित्येतच्छब्दाः पूर्ववाक्ये, 'परंज्योतिरुपसम्पद्य' इति प्राप्यतया निर्दिष्टपरज्योतिश्शब्दितब्रह्मपराः, प्राप्यतया प्राधान्यादव्यवहितत्वाच्च।

---

अथ य एष इति। नन्वेतद्वाक्यस्वारस्यादेवमाशङ्का भवति— 'एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिताः' इत्येतावत्पर्यन्तं ब्रह्मणो दहराकाशस्य निरूपणम्। ततः, 'एष आत्माऽपहतपाप्मा' इत्यारभ्य, 'एष आत्मेति होवाच' इत्यन्तेन जीवनिरूपणमेव। अयमेवेत्थं प्रजापतिवाक्येऽप्युच्यते। अयं च जीवात्मा परमात्मनि समाहिताः कामा इव तद्गतः। तथाच परमात्मन इह नापहतपाप्मत्वादिसिद्धिरिति। उच्यते—मध्ये, 'अत्र गत्वा विन्दते', 'एतं ब्रह्मलोकं न विन्दन्ति' इति एतत्पदाभ्यां ब्रह्मपराभ्यां प्रक्रान्तपरामर्शात्, पूर्वं, एष आत्माऽपहतपाप्मेत्युक्तः परमात्मैवेति। उपरि, 'य आत्मा स सेतुर्विधरणः' इति ब्रह्मण एवाऽऽत्मपदेन निर्देशाच्च। अस्तु तावदेवम्- अथाप्यत्र वाक्ये य एष संप्रसाद इति यच्छब्दनिर्दिष्टस्यैव एष आत्मेति एतच्छब्देन ग्राह्यतया जीवपरैक्यमेव संमन्तव्यमिति चेन्न— अन्यथासिद्धत्वात्। तदाह एतावन्मात्रस्याविभूतस्वरूपपरत्वमिति। तथाच पुल्लिङ्गनिर्दिष्टं पुल्लिङ्गेन परामृष्टम्; पश्चात् परंज्योतिरिति नपुंसकनिर्दिष्टं नपुंसकेन परामृष्टम् एतदमृतमित्यादिनेति भावः। आश्रयणेऽपीत्यपिना पक्षान्तरं सूचितम्। तच्च यच्छब्दप्रतिसंबन्धि-

ननु, "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत्" इत्यत्र विभक्त्यैकरूप्यात् व्यवहितस्यापि प्रजापतेः स इत्यनेन ग्रहणं दृष्टम्, न त्वव्यवहितस्य सम्प्रदानत्वेन प्रधानस्य वरुणस्य ग्रहणमित्युक्तं मीमांसकैः। 'आकाशाच्चन्द्रमसमेष सोमो राजा' इत्यत्र एतच्छब्दस्य नाव्यवहिताभिसम्भाव्यचन्द्रमःपरामर्शित्वं दृष्टम्; अपित्वभिसम्भवितृपरत्वम्। ततश्चेहापि व्यवहितस्य सम्प्रसादशब्दितस्य जीवस्यैव, 'एष आत्मा' इत्येतच्छब्देन ग्रहणमुचितम्, विभक्त्यैकरूप्यादिति चेन्न— 'प्रजापतिर्वरुणाय' इति वाक्ये स इत्यनेन प्रजापतिपरामर्शे अश्वदानसंप्रदानरूपत्वेन स्वीयां वरुणदेवतामार्च्छत्=प्राप्नोदित्यर्थो युज्यते। वरुणपरामर्शे तु वरुणस्यात्मीयाया देवतायाः प्रागप्रस्तुतत्वादर्थसङ्गत्या व्यवहितोऽपि प्रजापतिः परामृष्टः; न तु विभक्त्यैकरूप्यमात्रेण। 'एष सोमो राजा' इति पितृयाणवाक्ये एतच्छब्देन चन्द्रपरामर्शे तस्य सोमराजभावविधानवैयर्थ्यात् व्यवहिताभिसम्भवितृपरामर्शित्वम्, न

---

तच्छब्दाध्याहारेण तस्यैष आत्मेति वा वक्तव्यम्। एष इति अपर्यवसानवृत्त्या एतत्संप्रसादान्तर्याम्यर्थकमिति वेति। न च एतद् ब्रह्मेत्येतद् विहाय सर्वं जीवपरमेवास्त्विति वाच्यम्—उक्तोत्तरत्वात्, 'य आत्मा स सेतुः' इति सेतोरात्मत्वोक्तेः। तदुपरि, न जरा न मृत्युरित्यादिना सेतोरेवापहतपाप्मत्वविजरत्वविमृत्युत्वविशोकत्ववर्णनाच्च। 'य आत्माऽपहतपाप्मा' इत्यादेः, 'एष आत्मेति होवाचैतदमृतमभयम्' इत्यादेश्च वाक्यस्यैकाकारत्वं तु न प्रजापतिविद्यायामत्र वस्त्वैक्यसाधकम्; साधर्म्यादुपपत्तेरिति, 'उत्तराच्चेदाविर्भूतस्वरूपस्तु" इति सूत्रोक्तमेव।

विभवस्यैकरूप्यात् । प्रकृते अव्यवहितप्रधानभूतपरंज्योतिश्शब्दित-परमात्मपरित्यागे कारणाभावात् । प्रत्युत तेन व्यवहित**सम्प्रसाद-**शब्दितजीवपरिग्रहे तस्य निरुपाधिकात्मत्व-निरतिशयसुखरूपत्वलक्षणा-मृतत्व-दुःखासंभिन्नस्वरूपाभयत्व-ब्रह्मत्वविधानासम्भवाच्च, 'एष आत्मेति होवाच' इत्येतच्छब्देन प्राप्यभूतः परमात्मैव परामृश्यते ।

यद्यपि, 'स्वेन रूपेणाभिनिष्पद्यत' इति स्वरूपाविर्भावे कथिते आविर्भवत् स्वरूपं किमित्याकाङ्क्षायां **प्रजापति**वाक्ये--'एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म' इति निर्दिष्टममृताभयब्रह्मात्मशब्दनिर्दिष्टं मुक्तरूपमित्येवमर्थकत्वेऽपि नानुपपत्तिः—तथाऽपि, 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' इत्युत्तरवाक्यनिर्देक्ष्यमाणचेतनाचेतननियन्तृ-त्वार्थकसत्यनामत्वस्य मुक्तात्मन्यसम्भवात् पूर्ववाक्यनिर्दिष्टोऽपि न जीवः परामृश्यते, अपितु प्राप्यं ब्रह्मैव ।

'एष आत्मेति होवाचेत्येतावन्मात्रस्याविर्भवत्स्वरूपपरत्वम् । एतदमृतमभयमेतद्ब्रह्मेत्यत्र **त्वेतच्छब्दस्य परंज्योति**श्शब्दितब्रह्मपरत्वम्' इत्याश्रयणेऽपि नानुपपत्तिः ।

अनेन च वाक्यसन्दर्भेण परमात्मनो मुक्तप्राप्यत्व-तत्स्वरूपा-विर्भावयितृत्वलक्षणो महिमा प्रतिपादितो भवति। अत एव **सूत्रकृतापि,** 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' इति दहरविद्यामध्यस्थवाक्ये जीवप्रतिपादनदर्शनात् दहराकाशोऽपि जीव एवास्तु। तस्य यावान् वा अयमित्यादिवाक्यसन्दर्भप्रतिपादितभूताकाशोपमेयत्वस्य भूताकाशेऽ-

**तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति । तानि ह वा एतानि त्रीण्यक्षराणि सत् ति यमिति । तद् यत् सत्, तदमृतम् ; अथ यत् ति, तन्मर्त्यम् ; अथ यद् यम्, तेनोभे यच्छति । यदनेनोभे यच्छति, तस्मात् यम् । अहरहर्वा एवंवित् स्वर्गं लोकमेति ॥**

**इति अष्टमाध्याये तृतीयः खण्डः ।**

---

नन्वयेन दहराकाशस्य भूताकाशत्वाभावेऽपि जीवे कथञ्चिन्निर्लेपत्वादिना भूताकाशोपमेयत्वसम्भवात्, अणुपरिमाणे जीवे दहरशब्दितात्वपरिमाणत्वस्यापि सम्भवाद्दहराकाशो जीव एवास्त्विति, "इतरपरामर्शात् स इति चेत्" इति सूत्रखण्डेनाऽऽक्षिप्य, "दहर उत्तरेभ्यः", "गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च", "धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः" इति सूत्रत्रयोक्तानां परमात्मधर्माणां जीवे असम्भवान्न जीवो दहराकाश इति, 'नासम्भवात्" इति सूत्रखण्डेन परिहृत्य, तर्हि ब्रह्मप्रकरणे, 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय' इति जीवपरामर्शः किमर्थमित्याशङ्क्य, मुक्ते तत्स्वरूपाविर्भावयितृत्वलक्षणपरमात्ममहिमप्रकाशनार्थो जीवपरामर्श इति, "अन्यार्थश्च परामर्शः" इति सूत्रेण प्रतिपादितम् ।

**तस्य....सत्यमिति** । स्पष्टोऽर्थः । **तानि....सत्तियमिति** । सत् ति यमिति सत्यनाम त्र्यक्षरात्मकमित्यर्थः । **तद्यत्सत्तदमृतम् ; अथ यत्ति तन्मर्त्यम्** । अत्रामृतमर्त्यशब्दाभ्यां चेतनाचेतने निर्दिश्येते । **अथ....यच्छति** । अमृतत्वमर्त्यत्वरूपेणोपलक्षिते उभे यच्छतीति यमित्यर्थः । तदेवोपसंहरति **यदनेनोभे यच्छति तस्मात् यम्** । अनेन चेतनाचेतनत्वरूपेण उपलक्षिते उभे यतो यच्छति, तस्मात् यमित्यर्थः । नामनिर्वचनाभिज्ञं स्तौति **अह....मेति** । पूर्ववत् स्पष्टोऽर्थः ॥

अष्टमे चतुर्थः खण्डः

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय। नैतँ सेतुमहोरात्रे तरतो न जरा न मृत्युः। न शोको न सुकृतँ न दुष्कृतँ सर्वे पाप्मानोऽतो निवर्तन्ते। अपहतपाप्मा ह्येष ब्रह्मलोकः॥

---

**अथ...विधृतिः**। उक्तलक्षण आत्मा सेतुरिव **विधृतिः** विधारक **इत्यर्थः**। किमर्थं सेतुर्विधृतिरित्यत्राह—**एषां लोकानाम-सम्भेदायेति**। **असंभेदः**(दाय) असङ्करः(राय)। यद्ययं परमात्मा स्वशासनेन जगन्न धारयेत्, सर्वधर्माणां साङ्कर्यमेव स्यात्। पृथिव्या गन्ध-वत्त्वम्, जलस्य शैत्यं, तेजस औष्ण्यमित्यादयो हि धर्माः परमात्माज्ञया व्यवस्थिता भवन्ति। सिनोति=बध्नाति स्वस्मिन् चिदचिद्वस्तुजातम-सङ्कीर्णमिति सेतुरुच्यत इति **"सामान्यात्तु"** इति सूत्रे **भाषितम्**। **नैतं...दुष्कृतम्**—"**तरतिः** प्राप्तिवचनः। वेदान्तं तरतीतिवत्" इति तत्रैव भाषितत्वात् एतं परमात्मसेतुमहोरात्रे परिच्छेदकत्वेन न प्राप्नुतः जरादिकमपि न प्राप्नोतीत्यर्थः। उक्तमर्थं निगमयति--**सर्वे....निवर्तन्ते**। शोकादिषु **पाप्म**शब्दस्यामुख्यत्वेऽपि सुकृतदुष्कृतयोरलौकिकमुमुक्षुव-निष्टसाधनत्वलक्षणपापशब्दप्रवृत्तिनिमित्तसद्भावात्(संभवात्) **पाप्म**शब्दो मुख्य इति **व्यासार्यै**र्लघुसिद्धान्ते वर्णितम्। तत्र हेतुमाह— **अपहत....इति**। ब्रह्मरूपो लोक एषः अपहतपाप्मा। **हि**र्हेतौ। यस्मादयमपहतपाप्मा, तस्मात् सर्वे पाप्मानोऽतो निवर्तन्त इत्यर्थः। पापहेतुकर्माचरणेऽपि तदुत्पत्तिप्रतिबन्धकशक्तियोगित्वमेव हि **अपहत-**

**तस्माद्वा एतँ सेतुं तीर्त्वाऽन्धस्सन् अनन्धो भवति ; विद्धस्सन् अविद्धो भवति ; उपतापी सन् अनुपतापी भवति । तस्माद्वा एतँ सेतुं तीर्त्वा अपि नक्तमहरेवाभिनिष्पद्यते । सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥**

---

**पाप्म**त्वम् । तस्मान्न **पाप्म**शब्दमुख्यार्थसुकृतदुष्कृतयोस्तत्फलभूतजरारोगादीनाञ्च प्रसक्तिरित्यर्थः ॥

**तस्मात्....भवति ।** यस्मादयमपहतपाप्मा, तस्मादेव **एवं** परमात्मलक्षणं सेतुं प्राप्य पूर्वम् आन्ध्य-आयुधवेध-ज्वरादियुक्तदेहोऽपि सन् तद्दोषरहितदिव्यदेहयुक्तो भवतीत्यर्थः। **तस्मात्....निष्पद्यते ।** परमात्मानं प्राप्तस्य तमिस्रा रात्रिरपि दिवैव । तस्याज्ञानप्रसक्तेरभावादहस्सदृशी सा रात्रिः । अहोरात्रयोर्न विशेष इत्यर्थः । तत्र हेतुः **सकृद्....लोकः । एषः** पूर्वोक्तो ब्रह्मलोकः **हि** यस्मात् **सकृद्विभातः** [एकदा—मध्येतिरोध्यभावात् ?]सर्वदा ब्रह्मस्वरूपप्रकाशस्यानावृततया भासमानत्वादित्यर्थः।

**तद्य एव....भवति ।** [**तत्** तत्र एवंसति] ये एतं परमात्मानं स्त्रीविषयतृष्णात्यागरूपब्रह्मचर्यपूर्वकशास्त्राचार्योपदेशादिना **अनुविन्दन्ति** जानन्ति, तेषामेवेदृशब्रह्मप्राप्तिः सर्वलोकानुभवश्च ; न ब्रह्मचर्यहीनानामित्यर्थः । सूत्रितञ्च, 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' इति । 'एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति परब्रह्ममहिमत्वेन

---

अन्धः सन् इत्यादिना क्रमेण आधिदैविकाऽऽधिभौतिकाऽऽध्यात्मिकतापनिवृत्तिरुक्ता । सकृद् विभात इति । विभानविच्छेदेन पुनर्विभाने असकृत् = अनेकवारं विभातः स्यात् । तद्विलक्षण इत्यर्थः।

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति, तेषामेवैष ब्रह्मलोकः, तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥

इति अष्टमाध्याये चतुर्थः खण्डः।

अष्टमे पञ्चमः खण्डः

अथ यत् यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्। ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते।

---

प्रसिद्धस्य जगद्विधरणमहिम्नो दहराकाशे उपलभ्यमानत्वात् दहराकाशः परं ब्रह्मेत्यर्थः ॥ (८-४)

यज्ञ इष्ट सत्रायण-मौन अनाशकायन-आरण्यायनाख्यानि कर्माणि ब्रह्मचर्यसाध्यत्वात् ब्रह्मलोकसाधनत्वेन प्रस्तुतं प्राङ्निर्दिष्टं ब्रह्मचर्यमेवेति स्तौति **अथ....तत्**। लोके यत् पाकयज्ञहविर्यज्ञादिकं कर्म वैदिकाः यज्ञ इत्याचक्षते, तत् ब्रह्मचर्यसाध्यत्वात् ब्रह्मचर्यमेवेत्यर्थः। ननु यज्ञस्य कथं ब्रह्मलोकसाधनब्रह्मचर्यसाध्यत्वम्, न हि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यस्य यज्ञो द्वारमित्याशङ्क्य ब्रह्मचर्यसाध्यस्य ब्रह्मप्राप्तिसाधनस्य ज्ञानस्य यज्ञरूपत्वात् ज्ञानसाधनस्य ब्रह्मचर्यस्य यज्ञसाधनत्वमप्यस्तीति प्रतिपादयितुमेकशब्दरूषितत्वेन तयोरैक्यं सम्पादयति **ब्रह्मचर्येण....**

---

ननु ब्रह्मचर्येण ब्रह्म जानतामेव ब्रह्मलोक इति कथम्, यज्ञादेरपि तद्वत् साधनत्वादित्याशङ्कायां यज्ञाद्यपि ब्रह्मचर्यमेवेति तत्परिहारं कुर्वन्, यज्ञादेः कथं ब्रह्मचर्यत्वमित्यत्र ब्रह्मचर्यसाध्यत्वात् साध्यसाधनयोरभेदादिति प्रतिविवक्षन्, साध्यत्वमेव कथमित्यत्र ब्रह्मचर्यसाध्याय आत्मादिप्राप्तेर्यज्ञादिप्राप्तिरूपत्वादिति समाधानमाशयानः तदुपपत्तये यागाद्यर्थप्रसिद्धयज्ञादिशब्दस्य आत्माद्यर्थमुपवर्ण्य एवमेकशब्दरूषितत्वात् यागात्माद्यैक्यं दर्शयति अथयद्यज्ञ इत्यादिः

अथ यदिष्टमित्याचक्षते, ब्रह्मचर्यमेव तत्। ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते।

अथ यत् सत्त्रायणमित्याचक्षते, ब्रह्मचर्यमेव तत्। ब्रह्मचर्येण

---

**विन्दते।** ब्रह्मचर्यपुरस्सरब्रह्मज्ञानवान् हि **तं** ब्रह्मलोकं विन्दते इत्यर्थः। अत्र [वाक्ये], '**यो ज्ञाता ब्रह्मचर्येण**' इत्युक्त्या **योज्ञाते**त्यस्य ब्रह्मचर्यसाध्यत्वं प्रतीयते। **योज्ञाते**ति शब्दैकदेशस्य **योज्ञ**शब्दस्य **यज्ञ**शब्दस्य च साम्यकृताभेदाध्यवसायेन तदर्थाभेदाध्यवसायमूला यज्ञस्यापि ब्रह्मचर्यसाध्यतेति भावः। एवमुत्तरत्रापि द्रष्टव्यम्।

**अथ....विन्दते।** अत्रापि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यसाध्यस्य परमात्मपूजनस्य दर्शपूर्णमासादीनाञ्च **इष्ट्वे**त्येकशब्दरूषितत्वेनाभेदाध्यवसायः।

**अथ....त्राणं विन्दते।** अत्रापि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्य-

---

खण्डः। यद्यपि ब्रह्मार्थं चर्या ब्रह्मचर्यमिति यज्ञादेरपि सुखं तथात्वं सुवचम्—अथापि स्त्रीसंगत्यागरूपब्रह्मचर्यमेवेह विवक्षित्वा श्रुतिरिह सचमत्कारमेवं वर्णयन्ती तत् ब्रह्मचर्यमादरेण स्तौति। तदाह यज्ञेष्टेत्यादिना। यज्ञेष्टसत्त्रायणमौनानाशकायनारण्यायनशब्दानां प्रकृतब्रह्मचर्यसाध्यार्थविशेषयागाद्युभयपरत्वञ्चैवम्—प्रसिद्धार्थस्तावत्—यज्ञः ज्योतिष्टोमादिः; इष्टम् इष्टिः, सत्त्रायणं सत्त्रयागाख्य उपायः, अनाशकायनं अनशनकर्तुः तपः, मौनं वाङ्नियमः, अरण्यायनं विपिनवासः इति। अन्यच्चैवं विमृश्यताम्—यो ज्ञाता तं विन्दते इत्यत्र योज्ञशब्दयज्ञशब्दयोः साम्यकृताभेदाध्यवसाय इति भाष्यम्। 'ब्रह्मचर्यपुरस्सरब्रह्मज्ञानवान्' इत्यादि च। इदमप्यत्र ग्राह्यम्। आत्मप्राप्तिरिह विवक्षिता। आत्मा च परमात्मा, 'य आत्माऽपहतपाप्मा' इत्युक्तो ब्रह्मलोक एव। यो ज्ञातेत्यत्र ज्ञातृपदं तमेव सर्वज्ञमाह। य इत्यस्य च तमित्येव प्रतिसंबन्धि। यज्ञशब्दस्य यश्चासौ

ह्येव सत आत्मनस्त्राणं विन्दते ।

अथ यन्मौनमित्याचक्षते, ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येवा-त्मानमनुविद्य मनुते ॥

अथ यदनाशकायनमित्याचक्षते, ब्रह्मचर्यमेव तत् । एष ह्यात्मा न नश्यति, यं ब्रह्मचर्येणानुविन्दते ।

---

साध्यस्य विषयान्तरविमुखीकरण[लक्षण]स्य सच्छब्दितात्मत्राणस्य गवामयनादिसत्रस्य च सत्रायणरूपैकशब्दरूषितत्वेनाभेदाध्यवसायः ।

**अथ यन्मौनं....मनुते ।** वाङ्नियमनलक्षणमौनस्य ब्रह्मचर्य-साध्यात्मश्रवणाधीनमननस्य च मौनरूपैकशब्दरूषितत्वेनाभेदाध्यवसायः।

**अथ यदनाशकायनं....विन्दते ।** ब्रह्मचर्यसाध्यनाशाभाव-रूपफलस्य च अनशनलक्षणमार्गस्य च अनाशकायनशब्दैक्यकृतोऽभेदः। [आशः=अशनम् , न आशः नाशः । नाशो न भवतीत्यनाशः इत्येकशब्दरूषितत्वम् ]

---

ज्ञश्च यश्च इति विग्रहः । यज्ञ इति जकारद्वयं ग्राह्यम् । यच्छब्दः श्रुतिप्रसिद्धपरः । तथाच ब्रह्मचर्येण प्रसिद्धं परमात्मानं विन्दते इति यज्ञप्राप्तिर्ब्रह्मचर्याधीनेति । इष्टमिति पदं पूजनार्थकमुक्तं भाष्ये । इच्छेत्यर्थान्तरमप्युक्तं शाङ्करे । विषयविरक्तस्य हि परमात्मनि तृष्णा वर्धत इति । सत्त्राणं सच्छब्दवाच्यस्य ब्रह्मणः अविच्छिन्नमनुभाव्य-त्वरूपरक्षासाधनम् । मौनं तु मननम् । अनाशकायनञ्च, न विद्यते नाशो यस्य तस्यानाशकस्य, 'न वधेनास्य हन्यत' इति प्रागुक्तस्य ब्रह्मणः प्राप्तिः । इयञ्च प्राप्तिः लोकविशेषप्राप्तिपूर्विकेति तदुक्तिररण्यायन-पदेन । अरशब्दण्यशब्दवाच्यार्णवप्राप्तिररण्यायनम् ।

अथ यदरण्यायनमित्याचक्षते, ब्रह्मचर्यमेव तत्। अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि।

तदैरम्मदीयँ सरः; तदश्वत्थः सोमसवनः; तदपराजिता पूर्ब्रह्मणः। प्रभुविमितँ हिरण्मयम्।

---

**अथ...दिवि।** **इतो** भूलोकापेक्षया तृतीये द्युशब्दिते ब्रह्मलोके अर-ण्यसंज्ञकावर्णवौ स्तः। अतश्चारण्यायनस्य ब्रह्मलोकस्य च अरण्यवासस्य च **अरण्यायन**शब्दकृतोऽभेदः। भुवं चतुर्मुखलोकान्तान्त-रिक्षलोकञ्चापेक्ष्य भगवल्लोकस्य तृतीयत्वम्; न तु चतुर्मुखलोकस्य तृतीयत्वमिति मन्तव्यम्। **प्रश्नोपनिषदि** चतुर्मुखलोकस्याप्यन्तरिक्ष-लोककोटौ निवेशितत्वात्।

प्रसङ्गात् भगवल्लोकचिह्नानि कानिचिदाह— **तदैरम्मदीयं.... सवनः।** **तत्**=तत्र ऐरम्मदीयनामकं सरः। [अस्तीति शेष।] इरया= अमृतेन माद्यन्ते यस्मिन् तदैरम्मदीयं अमृतमयम् सर इत्यर्थः। सोमसवननामा अश्वत्थश्चास्तीत्यर्थः। चन्द्रवदाह्लादकत्वात् सोमसवनत्वम्। **तदपराजिता पूर्ब्रह्मणः।** **तत्**=तत्र अब्रह्मविद्भिः प्राप्तुमशक्यत्वेन **अपराजिता** नाम परब्रह्मणः पुरी चास्तीत्यर्थः। **प्रभुविमितं हिरण्मयम्।**

---

एतदर्णवप्राप्तेः भगवत्प्राप्तिशेषतया पुरुषार्थत्वं वक्तुं तदैरम्म-दीयं सर इत्यादि। नित्यविभूतिसंबन्धी इतोऽधिको विस्तरः कौषीत-क्यां पर्यङ्कविद्यायां द्रष्टव्यः। तत्र अरो ह्रदः, विरजा नदीति द्वय-मुक्तम्; अत्र अरो ण्यश्चेति द्वयम्। ऐरम्मदीयं सरश्च तत्रानुक्तमिह। अत्राश्वत्थः सोमसवनः, तत्र तिल्यो वृक्षश्चैकः स्यात्। ऐरमिति मदीयमिति च पृथक्पदं शाङ्करे। अत्र श्रीमद्रहस्यत्रयसारस्वारस्यात् ऐकपद्यमाश्रितम्। इरम्मदशब्दश्च नानाश्रुतिगतो दर्शितो वाचस्पत्ये।

तत् य एवैतावरञ्च ण्यञ्चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति, तेषामेवैष ब्रह्मलोकः तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥

इति अष्टमाध्याये पञ्चमः खण्डः ।

अष्टमे षष्ठः खण्डः

अथ या एता हृदयस्य नाड्यः, ताः पिङ्गळस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येति। असौ वा आदित्यः पिङ्गळः ; एष शुक्ल एष नील एष लोहितः ॥

---

मण्टपमिति शेषः। **प्रभुणा** भगवता विशेषेण **मित** स्वभोगभूमित्वेन विशेषतः परिगृहीतमित्यर्थः। भगवतो व्याप्तत्वेऽपि नित्यविग्रहविशिष्टतया सन्निधानाद्विमितत्वम्। अतश्च तद्देशविशिष्टब्रह्मप्राप्तिरेव ब्रह्मप्राप्तिरिति भावः। प्रसङ्गादाह **तद्य.... भवति।** ब्रह्मप्राप्तिसाधनीभूतार ण्यशब्दितार्णव द्वयप्राप्तेर्ब्रह्मचर्याधीनत्वात् ब्रह्मचर्यमेव सर्वसाधनोत्कृष्टमिति भावः॥ ८-५

उक्तब्रह्मलोकप्राप्तिसाधनतया मूर्धन्यनाडीगमनं प्रस्तौति-**अथ.... लोहितस्येति**। हृदयसंबन्धिन्यो नाड्यः पिङ्गलशुक्लनीलादिनानारूप-सूक्ष्मान्नरस[सं]पूर्णाः तिष्ठन्तीत्यर्थः। **असौ वा.... लोहितः**। आदित्यस्य पिङ्गलशुक्लनीलपीतादिनानारूपाश्रयत्वञ्च मधुविद्याप्रसिद्धम्; प्रत्यक्षसिद्धञ्च। ततश्चैतद्रश्मिसम्बन्धादेवान्नरसस्य नानारूपत्वञ्चेति भावः।

---

पूर्वम्, 'अनुविद्य व्रजन्ति' इत्यादिना गमनमुक्तम्। गन्तव्यो देशश्चानन्तरमेव दर्शितः। अथ मार्गमुपलक्षयितुं हृदयान्तर्वर्ति-दहरोपासकस्य हृदयनाडीविशेषेण मूर्धन्यातेन आदित्यद्वारा मुक्ति-वर्णनायाथ नाडीखण्डः। तत्र प्रथमं सुषुप्त्याधारभूताः नाडीराह अथ या एता इति। अन्नरसस्य पिङ्गलाद्यनेकवर्णता पित्ताख्येन तेजसा कफवातयोः तरतमभावेन संश्लेषवशादित्युक्त्वा, 'वैद्यकं

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्च, एवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छतीमञ्चामुञ्च। अमुष्मादादित्यात् प्रतायन्ते; ता आसु नाडीषु सृप्ताः। आभ्यो नाडीभ्यः प्रतायन्ते; तेऽमुष्मिन्नादित्ये सृप्ताः॥ तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सृप्तो भवति।

---

**तद्यथा....अमुञ्च।** यथा विस्तीर्णो **महान्** पन्थाः ग्रामद्वयप्रविष्टो भवति, तथा आदित्यरश्मयो लोकद्वयानुप्रविष्टा इत्यर्थः। लोकद्वयप्रवेश क्रममाह **अमुष्मात्...सृप्ताः। प्रतायन्ते** सन्तताः। **सृप्ताः** प्रविष्टाः। रश्मीनामुभयलिङ्गत्वात् **ते ताः** इति च निर्देशः। शिष्टं स्पष्टम्।

**तद्यत्र...सृप्तो भवति। तत्** तस्मादित्यर्थः **यत्र** यदा **समस्तः** उपसंहृतकरणमण्डलः अत एव **सम्प्रसन्नः** बाह्यविषयसंपर्कजनितकालुष्यशून्यः **स्वप्नं न विजानाति** न पश्यतीत्येतत् स्वप्नादर्शनं सुषु(संषु)प्तिरिति यावत्। तदा आसु नाडीषु **सृप्तः** प्रविष्टो भवति। पुरीतद्[गत]ब्रह्मगमनाय नाडीषु प्रविष्टो भवतीत्यर्थः। 'नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते। आभिः प्रत्यवसृप्य पुरीतति शेते' इति श्रुत्यन्तरात्। नाडीपुरीतद्ब्रह्मणां समुच्चयेन सुषुप्तिस्थानत्वस्य "तदभावो नाडीषु तच्छ्रुतेरात्मनि च" इत्यत्र स्थितत्वात् नाडीनामपि

---

वा द्रष्टव्यम्' इत्युक्तं शाङ्करे। तत्र नानावर्णाऽऽदित्यरश्मिसंबन्धो मोक्षमार्गव्यक्तये इह श्रुत्योच्यते। तत्र नाडीसंगतस्य सुषुप्तिः; निष्क्रम्य रश्मीन् प्रविष्टस्याऽऽदित्यप्राप्तिरित्याह तद्यत्रेति। समस्तः। असु क्षेपे। अस्तः= जाग्रद्दशातोऽन्यत्र क्षिप्तः। सम्यगस्तः स्वप्नदशातोऽपि क्षिप्तः समस्तः। संप्रसन्न इति। अनेन संप्रसादशब्दोऽपि करणायत्त-

**तं न कश्चन पाप्मा स्पृशति । तेजसा हि तदा संपन्नो भवति ॥**

**अथ यत्रैतदबलिमानं नीतो भवति, तमभित आसीना आहुः, जानासि मां जानासि मामिति । स यावदस्माच्छरीरादनुत्क्रान्तो भवति, तावज्जानाति ॥**

**अथ यत्रैतदस्माच्छरीरादुत्क्रामति, अथैतैरेव रश्मिभिरूर्ध्वं**

---

सुषुप्तिस्थानत्वमस्तीति द्रष्टव्यम् । **तं....स्पृशति ।** सुषुप्तौ सतोऽपि कर्मणः फलजननसामर्थ्यं नास्तीत्यर्थः । 'न कश्चन पाप्मा स्पृशति' इत्यस्मिन् वाक्ये अनुष्ठानाशक्तिर्विवक्षितेति **व्यासार्य**वचनस्याप्ययमेवार्थः । तत्र हेतुमाह **तेजसा...भवति ।** 'सता सोम्य तदा संपन्नो भवति' इति श्रुतेः **तेज**श्शब्दः प्रकाशत्वगुणयोगात् ब्रह्मपरः । ब्रह्मणि सम्पत्तिर्नाम देहेन्द्रियाधिष्ठातृत्वराहित्येन ब्रह्मण्यवस्थानम् । सम्पत्त्यधिकरणस्य करणत्वविवक्षया तृतीयानिर्देशः ॥

**अथ...भवति ।** **अथ**शब्दोऽर्थान्तरप्रस्तावार्थः । अबलस्य भावः **अबलिमा** । अबलत्वम् । रोगादिकृतदौर्बल्यं नीतो भवतीत्येतत् । **यत्र** यदेत्यर्थः । यदा दौर्बल्यं प्राप्तवानित्यर्थः । **तमभित....मिति ।** तं तादृशदशाविष्टं परितो वर्तमाना बान्धवाः मां जानासि किम्, मां जानासि किमित्याहुः । यद्वा **एतत्** एतासु नाडीषु स्थित इत्यर्थः । **स यावत्....जानाति ।** स्पष्टोऽर्थः ।

**अथ ....आक्रमते । एतैरेव रश्मिभिः** पूर्वोक्तैरादित्यरश्मिभिरित्यर्थः ।

---

कालुष्यरहितं जीवमाहेति ज्ञातम् । तेजसा हीति । न हि लोके तेजस्संमृष्टं कश्चित् स्पृशेत्; दाहप्रसक्तेरिति भावः ।

संपत्त्यधिकरणस्य = संपत्ति = लयं प्रति अधिकरणभूतस्य ।

आ(मा)क्रमते। स ओमिति वाहोद्वा मीयते। स यावत् क्षिप्ये-

---

इदञ्च वाक्यमुत्क्रान्तिपादे चिन्तितम्—निशि मृतस्य विदुषो रश्म्यनुसारेण गमनासम्भवात् रश्मिभिरेव गमनमिति न नियमः। 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति वचनं तु पक्षप्राप्तविषयम्। एवकारोऽत्यन्तायोगव्यवच्छेदार्थ इति पूर्वपक्षे प्राप्ते—उच्यते—"**रश्म्यनुसारी**"। विद्वान् नियमेन रश्मीन् अनुसृत्यैव गच्छति। 'एतैरेव रश्मिभिः' इत्येवकारस्य क्रियासङ्गतैवकारत्वाभावेनात्यन्ता-योगव्यवच्छेदकत्वासंभ(त्वाभा)वेनान्ययोगव्यवच्छेदकत्वस्यैव वक्तव्य-त्वात्। यदुक्तम्—निशि मृतस्य रश्म्यसम्भवात् रश्मीन् अनुसृत्य गमनं नोपपद्यत इति—तन्न। निदाघसमये हि रात्रावप्यूष्मोपलम्भात् रश्मिसम्भवः। हेमन्तादौ तु हिमाभिभवात् दुर्दिन इवोष्मानुपलम्भः। श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः। 'तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्च, एवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमञ्चामुञ्च। अमुष्मादादित्यात् प्रतायन्ते, ता आसु नाडीषु सृप्ताः। आभ्यो नाडीभ्यः प्रतायन्ते, तेऽमुष्मिन्नादित्ये सृप्ताः' इति—इति ॥

**स ओमिति वाहोद्वा मीयते**। सः विद्वान्, 'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः', 'तस्योदिति नाम' इति च प्रमाणप्रसिद्धं परमात्मनाम(त्मानम्) **आह** कीर्तयति, कीर्तयन्नेव च

---

स ओमिति वाहोद्वा मीयत इति। अत्र शाङ्करे, 'वा हेति निपातद्वयमवधारणार्थम्। उदिति ऊर्ध्वमित्यर्थकम्। मीयते

न्मनः, तावदादित्यं गच्छति।

---

**मीयते** प्रमीयते च। मरणकाले तस्य भगवन्नामस्मरणं सम्भवति। यद्वा—स एतैः रश्मिभिरुन्मीयते [उन्नीयते च। एको] वाशब्दोऽवधारणार्थः। **स यावत्....गच्छति।** मनोवेगेनाऽऽदित्यं स गच्छतीत्यर्थः। न च, 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' इति त्वरावचनेन रश्म्यनुसारिमार्गस्य मार्गान्तरवैलक्षण्यप्रतीतेर्मार्गभेदः शङ्क्यः; **"अर्चिरादिना तत्प्रथितेः"** इत्यधिकरणे नानाशाखासु तस्यैव मार्गस्य **प्रथितेः** प्रत्यभिज्ञानादर्चिरादिरेक एव मार्गः। अतोऽर्चिरादिनैव मार्गेण विद्वान् गच्छतीति समर्थितत्वात्। 'स यावत्क्षिप्येन्मनः' इति त्वरावचनस्य, काश्मीरापेक्षया मगधान् क्षिप्रं गच्छतीतिवत् गन्तव्य स्वर्गाद्यपेक्षया आदित्यगमनस्य शैघ्र्येणाप्युपपत्तेर्न दोषः।

---

गच्छति। तथाच ओमित्यनेनैव करणेन ऊर्ध्वं वा गच्छतीत्यर्थः। वाकारः, 'अविद्वांश्चेत्—तिर्यग्गच्छति प्रकारान्तरेण' इति ज्ञापनार्थः' इति व्याख्यातम्। इह तु योजनाद्वयम्; आहेति च छेदः। ओमिति वा उदिति वा भगवन्नाम्ना तं भगवन्तमाह अथ मीयते=म्रियत इत्येका। ओमित्येव परमात्मानमाह; उन्मीयते उन्नीयते च रश्मिभिरित्यन्या। अस्मिन् पक्षे पूर्वो वाशब्दोऽवधारणे; उत्तरः चार्थे। विकल्पार्थकत्वमपि संभवति—ओमित्याह वा; वागिन्द्रियवैकल्ये साधननिष्पत्तिं पश्यता भगवता तन्निरपेक्षमनुगृह्यते वेति। सर्वमिदमर्थक्रमात् शरीरादुत्क्रान्तेः प्राक् द्रष्टव्यम्। प्रकृतदहरविद्यानिष्ठस्य मन्त्रः प्रणव इति तावन्मात्रोक्तिः। तैत्तिरीयेऽपि दहरविद्याम्, 'तस्मिन् यदन्तस्तदुपासितव्यम्' इत्युक्त्वा, 'यद्वेदादौ स्वरः प्रोक्तः' इति प्रणव उक्तः।

एतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥

तदेष श्लोकः—

शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका ।

तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ।

उत्क्रमणे भवन्ति ॥ इति अष्टमाध्याये षष्ठः खण्डः ।

अथ अष्टमे सप्तमः खण्डः

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपि-

---

**एतद्वै....अविदुषाम्** । **विदुषां** ब्रह्मलोकस्य द्वारं **प्रपदनं** प्रपद्यतेऽनेनेति **प्रपदनं** प्राप्तिसाधनम् (मार्गः) य आदित्यः । द्वारापेक्षया नपुंसकनिर्देशः **एत**दिति । अविदुषाञ्च **निरोधो** रोधकः । अविद्वांसो हि सूर्यमण्डलभेदासामर्थ्यान्न गन्तुं शक्नुवन्तीत्यर्थः ।

**तदेष श्लोकः** । **तत्** तस्मिन् विषये **एषः** वक्ष्यमाणः श्लोकः प्रवृत्त इत्यर्थः । **शतञ्च....भवन्ति** । मूर्धन्यनाड्या गच्छन् मुक्तिं प्राप्नोति । विष्वगतयः नानागतय इतरनाड्यस्तु उत्क्रमणमात्रे [प्र]भवन्ति ; न त्वमृतत्वसाधनीभूतोर्ध्वगताविस्यर्थः । यद्वा विष्वगुत्क्रमणे अन्या नाड्य उपयुज्यन्त इत्यर्थः । शिष्टं स्पष्टम् ॥ (८-६) एवं **दहरविद्यां** समाप्य तदङ्गभूतां **प्रत्यगात्मविद्यां** प्रस्तौति **य आत्मा...**।

---

अपहतपाप्मत्वसत्यकामत्वसत्यसंकल्पत्वविशिष्टतया परमात्मा प्रागुक्तः । तदुपासनेन जीवस्य सर्वलोककामसिद्धिः संकल्पमात्रेणेत्युक्तम् । तदर्थतया चायं परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इत्युक्तम् । तत् स्वं रूपमपहतपाप्मत्वाद्येवेति दर्शयितुं प्रजापतिविद्या प्रस्तूयते ।

नन्वियं प्रजापतिविद्या जीवमात्रपरेति कथं ज्ञायते । यावता प्राक् परमात्मगततया प्रस्तुतानामपहतपाप्मत्वादीनामेवोक्त्या परमा-

त्मपरत्वमेवोपक्रमे प्रतीयते। न च निरुपाधिकापहतपाप्मत्वादिविशिष्ट-परमात्मग्रहणसंभवेऽन्यादृशजीवपरतया योजनं युक्तम्। अवश्य-ग्राह्यश्च परमात्मैव। जीवग्रहणे, 'सर्वांश्च लोकान् आप्नोति, सर्वांश्च कामान्' इति अत्र फलनिर्देशस्यानुपपन्नत्वात्। न हि शुद्धजीवोपासिन इदं फलं प्रामाणिकमन्यत्र कैवल्यात्। उपरि देहादिविलक्षणत्व-जाग्रदाद्यवस्थाभाक्त्वादिना एतन्निरूपणात् अयं जीव एवेति चेत्—उपक्रमानुरोधेनोपसंहारोऽन्यथा नीयताम्। कथमिति चेत्—इत्थम्। प्रजापतिना तावत् परमात्मैव, 'य आत्माऽपहतपाप्मा' इत्यनेन विव-क्षितः। तद्वाक्यार्थबुभुत्सया समुपसन्नौ इन्द्रविरोचनौ। 'य एषोऽ-क्षिणि पुरुषः' इति च ताभ्यां तेन परमात्मैवोपदिष्टः। यथा उप-कोसलविद्यायामधस्तात्, यथा च बृहदारण्यके (६·२, ७·५)। अत एव, 'एतदमृतमभयमेतद् ब्रह्म' इति ब्रह्मत्वमपि अत्रोक्तं घटते। एवं तद्वाक्यार्थानवबोधेन अक्षिगतप्रतिबिम्बपरत्वभ्रान्त्या ताभ्यामुदका-दर्शगतप्रतिबिम्बसाम्येन प्रश्ने कृते, 'किमेतौ एतावतैव तृप्यतः' इति परीचिक्षिषया विवेकोत्पिपादयिषया च उदशरावे आत्मावलोकनं कारितं प्रजापतिना। अतो देहात्मभ्रान्तिनिवारणस्य कर्तव्यत्वे प्राप्ते पुनःपुनरुपसन्नमिन्द्रं प्रति जाग्रदाद्यवस्थापन्नतन्निर्मुक्तजीवस्वरूपं प्रसङ्गादुपदेष्टव्यं प्राप्तम्। एवमपि स्वविवक्षितं परमात्मानमेव, उपर्यपि, 'स उत्तमः पुरुषः' इति मध्ये स्वयमाह। 'तं वा एतं देवा आत्मानमुपासते' इति उपसंहारवाक्यमपि परमात्मपरमेव। तं प्रक्रान्तापहतपाप्मत्वादिविशिष्टम्, एतं देहादिविलक्षणजीवोपसंपद-नीयमात्मानमिति तदर्थः। अतः प्रजापतिविद्याऽपि, 'अपहतपाप्मा दिव्यो देव एको नारायणः' इति प्रसिद्धपरविषयविद्यैवेति।

अत्रोच्यते। एवमपि जीवस्यापहतपाप्मत्वादिकं नैवासिद्धम्। 'सर्वे पाप्मानः प्रदूयन्ते', 'एतं ह वाव न तपति–किमहं पापमकरव-मिति', इति श्रुत्यन्तरप्रतिपन्नत्वात्। इहापि, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति अपहतपाप्मत्वाद्यपिपासत्वान्तस्थितिर्दर्शि-

तैव। सत्यकामत्वसत्यसंकल्पत्वे तु, 'स यदि पितृलोककामो भवति' इत्यादिना प्रागेवोक्ते। 'निरञ्जनः परमं साम्यमुपैति' इति च परमसाम्यमापन्नस्य जगद्व्यापारवर्जं सर्वसद्भावात् अपहतपाप्मत्वादिकमुत्सर्गसिद्धमिति।

सिद्ध्यतु जीवस्यापि तत्। तथापि प्रजापतिविद्यायाः जीवविद्यात्वं किमिति वर्णितमिति चेत्—स्वारस्यदृष्ट्यैव। तथाहि—

किमिति तावत् प्रजापतिः, 'य आत्माऽपहतपाप्मा' इत्यादिवाक्यमैतिह्यरूपेण सुरासुरान् श्रावयामास? न खलु गोपनीयं परमात्मतत्त्वं सर्वेभ्यः समुपदेष्टुमुद्रिक्तकरुणस्य प्रजापतेरियमुद्घोषणेति साम्प्रतम्। किं तर्हि? पितामहोऽसौ स्वसन्तानभूतानां सुरासुराणां देहात्माभिमानातिरेकसमुज्जृम्भितं मिथोवैरमालक्ष्य तमभिमानमपनेतुमनाः आत्मतत्त्वशुश्रूषाजननाय तदौन्मुख्यं संपादयितुं य आत्मेत्यादिवाक्यं सर्वतः प्रचारयामास। यथाप्रतीक्षञ्च सर्वे तद्बुभुत्सन्त। अथ स्वप्रधानभूतेन्द्रविरोचनमुखेन तेषु सुरासुरेषु पश्चात् तदधिजिगमिषितवत्सु, तावुभौ असंविदानौ अत्यक्तवैरौ च समाजग्मतुः। अथ देहप्रतिबिम्बे आत्मत्वबुद्धौ तयोर्जातायाम्, तावतैव च विरोचने तृप्ते प्रतिबिम्बस्य च बिम्बसमृद्ध्यधीनसमृद्धिकतया बिम्बभूतदेहपोषणप्रवणे, इन्द्रः परं प्रतिबिम्बस्य शरीरदोषानुविधायिदोषवत्त्वमुत्प्रेक्ष्य पुनराजगाम। अनेनाऽऽत्मगुणतयोक्तं विजरत्वविमृत्युत्वादि अत्र प्रतिबिम्बे बिम्बे च न भवतीति न स आत्मेति दर्शितं भवति। अथ स्वप्नावस्थे उपदिष्टे, तत्रापि 'अपि रोदितीव' इति दोषविमर्शो विहितः। तेन तत्र विशोकत्वाद्यभावो वेदितो भवति। अथ सुषुप्त्यवस्थे उपदिष्टे, 'नायं जानाति; विनाशमेवापीतो भवति' इति सत्यकामत्वसत्यसंकल्पत्वयोः सर्वथैवाप्रसक्तिस्तत्र ज्ञापिता। अथैवंमननसमर्थमिन्द्रं प्रति, शरीरं विहाय स्थित आत्मैव स्वरूपतोऽपहतपाप्मत्वादिविशिष्टो भवतीति,

इन्द्रो हैव देवानामभिप्रवव्राज; विरोचनोऽसुराणाम्। तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः॥

तौ ह द्वात्रिँशतं वर्षाणि ब्रह्मचर्यमूषतुः। तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति। तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते। तमिच्छन्ताववास्तमिति।

तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति।

---

स्पष्टम्। **इन्द्रो हैव असुराणाम्**। देवानां मध्ये इन्द्रश्च, असुराणां मध्ये विरोचनश्च प्रजापतिसमीपं गन्तुं प्रस्थिताविर्त्यथः। **तौ हासंविदानौ....आजग्मतुः**। असंविदानौ परस्परासूयया परस्परसम्मन्त्रणमकुर्वन्तावित्यर्थः। शिष्टं स्पष्टम्।

**तौ....ऊषतुः**। द्वात्रिंशद्वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यं चेरतुरित्यर्थः। **तौ ह...अवास्तमिति**। किं प्रयोजनमुद्दिश्य [उवाम् ?] उषितवन्ताविति पृष्टवानित्यर्थः। **तौ होचतुः...**। य आत्माऽपहतपाप्मेत्यादि हि **भगवतः** पूज्यस्य तव वचो वेदयन्ते ऐतिह्यरूपेण जनाः। **तमिच्छन्ताववास्तम्**=तज्ज्ञानमिच्छन्तावावां ब्रह्मचर्यमुषितवन्ताविति तौ प्रजापतिं प्रत्यूचतुरित्यर्थः। **अवास्त**मिति पुरुषव्यत्ययः छान्दसः।

**तौ ह...ब्रह्मेति**। अत्र, "य एषोऽक्षिणि पुरुषो दृश्यते"

**अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति । एष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति स होवाच ॥**

**इति अष्टमाध्याये सप्तमः खण्डः**

---

इति नेहाक्षिपुरुषः परमात्मा । 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्युपक्रम्य स्वप्नाद्यवस्थानामभिधानात् । न चायं छायादिपुरुषः प्रजापतिना उपदिश्यते, आत्मजिज्ञास्वोरुपसन्नयोस्तयोस्तदुपदेशायोगात् । आत्मत्वामृतत्वाभयब्रह्मत्वाद्ययोगाच्च । अतोऽत्र प्रजापतिना प्रत्यगात्मैवोपदिश्यते । न चेहाक्षिणि जीवस्थितिरुपदिश्यते, अपितु अक्षिप्रसादविकाराभ्यां जीवस्य स्थितिगती निश्चीयेते । अतोऽक्ष्णो जीवस्थितिगतिसूचकत्वाद**क्षिणि दृश्यत** इत्युक्तम् । कर्मणः सामर्थ्यसूचकत्वाभिप्रायेण, अस्मिन् कर्मणि अस्य सामर्थ्यं दृष्टमितिवत् । ततश्च गृहे स्थित्वा निर्गच्छन् पुरुषो यथा गृहादन्यः, एवं शरीरे स्थितिगतिमान् आत्माऽपि शरीरादन्य इत्युक्तं भवति । **अमृत**मिति निरतिशयसुखरूपत्वम्, **अभय**मिति दुःखासम्भिन्नत्वम्, **ब्रह्म**ेत्यसङ्कुचितविज्ञानतया बृहत्त्वं चोक्तम्" **इति व्यासार्यै**रुक्तम् ।

**अथ....इति ।** एवं प्रत्यगात्मनि प्रजापतिनोपदिष्टे, छायापुरुषः आत्मेत्युपदिष्ट इति भ्रान्त्या स्वगृहीतच्छायापुरुषात्मत्वदृढीकारणाय जलादर्शादिप्रतिबिम्बोऽप्यक्षिप्रतिबिम्बाभिन्नात्मैव उत तद्भिन्नोऽनात्मेत्यभिप्रायेण पप्रच्छतुरित्यर्थः । एवं ताभ्यां पृष्टः प्रजापतिः तयोर्भ्रान्तिमनिराकुर्वन्नेवाह—**एष....होवाच ।** यश्चक्षुषि दृश्यत्वेन मयोक्तः, स आत्मा सर्वान्तरो जलादिष्वपि न भिद्यत इत्युत्तरं ददा-

वित्यर्थः । शिष्यभ्रान्तिमनिराकृत्य तद्भ्रान्तिदृढीकरणायेत्थमुत्तरं ददत आचार्यस्यायमभिप्रायः—सुरासुरेन्द्रौ इन्द्रविरोचनौ स्वात्मनि अध्यारोपितपाण्डित्यमहत्त्वातिशयौ ; तथैव जगति प्रसिद्धौ च । तत् यदि 'युवां भ्रान्तौ' इति ब्रूयाम्, तदा चित्तावसादात् पुनः प्रश्नग्रहणधारणेषु भग्नोत्साहौ स्याताम् । अतो यथाश्रुतप्रश्नमात्रस्योत्तरमिदानीं वक्तव्यमिति । अनेन चोत्तरेण पूर्वोत्पन्नप्रतिबिम्बात्मभ्रमो दृढीभवति चेत्—भवतु । दृढीभूतोऽपि स भ्रम उदशरावनिरीक्षणनियोजनोपायेनापनेष्यत इति [च] । अत एव तद्भ्रमापनयनार्थमेव[माह], 'उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथः तन्मे प्रब्रूतम्' इति उदशरावावेक्षणे तौ नियुयोज । अत्र **व्यासार्यैः,** एतादृशाभिप्रायपरिकल्पनस्यातिक्लिष्टत्वात्, 'योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति । एष उ एवैषु सर्वेष्वन्तेषु परिख्यायत' इत्येतावान् सर्वोऽशोऽपि प्रश्न एव । प्रश्नवाक्यमध्यगत **इति**शब्दः प्रश्नान्ते निवेशयितव्यः । **इति स होवाचे**त्येतत् उत्तरस्योदशरावब्राह्मणस्य शेषभूतम् । 'उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथः, तन्मे प्रब्रूतमितीति होवाचेत्युत्तरेणान्वयः । तत्र च एक **इति**शब्दः समाप्ति द्योतकः । अन्यस्तु प्रकारवचनः । अथवा कतम एष इति' इत्यत्र **इति**शब्दो वक्ष्यमाणवचनः । अन्यत्र तूक्तवचनः । यद्वा प्रश्नवाक्ये प्रथम **इति**शब्दः प्रकारवचनः, द्वितीयस्तु प्रश्नसमाप्तिद्योतकः । **स होवाचे**ति तूत्तरशेषभूतम् । **प्रब्रूतमिति** सहोवाचेत्यन्वय इत्येवं न इतिशब्दद्वयवैयर्थ्यम्' इत्यभिप्रेत्य, "प्रजापतिहृदयानभिज्ञानेन छायापुरुष

अष्टमे अष्टमः खण्डः

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति। तौ होदशरावेऽवेक्षाञ्चक्राते। तौ ह प्रजापतिरुवाच—किं पश्यथ इति। तौ होचतुः, सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति।

---

उपदिष्ट इति मत्वा पुनः पप्रच्छतुः—'योऽयं भगवोऽप्सु परिख्यायत' इत्यादिना। सर्वेष्वन्तेषु नेत्रादिस्थानेषु परिख्यायते कतम एष इत्यर्थः" इत्युक्तम्। चक्षुरादिप्रतिबिम्ब एवात्मेति स्वग्रहणदार्ढ्यार्थं पुनरपि पप्रच्छतुरिति भावः। अप्सु परिख्यायते, आदर्शे परिख्यायते इत्येवंप्रकारेण जलादिष्वन्तेषु स्थानेषु यो दृश्यते, स नेत्रे दृश्यमान एष भवदुक्त एव किम्, उतान्यः, कतम एष इत्यर्थ इति व्यासार्याणामभिप्रायः॥ (८-७)

**उदशरावे....प्रब्रूतमिति।** उदकपूर्णे [उद]शरावे आत्मानं दृष्ट्वा आत्मसम्बन्धिनमनुपपन्नतया भासमानं सम्यगनवगतमंशं युवां वदतमितीत्युक्तवानित्यर्थः। **तौ होदशरावेऽवेक्षाञ्चक्राते।** तौ प्रतिबिम्बमवलोकितवन्तौ। अवलोक्यापि दोषास्फुरणात् तूष्णीमुषितवन्तौ। तयोरनुपपत्त्यस्फुर्तिं ज्ञात्वा, किं पश्यथ इति स्वयमेव प्रजापतिरुवाचेत्याह—**तौ ह प्रजापतिरुवाच किं पश्यथ इति। तौ होचतुः....प्रतिरूपमिति।** इदं प्रतिरूपमात्मानं पश्याव इति प्रतिबिम्बात्मभ्रममेवोद्घाटितवन्तावित्यर्थः।

---

यदात्मनो न विजानीथ इति। अपहतपाप्मत्वादिगुणाष्टके यदि कोऽप्यंशोऽत्र नास्ति, तर्हि पुनरागन्तव्यमिति गुरोर्गूढ आशयः।

तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षे(क्ष्ये)थामिति। तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते। तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥

तौ होचतुः—यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्वः, एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ

---

**तौ ह...अवेक्षेथामिति।** तौ ह **अवेक्षाञ्चक्राते। तौ ह.... पश्यथ इति।** स्पष्टोऽर्थः। **तौ होचतुः....परिष्कृताविति।** आवां साध्वलङ्कृतौ भवाव इतीदं यथैव तथैव इमावपि प्रतिबिम्बौ साध्वलङ्का-रादियुक्ताविती‌ति प्रत्यूचतुरित्यर्थः। अत्र उदशरावावेक्षणालङ्कृतदेहप्रति-बिम्बनिरीक्षणयोर्नियुञ्जानस्य प्रजापतेरयमभिसन्धिः—आगमापायशालि द्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूत-केशनखवस्त्रालङ्कारादिलक्षणदोषगुणयुक्ताव्य-वस्थितदेहानुकारिदोषगुणवत्त्वात् देहवत् त(द्त)त्प्रतिबिम्बोऽप्यनात्मा निरतिशयसुखत्व-दुःखासम्भिन्नत्वलक्षणामृतत्वाभयशून्य इति जानीत-मिति। एवं द्विविधनियोजनेऽपि तयोरप्रक्षीणकल्मषतया दोषादर्शनेन प्रतिबिम्बात्मभ्रमो नापनीतः। ततः प्रजापतिः, 'भ्रान्तिनिवारणार्थं मया कृतस्य द्विविधप्रतिबिम्बदर्शनस्याभिप्रायमिमौ अप्रक्षीणकल्मषत्वान्नाव-गच्छतः। प्रत्यक्षं, 'युवां भ्रान्तौ' इति वक्तुमप्यनर्हौ। तदिदानीमेत-दीयहृदयानुरोधेन प्रतिबिम्बमेव निर्दिश्य सर्वान्तरं परमात्मानं मनसि निधाय एष एवात्मेत्युपदेशेन तयोराकाङ्क्षां निवर्तयिष्यामि। कालेन कल्मषे प्रक्षीणे मद्वचनसन्दर्भस्य सर्वस्याप्यभिप्रायं स्वयमेवावगमिष्यतः [इति,] विचिकित्समानौ वा(पुनः) मत्समीपमागमिष्यतः' इति मत्वाऽऽह

विति। एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति। तौ ह शान्तहृदयौ प्रवव्रजतुः॥ ३॥ तौ हान्वीक्ष्य प्रजापतिरुवाच—अनुपलभ्यात्मानमननुविद्य व्रजतः। यतर एतदुपनिषदो भविष्यन्ति देवा वा असुरा वा, ते पराभविष्यन्तीति।

स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम। तेभ्यो

---

**एष....ब्रह्मेति।** स्पष्टोऽर्थः। **तौ....प्रवव्रजतुः। शान्तहृदयौ** निवृत्ताकाङ्क्षावित्यर्थः।

**तौ हान्वीक्ष्य प्रजापतिरुवाच।** एवं तयोः प्रतिनिवृत्तयोस्सतोः प्रजापतिः भ्रान्तिगृहीतार्थश्रद्धया 'इमौ विनष्टौ' मा भूतम्, 'य आत्मा' इति वचनवत् कर्णाकर्णिकया शृणुतामित्यभिप्रेत्योवाचेत्यर्थः। उक्तिमेवाह—**अनुपलभ्य...भविष्यन्तीति।** एताविन्द्रविरोचनौ आत्मस्वरूपं श्रवणमननाभ्यामज्ञात्वा **व्रजतः** गच्छतः। **यतरे** देवा वा असुरा वा **एतदुपनिषदो भविष्यन्ति।** **उपनिष**च्छब्दः उपदेशपरः। अनयोरुपदेशात् भ्रान्तिगृहीतार्थनिश्चया ये भविष्यन्ति, ते **पराभविष्यन्ति** नित्यसंसारिणो भविष्यन्तीत्यर्थः।

**स ह....प्रोवाच।** विरोचनस्तु प्राजापत्यस्य त्रिविधदेहच्छाया-

---

कर्णाकर्णिकयेति। तथाच नेयं तौ प्रति साक्षादुक्तिः। व्रजत इति प्रथमपुरुषविरोधात्। विरोचनस्याप्येतच्छ्रवणे निवृत्त्यसंभवाच्च। अतो वचनमिदमात्मगतं वा, अन्तिकस्थयत्किञ्चित्पुरुषं प्रति वेत्याशयः। उपदेशपर इति देहात्मभ्रमकरवाक्यजातस्य रहस्यत्वरूपोपनिषत्त्वायोगादेवमर्थ इति भावः। अस्यैव वाक्यजातस्य रहस्यत्वं भ्रान्तशिष्यबुध्द्या स्थितं कृत्वा एवं प्रयोग इत्यपि सुवचम्। एतदुपनिषदो भविष्यन्ति = उक्तं वाक्यमुपनिषत्त्वेन ग्रहीष्यन्तीति यावत्।

हैतामुपनिषदं प्रोवाच—आत्मैवेह महय्य आत्मा परिचर्यः। आत्मान-मेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमञ्चामुञ्चेति ॥ ४ ॥

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुः, आसुरो बतेति। असुराणाँ ह्येषोपनिषत्। प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति सँस्कुर्वन्ति। एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥

इति अष्टमाध्याये अष्टमः खण्डः

---

दर्शननियोगस्य, देहानुकारित्वाच्छायायाः देह एवात्मेति सूचने तात्पर्यम् अलङ्कृतदेहच्छायां निर्दिश्य, 'एष आत्मा' इत्युपदेशस्य, 'नीलानीलयो-रादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तत् महार्घम्' इति वचनस्य छाया-निमित्ते वाससीव, अलङ्कृतदेहे तात्पर्यमिति मन्वानः, 'देह एवात्मा अलङ्कारादिभिः परिचरणीयः' इति निश्चित्य राज्यं प्राप्य असुरेभ्यः तथोपादिक्षदित्यर्थः। **आत्मैवेह महय्य....अमुञ्चेति। आत्मैव** देह एव **महय्यः** पूज्य इत्यर्थः। **उभौ लोकाविति**। सर्वलोकसुखानु-भवोऽपि शरीरगत एवेति भावः। शिष्टं स्पष्टम्।

स सम्प्रदायोऽद्याप्यनुवर्तत इत्याह **तस्मात्....उपनिषत्।** यस्मादसुरेभ्य एवेयमुपनिषत् प्रवृत्ता, तस्मात् **इह** लोकेऽद्यापि शिष्टा यागदानश्रद्धाविधुरं पुरुषमसुरस्वभाव इत्याहुः। अत्र हेतुः **असुराणां ह्येषोपनिषत्**। यागदानश्रद्धावैमुख्यहेतुभूता नास्तिक्यबुद्धिरसुराणामेव हीत्यर्थः। **प्रेतस्य शरीरं....मन्यन्ते**। यत एवं देहस्यैवाऽऽत्मतया परिचरणीयत्वम्, अत एव **प्रेतस्य** मृतस्य शरीरं भिक्षित्वा वस्त्राल

---

इमञ्चामुञ्चेति। देवासुराणां मनुष्याधिकशक्तिसंपत्त्या तेनैव देहेन सर्वलोकसञ्चारात् मनुष्यवत् देहान्तरापेक्षणाप्रसक्तेः देहा-त्मभ्रमो निरूढो विरोचनस्य।

अष्टमे नवमः खण्डः

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श—यथैव खल्वयमस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति, सुवसने सुवसनः, परिष्कृते परिष्कृतः, एवमेवायमस्मिन्नन्धेऽन्धो भवति, स्रामे स्रामः, परिवृक्णे परिवृक्णः। अस्यैव शरीरस्य नाशमन्वेष नश्यति। नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

स समित्पाणिः पुनरेयाय। तँ ह प्रजापतिरुवाच—मघवन् यच्छान्तहृदयः प्राव्राजीः, सार्धं विरोचनेन, किमिच्छन् पुनरागम

---

ङ्कारादिभिः पूजयन्ति, कुणपसंस्कारेणैव परलोकजयं मन्यमाना इत्यर्थः ॥

**अथ....ददर्श।** इन्द्रस्य शुद्धान्तःकरणत्वात् देहात्मभ्रमोऽपि नाभूत्। स स्वराज्यं प्राप्य देवेभ्यः तदुपदेशात्प्रागेव मध्येमार्गं प्रतिबिम्बात्मन्यपीमं वक्ष्यमाणं दोषमपश्यदित्यर्थः। **यथैव....परिष्कृतः।** अयं देहप्रतिबिम्ब इत्यर्थः। **परिष्कृते** अपाकृतनखलोमादिके इत्यर्थः। **एवमेव....पश्यामीति।** नासिका यस्य सदा स्रवति, स **स्रामः।** छिन्नपाणिपादः **परिवृक्णः।** प्रतिबिम्बस्य बिम्बभूतशरीरगतसाध्वलङ्कृतत्वसुवसनत्वपरिष्कृतत्वानुविधायित्ववत् तद्गतान्ध्य-स्राम्य-परिवृक्णत्व-नाशानुविधायित्वावश्यम्भावेनामृतत्वाभयत्वात्मत्वादिकं न संभवतीत्यमन्यतेत्यर्थः।

**स समित्पाणिः....उवाच।** सः इन्द्रः **एयाय।** प्रजापतिमिति शेषः। **मघवन्....पुनरागम** इति। हे मघवन् शान्तहृदयः शान्तदोषशङ्को विरोचनेन सार्धं **यत्** यः(यस्मात्)त्वं **प्राव्राजीः** गतवान्, सः किं प्रयोजनमभिलषन् पुनरागतोऽसीत्यर्थः। **आगम** इति गमेर्लुङि

---

भिक्षित्वेति। मृतस्य भिक्षाभोक्तृत्वायोगात् भिक्षयेत्यस्य भिक्षित्वेत्यर्थ उक्तः।

इति । स होवाच यथैव खल्वयं भगवोऽस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति, सुवसने सुवसनः, परिष्कृते परिष्कृतः, एवमेवायमस्मिन्नन्धेऽन्धो भवति, स्रामे स्रामः, परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति। नाहमत्र भोग्यं पश्यामीति ॥ २॥

एवमेवैष मघवन्निति होवाच, एतं त्वेव ते भूयोऽनुव्याख्यास्यामि। वसापराणि द्वात्रिँशतं वर्षाणीति। स हापराणि द्वात्रिँशतं वर्षाण्युवास। तस्मै [स] होवाच ॥३॥ इति अष्टमाध्याये नवमः खण्डः॥

अष्टमे दशमः खण्डः

य एष स्वप्ने महीयमानश्चरति, एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति। स ह शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवानेतद्भयं ददर्श। तद्यद्यपीदँ शरीरमन्धं भवति, अनन्धः स भवति; यदि स्राममस्रामः; नैवैषोऽस्य दोषेण दुष्यति ॥ १॥ न वधेनास्य

---

ल्दित्वादङ्। **स होवाच....पश्यामीति** । उक्तोऽर्थः ।

**एवं....उवास** । हे मघवन्! त्वदुक्तं सत्यमेव । उक्तमिममेवाऽऽत्मानं पुनरपि त्वदुक्तदोषशून्यतया प्रतिपादयिष्यामि । अन्तःकरणशुद्ध्यर्थमितोऽपि द्वात्रिंशतं वर्षाणि ब्रह्मचर्ये वसेति प्रजापत्याज्ञप्तो मघवांस्तथैव कृतवानित्यर्थः । **तस्मै होवाच** । एवमुषितवते इन्द्राय प्रजापतिर्वक्ष्यमाणमुवाचेत्यर्थः ॥ (८-९.)

**य एष....ब्रह्मेति** । यः स्वप्ने स्त्र्यादिभिः **महीयमानः** पूज्यमानश्चरति, एषः स्वप्नद्रष्टा निरतिशयसुखत्वादिलक्षणामृतत्वादियुक्त

---

प्राव्राजीः । सुनिश्चितार्थस्य पुनरनिवर्तमानस्येव ते प्रकृष्टं व्रजनमासीदित्यर्थः। एवं प्रागपि ।

यदि स्राममस्राम इत्यस्य, यद्यपीदं शरीरं स्रामं भवति,

हन्यते, नास्य स्राम्येण स्रामः। घ्नन्ति त्वेवैनं विच्छाद(य)यन्तीव ; अप्रियवेत्तेव भवति ; अपि रोदितीव। नाहमत्र भोग्यं पश्यामीति॥२॥

स समित्पाणिः पुनरेयाय । तँ ह प्रजापतिरुवाच—मघवन् यच्छान्तहृदयः प्राव्राजीः, किमिच्छन् पुनरागम इति । स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स|भवति, यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति।॥३॥ न वधेनास्यहन्यते नास्य स्राम्ये(मे)ण स्रामः। घ्नन्ति त्वेवैनं विच्छादयन्तीव । अप्रियवेत्तेव भवति । अपि रोदितीव । नाहमत्र भोग्यं पश्यामीति । एवमेवैष मघवन्निति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिँशतं वर्षाणीति । स हापराणि द्वात्रिँशतं वर्षाण्युवास । तस्मै होवाच ॥

इति अष्टमाध्याये दशमः खण्डः ।

---

आत्मेत्युक्तवानित्यर्थः । नायं पूर्वोक्तदेहगतान्ध्यस्राम्याद्यनुविधायित्व-लक्षणदोषदुष्ट इति भावः । **स ह शान्त...ददर्श** । उक्तोऽर्थः । तदेवाह—**तद्यद्यपि....स्रामः**। तदिदं शरीरं यद्यप्यन्धं भवति, तथाऽपि सोऽनन्धो भवतीति योजना । **सः** स्वप्नात्मा । शिष्टं स्पष्टम् । [**न वधेन...स्रामः**। स्वप्नात्मेति शेषः। स्पष्टोऽर्थः]। **घ्नन्ति त्वेवैनं विच्छादयन्तीव** । **एव**शब्द इवार्थः । **एनं** स्वप्नात्मानं केचन घ्नन्तीव, केचन **विच्छादयन्ति** द्रावयन्तीव भान्तीत्यर्थः । **अप्रिय....पश्यामीति ।** हन्यमानत्व-द्राव्यमाणत्व-बन्धुजनमरणाद्यप्रियवेत्तृत्व-रोदितृत्वादिदर्शनात् स्वप्नावस्थस्य न भोग्यत्वमित्यर्थः ॥ **स....होवाच**। उक्तोऽर्थः। (८-१०)

---

तथाप्यस्रामः स भवतीत्यनषङ्गसिद्धोऽर्थः। न वधेनेत्यादौ पूर्ववाक्यात् एष इति कर्तुरनुभङ्गः। अप्रियवेत्तेति। वेत्ता=प्राप्ता ।

अष्टमे एकादशः खण्डः

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, एष आत्मेति होवाच—एतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवानेतद्भयं ददर्श—नाह खल्वयमेवँ संप्रत्यात्मानं जानात्ययमहमस्मीति ; नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

स समित्पाणिः पुनरेयाय । तँ ह प्रजापतिरुवाच—मघवन् यच्छान्तहृदयः प्राव्राजीः किमिवेच्छन् पुनरागम इति । स होवाच नाह खल्वयं भगव एवँ संप्रत्यात्मानं जानात्ययमहमस्मीति, नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं

---

**तद्यत्र....ब्रह्मेति** । **यत्र** यदा **तदेतत्** स एष पुरुषः । 'सुपां सुलुक्' इति सोर्लुक् । **समस्तः** उपसंहृतकरणग्रामः । **संप्रसन्नः** बाह्यविषयसंपर्कजनितकालुष्यरहितः । शिष्टं स्पष्टम् । **स ह...ददर्श** उक्तोऽर्थः । दोषदर्शनमेवाह — **नाह खलु....पश्यामीति** । **अह** इत्याश्चर्ये । [**अयं** सुषुप्तः **संप्रति** सुषुप्तिकाले] अयमहमस्मीति विशेषज्ञानाभावेन स्वेतरभूतविषयकज्ञानाभावेन च सुषुप्तो विनष्टप्राय इत्यर्थः । **विनाशमेव** विनाशमिव । **अपीतः** अपिगतः ; विनष्टप्राय इत्यर्थः ।(अपि इत इतिच्छेदः ।)

**स....पश्यामीति** । उक्तोऽर्थः । **एवं....** । **एतस्मात्** पूर्वो-

---

संप्रति इत्यस्य ऋजु इत्यप्यर्थः प्रागुक्तो ग्राह्यः । अर्थद्वयमप्युक्तं शाङ्करे, 'सम्यक् इदानीञ्च' इति । अपीतः अपि इत इतिच्छेद इति पाठे अयमाशयः—विनाशमित्यनेनैवाप्ययस्योक्तत्वात् विनाशं गत इत्यर्थवर्णनाय इत इति पृथक्कार्यम् । अपिशब्दस्तु चार्थे इति ।

पश्यामीति । एवमेवैष मघवन्निति होवाच, एतं त्वेव ते भूयोऽनु-
व्याख्यास्यामि नो एवान्यत्रैतस्मात् । वसापराणि पञ्च वर्षाणीति ।
स हापराणि पञ्च वर्षाण्युवास । तान्येकशतँ संपेदुः ।

एतत् तत्, यदाहुः, एकशतँ ह वै वर्षाणि मघवान् प्रजापतौ
ब्रह्मचर्यमुवास । तस्मै होवाच । इति अष्टमाध्याये एकादशः खण्डः॥

अष्टमे द्वादशः खण्डः

मघवन् मर्त्यं वा इदँ शरीरमात्तं मृत्युना । तदस्यामृतस्याशरीर-

---

स्मात् अन्यत्र इतरत् नो व्याख्यास्यामि । किन्तु **एतमेव** पूर्वोक्तमेव
निर्दोषतया व्याख्यास्यामीत्यर्थः । **तान्येकशतं संपेदुः** । **तानि** वर्षा-
ण्याहत्य एकशतं संपन्नानीत्यर्थः । **एतत्...उवास** । एकशतं संवत्सरान्
इन्द्रः प्रजापतेः सन्निधौ ब्रह्मचर्यं चरन् उवासेति लोके प्रसिद्धतया
यदाहुः, तत् **एतत्** एवंविधम् = अनेन प्रकारेणेति यावत् । **तस्मै
होवाच** । एकशतवर्षब्रह्मचर्येनिर्मलीकृतान्तःकरणाय मघवते शुद्धात्म-
स्वरूपयोग्यतां परीक्ष्योपादिक्षदित्यर्थः । अनया चाख्यायिकया बहु-
कालब्रह्मचर्यनिर्मलीकृतान्तःकरणतया संपन्नोपदेशयोग्यत्वाय उपदेष्टव्य-
मित्यर्थः सूच्यते । [८-११]

**मघवन्...अधिष्ठानम्** । [वाशब्द (वैशब्द ?) एवार्थे ।]
हे मघवन् ! इदं शरीरमेव हि । **मर्त्यं** मरणधर्मि । न केवलं मरण-
धर्मित्वमात्रम्, अपितु मृत्युना **आत्तं** तद्ग्रासश्च (आक्रान्तश्च) । सतत-
विनाशशीलमिति यावत् । इदञ्च शरीरे हेयत्वानुसन्धानार्थमुक्तम् ।
एवंभूतं **तदिदं** शरीरं कर्मकृतशरीराहित्यलक्षणामृतत्वस्वरूपस्यात्मनो
भोगाधिष्ठानम् । कर्मवशेन जीवेन भोगार्थं परिगृहीतमित्यर्थः । ततश्चा-

स्यात्मनोऽधिष्ठानम्। आत्तो वै सशरीरः प्रियाप्रियाभ्याम्। न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः।

अशरीरो वायुः; अभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि। तद्यथैतानि अमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन

---

शरीरत्वमेव स्वरूपम्। सैवामृतत्वलक्षणा मुक्तिः। सशरीरत्वमेव (कर्मकृतशरीरत्वमेव) तदभाव इत्युक्तं भवति। ननु पुरुषार्थस्य हि मुक्तिरूपत्वं वक्तव्यम्। न ह्यशरीरत्वं पुरुषार्थः; अपितु दुःखाभावः। ततश्च तस्यैवामृतत्वरूपत्वमुचितम्; न त्वशरीरत्वस्येत्यत्राह — **आत्तो वै...प्रियाप्रियाभ्याम्**। स्पष्टोऽर्थः। तदेवोपपादयति--**न ह.... अस्ति**। कर्मारब्धशरीरयोगिनः तदनुगुणसुखदुःखयोगस्यावश्यम्भावित्वात् कर्मणाऽऽरब्धदेहसम्बन्धाभावस्य पुरुषार्थतया मुक्तिरूपत्वमुपपद्यत इति भावः। व्यतिरेकं दर्शयति—**अशरीरं....स्पृशतः**। वावशब्दः प्रसिद्धौ; अवधारणे वा। शिष्टं स्पष्टम्॥

**अशरीरो वायुः**—शिरःपाण्यादिलक्षणशरीरशून्यो वायुरित्यर्थः। **अभ्रं....एतानि**। अभ्रादीनि चाशरीराणीत्यर्थः। 'अभ्रं भूत्वा मेघो भवति' इत्यादिवत् अभ्रस्तनयित्न्वोरवस्थाभेदेन भेदो द्रष्टव्यः। अशरीराणाञ्च प्रियाप्रियानन्वयो दृष्ट इति भावः। **तद्यथा... निष्पद्यते**। अत्र व्यासार्यैः,

"वाय्वादीनामाकाशात् समुत्थानं नाम स्वकार्यकरणायोर्ध्वदेशे अभिवृद्धिः। **परशब्दो** वाय्वादीनां कारणावस्थावाची। **ज्योति**-

---

करणायेति। स्थितिकाल इति शेषः। अमुष्मादाकाशात् समु-

**रूपेणाभिनिष्पद्यन्ते, एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ।**

---

इशब्दस्तु कारणानां कार्योत्पादनद्वारेण तदभि(व्यञ्जक)व्यक्तिहेतुतया प्रयुक्तः । वाय्वादीनि च कारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारण-सदृशेन रूपेण विशिष्टानि भवन्ति । वायुर्हि आवहप्रवहादिरूपेण सप्त-विधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते । विद्युत्तु विद्युत्त्वं हित्वा तेजस्त्वेन । अभ्रस्तनयित्नू चाभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण । एवं जीवोऽपि मार्गविशेषेण देशविशेषविशिष्टं परं ब्रह्म प्राप्य संसारावस्थाप्रहाणेन परमात्मतुल्यरूपेणाविर्भवतीत्येवमर्थे सत्येव दृष्टान्तदार्ष्टान्तिकवाक्य-सामञ्जस्यं भवति" इति वर्णितम् ।

---

**स्थायेत्यस्य अभ्रादिकं अभ्रत्वादिरूपेण यत्राकाशे कार्यकरमासीत्, ततः समुत्थाय=तत्र तेन रूपेण कार्यकरणं विहायेत्यप्यर्थः सुवचः। महाभूतान्यवान्तरपरिणामात्मना स्थित्वा आकाशे कार्यं कृत्वा समुत्थाय अवान्तरपरिणामात्मतां परित्यज्य स्वं महाभूतरूपं लभन्ते, तद्वदित्यर्थ इति। अमुष्मादिति निर्देशः अस्माच्छरीरादिति वक्ष्यमाण-शरीरापेक्षया आत्मानं प्रति आकाशस्य विप्रकृष्टत्वात् । एष संप्रसाद इति सुषुप्तिवाचकस्य सुषुप्तविषयकस्य संप्रसादशब्दस्य प्रयोगः, यस्य संप्रसन्नस्यानात्मत्वमपुरुषार्थतया त्वया चिन्तितम्, स एव सुषुप्तौ स्वरूपाविर्भावाभावादपुरुषार्थवत् स्थितोऽपि, यदा शरीरात् समुत्थाय परं ज्योतिरुपसंपद्यते, न तु शरीर एव स्थित्वा तदन्तर्यामि-भूतमवतीर्णं ज्योतिः, तदा स्वरूपाविर्भावात् भोगभाग् भवतीति ज्ञापनाय। केवलं शरीरात् समुत्थानं वा, वैकुण्ठं प्रति वासुदेव-नीतधनञ्जयादेरिव केवलंपरज्योतिरुपसंपत्तिर्वा न स्वरूपाभिनिष्पत्ति-हेतुरिति ल्यबन्तद्वयनिर्देशः।**

इदञ्च वाक्यं **फलपादे** चिन्तितम्। **'स्वेन रूपेणाभिनिष्पद्यत'** इति देवादिरूपवत् साध्येन रूपेणाभिनिष्पत्तिरुच्यते। **अभिनिष्पत्ति**-शब्दस्याऽऽगन्तुकधर्मोत्पत्तिपरत्वात्। **स्व**शब्दः स्वात्मीयवचनः। आगन्तुकस्यापि रूपस्यात्मीयत्वात् **स्वेनरूपेणे**त्युपपद्यते। न तु, **'स्वेन रूपेणाभिनिष्पद्यते'** इत्यत्र **स्व**शब्दस्यात्मार्थकत्वं वा निष्पत्तिशब्दस्याऽऽविर्भावार्थकत्वं वा युक्तम्, स्वरूपस्य नित्यत्वेन तत्प्राप्तेरपुरुषार्थत्व प्रसङ्गादिति पूर्वपक्षे प्राप्ते उच्यते—**'संपद्याविर्भावः स्वेनशब्दात्'**। परंज्योतिरुपसंपद्य[स्थिते ?] स्वस्य रूपस्यैवाविर्भावः; न त्वागन्तुकात्मीयधर्मोत्पत्तिः। तथा हि सति, **'स्वेन रूपेणाभिनिष्पद्यत'** इत्यत्र **स्वेन**शब्दवैयर्थ्यप्रसङ्गात्। अतः **स्व**शब्दो नात्मीयवचनः; अपित्वात्मवचन

---

अपि त्वात्मवचन इति। ननु अभिनिष्पद्यत इत्यस्य उत्पद्यत इति पूर्वपक्ष्यभिमतोऽर्थः, आविर्भवतीति सिद्धान्त्यभिमत इत्येतावदेव वैलक्षण्यम्। तत्राभिनिष्पत्तेः प्राक् उपसंपत्तिकालेऽपि जीवस्य स्थितत्वात् कथं तस्योत्पत्तिरित्यत्र, धर्मिसत्त्वेऽपि तत्र रूपस्योत्पत्त्या तद्विशिष्टवेषेणोत्पत्तिः, 'रूपेणाभिनिष्पद्यत' इत्युच्यते, यथा आत्मा देवो जायत इति। यदि तत् रूपं स्वकीयं न स्यात्, जपाकुसुमारुण्यमिव स्फटिके औपाधिकं स्यात्, निष्पत्तिवचनमयुक्तं स्यादिति तदुपपादनाय स्वेनेति पदम्। एवं बन्धदशायां देहगतबालत्वादिनेव न पररूपेण निष्पद्यते, किंतु स्वेनेति च वक्तुमिदमिति पूर्वपक्षी। निष्पत्तिवचनादेव स्वकीयत्वसिद्ध्या स्वेनेति व्यर्थमेव स्यादिति स्वेनेति पदं स्वभावभूतेन = स्वस्मिन् सर्वदा वर्तमानेन इत्यर्थकमिति तादृशरूपस्योत्पत्त्ययोगात् अभिनिष्पद्यत इति पदमुत्पत्त्याविर्भावोभयसाधारणं प्रकृते आविर्भावपरमिति सिद्धान्ती। एवंस्थिते

एव । आविर्भावेऽप्यभिनिष्पत्तिशब्दो दृश्यते, 'युक्त्याऽयमर्थो निष्पन्नः', 'इदमेकं सुनिष्पन्नम्' इत्यादिषु ।

नन्वात्मनः पूर्वसिद्धत्वात् कथं तस्य पुरुषार्थत्वम् ? तत्राह— **"मुक्तः प्रतिज्ञानात्"** । **'स्वेन रूपेणाभिनिष्पद्यते'** इत्यस्य मुक्तो भवतीत्यर्थः। निवृत्ताविद्यातिरोधानो भवतीति यावत् । कथमिदमवसीयत इति चेत्—**प्रतिज्ञानात्** । जागराद्यवस्थात्रयकलुषितं जीवं प्रस्तुत्य, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि, नो एवान्यत्रैतस्मात्' इति तस्यैव अशरीरत्वलक्षणमुक्तत्वम्, **'मघवन् मर्त्यं वा इदं शरीरम्'** इत्यादिना चतुर्थेन पर्यायेण प्रतिपादयिष्यामीति प्रतिज्ञानात् । निवृत्ताविद्यातिरोधान[त्वलक्षण]स्य स्वेन रूपेण साध्यत्वमस्त्येवेति न पुरुषार्थत्वहानिः ।

---

**स्वेनेत्यस्य आत्मनेति कथमर्थः । तथा हि सति आत्माविर्भावस्यैव कथ्यमानतया स्वेनरूपेणेति पदद्वयमपि व्यर्थम् ; अभिनिष्पद्यत इत्येव पर्याप्तं स्यात् । स्वयम्प्रकाशत्वादात्मा प्रागेवाविर्भूत इति चेत्—तर्हि यत् प्रागनाविर्भूतं संप्रत्याविर्भवति, तत् रूपमात्मव्यतिरिक्तमात्मीयमेव स्यादिति कथं सिद्धान्ते स्वेनेत्यस्यात्मपरता ?**

**उच्यते । रूपशब्दस्तावत् धर्मविशिष्टधर्मिपर्यन्ते प्रयुज्यते, यथा घटस्वरूपम्, जीवस्वरूपम्, परमात्मस्वरूपम्, स्वरूपनिरूपकधर्मः, निरूपितस्वरूपविशेषणभूतो धर्म इत्यादौ । तद्वदिह ग्रहणे, आत्मनश्चिन्मात्रं स्वरूपमित्यादाविव स्वशब्द आत्मपरो युक्त एव। यदा तु ब्राह्मं रूपमपहतपाप्मत्वादीत्यादाविव रूपशब्दो धर्ममात्रपरः, तदा स्वशब्दः स्वभावपरत्वादात्मीयवचन एव । सर्वथा रूपमिदं देवादिरूपवत् आत्मबाह्यं किञ्चिन्न भवति, किन्तु यस्य धर्मस्याभावे धर्मी शशविषाणतुल्यः, तादृशस्वरूपनिरूपकधर्मात्मकमिति आत्मान्तर्गतमेवेति एतावदेवेहाभिमतमिति ।**

ननु निवृत्ततिरोधानस्याप्यात्मस्वरूपस्य कथञ्चित् साध्यत्वसम्भवेऽपि तस्य न पुरुषार्थत्वे प्रमाणमस्तीत्यत्राह-**"आत्मा प्रकरणात्"**। 'य आत्माऽपहतपाप्मा' इत्यादिवाक्यसन्दर्भप्रतिपाद्यापहतपाप्मत्वादिगुणाष्टकविशिष्टतयाऽत्यन्तानुकूलत्वेन परमपुरुषार्थभूतोऽयमात्मा। अपहतपाप्मत्वादीनां कथं जीवसम्बन्धित्वमित्यत्राह **प्रकरणा**दिति। अवस्थात्रयकलुषितं जीवं प्रकृत्यैवापहतपाप्मत्वादिगुणानामाम्नानादित्यर्थः इति स्थितम्॥

(२) **'स्वेन रूपेणाभिनिष्पद्यते'** इत्युच्यमानं स्वरूपं किमित्याकाङ्क्षायाम् अस्मिन् प्रकरणे अपहतपाप्मत्वादिगुणानामेवोपन्यासात्, सत्यसङ्कल्पत्वकार्यजक्षणादिभ्यश्च ब्रह्मसंबन्धिना अपहतपाप्मत्वादिगुणलक्षणेन[स्वेन]रूपेणाविर्भवतीति **जैमिनि**राचार्यो मन्यत इति **"ब्राह्मेण जैमिनिरुपन्यासादिभ्यः"** इति **जैमिनि**मतमुपन्यस्य, **'प्रज्ञानघन एव, विज्ञानघन एव'** इति ज्ञानैकरसत्वाम्नानेन निर्धर्मकत्वप्रतिपादनात् ज्ञानमात्रस्वरूपेणाविर्भवतीति, **"चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः"** इत्यौ**डुलोमि**मतमुपन्यस्य, **"एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः"** इति स्वसिद्धान्तमाविष्कृतवान्। तस्य चायमर्थः—**एवमपि** विज्ञानघनत्वेऽपि अपहतपाप्मत्वाद्युपन्यासेन, **"ब्राह्मेण जैमिनिरुपन्यासादिभ्यः"** इति पूर्वसूत्रोक्तब्राह्मरूपस्यापि सद्भा(संभ)वात्, सैन्धवघनस्य कृत्स्नस्य रसनेन्द्रियावगतरसघनत्वस्य चक्षुराद्यवगतरूपकाठिन्यादेश्चाविरोधवत् मानान्तरावगतब्राह्मरूपस्य च मानान्तरावगतविज्ञानघनत्वस्य चाविरोध

स उत्तमः पुरुषः। स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनँ स्मरन्निदँ शरीरम्। स

---

इति **बादरायण** आचार्यो मन्यते ; **'विज्ञानघन एव'** इत्येवकारस्य स्वप्रकाशत्वाव्याप्तांशनिषेधमात्रपरत्वादिति स्थितम्।

यत् परैरुक्तम्, 'शरीरात् समुत्थाय शरीरे आत्माभिमानं हित्वा **स्वेन रूपेण** परमात्मरूपेण साक्षात्कृत्य परं ज्योतिर्भवति= परमात्मा भवतीत्यर्थः। न तु शरीरादुत्क्रमणं देशान्तरगमनं वाऽत्र विवक्षितमिति--तदसत्। अपदार्थत्वात्। न हि, **'शरीरात् समुत्थाय'** इत्यस्य शरीरे आत्माभिमानं हित्वेत्यर्थो भवति। स्वरूपसाक्षात्कार-लक्षणस्वरूपाभिनिष्पत्त्यनन्तरभाविनः परज्योतिर्भावस्य च, 'परं ज्योति-रुपसंपद्य' इति पूर्वकालतया निर्देशो न युक्तः। न हि सर्पात् समुत्थाय रज्जुमुपसम्पद्येति च प्रयोगो दृष्टचरः। वायवभ्रादिदृष्टान्तवैरूप्यञ्च स्पष्टमेव। किञ्च निर्विशेषब्रह्मभावोऽत्र, परं ज्योतिरुपसंपद्येत्यनेन विवक्षितश्चेत्, सुषुप्तिदशोद्घाटितस्य विशेषविज्ञानाभावप्रयुक्तनष्टप्रायत्वदोषस्यापरिहृत-तया तद्दोषपरिहाराय [मुक्त्यवस्थोपदेशासाङ्गत्यं स्यादित्यास्तां तावत्॥

**स उत्तमः पुरुषः। स तत्र पर्येति।** सः उपसम्पदनीयः उत्तमः पुरुष इत्यर्थः। 'उत्तमः पुरुषस्त्वन्यः' इति भगवत एवोत्तम-पुरुषत्वेन उपसम्पदनकर्तुरुत्तमपुरुषत्वस्य बाधितत्वात्, 'स तत्र पर्येति' इत्युत्तरवाक्यस्वारस्यभङ्गप्रसङ्गाच्च। सः उपसत्ता(संपत्ता ?) तत्र

---

पर्येति। इण् गतौ। गत्यर्थस्य ज्ञानार्थत्वात् अनुभवतीत्यर्थः।

यथा प्रयोग्य आचरणे युक्तः, एवमेवायमस्मिन् शरीरे प्राणो युक्तः॥३

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः, स चाक्षुषः पुरुषः;

---

परमात्मनि **पर्येति** । तं परितोऽनुभवति । यद्वा अनुसञ्चरतीत्यर्थः । 'कामरूप्यनुसञ्चरन्', 'यत्रयत्र घाता गच्छति' इति हि श्रुत्यन्तरम् । **जक्षत्...ज्ञातिभिर्वा** । यथेष्टं भोगान् अवाप्नोतीत्यर्थः । **नोपजनं स्मरन्निदं शरीरम्** । स्त्रीपुंसयोरन्योन्योपगमेन जातमित्युपजनत्वं शरीरस्य । तेन चापुरुषार्थत्वमुच्यते । अथवा उपजनं जनानां बन्धुजननां समीपे शयितम् । कुणपमित्यर्थः । यद्यपि मुक्तः सर्वज्ञत्वात् त्यक्तमपि शरीरमनुभवत्येव--तथाऽप्यब्रह्मात्मकया दुःखरूपत्वेनानुभूतं शरीरं न मुक्तिदशायां तथाऽनुभवतीत्यर्थः । आत्मनोऽशरीरस्वभावत्वे प्राक्छरीर-सम्बन्धः किन्निबन्धन इत्यत्राह-**स यथा....युक्तः** । यथा **आचरणे** शकटे **प्रयोग्यः** युग्यः अश्वो बलीवर्दो वा पाशेन युक्तो भवति, एवमेवायं **प्राणः** प्राणसहचरः(चारी) प्रत्यगात्मा संसारदशायां कर्म पाशेन युक्तो भवतीत्यर्थः। अनेन युग्यशकटदृष्टान्तेन देहात्मनोर्व्यतिरेको दृढीकृतो भवति ॥

अथेन्द्रियव्यतिरेकं प्रपञ्चयति । **अथ...चक्षुः** । **आकाशं**

---

अनुसंचरतीत्यनेन साक्षाद् गत्यर्थादरणमेव दर्शितम् । एवञ्च पर्येति परिचरतीत्यर्थश्च सुवचः । तेन जक्षणक्रीडनादिकं सर्वं पुरुषोत्तम-परिचर्यारूपमिति सिद्ध ब्रह्मानुभवात्मकत्वं सर्वस्य भगवद्भागवत-परिचरणरूपानुभवस्य दर्शितं भवति । परितो गच्छति प्रदक्षिणं करोतीत्यर्थस्तु परिचर्यैकदेशत्वात् पृथङ् न वाच्यः ।

दर्शनाय चक्षुः। अथ यो वेदेदं जिघ्राणीति, स आत्मा; गन्धाय घ्राणम्। अथ यो वेदेदमभिव्याहराणीति, स आत्मा; अभिव्याहाराय वाक्। यो वेदेदँ श्टणवानीति, स आत्मा; श्रवणाय श्रोत्रम् ॥ ४ ॥

---

प्रकाशम्। आलोकादि अथवा प्रकाश्यमानत्वादाकाशं रूपम्। ततश्चायमर्थः—यस्मिन्नुपकरणत्वेनानुविषण्णं निबद्धं चक्षुः आलोकं रूपं वा प्रकाशयतीति शेषः। यद्वा **आकाशं** रूपादिप्रकाशकमित्यर्थः। सः **चाक्षुषः** चक्षुरुपकरणकः पुरुषः आत्मेत्यर्थः। चक्षुरुपकरणक-मुद्दिश्य **पुरुष**शब्देनाऽऽत्मत्वं विधीयते। चक्षुस्तु तद्दर्शनाय करणमात्र-मित्यर्थः। ततश्च चक्षुरादीनां रूपादीनामात्मनश्च करणत्वज्ञेयत्व-ज्ञातृत्वप्रदर्शनमुखेन शरीरेन्द्रियेभ्यो व्यतिरेक उपपादितो भवति। **अथ....घ्राणम्**। गन्धग्रहणकरणं घ्राणम्। ज्ञाता त्वात्मेत्यर्थः। अनेन घ्राणेन्द्रियव्यतिरेक उक्तो भवति। **अथ...श्रोत्रम्**—स्पष्टम्।

---

आलोकं रूपं वेति। आलोकमित्यर्थे, आलोकमनु=आलोक-सहकारेण तमनुसृत्य विषण्णं संबद्धमित्यर्थोऽपि ग्राह्यः। रूपमित्यर्थे प्रकाशयतीति शेषपूरणमेव स्वरसम्। आकाशं देहच्छिद्रमिति शाङ्करम्। तन्न बाधितम्। प्रतिरूपग्राहिणि यन्त्र इव नेत्रगोले बिल-स्वीकारात्। इन्द्रियमपि चक्षुरस्ति; न बिलमात्रात् कार्यमिति—अथापि उपरि; 'यो वेदेदं जिघ्राणीति' इत्यादितुल्यार्थपरत्वं यत्नेत-दाकाशमनुविषण्णमित्यस्य स्थानप्रमाणात् वक्तव्यमिति विमृश्य तदुपेक्षेति। चाक्षुषः पुरुषः चक्षुरिन्द्रियमेव प्रधानोपकरणं भजन् पुरुषः। घ्राणादीनामल्पग्राहिणामप्रधानत्वात् घ्राणः पुरुष इत्यादिकं नोक्तम्।

अथ यो वेदेदं मन्वानीति, स आत्मा ; मनोऽस्य दिव्यं चक्षुः। स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके ॥ ५ ॥

तं वा एतं देवा आत्मानमुपासते । तस्मात् तेषां सर्वे च लोका आत्ताः, सर्वे च कामाः ।

स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्, यस्तमात्मानमनुविद्य

---

**अथ....चक्षुः ।** सकलेन्द्रियविषयमननसाधनत्वात् **दिव्यं** चक्षुरुच्यते । शिष्टं स्पष्टम् । **स....ब्रह्मलोके ।** स एषः उक्तरीत्या शरीरेन्द्रियग्रामविलक्षण आत्मा विधूतकर्मनिमित्तशरीरेन्द्रियः पुरुषो मनश्शब्दाभिहितेन दिव्येन स्वाभाविकेन **चक्षुषा** ज्ञानेन पूर्वोक्तब्रह्मलोक शब्दिततद्दहराकाशनिष्ठान् सर्वान् कामान् अनुभवन् मोदते इत्यर्थः ।

**तं वा एतं....कामाः ।** एतादृशात्मस्वरूपस्य प्रजापतिना मघवते उपदिष्टत्वात् देवाः सर्वे मघवतः एतमात्मानमुपश्रुत्य तमेवो पासते । अतस्तेषां सर्वलोकसर्वकामाप्त्युपलक्षितब्रह्मानुभवो भवति । असुराणां तु न तथेति भावः **स सर्वांश्च....विजानाति ।** अथत्वेऽपि

---

पूर्ववत् मननाय मन इति कस्मान्नोक्तमित्यत्राह सकलेन्द्रियेति । दिव्यं चक्षुः अप्राकृतस्यापि वस्तुनः प्रत्यक्षवत् प्रकाशकं धर्मभूत-ज्ञानम् । न चाप्राकृतस्य स्वयम्प्रकाशत्वात् तत्प्रकाशाय धर्मभूतज्ञान-मनपेक्षितमिति वाच्यम्—तद्द्रव्यस्य स्वयम्प्रकाशत्वेऽपि तद्गतधर्मा णामस्वयम्प्रकाशानामनन्तानां प्रकाशाय धर्मभूतज्ञानस्यापेक्षणात् । अस्य = संसारिणः इन्द्रियाधीनज्ञानप्रसरणस्य मन एव दिव्यं चक्षुः । मनसोऽभावे किमपि न ज्ञायते ; नतरां व्याहारादिरित्यर्थः । स वा इति । अत्र अस्येत्येतदनुसृत्य अयमित्यनुक्त्वा स इत्युक्तिः स्वेन

विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥

इति अष्टमाध्याये द्वादशः खण्डः ।

---

मनुष्याणामपि तमात्मानं श्रुत्वा उपासीनानां सर्वलोकसर्वकामावाप्तिः भवतीत्यर्थः । अत्र किं प्रमाणमित्यत्राह— **इति ह....उवाचेति ।**

---

रूपेणाभिनिष्पन्नस्य ग्रहणाय । एतेन = पूर्वोक्तेन दिव्येन चक्षुषा = धर्मभूतज्ञानेन, मनसा = संसारदशायां मनोधीनं विकासं भेजुषा । संसृतौ मनसः प्राधान्यात् मनोऽस्य दिव्यं चक्षुरिति मनसः पूर्वमुद्देशः । मुक्तौ तस्य निवृत्तत्वात् तत्कार्यस्यापि धर्मभूतज्ञानेन सिद्धिं ज्ञापयितुं दिव्येन चक्षुषेति पूर्वं निर्दिष्टम् ।

देवाः सर्वे । ननु देवानामिन्द्राद्देतदात्माधिगमः इतः पश्चादेव भवितेति कथमिदानीं प्रजापतिना तस्य वर्तमानतया निर्देश इति चेत्—पूर्वं य आत्मेत्यादिवाक्यस्य प्रचारणं हि प्रजापतिना सर्वैरेतदर्थाधिगमाय कृतम् । तत्र देवासुराः प्रधानभूतौ इन्द्रविरोचनौ प्रेषयामासुः । निवृत्तो विरोचनः । इन्द्रस्तु आन्तमुपसद्य, तत्त्वार्थं जग्राह । तदद्य तुष्यन् असुराणामेतदुपासनालाभं देवानां लाभञ्च सिद्धवत्कृत्य वर्तमानसामीप्ये वर्तमाननिर्देशेनैवमुक्तम् । यथा अत्रैव आप्ता इति फलस्य निष्पन्नत्वेन निर्देशः, तद्वदिति । श्रीभाष्ये, 'देवाः ज्ञानिनः' इत्युक्तम् । तदा तु सनकसनन्दनादयो ये इन्द्रस्यापि देवाः, ते तदात्व एव तमात्मानमुपासीना इहोक्ताः स्युः । वस्तुतस्तु भाष्यगतिर्यथाशाङ्करमेवं स्यात्—मघवन्मर्त्यं वेत्यतः प्राक् तस्मै होवाचेत्युक्तत्वादेव प्रजापत्युपदिष्टत्वसिद्धौ इति ह प्रजापतिरुवाचेति वाक्यं व्यर्थम्, केवलमुपक्रान्तविद्योपसंहाररूपमिति वक्तव्यम् । तदपेक्षया तं वा एतमित्यादि श्रुतिवाक्यमस्तु ; न प्रजापतिवाक्यम् । यद्वा तस्मैहोवाचेत्यारब्ध उक्तिप्रकारः, 'न प्रियाप्रिये स्पृशतः' इत्यत्र समाप्तोऽस्तु । अशरीरो वायुरित्यादिकमुपरितनं सर्वं वेदपुरुष-

अत्र **प्रत्यगात्मविद्यायाः** **ब्रह्मविद्याङ्ग**त्वेनाङ्गिभूत**ब्रह्मविद्या**फलमेव तदङ्गभूतप्रत्यगात्मविद्यायां स्तुत्यर्थं निर्दिश्यत इति द्रष्टव्यम् । उक्तञ्च **भगवता भाष्यकृता,** "प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्य-विज्ञानं दहरविद्योपयोगितयोक्तम् । ब्रह्मप्रेप्सोर्हि जीवात्मनः स्वस्वरूपञ्च ज्ञातव्यमेव । स्वयमपि कल्याणगुण एव सन् अनवधिकातिशयासंख्येय-कल्याणगुणगणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात्, 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' इति **प्रजापति**वाक्ये कीर्त्य-मानं फलं **दहरविद्या**फलमेवेति । ननु प्रजापतिविद्याया दहरविद्याङ्गत्वे दहरब्रह्मविद्याधिकृतायैवोपदेष्टव्या स्यात्, उपकोसलविद्याङ्गभूताग्नि-विद्यावत् । प्रकृते च दहरब्रह्मविद्याविधुरायेन्द्रायोपदिश्यमानायाः प्रत्यगात्मविषयकप्रजापतिविद्यायाः कथं विद्यान्तरशेषत्वमिति चेत्— न; **प्रजापति**वाक्यस्य 'एष संप्रसादः' इति दहरविद्यावाक्यान्तर्गत-

---

**वचनम् । एवञ्च, 'तं वा एतं देवा' इति अस्मान् प्रति श्रुतिराहेति समन्वितमेवेति । अत एव इति ह प्रजापतिरिति वाक्यमेवमवतारितं भाष्ये, अत्र किं प्रमाणमित्यत्राहेति । तथाचैवं प्रजापतिनोक्त-त्वादस्मिन् फले श्रद्धा कार्येति श्रुतिराहेति यथाशङ्कं भाष्यगम-निकेति । वस्तु स्तु, अशरीरो वायुरित्यादिकमपि प्रजापतिवाक्यमेव, उत्तराच्चेदिति सूत्रे, 'एवमेवैष संप्रसादः' इत्यादि—'उपदिदेश' इत्यन्तश्रीभाष्यानुरोधात् । 'स उत्तम' इत्यादि मा भूत् प्रजापति-वाक्यमिति चेत्—'जक्षत्क्रीडन्नित्यादिकं प्राजापतिवाक्ये कीर्त्यमानं फलम्' इति अन्यार्थश्चेति सूत्रभाष्यं तदा न स्वरसम् । शरीरव्यतिरेक-वच्च इन्द्रियव्यतिरेकोऽपि हि प्रजापतिनैवोपदेश्यः। तंवा एतमित्यादि कामं वेदपुरुषवचनमस्तु ।**

सर्वब्रह्मविद्यापेक्षितब्रह्मस्वरूपप्रतिपत्त्युपयोगितया सामर्थ्यरूपालिङ्गात् प्रकरणभङ्गेन सर्वब्रह्मविद्यासाधारण्यमाश्रीयते, यथा वा, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति विद्याविशेषप्रकरणश्रुतानां वेदानुवचनादीनां सर्वविद्यापेक्षितचित्तनैर्मल्योपयोगित्वलक्षणसामर्थ्य[रूप]लिङ्गवशेन सर्व विद्यासाधारण्यम्, एवमिहापि ब्रह्मप्राप्तिपूर्वकापहतपाप्मत्वादिगुणाष्टकविशिष्टस्वात्माविर्भावलक्षणमोक्षरूपफलस्य तत्क्रतुन्यायेन तादृशस्वात्मोपासनसाध्यत्वेन प्रजापतिवाक्योदितप्रत्यगात्मविद्यायाः सर्वब्रह्मविद्याङ्गत्वसिद्धेः।

**दहरविद्या**याः परमात्मपरत्वञ्च दहराधिकरणे स्थितम् । तस्मिंश्चाधिकरणे, **"दहर उत्तरेभ्यः"**, **"गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च"**, **'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः'**, **'प्रसिद्धेश्च'**, **"अल्पश्रुतेरिति चेत् तदुक्तम्"**, **'इतरपरामर्शात् स इति चेन्नासंभवात्'**, **'अन्यार्थश्च परामर्शः'**, **'उत्तराच्चेदाविर्भूतस्य रूपस्तु'**, **'अनुकृतेस्तस्य च'**, **'अपि स्मर्यते'** इति दश सूत्राणि । तत्राद्यानि

---

पूर्वं दहरविद्योपास्याकारनिरूपणसमाप्तावपि तदुपयोगिमन्त्रपाठस्य पश्चाद्दर्शनात् महाप्रकरणानुवृत्तिरस्तीत्याशयः । अर्थान्तरत्वव्यपदेशाधिकरणे श्रीभाष्ये दहरविद्यानुवृत्तावौचित्यस्य भाषितत्वात् ।

जाग्रदाद्यवस्थानां क्रमेणोपदेशः प्रजापतिकृतो न वञ्चनार्थः ; किन्तु अभिसंधिविशेषमूलः, यमसौ न बुबुधे इति दर्शितं श्रुतप्रकाशिकायाम् । यथा—'यथा वसनाभरणादिरन्वयव्यतिरेकाभ्यामनात्मा, एवं चाक्षुषत्वात् इदङ्कारगोचरत्वाच्च देहो नात्मेति प्रजापतेरभिसंधिः स्वाप्नदेहाभिमानिनः आत्मनः शयानदेहव्यतिरेकस्य स्वावगमत्वात् स्वप्नावस्थामुपदिदेश । बाह्याभ्यन्तर-कालुष्यविरहेण स्वयंप्रकाशमात्मानं दर्शयितुं सुषुप्त्यवस्थामुपादिशत् । एवमनतिस्फुटं गहनमुप-

सप्त सूत्राणि स्वावसर एव व्याख्यातानि। **'उत्तराच्चेदाविर्भूतस्वरूपस्तु, अनुकृतेस्तस्य च, अपि स्मर्यते'** इति त्रीणि सूत्राण्यव्याख्यातानि व्याख्यास्यन्ते। उत्तरात् प्रजापतिवाक्यात् जीवस्याप्यपहतपाप्मत्वादिगुणयोगावसायात् अपहतपाप्मत्वादिगुणैर्दहराकाशः परमात्मेति न शक्यं निर्णेतुमिति चेत्—तत्राह आविर्भूतस्वरूपस्त्विति। पूर्वमनृततिरोहितापाप्मत्वादिगुणकस्वस्वरूपः पश्चात् विमुक्तकर्मबन्धः शरीरात् समुत्थितः परंज्योतिरुपसम्पन्नः आविर्भूतस्वरूपः सन् अपहतपाप्मत्वादिगुणविशिष्टः तत्र प्रजापतिवाक्येऽभिधीयते। दहरवाक्ये तु अतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते। आविर्भूतस्वरूपस्यापि जीवस्यासंभावनीयाः सेतुत्वविधरणत्वादयः, सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वम्, दहराकाशस्य परब्रह्मतां साधयन्ति। सेतुत्वसर्वलोकविधरणत्वादयो न मुक्तानां नित्यमुक्तानां वा सम्भवन्तीति, **'जगद्व्यापारवर्जम्'** इत्यत्र स्थितम्। अत एव नित्यानां नित्याविर्भूतापहतपाप्मत्वादिगुणाष्टकत्वात् तेष्वतिप्रसक्तस्य नित्याविर्भूतापहतपाप्मत्वादिमत्त्वस्य कथं ब्रह्मलिङ्गत्वमिति शङ्काऽपि निरस्ता। सेतुत्वादीनां तदसंभावितधर्माणामत्र(मपि) श्रवणात्।

---

**देशश्च शुश्रूषुयोग्यतापरीचिक्षिषया' इति। इन्द्रस्तु तमभिसंधिमजानन् तदातदा तत्तदेव आत्मत्वेनोपदिष्टमित्यभिमत्य गत्वा पर्यालोच्य पुनःपुनर्निववृते।**

**इति दश सूत्राणीति। तदधिकरणे सूत्रपाठक्रमस्यान्याद्दशत्वेऽपि इह 'उत्तराच्च' इत्यादिसूत्रं पूर्वमव्याख्यातं व्याख्यास्यमानत्वादन्ते क्रमेण निर्दिष्टम्। ततःप्राक् सूत्रपाठक्रमस्त्वत्राद्दतोऽविवक्षितः सर्वसूत्रपठनमात्रे तात्पर्यात्।**

ननु, **'य एषोऽक्षिणि पुरुषो दृश्यते'** इति प्रजापतिविद्यागतवाक्यान्यपि ब्रह्मपराण्येव भवन्तु। वाक्यत्रयेपि, **'एतदमृतमभयमेतत् ब्रह्म'** इति श्रवणात्, अक्षिवाक्ये उपकोसलविद्योपास्यप्रत्यभिज्ञानात्, **'य एष स्वप्ने महीयमानश्चरति'** इति वाक्येऽपि स्वाप्नपदार्थस्रष्टृत्वेन महीयमानस्य परमात्मन एव प्रतिपादनसंभवात्, सुषुप्तिपर्यायेऽपि, **यत्र**-यस्मिन् आधारे समस्तः सुप्तो भवतीति सुषुप्त्याधारब्रह्मपरत्वोपपत्तेरिति चेत् —उच्यते। स्वप्नपर्याये, **'घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवित्तेव भवत्यपि रोदितीव'** इति इन्द्रेण तस्य हन्यमानत्व द्राव्यमाणत्व-बन्धुजनमरणाद्यप्रियद्रष्टृत्व-रोदितृत्वादिप्रतिभासतो दुष्टत्वस्योपन्यासात्, सुषुप्तिसम्बन्ध्यात्मोपदेशानन्तरं, 'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि, विनाशमेवापीतो भवति' इति तस्य विशेषज्ञानरहिततया विनष्टप्रायत्वस्योक्तत्वात्, अभयत्वामृतत्वादीनाञ्च मुक्त्यवस्थाभाविरूपापेक्षयाऽप्युपपत्तेः जीव-

---

**वाक्यत्रयेऽपि। अक्षिस्वप्नसुषुप्तिवाक्येषु त्रिष्वपि। अत्र अपिशब्दसत्त्वात्, अक्षिवाक्ये उपकोसलविद्योपास्यप्रत्यभिज्ञानात्' इत्यंश एतत्पूर्वं स्यादिति तर्क्यते। द्रष्टृत्वेति। वेत्तृत्वं लब्धृत्वम्। फलितं तु इदं तत्र।**

**अभयत्वेति। वाक्यत्रयेऽपि एतदभयमेतद् ब्रह्मेति श्रवणवत् मघवन् मर्त्यंवेत्यारभ्यान्ततः क्रियमाणतत्त्वोपदेशसंदर्भेऽपि तच्छ्रवणं यदि स्यात्, तदा ब्रह्मनिरूपणपरत्वं मन्येत; तथा जीवब्रह्माभेदोऽपि शङ्क्येत। न त्वेवम्। प्रत्युत तत्त्वोपदेशकाले परंज्योतिरुपसंपद्येत्यादिना भेदमेव तात्त्विकं दर्शयति। तेन तत्र प्राक् अभयामृतब्रह्मोक्तिः स्तुतिमात्रमिति ज्ञायत इत्यपि भाव्यम्।**

अष्टमे त्रयोदशः खण्डः

**श्यामाच्छबळं प्रपद्ये शबलाच्छ्यामं प्रपद्ये ।**

---

विषयत्वमेव द्वितीयतृतीयपर्याययोः । एवं तयोः स्वप्नसुषुप्त्यवस्थावत् जीवविषयत्वमेवोपपद्यते । **'य एषोऽक्षिणि पुरुषो दृश्यत'** इत्यस्य दर्शनलिङ्गादक्षिणि सन्निहितोऽनुमीयत इत्यर्थकत्वेन जागरावस्थाविषयत्वस्यैवोपपन्नत्वात् उपकोसलविद्यावैषम्यम् । ततश्च **प्रजापतिवाक्ये** जीवः संसारदशायामनृततिरोहितापहतपाप्मत्वादिकः [सन्] मुक्तिदशायां साधनाधीनतदाविर्भावः प्रतिपाद्यते । दहराकाशे श्रूयमाणं त्वपहतपाप्मत्वादिकं नित्याविर्भूतमेव ग्राह्यम् नित्याविर्भूतस्य ग्रहणसंभवे तिरोहितत्वेनासत्प्रायस्य साधनाधीनाविर्भावस्य ग्रहणायोगात् ।

ननु ब्रह्मणो नित्याविर्भूतापहतपाप्मत्वादिमत्त्वं जीवस्यातथात्वञ्च यदि प्रमाणसिद्धं स्यात् ; तदा दहराकाशे श्रूयमाणमपहतपाप्मत्वादिकं ब्रह्मगतं नित्याविर्भूतमेव ग्राह्यमिति शक्यते वक्तुम्, न च तदस्तीति शङ्कमानं प्रत्याह–**"अनुकृतेस्तस्य च"** । **अनुकृतिः** अनुकारः=साम्यम् । **तस्य** परब्रह्मण उपासनया तदनुकारो हि जीवस्य श्रूयते–**'तथा विद्वान्.... परमं साम्यमुपैति'** इति । **'अपि स्मर्यते'** । 'इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः' इति च स्मर्यते इत्यर्थः । ततश्च तदुपासनासिद्धमेतस्यैश्वर्यम् । तस्य तु नान्योपासनसिद्धम् ; अपितु नित्याविर्भूतम् । ततश्च दहरवाक्ये, श्रूयमाणमपहतपाप्मत्वादिकं ब्राह्ममेवेति स्थितम् ॥ ८-१२.

प्रकृतमनुसरामः॥ **श्यामात्...प्रपद्ये** । एते च मन्त्राः विद्याङ्गभूताः

---

**ननु प्रजापतिविद्योक्तजीवस्वरूपोपासकस्य तत्क्रतुन्यायेन जीव-**

विद्वद्भिर्जप्याः । परमात्मनो हि त्रिविधमुपासनमुक्तम्, **"उपासात्रै विध्यात्"** इत्यत्र चिच्छबलतया अचिच्छबलतया स्वरूपेण च । तत्र स्वरूपेणानुसन्धाने ज्ञानादिगुणवत् दिव्यविग्रहयोगिताऽप्यनुसन्धेया । तत्सिद्ध्यर्थमेव हि पुण्डरीकाक्षमप्राकृतं वपुरतिदिश्यते—**'स यश्चायं पुरुषे यश्चासावादित्ये स एकः'** इति । तत्र, **'स यश्चायं पुरुष'** इत्यानन्दमयमनूद्य, **'यश्चासावादित्ये'** इति विग्रहातिदेश इति **व्यासार्यैः** उपासात्रैविध्यादित्यत्रोक्तम् । **वेदार्थसंग्रहे** च भगवता **भाष्यकृता,** "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि',—विद्युद्वर्णात् पुरुषादित्यर्थः—'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा'—मध्यस्थनीलतोयदा विद्युल्लेखेव सेयं दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहितनीलतोयदा विद्युदिवाभातीत्यर्थः" इत्युक्तम् । अतो नीलविग्रहवैशिष्ट्यं सिद्धम् । अत एव हि, 'श्यामा एकरूपा भवन्ति, एवमिव हि प्रजापतिः समृद्ध्या' इति **प्रजापति**शब्दितस्य भगवतः श्यामरूपत्वमुक्तम् । तस्मात् **श्याम** इति विग्रहविशिष्टस्वरूपमुच्यते ।

---

**स्वरूपानुभवमात्रं संभाव्यते, न सर्वलोकसर्वकामप्राप्तिरपीति शङ्का मा भूदिति श्यामादित्यादिमन्त्रपाठस्तदनन्तरम् । तेन जीवस्वरूपाविर्भावस्य परज्योतिरुपसंपत्तिमूलकत्वस्योक्ततया तदुपसत्त्युपायभूतं तदुपासनमपि कार्यमेव । तत्रैवं मन्त्र इति ज्ञापितं भवति । दहरः परमात्मा द्विप्रकारः हृदयपरिच्छिन्नदिव्यमङ्गलविग्रहविशिष्टः, दहरहृदयान्तर्वर्तिजीवान्तर्वर्ती चेति । उभयविधोऽप्युपास्य इति श्यामादिति मन्त्रेणोच्यते ।**

अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य।
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीति अभिसंभवामीति॥ इति अष्टमाध्याये त्रयोदशः खण्डः।

---

ततश्च श्यामादिति ल्यब्लोपे पञ्चमी। श्यामविग्रहविशिष्टं स्वरूपं प्रपद्य=स्वरूपमुपास्य **शबलं** चिदचिद्विशिष्टं **प्रपद्ये** उपासे। शबलमुपास्य श्याममुपासे इत्यर्थः। ततश्च निरन्तरं त्रैविध्येनोपासे इत्यर्थः। **अश्व इव.... अभिसंभवामीति**। अश्वो रोमाणीव स्वयं पापं विधूय—विधूयेत्यनेन पापत्याग उच्यते—राहुमुखप्रमुक्तश्चन्द्र इव शरीराद्विमुक्तः **अकृतं** नित्यं भगवल्लोकं **कृतात्मा** कृतार्थात्मा सन् **अभिसंभवामि** प्राप्नुवा-

---

रोमाणीवेति। रोमाणि विधूय—श्रमं पांस्वादि च रोमतो विधूयेति शाङ्करम्। तथाच कम्बलविधूननमितिवत् रोमविधूननं नाम रोम्णोऽपनेयापनयः। एवञ्च पापविधूननमपि पापादिगतफलजननशक्तेः पापात् प्रच्यावनम्। प्रच्युता च सा शक्तिः द्विषदादिकर्तृकं द्वेषादि संक्रामति। विद्वत्संबन्धिपुण्यपापयोः यत् फलं विद्वदनुभाव्यम्, तत् फलं तत्र विदुषि द्वेषं स्नेहञ्च कलयतां भवतीति यावत्। वस्तुतः, विधूयेत्यनेन पापत्याग उच्यते इत्युक्तत्वात् विधूयेत्यस्य इत्युक्त्वेत्येवार्थः। अस्तु रोमाणीतिपदं रोमगतपांस्वादीत्यर्थकं यथाश्रुतार्थस्य सर्वथा बाधे। वस्तुतस्तु भगवता भाष्यकृता वेदान्तसारे, वृद्धिह्राससूत्रे दर्शनादिति पदव्याख्यावसरे, 'अश्वो हि रोमाणि सहजानि स्वावयवभूतानि मूर्तद्रव्याणि स्वशरीरं कम्पयन् कानिचिन्मुञ्चति' इति प्रकृतश्रुत्यर्थ उक्तः। अतो यथाश्रुतमेव निर्बाधम्। चन्द्र इवेत्यादि। चन्द्रकर्तृकराहुमुखावधिकस्वात्मविमोचनतुल्यं विद्वत्कर्तृकशरीरधूननम्। शरीरं धूत्वेत्यस्य शरीरात् प्रमुच्येत्यर्थः।

## अष्टमे चतुर्दशः खण्डः

**आकाशो वै नाम नामरूपयोर्निर्वहिता, ते यदन्तरा तत् ब्रह्म तदमृतँ स आत्मा ।**

---

मीत्यर्थः। **अभिसंभवामीत्यभिसंभवामीति** द्विरुक्तिः खण्डसमाप्त्यर्था ॥

**आकाशो वै....आत्मा** । अत्र, आकाशो ह वै नामरूपयोर्निर्वहिते[ति आकाशो वै नामरूपयोर्निर्वहिते]त्यपि पाठान्तरं (पाठद्वयं) द्रष्टव्यम् । उभयत्राप्ययमर्थः । श्रुतिष्वाकाश इति प्रसिद्धः नामरूपयो**र्निर्वहिता** कर्ता । **यत् आकाश**शब्दितम् । विधेयब्रह्माभिप्रायेण नपुंसकत्वम् । **ते** नामरूपे **अन्तरा** मध्ये वर्तमानम् । ताभ्यामस्पृष्टमित्यर्थः । **ब्रह्मामृतात्म**शब्दानां पूर्ववदेवार्थः ।

इदञ्च वाक्यं **समन्वयाध्याये** चिन्तितम् । तत्र, **'आकाशो ह वै नामरूपयोर्निर्वहिता'** इति नामरूपवोढृत्वश्रवणात्, नामरूपवोढृत्वस्य परमात्मनि, **'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि'** इति जीवद्वारकतयैवोपपाद्यतया नामरूपवोढृत्वस्य जीव एव स्वरसत्वात्, **'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते'** इति वाक्यप्रतिपाद्यस्य, 'नामरूपयोर्निर्वहिता ते यदन्तरा' इति वाक्ये प्रत्यभिज्ञानात्, पूर्वं निरूढनामरूप एव पश्चाद्विमुक्त इह प्रतिपाद्यते । **आकाश**शब्दस्यापि

---

**खण्डसमाप्त्यर्थेति । द्विर्वचनं मन्त्रसमाप्त्यर्थमिति शाङ्करम् ।**

**ते यदन्तरेति । 'यत् अन्तरा विहाय नामरूपे वर्तेते ।', 'ते नामरूपे अन्तरा विहाय यद्वर्तते' इति वेति शाङ्करम् । द्वितीययोजना अत्रादृता । श्रीभाष्ये तु यत् = यस्मात् नामरूपे अन्तरा = नामरूपास्पृष्ट**

यौगिक्या वृत्त्या मुक्तात्मनि संभवादित्येवं पूर्वपक्षे प्राप्ते—उच्यते—"**आकाशोऽर्थान्तरत्वादिव्यपदेशात्**"। आकाशः परं ब्रह्म, अर्थान्तरत्वादिव्यपदेशात्, 'नामरूपयोर्निर्वहिता' इति जीवापेक्षया, **अर्थान्तरत्वस्य** भेदकधर्मस्य व्यपदेशात्। न हि नितरां वोढृत्वं, निर्वोढृत्वं, रूढ्या **निर्वोढृ**शब्दस्य कर्तृत्वाभिधायित्वात्। 'ते यदन्तरा' इति नाम रूपास्पृष्टत्वकथनाच्च। नामरूपास्पृष्टत्वे सति नामरूपकर्तृत्वस्य बद्धे मुक्ते वा असंभवात्, मुक्तस्यापि, "**जगद्व्यापारवर्जम्**" इति जगद्व्यापारराहित्यस्य प्रतिपादितत्वात्। **आदि**शब्देनामृतत्वाभयत्वादीनां सङ्ग्रहः।

ननु प्रत्यगात्मनोऽर्थान्तरत्वव्यपदेशादिति न वक्तुं युक्तम्, शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्मेति च व्यपदिश्यते। तत्राह—"**सुषुप्त्युत्क्रान्त्योर्भेदेन**"। **वाजसनेयके,** 'कतम आत्मा योऽयं विज्ञानमयः प्राणेषु' इति प्रकृतस्य प्रत्यगात्मनः सुषुप्तौ उत्क्रान्तौ च, 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्'

---

**आकाशः तस्मान्निर्वोढेत्यर्थः स्वरसप्रतीतः। भेदकधर्मस्येति॥ ननु ब्रह्मत्वामृतत्वादिरपि भेदकधर्म इत्यविशेषः॥ उच्यते। ब्रह्मत्वं भेदः, न तु भेदकधर्मः। नामरूपनिर्वोढृत्वं तु भेदकधर्मः॥ तर्हि अर्थान्तरत्वपदेन भेदो ब्रह्मत्वमेव ग्राह्यम्॥ नैवम्। श्रुतौ प्रथमोक्तस्य निर्वोढृत्वस्य प्रथमं सूत्रेऽपि ग्रहणौचित्यात् भेदकधर्मोऽर्थान्तरत्वमित्युक्तमिति। अथवा नामरूपस्पृष्टत्वं जीवत्वम्; अर्थान्तरत्वं तद्भिन्नत्वरूपमस्पृष्टत्वम्। ततश्च नामरूपास्पृष्टत्वविशिष्टतन्निर्वोढृत्वरूप एको धर्मः अर्थान्तरत्वघटितत्वादर्थान्तरत्वरूपः भेदघटितमूर्तिकत्वात् भेदकधर्म इत्युच्यत इति।**

प्रजापतेः सभां वेश्म प्रपद्ये । यशोऽहं भवामि ब्राह्मणानां

इति, 'प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति' इति च प्राज्ञेन परिष्वङ्गा-न्वारोहावाम्नायेते । जीवस्यैव शुद्धावस्थस्य परमात्मत्वे परिष्वङ्गान्वारोहौ नोपपद्येयाताम् । न ह्यभेदे तौ संभवतः ।

"पत्यादिशब्देभ्यः" । 'सर्वस्य वशी सर्वस्येशानः ; सर्वस्या-धिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् ; एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोका-नामसंभेदाय' इति प्रत्यगात्मासंभावितानां पतित्वादिधर्माणां श्रवणात् नायं मुक्तात्मेति स्थितम् । प्रकृतमनुसरामः ॥

**प्रजापतेः...प्रपद्ये** । प्रजापतेः परमात्मनः **सभां** स्थानं वेश्म प्रपद्ये । 'प्रभु विमितं हिरण्मयम्' इति दहरविद्यायां निर्दिष्टं वेश्म प्रपद्ये इत्यर्थः । न चात्र **प्रजापति**शब्दः कार्यहिरण्यगर्भविषयः । "न च कार्ये प्रत्यभिसन्धिः" इति **सूत्रकृतैव** निरस्तत्वात् । **भाष्यकृता** च, "न चायं प्रत्यभिसन्धिः कार्यहिरण्यगर्भे, अपि तु परस्मिन्नेव ब्रह्मणि, 'यशोऽहं भवामि ब्राह्मणानाम्' इति एतस्याभिसन्धातुः सर्वाविद्याविमोक्ष-पूर्वकसर्वात्मभावाभिसन्धानात्, 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभि संभावामि' इति अभिसंभाव्यब्रह्मलोकस्याकृतत्वश्रवणात्, सर्वबन्धविनि

प्रजापतेः परमात्मन इति । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्युक्तरीत्या सद् ब्रह्मैव हि प्रजानां पतिः । दर्शितश्च पूर्वखण्डे भाष्ये श्यामः प्रजापतिरिति । प्रायः श्रुतौ परमा-त्मन्येव प्रजापतिशब्द इति पराक्रान्तं सूरिभिः ।

**यशो राज्ञां यशो विशां यशोऽहमनु प्रापत्सि । स हाहं यशसां यशः । श्वे(श्ये)तमदत्कमदत्कँ श्वेतं लिन्दु माऽभिगाम् लिन्दु माऽभिगाम् ॥**

**इति अष्टमाध्याये चतुर्दशः खण्डः ।**

---

मोक्षस्य च साक्षाच्छ्रवणात्" इति भाषितम् । **यशः....यशो विशाम्** । अत्र **यश**श्शब्देनाऽऽत्मोच्यते । ब्राह्मणादीनामात्माऽस्मीत्यर्थः । **अत्राह-मिति**शब्दः स्वान्तर्यामिपरमात्मपरः । ननु तव ब्राह्मणादीन् प्रति कथं **यश**श्शब्दितमात्मत्वमित्यत्राह—**यशः...यशः** । अहं **यशः** यशोरूपं परमात्मानमात्मतया अहंत्वेन प्राप्तवानस्मि, साक्षात्कृतवानस्मि । अतः सोऽहं परमात्मरूपोऽहं **यशसां** जीवात्मनां **यशः** आत्माऽस्मीत्यर्थः । **श्वेतमदत्कमदत्कंश्वेतंलिन्दुमाभिगाम्** । श्वेतं शुक्लधातुम् **अदत्कं** [दन्तशून्यं] **श्वेतम्** । अत्र **श्वेत**शब्देन लक्षणया सत्त्वगुण उच्यते । तस्यादत्कं भक्षयितृ । चरमधातोः सत्त्वगुणतत्कार्यज्ञानादिप्रमोषकत्वात् तद्भक्षकत्वम् । तादृशं चरमधातुमदत्कं भक्षयितृ । लिन्दु स्त्रीव्यञ्जनं **माभिगाम्** न प्राप्नुयाम् । चरमधात्वाधारयोनिप्रवेशो माभूदिति, जन्म मा भूदिति यावत् । **लिन्दु माभिगाम् लिन्दुमाभिगामिति** द्विर्वचनं जप्यमन्त्रपरिसमाप्त्यर्थम् । ८-१४

---

**यशश्शब्देनाऽऽत्मोच्यते इति । व्यापनशीलत्वरूपं साधर्म्यं यशस आत्मनश्च । 'सर्वात्मभावाभिसंधानात्' इति भाष्यानुरोधेनैवम् । श्येतमदत्कमिति पठित्वा श्येतं वर्णतः पक्वबदरसमं रोहितम्, अदत्कं दन्तरहितमपि भक्षयितृ कामिनां तेजोबलवीर्यविज्ञानविनाशक-मित्युक्तं शाङ्करे । द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थमिति च । अत्र त्वर्थभेद एव स्वीकृतः । अद भक्षण इति धातोः शत्रन्तादल्पार्थे कप्रत्ययः औपचारिकमदनमिति ज्ञापनाय ।**

अष्टमे पञ्चदशः खण्डः

तद्धैतत् ब्रह्मा प्रजापतय उवाच, प्रजापतिर्मनवे मनुः प्रजाभ्यः। आचार्यकुलात् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभि-

---

**तद्धैतद्ब्रह्मा....प्रजाभ्यः।** **एतत्** ब्रह्मविज्ञानं **ब्रह्मा** हिरण्यगर्भः **प्रजापतये** कश्यपायेत्यर्थः। शिष्टं स्पष्टम्।

विद्याङ्गभूततया कर्मानुष्ठातव्यमित्येतत् प्रस्तौति—**आचार्य... शेषेण।** **यथाविधानं** विधिमनतिक्रम्य। गुरोः **कर्मातिशेषेण** कर्मावशिष्टकालेन। गुरुशुश्रूषानवरुद्धेन कालेन अधीत्येति योजना। **व्यासार्यैस्तु पुरुषार्थाधिकरणे,** 'अतिशेषेण निश्शेषमित्यर्थः' इति व्याख्यातम्। तेषामयमाशयः—'ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुरवे, अनुज्ञातो दारान् कुर्वीत', 'विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानम्' इत्यादिस्मृत्यनुसारात्, 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' इत्यादिश्रुत्यनुसाराच्च, गुरोर्यथाविधानं आचार्यस्य नियमनमनतिलङ्घ्य कर्तव्यं कर्म अतिशेषेण—अतिमर्यादमित्यादौ अतेर्मर्यादाऽभावे वृत्तेर्दर्शनादतिरर्थाभावे वर्तते। ततश्चातिशेषेण—

---

तद्धैतदिति। यद्यपि श्यामाच्छबलमित्यादिना प्रपत्तिविद्यां ततः प्रागनेकभक्तिविद्यावत् उपदिश्य तत्प्रवर्तकपरम्परा, 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्वेताश्वतरान्तदर्शितरीत्या भगवत्पदप्रपन्नचतुर्मुखारम्भेणात्र वर्ण्यते इति सुवचम्—अथापि श्यामादित्यादेः दहरविद्यान्वयमाकलय्य, पृथक् प्रपत्तिपरत्वेनाव्याख्याय, तद्धैतदित्यादेरुपनिषदवसानस्थतया छान्दोग्याष्टाध्याय्यर्थपरत्वमभिप्रेत्योक्तं ब्रह्मविज्ञानमिति।

**समावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत् आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन् सर्वा भूतान्यन्यत्र तीर्थेभ्यः**

---

अशेषेण **अभिसमावृत्य** निवर्त्येत्येवान्वयः । न तु अतिशेषेणेत्यस्याधीत्येति पूर्वेणान्वयः । तस्य व्यवहितत्वात् निराकांक्षत्वाच्च । न च, 'गुरोः कर्मशेषेण जपेत्' इति गौतमस्मृत्यैकरूप्यात् कर्मातिशेषशब्दस्यापि कर्मातिशिष्टकालपरत्वं वक्तव्यमिति वाच्यम्, **शेषातिशेष**शब्दयोर्भिन्नार्थत्वेन तत्प्रत्यभिज्ञानाभावादिति । **अभिसमावृत्य.... अधीयानः । अभिसमावृत्य** समावर्तनं कृत्वा, गुरुकुलान्निवृत्त्येत्यर्थः । न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्यविहितकर्मनिष्ठ इत्यर्थः । 'शुचौ देशे स्वाध्यायमधीयानः' इत्यत्र स्वाध्यायमिति नित्यकर्मणामप्युपलक्षणम् । **धार्मिकान् विदधत्**—पुत्रशिष्यादीन् धर्मे नियुञ्जानः । **आत्मनि....तीर्थेभ्यः।** अनात्मविषयेभ्य इन्द्रियाणि निगृह्य शास्त्रीयहिंसाव्यतिरिक्तां हिंसामकुर्वाण इत्यर्थः । न च, "**अशुद्धमिति चेन्न शब्दात्**" इति सूत्रे क्रत्वर्थपशुहिंसाया हिंसात्वाभावस्योक्तत्वात्, अन्यत्र तीर्थेभ्य इति व्यर्थमिति वाच्यम्। 'न वा उ एतन्म्रियसे न रिष्यसि'

---

अभिसमावृत्य निवर्त्यैति। व्यासार्यपक्षे अत्र समावर्तनं न विवक्षितम्। किंतु गुरवे दक्षिणाप्रदानादि। उक्तनानावचनानुरोधात्। न चाणिजन्तात् कथं निवर्त्यैत्यर्थलाभ इति वाच्यम्, विवक्षावशात् तल्लाभात्। अस्तु वा वृञ् वरण इति धातुरिह। स्वयं तु कर्मातिशेषेणेत्यस्य पूर्वान्वयम्, अभिसमावृत्येत्यस्य समावर्तनपरत्वञ्चैवाविरुद्धत्वात् भाष्यकृदाद्रियते। शुचौ देश इति अध्ययनाद्यनुकूलशुचित्वं विवक्षितम् । भगवद्भागवताधिष्ठितदिव्यक्षेत्रादि वासस्थानपरं वेदम्।

**स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ॥ १ ॥**

---

इति मन्त्रलिङ्गात् तस्य हिंसात्वाभावेऽपि गृहस्थानामवर्जनीयतुलस्या-हरणादिहिंसाया हिंसाधात्वर्थत्वसंभवेन तत्पर्युदासार्थम् **अन्यत्र तीर्थेभ्य** इत्यस्याऽऽवश्यकत्वादिति द्रष्टव्यम्। **स खल्वेवं...न च पुनरावर्तते ।**

**"आप्रयाणात् तत्रापि हि दृष्टम्"** इत्यत्र इदमपवर्गसाधनमु-पासनमेकस्मिन्नेवाहनि कार्यम्, शास्त्रार्थस्य तावतैव समाप्तत्वादिति पूर्वपक्षं कृत्वा **आप्रयाणात्** आमरणादनुवर्तनीयम् । आमरणं सर्वस्मिन् काले, 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते' इत्युपासनस्य दृष्टत्वात् । अत आप्रयाणं कर्तव्यमिति स्थितम् ।

**"सहकार्यन्तरविधिः"** इत्यधिकरणे,--**छान्दोग्ये,** 'अभि-समावृत्य कुटुम्बे शुचौ देशे' इत्यारभ्य, 'स खल्वेवं वर्तयन् याव-दायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति ब्रह्मविदो याव-दायुषं गृहस्थधर्मेण स्थितिदर्शनादाश्रमान्तरेषु न ब्रह्मविद्याऽस्तीत्याशङ्क्य सर्वेष्वाश्रमेषु विद्यायाः प्रमाणप्रतिपन्नत्वात् गृहस्थधर्मेणोपसंहारः आश्रमान्तरधर्माणामप्युपलक्षणार्थ इति, **"कृत्स्नभावात्तु गृहिणोप-संहारः"** इति सूत्रेण समर्थितम् ।

**'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्"** इत्यत्र, 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति शब्दात् **मुक्तस्य** पुनः प्रकृतिवश्यतालक्षणा आवृत्तिर्नास्तीत्युक्तम् । तत्र पुनरावृत्तौ हि न **मुक्तेच्छा** हेतुः ; अनवधिकातिशयाऽऽनन्दरूपं ब्रह्मानुभवतः

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौ(ह्मो)पनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् अनिराकरणमस्तु अनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

इति अष्टमाध्याये पञ्चदशः खण्डः ॥

---

प्राकृतभोगेच्छाया असंभवात् । नापि परमपुरुषेच्छावशात् पुनरावृत्तिः, 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।....ज्ञानी त्वात्मैव मे मतम्' इत्युक्तरीत्या परमप्रियं ज्ञानिनं प्राप्य आत्मानं कृतार्थं मन्यमानस्य परमपुरुषस्य तत्त्यागेच्छाया असंभवात् । नापि कर्मवशात् पुनरावृत्तिः । उच्छिन्नकर्मबन्धत्वेन कर्माधीनाया अपि पुनरावृत्तेरसंभवादिति **भाष्ये** प्रतिपादितम् । **न च पुनरावर्तते न च पुनरावर्तत** इति द्विरुक्तिर्ब्रह्मविद्यायाः साङ्गायाः परिसमाप्त्यर्था ॥

**आप्यायन्तु....सर्वाणि** । अध्ययनजपादौ शान्तिपाठार्थोऽयं मन्त्रः । मदङ्गानि वागादिभिः सह आप्यायितानि भवन्त्वित्यर्थः । **सर्वं.... निराकुर्याम्** । सर्वां ब्रह्मप्रतिपादिकामुपनिषदं प्रति, ब्रह्मविषये च नास्तित्वबुद्धिं मा कार्षमित्यर्थः । **मा मा ब्रह्म निराकरोत्** । मा मां ब्रह्म निराकुर्यात । अनुगृह्णात्वित्यर्थः । **अनिराकरणं...अस्तु** । परस्परमनिराकरणमस्त्वित्यर्थः। **तदात्मनि...मयि सन्तु** । आत्मज्ञान-

---

सर्वां ब्रह्मप्रतिपादिकामुपनिषदं प्रति इति भाष्यं, 'सर्वां ब्रह्मोपनिषदम्' इति पाठाभिप्रायेण स्यात् । 'सर्वं ब्रह्मौपनिषदम्' इति पाठे तु सर्वं प्रागुक्तमौपनिषदब्रह्मात्मकं भवतीत्यनुसंधानं कृतं भवति । अपौनरुक्त्यायोपरितनवाक्यमनुसृत्यार्थमाह माकार्षमिति ।

ओं शान्तिश्शान्तिश्शान्तिः

इति अष्टमोऽध्यायः (अष्टमः प्रपाठकः)

छान्दोग्योपनिषत् संपूर्णा ।

——:०:——

निरतस्य ये धर्माः शान्तिदान्त्यादय उपनिषत्सु प्रसिद्धाः, ते सर्वे मयि सन्त्वित्यर्थः । **ते मयि सन्तु ते मयि सन्त्विति** द्विरुक्तिरुपनिषत्समाप्त्यर्था ॥ ८-१५

**इति छान्दोग्योपनिषद्भाष्ये अष्टमोऽध्यायः (अष्टमः प्रपाठकः)**

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमत्तातार्यचरणारविन्दचञ्चरीकस्य
वात्स्यानन्तार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य
परकालमुनिपादसेवासमधिगतपारमहंस्यस्य
श्रीरङ्गरामानुजमुनेः कृतिषु
छान्दोग्योपनिषत्प्रकाशिका संपूर्णा ॥

॥ शुभमस्तु ॥

—०—०—

मा कुर्यामिति पाठो वा । अनिराकरणं=कर्मकाण्डदर्शिततदाद्यादि-विषये मम, मदर्पितविषये तस्य चाऽऽदरः । आत्मनि निरते । व्यधिकरणसप्तमी । आत्मविषयकरतिमतीत्यर्थः ॥

यदात्माऽऽविरभूत् साक्षात् वेदान्तव्याचिकीर्षया ।
रामानुजो जयत्येष रङ्गरामानुजो मुनिः ॥ १ ॥

अपरहयमुखश्रीवेदचूडार्यमुख्य-
प्रवरगुरुवचोर्थव्याक्रियावित्त एषः ।
सरलविशदसूक्तिः सर्वतन्त्रार्थवेदी
जयति यतिवरः श्रीरङ्गरामानुजाख्यः ॥ २ ॥

तस्यावतारः ख्यातो यो मुनिः श्रीरङ्गलक्ष्मणः ।
तत्प्रशिष्योऽपि विख्यातः परः श्रीरङ्गलक्ष्मणः ॥ ३ ॥

विज्ञानामृतवारिधिः शमनिधिर्वैराग्यवल्लीतरुः
वेतण्डाचलधामधामविषयप्रेमैकमूर्तिर्मुनिः ।
संसाराम्बुधिपोत एष जयति श्रीरङ्गरामानुजः
यद्वीक्षैधितधीविलासविभवेष्वेषोऽपि कश्चिन्मम ॥ ४ ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
श्रीवीरराघवेणैवं वेङ्कटाद्रीशसेविना ॥ ५ ॥

छान्दोग्यस्य सभाष्यस्य परिष्कारः क्रमात् कृतः ।
उद्गीथप्रणवाकारश्रीहयास्यमुदेऽस्त्वयम् ॥ ६ ॥

इति श्रीमद्वेदान्तरामानुजयतीन्द्रमहादेशिकचरणारविन्दचञ्चरीकस्य
श्रीरङ्गरामानुजयतीन्द्रमहादेशिकवरिवस्याधिगतसर्ववेदान्तार्थस्य

वात्स्यसच्चक्रवर्तिनो वीरराघवाचार्यस्य कृतिषु

छान्दोग्योपनिषद्भाष्यपरिष्कारः ॥

श्रीरस्तु । शुभमस्तु ॥

—o—o—

श्रीः

## छान्दोग्योपनिषदर्थसङ्ग्रहकारिकाः

छान्दोग्यं ताण्डिशाखान्तो भवत्यष्टप्रपाठकः ।
तत्रादौ सामभक्त्यंशे उद्गीथप्रणवे श्रुताः ॥ १ ॥
दृष्टयोऽथ द्वितीये तु सामभक्तिषु दृष्टयः ।
तृतीयादिषु नानोक्ताः विद्याः प्रायो विमुक्तिदाः ॥ २ ॥
अ-१ आदौ रसतमत्वादिदृष्टिं शिष्टाऽभिधीयते ।
कर्माङ्गाश्रितविद्यायाः वीर्यवत्तरता फलम् ॥ ३ ॥
ततो मुख्यप्राणदृष्टेर्द्वेषिविध्वंसनं फलम् ।
तथाऽऽदित्यप्राणदृष्टिर्व्यानदृष्टिश्च ; दृष्टयः ॥ ४ ॥
उद्गीथनामाक्षरेषु ; तथोपसरणान्यथ ।
अमृताभयतोद्गीथे उद्गीथप्रणवैकताम् ॥ ५ ॥
विभाव्य तत्र चाऽऽदित्यप्राणदृष्टौ सुतोद्भवः ।
आदित्ये चाक्षिण च ख्यातपुरुषत्वेन तद्दृशी ॥ ६ ॥
शिलकादिकथासिद्धा तत्राकाशात्मभावना ।
उषस्त्युपाख्यानसिद्धं प्रस्तावे प्राणचिन्तनम् ॥ ७ ॥
आदित्यचिन्तनोद्गीथे प्रतिहारेऽन्नचिन्तना ।
अथ शौवन उद्गीथस्ततः स्तोमेषु दृष्टयः ॥ ८ ॥
अ-२ साम्नि साधुत्वदृष्टिस्तद्भक्तिषूक्तास्तु पञ्चसु ।
षड्विधा दृष्टयः पश्चात् सप्तसु त्रिविधा अपि ॥ ९ ॥
गायत्रादिविशेषेषु दृष्टयो भक्तिपञ्चके ।
व्रतश्लिष्टाः दशाश्लिष्टाः सर्वदृष्टिश्च सामनि ॥ १० ॥
सामस्वराश्च वर्णोक्तिविधाश्च ब्रह्मसंस्थता ।
तारप्रभावः सवनदेवतासाध्यलोकता ॥ ११ ॥
अ-३ एवं प्रापाठकद्वन्द्वमतीतमथ कथ्यते ।
मधुविद्याऽथ गायत्रीविद्या द्वारपधीयुता ॥ १२ ॥
कौक्षेयज्योतिषि ब्रह्मतनौ काम्यमुपासनम् ।
शाण्डिल्यविद्या मुक्त्यर्था ; कोशादिग्वत्सदर्शनम् ॥ १३ ॥

पुत्रायुषेऽथ पुरुषविद्या स्वायुःफलाऽत्र च ।
मुक्त्यै मन्त्रोऽन्ततो ब्रह्मदृष्टी मनसि खेऽपि च ॥ १४ ॥

अ-४ अथादित्ये ब्रह्मदृष्टिः अथ जानश्रुतिं प्रति ।
संवर्गविद्या रैक्वोक्ता कापेयोक्त्यादितः स्फुटा ॥ १५ ॥
सा षोडशकलब्रह्मविद्या जाबालगामिनी ।
उपकोसलविद्या चाप्यग्निविद्याङ्गिका ततः ॥ १६ ॥
अथ यज्ञो वायुरस्य यजमानस्य चर्त्विजाम् ।
प्रायश्चित्तव्याहृतिज्ञब्रह्मर्त्विग्रक्ष्यतोदिता ॥ १७ ॥

अ-५ ज्येष्ठश्रेष्ठप्राणविद्या मन्थाख्यं कर्म चोदितम् ।
पञ्चाग्निविद्या यां श्वेतकेतोः पित्रे प्रवाहणः ॥ १८ ॥
प्राह यत्रोच्चनीचानां गतयो भविनां श्रुताः ।
वैश्वानरात्मविद्या यां कैकयोऽश्वपतिर्जगौ ॥ १९ ॥

अ-६ प्राचीनशालमुख्येभ्यो येषु षष्ठश्च गौतमः ।
सद्विद्या गौतमेनोक्ता पुत्राय श्वेतकेतवे ॥ २० ॥

अ-७ सनत्कुमाराद् भूम्नश्च विद्या नारदभाविता ।
मुक्त्यर्था यत्र काम्याश्च नामादौ ब्रह्मदृष्टयः ॥ २१ ॥

अ-८ अथो दहरविद्योक्ता ब्रह्मतत्स्थगुणाश्रया ।
सा प्रजापतिविद्या या ह्यङ्गं शुद्धात्मगोचरा ॥ २२ ॥
अथ प्रपत्तिमन्त्राश्च ब्रह्माकाशव्यपाश्रयाः ।
अकृतब्रह्मलोकाप्त्यै पुनर्जन्मनिवृत्तये ॥ २३ ॥
सत्संप्रदायलब्धेऽर्थे यथाशास्त्रानुवर्तनात् ।
अनावृत्तिर्ब्रह्मलोकसंपत्तिः शान्तिरुच्यते ॥ २४ ॥
एवमत्रोक्तविषयनामनिर्देशनं कृतम् ।
त्रयोदश चतुर्विंशत्याढ्याश्चैकोनविंशतिः ॥ २५ ॥
सप्ताधिका दश चतुर्विंशतिश्चापि षोडश ।
षड्विंशतिः पञ्चदश खण्डा अष्टस्विह क्रमात् ॥ २६ ॥

—०—०—

श्रीः

# छान्दोग्यभागशारीरकसूत्रसूची

| छान्दोग्योपनिषदि | शारीरकशास्त्रे |
|---|---|
| १. १. | ३. ३. ७, ४१, ५८, ५९-६३; ३. ४. १०, २१, २२, ४४, ४५, ५०; ४. १. १८. |
| १. २. | ३. ३. ६—९; ४. १. ६. |
| १. ३. | ४. १. ६. |
| १. ५. | ३. ३. ६१. |
| १. ६; १. ७. | १. १. २१; ३. ३. ७. |
| १. ८, ९. | १. १. २३; ३. ३. ७. |
| १. १० | ३. ४. २८, |
| १. ११. | १. १. २४. |
| २. २३. | ३. ४. १८—२०. |
| ३. १—११. | १. ३. ३०—३२; ३. १. ४—१०. |
| ३. १२, १३. | १. १. २५—२८. |
| ३. १४. | १. २. १—८; ३. ३. ५२. |
| ३. १६, १७. | ३. ३. २४. |
| ३. १८, १९. | ४. १. १, ४, ५. |
| ४. १—३. | १. ३. ३—३४; ३३. २. ३२. |
| ४. ४. | १. ३. ३७. |
| ४. १०—१५. | १. २. १३—१८ |
| ४. १४. | ४. १. १३. |
| ४. १५. | ३. १. ३२; ४. ३—१४. |
| ४. १६, १७. | ३. ३. ६४. |
| ५. १. | २. १—५; ३. ३. १०. |
| ५. २. | ३. २. ६; ३. ३. १८; ३. ४. २८. |
| ५. ३—९. | ३. १. १—७. |

| | |
|---|---|
| ५. १०. | ३. १. ८—२७; ३. ३. ३२; ४. ३. १—१४. |
| ५. ११—२४. | १. २. २५—३३; ३. ३. ५५. |
| ५. २४. | ४. १. १३. |
| ६. | १. १. ५—१२; १. ४. २३—२७; २. १. १५; २. १. २१, २६; ३. २. ९; ३. ३. ३७; ४. १. १५, १९; ३. ४. २; १—८, १४, १५. |
| ७. | १. ३. ७, ८; ४. १. ९; ४. ३. १५. ४. ४. ११. |
| ८. | १. ३. १३—२०; ३. २. ३०, ३१, ३. ३. ३८—४०, ४२. |
| ८. ६. | ४. २. १७. |
| ८. ७—१२. | ४. ४. १—१६. |
| ८. १३. | ३. ३. २७. |
| ८. १४. | १. ३. ४२. |
| ८. १५. | ३. ४. ४७; ४. ४. २२. |

——:o:——

## टिप्पणकृताः श्लोकाः

325, 423, 612, 641, 735, 803, 808 पुटेषु द्रष्टव्याः।

——:o:——

## छान्दोग्यश्रुतानामुपनिषदन्तरसंवादः

| | |
|---|---|
| छा. १-१-९ | प्रणवस्य सर्वान्वयः तै.उ. शिक्षा. ८. |
| १-२ | इन्द्रियरूपप्राणान्तरनिराकरणेन मुख्यप्राणदृष्टि-विधानम् (परन्तु उद्गातरि, नोद्गीथे) बृ. ३-३ |
| ,, | (पु. ३४६) प्राणे अनेकर्षिनामनिर्देशः बृ. ३-३ ; ऐत. आ. २. २. |
| १-४ | देवानां प्रणवनिष्ठता तै. शीक्षा ८. |
| १-७; ४-१५ | अक्षिण पुरुषोपासनम् बृ. ६-२ ; ७-५. |
| ३-१२ | गायत्रीब्रह्मोपास्तिः बृ. ७-१४. |
| ३-१३ | वैश्वानराग्नेर्ब्रह्मता बृ. ७-९. |
| ३-१४ | तत्क्रतुन्यायः शतपथे १०-५-२ ; मुद्गलोपनिषदि च ; अग्निरहस्ये च १०-५-१. |
| ३-१४ | शाण्डिल्यविद्यांशः बृ. ७-६ ; अग्निरहस्येऽपि. |
| ३-१६ | पुरुषविद्याशैली तै. उ. २ अन्ते |
| ३-१७ | अन्तवेलाजप्यमन्त्रकथनम् ऐत. आ. ३-२-४ |
| ३-१८; ७-३ | मनसि ब्रह्मदृष्टिः तै. आन. ४. |
| ४-३ | कापेयब्रह्मचारिसंवादः जैमिनीयोपनिषद्ब्राह्मणे । |
| ४-१० | खं ब्रह्म बृ. ६-६-७ |
| ४-१५ | अर्चिरादिगतिः बृ. ७-११; ८-२; कौषीतक्यामपि |
| ५-१ | प्राणविद्या (प्राणसंवादः) बृ. ८-१ ; कौ. ,, |
| ५-२ | मन्थकर्म बृ. ८-३. |
| ५-३ | पञ्चाग्निविद्या बृ. ८-२. |
| ५-१० | पुनर्जन्म बृ. ५-२; ६-४ |

| | |
|---|---|
| ५-११ | वैश्वानरविद्या अग्निरहस्येऽपि । |
| ६-१ | दहरविद्या बृ. ६-४. तै. ना. अनु. १० |
| ६-३ | अनुप्रवेशव्याकरणे बृ. ३-४-तै. आन. ५. |
| ६-७ | षोडशकलः बृ. ३-५-१५; प्रश्न ६. |
| ६-१३ | लवणोदकदृष्टान्तः बृ. ४-४-१२ |
| ८-३ | हृदयशब्दनिर्वचनम् बृ. ७-३. |
| ,, | सत्यशब्दनिर्वचनम् बृ. ७-५. |
| ८-६ | नाड्यादित्यगतवर्णः बृ. ६-२-३ ; ६-३-२० ; ६-४-९ |
| ८-११ | घ्नन्तीत्यादि बृ. ६-३-२०. |
| ८-५, ८-१२ | ब्रह्मलोकगताः विशेषाः कौषीतक्यामपि । तलवकार- |
| ८-१४ | साम्नि च(शारी ४-३५ श्रुत. प्र.) |

## छान्दोग्योपनिषद्गताः श्लोकाः

## देशादिनाम

| | | | | | |
|---|---|---|---|---|---|
| रैक्कपर्णाः | पु. | 539 | ऐरम्मदीयम् | पु. | 897 |
| महावृषाः | | ,, | सोमसवनः | | ,, |
| अरः* | | 897 | अपराजिता | | ,, |
| ण्यः | | ,, | प्रभुविमितम् | | ,, |

*एतदादयः षट् मुक्तिस्थाने परमपदे स्थिता विशेषाः ।

—o—o—

## शोधनम्

६. २३. २ (पु. 794) परिष्कारे आदौ पङ्क्तिद्वयं मुद्रणात् भ्रष्टमधो निर्दिश्यते । एवञ्च स्वरससिद्धेति भाव इति उपरितनमन्वितम् ।

अत्रैव किलेत्यत्र उपलप्स्यस इति शेषपूरणं कृतं शाङ्करे । तदा इतिशब्दः उपपादनसमाप्तिद्योतकः । अत्र भाष्ये तु निभालनाकार-समर्पकः । अत्रेत्यत्र अस्तीति क्रिया—इत्येतावत् स्वरसेत्यतः प्राक् ।

—o—o—

## भाष्ये अवश्यप्रदर्श्यप्रमाणाकरः

| | | | |
|---|---|---|---|
| जातिव्यक्ती | पु. | 337 | श्लो. वा. वाक्याधि ३४८ |
| संहिताकार | | 475 | शि. म. दी. देवताधिकरण |
| इदंब्रह्माऽऽयाति | | 504 | बृ. ६-३-३७ |
| [illegible] | | 551 | ताण्ड्य म. ब्रा. २०-१२-५ |

—o—o—

## ऋष्यादीनां नामानि

देवासुराः प्राजापत्याः १–२; ८–७; अङ्गिराः १–२–१०; बृहस्पतिः १-२-११; अयास्यः १-२-१२; बको दाल्भ्यः १-२-१३; १-१२-१; नैमिषीयाः १-२-१३; देवाः—मृत्युः १-४; कौषीतकिः १-५-२; शिलकः शालावत्यः १-८; चेकितायनो दाल्भ्यः १-८; प्रवाहणो जैबलिः १-८; ५-३; अतिधन्वा शौनकः १–९–३; उदरशाण्डिल्यः १-९-३; उषस्तिः चाक्रायणः १–१०; ग्लावो मैत्रेयः १-१२; उद्दालक आरुणिः, गौतमः ३-११-४; ५-३-६; ५-११; ५-१७ ६; शाण्डिल्यः ३–१४–४; महिदास ऐतरेयः ३-१६ ७; घोर आङ्गिरसः ३-१७-६; कृष्णो देवकीपुत्रः ३-१७-६; जानश्रुतिः पौत्रायणः ४–१; रैक्वः ४-१; शौनकः कापेयः ४–३; अभिप्रतारी काक्षसेनिः ४-३; सत्यकामो जाबालः ४-४; ४-१०; ५-२; जबाला ४–४; हारिद्रुमतो गौतमः ४-४; उपकोसलः कामलायनः ४-१०; गोश्रुतिर्वैयाघ्रपद्यः ५-२; श्वेकेतुरारुणेयः ५ ३; ६ १; पञ्चालाः ५-३; अमानवः ५-१०; प्राचीनशाल औपमन्यवः ५–११; सत्ययज्ञः पौलुषिः प्राचीनयोग्यः ५-११; ५–१२; इन्द्रद्युम्नो भाल्लवेयो वैयाघ्रपद्यः ५-११; ५-१४; जनः शार्कराक्ष्यः५-११ बुडिल आश्वितराश्विर्वैयाघ्रपद्यः ५-११; ५-१६; अश्वपतिः कैकयः ५–११; गन्धाराः ६-१४; सनत्कुमारः स्कन्दः ७–१; ७–२६; नारदः ७-१; प्रजापतिः ३-११-४; ८–७; ८-१५; इन्द्रः ८-७; विरोचनः ८-७; ब्रह्मा ३–११–४, ८–१५; मनुः ८–१५.

—o—o—

## टिप्पणपरिशिष्टम्

३ १४. (पु496) पुटे, *यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति वाक्यस्य, "तथोपासीनस्तथैव प्राप्नोतीत्यर्थः" इति कार्याधिकरणश्रीभाष्यानुरोधेनार्थो वर्णित एव टिप्पणे । अत्र किञ्चिदुच्यते । संभाव्यते तावदत्रान्योऽप्यर्थः—क्रतुशब्दः क्रियामात्रपरः, उपासनमात्रे संकोचस्यायुक्तत्वात् । यच्छब्दः फलपरः । अत एव शाङ्करे क्रतुशब्दस्याध्यवसायरूपार्थवचनेऽपि तथाभवतीत्यस्य क्रत्वनुरूपफलात्मको भवतीत्यर्थ उक्तः। थाल्प्रत्ययस्य प्रकारवाचितया, 'यत्फलावच्छिन्नकायिकवाचिकमानसक्रियावान् पुरुषो भवति, तत्फलावच्छिन्नो भवति' इति विशिष्टार्थः । प्रथममवच्छिन्नत्वं साध्यसाधनभावसंबन्धेन; द्वितीयं भोज्यभोक्तृत्वसंबन्धेन । 'तं यथायथोपासते' इति तु एतद्वाक्योक्तक्रियान्तर्गतोपासनमात्रविषयमस्तु इति ।

अत्रेदं वक्तव्यम् —लोकवेदद्दष्टतत्तत्क्रियाबलात तत्तज्जन्यफलप्राप्तेः तत्तल्लोकवैदिकविधिबलतो विशिष्यैव सिद्धतया व्यर्थमिदं सामान्यवचनमिति ।

ननु भवत्पक्षे घटं पटत्वेनोपासीनः पटभूतं घटं प्राप्नोतु । अतो विध्यन्तरसिद्धार्थानुवादमात्रमिदम् । ततश्च तत्तत्प्रकारकतत्तदुपासनबलात् तत्तत्प्रकारलाभस्य तत्तदुपासनविधायकप्रतिनियतविधिभिरेव सिद्धतया वाक्यवैयर्थ्यमेव । अथ तथैव भवतीत्येवकारार्थे नैर्भर्यमिति चेत्–कस्तदर्थः ? किमन्ययोगव्यवच्छेदः, उत अयोगव्यवच्छेदः ? नाद्यः ; तथासति कतिपयगुणविशिष्टब्रह्मोपासनेऽनुपासितगुणादीनामप्राप्तिरुक्ता स्यात् । तथा च परिपूर्णब्रह्मानुभवरूपं मोक्षस्य न स्यादिति,

'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः', 'सोऽश्नुते सर्वान् कामान्', 'निरञ्जनःपरमं साम्यमुपैति', 'स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य' इत्याद्यनेकश्रुतितदनुसारिसूत्रसंप्रदायादिबहुविरोधः स्यादिति । नान्त्यः ; उपासितगुणप्राप्तिरवश्यम्भाविनीत्येतादृशस्यायोगव्यवच्छेदस्य तत्तदुपासनविधिवाक्यत एव सिद्धतया एतद्वचनवैयर्थ्यस्य प्राप्तत्वात् । तत्रतत्रोपासनस्य कारणत्वं युक्तम् । कारणत्वञ्च वेदे, यदुत्तरं कार्यस्यावश्यम्भावः तत्त्वमेवेति । अतो भवदभिमतार्थोऽपि विमृश्य इति ।

अत्रोच्यते—अयोगव्यवच्छेद एव फलम् ; तथैवेति विशेषण संगतत्वादेवकारस्य । तस्य तद्व्यवच्छेदार्थकत्वस्वारस्यात् । तत्फलं तु **सारप्रकाशिका**यामेवं वर्णितम्--अचेतनाकाशादीनामुपासने अपुरुषार्थभूततत्प्राप्तिरेव भवेदिति तेषामनुपास्यत्वम् , तेषां कारणत्वे उपास्यत्वप्रसंगात् अकारणत्वञ्च सिद्ध्यतीति आकाशादिकारणवाक्यानामचेतनातिरिक्तपरत्वनिर्णय इति । अयं भावः—सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत इति पूर्वोक्तं ब्रह्म नाकाशादिकमचेतनं भवितुमर्हतीति तदनन्तरेणानेन वाक्येन ज्ञाप्यत इति । अन्यच्च श्रूयताम् ।

तं मामायुरमृतमित्युपास्स्वेत्येवं परविद्यायाम् **इति**शब्दश्रवणेऽपि आरोपात्मकमुपासनं न कार्यम्। उपासिताकारस्य प्राप्त्यवश्यम्भावात् यथावस्थिताकारविशिष्टमेवोपास्यम् । न दृष्टिविधिर्मोक्षाय भवतीति । एवं शरीरे भावाधिकरणे यदुक्तम्, जीवात्मा कर्तृत्वभोक्तृत्वरूपौपाधिकाकारविशिष्टो नोपास्य इति, तदप्यनेन सिद्ध्यति । उपासिततत्तदौपाधिकाकारप्राप्त्यवश्यम्भावे तद्विरुद्धमोक्षानापत्तेरिति। एवं पञ्चाग्निविद्यायां भूत-

सूक्ष्मपरिष्वक्तस्यानुपास्यत्वसिद्धिरपि फलम्। तथाच तत्र पञ्चाग्निचिन्तनविधानं संसाराग्निविदीपनव्यपगतप्राणत्वस्य स्वात्मन्यनुसंधानार्थमिति ततस्तदनुसंधाय प्रकृतिवियुक्तयथावस्थितात्मस्वरूपमुपासीतेति। यथाक्रतुवचनमिदं सामान्यवाक्यम्। 'तं यथायथा' इति तु विशेषपरमिति।

नन्वन्ययोगव्यवच्छेदस्यात्रानभिमतत्वे शुद्धजीवस्वरूपोपासनादपि ब्रह्मप्राप्तिर्वचनबलात् भवतीति किमिति पञ्चाग्निविद्यायां ब्रह्मात्मकत्वानुसंधानमिति चेत्–उच्यते। 'अप्रतीकालम्बनान् नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च' इति सूत्रे तत्क्रतुश्चेत्येतदर्थ एवं भाव्यः—ननु पञ्चाग्निविद्यायां भूतसूक्ष्मपरिष्वक्तजीवानुसंधानस्य विहिततया ततो न परब्रह्मप्राप्तिः, 'नान्यः पन्था अयनाय विद्यते' इति निषेधादित्याशङ्कायां तत्क्रतुश्चेत्युक्तम्—भूतसूक्ष्मपरिष्वक्ततयाऽनुसंधाने तत्प्राप्त्यवश्यम्भावः तत्क्रतुन्यायादिति तदाकारत्यागेन तत्क्रतुन्यायाविरोधाय यथावस्थिताकारानुसंधानस्यावश्यकत्वे अविशेषात्, 'ज्ञानानन्दमयो ह्यात्मा शेषो हि परमात्मनः' इति परब्रह्मात्मकत्वानुसंधानस्यापि प्राप्त्या ब्रह्मानुसंधानस्यान्तर्भावात् न, 'नान्यः पन्था' इति वचनविरोध इति॥ अत्र तत्क्रतुश्चेत्यनेन सूत्रकृता, अशुद्धजीवोपासकः अशुद्धजीवं प्राप्नोति, कार्यात्मकमुपासीनश्च कार्यं प्राप्नोतीति कार्योपासनपक्षोऽपि निराकृतः। तेन यथाक्रतुवाक्यं ब्रह्मरुद्राद्युपासनं तत्तत्प्राप्तिफलकत्वात् मुमुक्षुणा न कार्यम्। ब्रह्माद्याः स्तम्बपर्यन्ताः जगदन्तर्व्यवस्थिताः प्राणिनः कर्मजनितसंसारवशवर्तिनो यतः, ततो न ते ध्याने ध्यानिनामुपकारकाः इत्यर्थज्ञापकम्, कार्यंबादरिरिति पूर्वपक्षनिरासकञ्च सत्, 'नान्यः पन्था' इतिवत् परविद्यावाक्येषु ब्रह्मरुद्रादिमात्रविवक्षावारकं भवतीत्यपि सिद्ध्यति।

ननु अन्ययोगव्यवच्छेदवत् अयोगव्यवच्छेदोऽपि दुरुपपादः; मोक्षार्थभगवदुपासने मोक्षे उपासितभगवद्गुणानां प्राप्तावपि ऐश्वर्य-कैवल्यार्थोपासने तत्प्राप्त्यभावात्। अतो वाक्यमिदं संभावितस्थलानुवाद-रूपं सत् अर्थवादमात्रमिति किमत्रार्थविशेषाऽऽग्रहेणेति चेत्-उच्यते। वाक्यस्यास्य केवलार्थवादत्वे **सूत्रकारः** तत्क्रतुश्चेति इदं न प्रमाणयेत्। तेन हि, प्राप्यविषयकमुपासनञ्च श्रूयते इत्यर्थकेन पदेन एतद्वाक्यं प्रमाणीकृतम्। अत एव न्यायनिबन्धनात्मके **ब्रह्मसूत्रे** प्रमाणीकृतत्वात् तत्र तत्र तत्क्रतुन्यायेनेति व्यवहारः, न तु तत्क्रतुश्रुत्येति। सूत्रेऽत्र तत्क्रतुश्चेति निबन्धात् ज्ञायते, कार्याधिकरणफलफलिभाववर्णनावसरे तत्क्रतुवाक्यस्य केवलार्थवादत्वं पूर्वपक्षे शङ्कितव्यम्. विवक्षितार्थविशेष-कत्वञ्च सिद्धान्ते वर्णनीयमिति। यत्तु अयोगव्यवच्छेदेऽनुपपत्तिवर्णनम्, तत्राहुः, अस्य वाक्यस्य मोक्षोपासनमात्रविषयकत्वान्न दोषप्रसक्तिरिति।

इदमप्यत्र बोध्यम्—**श्रीभगवद्गीताष्टमाध्याये,** "अन्तकाले च मामेव स्मरन् मुक्त्वा कलेबरम्। यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः" इति ऐश्वर्याद्यर्थिनामप्यन्तकाले भगवदनुसंधानं पश्चाद् भगवद्भावरूपं फलञ्च वर्णितम्। उपरि च, 'कविं पुराणम्' इत्यादिनाऽन्त-काले ऐश्वर्यार्थिनोऽनुसंधानं विधास्यति। अन्तकाले तथाऽनुसंधानं प्राक् तथाऽनुसंधाने सत्येवेति तदपि तत्रोक्तमेव। तत्र कवित्वाद्यनु-संधानञ्चापेक्षितैश्वर्यप्रदत्वोपयोगितयेति कवित्वादिमहिमप्रयुक्तैश्वर्यविशेषा-वच्छिन्नतया कैवल्यरूपस्वानुभाव्यफलानुरूपाकारावच्छिन्नतया च परमात्मानुसंधानात् तत्तत्फलभाक् भवत्युपासक इति ज्ञायते। न केवलमुपासनस्थले, अन्यत्रापि अन्तिमस्मरणानुगुणं फलं प्राप्यत इति

च तत्रैवोक्तम्, "यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः" इति । अत एव आदिभरतस्य मृगभावनया अन्तकालाऽऽपतितया मृगभावः । तथाच किञ्चिन्मृग भावनायां भावितमृगजातीयत्वापत्तिवत् ऐश्वर्याद्यवच्छिन्नत्वेन परमात्म-भावनायां तेन रूपेण तज्जातीयत्वप्राप्तिर्भवतीति सिद्ध्यति । एतदर्थं विशेषप्रतिपादकश्चेदं तत्क्रतुवचनमिति स्वरसतः प्रतीयते । अत एव **शाङ्करे** एतद्वचनव्याख्यानावसरे यं यं वापीति **गीता**वचनमनुसंहितम् । एवञ्च, 'श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः' इत्येतद्**भाष्या**-नुरोधेनात्र, 'अथ खलु क्रतुमयः पुरुषः' इत्यस्य अध्यवसायपरिणामात्मकः पुरुषो भवतीत्यर्थः । तदुपपादनं **यथाक्रतु**रित्यादिना । अध्यवसिताकार-प्राप्तिर्भवति पश्चात् । अतश्चान्तिमकाले पश्चाल्लब्धव्याकारविषयाध्यव-सायसंपत्तये तद्भावभावनापरः सन् आदित एव तदेकपरो भवेत् । तदुच्यते स क्रतुं कुर्वीतेति । शाङ्करे तु क्रतुमयः=अध्यवसायप्रचुरः इत्युक्तम् । तथाच यथाक्रतुवाक्यं यं यं वापीति **गीता**वचनमूलभूतं अन्तिमप्रत्ययानुसारि भाविफलमित्यपूर्वार्थप्रतिपादकम् यथोपासनफल-प्राप्तिप्रदर्शनपरमपि ; 'स क्रतुं कुर्वीत', 'तं यथायथोपासते तथैव भवति' इति श्रुत्यनुसारात् । एवमपि जडभरतमृगभावनान्यायेन धर्मिनियमात् यद्वस्तुसजातीयो भवितुमिच्छेत्, तद्वस्तुविषयकानुसंधानं कुर्वन्नेव स्यादित्यर्थलाभेऽपि आप्रयाणं गुणविशेषानुसंधाननैयत्यं न सिध्येदिति तदर्थमेव यथाक्रतुरित्यारम्भः इत्यलमत्र विस्तरेण । सारकारिकासारावली-प्रभृतिविमर्शपूर्वमर्थनिर्धारणञ्च तद्व्याख्यावसर इति ॥ शुभमस्तु ॥

## सपरिष्कारभाष्यविषयसूची

### उद्गीथविद्या=उद्गीथप्रणवे दृष्टिविधयः

*-*-*

## छान्दोग्योपनिषद्गत-अपूर्वपदानि

—०—०—